सुधी-ग्रन्थमाला-१०

SUDHI SERIES-10

गौतमन्यायसूत्राणां

वात्स्यायनमुनिप्रणीतं

# न्यायभाष्यम्

पण्डितश्रीसुदर्शनाचार्यकृत-

प्रसन्नपदव्याख्यया

संवलितम्

सम्पादकः

स्वामी द्वारिकादासशास्त्री

# सुधी-ग्रन्थ-माला

[ संस्कृत साहित्य के आकर-ग्रन्थों का प्रकाशन ]

प्रधान सम्पादक : स्वामी द्वारिकादासशास्त्री

१. काशिकावृत्ति [प्रथम अध्याय]
(वामन-जयादित्य) प्रथम भाग
(पदमञ्जरी, न्यास टीकाओं सहित) ८५)००

२. काशिकावृत्ति [द्वितीय अ० एवं
तृतीय अ० १-२ पाद] (पदमञ्जरी, न्यास)
द्वितीय भाग ८५)००

३. काशिकावृत्ति [तृ० अ० ३-४ पाद,
चतुर्थ अध्याय] (पदमञ्जरी, न्यास)
तृतीय भाग १००)००

४. प[illegible]षावृत्ति [परिभाषाओं की
व्या[illegible]णशास्त्रीय प्राचीन टीका]
([illegible]महोपाध्याय श्रीसीरदेवकृत) ६०)००

५. [illegible]कावृत्ति [प० अ०, षष्ठ अ०१ पाद]
([illegible]ञ्जरी, न्यास) चतुर्थ भाग ९०)००

६. [illegible]कावृत्ति [षष्ठ अ० २-३-४,
स[illegible] अ० १-२पाद]
([illegible]ञ्जरी, न्यास) पञ्चम भाग १००)००

७. प[illegible]षावृत्ति [व्याकरण-
प[illegible]षा-व्याख्यान]
(महामहोपाध्याय श्रीपुरुषोत्तमदेवकृत) ६०)००

८. काशिकावृत्ति [सप्तम अ० ३-४ पाद,
अष्टम अ०] (पदमञ्जरी, न्यास व्याख्या)
षष्ठ भाग १००)००

९. वाक्य[illegible]दीय [ब्रह्मकाण्ड मात्र]
पं० नारायणदत्त (नृसिंह) त्रिपाठिकृत
'प्रकाश' व्याख्यासहित २०)००

१०. न्यायभाष्यम् [न्यायदर्शन] १००)००
(श्री सुदर्शनाचार्यकृत प्रसन्नपदा व्याख्या सहित)

षड्दर्शनसूत्रसंग्रह ४०/-

सुधी-ग्रन्थमाला—१०

SUDHI SERIES—10

गौतमन्यायसूत्राणां

वात्स्यायनमुनिप्रणीतं

# न्यायभाष्यम्

पण्डितश्रीसुदर्शनाचार्यकृत-

प्रसन्नपदव्याख्यया युतम्

सम्पादकः

स्वामी द्वारिकादासशास्त्री

Sudhi Series-10

MAHĀMUNI VĀTSYĀYAN'S

# NYĀYA-BHĀṢYA

ON

GAUTAMA-NYĀYA-SUTRAS

With

PRASANNAPADĀ COMMENTARY

of

Pt. SUDARŚANĀCĀRYA, SHASTRĪ

*Editor*

Swami Dwarika Das Shastri

SUDHI PRAKASHANA

P. Box. 1049, VARANASI.

1986

सुधीग्रन्थ-माला—१०

महर्षिगौतमकृतन्यायसूत्राणां
श्रीवात्स्यायनमुनिप्रणीतम्

# न्यायभाष्यम्

पञ्चनदवास्तव्यश्रीसुदर्शनाचार्यशास्त्रिविरचितया
प्रसन्नपदाख्यटीकया संवलितम्

सम्पादकः
स्वामी द्वारिकादासशास्त्री

सुधी प्रकाशनम्
२०४३ वि०] वाराणसी [१९८६ ई०

प्रकाशक :
सुधी प्रकाशन
पो० बॉक्स १०४६,
वाराणसी-२२१००१

Published by :
SUDHI PRAKASHANA
P.B.O. 1049,
Varanasi-221001

प्रथम संस्करण : १९८६
(पुनर्मुद्रण)
मूल्य : रु० १०० ००
(एक सौ रुपया)

First Edition : 1986
(Reprint)
Price : Rs. 100.00
(Rs. One hundred)

मुद्रक :
ओरियण्ट आफसेट,
दिल्ली-३२

Printed by :
Orient Offset,
Delhi-32

# प्रकाशकीयम्

प्रदीपः सर्वविद्यानाम्, उपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥

महर्षि-अक्षपादेन (गौतमेन) प्रणीतानि न्यायसूत्राण्यधिकृत्य न्यायभाष्य, सहितोऽयं ग्रन्थः (न्यायदर्शनापरपर्यायः) पञ्चनदवास्तव्य-पण्डितप्रवरश्रीसुदर्शनाचार्य-शास्त्रिभिर्विरचितया प्रसन्नपदा—इत्यन्वर्थाभिधेयया व्याख्यया युतः पुनः (पञ्चाशदाधिकवर्षानन्तरम्) प्राकाश्यमेतीति महान् प्रमोदावसरः ।

अतिगहनं न्यायशास्त्रम्, गभीराणि न्यायसूत्राणि, स्थाने स्थाने च तत्रत्यं जटिलं भाष्यम्, प्रकृष्टवैदुष्यसम्पन्नाश्च बह्व्यष्टीकाः—इति सर्वमेतत् कोमलमतीनां न्यायशास्त्रमधिजिगमिषूणां चेतो दुःखाकरमेव स्यात्, यद्यत्र भाष्यमनुसृत्य श्रीमद्भिः पण्डितप्रवरैः श्रीसुदर्शनाचार्यैरिदं न्यायदर्शनं प्रतिपदं प्रत्यक्षरं च प्रसन्नपदया व्याख्यया साधु व्याख्यातं न भवेत् । यतो हि, अद्ययावदुपलब्धाः सर्वा अपि न्यायसूत्राणां व्याख्या वा, टीका वा, यथा—उद्द्योतकरस्य न्यायवार्त्तिकम्, वाचस्पतिमिश्रस्य तात्पर्यटीका, उदयनाचार्यस्य तात्पर्यपरिशुद्धिः, न्यायपञ्चाननविश्वनाथचक्रवर्तिनो वृत्तिर्वा, सर्वा अपि इमाः सर्वेषाम् उत्तम-मध्यम-कनिष्ठजिज्ञासूनां कृते न समानाः सुखावहा हितकारिण्यो वा यथेयमन्वर्थाभिधेया प्रसन्नपदा ।

इति नैतदस्माकमेव प्रतिज्ञामात्रम्, अपि तु, अस्या व्याख्याया अनुशीलेन सर्वे विद्वांसश्छात्राश्चापि अस्मन्मतमेबोररीकरिष्यन्तीत्यस्माकं द्रढीयान् विश्वासः ।

तदित्थम्, बहोः कालादनन्तरमियं व्याख्या अस्माभिरिदानीम्, श्रीशास्त्रिवर्यैः यथा सम्पादिता तथैव, चित्रमुद्रणपद्धतिसाहाय्येन विदुषां करकमलेषु समुपाह्रियत इति ।

३० मई, १९८६
वाराणसी

प्रकाशकः

अथ

# विद्वद्वरवात्स्यायनसमयसमीक्षा



यद्यपि ग्रन्थकाराणां देशकालयोर्निर्णये मे प्रवृत्तिर्नास्ति तथापि यः खलु नन्दराज्योच्छेदकर्ता क्रोधैकमूर्तिः पुष्पपुरवासी कौटिलेयार्थशास्त्रनिर्माता कौटिल्यापरनामधेयश्चाणक्यः स एवायं न्यायभाष्यकर्ता कामसूत्रनिर्माता च वात्स्यायनमिश्र इति निश्चिनोमि, तथा हि—

" वात्स्यायने मल्लनागः कौटिल्यश्चणकात्मजः ।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः ॥ " इत्यभिधानचिन्तामणौ

" विष्णुगुप्तस्तु कौण्डिन्यश्चाणक्यो द्रमिलोंऽगुलः ।
वात्स्यायनो मल्लनागपक्षिलस्वामिनावपि ॥ " इति त्रिकाण्डशेषकोशे

इत्यादिकोशवाक्यैर्वात्स्यायनादयः शब्दाश्चाणक्यस्य वाचका इति स्पष्टमेव, द्वितीयश्लोके कौटिल्यशब्दस्यैव भ्रान्त्या कौण्डिन्य इतिपाठो जात इति संभावयामि, न च प्रमाणं विनैतादृशानां कोशवाक्यानामप्रामाण्यं संभवति, अस्य वात्स्यायनस्य पक्षिलस्वामीति नामधेयं वाचस्पतिमिश्रेण तात्पर्यटीकायामुक्तम्, मल्लनाग इति कामसूत्रवृत्तौ वासवदत्तायां चोक्तम्, चाणक्यस्य विष्णुगुप्त इति नामधेयं दशकुमारे प्रयुक्तम्, वात्स्यायन इति स्वयमेवोक्तम्, एतानि च नामानि कोशकारैरपि संगृहीतानीति कोशवाक्यप्रामाण्यं तेन चायं वात्स्यायनो चाणक्य एवेति सिध्यति। कामसूत्रकर्तापि चायमेव वात्स्यायनः— विपक्षे बाधकाभावादिति मल्लनागोप्ययमेव अस्य च नन्दराज्योच्छेदकर्तृत्वेन कौटिल्यप्राधान्यात् कौटिल्य इति, चणकात्मजत्वाच्चाणिक्य इति गोत्रप्राधान्याद्वात्स्यायन इति नामधेयम्, विष्णुगुप्त इति पितृकृतं स्यात्, एतादृशोद्धतकार्यकारित्वस्य द्रविडकार्नाटिकयोरेव संभवादयं द्राविडः स्यादिति द्रविडशब्दस्य द्रमिल इतिजातम्, कामसूत्रनिर्मातृत्वात् कामपरायणत्वं तेन च कपोतादिपक्षिपालकत्वं प्राप्नोति— अद्यत्वेपि प्रायस्तथा दर्शनादिति पक्षिल इति नामधेयं द्राविडत्वात् पक्षिलस्वामीति नामधेयं जातमिति तर्कयामि । ननु महाभाष्ये कौण्डिन्यशब्दपाठादयं कौण्डिन्यस्ततोपि प्राचीनः संभवतीति चेन्न— न्यायभाष्येप्यस्मिन् द्वितीयाध्यायद्वितीयाह्निके याशब्देति ६१ सूत्रस्य भाष्ये कौण्डिन्यशब्दस्य पाठादिति नायं कौण्डिन्यः किं तु कौटिल्य एव । विशिष्टाद्वैतस्यापि प्रथमं भाष्यकर्ता कश्चिद् द्रमिडनामको जात सोप्ययमेव वाऽन्यो वा कश्चिदिति नावधार्यते ।

किं च प्रथमस्य न्यायसूत्रस्य न्यायभाष्येऽत्र " इमास्तु चतस्रो विद्याः पृथक् प्रस्थानाः— यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या " इति विद्यानां चातुर्विध्यमुक्तम्. एवमेव चाणक्यनिर्मितस्य कौटलीयार्थशास्त्रस्य विद्यासमुद्देशनामप्रकरणेपि— " आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः " " चतस्र एव विद्या इति कौटिल्यः " इत्युक्तम्. इत्युभयोरपि ग्रन्थयोरर्थसंवादः स्पष्ट एव । एवं कौटलीयार्थशास्त्रस्य शासनाधिकाराख्यप्रकरणे— " वर्णसंघातः पदम् " इत्यादिना पदलक्षणादिकं यादृशं प्रतिपादितं तादृशमेव— " ते विभक्त्यन्ताः पदम् २-२-५९ " इति न्यायसूत्रस्य भाष्येपि प्रतिपादितमित्यर्थसंवादेनोभयोरप्यनयोर्ग्रन्थयोरेककर्तृकत्वमनुमिनोमि ।

किं च— कौटलीयार्थशास्त्रस्य शासनाधिकाराख्यप्रकरणे एव— " पदसमूहो वाक्यमर्थपरिसमाप्तौ " इति वाक्यलक्षणमुक्तं तदेववाक्यलक्षणम्— " न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य २-१-५५ " इति न्यायसूत्रस्यभाष्ये उक्तम्, न चोभयोर्ग्रन्थयोरन्यतरस्मिन्नपि 'तदुक्तम्' इत्यादिकं परवाक्यानुवादचिह्नमुपलभ्यते. नाप्येतादृशोत्तमानां विदुषां परवाक्यचौर्यमुपपद्यते. नाप्युक्तार्थसंवादसहितेऽस्मिन् वाक्यलक्षणवाक्ये घुणाक्षरन्यायः प्रवेष्टुमर्हति. तस्मादेतस्माद्वाक्यानुपूर्वीसंवादादप्युभयोर्ग्रन्थायोरेककर्तृकत्वं स्पष्टमेव प्रतिपद्यते ।

किं च- कौटिलीयार्थशास्त्रस्य विद्यासमुद्देशाख्यप्रकरणे—

" प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता "

इति पद्यं कौटिल्येनोक्तम् एतत्पद्यमुद्दिश्यैव प्रथमस्य न्यायसूत्रस्य भाष्यान्ते- " सेयमान्वीक्षिकी-

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ "

इत्युक्तम् । प्रकीर्तितेतिक्तप्रत्ययेनान्वीक्षिकीकीर्तनस्य भूतकालिकत्वं स्पष्टमेव, न च न्यायभाष्ये विद्योद्देशनामकः कश्चिद्भागो वर्तते. प्रथमसूत्रे च आन्वीक्षिकीतिशब्दोऽपि नास्ति, कौटिलीयार्थशास्त्रे तु विद्यासमुद्देशनामको भागो वर्तते इति मन्ये न्यायभाष्ये विद्योद्देशब्देन तमेव भागं भाष्यकारोऽभिप्रैति तस्मात्सिद्धं द्वयोर्ग्रन्थयोरेककर्तृकत्वमिति ।

यद्यप्युक्तोभयोर्ग्रन्थयोः कर्तृभेदेपि कौटलीयार्थशास्त्रोक्तिमभिप्रेत्य न्यायभाष्यकृता " विद्योद्देशे प्रकीर्तिता " इति वक्तुं शक्यते तथाप्युभयत्राप्युक्तपद्ययोः पादत्रयस्याक्षरश एकानुपूर्वीकत्वमेककर्तृकत्वं द्रढयति- एतादृशविदुषां परवाक्यचौर्यपरत्वानुपपत्तेः । लेखशैलेः साम्येनोभयत्रापि पद्येन समाप्तिसूचनसाम्यात् समानशब्दप्रयोगैरपि चैककर्तृकत्वमनुमीयते ।

ननु कौटलीयार्थशास्त्रस्य विद्यासमुद्देशे " सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी " इतिवाक्येन सांख्यादीनामान्वीक्षिकीत्वमुक्तं न तु न्यायशास्त्रस्येति विरोध इति चेन्न- तत्र " आन्वीक्षिकी " इतिप्रथमान्तपाठस्याशुद्धत्वात् यतस्तदग्रे " धर्माधर्मौ त्रय्याम्. अर्थानर्थौ वार्तायाम्. नयानयौ दण्डनीत्याम् " इत्येवं विद्यावाचकत्रय्यादिशब्दानां सप्तम्यन्तः पाठोऽस्ति तस्मात् पूर्वोक्तवाक्ये आन्वीक्षिकीशब्दोऽपि सप्तम्यन्त एव युक्त इति "सांख्यं योगो लोकायतं चेत्यान्वीक्षिक्याम्' इत्येव पाठः शुद्धः युक्तश्चायं सप्तम्यन्तः पाठः- न्यायदर्शने सांख्यादीनां विचारस्य= प्रत्याख्यानस्योपलभ्यमानत्वात् । उपलभ्यमानस्यार्थशास्त्रपाठस्य बहुत्राशुद्धत्वं यशोधरेणाप्युक्तम्- " कौटलीयं यदि क्षान्तैः स्वरयोर्ह्रस्वदीर्घयोः । बिन्दूष्मणोर्विपर्यासाद् दुर्बोधमिति संजितम् " इति ।

किं च कामसूत्रग्रन्थोऽपि वात्स्यायनकृतस्तस्य च वात्स्यायनस्य कामसूत्रवृत्तिकारः- " तमुपायमाचिख्यासुराचार्यमल्लनागः पूर्वाचार्यमतानुसारेण शास्त्रमिदं प्रणीतवान् " इत्येवं सुबन्धुश्च कविर्वासवदत्तायाम्- " कामसूत्रविन्यास इव मल्लनागघटितः " इत्येवं मल्लनाग इति नाम कीर्तयति नामधेयं चैतत् पूर्वोक्तकोशवाक्येन चाणक्यस्यावधार्यते । अपि च कौटलीयार्थशास्त्रस्य भागानां यानि अधिकरणाध्यायसमुद्देशादीनि नामान्युपलभ्यन्ते तान्येव तथैव च कामसूत्रेऽप्युपलभ्यन्ते । अपि च " यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश " इत्यादीनि कानिचिद्वाक्यान्येकानुपूर्वीकाण्येव कामसूत्रे कौटलीयार्थशास्त्रे चोपलभ्यन्ते, औपनिषदिकस्याधिकरणस्य चोभयत्रापि परस्परं संवादः स्पष्ट एवेतिहेतुभिः कामसूत्रकौटिलीयार्थशास्त्रयोरेककर्तृकत्वम नुमीयते, कामसूत्रगतेन " इत्यर्थचिन्तकाः " इतिपाठमात्रेण कर्तृभेदो नोपपद्यते- कौटिल्यादपि पूर्वमर्थचिन्तकसत्तास्वीकारादित्यलम्, कामसूत्रं च वात्स्यायनप्रणीतमिति वात्स्यायनप्रणीतं न्यायभाष्यमपि कामसूत्रवत् चाणक्यप्रणीतमिति सिद्धम् । किं च " न कर्मकर्तृसाधनवैगुण्यात् २-१-५८" इतिन्यायसूत्रस्य भाष्येणास्य भाष्यकारस्य कामकलाकुशलत्वं स्पष्टं प्रतीयते । किं च कामसूत्रे- " श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः " इत्युक्तं तदनेन कामसूत्रकारस्य नैयायिकत्वं स्पष्टमेव- " आत्मा मनसा युज्यते मन इन्द्रियेण " इतिनैयायिकक्रमस्वीकारादिति कामसूत्रन्यायभाष्ययोरेककर्तृकत्वं सिद्धं तेन च यः खलु कामसूत्रकौटलीयार्थशास्त्रयोः कर्ता स एव न्यायभाष्यस्यापीति सिद्धम् ।

कौटलीयार्थशास्त्रस्य तु कर्ता जगत्प्रसिद्धश्चाणक्य एवेति तस्यान्तिमपद्येन स्फुटतरम् इदं च तत्पद्यम्—

" येन शास्त्रं च शस्त्रं च नन्दराजगता चमूः।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥" इति

तदनेन पद्येन कौटलीयार्थशास्त्रस्य चाणक्यनिर्मितत्वं सिद्धं तेनोक्तहेतुभिः कामसूत्रन्यायभाष्ययोरपि चाणक्यनिर्मितत्वं प्राप्नोतीति मे मतिर्भवति। चाणक्यस्य समयस्तु—

" यावत् परीक्षितो जन्म यावन्नन्दाभिषेचनम्
एतद्वर्षसहस्रं तु ज्ञेयं पञ्चदशोत्तरम् ॥ "

" महापद्मस्तत्पुत्राश्चैकं वर्षशतमवनिपतयो भविष्यन्ति नवैव तान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति. कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति, तस्यापि पुत्रो बिन्दुसरो भविष्यति" इत्यादिविष्णुपुराणचतुर्थांशवाक्यैस्तु इतःपूर्वमेकोनचत्वारिंशच्छतं वर्षा इति सिध्यति- यतोद्यत्वे कलियुगस्य एकविंशत्युत्तरपञ्चसहस्रं वर्षा व्यतीताः परीक्षितो जन्म च कलिकालारम्भात् किंचित् पूर्वमेवेत्येकं वर्षसहस्रं तु कलेर्नन्दराज्याभिषेके गतः एकं वर्षशतं च नन्दानां राज्यभोगसमय इति कलियुगारम्भादनन्तरमेकादशवर्षशतानन्तरं नन्दराज्यविनाशकालः स एव च चाणक्यस्य स्थितिकाल इतिसिद्धम्।

" ततोपि द्विसहस्रेषु दशाधिकशतत्रये।
भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति ॥"

इत्यनेन स्कन्दपुराणवाक्येन तु सप्तविंशतिशतं वर्षा इतः पूर्वं चाणक्यकाल इत्यवधार्यते- यतः कलेर्व्यतीतेभ्यः एकविंशत्युत्तरपञ्चसहस्रवर्षेभ्यः त्रयोविंशतिशतवर्षाणां पृथक्करणेन सप्तविंशतिशतं वर्षा उक्तस्कन्दपुराणवाक्येन स्थूलमानत उपलभ्यन्ते, अयमेव च समयो युक्ततरः- आधुनिकनिर्णीतसमयेन विशेषभेदाभावेन संवादात्। न्यायभाष्यकर्ता न चाणक्य इत्यत्र च प्रमाणाभावादित्यलम्।

यत्तु केपि एकस्मिन्नपि न्यायभाष्येऽध्यायलेखशैलिभेदेन कर्तृभेदमनुमिन्वन्ति तत्तु न प्रामाणिकं प्रतिपद्यते- यतो विषयभेदेनापि लेखशैलिभेदः संभवतीति प्रथमाध्यायस्य पदार्थलक्षणं विषयः स च सरल एव द्वितीयाद्यध्यायानां च पदार्थविवेचनं विषयः स च न तादृशः सरलः संभवतीति लेखशैलिभेद एककर्तृकत्वेपि नानुपपन्नः। किं च प्रथमाध्यायभाष्येपि- " सत्युपलभ्यमाने तद्वदनुपलब्धेः प्रदीपवत् " इत्यादीनि बहूनि वाक्यानि क्लिष्टतराण्युपलभ्यन्ते इति नात्र कर्तृभेदः प्रामाणिकः ॥

अस्य न्यायभाष्यस्य विद्वद्वरेणोद्योतकरेण वार्तिकं विरचितम्, उद्योतकरश्चायं नृपतिवरविक्रमसमकालिको वा किंचित्पूर्वापरकालिको वेत्यनुमिनोमि तथा हि- सुबन्धुना वासवदत्तायां वासवदत्तावर्णने " न्यायस्थितिमिवोद्योतकरस्वरूपाम् " इत्युक्तं न्यायस्थितेश्चोद्योतकरस्वरूपत्वमुद्योतकरसत्ताकाले एव संभवतीति वर्तमानस्योपमानत्वपक्षे सुबन्धुसमये उद्योतकरसत्त्वमुपलभ्यते किं वा सुबन्धुतः पूर्वभावित्वमुद्योतकरस्य प्राप्तमित्यत्र तु न कस्यचिद्विप्रतिपत्तिरुपपद्यते। वासवदत्तारम्भे च—

" सा रसवत्ता विहता नवका विलसन्ति चरति नो कं कः।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥"

इति विक्रमविषयको सुबन्धुकर्तृको विलापो वर्तते तत्र सेतितच्छब्दस्यानुभूतार्थपरत्वे तु सुबन्धोर्विक्रमद्रष्टृत्वं प्राप्नोतीति विक्रमसमय एव सुबन्धुसमयो विक्रमानन्तरं च वासवदत्तां निर्माय सुबन्धुर्मृत इति सिध्यति, सेतितच्छब्दस्यात्रानुभूतार्थपरत्वाभावेपि विक्रमादल्पकालानन्तरमेव सुबन्धुसत्ता संभवति- अत्यधिककालानन्तरं विक्रममुद्दिश्यैतादृशविलापस्यासंभवात्।

दिङ्नागनामधेयेन केनापि जैनाचार्येण स्वनिर्मितेन प्रमाणसमुच्चयनाम्ना ग्रन्थेन न्यायभाष्यदूषणानि प्रतिपादितानि तानि च दूषणान्युद्योतकरेण स्वविरचिते न्यायवार्तिके प्रत्याख्यातानीति श्रूयते तदनेनोद्योतकरस्य दिङ्नागानन्तरभावित्वं स्पष्टमेव, दिङ्नागश्चायं पञ्चवि-

शतिशतवर्षेभ्यः किंचिदर्वाचीन एवेति सुबन्धुदिङ्नागयोरन्तरालवर्त्ययमुद्योतकर इतिस्थूलमानमेवोपलभ्यते– विक्रमपूर्वभाविनां सूक्ष्ममानस्यानुपलम्भादित्यलम् ।

अस्य च न्यायवार्तिकस्य विद्वद्वरेण वाचस्पतिमिश्रेण मैथिलेन न्यायवार्तिकतात्पर्यटीकासमाख्या व्याख्या विरचिता वाचस्पतिमिश्रश्चायं वैक्रमे वस्वङ्कवसु ( ८९८ ) वत्सरे जीवन्नासीदिति तेन स्वयमेवोक्तम्—

" न्यायसूचीनिबन्धोऽसावऽकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु ( ८९८ ) वत्सरे ॥ " इति

तस्मादित एकादशशतवर्षेभ्यः पूर्वो वाचस्पतिमिश्रसमय इतिसिद्धम् ॥

अस्याश्च न्यायवार्तिकतात्पर्यटीकाया टीका तात्पर्यपरिशुद्धिसमाख्या उदयनाचार्येण विरचिता उदयनाचार्यश्चायं वैक्रमे ब्रह्मवेदखब्रह्म ( १०४१ ) वत्सरे तर्काम्बराङ्क ( ९०६ ) शकाब्दे जीवन्नासीदिति तेन स्वयमेवोक्तम्—

" तर्काम्बराङ्क ( ९०६ ) प्रमीतेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥" इति

तदनेनेतो नवशतवर्षेभ्यः पूर्वं उदयनाचार्यसमय इतिसिद्धम् ॥

तात्पर्यपरिशुद्धेरपि टीका विद्वद्वर वर्धमानोपाध्यायेन विरचिता ।

एतेषां सर्वेषां न्यायशास्त्रसन्दर्भाणां मूलं श्रीगौतमप्रणीतं न्यायसूत्रमेव गौतमसमयश्च सामान्यरूपेणापि नावधारयितुं शक्यते अथाप्ययमितस्त्रिसहस्रवर्षेभ्यो नातिपूर्वकालभावीत्यनुमिनोमि. तथा हि– न्यायसूत्रद्वितीयाध्यायान्ते– " आकृतिस्तदपेक्षत्वात् सत्त्वव्ययस्थानसिद्धेः २-२-६४ " इतिसूत्रेण जैमिनिमतानुवादादयं गौतमो जैमिन्यनन्तरभावीति स्पष्टमेव, " न तदनवस्थानात् २-२-६२ " इतिसूत्रेण बौद्धमतस्य व्यक्तिशक्तिवादस्य प्रत्याख्यानात् कलिकालान्तर्भाविनो बौद्धादप्ययमनन्तरभावीत्यपि स्पष्टमेव, उक्ताद् भाष्यकाराच्चाणक्यात् पूर्वभावीत्यपि च स्पष्टमेव अथापि नातिदीर्घकालपूर्वभावी– यतो बहूनां सूत्राणां भाष्यकारेणोक्ता अर्था सांकेतिका एव प्रतीयन्ते सांकेतिकार्थज्ञानं च सांकेतिकार्थज्ञानपरम्परां विना नोपपद्यते सांकेतिकार्थज्ञानपरम्परा च नातिदीर्घकालपर्यन्तं स्थातुमर्हति अत एवोत्तरोत्तरं टीकाग्रन्था विरच्यन्ते येन सांकेतिकार्थविलोपो न स्यात्. सांकेतिकार्थपरम्पराया अनन्तत्वसंभवे तादृशटीकानिर्माणं व्यर्थमेव स्यात् तस्मात् सांकेतिकार्थवर्णनात् सूत्रकारभाष्यकारयोर्नातिदीर्घकालव्यवधानं संभवतीति मन्ये भाष्यकारात् सूत्रकारोयं द्वित्रिशतवर्षमात्रपूर्वभावी सन् इतस्त्रिसहस्रवर्षपूर्वकालं नाऽत्येतुं शक्नोति । गौतमोयमऽहल्यापतिरित्यत्रापि प्रमाणं नोपलभ्यते। यत्तु कैश्चिदेषां सूत्रकारभाष्यकारादीनामतिप्राचीनत्वमुपवर्णितं तत्तु न प्रामाणिकमवधार्यते इति सर्वेषां स्पष्टमेव । ये तु स्मृतिपुराणादिषु न्यायतर्कान्वीक्षिक्यादिशब्दास्ते तु न्यायदर्शनस्य गौतमादपि प्राचीनत्वेनोपपद्यन्ते तस्यैव न्यायदर्शनस्य सूत्राण्यनेन गौतमेन विरचितानि मौखिकोपदेशपरम्परया प्राप्तस्यैवार्थजातस्य वाक्यनिबन्धदर्शनात् ।

यत्तु—

" कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥ "

इति पद्मपुराणपद्यं प्रदर्श्यते तत्त्वाधुनिकनिर्मितत्वान्न प्रमाणं यतस्तदग्रिमपद्ये—

" द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥ "

इत्येवं जैमिनिसूत्राणां निरीश्वरवादपरत्वं प्रतिपाद्यते लभ्यमानेषु च जैमिनिसूत्रेषु निरीश्वरवादस्य नामापि नोपलभ्यते तस्मादप्रमाणमिदं पद्यं, पूर्वमीमांसाशास्त्रे परमेश्वरखण्डनं सर्वतः प्रथमं कुमारिलभट्टकृतं श्लोकवार्तिके एवोपलभ्यते जैमिनेस्तु वेदान्तसूत्रेषु तत्र तत्र संमतिदर्शनेन निरीश्वरवादपरत्वमेव न संभवति " परं जैमिनिर्मुख्यत्वात् ४-३-११ " इति वेदान्तसूत्रेण तु स्पष्टमेव जैमिनेः

सेश्वरवादपरत्वं प्रतिपद्यते । तस्मादुक्तं पद्मपुराणपद्यमाधुनिकनिर्मितमेव. यत्र हि श्रुतिवाक्यान्यपि कानिचिदाधुनिकनिर्मितानि प्रवर्तन्ते तत्र का कथा स्मृतिपुराणादिवाक्यानामाधुनिकनिर्मितत्वे एतादृशेन सत्येनैवायं देशो नष्ट इत्यत्र न कस्यचिद्विप्रतिपत्तिरुपपद्यते । यैर्यैर्यानि यानि यादृशानि च स्वस्वमतपोषकाणि वाक्यान्यपेक्षितानि तैस्तैस्तानि तानि तादृशानि च विरचय्य श्रुतिस्मृत्यादिग्रन्थेषु प्रक्षिप्तानीति नात्र संशयः, किं बहुना कैश्चित्तु स्वदेशभाषामहत्त्वप्रतिपादकान्यपि वाक्यानि विरचय्य स्मृत्यादिषु प्रक्षिप्तानि तानि च तद्वंश्यैरद्यत्वे प्रमाणत्वेन प्रदर्श्यन्ते ।

दर्शनानि चैतानि परस्परं विरुद्धानि प्रायः पदार्थस्वरूपप्रस्तारेण प्रवृत्तानि दृश्यन्ते तथा हि–परिमाणं हि त्रिविधमेव संभवति सूक्ष्मं महत् मध्यमं च तत्र जीवात्मनः कैश्चित् सूक्ष्मं कैश्चित् महत् कैश्चित् मध्यमं परिमाणं स्वीकृतं तदेतत् स्वस्वमतानुसारेण जीवपरिमाणवर्णनं प्रस्तारकृतमेव. न च परिमाणस्य चतुर्थः प्रकारोऽस्ति यदि स्यात्तदा सोपि केनचित्स्वीकृतः स्यात्, एवं जीवस्य केन चिदनित्यत्वं केनचिन्नित्यत्वं केनचित्प्रवाहनित्यत्वं स्वीकृतं न चान्यात्र विधा वर्तते. एवं जीवस्य ज्ञानस्वरूपत्वं ज्ञानधर्मवत्त्वं ज्ञानस्वरूपत्वेसति ज्ञानधर्मवत्त्वं पाषाणकल्पत्वं च तैस्तैः स्वीकृतं न चात्रान्या विधा वर्तते । प्रपञ्चस्यापि कैश्चित् सत्त्वं कैश्चिदसत्त्वं कैश्चित् सदसद्विलक्षणत्वं कैश्चित्प्रवाहनित्यत्वं कैश्चित् संदिग्धत्वमपि स्वीकृतं न चान्यात्र विधा वर्तते, घटपटादीनां विनाशप्रत्यक्षान्नित्यत्वं वक्तुं न शक्यते अन्यथा नित्यत्वमपि केनचित् प्रतिपादितमभविष्यत्. एवमेव सर्वेष्वपि प्रमाणेषु प्रमेयेषु च प्रस्तारेणैव प्रवृत्तानि दर्शनानीत्यवधार्यते । पदार्थस्वरूपं चैकविधमेव संभवति न तु परस्परविरुद्धमनेकविधमपीति परस्परविरोधेनाऽप्रामाण्ये प्राप्ते चालनीन्यायेन सर्वेषामप्यऽप्रामाण्यमापद्यते ततश्च "वृद्धिमिच्छतो मूलमपि नष्टम्" इत्युपलब्धम् ।

'नास्तिकं मां तु मंस्यन्ते स्वयं नास्तिकचेतसः'

एतैश्च दर्शनैरुत्तरोत्तरमनर्थानां वृद्धिरेव कृता न निवृत्तिरिति तत्त्ववित्सु स्पष्टमेव, श्रद्धाजडानामल्पाज्ञानां चात्र विचारेऽधिकार एव नास्ति ।

दर्शनाचार्याश्चैते प्रायः रागद्वेषक्रोधादिभिः साधारणपुरुषदोषैरपि रहिता नोपलभ्यन्ते, अत एवैते स्वगुरुत्वमहत्त्वयोः स्थापनार्थमेव स्वस्वमतप्रतिपादनार्थं प्रवृत्ता न तु जगदुपकारार्थं न च परमतखण्डनादिकं शान्तपुरुषकार्यं संभवति शान्तानां तत्र प्रवृत्तेरनुपलम्भात्. तथा च योगसूत्रम्– "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" इति । बहुत्र चैभिः श्रुत्यर्था अपि तादृशा असंगताः प्रतिपाद्यन्ते यादृशान् विद्वान् स्वीकर्तुं न शक्नोति, एषां परस्परविरोधेन धर्मस्य वास्तवं तत्त्वं विध्वंसितं ज्ञानं च भगवत्प्रेम चान्तःकरणान्निष्कासितम्. न चैषु परमतखण्डनं स्वमहत्त्वस्थापनं च विना किमप्यन्यत् तत्त्वमुपलभ्यते । एषां शिष्यैश्चैतेषामेतादृशं मिथ्यातिमहत्त्वमुपपाद्यते येन वास्तवमप्येषां महत्त्वं संशयविषयतामाप्नोति । परमात्मा च परमेश्वरोपि सन्नेषां भृत्यतुल्य एव । आकुलीकृतश्चैभिर्वेदः । एतेषामेतादृशकृपयैव सर्वजनापेक्षितं लौकिकं देशमहत्त्वमत्यन्ताभावप्रतियोगितां प्राप्तम् ।

अपि च ब्रह्मवादिभिर्ब्रह्मणो वैष्णवैश्च विष्णोः शैवैश्च शिवस्य शाक्तैश्च शक्तेः परमा दुर्गतिः क्रियते इति तत्र तत्र स्पष्टमेव । भगवत्प्रतिमास्तु तदधिष्ठातॄणां क्रीडनकभूता एव ।

अद्यत्वेप्येषैव गतिरुपलभ्यते–मिथ्याभाषणतो न बिभ्यति पुरुषमात्रं मूर्खं मन्यमाना यथेच्छमाचरन्ति, स्वस्वसंप्रदायाऽस्वीकृतानपि पदार्थान् प्रतिपादयन्ति यथा दीक्षामात्रेण मोक्षपदप्राप्तिं कार्षापणप्रदानमात्रेण च परमेश्वरकृपामुपपादयन्ति । एषामाचार्याणां गृहे ये जायन्ते ते सर्वेपि अवतारभूता एव जायन्ते ये च म्रियन्ते ते कामैकपरायणा अपि सर्वेऽपवर्गपदमेव प्राप्नुवन्ति, ज्ञानभक्त्यपवर्गाश्चैतेषां सद्मनि बदरीफलेभ्योपि सुलभा उपलभ्यन्ते "जगद्व्यापारवर्जम्" इति सूत्रस्यापि गतिर्नास्ति । सर्वं च पृथिवीवित्तमेतेषामेवोपभोगार्थं मन्ये परमात्मना विनिर्मितम् । एतेषामुपानदर्थमपि रत्नान्यवश्यमपेक्ष्यन्ते परेषामुदरपूर्त्यर्थमप्यन्नस्याप्यत्यावश्यकता नास्ति, यच्च पृथिव्यां ग्राह्यमस्ति तत्सर्वमेभ्यः समर्पणीयमेषैवैषां दृष्टिरिति कृतं विस्तरेण । एषैव च गतिः

शतिशतवर्षेभ्यः किंचिदर्वाचीन एवेति सुबन्धुदिङ्नागयोरन्तरालवर्त्ययमुद्योतकर इतिस्थूलमानमेवोपलभ्यते– विक्रमपूर्वभाविनां सूक्ष्ममानस्यानुपलम्भादित्यलम् ।

अस्य च न्यायवार्तिकस्य विद्वद्वरेण वाचस्पतिमिश्रेण मैथिलेन न्यायवार्तिकतात्पर्यटीकासमाख्या व्याख्या विरचिता वाचस्पतिमिश्रश्चायं वैक्रमे वस्वङ्कवसु ( ८९८ ) वत्सरे जीवन्नासीदिति तेन स्वयमेवोक्तम्—

" न्यायसूचीनिबन्धोऽसावऽकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु ( ८९८ ) वत्सरे ॥ " इति

तस्मादित एकादशशतवर्षेभ्यः पूर्वो वाचस्पतिमिश्रसमय इतिसिद्धम् ॥

अस्याश्च न्यायवार्तिकतात्पर्यटीकाया टीका तात्पर्यपरिशुद्धिसमाख्या उदयनाचार्येण विरचिता उदयनाचार्यश्चायं वैक्रमे ब्रह्मवेदखब्रह्म ( १०४१ ) वत्सरे तर्काम्बराङ्क ( ९०६ ) शकाब्दे जीवन्नासीदिति तेन स्वयमेवोक्तम्—

" तर्काम्बराङ्क ( ९०६ ) प्रमीतेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥" इति

तदनेनेतो नवशतवर्षेभ्यः पूर्वं उदयनाचार्यसमय इतिसिद्धम् ॥

तात्पर्यपरिशुद्धेरपि टीका विद्वद्वर वर्धमानोपाध्यायेन विरचिता ।

एतेषां सर्वेषां न्यायशास्त्रसन्दर्भाणां मूलं श्रीगौतमप्रणीतं न्यायसूत्रमेव गौतमसमयश्च सामान्यरूपेणापि नावधारयितुं शक्यते अथाप्ययमितस्त्रिसहस्रवर्षेभ्यो नातिपूर्वकालभावीत्यनुमिनोमि. तथा हि– न्यायसूत्रद्वितीयाध्यायान्ते– " आकृतिस्तदपेक्षत्वात् सत्त्वव्ययस्थानसिद्धेः २–२–६४" इतिसूत्रेण जैमिनिमतानुवादादयं गौतमो जैमिन्यनन्तरभावीति स्पष्टमेव, " न तदनवस्थानात् २–२–६२" इतिसूत्रेण बौद्धमतस्य व्यक्तिशक्तिवादस्य प्रत्याख्यानात् कलिकालान्तर्भाविनो बौद्धादप्ययमनन्तरभावीत्यपि स्पष्टमेव, उक्ताद् भाष्यकाराच्चाणक्यात् पूर्वभावीत्यपि च स्पष्टमेव अथापि नातिदीर्घकालपूर्वभावी– यतो बहूनां सूत्राणां भाष्यकारेणोक्ता अर्था सांकेतिका एव प्रतीयन्ते सांकेतिकार्थज्ञानं च सांकेतिकार्थज्ञानपरम्परां विना नोपपद्यते सांकेतिकार्थज्ञानपरम्परा च नातिदीर्घकालपर्यन्तं स्थातुमर्हति अत एवोत्तरोत्तरं टीकाग्रन्था विरच्यन्ते येन सांकेतिकार्थविलोपो न स्यात्. सांकेतिकार्थपरम्पराया अनन्तत्वसंभवे तादृशटीकानिर्माणं व्यर्थमेव स्यात् तस्मात् सांकेतिकार्थवर्णनात् सूत्रकारभाष्यकारयोर्नातिदीर्घकालव्यवधानं संभवतीति मन्ये भाष्यकारात् सूत्रकारोयं द्वित्रिशतवर्षमात्रपूर्वभावी सन् इतस्त्रिसहस्रवर्षपूर्वकालं नाऽत्येतुं शक्नोति । गौतमोयमऽहल्यापतिरित्यत्रापि प्रमाणं नोपलभ्यते । यत्तु कैश्चिदेषां सूत्रकारभाष्यकारादीनामतिप्राचीनत्वमुपवर्णितं तत्तु न प्रामाणिकमवधार्यते इति सर्वेषां स्पष्टमेव । ये तु स्मृतिपुराणादिषु न्यायतर्कान्वीक्षिक्यादिशब्दास्ते तु न्यायदर्शनस्य गौतमादपि प्राचीनत्वेनोपपद्यन्ते तस्यैव न्यायदर्शनस्य सूत्राण्यनेन गौतमेन विरचितानि मौखिकोपदेशपरम्परया प्राप्तस्यैवार्थजातस्य वाक्यनिबन्धदर्शनात् ।

यत्तु—

" कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥"

इति पद्मपुराणपद्यं प्रदर्श्यते तत्त्वाधुनिकनिर्मितत्वान्न प्रमाणं यतस्तदग्रिमपद्ये—

" द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥"

इत्येवं जैमिनिसूत्राणां निरीश्वरवादपरत्वं प्रतिपाद्यते लभ्यमानेषु च जैमिनिसूत्रेषु निरीश्वरवादस्य नामापि नोपलभ्यते तस्मादप्रमाणमिदं पद्यं, पूर्वमीमांसाशास्त्रे परमेश्वरखण्डनं सर्वतः प्रथमं कुमारिलभट्टकृतं श्लोकवार्तिके एवोपलभ्यते जैमिनेस्तु वेदान्तसूत्रेषु तत्र तत्र संमतिदर्शनेन निरीश्वरवादपरत्वमेव न संभवति " परं जैमिनिर्मुख्यत्वात् ४-३-११ " इति वेदान्तसूत्रेण तु स्पष्टमेव जैमिनेः

सेश्वरवादपरत्वं प्रतिपद्यते । तस्मादुक्तं पद्मपुराणपद्यमाधुनिकनिर्मितमेव. यत्र हि श्रुतिवाक्यान्यपि कानिचिदाधुनिकनिर्मितानि प्रवर्तन्ते तत्र का कथा स्मृतिपुराणादिवाक्यानामाधुनिकनिर्मितत्वे एतादृशेन सत्येनैवायं देशो नष्ट इत्यत्र न कस्यचिद्विप्रतिपत्तिरुपपद्यते । यैर्यैर्यानि यानि यादृशानि च स्वस्वमतपोषकाणि वाक्यान्यपेक्षितानि तैस्तैस्तानि तानि तादृशानि च विरचय्य श्रुतिस्मृत्यादिग्रन्थेषु प्रक्षिप्तानीति नात्र संशयः, किं बहुना कैश्चित्तु स्वदेशभाषामहत्त्वप्रतिपादकान्यपि वाक्यानि विरचय्य स्मृत्यादिषु प्रक्षिप्तानि तानि च तद्वंश्यैरद्यत्वे प्रमाणत्वेन प्रदर्श्यन्ते ।

दर्शनानि चैतानि परस्परं विरुद्धानि प्रायः पदार्थस्वरूपप्रस्तारेण प्रवृत्तानि दृश्यन्ते तथा हि–परिमाणं हि त्रिविधमेव संभवति सूक्ष्मं महत् मध्यमं च तत्र जीवात्मनः कैश्चित् सूक्ष्मं कैश्चित् महत् कैश्चित् मध्यमं परिमाणं स्वीकृतं तदेतत् स्वस्वमतानुसारेण जीवपरिमाणवर्णनं प्रस्तारकृतमेव. न च परिमाणस्य चतुर्थः प्रकारोस्ति यदि स्यात्तदा सोपि केनचित्स्वीकृतः स्यात्, एवं जीवस्य केन चिदनित्यत्वं केनचिन्नित्यत्वं केनचित्प्रवाहनित्यत्वं स्वीकृतं न चान्यात्र विधा वर्तते. एवं जीवस्य ज्ञानस्वरूपत्वं ज्ञानधर्मवत्त्वं ज्ञानस्वरूपत्वेसति ज्ञानधर्मवत्त्वं पाषाणकल्पत्वं च तैस्तैः स्वीकृतं न चात्रान्या विधा वर्तते । प्रपञ्चस्यापि कैश्चित् सत्त्वं कैश्चिदसत्त्वं कैश्चित् सदसद्विलक्षणत्वं कैश्चित्प्रवाहनित्यत्वं कैश्चित् संदिग्धत्वमपि स्वीकृतं न चान्यात्र विधा वर्तते, घटपटादीनां विनाशप्रत्यक्षान्नित्यत्वं वक्तुं न शक्यते अन्यथा नित्यत्वमपि केनचित् प्रतिपादितमभविष्यत्. एवमेव सर्वेष्वपि प्रमाणेषु प्रमेयेषु च प्रस्तारेणैव प्रवृत्तानि दर्शनानीत्यवधार्यते । पदार्थस्वरूपं चैकविधमेव संभवति न तु परस्परविरुद्धमनेकविधमपीति परस्परविरोधेनाऽप्रामाण्ये प्राप्ते चालनीन्यायेन सर्वेषामप्यऽप्रामाण्यमापद्यते ततश्च " वृद्धिमिच्छतो मूलमपि नष्टम् " इत्युपलब्धम् ।

' नास्तिकं मां तु मंस्यन्ते स्वयं नास्तिकचेतसः '

एतैश्च दर्शनैरुत्तरोत्तरमनर्थानां वृद्धिरेव कृता न निवृत्तिरिति तत्त्ववित्सु स्पष्टमेव, श्रद्धाजडानामल्पाज्ञानां चात्र विचारेऽधिकार एव नास्ति ।

दर्शनाचार्याश्चैते प्रायः रागद्वेषक्रोधादिभिः साधारणपुरुषदोषैरपि रहिता नोपलभ्यन्ते, अत एवैते स्वगुरुत्वमहत्त्वयोः स्थापनार्थमेव स्वस्वमतप्रतिपादनार्थं प्रवृत्ता न तु जगदुपकारार्थं न च परमतखण्डनादिकं शान्तपुरुषकार्यं संभवति शान्तानां तत्र प्रवृत्तेरनुपलम्भात्. तथा च योगसूत्रम्– " मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् " इति । बहुत्र चैभिः श्रुत्यर्था अपि तादृशा असंगताः प्रतिपाद्यन्ते यादृशान् विद्वान् स्वीकर्तुं न शक्नोति, एषां परस्परविरोधेन धर्मस्य वास्तवं तत्त्वं विध्वंसितं ज्ञानं च भगवत्प्रेम चान्तःकरणान्निष्कासितम्. न चैषु परमतखण्डनं स्वमहत्त्वस्थापनं च विना किमप्यन्यत् तत्त्वमुपलभ्यते । एषां शिष्यैश्चैतेषामेतादृशं मिथ्यातिमहत्त्वमुपपाद्यते येन वास्तवमप्येषां महत्त्वं संशयविषयतामाप्नोति । परमात्मा च परमेश्वरोपि सन्नेषां भृत्यतुल्य एव । आकुलीकृतश्चैभिर्वेदः । एतेषामेतादृशकृपयैव सर्वजनापेक्षितं लौकिकं देशमहत्त्वमत्यन्ताभावप्रतियोगितां प्राप्तम् ।

अपि च ब्रह्मवादिभिर्ब्रह्मणो वैष्णवैश्च विष्णोः शैवैश्च शिवस्य शाक्तैश्च शक्तेः परमा दुर्गतिः क्रियते इति तत्र तत्र स्पष्टमेव । भगवत्प्रतिमास्तु तदधिष्ठातॄणां क्रीडनकभूता एव ।

अद्यत्वेप्येषैव गतिरुपलभ्यते–मिथ्याभाषणतो न बिभ्यति पुरुषमात्रं मूर्खं मन्यमाना यथेच्छमाचरन्ति, स्वस्वसंप्रदायाऽस्वीकृतानपि पदार्थान् प्रतिपादयन्ति यथा दीक्षामात्रेण मोक्षपदप्राप्तिं कार्षापणप्रदानमात्रेण च परमेश्वरकृपामुपपादयन्ति । एषामाचार्याणां गृहे ये जायन्ते ते सर्वेपि अवतारभूता एव जायन्ते ये च म्रियन्ते ते कामैकपरायणा अपि सर्वेऽपवर्गपदमेव प्राप्नुवन्ति, ज्ञानभक्त्यपवर्गाश्चैतेषां सद्मनि बदरीफलेभ्योपि सुलभा उपलभ्यन्ते " जगद्व्यापारवर्जम् " इति सूत्रस्यापि गतिर्नास्ति । सर्वं च पृथिवीवित्तमेतेषामेवोपभोगार्थं मन्ये परमात्मना विनिर्मितम् । एतेषामुपानदर्थमपि रत्नान्यवश्यमपेक्ष्यन्ते परेषामुदरपूर्त्यर्थमप्यन्नस्याप्यत्यावश्यकता नास्ति, यच्च पृथिव्यां ग्राह्यमस्ति तत्सर्वमेभ्यः समर्पणीयमेषैवेषां दृष्टिरिति कृतं विस्तरेण । एषैव च गतिः

प्रायः पृथ्वीपतीनामवलोक्यते साधरणप्रजाजनार्थं तु पृथिव्यां किमपि नास्तीति मन्ये एतेप्येवमेव मन्यन्ते । कलिकालोत्पन्नत्वेनैवैषामाचार्याणां तद्दर्शनानां च महत्त्वं स्पष्टं प्रतिभासते । एभिर्ध्रुतस्य साकल्येन जन्मजरामरणादिसंसारदुःखमपि निवर्तयितुं शक्यते जीवतस्तु कण्टकवेधवेदनापि निवर्तयितुं न शक्यते इत्येष खल्वेषां महिमा । 'धर्मस्य तत्त्वं निहितं गुहायां भृशं प्रविष्टा वयमेव तत्र' इत्येषामुद्घोषः । "विनायकं प्रकुर्वाणो रचयामास वानरम्" इतिन्यायेन तत्त्वोपपादने प्रवृत्तैरेतैः किं वा तत्त्वोपपादनव्याजेन स्वाग्रहा एवोपपादिताः, परेण यत् सम्यगुक्तं स्यात् तदवश्यमेव खण्डनीयमित्येषां दृढा प्रतिज्ञा, किं बहुना परोक्तं प्रत्याख्याय तदेव कालान्तरे स्वसिद्धान्तत्वेन स्वीकुर्वन्ति चेत्येषां तत्त्वपरत्वम् , सम्यगुक्तम्– "एकां लज्जां परित्यज्य नरः स्वार्थं प्रसाधयेत्" इति।

पृथ्वी चेयमृते श्रीरामचन्द्रशासनसमयाद्बहुकालमारभ्यानर्थानां निवासस्थानभूतैवास्ति, येन यत् समीहितं तदेव संपादितं तच्चार्थो वा स्यादनर्थो वा । यस्मिन् काले देशे च प्रजाजनैः यत्किंचिदपेक्षितं तत्साधनार्थं बहवः खलु गुरुशब्दवाच्या वञ्चकाः कटिबद्धाः संजायते. तत्साधनव्याजेनैव महत्तरं गुरुत्वं संमानं धनं च लभन्ते. स्वस्वमार्गेषु प्रजां विविधोपायैराकर्षन्ति, प्रजाजनश्चायं विवेकदृष्टिराहित्यात् तेषां वञ्चकत्वं नावधारयितुं शक्नोति । देशश्चायं प्रायोऽर्थकामैकपरायणोपि परमविरक्तोपवर्गपदाधिकारी न चात्र कोप्येतादृशोस्ति यः खलु नरकादागतो नरकं गच्छति गमिष्यति वा, मद्यमांसादिपरायणा अपि स्वर्गमेव सद्यो गच्छन्ति । अत्र च गोवपामिश्रं घृतं बहुभिर्विक्रीतं क्रीतं भक्षितं चाथाप्ययं देशः परमधार्मिकस्तदुक्तम्– "पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः" इति । एकैककार्षापणार्थमप्यत्र भ्रातृभिरपि सहाभियोगाः प्रवर्तन्ते अथाप्ययं देशः परमसंतोषी । अहर्निशं मिथ्याभाषणपरायणोप्ययं देशः सत्यवादी । गर्भपातनान्यप्यत्र प्रायः पातिव्रत्यपदप्रविष्टानि वर्तन्ते । वेश्यावृन्दबहुलोप्ययं देश पत्नीव्रतधारी । परद्वेषपरायणोप्ययं देशः शान्तिप्रधानः । अत्रत्यप्रधानपुरुषाणां या शरीरयात्रा शयनभोजनमलत्यागादिरूपा सापि देशोपकारायैव, न कोप्यत्र स्वार्थार्थं प्रवर्तते । परस्परप्रेमपक्षैकमत्यादिरहितोप्ययं देशः स्वयं शासनाधिकारी । खड्गग्रहणानभिज्ञोपि स्वराज्याभिलाषी, अतिसुकुमारोपि सिंहसिंहासनारूढः, बुभुक्षितोपि शूरः, परकण्ठकर्तननिपुणोपि दयालुः, परकीयनीत्यनभिज्ञोपि परमनिपुणः, शब्दमात्रेण स्वराज्यप्राप्त्यभिलाषीति मन्ये गीर्वाण एव, सूच्यादिनिर्माणानभिज्ञोपि परं प्रवीणः । निर्जलदुग्धस्य चुलकमात्रमप्यत्रोपलब्धुं न शक्यते अथाप्ययं समृद्धः सत्यव्यापारपरश्च, अन्नहीनोपि शौर्यशक्तिरहितोपि च स्वराज्यं करिष्यति, गुणस्वरूपानभिज्ञोपि गुणैकनिधिः, स्वदोषश्रवणशत्रुरपि निर्दोषः– स्वदोषानभिज्ञत्वमात्रादेव । अत्र हि विद्याविहीना अपि विद्वांसः शास्त्रिशब्दवाच्याश्च, शासनशक्तिरहिता अपि भूपालाः सिंहशब्दवाच्याश्च, स्वर्णसिंहासनारूढा अभियोगपरायणा नरवाहना कोशपुष्टिपराश्च संन्यासिनः विवाहिताराहित्यमात्रं चैषां व्रतम्, अध्ययनहीना यथेच्छं भोगपरा अपि ब्रह्मचारिणः । धर्मसभाधर्मशालापाठशालादिनिर्माणस्वराज्यदेशोद्धाराद्या ह्यत्र देशप्रधानानां निस्पृहाणामाजीविका, परवञ्चनमेव परोपकारः, स्वार्थमेव परमार्थः, धूर्ता एव विद्वांसः, शूद्रा एव गुरवः, श्रीमन्त एव सकलसद्गुणगणार्णवा मानास्पदाश्च, अर्थकामैकपरायणा एव महानुभावा महात्मानस्तदुक्तम्—

"अन्तः शाक्ता बहिः शैवाः सभामध्ये च वैष्णवाः" इति ।

तथा— 'कार्ये वा व्यवहारे वा परीक्षा जायते नृणाम् ।
बाह्यदृष्ट्या जनः सर्वो भासते शुकदेववत्' इति ।

इत्यादिकं सर्वमेव कृतबुद्धयो वृद्धा विजानन्त्येवेति कृतमनेनाधिकेन कोपोत्पादकलेखेनेत्यलमिति सविनयं विज्ञापयति—

श्रीमताम्
सुदर्शनाचार्यशास्त्री
काशी.

॥ अथ ॥

## न्यायाचार्यश्रीगौतमप्रणीतन्यायसूत्राणाम्

## अकारादिक्रमेणानुक्रमणिका


| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| **अ–** | | | |
| अणुश्यामतानित्यत्ववत्० | ३ | २ | ७४ |
| अणुश्यामतानित्यत्ववद्वा | ४ | १ | ६७ |
| अत्यन्तप्रायैकदेशसाधर्म्यात् | २ | १ | ४४ |
| अथ तत्पूर्वकं त्रिविधम् | १ | १ | ५ |
| अध्यापनादप्रतिषेधः | २ | २ | २७ |
| अनर्थापत्तौ | २ | २ | ४ |
| अनवस्थाकारित्वात् | ४ | २ | २५ |
| अनवस्थायित्वे | २ | २ | ५३ |
| अनिग्रहस्थाने | ५ | २ | २२ |
| अनित्यत्वग्रहात् | ३ | २ | २४ |
| अनिमित्ततो भावोत्पत्तिः | ४ | १ | २२ |
| अनिमित्तनिमित्तत्वात् | ४ | १ | २३ |
| अनियमे नियमात् | २ | २ | ५६ |
| अनुक्तस्यार्थापत्तेः | ५ | १ | २२ |
| अनुपलम्भात्मकत्वात् | २ | २ | २१ |
| अनुपलम्भात्मकत्वात् | ५ | १ | ३० |
| अनुपलम्भादपि | २ | २ | २० |
| अनुवादोपपत्तेश्च | २ | १ | ६० |
| अनेकद्रव्यसमवायात् | ३ | १ | ३६ |
| अनैकान्तिकः सव्यभिचारः | १ | २ | ५ |
| अन्तर्बहिश्च | ४ | २ | २० |
| अन्यदन्यस्मादनन्यत्वात् | २ | २ | ३१ |
| अपरिसंख्यानाच्च | ३ | १ | १५ |
| अपरीक्षिताभ्युपगमात् | १ | १ | ३१ |
| अपवर्गेप्येवं प्रसङ्गः | ४ | २ | ४३ |
| अप्तेजोवायूनाम् | ३ | १ | ६२ |
| अप्रतीघातात् | ३ | १ | ४६ |
| अप्रत्यभिज्ञानम् | ३ | २ | ७ |
| अप्रत्यभिज्ञाने | ३ | २ | ५ |
| अप्राप्य ग्रहणम् | ३ | १ | ४४ |
| अभावाद् भावोत्पत्तिः | ४ | १ | १४ |
| अभिव्यक्तौ चाभिभवात् | ३ | १ | ४२ |
| अभ्यासात् | २ | २ | २९ |
| अभ्युपेत्य कालभेदे | २ | १ | ५९ |
| अयसोऽयस्कान्ताभिगमनवत् | ३ | १ | २३ |
| अरण्यगुहापुलिनादिषु | ४ | २ | ४२ |
| अर्थादापन्नस्य | ५ | २ | १५ |
| अर्थापत्तितः | ५ | १ | २१ |
| अर्थापत्तिरप्रमाणम् | २ | २ | ३ |
| अलातचक्रदर्शनवत् | ३ | २ | ६० |
| अवयवनाशेपि | ३ | १ | १० |
| अवयवविपर्यासवचनम् | ५ | २ | ११ |
| अवयवान्तराभावेपि | ४ | २ | १२ |
| अवयवावयवप्रसङ्गः | ४ | २ | १५ |
| अविज्ञाततत्त्वेऽर्थे | १ | १ | ४० |
| अविज्ञातं चाज्ञानम् | ५ | २ | १७ |
| अविशेषाभिहितेऽर्थे | १ | २ | १२ |
| अविशेषे वा किंचित् | १ | २ | १७ |
| अविशेषोक्ते हेतौ | ५ | २ | ६ |
| अव्यक्तग्रहणम् | ३ | २ | ४५ |
| अव्यभिचाराच्च | ३ | १ | ३८ |
| अव्यवस्थात्मनि | २ | १ | ४ |
| अव्यूहाविष्टम्भविभुत्वानि | ४ | २ | २२ |
| अश्रवणकारणानुपलब्धेः | २ | २ | ३४ |
| असत्यर्थे नाभावः | २ | २ | ९ |
| अस्पर्शत्वात् | २ | २ | २२ |
| अस्पर्शत्वादप्रतिषेधः | २ | २ | ३८ |
| **आ–** | | | |
| आकाशव्यतिभेदात् | ४ | २ | १८ |
| आकाशासर्वगतत्वं वा | ४ | २ | १९ |
| आकृतिर्जातिलिङ्गाख्या | २ | २ | ६९ |
| आकृतिस्तदपेक्षत्वात् | २ | २ | ६४ |
| आत्मनित्यत्वे | ४ | १ | १० |
| आत्मप्रेरणयदृच्छा० | ३ | २ | ३१ |
| आत्मशरीरेन्द्रियार्थ० | १ | १ | ९ |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| आदर्शोदकयोः ... ... | ३ | १ | ४९ |
| आदित्यरश्मेः ... ... | ३ | १ | ४७ |
| आदिमत्त्वात् ... ... | २ | २ | १३ |
| आप्तोपदेशः शब्दः ... | १ | १ | ७ |
| आप्तोपदेशसामर्थ्यात् ... | २ | १ | ५२ |
| आश्रयाव्यतिरेकात् ... | ४ | १ | ५१ |
| इ— | | | |
| इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि | १ | १ | १० |
| इन्द्रियान्तरविकारात् ... | ३ | १ | १२ |
| इन्द्रियार्थपञ्चत्वात् ... | ३ | १ | ५५ |
| इन्द्रियार्थसंनिकर्षोत्पन्नम् ... | १ | १ | ४ |
| इन्द्रियैर्मनसः संनिकर्षाभावात् | ३ | २ | २१ |
| ई— | | | |
| ईश्वरः कारणम् ... ... | ४ | १ | १९ |
| उ— | | | |
| उत्तरस्याप्रतिपत्तिरप्रतिभा ... | ५ | २ | १८ |
| उत्पादव्ययदर्शनात् ... | ४ | १ | ४९ |
| उदाहरणसाधर्म्यात् ... | १ | १ | ३४ |
| उदाहरणापेक्षः ... ... | १ | १ | ३८ |
| उपपत्तिकारणाभ्यनुज्ञानात् ... | ५ | १ | २६ |
| उपपन्नश्च तद्वियोगः ... | ३ | २ | ७० |
| उपलब्धेरद्विप्रवृत्तित्वात् ... | २ | १ | ५० |
| उपलभ्यमाने चानुपलब्धेः ... | २ | २ | ३५ |
| उभयकारणोपपत्तेः ... | ५ | १ | २५ |
| उभयसाधर्म्यात् ... ... | ५ | १ | १६ |
| उभयोः पक्षयोरन्यतरस्य ... | २ | २ | २८ |
| ऋ— | | | |
| ऋणक्लेशप्रवृत्त्यनुबन्धात् ... | ४ | १ | ५९ |
| ए— | | | |
| एकधर्मोपपत्तेरविशेषे ... | ५ | १ | २३ |
| एकविनाशे द्वितीयविनाशात्... | ३ | १ | ९ |
| एकस्मिन् भेदाभावात् ... | ४ | २ | ११ |
| एकैकश्येनोत्तरोत्तरगुणसद्भावात् | ३ | १ | ६४ |
| एतेनानियमः प्रत्युक्तः ... | ३ | २ | ६९ |
| ऐ— | | | |
| ऐन्द्रियकत्वाद्रूपादीनाम् ... | ३ | २ | ५७ |
| क— | | | |
| कर्मकारितश्चेन्द्रियाणाम् ... | ३ | १ | ३७ |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| कर्माकाशसाधर्म्यात् संशयः ... | ३ | २ | १ |
| कर्मानवस्थायिग्रहणात् ... | ३ | २ | ४४ |
| कारणद्रव्यस्य ... ... | २ | २ | १७ |
| कारणान्तरादपि ... | ५ | १ | २८ |
| कार्यव्यासङ्गात् ... | ५ | २ | १९ |
| कार्यान्यत्वे प्रयत्नाहेतुत्वम् ... | ५ | १ | ३८ |
| कालात्ययापदिष्टः... | १ | २ | ९ |
| कालान्तरेणानिष्पत्तिः ... | ४ | १ | ४६ |
| किंचित्साधर्म्यात्... ... | ५ | १ | ५ |
| कुड्यान्तरितानुपलब्धेः ... | ३ | १ | ४५ |
| कुम्भादिष्वनुपलब्धेरहेतुः ... | ३ | २ | ३८ |
| कृतताकर्तव्यतोपपत्तेः ... | २ | १ | ४३ |
| कृत्स्नैकदेशवृत्तित्वात् ... | ४ | २ | ७ |
| कृष्णसारे सत्युपलम्भात् ... | ३ | १ | ३० |
| केशनखादिष्वनुपलब्धेः ... | ३ | २ | ५३ |
| केशसमूहे ... ... | ४ | २ | १३ |
| क्रमनिर्देशादप्रतिषेधः ... | ४ | १ | १८ |
| क्रमवृत्तित्वात् ... ... | ३ | २ | ६ |
| क्वचिद्धर्मानुपपत्तेः... ... | ५ | १ | २४ |
| क्वचिद्विनाशकारणानुपलब्धेः | ३ | २ | १७ |
| क्षीरविनाशे ... ... | ३ | २ | १३ |
| क्षुदादिभिः प्रवर्तनाच्च ... | ४ | २ | ४० |
| ग— | | | |
| गन्धत्वाद्यव्यतिरेकात् ... | ३ | १ | ५७ |
| गन्धरसरूपस्पर्शशब्दानाम् ... | ३ | १ | ६१ |
| गन्धरसरूपस्पर्शशब्दाः ... | १ | १ | १४ |
| गुणान्तरापत्त्युपमर्दह्रास० ... | २ | २ | ५८ |
| गोत्वाद् गोसिद्धिवत् ... | ५ | १ | ३ |
| घ— | | | |
| घटादिनिष्पत्तिदर्शनात् ... | ५ | १ | ८ |
| घ्राणरसनचक्षुस्त्वक्श्रोत्राणि... | १ | १ | १२ |
| च— | | | |
| चेष्टेन्द्रियार्थाश्रयः शरीरम् ... | १ | १ | ११ |
| ज— | | | |
| जातिविशेषे चानियमात् ... | २ | १ | ५६ |
| ज्ञस्येच्छाद्वेषनिमित्तत्वात् ... | ३ | २ | ३५ |
| ज्ञातुर्ज्ञानसाधनोपपत्तेः ... | ३ | १ | १७ |
| ज्ञानग्रहणाभ्यासः... ... | ४ | २ | ४७ |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| ज्ञानलिङ्गत्वादात्मनः | २ | १ | २३ |
| ज्ञानविकल्पानाम् | ५ | १ | ३१ |
| ज्ञानसमवेतात्मप्रदेशसंनिकर्षात् | ३ | २ | २५ |
| ज्ञानायौगपद्यादेकं मनः | ३ | २ | ५८ |
| त— | | | |
| तत्कारितत्वादहेतुः | ४ | १ | २१ |
| तत् त्रिविधम् | १ | २ | ११ |
| तत्त्रैराश्यम् | ४ | १ | ३ |
| तत्त्वप्रधानभेदाच्च | ४ | २ | ३७ |
| तत्त्वभाक्तयोर्नानात्वविभागात् | २ | २ | १५ |
| तत्त्वाध्यवसायसंरक्षणार्थम् | ४ | २ | ५० |
| तत्प्रामाण्ये वा न | २ | १ | १४ |
| तत्प्रामाण्ये वा | २ | २ | ६ |
| तत्संबन्धात् | ४ | १ | ५४ |
| तत्सिद्धेरलक्षितेष्वहेतुः | २ | २ | १० |
| तथात्यन्तसंशयः | २ | १ | ५ |
| तथा दोषाः | ४ | १ | २ |
| तथाभावादुत्पन्नस्य | ५ | १ | १३ |
| तथा वैधर्म्यात् | १ | १ | ३५ |
| तथाऽऽहारस्य | ३ | २ | ६६ |
| तथेत्युपसंहारात् | २ | १ | ४८ |
| तदत्यन्तविमोक्षः | १ | १ | २२ |
| तददृष्टकारितमितिचेत् | ३ | २ | ७१ |
| तदनित्यत्वम् | ४ | २ | २७ |
| तदनुपलब्धेः | ५ | १ | २९ |
| तदनुपलब्धेः | २ | २ | १९ |
| तदनुपलब्धेरहेतुः | ३ | १ | ३३ |
| तदन्तरालानुपलब्धेः | २ | २ | २६ |
| तदप्रामाण्यम् | २ | १ | ५७ |
| तदभावश्चापवर्गे | ४ | २ | ४५ |
| तदभावः सात्मकप्रदाहेपि | ३ | १ | १५ |
| तदभावे नास्त्यनन्यता | २ | २ | ३२ |
| तदयौगपद्यलिङ्गत्वाच्च | २ | १ | २४ |
| तदर्थं यमनियमाभ्याम् | ४ | २ | ४६ |
| तदर्थे व्यक्त्याकृतिजाति० | २ | २ | ६० |
| तदसंशयः | ४ | २ | ५ |
| तदात्मगुणत्वेपि | ३ | २ | २० |
| तदात्मगुणसद्भावात् | ३ | १ | १४ |
| तदाश्रयत्वात् | ४ | २ | २८ |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| तदुपलब्धिः | ३ | १ | ७३ |
| तद्विकल्पात् | १ | २ | २० |
| तद्विनिवृत्तेर्वा | २ | १ | १८ |
| तद्विपर्ययाद्वा | १ | १ | ३७ |
| तद्व्यवस्थानं तु | ३ | १ | ६९ |
| तद्व्यवस्थानादेव | ३ | १ | ३ |
| तन्त्राधिकरणाभ्युपगम० | १ | १ | २६ |
| तन्निमित्तं तु | ४ | २ | ३ |
| तयोरप्यभावः | २ | १ | ४० |
| तल्लक्षणावरोधात् | ४ | १ | ३१ |
| तल्लिङ्गत्वात् | ३ | २ | ३६ |
| तं शिष्यगुरुसब्रह्मचारि० | ४ | २ | ४८ |
| ताभ्यां विगृह्य कथनम् | ४ | २ | ५१ |
| तेनैव तस्याग्रहणाच्च | ३ | १ | ७१ |
| ते विभक्त्यन्ताः पदम् | २ | २ | ५९ |
| तेषां मोहः पापीयान् | ४ | १ | ६ |
| तेषु चावृत्तेः | ४ | २ | ८ |
| तैश्चापदेशः | २ | १ | २७ |
| त्रैकाल्याप्रतिषेधश्च | २ | १ | १५ |
| त्रैकाल्यासिद्धेः | २ | १ | १२ |
| त्रैकाल्यासिद्धेर्हेतोः | ५ | १ | १८ |
| त्वक्पर्यन्तत्वाच्छरीरस्य | ३ | २ | ५४ |
| त्वगव्यतिरेकात् | ३ | १ | ५२ |
| द— | | | |
| दर्शनस्पर्शनाभ्याम् | ३ | १ | १ |
| दिग्देशकालाकाशेषु | २ | १ | २२ |
| दुःखजन्मप्रवृत्तिदोष० | १ | १ | २ |
| दुःखविकल्पे | ४ | १ | ५८ |
| दृष्टानुमितानाम् | ३ | १ | ५० |
| दृष्टान्तविरोधात् | ३ | १ | ११ |
| दृष्टान्तस्य | ५ | १ | ९ |
| दृष्टान्ते च | ५ | १ | ३४ |
| दोषनिमित्तम् | ४ | २ | २ |
| दोषनिमित्तानाम् | ४ | २ | १ |
| द्रव्यगुणधर्मभेदात् | ३ | १ | ३५ |
| द्रव्यविकारे | २ | २ | ४४ |
| द्रव्ये स्वगुणपरगुण० | ३ | २ | ४८ |
| ध— | | | |
| धर्मविकल्पनिर्देशे | १ | २ | १४ |

| सूत्राणि | अ० | आ० | सू० | सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|---|---|---|---|
| धारणाकर्षणोपपत्तेश्च ... | २ | १ | ३५ | न– तदर्थान्तरभावात् ... | १ | २ | १६ |
| न– | | | | न– तदाशुगतित्वात् ... | ३ | २ | २९ |
| न– अकृताभ्यागम० ... | ३ | २ | ७५ | न– तद्विकाराणाम् ... | २ | २ | ४८ |
| न– अणुनित्यत्वात् ... | २ | २ | २४ | न– दोषलक्षणाविरोधात् ... | ४ | १ | ८ |
| न– अतीतानागतयोः ... | ४ | १ | १६ | न– निष्पन्नावश्यम्भावित्वात् | ४ | २ | ४४ |
| न– अतुल्यप्रकृतीनाम् ... | २ | २ | ४३ | न पयसः ... ... | ३ | २ | १५ |
| न– अनित्यतानित्यत्वात् ... | ४ | १ | २६ | न– पाकजगुणान्तरोत्पत्तेः ... | ३ | २ | ५० |
| न– अनेकलक्षणैः ... ... | ४ | १ | ३५ | न पार्थिवाप्ययोः ... ... | ३ | १ | ६७ |
| न– अन्तःशरीरवृत्तित्वात् ... | ३ | २ | २६ | न पुत्रपशुस्त्री० ... ... | ४ | १ | ५३ |
| न– अन्यत्र प्रवृत्त्यभावात् ... | ३ | १ | २४ | न पुरुषकर्माभावे ... ... | ४ | १ | २० |
| न– अन्यत्वेप्यभ्यासस्य | २ | २ | ३० | न प्रत्यक्षेण ... ... | २ | १ | ३१ |
| न– अर्थविशेषप्राबल्यात् ... | २ | १ | २९ | न प्रदीपप्रकाशसिद्धिवत् ... | २ | १ | १९ |
| न– अर्थविशेषप्राबल्यात् ... | ४ | २ | ३९ | न प्रलयोऽणुसद्भावात् ... | ४ | २ | १६ |
| न– आकृतिव्यक्त्यपेक्षत्वात् ... | २ | २ | ६६ | न प्रवृत्तिः प्रतिसंधानाय ... | ४ | १ | ६४ |
| न– आत्मप्रतिपत्तिहेतूनाम् ... | २ | १ | १६ | न बुद्धिलक्षणाधिष्ठान० ... | ३ | १ | ५९ |
| न– इतरेतरधर्मप्रसङ्गात् ... | ३ | १ | ४८ | न युगपदग्रहणात् ... ... | ३ | २ | ४ |
| न– उत्पत्तिकारणानपदेशात् | ३ | २ | २२ | न युगपदनेकक्रियोप० ... | ३ | २ | ५९ |
| न– उत्पत्तिकारणोपलब्धेः ... | ४ | १ | ३२ | न युगपदर्थानुपलब्धेः ... | ३ | १ | ५३ |
| न– उत्पत्तिनिमित्तत्वात् ... | ३ | २ | ६५ | न रात्रावप्यनुपलब्धेः ... | ३ | १ | ४० |
| न– उत्पत्तिविनाश० ... | ३ | २ | १२ | न रूपादीनाम् ... ... | ३ | २ | ५६ |
| न– उत्पत्तिविनाश० ... | ४ | १ | ३० | न लक्षणावस्थिता० ... | २ | २ | ११ |
| न– उष्णशीतवर्षकाल० ... | ३ | १ | २१ | न विकारधर्मानुपपत्तेः ... | २ | २ | ४५ |
| न– एकदेशत्रास० ... | २ | १ | ३८ | न विनष्टेभ्यः ... ... | ४ | १ | १७ |
| न– एकप्रत्यनीकभावात् ... | ४ | १ | ४ | न विषयव्यवस्थानात् ... | ३ | १ | २ |
| न– एकस्मिन् ... ... | ३ | १ | ८ | न व्यवस्थानुपपत्तेः ... | ४ | १ | ३३ |
| न– कर्मकर्तृसाधनवैगुण्यात् ... | २ | १ | ५८ | न शब्दगुणोपलब्धेः ... | ३ | १ | ७२ |
| न– कर्मानित्यत्वात् ... | २ | २ | २३ | न सद्यः ... ... | ४ | १ | ४५ |
| न– कारणावयवभावात् ... | ४ | २ | ४२ | न सर्वगुणानुपलब्धेः ... | ३ | १ | ६३ |
| न– कार्याश्रयकर्तृवधात् ... | ३ | १ | ६ | न साध्यसमत्वात् ... | ३ | २ | ६४ |
| नक्तञ्चरनयनरश्मिदर्शनाच्च ... | ३ | १ | ४३ | न सामयिकत्वात् ... | २ | १ | ५५ |
| न– क्लेशसंततेः ... ... | ४ | १ | ६५ | न सुखस्यान्तराल० ... | ४ | १ | ५६ |
| न– गत्यभावात् ... ... | ३ | २ | ८ | न संकल्पनिमित्तत्वात् ... | ३ | १ | २७ |
| न– घटाद् घटानिष्पत्तेः ... | ४ | १ | १२ | न संकल्पनिमित्तत्वात् ... | ४ | १ | ६८ |
| न– घटाभावसामान्य० ... | २ | २ | १४ | न स्मरणकालानियमात् ... | ३ | २ | ३० |
| न चतुष्ट्वम् ... ... | २ | २ | १ | न स्मृतेः स्मर्तव्यविषयत्वात् ... | ३ | १ | १३ |
| न चावयव्यवयवा... ... | ४ | २ | १० | न स्वभावसिद्धिः ... ... | ४ | १ | ३९ |
| न चैकदेशोपलब्धिः ... | २ | १ | ३२ | न स्वभावसिद्धेः ... ... | ४ | १ | ३८ |
| न– तदनवस्थानात् ... | २ | २ | ६२ | न हेतुतः कार्यसिद्धेः ... | ५ | १ | १९ |
| न– तदर्थबहुत्वात् ... ... | ३ | १ | ५६ | नाऽतीतानागतयोः ... | २ | १ | ४१ |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| नात्ममनसोः ... ... | २ | १ | २१ |
| नानुमीयमानस्य ... ... | ३ | १ | ३४ |
| नानुवादपुनरुक्तयोः ... | २ | १ | ६६ |
| नाऽप्रत्यक्षे गवये ... ... | २ | १ | ४७ |
| नाऽभावप्रामाण्यम् ... | २ | २ | ७ |
| नाऽसत् न सत् ... .. | ४ | १ | ४८ |
| निग्रहस्थानप्राप्तस्य ... | ५ | २ | २१ |
| नित्यत्वप्रसङ्गश्च ... ... | ३ | २ | ७३ |
| नित्यत्वेऽविकारात् ... | २ | २ | ५१ |
| नित्यमनित्यभावात् ... | ५ | १ | ३५ |
| नित्यस्याप्रत्याख्यानम् ... | ४ | १ | २८ |
| नित्यानामतीन्द्रियत्वात् ... | २ | २ | ५२ |
| निमित्तनैमित्तिकभावात् ... | ४ | १ | ७ |
| निमित्तनैमित्तिकोपपत्तेश्च ... | ४ | १ | ९ |
| निमित्तानिमित्तयोः ... | ४ | १ | २४ |
| नियमश्च निरनुमानः ... | ३ | १ | १८ |
| नियमहेत्वभावात् ... | ३ | २ | ११ |
| नियमानियमविरोधात् ... | २ | २ | ५७ |
| नियमानियमौ तु... ... | ३ | २ | ३९ |
| निर वयवत्वादहेतुः ... | ४ | १ | ४३ |
| निर्दिष्टकारणाभावेपि ... | ५ | १ | २७ |
| नेन्द्रियार्थयोः ... ... | ३ | २ | १८ |
| न्यूनसमाधिकोपलब्धेः ... | २ | २ | ४२ |
| **प—** | | | |
| पक्षप्रतिषेधे ... ... | ५ | २ | ५ |
| पद्मादिषु ... ... | ३ | १ | २० |
| परश्वादिषु ... ... | ३ | २ | ३७ |
| परं वा त्रुटेः ... ... | ४ | २ | १७ |
| परिशेषात् ... ... | ३ | २ | ४१ |
| परिषत्प्रतिवादिभ्याम् ... | ५ | २ | ९ |
| पश्चात् सिद्धौ ... ... | २ | १ | १० |
| पाणिनिमित्तप्रश्लेषात् ... | २ | २ | ३६ |
| पात्रचयान्तानुपपत्तेश्च ... | ४ | १ | ६२ |
| पार्थिवं गुणान्तरोपलब्धेः ... | ३ | १ | २८ |
| पुनरुत्पत्तिः प्रेत्यभावः ... | १ | १ | १९ |
| पूरणप्रदाहपाटन० ... | २ | १ | ५३ |
| पूर्वकृतफलानुबन्धात् ... | ३ | २ | ६२ |
| पूर्वकृतफलानुबन्धात् ... | ४ | २ | ४१ |
| पूर्वपूर्वगुणोत्कर्षात्... ... | ३ | १ | ६८ |
| पूर्वं हि प्रमाणसिद्धौ ... | २ | १ | ९ |
| पूर्वाभ्यस्तस्मृत्यनुबन्धात् ... | ३ | ९ | १९ |
| पृथक्चावयवेभ्योऽवृत्तेः ... | ४ | २ | ९ |
| पृथिव्यापस्तेजो वायुः ... | १ | १ | १३ |
| पौर्वापर्यायोगात् ... ... | ५ | २ | १० |
| प्रकृतादर्थात् ... ... | ५ | २ | ७ |
| प्रकृतिविवृद्धौ ... ... | २ | २ | ४१ |
| प्रकृत्यनियमात् ... ... | २ | २ | ५५ |
| प्रणिधाननिबन्धाभ्यास० ... | ३ | २ | ४३ |
| प्रणिधानलिङ्गादिज्ञानानाम् ... | ३ | २ | ३३ |
| प्रतिज्ञाहेतूदाहरणोपनय० ... | १ | १ | ३२ |
| प्रतिज्ञातार्थप्रतिषेधे ... | ५ | २ | ३ |
| प्रतिज्ञाहानिः प्रतिज्ञान्तरम् ... | ५ | २ | १ |
| प्रतिज्ञाहेत्वोर्विरोधः ... | ५ | २ | ४ |
| प्रतिदृष्टान्तधर्माभ्यनुज्ञा ... | ५ | २ | २ |
| प्रतिदृष्टान्तहेतुत्वे च ... | ५ | १ | ११ |
| प्रतिद्वन्द्विसिद्धेः ... ... | ३ | २ | ५१ |
| प्रतिपक्षहीनमपि ... ... | ४ | २ | ४९ |
| प्रतिपक्षात् ... ... | ५ | १ | १७ |
| प्रतिषेधविप्रतिषेधे ... | ५ | १ | ४१ |
| प्रतिषेधं सदोषमभ्युपेत्य ... | ५ | १ | ४२ |
| प्रतिषेधानुपपत्तेः ... ... | ५ | १ | २० |
| प्रतिषेधाप्रामाण्यम् ... | २ | २ | ५ |
| प्रतिषेधेऽपि समानो दोषः ... | ५ | १ | ३९ |
| प्रतिषेध्ये ... ... | ५ | १ | ३६ |
| प्रत्यक्षनिमित्तत्वात् ... | २ | १ | २५ |
| प्रत्यक्षमनुमानम् ... ... | २ | १ | ३० |
| प्रत्यक्षलक्षणानुपपत्तिः ... | २ | १ | २० |
| प्रत्यक्षादीनाम् ... ... | २ | १ | ८ |
| प्रत्यक्षानुमानोपमानशब्दाः ... | १ | १ | ३ |
| प्रत्यक्षेणाप्रत्यक्षसिद्धेः ... | २ | १ | ४६ |
| प्रदीपार्चिस्सन्तति० ... | ३ | २ | ४७ |
| प्रदीपोपादानप्रसङ्ग० ... | ५ | १ | १० |
| प्रधानशब्दानुपपत्तेः ... | ४ | १ | ६० |
| प्रमाणतर्कसाधनोपालम्भः ... | १ | २ | १ |
| प्रमाणतश्चार्थप्रतिपत्तेः ... | ४ | २ | २९ |
| प्रमाणतः सिद्धेः ... ... | २ | १ | १७ |
| प्रमाणप्रमेयसंशयप्रयोजन० ... | १ | १ | १ |
| प्रमाणानुपपत्त्युपपत्तिभ्याम् ... | ४ | २ | ३० |

| सूत्राणि | अ० | आ० | सू० |
|---|---|---|---|
| प्रमेयता च | २ | १ | १६ |
| प्रयत्नकार्यानेकत्वात् | ५ | १ | ३७ |
| प्रवर्तनालक्षणा दोषाः | १ | १ | १८ |
| प्रवृत्तिदोषजनितोऽर्थः | १ | १ | २० |
| प्रवृत्तिर्यथोक्ता | ४ | १ | १ |
| प्रवृत्तिर्वाग्बुद्धि० | १ | १ | १७ |
| प्रसिद्धसाधर्म्यात् | १ | १ | ६ |
| प्रसिद्धसाधर्म्यात् | २ | १ | ४५ |
| प्रागुच्चारणात् | २ | २ | १८ |
| प्रागुत्पत्तेः | ४ | १ | ६६ |
| प्रागुत्पत्तेः | २ | २ | १२ |
| प्रागुत्पत्तेः | ५ | १ | १२ |
| प्राङ्निष्पत्तेः | ४ | १ | ४७ |
| प्रातिभवत्तु | ३ | २ | ३४ |
| प्राप्तौ चानियमात् | ३ | २ | ६७ |
| प्राप्यसाध्यमप्राप्य वा | ५ | १ | ७ |
| प्रीतेरात्माश्रयत्वात् | ४ | १ | ५२ |
| प्रेत्याहाराभ्यासकृतात् | ३ | १ | २२ |
| **ब—** | | | |
| बाधनानिवृत्तेः | ४ | १ | ५७ |
| बाधनालक्षणं दुःखम् | १ | १ | २१ |
| बाह्यप्रकाशानुग्रहात् | ३ | १ | ४१ |
| बुद्धिरुपलब्धिर्ज्ञानम् | १ | १ | १५ |
| बुद्धिसिद्धं तु तदसत् | ४ | १ | ५० |
| बुद्धेश्चैवम् | ४ | २ | ३६ |
| बुद्ध्या विवेचनात्तु | ४ | २ | २६ |
| **भ—** | | | |
| भूतगुणविशेषोपलब्धेः | ३ | १ | ६० |
| भूतेभ्यो मूर्त्युपादानवत् | ३ | २ | ६३ |
| **म—** | | | |
| मध्यन्दिनोल्काप्रकाश० | ३ | १ | ३९ |
| मनःकर्मनिमित्तत्वाच्च | ३ | २ | ७२ |
| मन्त्रायुर्वेदप्रामाण्यवत् | २ | १ | ६८ |
| महदणुग्रहणात् | ३ | १ | ३१ |
| मायागन्धर्वनगर० | ४ | २ | ३२ |
| मिथ्योपलब्धिविनाशः | ४ | २ | ३५ |
| मूर्तिमतां च | ४ | २ | २३ |
| **य—** | | | |
| यत्र संशयस्तत्रैवम् | २ | १ | ७ |
| यत्सिद्धावन्यप्रकरणसिद्धिः | १ | १ | ३० |
| यथोक्तहेतुत्वाच्चाणु | ३ | २ | ६१ |
| यथोक्तहेतुत्वात् | ३ | २ | ४० |
| यथोक्ताध्यवसायादेव | २ | १ | ६ |
| यथोक्तोपपन्नः | १ | २ | २ |
| यमर्थमधिकृत्य | १ | १ | २४ |
| यस्मात् प्रकरणचिन्ता | १ | २ | ७ |
| यावच्छरीरभावित्वात् | ३ | २ | ४९ |
| याशब्दसमूहत्याग० | २ | २ | ६१ |
| युगपज्ज्ञानानुत्पत्तिः | १ | १ | १६ |
| युगपज्ज्ञेयानुपलब्धेश्च | ३ | २ | १९ |
| युगपत्सिद्धौ | २ | १ | ११ |
| **र—** | | | |
| रश्म्यर्थसंनिकर्षविशेषात् | ३ | १ | ३२ |
| रोधोपघातसादृश्येभ्यः | २ | १ | ३७ |
| **ल—** | | | |
| लक्षणव्यवस्थानादेव | ४ | १ | ३६ |
| लक्षितेषु | २ | २ | ८ |
| लिङ्गतो ग्रहणात् | ३ | २ | १४ |
| लौकिकपरीक्षकाणाम् | १ | १ | २५ |
| **व—** | | | |
| वचनविघातः | १ | २ | १० |
| वर्णक्रमनिर्देशवत् | ५ | २ | ८ |
| वर्णत्वाव्यतिरेकात् | २ | २ | ४९ |
| वर्तमानाभावः | २ | १ | ३९ |
| वर्तमानाभावे | २ | १ | ४२ |
| वाक्छलमेवोपचारच्छलम् | १ | २ | १५ |
| वाक्यविभागस्य | २ | १ | ६१ |
| विकारधर्मित्वे | २ | २ | ५४ |
| विकारप्राप्तानाम् | २ | २ | ४६ |
| विकारादेशोपदेशात् | २ | २ | ४० |
| विज्ञातस्य परिषदा | ५ | २ | १६ |
| विद्याऽविद्याद्वैविध्यात् | ४ | २ | ४ |
| विधिर्विधायकः | २ | १ | ६३ |
| विधिविहितस्यानुवचनम् | २ | १ | ६५ |
| विध्यर्थवादानुवाद० | २ | १ | ६२ |
| विनाशकारणानुपलब्धेः | ३ | २ | २३ |
| विनाशकारणानुपलब्धेः | २ | २ | ३३ |
| विप्रतिपत्तिरप्रतिपत्तिश्च | १ | २ | १९ |

अथ दृष्टान्तः प्रत्यक्षविषयोऽर्थः= यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते, स च प्रमेयम् तस्य पृथग् वचनं च तदाश्रयावनुमानागमौ= तस्मिन् सति स्यातामनुमानागमौ असति च न स्याताम् तदाश्रया च न्यायप्रवृत्तिः। दृष्टान्तविरोधेन च परपक्षप्रतिषेधो वचनीयो भवति. दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति। नास्तिकश्च दृष्टान्तमभ्युपगच्छन् नास्तिकत्वं जहाति अनभ्युपगच्छन् किंसाधनः परमुपालभेत ? निरुक्तेन च दृष्टान्तेन शक्यमभिधातुम्। "साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्तः= उदाहरणम् १-१-३६" "तद्विपर्ययाद् विपरीतम् १-१-३७" इति।

---

भवात्। तथा च वितण्डाया अपि परपक्षखण्डनमात्रेण सप्रयोजनत्वादुक्तं सर्वस्य सप्रयोजनत्वमुपपन्नं तथा च तात्पर्यटीका- "तस्माद् वितण्डापि प्रयोजनवती नाऽव्यापकं प्रयोजनमिति सिद्धम्" इति। "न दूषणमात्रं वितण्डा किं त्वभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिक उच्यते" इति वार्तिकम्। भाष्यं चेदं पुनरुक्तदोषदुष्टमेवेति विज्ञेयम्।

दृष्टान्तलक्षणमाह- अथेति, प्रत्यक्षविषयः= प्रत्यक्षीकृतः महानसादिपदार्थो दृष्टान्तः, एवं प्रत्यक्षपदार्थमात्रस्य दृष्टान्तत्वं स्यादित्याशङ्क्याह- यत्रेति, दर्शनम्= प्रत्यक्षादिज्ञानं यत्र न व्याहन्यते= न व्यभिचरति, महानसे वह्निधूमयोः साहचर्यदर्शनस्य व्यभिचारो न भवतीति वन्ह्यनुमितौ महानसो दृष्टान्त एवमन्यत्रापि दृष्टान्तो विज्ञेयः। सः= दृष्टान्तोपि। तस्य= दृष्टान्तस्य प्रमेयापेक्षया पृथग्वचनस्य प्रयोजनमाह- तस्येति, तदाश्रयौ= दृष्टान्ताधीनावनुमानागमौ प्रवर्तेते इति दृष्टान्तस्यापि प्राधान्यात् प्रमेयापेक्षया पृथग्वचनम्। अनुमानागमयोर्दृष्टान्ताधीनत्वेऽन्वयव्याप्तिमाह- तस्मिन्निति, तस्मिन्= दृष्टान्ते। व्यतिरेकव्याप्तिमाह- असतीति। उपसंहरति- तदाश्रयेति, न्यायप्रवृत्तिः= पञ्चावयवात्मकानुमानप्रवृत्तिरपि तदाश्रया= दृष्टान्ताधीनेति प्राधान्यात् दृष्टान्तस्य पृथग्वचनमित्यर्थः। दृष्टान्तप्रयोजनमाह- दृष्टान्तेति, दृष्टान्तविरोधेन परपक्षप्रतिषेधो वचनीयो भवति= परपक्षः प्रतिषेध्यो भवति यथा यदि वन्ह्यनुमाने परेण जलह्रदो दृष्टान्तः प्रदर्शितस्तदा जलन्ह्रदे वन्ह्यभावस्य सर्वप्रसिद्धत्वात् पर्वतेपि परपक्षस्य वह्निसत्त्वस्य प्रतिषेधो वक्तव्यः- जलन्ह्रददृष्टान्तेन वन्ह्यभाव एव प्राप्त इति। दृष्टान्तसमाधिना= दृष्टान्तानुकूल्येन च स्वपक्षः साधनीयः= महानसलक्षणदृष्टान्तस्यानुकूल्येन स्वपक्षः वह्निसत्त्वं साध्यते इति स्वपक्षसाधनं परपक्षप्रतिषेधश्च दृष्टान्तप्रयोजनं सिद्धम्। किंचिदप्रकृतमाह- नास्तिक इति, नास्तिकः= क्षणिकपदार्थवादी स यदि दृष्टान्तं स्वीकरोति प्रदर्शयति वा तदा वन्ह्यनुमानकाले पूर्वदृष्टस्य महानसस्य तेन सत्ता स्वीकार्या- असतो दृष्टान्तत्वानुपपत्तेस्तथाच महानसस्य स्थिरत्वस्वीकारापत्त्या नास्तिकत्वानुपपत्तिः= क्षणभङ्गवादानुपपत्तिः प्राप्ता अनभ्युपगच्छन्= यदि क्षणिकत्वेन पूर्वदृष्टस्यानुमानकाले सत्त्वानुपपत्त्या दृष्टान्तं न स्वीकरोति तदा किंसाधनः= साधनहीनः कथं परम्= प्रतिवादिनमुपालभेत= प्रतिवादिमतखण्डनं स्वपक्षसाधनं च कथं कुर्यात् ? उभयोरपि दृष्टान्ताधीनत्वादित्यर्थः। उक्ते हेतुमाह- निरुक्तेनेति, उक्तेन विद्यमानेनैव दृष्टान्तेन शक्यमभिधातुम्= प्रतिपादयितुं शक्यत्वात् तथा च नास्तिकेन क्षणिकत्वानुरोधेन विद्यमानदृष्टान्तास्वीकारेण किमपि साधयितुं न शक्यते इत्यर्थः। साधर्म्यदृष्टान्तनिरूपकसूत्रमाह- साध्यसाधर्म्यादिति, साध्यसाधर्म्यात्= साध्यभूतवन्हिविशिष्टपर्वतसादृश्यात् तद्धर्मभावी= वन्हिधूमसाहचर्यविशिष्टो महानसादिर्दृष्टान्त एवोदाहरणम्. तदनेन दृष्टान्तानुकूल्यात् स्वपक्षसाधनमुक्तम्। वैधर्म्यदृष्टान्तनिरूपकसूत्रमाह- तद्विपर्ययादिति, तद्विपर्ययात्= साध्यसाधर्म्यविपर्ययात्= साध्यवैधर्म्यात् विपरीतम्= वैधर्म्यदृष्टान्तो भवति यथा वन्ह्यनुमाने न्ह्रदो व्यतिरेकी दृष्टान्तस्तदनेन दृष्टान्तप्रातिकूल्यात् परपक्षखण्डनं सूचितम्।

'अस्त्ययम्' इत्यनुज्ञायमानोऽर्थः सिद्धान्तः. स च प्रमेयं तस्य पृथग् वचनं सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्तन्ते नाऽतोन्यथेति।

साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चाऽवयवाः प्रतिज्ञादयः समूहमपेक्ष्य अवयवा उच्यन्ते, तेषु प्रमाणसमवाय आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनय उपमानम्, सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति, सोयं परमो न्याय इति, एतेन वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति. तदाश्रया च तत्त्वव्यवस्था, ते चैते अवयवाः शब्दविशेषाः सन्तः प्रमेयेऽन्तर्भूता एवमर्थं पृथगुच्यन्ते इति।

---

सिद्धान्तस्वरूपमाह– अस्तीति, 'अयमेवमस्ति' यथाऽऽत्मा नित्य इत्येवमनुज्ञायमानः= स्वीक्रियमाणः किं वा प्रतिपाद्यमानः पदार्थः सिद्धान्तो यथात्मनित्यत्वम्। सः= सिद्धान्तः प्रमेयमेव प्रमेयात् तस्य= सिद्धान्तस्य पृथग्वचनं तु सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्तन्ते यथैकस्य शब्दनित्यत्वं सिद्धान्तः परस्य च शब्दानित्यत्वं सिद्धान्त इति सिद्धान्तभेदाद् द्वयोर्वादजल्पवितण्डाः प्रवर्तन्ते अतः= सिद्धान्तभेदाद् अन्यथा= सिद्धान्ताभेदे न प्रवर्तन्ते इति वादजल्पवितण्डानां प्रवर्तकत्वेन प्राधान्यात् सिद्धान्तः प्रमेयात् पृथगुक्त इत्यन्वयः।

अवयवस्वरूपमाह– साधनीयार्थस्येति, साध्यस्याऽर्थस्य= सिद्धान्तस्य यावति= यत्परिमाणके शब्दसमूहे= वाक्ये सिद्धिः= प्रतिपादनं परिसमाप्यते= निष्पद्यते तस्य= वाक्यस्य पञ्चसंख्याका ये प्रतिज्ञादयः= प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनाख्या भागास्तेऽवयवा इत्युच्यन्ते. तेषां प्रतिज्ञाद्यवयवानां यदवयवत्वं तत् समूहम्= उक्तशब्दसमूहमपेक्ष्यैव विज्ञेयं शब्दसमूहमनपेक्ष्य तु प्रतिज्ञादीनां तत्तदेकैकार्थप्रतिपादकत्वान्नाऽवयवत्वमुपपद्यते। प्रतिज्ञादीनां स्वरूपमाह– तेष्विति, तेषु= पञ्चस्वऽवयवेषु मध्ये प्रमाणसमवायः= प्रमाणसंबन्धी= प्रमाणैर्हेत्वादिभिरुपपाद्यमान आगमः= शब्दसमूहः प्रतिज्ञा यथा–' पर्वतो वन्हिमान्' इति, अत्र प्रतिज्ञावाक्यार्थस्य हेत्वादिभिरुपपाद्यमानत्वेन प्रतिज्ञावाक्यस्यापि उपपाद्यमानत्वमभ्युगम्योक्तम्–" प्रमाणसमवायः" इति। हेतुस्वरूपमाह– हेतुरिति, अनुमीयतेऽनेनेत्यनुमानं हेतुः– हेतुनैवानुमीयमानत्वात् यथा–'धूमात्' इति, यद्यपि धूमज्ञानमेव हेतुस्तथापि धूमज्ञानजनकत्वात् 'धूमात्' इतिशब्दोपि हेतुः, अत्र धूमशब्दस्य धूमज्ञाने पञ्चम्याश्च ज्ञाप्यत्वे लक्षणेति 'धूमज्ञानज्ञाप्यो वन्हिः' इत्यर्थः। उदाहरणस्वरूपमाह– उदाहरणमिति, साध्यसाधनयोः साहचर्यविशिष्टः प्रत्यक्षीकृतः पदार्थ उदाहरणम्= दृष्टान्तो यथा–' महानसवत्' इति। उपनयस्वरूपमाह– उपनय इति, उपमानम्= दृष्टान्तसादृश्यमुपनयो यथा– ' योयो धूमवान् स स वन्हिमान् यथा महानसस्तथा चायं पर्वतः' इत्युपनयवाक्येन दृष्टान्तसादृश्यमेव प्रतिपाद्यते इत्युपमानमेवोपनयः, 'तथा चायम्' इत्यस्योपनयस्य 'महानसवद् वन्हिव्याप्यधूमवांश्चायं पर्वतः' इत्यर्थः। निगमनस्वरूपमाह– सर्वेषामिति, सर्वेषाम्= प्रतिज्ञाहेतुदृष्टान्तोपनयानाम् एकार्थसमवाये=साध्यसंबन्धे= साध्यसाधने सामर्थ्यप्रदर्शनम्= शक्तिप्रदर्शनम्= उपसंहारो निगमनं यथा 'तस्मात् तथा' इति ' वन्हिव्याप्यधूमवत्त्वात् वन्हिमान्' इत्यर्थः। उपसंहरति– सोयमिति, सोयम्= पञ्चावयवात्मकः परमो न्यायः= अनुमानप्रयोगः, त्रिभिरप्यवयवैः साध्यसिद्धिसंभवेपि पञ्चभ्योऽवयवेभ्योधिकस्यावयवस्यापेक्षा न जायते इति पञ्चावयवात्मकन्यायस्य परमत्वम्। उक्तावयवात्मकन्यायस्य प्रयोजनमाह– एतेनेति, अतः= न्यायात् अन्यथा= न्यायाभावे वादजल्पवितण्डा न प्रवर्तन्ते– एकेनोक्तावयवैः किंचित् साध्यमाने परस्य च तत्र विप्रतिपत्तौ वादजल्पवितण्डानां प्रवृत्तिसंभवात्। तत्त्वव्यवस्था चापि तदाश्रया= न्यायाधीनेति अवयवसमूहात्मकन्यायस्य प्राधान्यं प्राप्तं तेन तदवयवानां पृथग्वचनमावश्यकमेवेत्यर्थः। अवयवानां प्रमेयापेक्षया पृथग्वचनस्य कारणमाह– ते चेति, एवमर्थम्= तत्त्वव्यवस्थापकत्वेन वादजल्पवितण्डाप्रवर्तकत्वेन च प्राधान्यादेवाऽवयवाः प्रमेयात् पृथगुच्यन्ते इत्यन्वयः। अवयवानां शब्दस्वरूपत्वं शब्दस्य च प्रमेयत्वं प्रसिद्धमेव।

तर्कों न प्रमाणसंगृहीतो न प्रमाणान्तरं प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते, तस्योदाहरणम्- किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते ? आहोस्विदऽकृतकेन ? अथाऽऽकस्मिकम् ? इति, एवमविज्ञातेऽर्थे कारणोपपत्त्या ऊहः प्रवर्तते- यदि कृतकेन हेतुना निर्वर्त्यते ? ततो हेतूच्छेदादुपपन्नोयं जन्मोच्छेदः, अथाऽकृतकेन हेतुना ? ततो हेतूच्छेदस्याऽशक्यत्वादनुपपन्नो जन्मोच्छेदः, अथाऽऽकस्मिकम् ? ततोऽकस्माद् निर्वर्त्यमानं न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते तेन जन्मानुच्छेद इति । एतस्मिन् तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते, तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्पते तर्क इति । सोयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनाय उपालम्भाय चार्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति ।

---

तर्कस्वरूपमाह- तर्क इति, तर्को न प्रमाणसंगृहीतः= प्रत्यक्षादिप्रमाणेष्वन्तर्भूतो न वा प्रमाणान्तरम्= प्रत्यक्षादिप्रमाणातिरिक्तप्रमाणभूतः किं तु प्रमाणानामनुग्राहकः= सहायकस्तत्त्वज्ञानाय कल्पते= प्रमाणैस्तत्त्वज्ञाने जननीये सहकारी भवति । उदाहरति- तस्येति, तस्य= तर्कस्य, जन्म= शरीरसंबन्धः, कृतकेन= अनित्येन हेतुना कर्मणा निर्वर्त्यते= संपद्यते, अकृतकेन= नित्येन हेतुना वा सपद्यते, आकस्मिकम्= अहेतुकं वा जन्मेति त्रिधा विकल्प्य तर्कप्राप्तिमाह- एवमिति, एवम्= उक्तरीत्या बहुधा विकल्पसंभवात् अर्थे= जन्मकारणस्वरूपे अविज्ञाते= अनिश्चिते सति कारणोपपत्त्या= कारणोपपादनपूर्वकं किं वा प्रयोजनेन ऊहः= तर्कः प्रवर्तते । प्रथमकल्पे तर्कमाह- यदीति, यदि कृतकेन= अनित्येन हेतुना जन्म संपद्यते तदा हेतूच्छेदात्= अनित्यस्योच्छेदसंभवेन हेतोः= जन्मकारणस्याप्यनित्यस्योच्छेदात् तत्कार्यस्य जन्मनोप्युच्छेदः उपपन्नो जन्मोच्छेदे च मोक्षसंभवः, कारणविनाशे कार्यविनाशस्य संभवात् । द्वितीयकल्पे तर्कमाह- अथेति, यद्यऽकृतकेन= नित्येन हेतुना जन्म संपद्यते तदा नित्यस्य जन्महेतोरुच्छेदासंभवात् तत्कार्यस्य जन्मनोप्युच्छेदोऽनुपपन्नः- कारणोच्छेदं विना कार्योच्छेदासभवात् तथा च मोक्षासंभवः । तृतीयकल्पे तर्कमाह- अथेति, यदि आकस्मिकम्= अहेतुकं जन्म तदाऽकस्मात्= हेतुं विनैव संपद्यमानं जन्म न निवर्त्स्यति= न निवृत्तो भविष्यति इति= यतो निवृत्तिकारणं नोपपद्यते यतः कारणनिवृत्त्यैव कार्यनिवृत्तिः संभवति अत्र च पक्षे जन्मनो निर्हेतुकत्वस्वीकारेण कारणमेव नास्ति येन तदुच्छेदात् जन्मोच्छेदः स्यादिति जन्मानुच्छेदः प्राप्तः । तेन= जन्मकारणस्याभावाज्जन्मकारणनिवृत्तेरसंभवेन । तत्र "आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुतिभिर्मोक्षसाधनविधानादस्ति मोक्षः स च जन्मोच्छेदं विना न संभवतीति जन्मानुच्छेदप्रापकौ द्वितीयतृतीयकल्पौ न युक्तौ, किं च भावस्य कार्यस्य सर्वत्र विनाशित्वं दृष्टमिति संसाररूपकार्यस्यापि विनाशित्वमावश्यकमेव, किं च सृष्टिवैषम्यात् संसारस्य कर्मजन्यत्वं सिध्यति कर्म चानित्यमेव श्रुतिरप्याह-"क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति, तथा च कारणीभूतकर्मणामुच्छेदेन जन्मोच्छेद उपपन्न इति प्रथम एव कल्पस्तर्केणोपपद्यते इत्याशयः । पर्यवसितमाह- एतस्मिन्निति, एतस्मिन्= उक्ते तर्कविषये= तर्कोदाहरणे कर्मनिमित्तम्= कर्मजन्यं जन्मेति प्रवर्तमानानि= प्रतिपादयन्ति प्रमाणानि तर्केणानुगृह्यन्ते । प्रमाणानि चात्र "तद् यथेह कर्मचितोलोकः क्षीयते" "कपूयचरणाः कपूयां योनिमापद्येरन्" "रमणीयचरणा रमणीयां योनिमापद्येरन्" इत्यादीनि तानि च 'जन्मनो जन्यत्वाद् विनाशित्वम्' इत्यादितर्केणानुगृह्यन्ते । अनुग्रहश्च प्रमाणप्रतिपाद्यार्थस्य समर्थनम् । तर्कापेक्षाकारणमाह- तत्त्वज्ञानेति, तत्त्वज्ञानविषयस्य= तत्त्वस्य विभागात्= अनेकत्वात्= दर्शनभेदेन भेदात् तर्कं विना तत्त्वनिश्चयासंभवेन तर्कस्तत्त्वज्ञानाय कल्पते= तत्त्वज्ञानजनको भवति । तत्त्वनिर्णयस्य कर्तव्यत्वे हि तत्त्वनानात्वं हेतुः । उपसंहरति— सोयमिति, सोयमित्थम्भूतः= उक्तस्वरूपस्तर्को ज्ञानरूपत्वेन प्रमेयान्तर्भूतोपि प्रमाणसहितः= प्रमाणसहकृतो वादेऽर्थस्य- स्वपक्षस्य साध-

निर्णयः= तत्त्वज्ञानं प्रमाणानां फलं तदवसानो वादस्तस्य पालनार्थं जल्पवितण्डे । तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति । सोयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति ।

वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः पृथगुद्दिष्ट उपलक्षणार्थम्– उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति । तद्विशेषौ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम् ।

निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति. जल्पवितण्डयोस्तु निग्रहस्थानानीति । छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थ इति. उपलक्षि-

---

नाय= स्थापनाय परपक्षस्य चोपालम्भाय= खण्डनाय समर्थौ भवतीति एवमर्थम्= साधकत्वबाधकत्वाभ्यां प्राधान्यात् प्रमेयापेक्षया पृथगुच्यते इत्यन्वयः ।

निर्णयस्वरूपमाह– निर्णय इति, वादविषयीभूतस्य पदार्थस्य तत्त्वज्ञानम्= यथार्थं ज्ञानमेव निर्णयः स च प्रमाणानां फलम्– निर्णयार्थमेव प्रमाणप्रवृत्तेः, तदवसानः= निर्णयावसानो वादः– निर्णये जाते वादसमाप्तिदर्शनात् , तस्य= वादस्य पालनार्थम्= वृद्ध्यर्थं जल्पवितण्डे किं वा तस्य=निर्णयस्य पालनार्थम्= रक्षार्थं जल्पवितण्डे तथा च जल्पवितण्डाभ्यां सिद्धान्तबाधको हेतुर्निवार्यते । तर्कनिर्णययोः फलमाह– तावति, तर्कनिर्णयाभ्यामेव लोकयात्रा लोकप्रवृत्तिर्जायते इति स्पष्टमेव । उपसंहरति– सोयमिति, सोयं प्रमेयान्तर्भूतोपि निर्णय एवमर्थम्= लोकयात्रानिर्वाहकत्वेन वा प्रमाणफलत्वेन वा प्रधान्यात् प्रमेयापेक्षया पृथगुक्त इत्यन्वयः ।

वादस्वरूपमाह– वाद इति, नानाप्रवक्तृकः= अनेकप्रवक्तृकः= वादिप्रतिवादिभ्यां प्रवृत्तः प्रत्यधिकरणसाधनः=स्वस्वसिद्धान्तसाधकः अन्यतराधिकरणनिर्णयावसानः= द्वयोः सिद्धान्तयोर्मध्येऽन्यतरस्य= एकतरस्याऽधिकरणस्य= सिद्धान्तस्य निर्णयेऽवसानम्= समाप्तिर्यस्य किं वाऽन्यतराधिकरणनिर्णयस्यावसानं यत्र सोन्यतराधिकरणनिर्णयावसानः= अन्यतरसिद्धान्तस्थापक इतियावत् एतादृशो वाक्यसमूह एव वाद इत्युच्यते । अधिक्रियते इत्यधिकरणं साध्यम्= सिद्धान्तः । वादस्य प्रमेयात् पृथगुक्तिकारणमाह– पृथगिति, उपलक्षणार्थम्= स्वरूपज्ञानार्थम् । तत्त्वसाधकत्वेन प्राधान्यादपि पृथगुक्तः । वादोपलक्षणफलमाह– उपलक्षितेनेति, उपलक्षितेन= ज्ञातेन वादेन यो व्यवहारः स तत्त्वज्ञानाय भवति. वादस्वरूपं ज्ञात्वा या वादे प्रवृत्तिस्तया तत्त्वज्ञानम्= निर्णयो जायते नाऽन्यथेत्यर्थः । जल्पवितण्डयोः स्वरूपमाह— तद्विशेषाविति, तद्विशेषौ वादविशेषौ, तत्र जल्पेऽन्यतरनिर्णयावसानं न संभवतीत्ययमेव वादाद् भेदः अत्र "अन्यतरनिर्णयावसानत्वेन जल्पाद् भेदो वादस्य" इति तात्पर्यटीका, स्वपक्षस्थापनाहीनो वाद एव वितण्डेत्युच्यते । ते च जल्पवितण्डे तत्त्वाध्यवसायस्य= तत्त्वज्ञानस्य संरक्षणार्थमित्युक्तमेव पूर्वम्–" तस्य पालनार्थं जल्पवितण्डे " इति ।

हेत्वाभासादीनां वक्ष्यमाणत्वाद् गौरवाच्च स्वरूपनिरूपणं परित्यज्य प्रयोजनमात्रमाह– निग्रहेति, हेतुवदाभासन्ते इति हेत्वाभासाः सव्यभिचारादयो यथा वन्ह्यनुमाने पाषाणवत्त्वादयस्तत्र पराजयकारणत्वाद् हेत्वाभासा निग्रहस्थानेष्वन्तर्भूता एव अथापि वादे चोदनीया भविष्यन्ति= निर्दिष्टा भवन्ति= वादेऽप्रयोज्यानामपि हेत्वाभासानां भ्रान्त्या प्रयोगो भवतीत्येतदर्थमेव हेत्वाभासा निग्रहस्थानेभ्यः पृथगुद्दिष्टाः सूत्रकृता. वस्तुतस्तु स्वविद्याभेदज्ञापनार्थमेव पृथगुद्दिष्टास्तथा च वार्तिकम्– "एतदेव तु न्याय्यं पृथगुपदेशप्रयोजनं विद्याप्रस्थानभेदज्ञापनार्थत्वादिति " इति । किं वा वादे प्रयुक्ता हेत्वाभासा हेत्वाभासत्वेन प्रदर्शनीया येन प्रतिवादिनः साध्यसिद्धिर्न स्यादित्याशयो वर्णनीयः । निग्रहस्थानानां प्रयोजनमाह– जल्पेति, निग्रहस्य= पराजयस्य स्थानानि= कारणानीति निग्रहस्थानानि प्रतिज्ञाहान्यादीनि वक्ष्यमाणानि तानि जल्पवितण्डयोश्चोदनीयानि= प्रयोज्यानि भविष्यन्तीत्यन्वयः, जल्प-

तानां स्ववाक्यपरिवर्जनं छलजातिनिग्रहस्थानानां परवाक्ये च पर्यनुयोगः। जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः स्वयं च सुकरः प्रयोग इति।

सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम्. इह त्वऽध्यात्मविद्यायामात्मा-

---

वितण्डाभ्यां साध्यसाधने प्रवृत्तो विजिगीपुर्निग्रहस्थानैः पराजयं प्रापणीय इत्याशयस्तथा च वार्तिकम्— "विजिगीपुर्जल्पवितण्डाभ्यां प्रत्यवस्थेयः" इति। अत्र वादस्य सद्धेतुकत्वाद् वादे विशेपतो निग्रहस्थाननिर्देशापेक्षा न भवति किं तु हेत्वाभासनिर्देशापेक्षा भवति—अन्यथा परपराजयासंभवादितिहेतोर्वादे हेत्वाभासानां चोदनीयत्वमुक्तम्, जल्पवितण्डयोस्तु सद्धेतुकत्वनियमाभावात् जल्पवितण्डाभ्यां प्रवृत्तस्य निग्रहस्थानैः पराजयः संभवतीत्यभिप्रायेण जल्पवितण्डयोर्निग्रहस्थानानां चोदनीयत्वमुक्तमिति प्रतिभाति—'भूतानुरूपो वलिः' इतिन्यायात्। छलजातिनिग्रहस्थानानां पृथग्वचनस्य कारणमाह—छलेति, उपलक्षणार्थः= छलादिस्वरूपज्ञानार्थः। छलादीनां स्वरूपज्ञानस्य प्रयोजनमाह—उपलक्षितानामिति, उपलक्षितानाम्= ज्ञातानां छलजातिनिग्रहस्थानानां स्ववाक्यपरिवर्जनम्= स्ववाक्येष्वऽप्रयोगः परवाक्ये= परेण प्रतिवादिना स्ववाक्ये प्रयुक्तानां पर्यनुयोगः= त्वया छलादयः प्रयुक्ता इति निर्देशश्च संभवति न त्वज्ञातानामपीत्युपलक्षणार्थं पृथगुपदेशः, तथा च वार्तिकम्—"छलजातिनिग्रहस्थानानि स्वयं न प्रयोक्तव्यानि" इति। पृथगपि जातिज्ञानप्रयोजनमाह— जातेरिति, जातिज्ञाने सति परप्रयुक्ताया जातेः समाधिः सुलभो भवति स्वयं च प्रयोगः= परप्रयुक्तजातेर्जातित्वनिरूपणं सुकरं भवति, तदेतत् जातिज्ञानाभावे न संभवति, छलजातिनिग्रहस्थानानां स्वयमऽप्रयोक्तव्यत्वादत्र प्रयोगशब्दो जातित्वनिरूपणपर एव विज्ञेयस्तदेतद् वार्तिके स्पष्टम्। छलजातिनिग्रहस्थानानां ज्ञानप्रयोजनमुक्त्वा पुनरपि जातिमात्रज्ञानस्य प्रयोजनप्रतिपादने भाष्यकारस्य विशेपाभिप्रायो नावधार्यते, किं च वहुत्रैवमनवधानं भाष्ये दृश्यते।

उपसंहरति—सेयमिति, आन्वीक्षिकी= न्यायविद्या प्रमाणादिपोडशपदार्थनिरूपणेन विभज्यमाना= विद्यान्तरेभ्यः पृथक् क्रियमाणा= विलक्षणा सर्वविद्यानां प्रदीपः= अनुग्राहिका— सर्वेपां शास्त्राणां न्यायशास्त्रसापेक्षत्वाद् उक्तं च—" काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति, सर्वकर्मणाम्= लोकव्यवहाराणामुपायः= प्रवर्तिका—तर्कनिर्णयाभ्यामेव लोकव्यवहारसंभवात्, सर्वधर्माणाम्= वैदिककर्मणामाश्रयः= प्रवर्तिका— देहान्तरलभ्यस्वर्गादिसाधनीभूतेपु कर्मसु तर्केण शरीरातिरिक्तनित्यात्मनिश्चयादेव प्रवृत्तिसंभवात् उक्तं च "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति, विद्योद्देशे= कौटलीयार्थशास्त्रस्य विद्यासमुद्देशाख्यविभागे प्रकीर्तितेत्यर्थः, तदेतत् पूर्वत्र वात्स्यायनसमयसमीक्षायां द्रष्टव्यम्। निःश्रेयसाधिगमार्थम्= मोक्षप्राप्त्यर्थमुक्तं तत्त्वज्ञानं यथाविद्यम्=प्रतिशास्त्रं भिन्नं भिन्नं विज्ञेयमित्याह— तदिदमिति, यथा सांख्ये प्रकृतिपुरुषविवेकज्ञानम् अद्वैतवादेऽद्वैतज्ञानं मोक्षप्रयोजकम्, किं चोक्तविद्याचतुष्टयमध्ये त्रय्यां कर्मज्ञानमेव तत्त्वज्ञानं तत्तत्फलप्राप्तिश्च= स्वर्गादिप्राप्तिरेवात्र निःश्रेयसाधिगमः, वार्तायां वाणिज्यज्ञानं तत्त्वज्ञानं वाणिज्याद् लाभ एव निःश्रेयसाधिगमः, नीतिशास्त्रे सामदानादिज्ञानमेव तत्त्वज्ञानं तत्फलभूतं राज्यादिरेव निःश्रेयसाधिगम इत्यर्थः। न्यायशास्त्रस्यास्य तत्त्वज्ञानमाह— इहेति, दर्शनशास्त्रत्वात् प्राधान्येन मोक्षसाधनानां प्रतिपादने प्रवृत्तत्वाच्चेयं न्यायविद्याऽध्यात्मविद्या तदत्रात्मादितत्त्वस्यज्ञानमेव तत्त्वज्ञानम् अपवर्गप्राप्तिश्च निःश्रेयसाधिगमः, आत्मानमधिकृत्य प्रवृत्ता विद्याऽध्यात्मविद्येत्युच्यते। तत्त्वज्ञानादनन्तरमपवर्गप्राप्तिकालं जिज्ञासते— तद्विति, उत्तरमाह— नेति, तत्त्वज्ञानानन्तरमेव मोक्षो भवतीति नियमो नास्तीत्यर्थः। पुनर्जिज्ञासते—

दितत्त्वज्ञानम् । निःश्रेयसाधिगमः= अपवर्गप्राप्तिः । तत् खलु निःश्रेयसं किं तत्त्वज्ञानान्तरमेव भवति ?. नेत्युच्यते, किं तर्हि ?. तत्त्वज्ञानात् ॥ १ ॥

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरा-
ऽपाये तदनन्तरापायादपवर्गः ॥ २ ॥**

तत्रात्माद्यपवर्गपर्यन्तं प्रमेये मिथ्याज्ञानमनेकप्रकारं प्रवर्तते, आत्मनि तावत् 'नास्ति' इति. अनात्मनि 'आत्मा' इति. दुःखे सुखमिति. अनित्ये नित्यमिति. अत्राणे त्राणमिति. सभये निर्भयमिति. जुगुप्सितेऽभिमतमिति. हातव्येऽप्रतिहातव्यमिति, प्रवृत्तौ नास्ति कर्म नास्ति

---

किमिति । उत्तरमाह– तत्त्वेति, तत्त्वज्ञानानन्तरं प्रारब्धकर्मफलानां भोगे जाते मोक्षो भवतीत्यर्थस्तथा च श्रुतिः– "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति. स्मृतिश्च–"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति ॥ किं वा "तत् खलु" इत्यादिवाक्यस्याग्रिमसूत्रेण संबन्धस्तथा च 'तत्त्वज्ञानाद् मिथ्याज्ञानादिनिवृत्तौ दोषादिदुःखान्तनिवृत्त्यापवर्गः' इत्यन्वयः ॥ १ ॥

तत्त्वज्ञानादपवर्गप्राप्तिप्रकारं सूत्रयति– दुःखेति, दुःखाद्युक्तेषु मध्ये उत्तरोत्तराणाम्= मिथ्याज्ञानादीनामपाये= निवृत्तौ सत्यां तदनन्तराणाम्= तत्पूर्वाणां दोषादीनामपायात्= निवृत्त्याऽपवर्गः संभवतीत्यन्वयः, तथाहि– मिथ्याज्ञानापाये रागद्वेषादिदोषापायः– मिथ्याज्ञानस्यैव दोषकारणत्वात् कारणनिवृत्तौ कार्यनिवृत्तेः प्रसिद्धत्वात्. दोषापाये धर्माधर्मलक्षणप्रवृत्तेरपायः– दोषाणामेव प्रवृत्तिकारणत्वात्. प्रवृत्त्यपाये जन्मापायः– प्रवृत्तेरेव जन्मकारणत्वात्. जन्मापाये सर्वविधदुःखापायः– जन्म हि शरीरसंबन्धः शरीरसंबन्धं विना दुःखासंभवात् जन्मन एव दुःखमूलत्वात् दुःखापायेऽपवर्गः– अपवर्गस्यात्र दुःखनिवृत्तिरूपत्वात्. सुखरूपत्वे हि तादृशं सुखं विषयसंबन्धमूलकमेव स्यादित्यनित्यमेव स्यात्तेन चाऽपवर्गस्यानित्यत्वमापद्येत न चैतदिष्टम्. आत्मनश्च सुखरूपत्वं नानूभूयते इति नोपपद्यते च येनात्मसुखेनाऽपवर्गे सुखं नित्यं स्यादिति दुःखनिवृत्तिरेवापवर्ग इति संभवति– ध्वंसरूपाया निवृत्तेर्नित्यत्वसंभवादिति संक्षेपो विस्तरस्त्वन्यत्र द्रष्टव्यः । मिथ्याज्ञानं च विपरीतज्ञानम् अविद्येति यावत् सा च प्राधान्येन चतुर्विधा तथा च योगसूत्रम्–"अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति, अनित्यादिषु नित्यत्वादिज्ञानमविद्या= मिथ्याज्ञानमित्यर्थः, इतिसूत्रार्थः,

मिथ्याज्ञानं व्याचष्टे– तत्रेति, तत्र=सूत्रोक्तपदार्थेषु आत्मादि= आत्मानमारभ्य, आत्मादितत्त्वज्ञानादपवर्ग इत्युक्तमिति हेतोः "आत्माद्यपवर्गपर्यन्तम्" इत्युक्तं वस्तुतस्तु लोके शुक्त्यादिपदार्थेष्वपि रजतादिमिथ्याज्ञानं जायते एव, प्रमेये इति सप्तम्यर्थो विषयत्वम्, प्रवर्तते= जायते । आत्माद्यपवर्गपर्यन्तं प्रमेयाश्चाग्रिमे नवमसूत्रे द्रष्टव्याः । आत्मविषयकं मिथ्याज्ञानमाह– आत्मनीति, सत आत्मनो नास्तीतिज्ञानमसत्त्वग्राहकत्वेन विपरीतत्वाद् मिथ्याज्ञानमेव एवमग्रेपि बोध्यम् । अनात्मनि शरीरे आत्मत्वज्ञानं विपरीतत्त्वाद् मिथ्याज्ञानमेव. दुःखे संसारे किं वा पुत्रकलत्रधनादौ सुखमिति ज्ञानं मिथ्याज्ञानमेव उक्तं च–"अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्" इत्यादि । अनित्ये पृथिव्यादौ नित्यत्वज्ञानम्, अत्राणे= अरक्षके प्रभ्वादौ रक्षकत्वज्ञानम्, सभये संसारे राजपदादौ वा निर्भयत्वज्ञानं मिथ्याज्ञानमेव. जुगुप्सिते= मलमूत्रादिपूर्णत्वेनाशुद्धे शरीरे अभिमतम्= अनुकूलं ग्राह्यं शुद्धमितिज्ञानं मिथ्याज्ञानमेव उक्तं च–"स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि कायमाधेयशौचत्त्वात् पण्डिता ह्यशुचिं विदुः" इति, हातव्ये= त्याज्ये संसारपदार्थे अप्रतिहातव्यम्= अत्याज्यत्वज्ञानं मिथ्याज्ञानमेव । धर्माधर्मलक्षणप्रवृत्तिविषयं मिथ्याज्ञानमाह– प्रवृत्ताविति, सृष्टिवैषम्यस्य धर्माधर्माभ्यां विनोपपत्तेरसंभवेन कर्मसत्त्वमावश्यकं तत्र सतोः कर्मतत्फलयोर्नास्तीतिज्ञानं मिथ्याज्ञानम् । दोषविषयकं मिथ्याज्ञानमाह–

कर्मफलमिति, दोषेषु नायं दोषनिमित्तः संसार इति, प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति. अनिमित्तं जन्माऽनिमित्तो जन्मोपरम इति. आदिमान् प्रेत्यभावोऽनन्तश्चेति. नैमित्तिकः सन्न कर्मनिमित्तः प्रेत्यभाव इति. देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसंधानाभ्यां निरात्मकः प्रेत्यभाव इति, अपवर्गे भीष्मः खल्वयं सर्वकार्योऽपरमः सर्वविप्रयोगेऽपवर्गे बहु भद्रकं लुप्यते इति कथं बुद्धिमान सर्वसुखोच्छेदमऽचैतन्यममुमऽपवर्गं रोचयेदिति, एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः. रागद्वेषाधिकाराच्चाऽसत्येर्षामायालोभादयो दोषा भवन्ति ।

---

दोषेष्विति, रागद्वेषादिदोषाणां प्रत्यक्षसिद्धत्वान् तत्र नास्तीतिज्ञानं नोपपद्यते इति दोषेषु संसाराऽकारणत्वज्ञानं मिथ्याज्ञानमेव- दोषाणामपि संसारकारणत्वात् यतो दोषैः प्रेरितो जीवः कर्म करोति तेन च संसारो भवति, किं च रागादिदोषेष्वऽदोषत्वज्ञानमपि मिथ्याज्ञानमेव लोके हि रागादिदोषेषु गुणत्वज्ञानमनुवर्तते इति स्पष्टमेव। जन्मादिविषयकं मिथ्याज्ञानमाह- प्रेत्येति, प्रेत्यभावे= जन्ममरणयोः, जीव इति जन्तुपदव्याख्यानम् आत्मेति सत्त्वपदव्याख्यानं प्रेयात्= म्रियेत प्रेत्य=मृत्वा भवेत्= जायेत= जन्मसंबद्धः स्यात्. जन्ममरणयोः प्रत्यक्षसिद्धत्वेन प्रत्याख्यानासंभवान् तयोर्जीवेन संबन्धोत्र प्रत्याख्यातो वेदितव्यः- यदा हि नित्य आत्मैव नास्ति तदा तस्य कथं निरन्तरं जन्ममरणाभ्यां संबन्धः स्यात् ?- नित्यस्यैव मरणानन्तरं जन्मसंभवात् न च नित्य आत्मा तस्माद् मृतो न जायते इत्येवं चार्वाकमतेन व्याख्येयं किं वा शून्यवादेन व्याख्येयं तत्र शून्यातिरिक्तस्य सत एवाभावात् जन्मादिकमनुपपन्नं. तत्रात्मना सह जन्ममरणयोः संबन्धस्य सतोप्यसत्त्वज्ञानं मिथ्याज्ञानमेव, जन्ममरणे निष्कारणके इति द्वितीयं मिथ्याज्ञानमाह- अनिमित्तमिति, जन्मोपरमः= मरणम् , अत्र सकारणकयोर्जन्ममरणयोर्निष्कारणकत्वज्ञानं मिथ्याज्ञानमेव, अपवर्गेण सान्तयोरपि जन्ममरणयोरनन्तत्वज्ञानलक्षणं मिथ्याज्ञानमाह- आदिमानिति, तथा च मोक्षपदार्थो नास्तीत्यर्थः । जन्ममरणयोः सकारणकत्वस्वीकारेपि कर्माऽकारणकत्वज्ञानलक्षणं मिथ्याज्ञानमाह- नैमित्तिक इति, प्रेत्यभावो नैमित्तिकोपि सन् न कर्मनिमित्तकः किं वा ' अकर्मनिमित्तः ' इतिच्छेदः, अत्र पक्षे शुक्रस्य गर्भाशये स्थितिनिमित्तकं जन्म मरणं च धातुवैषम्यनिमित्तकमित्याशयः । सात्मकयोः= आत्मसंबद्धयोर्जन्ममरणयोर्निरात्मकत्वज्ञानलक्षणं मिथ्याज्ञानमाह- देहेति, निरात्मकः= आत्मासंबद्धः= आत्मरहितः प्रेत्यभावो नित्यस्यात्मनो नास्ति- नित्यात्मस्वीकाराभावात् किं तु देहेन्द्रियबुद्धिवेदनासंतानस्योच्छेद एव मरणं प्रतिसंधानम्= परस्परसंबन्ध एव जन्मेति बौद्धमतं तादृशोच्छेदप्रतिसंधानाभ्यामेव प्रेत्यभावस्योपपत्तेरात्मापेक्षाया अभावाद् निरात्मकः प्रेत्यभावः, अत्र देहेतिवाक्यं बौद्धाभिमतपञ्चस्कन्धग्राहकं वेदितव्यं तत्र देहःप्रसिद्ध इन्द्रियशब्दो रूपस्कन्धपरः बुद्धिशब्दो विज्ञानस्कन्धपरः वेदनाशब्दो वेदनास्कन्धपरः, सविषयाणीन्द्रियाणि रूपस्कन्धः आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्ध इतिबुद्धिवेदनयोर्विभेदो विस्तरस्तु बौद्धग्रन्थे द्रष्टव्यः. । अपवर्गविषयकं मिथ्याज्ञानमाह- अपवर्गे इति, भीष्मः= भीषणः= असह्यः । सर्वविप्रयोगे= पुत्रकलत्रादिसर्वपदार्थसंबन्धरहितेऽपवर्गे बहु= सर्वं भद्रकम्= सुखं लुप्यते- सुखस्य सुखजनककलत्रादिपदार्थसंयोगजन्यत्वात् अपवर्गे च सुखजनककलत्रादिपदार्थसंसर्गास्वीकारादित्यर्थः । आक्षिपति- कथमिति, सर्वसुखोच्छेदम्= सर्वसुखरहितम् अचैतन्यं= ज्ञानरहितम्- न्यायमते मोक्षे सर्वज्ञानराहित्यस्वीकारात् तथा चाऽभीष्मेऽपवर्गे भीष्मत्वज्ञानं सभद्रकेऽभद्रकत्वज्ञानं बुद्धिमद्रुचिविषये बुद्धिमद्रुच्यविषयत्वज्ञानं विपरीतत्वाद् मिथ्याज्ञानमेव । उक्तमिथ्याज्ञानस्य फलमाह- एतस्मादिति, जायते इतिशेषः । रागद्वेषयोः फलमाह- रागद्वेषेति, रागद्वेषयोरधिकारात्= उद्रेकात् असत्यादयो दोषा भवन्ति, असत्यम्= मिथ्याभाषणम्. ईर्षा= परगुणेषु दोषारोपः माया= दम्भः लोभः= अयुक्तसंग्रहेच्छा ।

दोषैः प्रयुक्तः– शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसंबद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति, सेयं पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा– शरीरेण दानं परित्राणं परिचरणं चेति, वाचा सत्यं हितं प्रियं स्वाध्यायं चेति, मनसा दयामस्पृहां श्रद्धां चेति, सेयं धर्माय ।

अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ यथा– अन्नसाधनाः प्राणाः 'अन्नं वै प्राणिनः प्राणाः' इति, सेयं प्रवृत्तिः कुत्सितस्याऽभिपूजितस्य च जन्मनः कारणम् ।

जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः तस्मिन् सति दुःखम्, तत् पुनः प्रतिकूलवेदनीयं बाधना पीडा ताप इति ।

त इमे मिथ्याज्ञानादयो दुःखान्ता धर्मा अविच्छेदेनैव प्रवर्तमानाः संसार इति । यदा तु तत्त्वज्ञानाद् मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये

मिथ्याज्ञानं व्याख्याय दोषाणां फलमाह– दोषैरिति, रागादिदोषैः प्रयुक्तः= प्रेरितः । दोषप्रयुक्तस्य निषिद्धां शरीरप्रवृत्तिमाह– शरीरेणेति, प्रतिषिद्धमैथुनम्= अगम्यागमनम् । निषिद्धां वाक्प्रवृत्तिमाह– वाचेति, अनृतम्= अनृतभाषणम्, परुषम्= परुषभाषणम्, सूचना= पिशुनता, असंबद्धम्= अनर्थकभाषणम् अविद्यमानदोषभाषणम्, "आचरति" इत्यनुवर्तनीयम् । निषिद्धां मनःप्रवृत्तिमाह– मनसेति, परद्रव्याभीप्साम्= अन्यायेन परद्रव्यग्रहणेच्छाम्, नास्तिक्यम्= वेदनिन्दाम् आचरतीत्यन्वयः । निषिद्धां प्रवृत्तिमुपसंहरति– सेयमिति, अधर्माय= पापादृष्टजनिकेत्यर्थः । शरीरादीनां शुभाम्= धर्मोत्पादिकां प्रवृत्तिमाह– अथेति, दानम्= पात्राय दानम्, परित्राणम्= पररक्षणम्, परिचरणम्= वृद्धसेवा, आचरतीत्यन्वयः । शुभां वाक्प्रवृत्तिमाह– वाचेति, सत्यम्= सत्यवचनम्, हितम्= हितवचनम्, प्रियम्= प्रियवचनम्, स्वाध्यायम्= वेदाभ्यसनम् आचरति । शुभां मनःप्रवृत्तिमाह– मनसेति, आचरतीत्यर्थः । शुभां प्रवृत्तिमुपसंहरति– सेयमिति, सेयं शुभा प्रवृत्तिर्धर्माय= पुण्यादृष्टजनिका । पुण्यपापानुसारेणैव जात्यायुर्भोगा भवन्ति तथा च योगसूत्रम् "सति मूले तद्विपाको जात्यायुर्भोगाः" इति । स्पष्टमन्यत् ।

प्रवृत्तिपदार्थं व्याचष्टे– अत्रेति, अत्र= उक्तसूत्रे प्रवृत्तिः साधनं ययोस्तौ प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्दवाच्यौ, अत्र दृष्टान्तमाह– यथेति, यथा 'अन्नं वै प्राणिनः प्राणाः' इत्यत्राऽन्नं साधनं येषां तेऽन्नसाधनाः प्राणाः 'अन्नम्' इत्यन्नशब्देनोक्ता यथा च "आयुर्वै घृतम्" इत्यत्र घृतसाधनमायुर्घृतशब्देनोक्तम्–साध्यसाधनयोरभेदोपचारात् तथात्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ । उपसंहरति– सेयमिति, प्रवृत्तिः= धर्माधर्मौ कुत्सितस्य= निकृष्टस्य अभिपूजितस्य= उत्कृष्टस्य च सूत्रोक्तस्य जन्मनः कारणम्, वस्तुतस्तु न केवलं जन्मन एव किं तु सर्वस्यैव कुत्सितस्य पापं कारणं सर्वस्यैव चोत्कृष्टस्य पुण्यं कारणम् । तथा च प्रवृत्तिशब्दवाच्ययोर्धर्माधर्मयोर्निवृत्तौ तत्कार्यस्य जन्मनो निवृत्तिर्जन्मनिवृत्तौ च दुःखनिवृत्तिस्ततश्चापवर्ग इत्युपसंहारः ।

जन्मपदार्थं व्याचष्टे– जन्मेति, शरीरेन्द्रियबुद्धीनां निकायविशिष्टः= परस्परसंबद्धानां य प्रादुर्भावः स जन्मेत्युच्यते, गर्भतो मृतशरीरोत्पत्तावपि जन्मशब्दप्रयोगाभावात् शरीरादीनां परस्परसंबद्धत्वं विशेषणम्, तस्मिन्= जन्मनि सत्येव दुःखं भवति नान्यथेत्याह– तस्मिन्निति । दुःखपदार्थमाह– तदिति, तत्= दुःखं प्रतिकूलवेदनीयम्= प्रतिकूलपदार्थसंयोगजन्यं प्रतिकूलत्वेन ज्ञायमानं मनोविकारविशेष एव दुःखमित्यर्थः । दुःखस्य पर्यायत्रयमाह– बाधनेति, तापः= संतापः= क्लेशः ।

संसारपदार्थमाह– ते इति, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानीति धर्माः । अविच्छेदेन= नैरन्तर्येण । तथा च मिथ्याज्ञानाद् दोषा दोषैः प्रवृत्तिः प्रवृत्त्या जन्म जन्मना च दुःखमिति संसारपदार्थः । अपवर्गक्रममाह– यदेति, अपैति= निवर्तते तदा मिथ्याज्ञानापाये= मिथ्याज्ञाननिवृत्तौ दोषा अपयन्ति=

प्रवृत्तिरपैति. प्रवृत्त्यपाये जन्माऽपैति. जन्मापाये दुःखमपैति. दुःखापाये चाऽऽत्यन्तिकोऽपवर्गो निश्रेयसमिति ।

तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम्- आत्मनि तावद्स्तीति, अनात्मन्यऽनात्मेति, एवं दुःखेऽनित्येऽत्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम् । प्रवृत्तौ- अस्ति कर्म अस्ति कर्मफलमिति, दोषेषु- दोषनिमित्तोयं संसार इति, प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्व आत्मा वा यः प्रेत्य भवेदिति. निमित्तवज्जन्म निमित्तवान् जन्मोपरम इति. अनादिः प्रेत्यभावोऽपवर्गान्त इति. नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति. सात्मकः सन् देहेन्द्रियबुद्धिवेदनासंतानोच्छेदप्रतिसंधानाभ्यां प्रवर्तते इति, अपवर्गे- शान्तः खल्वयं सर्वविप्रयोगः= सर्वोपरमोऽपवर्गः बहु च कृच्छ्रं घोरं पापकं लुप्यते इति. कथं बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखाऽसंविदमपवर्गं न रोचयेदिति. तद् यथा मधुविषसंपृक्तान्नमनादेयमिति एवं सुखं दुःखानुषक्तमनादेयमिति ॥ २ ॥

---

निवर्तन्ते, दोषापाये प्रवृत्तिरपैति= धर्माधर्मनिवृत्तिः, प्रवृत्त्यपाये जन्म अपैति= निवर्तते, जन्मापाये च दुःखमपैति= निवर्तते, दुःखापाये च निःश्रेयसशब्दवाच्योऽपवर्गः- अपवर्गस्यात्र दुःखनिवृत्तिरूपत्वात्, आत्यन्तिकत्वं पुनरनुत्पादः= पुनः संसारसंबन्धाभावः ।

तत्त्वज्ञानस्वरूपमाह- तत्त्वज्ञानमिति, मिथ्याज्ञानविपर्ययेण= मिथ्याज्ञानवैपरीत्येन व्याख्यातं विज्ञेयं तथा च यत्र नास्तीति मिथ्याज्ञानं तत्रास्तीति तत्त्वज्ञानं विज्ञेयम् । तत्त्वज्ञानमुदाहरति- आत्मनीति, आत्मनः सत्त्वज्ञानं तत्त्वज्ञानम्, अनात्मनि= आत्मभिन्ने शरीरादौ अनात्मेति= आत्मभिन्नमितिज्ञानं तत्त्वज्ञानम् । दुःखे दुःखमिति. अनित्ये चानित्यमिति. अत्राणे चात्राणमिति. सभये च सभयमिति. जुगुप्सिते जुगुप्सितमिति. हातव्ये= हेये हेयमितिज्ञानं तत्त्वज्ञानम्, यथाविषयम्= प्रतिविषयं किं वा विषयानुरूप्येणेत्यर्थस्तथा च विषयस्य यद् यथार्थं स्वरूपं तद्विषयकं ज्ञानं तत्त्वज्ञानं वेदितव्यं यथा दुःखे दुःखत्वज्ञानम् । प्रवृत्तिविषयकं तत्त्वज्ञानमाह- प्रवृत्ताविति, प्रवृत्तिश्च धर्माधर्मावित्युक्तमेव । दोषविषयकं तत्त्वज्ञानमाह- दोषेष्विति । जन्ममरणयोस्तत्त्वज्ञानमाह- प्रेत्येति, जीव इत्याद्यनेकपर्यायप्रयोगप्रयोजनं चिन्त्यं किं वा जन्तुरिति परिच्छिन्नात्माभिप्रायेण सत्त्व इत्यन्तःकरणात्माभिप्रायेण आत्मेति विभ्वात्माभिप्रायेणेति व्याख्येयम्, प्रेत्य= मृत्वा भवेत्= जायेत तथा च जन्ममरणयोर्नित्यात्मसंबन्धित्वज्ञानमेव तत्त्वज्ञानमित्यर्थः, जन्ममरणयोर्द्वितीयं तत्त्वज्ञानमाह- निमित्तेति, निमित्तवत्= कर्मनिमित्तकं जन्म तत्त्वज्ञाननिमित्तको जन्मोपरमः= अपवर्गः । अत्र तृतीयं तत्त्वज्ञानमाह- अनादिरिति, अपवर्गान्तः= अपवर्गेण सान्तः= निवर्तते इत्यर्थः । अत्र चतुर्थं तत्त्वज्ञानमाह- नैमित्तिक इति, प्रवृत्तिनिमित्तः= धर्माधर्मनिमित्तको न तु स्वकल्पितनिमित्तेन नैमित्तिक इत्यर्थः । अत्र पञ्चमं तत्त्वज्ञानमाह- सात्मक इति, देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसंधानाभ्यां प्रवर्तमानोपि प्रेत्यभावो न निरात्मकः किं तु सात्मक एव तत्र देहेन्द्रियबुद्धिवेदनासंतानस्योच्छेदनात्मन एव मरणम्= देहादिवियोगः प्रतिसंधानेन= पुनः संयोगेनात्मन एव जन्मेति प्रेत्यभावः सात्मक इति तत्त्वज्ञानम् । अपवर्गविषयकं तत्त्वज्ञानमाह- अपवर्ग इति, सर्वोपरमः= सर्वनिवृत्तिरूपः, कृच्छ्रम्= कष्टम् । पापकम्= पापमपवर्गे लुप्यते तथा चापवर्गे कल्याणत्वज्ञानं तत्त्वज्ञानम् । अत्र द्वितीयं तत्त्वज्ञानमाह- कथमिति, सर्वदुःखासंविदम्= सर्वदुःखज्ञानरहितम्, दुःखोच्छेदेसत्यपि दुःखज्ञानं संभवतीत्यभिप्रायेण सर्वदुःखासंविदमिति विशेषणम्, तथा चापवर्गे बुद्धिमद्रुचिविषयत्वज्ञानं तत्त्वज्ञानम् । उपसंहरति- तदिति, किं वा ननु संसारे दुःखवत् सुखमप्यस्त्येवेति कथं संसारो हेय इत्याशङ्क्याह- तदिति, यथा मधुसंपृक्तम्= मधुमिश्रमप्यन्नं विषमिश्रत्वादनादेयम्= अग्राह्यमेव= त्याज्यमेव- दुःखप्रधानत्वात्

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः– उद्देशो लक्षणं परीक्षा चेति. तत्र नामधेयेन पदार्थमात्रस्याभिधानम् उद्देशः तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम्. लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते यथा प्रमाणानां प्रमेयस्य च, उद्दिष्टस्य लक्षितस्य च विभागवचनं यथा छलस्य " वचनविघातोऽर्थविकल्पोपपत्त्या छलम् १–२–१० " " तत् त्रिविधम् १–२–११ " इति। अथोद्दिष्टस्य विभागवचनम्—

## प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

अक्षस्याऽक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्. वृत्ति स्तु संनिकर्षो ज्ञानं वा. यदा संनिकर्षस्तदा ज्ञानं प्रमितिः. यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्। अनुमानम्– मितेन

---

तथा सांसारिकं सुखमपि दुःखानुषक्तम्= अनेकदुःखमिश्रितमस्तीति त्याज्यमेव अपवर्गश्च सर्वदुःखरहितत्वात् संपाद्य इत्यर्थः, स्पष्टमन्यत् ॥ २ ॥

एतच्छास्त्रस्य पदार्थप्रतिपादनप्रकारमाह– त्रिविधेति, प्रवृत्तिः= पदार्थप्रतिपादनशैली। उक्तत्रैविध्यमाह– उद्देश इति। उद्देशस्वरूपमाह– तत्रेति, पदार्थानां नामधेयमात्रस्य कथनमुद्देशो यथा प्रथमसूत्रे प्रमाणादिषोडशपदार्थानां नाममात्रकीर्तनम्। लक्षणस्वरूपमाह– तत्रेति, तत्र= उद्देशवाक्ये उद्दिष्टस्य= नामधेयमात्रेणोक्तस्य पदार्थस्य तत्त्वव्यवच्छेदकः= पदार्थान्तरेभ्यः स्वरूपव्यवच्छेदको धर्मो लक्षणं यथा– प्रमाणस्य प्रमितिजनकत्वमितिलक्षणं प्रमितिजनकत्वं च प्रमाणातिरिक्तेषु प्रमेयेषु प्रमाणाभासेष्वपि च नास्तीति प्रमाणस्य स्वरूपव्यवच्छेदको धर्मः। लक्षणलक्षणं च " अव्याप्त्यऽतिव्याप्त्यऽसंभवेतिदोषत्रयरहितत्वम् ' तदेतद् दोषत्रयरहितत्वं प्रमितिजनकत्वेऽस्त्येव– सर्वेषु प्रमाणेषु प्रमितिजनकत्वस्य सत्त्वादन्यत्र चाऽसत्त्वात्, लक्ष्यविशेषे लक्षणस्याऽसमन्वयोऽव्याप्तिः, अलक्ष्ये लक्षणसमन्वयोतिव्याप्तिः, सर्वेष्वपि लक्ष्येषु लक्षणाऽसमन्वयोऽसंभव इत्यलम्। परीक्षास्वरूपमाह– लक्षितस्येति, लक्षितस्य= कृतलक्षणस्य पदार्थस्य यथालक्षणम्= लक्षणानुसारेण स्वरूपमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा यथात्र द्वितीयाध्याये संशयादीनां परीक्षा कृता। उद्देशलक्षणपरीक्षाभ्यश्चतुर्थः प्रकारो विभागोप्यस्ति स च क्वचित् सति संभवे लक्षितस्य क्वचिच्चाऽलक्षितस्य क्रियते तदाह– तत्रेत्यादिना, तथा च वार्तिकम्– " उद्दिष्टस्य विभागो द्वेधा भवति– लक्षितस्यालक्षितस्य च लक्षितस्य छलादेरलक्षितस्य प्रमाणादेरिति" इति। तत्रेति– प्रमाणानि प्रथमसूत्रे उद्दिष्टानि तृतीयसूत्रे प्रविभक्तानि चतुर्थसूत्रमारभ्य लक्षितानि, एवं प्रमेयस्याप्युद्देशविभागलक्षणक्रमो विज्ञेयः। लक्षणानन्तरं विभागक्रममाह– उद्दिष्टस्येति, छलस्य प्रथमसूत्रे उद्देशः प्रथमाध्यायद्वितीयान्हिकदशमसूत्रे लक्षणं तदग्रिमसूत्रे च " तत् त्रिविधम् " इति विभागः कृतः। प्रथमकल्पानुसारेण उद्दिष्टस्य प्रमाणस्य विभागक्रियामाह– अथोद्दिष्टस्येति। विभागसूत्रमाह– प्रत्यक्षेति, प्रत्यक्षादीनि चत्वारीणि प्रमाणानीति सूत्रार्थः, न्यूनाधिकसंख्याव्यवच्छेदश्चाग्रे स्पष्ट एव। अत्र 'स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यपरस्परासमानाधिकरणयावद्धर्मप्रकारकज्ञानानुकूलो व्यापारो विभागपदार्थः ' इत्यनुसंधेयं यथात्र प्रत्यक्षत्वादिधर्मचतुष्टयप्रकारकज्ञानानुकूलो व्यापारो विभागः।

प्रत्यक्षशब्दव्युत्पत्तिमाह– अक्षस्येति, अक्षस्याक्षस्य= चक्षुरादीनामिन्द्रियाणां या स्वस्वविषयं प्रति वृत्तिः= प्रवृत्तिः संयोगो वा तत् प्रत्यक्षमित्यर्थः। वृत्तिपदार्थमाह– वृत्तिरिति, संनिकर्षः= विषयेन्द्रियसंयोगः स च प्रमितिजनकत्वात् प्रमाणम्, ज्ञानमिति– विषयेन्द्रियसंयोगजन्यं ज्ञानं वा प्रत्यक्षम्। विषयेन्द्रियसंयोगस्य फलमाह– यदेति, विषयेन्द्रियसंयोगे सत्येव यज्ज्ञानमुत्पद्यते तदेव प्रत्यक्षप्रमितिरित्युच्यते नान्यथा यथा शुक्तीन्द्रियसंयोगे उत्पन्नमपि रजतज्ञानं न प्रमितिः। ज्ञानफलमाह– यदेति, दुःखदस्य हानं सुखदस्योपादानम् अनपेक्षितस्योपेक्षा। हानादिबुद्धयश्च ज्ञानं विना न संभवन्तीति

लिङ्गेनाऽर्थस्य पश्चान्मानमऽनुमानम् । उपमानम्- सामीप्यज्ञानम्- 'यथा गौरेवं गवयः' इति सामीप्यं तु सामान्ययोगः । शब्दः शब्द्यतेऽनेनार्थ इति अभिधीयते= ज्ञाप्यते । उपलब्धि-साधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद् बोद्धव्यम्- प्रमीयतेऽनेनेति करणार्थाभि-धानो हि प्रमाणशब्दः । तद्विशेषसमाख्याया अपि तथैव व्याख्यानम् ।

किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते? अथ प्रतिप्रमेयं व्यवतिष्ठन्ते? इति । उभयथा दर्शनम्- 'अस्त्यात्मा' इत्याप्तोपदेशात् प्रतीयते. तत्रानुमानम्- "इच्छाद्वेषप्रयत्नसुखदुःख-ज्ञानान्यात्मनो लिङ्गमिनि १-१-१०" प्रत्यक्षम्- युञ्जानस्य योगसमाधिजम् आत्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति । अग्निराप्तोपदेशात् प्रतीयते- 'अत्राग्निः' इति. प्रत्यासीदता धूमदर्शनेनानुमीयते. प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते ।

व्यवस्था पुनः- "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति लौकिकस्य स्वर्गे न लिङ्गदर्शनं न प्रत्यक्षम्, स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानं तत्र न प्रत्यक्षं नागमः, पाणौ

स्पष्टमेव । अनुमानशब्दव्युत्पत्तिमाह- अनुमानमिति, मितेन= प्रमितिविषयेण लिङ्गेन धूमादिनाऽनु= पश्चाद् मानमनुमानं यथा वन्ह्यादेः । उपमानस्वरूपमाह- उपमानमिति, उपमानेन उपमया वा प्रवृत्त-मुपमानमिति यावत्, सामीप्यज्ञानम्= सादृश्यज्ञानम्, उदाहरति- यथेति, यथाशब्दस्योपमावाचकत्वे-नोपमावोधकत्वादिदमुपमानोदाहरणं फलं तु गवयगवयपदयोर्वाच्यवाचकभावलक्षणायाः शक्तेरवधारणमे-वात्र शास्त्रे विज्ञेयम् । सामीप्यपदार्थमाह- सामीप्यमिति, सामान्ययोगः= समानधर्मसंबन्धः= सादृश्य-मिति यावत् तदेतद् गोगवययोः प्रसिद्धमेव- समानाकृतिमत्त्वात् । शब्दपदव्युत्पत्तिमाह- शब्द इति, शब्द्यते= अभिधीयनेऽनेनार्थ इति शब्दः, प्रमाणमात्रस्यार्थज्ञापकत्वाद् ज्ञाप्यते इत्यस्य शक्त्योपस्थाप्यते इत्यर्थः । प्रमाणानामुपलब्धिसाधनत्वम्= पदार्थप्रतीतिकारणत्वमुक्तरीत्या समाख्यानिर्वचनसामर्थ्यात्= प्रत्यक्षादिशब्दव्युत्पत्तिसामर्थ्याद् बोद्धव्यं यथा "अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्" इत्यादि । प्रमाणपदव्युत्पत्तिमाह- प्रमीयते इति, प्रमीयतेऽनेनेति प्रमाणमिति प्रमाणशब्दः करणार्थाभिधानः= प्रमि-तिकरणत्वबोधकः- करणत्वबोधकल्युट्प्रत्ययघटितत्वात् । तद्विशेषसमाख्यायाः= प्रमाणविशेषवाचकप्रत्य-क्षादिशब्दस्यापि तथैव= करणव्युत्पत्त्या व्याख्यानं कर्तव्यं यथा प्रत्यक्ष्यतेऽनेनेति प्रत्यक्षम् किं वा 'अक्ष-मक्षं प्रतीति प्रत्यक्षम्' इति, अनुमीयतेऽनेनेत्यनुमानम् उपमीयतेऽनेनेत्युपमानं शब्द्यतेऽनेनेति शब्द इति।

प्रमाणानां संकरासंकरौ सिज्ञासते- किमिति, प्रमेयम्= प्रत्येकं प्रमेयं अभिसंप्लवन्ते= संकीर्यन्ते, अभिसंप्लवः= संकरः, किं वा प्रतिप्रमेयं व्यवतिष्ठन्ते= व्यवस्थया प्रवर्तन्ते= न संकीर्यन्ते, सर्वाणि प्रमा-णान्येकस्मिन् विषये प्रवर्तन्ते न वेति प्रश्नाशयः । उत्तरमाह- उभयथेति, कचित् प्रमाणानां संकरोपि दृश्यते कचिद् व्यवस्थापि दृश्यते इत्यर्थः । प्रथमं प्रमाणानां संकरमुदाहरति- अस्तीति, तदनेनात्मनः शब्दबोध्यत्वमुक्तम्.-शब्दबोध्ये आत्मन्यनुमानप्रवृत्तिमाह- तत्रेति, आत्मनो लिङ्गमिति- इच्छादीनां मृतशरीरेष्वदर्शनाद् ज्ञायते- इच्छाद्याश्रयः शरीरातिरिक्त एवात्मास्तीतीच्छादिना लिङ्गेनात्मनोऽनुमान-मपि संभवति, युञ्जानस्य योगिनो योगसमाधिजन्यं प्रत्यक्षमप्यात्मनि प्रवर्तते इत्याह— प्रत्यक्षमिति, आत्मप्रत्यक्षप्रकारमाह- आत्ममनसोरिति, तदनेनात्मनि प्रमाणानां संकरः प्रदर्शितः । इन्द्रियसंयोग-योग्ये बाह्यपदार्थे प्रमाणानां संकरमुदाहरति- अग्निरिति, अत्राग्निरिति शब्दबोध्यत्वं प्रत्यासीदता= अग्निसमीपं गच्छता धूमदर्शनेन= दृष्टधूमेनानुमीयतेप्यग्निरित्यनुमानविषयत्वं प्रत्यासन्नेन= अग्निसमीपं प्राप्तेन प्रत्यक्षेणाप्यग्निरुपलभ्यते इत्यग्नौ प्रमाणानां संकर एवमन्यत्रापि यथासंभवं बोध्यम् ।

प्रमाणानां व्यवस्थामुदाहरति- व्यवस्थेति । लौकिकस्य= योगशक्तिरहितस्य पुंसः स्वर्गविषयकम-नुमानमपि न संभवति-- स्वर्गव्याप्यलिङ्गदर्शनाभावात् प्रत्यक्षमपि न संभवति किं तु "अग्निहोत्रम्"

प्रत्यक्षत उपलभ्यमाने नानुमानं नागम इति, सा चेयं प्रमितिः प्रत्यक्षपरा– जिज्ञासितमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते. लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते. प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते. पूर्वोक्तमुदाहरणम् । अग्निरिति प्रमातुः प्रमातव्येऽर्थे प्रमाणानां संकरोऽभिसंप्लवः, असंकरो व्यवस्थेति ॥ ३ ॥

॥ इति त्रिसूत्रीभाष्यम् ॥

---

अथ विभक्तनां लक्षणमिति—

## इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

---

इत्यादिशब्दमात्रबोध्यत्वं स्वर्गेऽस्तीति शब्दप्रमाणव्यवस्था । स्तनयित्नोः= शब्दकरस्य मेघादेः शब्दे श्रूयमाणे= श्रुते सति गृहाभ्यन्तःस्थितस्य शब्दहेतोः= शब्दलक्षणहेतुना मेघादेरनुमानमेव भवति न तत्र प्रत्यक्षं वाऽऽगमो वा प्रवर्तते– असंभवादित्यनुमानव्यवस्था, किं वा शब्देन शब्दहेतोर्मेघादेरनुमानमित्यन्वयः । पाणौ= हस्ते प्रत्यक्षेणोपलभ्यमाने बदरे प्रत्यक्षमेव प्रवर्तते नानुमानं नाप्यागम इति प्रत्यक्षव्यवस्था । उपसंहरति– सा चेयमिति, प्रत्यक्षपरा= प्रत्यक्षावसाना= प्रत्यक्षानन्तरं तत्र प्रमाणापेक्षा न भवतीत्यर्थः । प्रमितेः प्रत्यक्षावसानत्वे हेतुमाह– जिज्ञासितमिति, प्रतिपद्यमानः= जानानः, तदनेन शब्दानन्तरमनुमानप्रवृत्तिः प्रदर्शिता, अनुमितमपि पदार्थं प्रत्यक्षेण द्रष्टुमिच्छति. प्रत्यक्षेण दृष्टस्य चार्थस्य जिज्ञासा निवर्तते= प्रत्यक्षानन्तरं तत्र प्रमाणापेक्षा न भवतीति हेतोः प्रमितिः प्रत्यक्षावसाना विज्ञेयेत्यर्थः । अस्योदाहरणं तु पूर्वोक्तं यथा– "अग्निराप्तोपदेशात् प्रतीयते" इत्यादि तत्र प्रत्यासन्नेन प्रत्यक्षोपलब्धेऽग्नौ जिज्ञासा निवर्तते इति प्रमितिः प्रत्यक्षावसानेत्याह– पूर्वोक्तमिति । एवमुक्तोदाहरणेषु प्रमाणानां संकरस्य विषयमाह– अग्निरितीति, अग्निरिति प्रमातुः= अग्निप्रमातुः किं वात्राग्निरस्ति न वेति प्रमातुः प्रमातव्येऽर्थे= अग्नौ प्रमाणानाम्= उक्तरीत्या शब्दानुमानप्रत्यक्षाणां यः संकरः सोऽभिसंप्लवः, यश्च स्वर्गादावसंकरः प्रदर्शितः सा प्रमाणानां व्यवस्था विज्ञेयेत्यन्वयः । स्पष्टमन्यत् ॥ ३ ॥

॥ इति त्रिसूत्रीप्रसन्नपदा ॥

---

प्रमाणानां लक्षणमवतारयति– अथेति, विभक्तानाम्= तृतीयसूत्रेण चतुर्धा विभक्तानां प्रमाणानां लक्षणमुच्यते । इन्द्रियार्थेति– इन्द्रियार्थयोः संनिकर्षेण= संयोगेनोत्पन्नम् अव्यपदेश्यम्= शाब्दबोधातिरिक्तम् अव्यभिचारि= भ्रमातिरिक्तम् व्यवसायात्मकम्= निश्चयात्मकम्= संशयातिरिक्तम् यत् ज्ञानं तत् प्रत्यक्षमित्यन्वयः । इन्द्रियार्थसंनिकर्षे सत्यपि संनिकृष्टविषयकं शब्देनापि ज्ञानं संभवतीति तद्व्यवच्छेदार्थम्– अव्यपदेश्यमिति विशेषणम्, व्यपदिश्यते= शब्देन जायते इति व्यपदेश्यमिति शाब्दबोधनामधेयम् । भ्रमात्मकं ज्ञानं व्यभिचारि भवति– अतस्मिन् तद्बुद्धिरूपत्वात् यथाऽरजतस्य रजतस्वरूपेण ग्रहणम् तदपि इन्द्रियार्थसंनिकर्षोत्पन्नमव्यपदेश्यं च भवतीति तद्व्यवच्छेदार्थम्– अव्यभिचारीति विशेषणम् । अथापि 'स्थाणुर्वा पुरुषो वा' इतिसंशयात्मकज्ञानेऽतिव्याप्तिः स्यादिति तद्व्यवच्छेदार्थम्– व्यवसायात्मकमिति विशेषणम्, संशयस्तु निश्चयात्मको न भवति । अनुमानस्थले प्रमेयेणेन्द्रियसंयोगाभावात् शाब्दबोधस्याऽव्यपदेश्यत्वाभावादुपमानकरणस्य सादृश्यज्ञानस्य चात्र प्रवेशाभावान्नास्य प्रत्यक्षलक्षणस्यानुमानादावतिव्याप्तिरिति सूत्रार्थः ।

इन्द्रियस्यार्थेन संनिकर्षाद् उत्पद्यते यज् ज्ञानं तत् प्रत्यक्षम्, न तर्हीदानीमिदं भवति- आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति ?, नेदं कारणावधारणम्- 'एतावत् प्रत्यक्षे कारणम्' इति किं तु विशिष्टकारणवचनमिति= यत् प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते यत्तु समानमनुमानादिज्ञानस्य न तद् निवर्तते इति । मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः ?, भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यते इति समानत्वान्नोक्त इति ॥

यावदर्थं वै नामधेयशब्दास्तैरर्थसंप्रत्ययोऽर्थसंप्रत्ययाच्च व्यवहारः तत्रेदमिन्द्रियार्थसंनिकर्षादुत्पन्नमर्थज्ञानं रूपमिति वा रस इत्येवं वा भवति रूपरसशब्दाश्च विषयनामधेयं तेन व्यपदिश्यते ज्ञानम्- रूपमिति जानीते रस इति जानीते. नामधेयशब्देन व्यपदिश्यमानं सत्

व्याचष्टे- इन्द्रियस्येति, इन्द्रियार्थसंयोगादुत्पन्नं ज्ञानं प्रत्यक्षमित्येव प्रथमं वक्तव्यम् अत्र दोषे प्राप्ते तन्निवारणार्थं विशेषणं दास्याम इत्यर्थः । ननु इदानीम्= 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्' इत्येतावदुक्ते इदम्= 'आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षम्' इत्येषा न्यायशास्त्रसंमता प्रत्यक्षप्रक्रिया न भवति= न सिध्यतीत्याशङ्कते- न तर्हीति । उत्तरमाह- नेदमिति, यदिदं प्रत्यक्षलक्षणमुक्तं तत् 'एतावत्= इन्द्रियार्थसंनिकर्ष एव प्रत्यक्षे= प्रत्यक्षस्य कारणम्' इति । कारणावधारणम्= प्रत्यक्षकारणनियमः= इन्द्रियार्थसंनिकर्षातिरिक्ते आत्ममनःसंयोगादौ प्रत्यक्षकारणत्वव्यवच्छेदो नास्ति येनोक्ता प्रत्यक्षप्रक्रिया न सिध्येत् किं तु विशिष्टकारणवचनम्= प्रत्यक्षस्य यद् विशेषकारणं इन्द्रियार्थसंनिकर्षः स एवात्रोच्यते न तु ज्ञानमात्रसामान्यकारणम् आत्ममनःसंयोगादिकमपीत्यन्वयः । स्वोक्तमेव व्याचष्टे- यदिति । अनुमानादिस्थले चानुमेयादिना इन्द्रियसंयोगो न संभवति प्रत्यक्षे च भवतीति इन्द्रियार्थसंनिकर्षः प्रत्यक्षस्य विशिष्टं कारणम् । पर्यवसितमाह- यत्त्विति, यत्तु आत्ममनःसंयोगादिकमुक्तम् अनुमानादिज्ञानस्य समानम्= साधारणं कारणं तन्न निवर्तते किं तु तदपि साधारणं कारणं गृह्यते एवेति नोक्तप्रत्यक्षप्रक्रियया विरोध इत्यर्थः । ननु यद्यत्र प्रत्यक्षस्याऽसाधारणं कारणमुच्यते तदात्र मनइंद्रियसंयोगोपि वक्तव्योस्ति तस्यापि प्रत्यक्षासाधारणकारणत्वात् न चात्रोक्त इत्याशङ्कते- मनस इति । उत्तरमाह- भिद्यमानस्येति, भाष्यमिदमसंगतमेव- हेत्वाभासतुल्यत्वादिति विभाव्यम्, भिद्यमानस्य= इन्द्रियभेदेन शब्दादिविषयभेदेन च बहुप्रकारस्य प्रत्यक्षज्ञानस्याऽयम्= मनइन्द्रियसंयोगो न भिद्यते किं त्वसाधारणत्वात् अनुवर्तते एवेति समानत्वात्= इन्द्रियार्थसंनिकर्षतुल्यत्वान्नोक्त इत्यन्वयः, उक्तेनेन्द्रियार्थसन्निकर्षेण मनइन्द्रियसंयोगोपि गृहीतो भवत्येव- मनइन्द्रियसंयोगं विना इन्द्रियार्थसंयोगस्यासंभवात् मनसा प्रेरितस्यैवेन्द्रियस्यार्थेन संयुज्यमानत्वादिति हेतोरेव मनइन्द्रियसंनिकर्षो न पृथगुक्त इत्यर्थः । तथा च वार्तिकम्- "इन्द्रियमनःसंयोगस्तर्ह्यसाधारणत्वादुपसंख्येयः- न ह्ययमनुमानादिज्ञानानां कारणं भवति, न- अनेनैव तस्योक्तत्वात्= इन्द्रियार्थसंनिकर्षग्रहणेन इन्द्रियमनःसंयोग उक्तो वेदितव्यः । किं कारणम् ? उभयोरसाधारणत्वात्, न च यावदसाधारणं कारणं तावत् सर्वमभिधातव्यमित्यर्थः" इत्यादि । समानासमानजातीयेभ्यो व्यवच्छेदार्थमेव लक्षणं भवति स च व्यवच्छेदः प्रत्यक्षस्य इन्द्रियार्थसंनिकर्षमात्रग्रहणेनापि भवत्येवेति न मनइन्द्रियसंयोग उक्तः इत्याशयः ।

अव्यपदेश्यत्वविशेषणस्य सार्थक्यं प्रदर्शयितुमुपक्रमते- यावदर्थमिति, यावदर्थम्= प्रत्येकं घटपटादिपदार्थस्य घटपटादयो नामधेयशब्दाः= संज्ञाशब्दा वर्तन्ते तैस्तद्वाच्यार्थस्य घटपटादेः संप्रत्ययः= ज्ञानं जायते तेन चार्थज्ञानेनार्थस्याऽऽनयनादिव्यवहारो भवति तत्र= तादृशव्यवहारकाले रूपेन्द्रियसंनिकर्षादुत्पन्नमर्थज्ञानं रूपमिति= रूपमित्याकारकम्= रूपविषयकं भवति रसेन्द्रियसंनिकर्षाच्चोत्पन्नमर्थज्ञानं रस इत्येवम्= रसविषयकं भवति रूपरसादिशब्दाश्च रूपादिविषयस्य नामधेयभूता एव तैश्च नामधेयशब्दैः रूपादिज्ञानं व्यपदिश्यते यथा- रूपशब्देन 'रूपमिति जानीते' इति रूपज्ञानं व्यप-

शाब्दं प्रसज्यते अत आह– अव्यपदेश्यमिति, यदिदमनुपयुक्ते शब्दार्थसंबन्धेऽर्थज्ञानं तद् नामधेयशब्देन व्यपदिश्यते. गृहीतेपि च शब्दार्थसंबन्धे 'अस्यार्थस्यायं शब्दो नामधेयम्' इति. यदा तु सोऽर्थो गृह्यते तदा तत् पूर्वस्मादर्थज्ञानान्न विशिष्यते तदर्थविज्ञानं तादृगेव भवति, न चाऽप्रतीयमानेन व्यवहारः तस्माद् ज्ञेयस्यार्थस्य संज्ञाशब्देन इतिकरणयुक्तेन निर्दिश्यते– रूपमिति ज्ञानं रस इति ज्ञानमिति तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते व्यवहारकाले तु व्याप्रियते, तस्मात्– 'अशाब्दमर्थज्ञानमिन्द्रियार्थसंनिकर्षोत्पन्नम्' इति ।

---

दिश्यते= निर्दिश्यते रसशब्देन च 'रस इति जानीते' इति रसज्ञानं व्यपदिश्यते तत्र रूपादिनामधेयशब्देन व्यपदिश्यमानं सत् रूपादिप्रत्यक्षज्ञानं शाब्दम्= शाब्दबोधरूपं प्रसज्यते= भवतीति अतः तद्व्यवच्छेदार्थं सूत्रकार आह– अव्यपदेश्यमिति, "शाब्दं प्रसज्यते" इत्यत्र 'शाब्दमपि प्रत्यक्षं प्रसज्यते' इत्येवं वक्तव्यमासीत् । किं वा 'एतादृशं शाब्दं प्रत्यक्षं प्रसज्यते' इत्येवं प्रत्यक्षशब्दाध्याहारेण मूलान्वयः । उक्तं स्वाभिप्रायं विशदयति– यदिदमित्यादिना, शब्दार्थसंबन्धे= वाच्यवाचकभावे अनुपयुक्ते अगृहीते= शक्तिग्रहात् पूर्वकाले यदिदं रूपाद्यर्थज्ञानं जायते तत् परेण गृहीतशक्तिकेन पुरुषेण रूपादिनामधेयशब्देन व्यपदिश्यते= निर्दिश्यते– अस्येदं रूपज्ञानं रसज्ञानमिति, 'अस्यार्थस्य= रूपादिपदार्थस्य अयं शब्दः= रूपादिशब्दो नामधेयम्= वाचकः' इत्येवं शब्दार्थसंबन्धे गृहीतेपि= शक्तिग्रहे जातेपि यदिदं रूपाद्यर्थप्रत्यक्षं जायते तदपि रूपादिनामधेयशब्देन व्यपदिश्यते– अस्येदं रूपज्ञानं रसज्ञानं वेति तादृशं शाब्दं प्रत्यक्षं प्रसज्यते इत्यर्थः । प्रत्यक्षशाब्दयोस्तुल्यतामाह– यदेति, यदा सोऽर्थः= रू ।।दिरिन्द्रियेण गृह्यते तदा तत्= रूपेन्द्रियसंनिकर्षोत्पन्नं रूपप्रत्यक्षं पूर्वस्मात्= शाब्दात् अर्थज्ञानात्= रूपमितिज्ञानान्न विशिष्यते= न विलक्षणो भवति किं तु तदर्थविज्ञानम्= रूपप्रत्यक्षं तादृगेव= शाब्दज्ञानसदृशमेव भवतीत्यन्वयः, किं वानेन ग्रन्थेन शक्तिग्रहात् पूर्वमनन्तरं च जायमानयोः प्रत्यक्षज्ञानयोः सादृश्यं प्रदर्शितं वेदितव्यम् तादृशसादृश्यात् शाब्दमपि प्रत्यक्षं स्यादिति तादृशशाब्दे लक्षणस्यातिव्याप्तिनिवृत्त्यर्थम् 'अव्यपदेश्यम्' इतिविशेषणमित्यर्थः, अत्र "यदा तु सोऽर्थो गृह्यते नामधेयरहितो नामधेयस्मरणात् पूर्वमविकल्पेन तदा पूर्वस्मादव्युत्पन्नावस्थायामर्थज्ञानान्न विशिष्यते यतो न विशिष्यते तस्मात्तदर्थज्ञानं तादृगेव भवति" इति तात्पर्यटीका । अज्ञातेन च पदार्थेन व्यवहारो न संभवतीति व्यवहारार्थं पदार्थज्ञानापेक्षा प्राप्तेत्याह– न चेति । पर्यवसितमाह– तस्मादिति, ज्ञेयस्य= ज्ञातस्यार्थस्य रूपादेर्ज्ञानम् इतिकरणयुक्तेन= इतिशब्दयुक्तेन संज्ञाशब्देन व्यपदिश्यते– 'रूपमितिज्ञानं रस इति ज्ञानम्' इति, तदेवम्= तत्र पदार्थप्रत्यक्षकाले स समाख्याशब्दो न व्याप्रियते= न प्रयुज्यते किं वा न बोधं जनयति व्यवहारकाले तु व्याप्रियते–शब्दव्यापारं विना व्यवहारासंभवात्= प्रयोजकवृद्धेन 'घटमानय' इतिवाक्ये उक्ते सत्येव प्रयोज्येन घटानयनसंभवात् प्रत्यक्षादिना व्यवहारनिर्देशासंभवाच्च । उपसंहरति– तस्मादिति, तस्मात्= शाब्दप्रत्यक्षज्ञानयोरुक्तरीत्या सदृशत्वात् शाब्दज्ञानव्यवच्छेदार्थम् 'अव्यपदेश्यम्' इतिविशेषणे प्रक्षिप्ते– 'अशाब्दम् इन्द्रियार्थसंनिकर्षोत्पन्नमर्थज्ञानं प्रत्यक्षम्' इति प्रत्यक्षलक्षणमिदानीं सिद्धमित्यन्वयः । शाब्दज्ञानस्य प्रत्यक्षसदृशत्वात् तत्रोक्तप्रत्यक्षलक्षणस्यातिव्याप्तिः स्यादिति तद्व्यवच्छेदार्थम् 'अव्यपदेश्यम्' इतिविशेषणमिति भाष्यकृदाशयः प्रतीयते. तत्र शाब्दज्ञानस्य प्रत्यक्षसादृश्यप्रतिपादनार्थम्– "यावदर्थम्" इत्यादिग्रन्थः शब्दाडम्बरः । यत्र हि पदार्थेन्द्रियसंनिकर्षे सत्येव शाब्दज्ञानमुत्पद्यते तादृशशाब्दज्ञानेऽतिव्याप्तिर्न स्यादित्याशयेन 'अव्यपदेश्यम्' इतिविशेषणमित्यनुसंधेयम् । वस्तुतस्तु "अव्यपदेश्यम्" इतिविशेषणं व्यर्थमेव– शाब्दज्ञानादिष्विन्द्रियार्थसंनिकर्षोत्पन्नत्वस्याऽस्वीकारात्, सादृश्यमात्रेण तद्व्यवच्छेदार्थं विशेषणापेक्षायां चानुमितिव्यावृत्त्यर्थमपि विशेषणापेक्षा स्यादित्यलम् ।

ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा संनिकृष्यन्ते तत्रेन्द्रियार्थसंनिकर्षात् उदकमिति ज्ञानमुत्पद्यते तच्च प्रत्यक्षं प्रसज्यते इत्यत आह- अव्यभिचारीति. यद् अतस्मिन् तदिति तद् व्यभिचारि. यत्तु तस्मिन् तदिति तद् अव्यभिचारि प्रत्यक्षमिति ।

दूराच्चक्षुषा ह्ययमर्थं पश्यन् नावधारयति- धूम इति वा रेणुरिति वा तदेतद् इन्द्रियार्थसंनिकर्षोत्पन्नमऽनवधारणज्ञानं प्रत्यक्षं प्रसज्यते इत्यत आह- व्यवसायात्मकमिति । न चैतन्मन्तव्यम्- आत्ममनःसंनिकर्षजमेवाऽनवधारणज्ञानमिति, चक्षुषा ह्ययमर्थं पश्यन् नावधारयति, यथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते एवमिन्द्रियेणाऽनवधारयन् मनसा नावधारयति, यच्चैतद् इन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद् विशेषापेक्षं विमर्शमात्रं संशयो न पूर्वमिति । सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः- उपहतेन्द्रियाणामनुव्यवसायाभावादिति ।

---

अव्यभिचारित्वविशेषणस्य सार्थक्यमाह- ग्रीष्मे इत्यादिना, ग्रीष्मे ऋतौ मरीचयः= सूर्यकिरणा भौमेन= पृथिवीसंबन्धिना ऊष्मणा= तेजसा संसृष्टाः= संयुक्ताः स्पन्दमानाः= चाकचक्यव्यापारविशिष्टा दूरस्थपुरुषस्य चक्षुषा संयुज्यन्ते तत्र= एतादृशस्थले इन्द्रियार्थसंनिकर्षात्= मरुमरीचिकया चक्षुःसंनिकर्षाद् उदकमिदमिति ज्ञानं जायते तदपीन्द्रियार्थसंनिकर्षोत्पन्नमशाब्दं चेति तत् प्रत्यक्षं प्रसज्यते= तत्रोक्तप्रत्यक्षलक्षणस्यातिव्याप्तिः प्राप्ता इत्यतः= तद्व्यावृत्त्यर्थमाह- अव्यभिचारीति, यदुक्तलक्षणं ज्ञानमव्यभिचारि तत् प्रत्यक्षम् उक्तं मरुमरीचिकासूदकज्ञानं तु नाऽव्यभिचारि किं तु व्यभिचार्येवेति न तत्रैतादृशप्रत्यक्षलक्षणस्यातिव्याप्तिरित्यन्वयः । ज्ञानस्य व्यभिचारित्वमाह- यदिति, यज् ज्ञानम् अतस्मिन्= उदकादिभिन्ने तदिति= उदकादिरूपं तज्ज्ञानं व्यभिचारि- विषयानुपलब्ध्या विषयव्यभिचारेण ज्ञानस्य व्यभिचारित्वमुपचर्यते किं वा स्वविषयाभावेपि तज्ज्ञानोत्पत्त्या ज्ञानस्य व्यभिचारित्वं मुख्यमेव । ज्ञानस्याऽव्यभिचारित्वमाह- यत्त्विति, यज्ज्ञानं तस्मिन्= उदके तदिति= उदकमिति तज् ज्ञानमव्यभिचारि तदेव प्रत्यक्षं व्यभिचारि च प्रत्यक्षाभासस्तथा च- 'अशाब्दमिन्द्रियार्थसंनिकर्षोत्पन्नमव्यभिचारि अर्थज्ञानं प्रत्यक्षम्' इतिप्रत्यक्षलक्षणं संपन्नम् ।

व्यवसायात्मकत्वविशेषणस्य सार्थक्यमाह- दूरादिति, अयं द्रष्टा दूराच्चक्षुषा= चक्षुःसंनिकृष्टमप्यर्थं पश्यन् नाऽवधारयति= न निश्चिनोति धूमो वायं रेणुर्वेति तदेतद् अनवधारणज्ञानम्= अनिश्चयात्मकम्= संशयात्मकमपि ज्ञानम् इन्द्रियार्थसंनिकर्षोत्पन्नत्वेनोक्तप्रत्यक्षलक्षणाक्रान्तत्वात् प्रत्यक्षं प्रसज्यते तद्व्यवच्छेदार्थमाह- व्यवसायात्मकमिति, यद् व्यवसायात्मकम्= निश्चयात्मकं ज्ञानं तत् प्रत्यक्षं भवति यथा घटे घटोयमिति, धूमो वा रेणुर्वा. स्थाणुर्वा पुरुषो वेत्यादिकं तु ज्ञानं न व्यवसायात्मकमिति नात्र प्रत्यक्षलक्षणस्यातिव्याप्तिरित्यन्वयः । यद्यपि संशयात्मकज्ञाने एका कोटिर्विपरीतापि भवति तथाप्येका कोटिः सुपरीतापि भवत्येवेति नाव्यभिचारित्वविशेषणेन संशयव्यवच्छेदः संभवतीति व्यवसायात्मकमिति विशेषणस्य सार्थक्यम् । ननूक्तं संशयज्ञानमात्ममनःसंनिकर्षजन्यमेव भवति न त्विन्द्रियसंनिकर्षजन्यमिति इन्द्रियार्थसंनिकर्षोत्पन्नत्वविशेषणेनैव संशयव्यवच्छेदः संभवतीति व्यवसायात्मकमितिविशेषणं व्यर्थमेवेत्याशङ्क्याह- न चेति । परिहारहेतुमाह- चक्षुषेति, इन्द्रियार्थसंनिकर्षे सत्यपि संशयात्मकं ज्ञानं जायते इति तस्येन्द्रियार्थसंनिकर्षोत्पन्नत्वविशेषणेन व्यवच्छेदो न संभवतीति तदर्थं व्यवसायात्मकमिति विशेषणमावश्यकमेवेत्यर्थः । उक्ते दृष्टान्तमाह- यथेति, यथा इन्द्रियेणोपलब्धम्= वाह्येन्द्रियसंनिकृष्टं मनसा उपलभते= अवधारयति तथा वाह्येन्द्रियेणानवधारणे सति मनसाप्यनवधारणं भवतीत्यनवधारणात्मकमपि ज्ञानमिन्द्रियार्थसंनिकर्षोत्पन्नमपि भवतीति तद्व्यवच्छेदार्थं व्यवसायात्मकमितिविशेषणमावश्यकमेवेत्यर्थः । तदेतत् संशयात्मकं ज्ञानं न प्रत्यक्षमित्याह- यच्चेति, इन्द्रियानवधारणपूर्वकम्= इन्द्रियेणानवधारणकारणकं यद् मानसमनवधारणात्मकं ज्ञानं तद् विशेषापे-

आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम् ?-- अनिन्द्रियार्थसंनिकर्षजं हि तदिति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात्. भौतिकानीन्द्रियाणि नियतविषयाणि सगुणानां चैषामिन्द्रियभाव इति. मनस्त्वऽभौतिकं सर्वविषयं च नास्य सगुणस्येन्द्रियभाव इति, सति चेन्द्रियार्थसंनिकर्षे संनिधिमसंनिधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम इति, मनसश्चेन्द्रियभावाद् न वाच्यं लक्षणान्तरमिति, तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति- परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । व्याख्यातं प्रत्यक्षम् ॥ ४ ॥

क्षम्= निश्चयापेक्षम्= निश्चयसाकाङ्क्षं विमर्शमात्रम्= किमिदमिति सामान्यरूपग्राहकं संशय एवेति पूर्वम्= प्रत्यक्षं न भवतीति तद्व्यवच्छेद आवश्यक एवेत्यर्थः । ननु यदि बाह्येन्द्रियेण व्यवसायः= अवधारणं स्यात्तदाऽनवधारणमपि बाह्येन्द्रियेण स्यात् न चैवमस्ति व्यवसायस्य बुद्धिधर्मत्वादित्याशङ्क्याह- सर्वत्रेति, प्रत्यक्षपदार्थविषयको व्यवसायो बाह्येन्द्रियेण प्रथमं भवति तदनन्तरं मनसेत्यनवधारणज्ञानमपि इन्द्रियसंनिकृष्टविषयकं बाह्येन्द्रियसंनिकर्षजन्यमेवेति सिद्धम्, उक्ते हेतुमाह- उपहतेति, येषां बाह्येन्द्रियं नास्ति तेषां मनःसत्त्वेपि नष्टेन्द्रियविषयस्य अनुव्यवसायः= अवधारणं न भवति यथाऽन्धस्य रूपानवधारणं बधिरस्य च शब्दानवधारणमित्यन्वयव्यतिरेकाभ्यामवधारणस्य बाह्येन्द्रियजन्यत्वेनाऽनवधारणस्यापि बाह्यविषयकस्य बाह्येन्द्रियजन्यत्वे सिद्धे तद्व्यवच्छेदार्थं व्यवसायात्मकमितिविशेषणमावश्यकमेवेत्यर्थः ।

नन्विन्द्रियसंनिकर्षो हि बाह्येन संभवति न त्वान्तरेणात्मादिनेति आत्मादिविषयकप्रत्यक्षस्य लक्षणं वक्तव्यं यतस्तत्= आत्मादिप्रत्यक्षमिन्द्रियार्थसंनिकर्षजन्यं न संभवति येनोक्तप्रत्यक्षलक्षणेनात्मादिप्रत्यक्षस्यापि संग्रहः स्यादित्याशङ्कते— आत्मादिष्विति । आत्मादिप्रत्यक्षमपि मनोलक्षणेन्द्रियजन्यमेवेति तस्योक्तप्रत्यक्षलक्षणेन संग्रहः संभवत्येवेति न पृथक् तल्लक्षणनिर्वचनापेक्षास्तीत्याशयेन प्रथमं मनस इन्द्रियत्वं साधयति, इन्द्रियेभ्यः पृथगुपदेशकारणं चाह- इन्द्रियस्येति, इन्द्रियस्य सतः= इन्द्रियभूतस्यापि मनसो यः खल्विन्द्रियेभ्यः " आत्मशरीरेन्द्रियार्थबुद्धिमनः " इत्यग्रिमनवमसूत्रे पृथगुपदेशः स धर्मभेदात्= इन्द्रियेभ्यो विलक्षणत्वादेवास्ति न त्वनिन्द्रियत्वात् तथा च मनोपीन्द्रियमेवेति मनःसंनिकर्षजन्यस्यात्मादिप्रत्यक्षस्योक्तप्रत्यक्षलक्षणेन संग्रहो जातः । इन्द्रियाणां मनसश्चोक्तं धर्मभेदमुपपादयति- भौतिकानीति भौतिकानि= स्थूलभूतजन्यानि यथा तैजसं चक्षुरिति, तथा चक्षू रूपमेव गृह्णाति घ्राणं च गन्धमेवेति नियतविषयाणि तथैषामिन्द्रियाणां बाह्यानां सगुणानाम्= रूपादिविशिष्टानामेवेन्द्रियत्वमस्ति यथा चक्षुषो रूपविशिष्टत्वं घ्राणस्य गन्धविशिष्टत्वमिति, मनसस्तद्वैपरीत्यमाह- मन इति, मनो नित्यत्वादभौतिकं रूपादिसर्वविषयग्राहकं च न च रूपादिविशिष्टं चेत्यर्थः । अस्य= मनसः। मनसः षोडशतमसूत्रेण वक्ष्यमाणं विशेषमाह- सतीति, अनेकेषामिन्द्रियाणां स्वस्वविषयै रूपरसादिभिः संनिकर्षे सत्यपि यद् युगपत् सर्वेषां ज्ञानं नोत्पद्यते तादृशयुगपज्ज्ञानानुत्पत्तौ अस्य= मनसः संनिधिमसंनिधिं च कारणं वक्ष्याम इत्यन्वयस्तथा च येनार्थसंसृष्टेनेन्द्रियेण सह मनःसंनिधिः= मनःसंनिकर्षो भवति तेन तद्विषयविषयकं ज्ञानं जायते येन चेन्द्रियेण मनोऽसंनिधिः= मनःसंनिकर्षो न भवति तेन च ज्ञानं न जायते इति इन्द्रियजन्यज्ञानोत्पत्तौ मनस इन्द्रियसंनिकर्षः कारणम् इन्द्रियार्थसंनिकर्षे सत्यपि तज्ज्ञानानुत्पत्तौ चेन्द्रियेण सह मनोऽसंनिधिः कारणम् । मनसश्चाणुत्वाद् युगपदनेकेन्द्रियसंनिकर्षो नोपपद्यते इत्यपि वक्ष्यति । उपसंहरति- मनसश्चेति, मनस इन्द्रियभावात्= इन्द्रियत्वात् आत्मादिप्रत्यक्षमपि मनोलक्षणेन्द्रियसंनिकर्षजन्यमेवेति पूर्वोक्तप्रत्यक्षलक्षणाक्रान्तमेवेति आत्मादिप्रत्यक्षस्य लक्षणान्तरं न वाच्यम्= नापेक्षितमस्तीत्यन्वयः । ननु सूत्रकारेण तु मनस इन्द्रियत्वं नोक्तमिति कथं तद् ग्राह्यमित्याशङ्क्याह- तन्त्रेति, तन्त्रान्तरसमाचारात्= शास्त्रान्तरसिद्धान्तात् एतत्= मनस इन्द्रियत्वं

## अथ तत्पूर्वकं त्रिविधमनुमानम्- पूर्ववत् शेषवत् सामान्यतोदृष्टं च ॥ ५ ॥

तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः संबन्धदर्शनं लिङ्गदर्शनं चाभिसंबध्यते, लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन लिङ्गिस्मृतिरभिसंबध्यते. स्मृत्या लिङ्गदर्शनेन चाऽप्रत्यक्षोऽर्थोऽनुमीयते।

पूर्ववदिति यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्- तद् यत्र कार्येण कारणमनुमीयते- पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते- भूता वृष्टिरिति । सामान्यतो दृष्टम्- व्रज्यापूर्वकमन्यत्र दृष्टस्याऽन्यत्र दर्शनमिति तथा चादित्यस्य, तस्मादस्त्यप्रत्याक्षाप्यादित्यस्य व्रज्येति ।

---

प्रत्येतव्यम् । उक्ते हेतुमाह- परमतेति, हि= यतः अप्रतिषिद्धं परमतमनुमतमेव भवतीति तन्त्रयुक्तिः= शाबरीतिस्तदत्र मनस इन्द्रियत्वं परशास्त्रोक्तं न प्रत्याख्यातमित्यनुमतमेव । तदनेन भाष्येण प्रत्यक्षं प्रमाणं व्याख्यातमित्युपसंहरति- व्याख्यातमिति ॥ ४ ॥

अनुमानप्रमाणं निरूपयति- अथेति, अथ= प्रत्यक्षानन्तरं तत्पूर्वकम्= प्रत्यक्षपूर्वकं त्रिविधमनुमानं प्रमाणं निरूप्यते इत्यन्वयः, तत्पूर्वकमित्यनेन प्रत्यक्षस्यानुमानकारणत्वमुक्तं प्रत्यक्षं चात्र साध्यसाधनयोर्व्याप्यव्यापकभावसंबन्धविषयकं साधनविषयकं च विज्ञेयं यथा प्रथमं महानसे वह्निधूमयोः संबन्धप्रत्यक्षं भवति तदनन्तरं पर्वते धूमप्रत्यक्षं भवति तदनन्तरं पर्वते वह्न्यनुमितिर्जायते इतिक्रमः। उक्तं त्रैविध्यमाह- पूर्ववदिति । अन्यत् सर्वं भाष्ये स्पष्टमेवेति सूत्रान्वयः । व्याचष्टे- तदिति, सपक्षेषु लिङ्गलिङ्गिनोः साहचर्यदर्शनेन संबन्धदर्शनम्= व्याप्यव्यापकभावसंबन्धग्रहो भवति, पक्षे च लिङ्गप्रत्यक्षम् । अभिसंबध्यते= गृह्यते । साध्यस्मृत्यपेक्षामाह- लिङ्गेति, सपक्षे साध्यसाधनयोः संबद्धयोरेव प्रत्यक्षं भवतीति पक्षे साध्यसाधनयोरन्यतरस्य साधनस्य धूमादेर्दर्शनाद् "एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्" इतिन्यायेन साध्यस्मृतिर्जायते साप्यभिसंबध्यते= अनुमितिकारणत्वेन गृह्यते । पर्यवसितमाह— स्मृत्येति, तथा च सपक्षे साध्यसाधनयोर्व्याप्तिग्रहो भवति तदनन्तरं यदि कचित् साधनप्रत्यक्षं भवति तदा तेन प्रत्यक्षेणोक्तरीत्या साध्यस्मृतिर्भवति तदनन्तरं दृष्टेन साधनेनाऽप्रत्यक्षस्य साध्यस्य वह्न्यादेः पक्षेऽनुमितिर्भवति- 'पर्वतो वह्निमान् धूमात्' इतिक्रम इत्यन्वयः ।

पूर्ववदनुमानं निरूपयति- पूर्ववदिति, पूर्ववत्= कारणवत्= कारणदर्शनेन कार्यविषयकमनुमानं पूर्ववदित्युच्यते यथा मेघोन्नत्या= उन्नतेन= वृष्ट्युन्मुखेन मेघेन भविष्यत्कालिका वृष्टिरनुमीयते अत्र मेघोन्नतिः कारणं वृष्टिश्च तत्कार्यमिति स्पष्टमेव । शेषवदनुमानं निरूपयति- शेषवदिति, शेषवत्= कार्यवत्= कार्यदर्शनेन कारणविषयकमनुमानं शेषवदित्युच्यते यथा धूमेन वह्न्यनुमानम् , पूर्वभूतकारणापेक्षया कार्यमेव शेषः । उदाहरति- पूर्वेति, नद्याः पूर्वोदकविपरीतम्= मलिनमुदकं दृष्ट्वा नदीपात्रस्य पूर्णत्वं च दृष्ट्वा स्रोतसः= प्रवाहस्य शीघ्रत्वम्= शीघ्रगामित्वं च दृष्ट्वा तत्कारणभूता वृष्टिरनुमीयते- 'भूता वृष्टिः' इति, अत्रोदकदीनां मालिन्यादिकं कार्यं वृष्टिश्च तत्कारणमिति कार्येण कारणानुमानं सिद्धम् , साध्यतावच्छेदकसंबन्धो भूतकालिकत्वं हेतुतावच्छेदकसंबन्धश्चानन्तरभावित्वम् । सामान्यतो दृष्टमनुमानं निरूपयति- सामान्यत इति, अन्यत्र दृष्टस्य यदन्यत्र दर्शनं तद् व्रज्यापूर्वकम्= गतिपूर्वकमेव भवति यथा मथुरायां दृष्टस्य चैत्रस्य यत् काश्यां दर्शनं तद् गतिपूर्वकमेव भवति गतिहीनस्य तथादर्शनाभावादिति सामान्यतो दर्शनेनाऽप्रत्यक्षमनुमीयते तथा चादित्यस्यापि पूर्वस्यां दृष्टस्य यत् पश्चिमायां दर्शनं तेन देशान्तरप्राप्तिदर्शनेनादित्यस्याऽप्रत्यक्षापि व्रज्या= गतिरनुमीयते- अस्तीति ।

अथ वा- पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनाऽन्यतरस्याऽप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति । शेषवद् नाम परिशेषः स च प्रसक्तप्रतिषेधेऽन्यत्राऽप्रसङ्गात् शिष्यमाणे संप्रत्ययः यथा–'सदनित्यम्' इत्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्य तस्मिन् द्रव्यकर्मगुणसंशये न द्रव्यम्- एकद्रव्यत्वात् न कर्म- शब्दान्तरहेतुत्वात् . यस्तु शिष्यते सोयमिति शब्दस्य गुणत्वप्रतिपत्तिः ।

सामान्यतोदृष्टं नाम यत्राऽप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्याद् अप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा. इच्छादयो गुणा गुणाश्च द्रव्यसंस्थानाः तद् यदेषां स्थानं स आत्मेति ।

उक्तं प्रकारान्तरेण व्याचष्टे- अथ वेति, अत्र यत्रेति पदं व्यर्थमेव । "पूर्ववत्" इत्यस्य "यथापूर्वम्" इत्यर्थः, अत्र-"पूर्ववत्पदे वतिप्रत्ययो न तु मतुविति भावः" इति श्रीगुरुचरणाः। पूर्ववत् = सपक्षे दृष्टवत् पक्षे हेतुना साध्यानुमानं पूर्ववदनुमानमित्यर्थः, सपक्षे प्रत्यक्षभूतयोर्वह्निधूमयोर्मध्ये पक्षेऽन्यतरस्य धूमस्य दर्शनेनाऽप्रत्यक्षस्यान्यतरस्य वह्नेर्यदनुमानं तत् पूर्ववद् तथाच धूमेनाग्निरनुमीयते । "अग्निः" इत्यत्र अग्नेरिति युक्तम्। द्वितीयं व्याचष्टे-शेषेति, परिशेषः= परिशिष्टे पर्यवसानमिति यावत्, सः= परिशेषः । यथा शब्दस्यानित्यस्य प्रसक्तेषु सामान्यादिषु नित्येषु प्रतिषेधे= अन्तर्भावासंभवे अन्यत्र= द्रव्यकर्मणोरप्रसङ्गात्= अन्तर्भावासंभवात् शिष्यमाणे= परिशिष्टे गुणे संप्रत्ययः= अन्तर्भाव इति शब्दस्य शेषवदनुमानेन गुणत्वं सिद्धमित्यन्वयः । अत्र "शेषवद् नाम परिशेषः द्रव्यत्वकर्मत्वयोः शब्दे निराकार्यत्वेनोपयुक्तत्वात् ताभ्यामन्यद् गुणत्वं शेषः स यस्यानुमानस्य प्रतिपाद्यतया (संमतः) तत् शेषवत्" इति तात्पर्यटीका । उदाहरति- यथेति, सदनित्यम्= सत्त्वे सत्यनित्यत्वम् इत्यादिना अर्थात् द्रव्यगुणकर्माणां सत्त्वे सत्यनित्यत्वमविशेषेण धर्मोस्ति शब्दस्याप्यस्ति- उपलभ्यमानत्वेन सत्त्वं विनाशित्वादनित्यत्वं च-सामान्यादिष्वनित्यत्वं नास्तीति सामान्यविशेषसमवायेभ्यो विभक्तस्य= पृथक्कृतस्य शब्दस्य अर्थादनित्यस्य शब्दस्य नित्येषु सामान्यादिष्वन्तर्भावो न संभवतीति तस्मिन्= शब्दे सत्त्वानित्यत्वधर्माभ्यां द्रव्यगुणकर्मणामऽविशेषेण= साम्येन द्रव्यकर्मगुणसंशये= द्रव्यत्वकर्मत्वगुणत्वसंशये अर्थात् सामान्यादिबहिर्भूतस्य शब्दस्य किं द्रव्ये कर्मणि गुणे वान्तर्भाव इति संशये जाते. अनित्यभूतः शब्दो न द्रव्यम्-एकद्रव्यत्वात् अर्थादनित्यं हि द्रव्यं स्वकारणीभूतैरनेकैर्द्रव्यैरारब्धं भवति- सावयवत्वात् शब्दश्च न तथास्ति किं त्वेकद्रव्यमेव= एकपदार्थ एव= निरवयव एवेत्यर्थः, परमाण्वादिषु नित्यद्रव्येष्वपि नान्तर्भवति- अनित्यत्वादिति शब्दो न द्रव्यम्, नापि कर्म- शब्दान्तरहेतुत्वात् . कर्म हि प्रथममेव शब्दमुत्पादयति न तु द्वितीयादिशब्दमपि शब्दस्तु स्वसजातीयं शब्दान्तरमप्युत्पादयतीति व्यतिरेकात् न कर्म, यस्तु उक्तद्रव्यादिभ्यः शिष्यते= परिशिष्टो गुणः स गुण एवायं शब्द इति शब्दस्य गुणेन्तर्भावस्तथाचोक्तशेषवदनुमानेन शब्दस्य गुणत्वं सिद्धम्- शब्दो गुणः गुणातिरिक्तद्रव्यादिभ्यो बहिर्भूतत्वाद् रूपादिवदित्यर्थः । वस्तुतस्तु कर्म न शब्दजनकं भवति किंतु शब्दजनकसंयोगादिजनकमिति शब्दस्य कर्मतो व्यावृत्तिः । किं वा शब्दान्तरहेतुत्वात्= शब्दान्तरहेतुकत्वात्= शब्दान्तरजन्यत्वादित्यर्थः कर्म तु न शब्दजन्यं भवतीति शब्दान्तरजन्यत्वाद् हेतोः शब्दस्य कर्मतो व्यावृत्तिरित्येवं व्याख्येयम् ।

तृतीयं व्याचष्टे- सामान्यत इति । उदाहरति- यत्रेति, लिङ्गलिङ्गिनोः= साध्यसाधनयोः संबन्धेऽप्रत्यक्षे सति लिङ्गस्य केनचिदर्थेन दृष्टेन सह सामान्यात्= सादृश्यात्= सादृश्ये सति तादृशसादृश्यवशाद् यत्र तेन लिङ्गेनाप्रत्यक्षं साध्यं साध्यते तत्र सामान्यतोदृष्टं तदनुमानमुच्यते यथा वास्यादिकरणकलापः कर्त्रधिष्ठित एव कार्यकरो दृश्यते इति चक्षुरादिकमपि करणत्वात् वास्यादिसादृश्येन कर्त्रधिष्ठितमेव कार्यकरं संभवतीति चक्षुरादिनाऽप्रत्यक्षस्यात्मनः सिद्धिर्भवति, यथा चेच्छादिभिरात्मा

विभागवचनादेव त्रिविधमितिसिद्धे त्रिविधवचनं महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्याऽन्यस्मिन् वाक्यलाघवेऽनादरः, तथा चायमित्थम्भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्रे इति। सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। कस्मात्?, त्रैकाल्यग्रहणात्= त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते– भविष्यतीत्यनुमीयते. भवतीति च अभूदिति च। असच्च खल्वऽतीतमनागतं च ॥ ५ ॥

अथोपमानम्—

## प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति– यथा गौरेवं गवय इति। किं पुनरत्रोपमानेन क्रियते?, यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यते

गम्यते तदेतत् सामन्यतोदृष्टमनुमानम्। स्वाभिप्रायं विशदयति– इच्छादय इति, गुणातिरिक्तद्रव्यादिभ्यो बहिर्भूतत्वाद् इच्छादयो गुणा एव. गुणाश्च रूपादयो द्रव्यसंस्थानाः= द्रव्याश्रिता एव दृष्टा इति रूपादिसादृश्यादिच्छादीनामपि गुणत्वेन द्रव्याश्रितत्वं प्राप्तं तत्= तत्र एषामिच्छादीनां यत् स्थानम्= आश्रय स आत्मेति इच्छादिभिः सामान्यतोदृष्टेनात्मा सिध्यति। इच्छादयः क्वचिदाश्रिताः गुणत्वाद् रूपादिवत्. इच्छादयो न सामान्यादिष्वन्तर्भूताः अनित्यत्वात् नापि द्रव्यभूता गुणानाश्रयत्वात् द्रव्यस्य च गुणाश्रयत्वात्. नापि कर्मभूताः संयोगविभागाजनकत्वादिति पारिशेष्यादिच्छादीनां गुणत्वं सिद्धम्। इच्छादय आत्माश्रितास्ततोऽन्यत्रानुपपद्यमानत्वात् आत्मपरिमाणवदितीच्छादिभिरात्मसिद्धिः। भाष्योक्तोदाहरणे केनचिदर्थेन= रूपादिना लिङ्गस्येच्छादेर्द्रव्याश्रितत्वं सादृश्यं व्याख्येयम्।

विभागेति– "पूर्ववत् शेषवत् सामान्यतोदृष्टं च" इतिविभागवचनादेवानुमानस्य त्रैविध्यं सिद्धमेवाथापि आवश्यकपदार्थबोधके सूत्रे यत् "त्रिविधम्" इत्यनपेक्षितं वचनं तत् अन्यस्मिन् वाक्यलाघवेऽनादरादित्यन्वयः, उपपादयति– महत इति, स्वरूपेण महतो विषयेण च महत इति महाविषयस्य किं वा "महतः" इत्यस्यैव व्याख्या "महाविषयस्य" इति न्यायस्य= अनुमानस्य लघीयसा= अल्पशब्दघटितेनैकेन सूत्रेणोपदेशात्= उपदेशः कृत इति परं वाक्यलाघवम्= वाक्याल्पत्वं जातमिति मन्यमानस्य सूत्रकारस्य उक्तलाघवादन्यस्मिन्= त्रिविधपदपरित्यागेन जायमाने वाक्यलाघवे आदरो नास्तीति हेतोरेव सूत्रे त्रिविधमिति वचनस्योक्तिर्विज्ञेया। उक्तमन्यत्रातिदिशति– तथा चेति, अस्मिन् शास्त्रे छलादिषु इत्थम्भूतेन= 'त्रिविधं द्विविधम्' इत्यादिरूपेण वाक्यविकल्पेन= वाक्यवैचित्र्येण= वाक्यप्रयोगेण बहुलम्= बहुत्र समाचारः= रीतिशब्दापरपर्यायः प्रकारः प्रवृत्त उपलभ्यते यथा शब्दे "स द्विविधो दृष्टादृष्टार्थत्वात् १-१-८" इति. छले च "तत् त्रिविधम् १-२-११" इति, सिद्धान्ते च भाष्यकारस्यैव वाक्यम् "स चतुर्विधः" इति। प्रत्यक्षानुमानयोर्व्यतिरेकमाह– सदिति, सद्विषयम्= वर्तमानविषयकमेव प्रत्यक्षं भवति तदुक्तम्– "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" इति। सदसद्विषयकम्= वर्तमानावर्तमानविषयकमनुमानं भवति। अनुमानस्याऽवर्तमानविषयकत्वे हेतुं जिज्ञासते– कस्मादिति। उत्तरमाह– त्रैकाल्येति, त्रैकाल्यानाम्= कालत्रयवर्तिनां पदार्थानामनुमानेन ग्रहणादनुमानस्याऽवर्तमानविषयकत्वमपि सिद्धम्। उक्तं व्याचष्टे– त्रिकालेति। उदाहरति– भविष्यतीति, वृष्टिर्भविष्यतीति अभूदिति च पूर्वमुक्तमेव. वृष्टिशब्देन च भवति वृष्टिरित्यनुमीयते। यदतीतं यच्चाऽनागतं तदेवाऽसदित्युच्यते अवर्तमानत्वादित्याह– असच्चेति ॥ ५ ॥

उपमानप्रमाणस्य लक्षणमाह– प्रसिद्धेति, प्रसिद्धेन= दृष्टेन गवा यत् साधर्म्यम्= सादृश्यं तस्मात् किं वा प्रसिद्धं दृष्टं यत् साधर्म्यम्= गवये गोसादृश्यं तस्मात्= तेन साध्यस्य= गवयगवयशब्दयोर्वाच्य-

इति, समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थम् इन्द्रियार्थसंनिकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यते इति । यथा मुद्गस्तथा मुद्गपर्णी यथा माषस्तथा माषपर्णी इत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसंबन्धं प्रतिपद्यमानस्तामोषधीं भैषज्याऽऽहरति । एवमन्योपि उपमानस्य लोके विषयो बुभुत्सितव्य इति ॥ ६ ॥

अथ शब्दः—

## आप्तोपदेशः शब्दः ॥ ७ ॥

आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षा-

---

वाचकभावसंबन्धस्य साधनम्= अवधारणम् उपमानम्= उपमानप्रमाणफलम्, 'गोसदृशो गवयः' इति श्रवणानन्तरं वनं गतः पुरुषो गोसदृशं जीवं दृष्ट्वा 'अयं गवयपदवाच्यः— गोसदृशत्वात्' इत्येवं गवयगवयशब्दयोर्वाच्यवाच्यकभावसंबन्धमवधारयति— तदवधारणे चोक्तं प्रसिद्धसाधर्म्यमेव कारणम्. तदेतदुपमानं प्रमाणमित्युच्यते इतिसूत्रार्थः । व्याचष्टे—प्रज्ञातेनेति, प्रसिद्धेन= प्रज्ञातेन= दृष्टेन गवा सामान्यात्= सादृश्यात् प्रज्ञापनीयस्य= गवयगवयशब्दयोर्वाच्यवाचकभावसंबन्धस्य प्रज्ञापनम्= अवधारणम् तद्विषयकं यत् प्रमाणं तदुपमानम् । प्रज्ञापनमित्यत्र णिजर्थोऽविवक्षित एव अन्यथा 'गोसदृशो गवयः' इतिवाक्यवक्तुरेव व्यापार उपमानं स्यात् । उदाहरति— यथेति, यथा गौरेवं गवयः= गोसदृशो गवयः= गोसदृशो गवयपदवाच्यो विज्ञेय इत्येवमनेन वाक्येन ज्ञायमानं यत् गोसादृश्यं तेन यदि गवयस्य गवयपदवाच्यत्वप्रज्ञापनं विवक्षितं तदा णिजर्थो विवक्षित एव विज्ञेयः। उपमानफलं जिज्ञासते— किमिति, किं वोपमानवैयर्थ्यमाशङ्कते— किमिति । स्वाभिप्रायमाह— यदेति, यदा= वनं गतोयं पुरुषो गवा समानधर्मम्= गोसदृशं जीवं प्रतिपद्यते= पश्यति तदा तमर्थम्= गवयं प्रत्यक्षत एव प्रतिपद्यते= जानाति तथा च गवयज्ञानं प्रत्यक्षेणैव संभवतीति व्यर्थमेवोपमानं प्रमाणम्— तत्फलानुपलम्भादित्यर्थः । उत्तरमाह— समाख्येति, न गवयव्यक्तिज्ञानमुपमानफलमुच्यते येनोपमानस्य वैयर्थ्यं स्यात् किं तु समाख्यासंबन्धप्रतिपत्तिः= गवयगवयशब्दयोर्वाच्यवाचकभावसंबन्धावधारणमेवोपमानार्थः= उपमानफलमस्ति तच्चोपमानातिरिक्तेन प्रत्यक्षादिना न सिध्यतीति नोपमानवैयर्थ्यमित्यर्थः । इत्याह= इत्यभिप्रायः सूत्रकारस्येत्यर्थः । किं वा यदेत्यारभ्योत्तरवाक्यं विज्ञेयं तथाचात्र गवयव्यक्तेः प्रत्यक्षत्वादेव समाख्याप्रतिपत्तिरेवोपमानफलमित्यर्थः । वाच्यवाचकभावावधारणं क्रमेणोपपादयति— यथेति, आरण्यकेन 'यथा गौरेवम्= तादृशो गवयः' इत्युपमाने= उपमानवाक्ये= उपमाघटितवाक्ये प्रयुक्ते तच्छ्रवणानन्तरं वनं गतो वने गवासमानधर्मम्= गोसदृशम् अर्थम्= पशुम् इन्द्रियार्थसंनिकर्षाद् उपलभमानः= पश्यन् 'गोसदृशो गवयः' इतिवाक्यं च स्मरन् अस्य= गोसदृशस्य पशोर्गवयशब्दः संज्ञा= वाचक इत्येवं संज्ञासंज्ञिसंबन्धम्= वाच्यवाचकभावसंबन्धं प्रतिपद्यते= अवधारयति तथा चोपमानप्रमाणस्य वाच्यवाचकसंबन्धावधारणे एव पर्यवसानात् वाच्यवाचकसंबन्धावधारणमेवोपमानफलं तच्चोपमानातिरिक्तप्रमाणेन न सिध्यतीति उपमानसार्थक्यं न तु गवयव्यक्तिज्ञानमुपमानफलं येनोपमानस्य वैयर्थ्यं स्यादित्यर्थः । उपमानस्योदाहरणान्तरमाह— यथेति उपमाने= सादृश्ये प्रयुक्ते= निर्दिष्टे सति उपमानात्= तादृशसादृश्याद् मुद्गपर्णीमुद्गपर्णीशब्दयोर्वाच्यवाचकभावसंबन्धम् 'या मुद्गसदृशा सा मुद्गपर्णी' इत्येवं प्रतिपद्यमानः= जानानः= ज्ञात्वा तामोषधीम्= मुद्गपर्णीं भैषज्याय= वैद्यार्थम् आहरति= आनयति । उपसंहरति— एवमिति । बुभुत्सितव्यः= बोद्धव्यः उदाहर्तव्यो वेत्यर्थः । इत्युपमानम् ॥ ६ ॥

शब्दप्रमाणं लक्षयति— आप्त इति, आप्तस्य= यथार्थज्ञानेन साक्षात्कृतपदार्थस्य यस्तद्विषयक उपदेशः स शब्दः= शब्दप्रमाणं किं वा प्रमाणभूतं वाक्यं यथा 'शृङ्गसास्नाविशिष्टो गोपदार्थः' इत्या-

त्करणमर्थस्याऽऽप्तिस्तया प्रवर्तते इत्याप्तः कृष्यार्यम्लेच्छानां समानं लक्षणं तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते इति । एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते नाऽतोऽन्यथेति ॥ ७ ॥

## स द्विविधः- दृष्टाऽदृष्टार्थत्वात् ॥ ८ ॥

यस्येह दृश्यतेऽर्थः स दृष्टार्थः यस्याऽमुत्र प्रतीयते सोऽदृष्टार्थ एवमृषिलौकिकवाक्यानां विभाग इति । किमर्थं पुनरिदमुच्यते ?, स न मन्येत- दृष्टार्थ एवाप्तोपदेशः प्रमाणम्- अर्थस्यावधारणात् इति, अदृष्टार्थोऽपि प्रमाणम्- अर्थस्यानुमानादिति ॥ ८ ॥

॥ इति प्रमाणभाष्यम् ॥

दीति सूत्रार्थः । व्याचष्टे-आप्त इति, यथार्थज्ञानेन साक्षात्कृतः= प्रत्यक्षीकृतः किं वा विज्ञातः पदार्थधर्मः= पदार्थस्वरूपं येन स साक्षात्कृतधर्मा. यथादृष्टस्येति- पदार्थो येन वास्तविकस्वरूपेण ज्ञातस्तेनैव रूपेण परं प्रति तस्यार्थस्य चिख्यापयिषया= वक्तुमिच्छया प्रयुक्तः= प्रेरितो य उपदेष्टा= यथार्थपदार्थोपदेष्टा स आप्तः । आप्तशब्दस्य व्युत्पत्तिमाह- साक्षात्करणमिति, पदार्थस्य यथार्थरूपेण यः साक्षात्कारः स आप्तिस्तयाऽऽप्त्या= पदार्थसाक्षात्कारेण= पदार्थसाक्षात्कारपूर्वकम् उपदेष्टुं प्रवर्तते इत्याप्तः । इदं चाप्तलक्षणं कृष्यार्यम्लेच्छानां सर्वेषां समानमेव तथा च कृषिष्वार्येषु म्लेच्छेषु च ते एव आप्ता ये पदार्थयथार्थस्वरूपं साक्षात्कृत्यैवोपदिशन्ति न भ्रान्त्येति तथाच= आप्तोपदेशेन हि सर्वेषां जनानां व्यवहाराः प्रवर्तन्ते न तु भ्रान्तवञ्चकाद्युपदेशेन. भ्रान्ताद्युपदेशेन व्यवहारे कृतेपि फलोपलब्धिर्न संभवतीति विशेषः । उपसंहरति- एवमिति, एभिः= प्रत्यक्षानुमानोपमानशब्दैः प्रमाणैः सर्वेषां व्यवहाराः प्रकल्पन्ते= निष्पद्यन्ते= सफला भवन्ति, अतः= प्रमाणादन्यथा= प्रमाणाभावेन प्रमाणाभासेन च व्यवहारा न प्रकल्पन्ते। देवमनुष्येषु प्रमाणचतुष्टयेन प्रवृत्तिः स्पष्टैव। पश्वादिषु हि प्रत्यक्षं त्विन्द्रियसत्त्वात् स्पष्टमेव. सजातीयसमुदायादौ गत्यादिकं चानुमानेनैव संभवति, सजातीयशब्दं श्रुत्वा चैकत्रीभावः शब्दप्रमाणपुरस्सर इति यथायथं विज्ञेयम् ॥ ७ ॥

प्रमाणभूतशब्दस्य द्वैविध्यमाह- स इति, सः= शब्दः= आप्तोदशो द्विविधः- दृष्टार्थोऽदृष्टार्थश्च तत्र दृष्टार्थो यथा 'घटमानय' इत्यादिस्तदर्थस्य घटादेर्दृश्यमानत्वात् अदृष्टार्थो यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिस्तदर्थस्य स्वर्गादेरदृश्यमानत्वादितिसूत्रार्थः । व्याचष्टे- यस्येति, यस्य वाक्यस्येह= लोकेऽर्थः= प्रतिपाद्यार्थो दृश्यते स दृष्टार्थो यथा वैद्योपदेशादिः । यस्य च वाक्यस्य प्रतिपाद्योऽर्थः अमुत्र= परलोके प्रतीयते= ज्ञातुं शक्यते सोऽदृष्टार्थो यथा स्वर्गाद्युपदेशवाक्यम् आत्मज्ञानादिवाक्यं चेत्यर्थः । उपसंहरति- एवमिति, कृष्यादिवाक्यानाम् एवम्= दृष्टादृष्टार्थत्वेन द्विधैव विभागः । वाक्यस्य द्वैविध्यकथनप्रयोजनं जिज्ञासते- किमर्थमिति, इदम्= द्वैविध्यम् । उत्तरमाह- स नेति, सः= उपदेष्टव्यो जनः अर्थस्य= दृष्टार्थस्य प्रत्यक्षादिनाऽवधारणात्= अवधारणसंभवात् दृष्टार्थ एवाप्तोपदेशः प्रमाणमस्ति नाऽदृष्टार्थोपदेशोपि- तत्प्रतिपाद्यार्थस्याऽवधारणासंभवादिति न मन्येत= भ्रान्त्या न प्रतिपद्येत इतिहेतोर्द्वैविध्यमुक्तं तथा च यथा दृष्टार्थस्य प्रत्यक्षादिनाऽवधारणसंभवात् तत्प्रतिपादकं दृष्टार्थं वाक्यं प्रमाणं तथाऽदृष्टार्थस्यापि स्वर्गादेरनुमानप्रमाणेनावधारणसंभवात् तत्प्रतिपादकमदृष्टार्थमपि वाक्यं प्रमाणमेवेत्यन्वयः । प्रामाणिकानां दृष्टार्थप्रवृत्तेः साफल्यं दृष्ट्वा स्वर्गाद्यदृष्टार्थविषयकयागादिप्रवृत्तेरपि साफल्यमनुमीयते- यागप्रवृत्तिः सफला प्रामाणिकप्रवृत्तित्वादध्ययनादिप्रवृत्तिवत् इति । यागादिप्रवृत्तिसाफल्यं च स्वर्गाद्यधीनमित्यदृष्टस्य स्वर्गादेरप्यनुमानेनावधारणं संभवत्येवेति स्वर्गादिस्वरूपसाधनादिबोधकमपि वाक्यं प्रमाणमेवेत्यलम् ॥ ८ ॥ इतिप्रमाणप्रसन्नपदा ॥

किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति ? तदुच्यते—

## आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभाव-फलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः= सर्वानुभवी, तस्य भोगायतनं शरीरम्, भोगसाधनानि इन्द्रियाणि, भोक्तव्या इन्द्रियार्थाः, भोगो बुद्धिः । सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमऽन्तःकरणं मनः शरीरेन्द्रियार्थबुद्धिसुखवेदनानां निर्वृत्तिकारणं प्रवृत्ति-र्दोषाश्च । नास्येदं शरीरमपूर्वमनुत्तरं च. पूर्वशरीराणामादिर्नास्ति उत्तरेषामपवर्गोऽन्त इति प्रेत्यभावः । ससाधनसुखदुःखोपभोगः फलम्, दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम्, किं तर्हि?, जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गात्= दुःखेनाऽविप्रयोगात्= विविधबाधनायोगाद् दुःखमिति समाधिभावनमुपदिश्यते. समाहितो भावयति भावयन् निर्वि-द्यते निर्विण्णस्य वैराग्यं विरक्तस्याऽपवर्ग इति, जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणम् अपवर्ग

---

उक्तप्रमाणानां साफल्यार्थं प्रमेयजातं प्रमातव्यं जिज्ञासते– किमिति । "मानाधीना मेयसि-द्धिर्मानसिद्धिश्च लक्षणात्" इत्युक्तदिशा मेयसिद्धेर्मानाधीनत्वात् प्रथमं प्रमाणजातं निरूप्य प्रमेयनि-रूपणमारभते– तदिति, तत्= प्रमाणैः प्रमेयम् । आत्मेति– आत्माद्यपवर्गान्तं द्वादशपदार्थानां वृन्दमत्र प्रमेयम्– एतावन्मात्रप्रमेयज्ञानस्यैवापवर्गप्रयोजकत्वाद् एतदतिरिक्तप्रमेयाणां सत्त्वेपि तद्विज्ञानस्यापवर्ग-प्रयोजकत्वाभावान्न तदत्रोक्तमिति सूत्रार्थः । व्याचष्टे– तत्रेति, यः पर्यायेण यथासंभवं च सर्वस्य द्रष्टा भोक्तानुभवी च स आत्मा, इन्द्रियेषु मनसि चैतल्लक्षणं नोपपद्यते– तेषां रूपादिसुखादिज्ञानेषु यथा-यथं करणत्वात् क्रियाणां सकरणकत्वनियमात् करणानां च सकर्तृकत्वनियमात् ज्ञानादिक्रियाणां यः कर्ता स आत्मेति सिद्ध आत्मा । शरीरलक्षणमाह– तस्येति, तस्य= आत्मनो यद् भोगायतनम्= भोगस्थानं साक्षात् तत् शरीरं प्रसिद्धमेव । इन्द्रियलक्षणमाह– भोगेति, तस्यात्मनो यानि भोगसाध-नानि= भोगक्रियाकरणानि तानीन्द्रियाणि चक्षुरादीनि पञ्च. कर्मेन्द्रियाणां बाह्यक्रियाकरणत्वम् । अर्थलक्षणमाह– भोक्तव्या इति, ये भोक्तव्यास्ते इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः । बुद्धिलक्षणमाह– भोग इति, तस्यात्मनो यो भोगः= सुखादिज्ञानं सा बुद्धिः। मनोलक्षणमाह– सर्वेति, सर्वार्थोपलब्धौ= सर्वार्थविषयकज्ञानजनने इन्द्रियाणां सामर्थ्यं नास्तीति यत् सर्वविषयम्= सुखादिसर्वविषयग्राहकम् अन्तःकरणं तदेव मन इत्युच्यते । प्रवृत्तिदोषयोर्लक्षणमाह– शरीरेति, प्रवृत्तिः= धर्माधर्मौ । शरीरा-दीनां निर्वृत्तिकारणम्= संपत्तिकारणं यत् तदेव प्रवृत्तिशब्दवाच्यं दोषशब्दवाच्यं च, दोषाश्च रागद्वे-षादयः "सुखवेदनानाम्" इत्यत्र 'सुखदुःखवेदनानाम्' इतिपाठो युक्तः। प्रेत्यभावस्वरूपमाह– नास्येति, अस्य= आत्मन इदम्= वर्तमानं शरीरम् अपूर्वम्= पूर्वशरीरापूर्वकम्= पूर्वशरीररहितं न किं तु एतच्छरीरात् पूर्वमपि शरीरान्तरमासीदेवेति शरीरपरम्पराऽनादिः सिद्धा यद् यच्छरीरं तत्तत् पूर्वशरीरपूर्वकम् शरीर-त्वादिति । इदं शरीरं प्रायः अनुत्तरम्= उत्तरशरीररहितमपि न किं तु एतच्छरीरादनन्तरमपि शरीरान्तरं भविष्यति आमोक्षप्राप्तेरित्यर्थः, पर्यवसितमाह– पूर्वेति, आदिर्नास्ति– शरीरपरम्पराया अनादित्वात् उत्तरेषां च शरीराणामपवर्गोन्तः= अपवर्गेणान्तस्तथा च भगवद्गीतम्– "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति, येयं जन्ममरणपरम्परा सैव प्रेत्यभाव इत्युच्यते । फलस्वरूपमाह– ससाधनेति, ससाधनयोः सुखदुःखयोरुपभोग एव फलपदार्थः, सुखदुःखोपभोगश्च तत्साधनाभ्यामेव भवतीत्युक्तम्– ससाधनेति । किं वा सुखदुःखतत्साधनानामेव बुद्धिविषयत्वात्तद्भोगस्य फलत्वमुक्तम् । दुःखस्वरूपं च प्रतिकूलवेदनीयत्वं विज्ञेयम् । ननु संसारे दुःखवत् सुखमप्यस्त्येवेति तत्कथं सूत्रे नोक्तं किं दुःखमात्रक-

इति। अस्त्यन्यदपि— द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयं तद् भेदेन चाऽपरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

तत्रात्मा तावत् प्रत्यक्षतो न गृह्यते स किमाप्तोपदेशमात्रादेव प्रतिपद्यते इति ?, नेत्युच्यते— अनुमानाच्च प्रतिपत्तव्य इति। कथम् ?

## इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥

यज्जातीयस्यार्थस्य संनिकर्षात् सुखमाऽऽत्मा उपलब्धवान् तज्जातीयमेवार्थं पश्यन् उपादातुमिच्छति सेयमुपादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद् भवन्ती लिङ्गमात्मनः—नियतविषये हि बुद्धिभेदमात्रे न संभवति देहान्तरवदिति। एवमेकस्याऽनेकार्थदर्शिनो

थनेन सुखस्याऽसत्त्वं सूच्यते ? इत्याशङ्क्याह— दुःखमिति, दुःखमात्रं यदुक्तं सूत्रकृता तेनाऽनुकूलवेदनीयस्य सुखस्य या प्रतीतिस्तस्याः प्रत्याख्यानं न क्रियते। किं तर्हि दुःखमात्रवचनस्य तात्पर्यमिति जिज्ञासते— किमिति। उत्तरमाह— जन्मन इति, जन्मारभ्यैवेदम्= दुःखं बाहुल्येनोपलभ्यते इति हेतोर्दुःखमात्रमुक्तमित्यर्थस्तदुक्तम्— "दुःखमेव सर्वं विवेकिनः" इति। स्वाभिप्रायमाह— ससुखेति, सुखसाधनविशिष्टस्यापि जीवस्य दुःखानुषङ्गात्= दुःखेनाऽविप्रयोगात्= दुःखस्यावश्यम्भावात्= विविधपीडायोगादिदं सर्वं दुःखम्= दुःखस्वरूपं विज्ञेयमितिसमाधिभावनं संसारनिवृत्त्यर्थमुपदिश्यते यतः समाहितः= समाधिविशिष्टः= आत्मनिष्ठः सन् भावयति= संसारं दुःखरूपं निश्चिनोति. भावयन्= सर्वं दुःखमयमितिनिश्चयविशिष्टः सन् निर्विद्यते= संसारात् पराङ्मुखो भवति. निर्विण्णस्य च वैराग्यं जायते विरक्तस्य तादृशवैराग्येण चापवर्गः संभवतीत्यपवर्गसाधनानुष्ठाने प्रवृत्तिसिध्यर्थमेव दुःखमात्रमुक्तमित्यर्थः। अपवर्गस्वरूपमाह— जन्मेति। द्रव्यादिकमन्यदपि प्रमेयमस्ति तच्च भेदेन= अवान्तरभेदैश्चाऽपरिसंख्येयमस्ति अथापि द्रव्यादिप्रमेयाणां ज्ञानेनापवर्गो न संभवतीति नात्र तदुक्तम्— अपवर्गसाधकज्ञानविषयाणामेव प्रमेयाणामत्र वक्तव्यत्वादित्याह— अस्त्यन्यदपीति। उक्तात्मादिप्रमेयाणामुपदेशस्य प्रयोजनमाह— अस्येति, अस्य= उक्तात्मादिप्रमेयजातस्य तत्त्वज्ञानात्= यथार्थज्ञानादपवर्गः संभवति मिथ्याज्ञानात्= अयथार्थज्ञानाच्च संसारोऽनुवर्तते इत्यतः= इतिहेतोरेतत्= उक्तात्मादिप्रमेयजातं विशेषणोपदिष्टमित्यन्वयः ॥ ९ ॥

ननु त्वदभिमत आत्मा प्रत्यक्षेण ग्रहीतुं न शक्यते— इन्द्रियसंनिकर्षायोग्यत्वादिति सः= आत्मा किमाप्तोपदेशमात्रगम्य इत्याशङ्कतं— तत्रेति। तत्र= उक्तप्रमेयेषु मध्ये। उत्तरमाह— नेति, नाप्तोपदेशमात्रगम्यः किं त्वनुमानगम्योप्यस्तीत्यर्थः। आत्मनोऽनुमानगम्यत्वप्रकारं जिज्ञासते— कथमिति। अनुमेयस्यात्मनोनुमितिलिङ्गान्याह— इच्छेति, सूत्रोक्ता इच्छादयः षड् पदार्था लिङ्गम्= आत्मानुमापकलिङ्गभूता इत्यन्वयः, यथा इच्छादयः शरीरादिषु नोपपद्यन्ते मृतेष्वनुपलम्भात्. न वा मनस्युपपद्यन्ते— गुणभूतानामिच्छादीनामुत्पत्तौ मनसः करणत्वादिति पारिशेष्येण यत्रेच्छादयः समवायेनोत्पद्यन्ते स आत्मेति, आत्मा शरीराद्यतिरिक्तः इच्छादिमत्त्वाद् यन्नैवं तन्नैवमिति सूत्रार्थः। व्याचष्टे— यदिति, यज्जातीयस्य= यादृशमधुरादिपदार्थस्येन्द्रियसंनिकर्षादात्मा सुखमुपलब्धवान् तज्जातीयमेव मधुरादिपदार्थं पश्यन् तम् उपादातुम्= ग्रहीतुमिच्छति सेयमुपादानेच्छा अनेकार्थदर्शिनः= पूर्वापरमधुरादिपदार्थदर्शिन एकस्य दर्शनप्रतिसंधानात्= तत्पदार्थजन्यपूर्वसुखज्ञानस्य स्मरणात् संभवन्ती आत्मनः= आत्मानुमाने लिङ्गं भवति यद् येन हि दृश्यते तेनैव तत् कालान्तरे स्मर्तुं शक्यते नान्येन तथा चात्मनो नित्यत्वे पूर्वजन्मनि स्तन्यपानेनात्मना सुखमुपलब्धमिति जन्मान्तरे तत्स्मरणात् स्तन्यपानादाविच्छा संभवति नाऽनित्यात्मपक्षे— एतच्छरीरादिना पूर्वजन्मनि स्तन्यपानजन्यसुखानुपलम्भेनैतज्जन्मनि तत्स्मरणासंभवात्. भवति च स्तन्यपानादाविच्छेति तदुपपत्त्यर्थं नित्य आत्माऽनेकशरीरग्राही स्वीकार्य इतीच्छा-

दर्शनप्रतिसंधानाद् दुःखहेतौ द्वेषः । यज्जातीयोऽस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन् आदातुं प्रयतते सोयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसंधातारमन्तरेण न स्यात्—नियतविषये बुद्धिमात्रे न संभवति देहान्तरवदिति, एतेन दुःखहेतौ प्रयत्नो व्याख्यातः । सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते पूर्वोक्त एव हेतुः । बुभुत्समानः खल्वयं विमृशति—किं स्विदिति. विमृशंश्च जानीते— इदमिति. तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गं पूर्वोक्त एव हेतुरिति । तत्र देहान्तरवदिति विभ-

---

लक्षणलिङ्गेन शरीराद्यतिरिक्त आत्मा सिद्ध इत्यर्थः । विपक्षे बाधकमाह— नियतेति, बौद्धमते अहमालयज्ञानलक्षणो बुद्धिभेदः= बुद्धिविशेष एवात्मेति बुद्धिभेदमात्रे= बुद्धिविशेषमात्रमात्मेतिपक्षे उक्तेच्छा न संभवति यतो बुद्धिर्हि नियतविषया भवति यथा या बुद्धिर्घटविषया भवति सा पटविषया न भवति तथा च बुद्धेरनेकार्थग्राहकत्वाभावात् क्षणिकत्वाच्च अन्यबुद्धिव्यक्तिदृष्टस्याऽन्यबुद्धिव्यक्त्या स्मर्तुमशक्यत्वाच्च पूर्वदृष्टस्मरणं विनेच्छाया असंभवादनित्यात्ममते इच्छा नोपपद्यते, देहान्तरवदिति— यथा देहान्तरेण चैत्रेण दृष्टं मैत्रेण स्मर्तुं न शक्यते. तत्कस्य हेतोः ? द्रष्टुर्भेदादित्येव वक्तव्यं तथा चाऽनित्याया बुद्धेरात्मत्वपक्षेप्यन्यया बुद्ध्या दृष्टस्यान्यया बुद्ध्या स्मरणं नोपपद्यते स्मरणं विना चेच्छापि नोपपद्यते, नित्यात्मपक्षे त्विच्छोपपत्तिः प्रदर्शितैवेत्यर्थः । एवमग्रेपि व्याख्येयम् । आत्मनो द्वेषलक्षणलिङ्गमाह— एवमिति, एवम्= पूर्ववदेव एकस्याऽनेकार्थदर्शिनो नित्यस्यात्मनो यज्जातीयेन शत्र्वादिनेन्द्रियसंनिकर्षाद् दुःखं प्राप्तं तज्जातीयं पश्यतो दर्शनप्रतिसंधानात्= तत्पदार्थजन्यपूर्वदुःखानुभवस्य स्मरणात् तादृशदुःखहेतौ द्वेषो जायते स च द्वेषोऽनित्यात्मपक्षे न संगच्छते— अन्येन दृष्टस्यानेन स्मरणासंभवाद् नित्यात्मपक्षे च संगच्छते नित्यस्य तस्यात्मनस्तद्दर्शनस्मरणयोः कर्तृत्वसंभवादिति द्वेषोपि नित्यात्मलिङ्गमिति सिद्धम् । नित्यात्मसाधकं प्रयत्नलक्षणलिङ्गमाह— यज्जातीय इति, अस्य= आत्मनो यज्जातीयोऽर्थः= धनादिपदार्थः सुखहेतुः प्रसिद्धस्तज्जातीयं धनादिपदार्थं पश्यन् अयमात्मा तमादातुं प्रयतते स चायं प्रयत्नः पूर्ववदेव एकमनेकार्थदर्शिनं नित्यात्मानं दर्शनप्रतिसंधातारम्= तज्जातीयपदार्थजन्यपूर्वसुखानुभवस्य स्मर्तारं विना नोपपद्यते तेनायं प्रयत्नोपि पूर्ववद् नित्यस्यात्मनो लिङ्गमिति सिद्धम् । विपक्षे बाधकमाह— नियतेति, यदि नियतविषया चानित्या बुद्धिरेवात्मा स्यात् तदाऽन्यबुद्धिव्यक्त्या दृष्टस्यान्यबुद्धिव्यक्त्या स्मर्तुमशक्यत्वात् सुखजनकपदार्थप्राप्तिविषयकः प्रयत्नो न संगच्छते— स्मरणं विना प्रयत्नस्याऽसंभवात्, देहान्तरवदिति— यथा देहान्तरदृष्टं देहान्तरेण स्मर्तुं न शक्यते तथैवानित्यात्मपक्षेपि पूर्वदृष्टस्मरणानुपपत्तिर्विज्ञेयेत्यर्थः । उक्तमन्यत्रातिदिशति— एतेनेति, सुखजनकपदार्थादानविषयकप्रयत्नवद् दुःखजनकपदार्थहानविषयकोपि प्रयत्नो नित्यात्मनो लिङ्गं विज्ञेयं पूर्ववदेवानित्यात्मपक्षे तदसंभवादित्यर्थः । सुखदुःखयोर्नित्यात्मलिङ्गत्वमाह— सुखदुःखस्मृत्येति, पूर्वं येन पदार्थेन सुखमनुभूतं तज्जातीयपदार्थं पश्यन् तज्जातीयपदार्थेन पूर्वजातं सुखं स्मरन् तत्साधनम्= तादृशसुखसाधनमाददानः= गृहीत्वा सुखमुपलभते दुःखसाधनमाददानश्च दुःखमुपलभते अर्थात् सुखदुःखे वेदयते= अनुभवति अत्र पूर्वोक्त एव दर्शनप्रतिसंधानादितिहेतुर्विज्ञेयः अर्थात् सुखादिजनकपदार्थस्य ग्रहणं परित्यागो वा तादृशपदार्थजन्यपूर्वसुखदुःखानुभवस्य स्मरणं विना नोपपद्यते तादृशस्मरणं च नित्यात्मपक्षे घटते नाऽनित्यात्मपक्षेपि— अन्यदृष्टस्यान्येन स्मर्तुमशक्यत्वादिति एवं प्रणाड्या सुखदुःखे अपि नित्यात्मनो लिङ्गे भवत इत्यर्थः । ज्ञानस्य नित्यात्मलिङ्गत्वमाह— बुभुत्समान इति, बुभुत्समानः= जिज्ञासमानोयमात्मा विमृशति= विचारयति— किमिदमिति, विमृशन्= विचारयन् तर्केण जानीते= निश्चिनोति— इदमिति । उपसंहरति— तदिदमिति, इदं निश्चयात्मकं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकम्= एककर्तृकं गृह्यमाणं नित्यात्मनो लिङ्गं भवति. अर्थात् यस्यैव बुभुत्सा जायते तस्यैव विमर्शस्तस्यैव च ज्ञानं तत्र बौद्धमते बुद्धेरनेकक्षणस्थायित्वाभावादेकाया बुद्धेर्बुभुत्सादित्रयं न संभवतीति

ज्यते– यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसंधीयन्ते तथैकदेहविषया अपि न प्रतिसंधीयेरन्– अविशेषात् । सोयमेकसत्त्वस्य समाचारः– स्वयं दृष्टस्य स्मरणं नान्यदृष्टस्य नादृष्टस्येति, एवं खलु नानासत्त्वानां समाचारः– अन्यदृष्टमन्यो न स्मरतीति, तदेतदुभयमशक्यमऽनात्मवादिना व्यवस्थापयितुमिति । एवमुपपन्नम्– अस्त्यात्मेति ॥ १० ॥

तस्य भोगाधिष्ठानम्—

## चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

कथं चेष्टाश्रयः ?, ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा सा यत्र प्रवर्तते तच्छरीरम् । कथमिन्द्रियाश्रयः ?, यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्वऽसाधुषु वर्तन्ते स एषामाश्रयः तच्छरीरम् । कथमर्थाश्रयः ?, यस्मिन्नाऽऽयतने इन्द्रियार्थसंनिकर्षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयस्तच्छरीरम् ॥ ११ ॥

नित्य आत्मा स्वीकार्य इति ज्ञानमपि नित्यस्यात्मनो लिङ्गं सिद्धम् । पूर्वोक्त एव दर्शनप्रतिसंधानादिति हेतुः अर्थात् दृश्यमानसजातीयजन्यपूर्वसुखाद्यनुभवस्य स्मरणादेव बुभुत्सा जायते तादृशस्मरणं च नित्यात्मानं विना नोपपद्यते इतिप्रणाड्या बुभुत्सानन्तरं जायमानं ज्ञानं नित्यात्मलिङ्गं संभवति नान्यथेत्यनुसंधेयम् । तत्रेति– तत्र= एवमुपपादिते सति देहान्तरवदिति दृष्टान्तभागो विभज्यते= पृथग् व्याख्यायते– यथेत्यादिना, अनात्मवादिनः= अनित्यात्मवादिनो बौद्धस्य मते= अनित्यात्मपक्षे यथा देहान्तरेषु= देहान्तरगता नियतविषया बुद्धिभेदाः= बुद्धिव्यक्तयो देहान्तरगतबुद्धिव्यक्तिभिर्न प्रतिसंधीयन्ते= न स्मर्यन्ते चैत्रज्ञानस्य मैत्रस्य स्मरणादर्शनात् तत्कस्य हेतोः दर्शनस्मरणकर्त्रोर्भेदादित्येव वक्तव्यं तथैकदेहविषयाः= एकदेहगता अपि बुद्धिभेदा एकदेहगतैरपि बुद्धिभेदैः न प्रतिसंधीयेरन्= न स्मर्तुं योग्याः– बुद्धिव्यक्तीनां क्षणिकत्वेन परस्परं भेदात्, अविशेषात्= बौद्धमते -यथा देहान्तरगतेभ्यो बुद्धिभेदेभ्यो देहान्तरगतबुद्धिभेदानां भेदस्तथा बुद्धिभेदानां क्षणिकत्वेनैकदेहगतानामपि बुद्धिभेदानां भेद एवेत्यर्थः । वस्तुतस्तु "प्रतिसंधीयन्ते" इति कर्मणि प्रत्ययो न युक्तः किं तु 'प्रतिसंदधति' इतिकर्तृप्रत्ययेन प्रयोक्तव्यं तथा च यथा देहभेदे सति बुद्धिभेदानां स्मरणकर्तृत्वं नोपपद्यते तथा देहभेदाभावेपि बुद्धिभेदानां स्मरणकर्तृत्वं नोपपद्यते क्षणिकत्वेन परस्परं भेदात् अन्यदृष्टस्य चान्येन स्मरणासंभवाद् अन्यथा चैत्रदृष्टस्य मैत्रेणापि स्मरणं स्याद् न चैवमस्तीत्याशयः । चैत्रादेः पूर्वदृष्टस्य स्मरणं प्रसिद्धमेव तेनोक्तरीत्याऽऽत्मनः स्थिरत्वं सिद्धम् । उपसंहरति– सोयमिति, सोयमेकसत्त्वस्य= एकस्य जीवस्य समाचारः= वृत्तान्त उपपादितो यथा– स्वयं दृष्टस्यैव स्मरणं भवति नाऽदृष्टस्य नाप्यन्यदृष्टस्येति । उक्तं सर्वजीवेष्वतिदिशति– एवमिति, अदृष्टमन्यदृष्टं च न कोपि स्मर्तुं शक्नोतीत्यर्थः । अनित्यात्मवादे दोषमाह– तदेतदिति, एतदुभयम्= अदृष्टस्य स्मरणाभावोऽन्यदृष्टस्य च स्मरणाभावोऽनात्मवादिना= अनित्यात्मवादिना व्यवस्थापयितुम्= उपपादयितुमशक्य एव– यतो बौद्धमते क्षणिकानां बुद्धीनामेवात्मत्वं तेन च स्मर्तृत्वं वक्तव्यं तथा चान्यबुद्धिव्यक्तिदृष्टमेवान्यबुद्धिव्यक्त्या स्मर्तव्यं स्वादृष्टमेव च स्मर्तव्यमिति स्वादृष्टस्यान्यदृष्टस्य च स्मरणाभावो नोपपद्यते, नित्यात्मपक्षे तु आत्मनो नित्यत्वेन स्थायित्वात् स्मर्तव्यस्य पूर्वं दर्शनं दृष्टस्य चानन्तरं स्मरणमुपपद्यते इति स्वादृष्टान्यदृष्टयोः स्मरणाभाव उपपादयितुं शक्यते । पर्यवसितमाह– एवमिति, एवम्= उक्तरीत्या इच्छादिलिङ्गैर्नित्य आत्मा देहादिव्यतिरिक्तोस्तीत्युपपन्नम्= सिद्धम् ॥ १० ॥

आत्मनिरूपणानन्तरं शरीरलक्षणमवतारयति– तस्येति, तस्य= उक्तस्यात्मनो भोगाधिष्ठानम्= भोगस्थानं शरीरम्– शरीरे एव भोगसंभवादित्येवं सूत्रेणान्वयः । चेष्टेति– चेष्टायाः= प्रवृत्तेरिन्द्रियाणामर्थानाम्=सुखदुःखादिभोगानां च य आश्रयस्तच्छरीरम्, अर्थपदेन गन्धादिग्रहणे तु भोग्यानां

भोगसाधनानि पुनः—

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥

जिघ्रत्यनेनेति घ्राणम्, गन्धं गृह्णातीति । रसयत्यनेनेति रसनम्, रसं गृह्णातीति । चष्टेऽनेनेति चक्षुः, रूपं पश्यतीति । त्वक्स्थानमिन्द्रियं त्वक् तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रम्, शब्दं गृह्णातीति । एवं समाख्यानिर्वचनसामर्थ्याद् बोध्यम्— स्वविषयग्रहणलक्षणानीन्द्रियाणीति । भूतेभ्य इति— नानाप्रकृतीनामेषां सतां विषयनियमो नैकप्रकृतीनाम्, सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥ १२ ॥

---

गन्धादीनां भोगाधिष्ठानत्वसंबन्धेन शरीरवृत्तित्वं विज्ञेयमिति सूत्रान्वयः । शरीरस्य चेष्टाश्रयत्वं जिज्ञासते— कथमिति । उत्तरमाह— ईप्सितमिति, पदार्थमधिकृत्य= उपलभ्य= ज्ञात्वा उद्दिश्य वा तादृशपदार्थस्येप्साजिहासाभ्यां प्रयुक्तस्य= प्रेरितस्यात्मनः तदुपायानुष्ठानलक्षणा= पदार्थप्राप्तिपरित्यागोपायानुष्ठानस्वरूपा समीहाशब्दवाच्या चेष्टा= प्रवृत्तिः सा चेष्टात्मनो यत्र वर्तते= प्रवर्तते तच्छरीरमिति चेष्टाश्रयः शरीरमिति सिद्धम्— शरीरं एव स्थितस्यात्मनो चेष्टासंभवात् । इन्द्रियाश्रयत्वं जिज्ञासते— कथमिति, इन्द्रियाणामाश्रयः स्थूलं शरीरं नेति सिद्धान्तेन जिज्ञासा । उत्तरमाह— यस्येति, यस्य= शरीरस्य, स्वविषयेषु= रूपादिषु, ज्ञेयानां साधुत्वं यथा भगवत्प्रतिमारूपस्य, अज्ञेयानामसाधुत्वं यथा ह्यगम्यास्तनादिरूपस्य, वर्तन्ते= प्रवर्तन्ते इन्द्रियाणि, एषामिन्द्रियाणाम्, शरीरोपकारादिनैवेन्द्रियाणामुपकारादिकं संभवतीति स्वोपकारादिनोपकारकत्वादिनैव शरीरस्येन्द्रियाश्रयत्वमित्याशयः, तथा च वार्तिकम्— "शरीरानुविधानमिन्द्रियाश्रयत्वं ब्रूमो न पुनराधाराधेयभावेनेन्द्रियाणि शरीरे वर्तन्ते इति" इति । शरीरस्यार्थाश्रयत्वं जिज्ञासते— कथमर्थेति, भोग्या गन्धादयः पुष्पादिनिष्ठास्तज्जन्याः सुखादयश्चात्मनिष्ठा भवन्ति न शरीरस्था इत्याशङ्कया जिज्ञासा । उत्तरमाह— यस्मिन्निति, यस्मिन् आयतने= शरीरलक्षणस्थाने स्थितस्यात्मन इन्द्रियार्थसंनिकर्षादुत्पन्नयोरर्थपदवाच्ययोः सुखदुःखयोः प्रतिसंवेदनम्= प्रत्येकज्ञानेन स्मरणेन वा भोगेन वाऽयमात्मा प्रवर्तते इतिहेतोरेव तस्य शरीरस्यार्थाश्रयत्वं किं वा शरीरे स्थित्वैव सुखाद्यर्थभोगसंभवात् शरीरस्यार्थाश्रयत्वमुच्यते न त्वाधारत्वेनेत्यर्थः, अत्र वार्तिकम्— "न हि गन्धादयोऽर्थाः शरीरवृत्तयः यत्तु तेषां कार्यं सुखदुःखोपलब्धिनिमित्तत्वं तन्नाऽसति शरीरे भवतीति शरीराश्रया उच्यन्ते" इति । तदत्रार्थशब्देन विषयो वा तज्जन्यभोगो वा ग्राह्यः, यः सः= उक्तप्रवृत्त्याश्रयः, एषाम्= अर्थानाम् ॥ ११ ॥

इन्द्रियलक्षणमवतारयति— भोगेति, भोगसाधनानि=सुखादिभोगकरणानि यानि तानीन्द्रियाणीत्यर्थः । घ्राणेति— घ्राणादीनि पञ्च इन्द्रियाणि= ज्ञानेन्द्रियाणि तानि च यथासंख्यं भूतेभ्यः= पृथिव्यादिमहाभूतानां कार्याणीति सूत्रान्वयः । घ्राणशब्दव्युत्पत्तिमाह— जिघ्रतीति, अत्र जिघ्रत्यादिक्रियाणां कर्ता त्वात्मा विज्ञेयः । घ्राणग्राह्यमाह— गन्धमिति । रसनशब्दव्युत्पत्तिमाह— रसयतीति । रसनेन्द्रियग्राह्यमाह— रसमिति । चक्षुःशब्दव्युत्पत्तिमाह— चष्टे इति, चष्टे= पश्यति । चक्षुर्ग्राह्यमाह— रूपमिति, रूपविशिष्टं द्रव्यमपि चक्षुर्ग्राह्यमेव । त्वक्शब्दव्युत्पत्तिमाह— त्वगिति, त्वक्स्थानम्= त्वचि स्थितम्, स्थानात्= स्थित्या, त्वचि स्थित्या त्वक्शब्दस्य त्वगिन्द्रिये उपचारः= लक्षणा यथा द्रविडे स्थितो द्रविड इत्युच्यते तथा त्वचि स्थित्या त्वगित्युच्यते इन्द्रियविशेषः, ग्राह्यं चास्य स्पर्शः स्पर्शविशिष्टं द्रव्यं च । श्रोत्रशब्दव्युत्पत्तिमाह— शृणोतीति । श्रोत्रग्राह्यमाह— शब्दमिति । उपसंहरति— एवमिति, एवम्= उक्तरीत्या घ्राणादिसमाख्यायाः 'जिघ्रत्यनेनेति घ्राणम्' इत्यादिनिर्वचनसामर्थ्यात्= व्युत्पत्तिसामर्थ्यादेव स्वविषयग्रहणलक्षणानि= स्वविषयग्रहणमेव लक्षणं स्वरूपं येषां तानि किं वा स्वविषयग्राहकाणि इन्द्रियाणीति बोध्यम्— जिघ्रत्यनेनेतिव्युत्पत्तिः धातुश्चात्र 'घ्रा गन्धोपादाने' इति तथाच व्युत्पत्तिसामर्थ्यादेव करण-

कानि पुनरिन्द्रियकारणानि ?

**पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥**

संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं कार्यं भविष्यतीति ॥ १३ ॥

इमे तु खलु—

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥**

पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्थाः= विषया इति ॥ १४ ॥

अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः चेतनस्याऽकर्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाणक इवेदमाह—

**बुद्धिरुपलब्धिर्ज्ञानमित्यऽनर्थान्तरम् ॥ १५ ॥**

नाऽचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति. तद्धि चेतनं स्यात्, एकश्चायं चेतनो

विषया गन्धग्राहकत्वं घ्राणलक्षणं सिद्धम् एवमन्यत्रापि बोध्यमित्यर्थः । भूतेभ्य इति बहुवचनसार्थक्यमाह- भूतेभ्य इति, एषाम्= इन्द्रियाणां नानाप्रकृतीनाम्= भिन्नभिन्नभूतोत्पन्नानां सतामेव= भिन्नभिन्नभूतेभ्य उत्पन्नानामेव विषयनियमः= घ्राणं गन्धमेव गृह्णातीत्यादिनियम उपपद्यते- पृथिव्युत्पन्नस्य घ्राणस्य पृथिवीगुणभूतगन्धमात्रग्राहकत्वसंभवात्. तेजस उत्पन्नस्य चक्षुषस्तेजोगुणभूतरूपमात्रग्राहकत्वसंभवात्. नैकप्रकृतीनाम्= नैकभूतोत्पन्नानां विषयनियम उपपद्यते. यदि पञ्चापीन्द्रियाणि एकभूतोत्पन्नानि स्युस्तदा स्वाऽप्रकृतिभूतस्थगुणग्राहकत्वे प्राप्ते सर्वेषामिन्द्रियाणां गन्धादिसर्वगुणग्राहकत्वमापद्येत न चैवमस्ति- विषयनियमदर्शनादितीन्द्रियाणि नैकप्रकृतीनि किं तु स्वस्वभिन्नप्रकृतीनीति सिद्धमितिहेतोः "भूतेभ्यः" इत्युक्तम् तदनेन सांख्यादिमतं प्रत्याख्यातं वेदितव्यम् । उपसंहरति- सतीति, स्वविषयग्रहणलक्षणत्वम्= स्वविषयग्रहणलक्षणानीन्द्रियाणि इति यदुक्तं स्वविषयग्राहकत्वं लक्षणं तत् सिद्धमित्यर्थः ॥ १२ ॥

इन्द्रियाणां कारणानि जिज्ञासते- कानीति । पूर्वसूत्रोक्तघ्राणादीनां यथासंख्यक्रमेण कारणान्याह- पृथिवीति, पृथिव्यादीनि पञ्च भूतानि घ्राणादीनां क्रमेण कारणानीत्यन्वयस्तत्र पृथिवी घ्राणस्य आपो रसनायास्तेजश्चक्षुषो वायुस्त्वच आकाशं श्रोत्रस्य कारणमिति सूत्रार्थः । व्याचष्टे- संज्ञेति, पूर्वसूत्रे "भूतेभ्यः" इत्यनेनेन्द्रियाणां सामान्यतो भूतकार्यत्वमुक्त्वा पुनरत्र योयं भूतानां पृथिव्यादिसंज्ञाशब्दैः पृथगुपदेशः सोऽनेन सूत्रेण विभक्तानां भूतानामिन्द्रियलक्षणं कार्यं सुवचम्= सम्यगुक्तं भविष्यतीत्येतदर्थं एव यथा- पृथिव्याः कार्यं घ्राणमित्यादि, "भूतेभ्यः" इतिसामान्यवचनेन कस्य भूतस्य किमिन्द्रियं कार्यमिति विशेषज्ञानं न संभवतीत्यर्थः ॥ १३ ॥

अग्रिमसूत्रमवतारयति- इमे इति, इमे गन्धादयः पृथिव्यादिगुणास्तदर्थाः= यथासंख्यं घ्राणादीनामर्थाः= विषयाः- घ्राणादीन्द्रियग्राह्यत्वादिति सूत्रार्थः । व्याचष्टे- पृथिव्यादीनामिति, पृथिव्यादीनां यथाविनियोगम्= यथासंभवम्= यथासंख्यं गन्धादयो गुणास्ते एवेन्द्रियाणां यथाक्रमम्= यथासंख्यम् अर्थाः= विषया यथा घ्राणस्य गन्धो रसनाया रस इति । द्रव्येषु पृथिव्यप्तेजसां चक्षुर्ग्राह्यत्वं त्वग्ग्राह्यत्वं च वायोश्च त्वग्ग्राह्यत्वमिति विज्ञेयम् । पृथिव्यादिगुणा इत्यत्र पृथिव्यादयश्च गुणाश्चेति द्वन्द्वसमासपक्षे पृथिव्यादीनामपि घ्राणादिग्राह्यत्वं प्रसज्येति दोषोऽनुसंधेयः । विशेषस्तु वर्तिके द्रष्टव्यः । अत्र "इमे तु खलु" इतिभाष्यं सूत्रानन्तरमेव युक्तम् ॥ १४ ॥

अग्रिमसूत्रमवतारयति- अचेतनस्येति, बुद्धेर्निश्चयक्रियायां करणत्वम्, अचेतनाया बुद्धेर्वृत्तिः= व्यापारो ज्ञानमिति सांख्यैरुक्तम्-"अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्" इत्यादिना, कर्तृ-

देहेन्द्रियसंघातव्यतिरिक्त इति । प्रमेयलक्षणार्थस्य वाक्यस्याऽन्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि तेषु सत्सु इयमपि—

## युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

त्वरहितस्य चेतनस्यात्मन उपलब्धिरेवेत्यपि सांख्यैरुक्तम्—" तस्माच्च विपर्ययात् सिद्धं साक्षित्वमस्य पुरुषस्य. कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च " इत्यादि तदेतद् युक्तिविरुद्धम्— बुद्धिज्ञानोपलब्धिशब्दानामेकार्थबोधकत्वात् तथा चात्मन उपलब्धिसंभवे बुद्धिज्ञाने अपि प्राप्ते एव— बुद्धिज्ञानोपलब्धीनां सामानाधिकरण्यदर्शनात् किं वैकार्थपरत्वात्. अचेतनाया बुद्धेश्च ज्ञानात्मको व्यापारो न संभवतीति युक्तिविरुद्धं सांख्यमतं प्रत्याचक्षाणकः= निराकुर्वन् इव इदम्= अग्रिमसूत्रमाह— बुद्धिरितीत्यन्वयः । बुद्धिरिति— अनर्थान्तरम्= अभिन्नार्थकं बुद्ध्यादिपदत्रयमिति सूत्रान्वयः । व्याचष्टे— नेति, अचेतनापेक्षया चेतनस्य ज्ञानेनैव विशेष इत्यर्थः । तद्धीति— यदि बुद्धिर्ज्ञानविशिष्टा स्यात्तदा बुद्धिरेव चेतनम्= आत्मा स्यात् न चैवं संभवति बुद्धेरात्मत्वपक्षे दशमसूत्रे दोषाणामुक्तत्वात् । किं चानेकाः खलु बुद्धयः— अस्थायित्वात्. एकश्चायं चेतन आत्मा देहेन्द्रियसमुदायव्यतिरिक्त इति बुद्धेरात्मव्यतिरिक्तत्वादेव ज्ञानविशिष्टत्वं नोपपद्यते इत्यर्थः । बुद्धिशब्दस्यान्तःकरणपरत्वेनापि बुद्धेरात्मभिन्नत्वं करणत्वं च प्राप्तम् । प्रमेयेति— प्रमेयस्य क्रमप्राप्ताया बुद्धेर्लक्षणार्थं निर्मितस्य वाक्यस्य= सूत्रस्याऽन्यार्थप्रकाशनम्= सांख्यमतखण्डनपरत्वप्रकाशनम् उपपत्तिसामर्थ्यात्= युक्तिसामर्थ्यात्= स्वबुद्धिसामर्थ्यादेव विज्ञेयमित्यर्थः प्रतिभाति । अत्र " प्रमेयगणपठिताया अपि बुद्धेर्विषयत्वप्राप्तावपि विषयित्वमुपपत्त्या सिद्धमित्यर्थः " इतिश्रीगुरुचरणाः, " उपपत्तिसामर्थ्यात्= पर्यायशब्दाभिधानाद् बुद्धिवृत्तेर्निराकरणम् " इति च वार्तिकम् ॥१५॥

मनस्साधकसूत्रमवतारयति— स्मृतीति, स्मृतिर्हि आत्मन आन्तरज्ञानलक्षणा क्रिया सा चेन्द्रियलक्षणं करणं विना न संभवति तस्मात् स्मृतेर्यदान्तरमिन्द्रियं करणं तदेव मनः । अनुमानस्थले व्याप्तिस्मृतिः । साध्यस्मृतिश्च संमता सा च मनो विना नोपपद्यते इत्यनुमानमपि मनोलिङ्गम् । आगमः= शब्दप्रमाणं शब्देन पदार्थे प्रमीयमाणे शक्तिग्रहस्मृत्यपेक्षा भवति सा च मनो विना नोपपद्यते इत्यागमोपि मनोलिङ्गम् । 'स्थाणुर्वा पुरुषो वा ' इत्यादिसंशयस्थले स्थाणुपुरुषयोः समानधर्माणां स्मृतिर्भवति तदनन्तरं संशयः स्मृतिश्च मनो विना नोपपद्यते इति संशयोपि मनोलिङ्गम् । प्रतिभा= 'श्वो मे भ्राताऽऽगन्ता ' इत्यादिरूपं प्रातिभं ज्ञानं तच्च स्वविषयस्य भ्रात्रादेः स्मृतिं विना नोपपद्यते स्मृतिश्च मनो विना नोपपद्यते इति प्रतिभापि मनोलिङ्गम् । स्वप्नज्ञानमपि दृश्यमानेनेन्द्रियसंनिकर्षाद्यभावात् स्मृतिरूपमेवेति मनो विना नोपपद्यते इति स्वप्नज्ञानमपि मनोलिङ्गम् । ऊहः= ' यद्यत्र वह्निर्न स्यात्तदा धूमोपि न स्यात् ' इत्यादिरूपस्तर्कः स च वह्निस्मृतिसापेक्षः स्मृतिश्च मनो विना नोपपद्यते इति ऊहोपि मनोलिङ्गम् । एषूदाहरणेषु स्मृतेरेव साक्षाद् मनस्साधकत्वं विज्ञेयं प्रपञ्चस्तु व्युत्पत्त्यर्थः । सुखादिप्रत्यक्षं ह्यात्मनो मनःकरणकमेव स्वकीयसुखादौ प्रमाणान्तरप्रसारासंभवादिति यदेव सुखप्रत्यक्षकरणं तदेव मनः । आदिपदात् दुःखादिकं ग्राह्यम् । इच्छादयोप्यात्मव्यापाराः सकरणका एव तत्र बाह्यस्य करणत्वासंभवाद् यदेवेच्छादिव्यापारकरणं तदेव मनः । मनःशब्दवाच्यमान्तरमिन्द्रियमस्ति तेन विना स्मृत्यादीनामनुपपत्तेः, किं वा स्मृत्यादयः सकरणका व्यापारत्वाद् बाह्यव्यापारवद् यदेव स्मृत्यादिकरणं तदेव मन इति स्मृत्यादीनि मनोलिङ्गानि । तेषु= स्मृत्यादिलक्षणलिङ्गेषु सत्स्वपि इयम्= सूत्रोक्ता युगपज्ज्ञानानुत्पत्तिरपि मनसो लिङ्गम्= साधिका भवतीत्यन्वयः ।

युगपदिति— स्वस्वविषयै रूपरसादिभिरिन्द्रियाणां संयोगे सत्यपि तैश्चेन्द्रियैरात्मनो विभुत्वात् संयोगे सत्यपि रूपरसाद्यनेकविषयकाण्यऽनेकानि ज्ञानानि युगपद् नोत्पद्यन्ते तेन ज्ञायतेऽस्ति किंचित्

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति । युगपच्च खलु घ्राणादीनां गन्धादीनां च संनिकर्षेषु सत्सु युगपद् भानानि नोत्पद्यन्ते तेनानुमीयते- अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्याऽसंनिधेर्नोत्पद्यते ज्ञानं संनिधेश्चोत्पद्यते इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ॥१६॥

क्रमप्राप्ता तु—

## प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

मनोऽत्र बुद्धिरित्यभिप्रेतम्- बुध्यतेऽनेनेति बुद्धिः । सोयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः तदेतत्कृतभाष्यं द्वितीयसूत्रे इति ॥ १७ ॥

## प्रवर्तनालक्षणा दोषाः ॥ १८ ॥

प्रवर्तना= प्रवृत्तिहेतुत्त्वम्. ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा, यत्र मिथ्या-

---

कारणान्तरमपि येनात्मेन्द्रियविषयाणां संयोगे सत्यपि युगपद् ज्ञानानि नोत्पद्यन्ते. यदेव कारणान्तरं तदेव मनः, मनश्चाणु तस्मान्मनसो युगपदनेकैरिन्द्रियैः सह संयोगो नोपपद्यते इति युगपदनेकानि ज्ञानान्यपि नोत्पद्यन्ते किं तु येनेन्द्रियेण मनस्संयोगो भवति तेनैकमेवैकदा ज्ञानं जायते, तत्र यदि मनोऽणु न स्यात्तदा युगपज्ज्ञानानुत्पत्तिर्नोपपद्यतेति अण्वेव मन इति सूत्रार्थः ।

व्याचष्टे- अनिन्द्रियेति, उक्ताः स्मृत्यादयः अनिन्द्रियनिमित्ताः= बाह्येन्द्रियकरणका न भवन्ति- स्मर्यमाणेन बाह्येन्द्रियसंयोगासंभवात् किं तु करणान्तरनिमित्ताः= बाह्येन्द्रियातिरिक्तकरणजन्या भवन्ति- आत्मक्रियारूपत्वात् यदेवान्तरं स्मृत्यादीनां करणं तदेव मन इत्यर्थः । युगपत्= एकस्मिन् काले गन्धादीनाम्= गन्धादिभिः सह, सत्सु= सत्स्वपि, गन्धादिसंयुक्तेन्द्रियैश्चात्मसंनिकर्षेपि सति युगपद् भानानि= गन्धादिज्ञानान्यनेकानि नोत्पद्यन्ते तेनानुमीयते । मनोऽनुमानप्रकारमाह- अस्तीति, तत्तदिन्द्रियसंयोगि= एकस्मिन् काले एकेन्द्रियसंयोगयोग्यम्- अणुत्वात्, निमित्तान्तरम्= करणान्तरम्, अव्यापि= अणु । यस्य= मनसः । असंनिधेः= इन्द्रियेणासंयोगाद् ज्ञानं नोत्पद्यते, संनिधेः= इन्द्रियेण संयोगाच्च ज्ञानमुत्पद्यते । विपक्षे बाधकमाह- मन इति, यद्यणुभूतस्य मनस इन्द्रियेण संयोगापेक्षा ज्ञानोत्पत्तौ न स्यात्तदा इन्द्रियाणां युगपत् स्वस्वविषयैः संयोगसंभवात् विषयसंयुक्तैरिन्द्रियैश्च विभोरात्मनोपि युगपत्संयोगसंभवात् युगपदनेकानि ज्ञानान्युत्पद्येरन् न चोत्पद्यन्ते तेनानुमीयतेऽस्ति मन इति युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । स्पष्टमन्यत् ॥ १६ ॥

प्रवृत्तिलक्षणमवतारयति- क्रमेति, क्रमप्राप्ता= सूत्रोक्तपदार्थनिरूपणक्रमप्राप्ता प्रवृत्तिर्लक्ष्यते । प्रवृत्तिरिति- वाग्बुद्धिशरीराणामारम्भः= चेष्टा= क्रिया प्रवृत्तिरित्युच्यते, प्रवृत्तिश्च सा धर्माधर्माविति-सूत्रार्थः । व्याचष्टे- मन इति, सूत्रोक्तबुद्धिपदार्थो मनः- बुध्यते= ज्ञायतेऽनेनेतिव्युत्पत्त्या. ज्ञानसाधनं च मन एवेति ज्ञानसाधनभूता बुद्धिरत्र मन एव न तु ज्ञानम्- ज्ञानस्य व्यापारासंभवात् मनसश्च व्यापारसंभवात्, उपसंहरति- सोयमिति, आरम्भः= क्रिया, तदेतत्= शरीरादिक्रियाणां पुण्यरूपत्वं पापरूपत्वं प्रत्येकस्य दशविधत्वं च द्वितीयसूत्रभाष्ये “शरीरेण प्रवर्तमानः” इत्यादिना द्रष्टव्यम् । पुण्यपापशब्दयोरारम्भविशेषणत्वात् पुंस्त्वम् ॥ १७ ॥

दोषलक्षणमाह- प्रवर्तनेति, प्रवर्तना= प्रवर्तकत्वमेव लक्षणं स्वरूपं येषां ते प्रवर्तनालक्षणा दोषा रागादय इतिसूत्रान्वयः । दोषाणां प्रवर्तकत्वं च द्वितीयसूत्रभाष्ये प्रतिपादितमेव । व्याचष्टे- प्रवर्तनेति, तथा च प्रवृत्तिहेतुत्वलक्षणा दोषा इत्यन्वयः, पुण्यपापकारणीभूता दोषा इत्यर्थः । दोषाणां प्रवर्तकत्वमाह- ज्ञातारमिति । दोषाणां कारणमाह- यत्रेति, यत्रात्मनि मिथ्याज्ञानं भवति तत्रैवात्मनि तेन

ज्ञानं तत्र रागद्वेषाविति । प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्ते ? इति, कर्मलक्षणाः खलु रक्तद्विष्टमूढाः– रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते, तथा द्विष्टस्तथा मूढ इति, रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ॥ १८ ॥

## पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः, उत्पन्नस्य= संबद्धस्य, संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः, पुनरुत्पत्तिः= पुनर्देहादिभिः संबन्धः, पुनरित्यभ्यासाभिधानम् । यत् क्वचित् प्राणभृन्निकाये वर्तमानः पूर्वोपात्तान् देहादीन् जहाति तत् प्रैति, यत् तत्राऽन्यत्र वा देहादीनऽन्यान् उपादत्ते तद् भवति, प्रेत्यभावः= मृत्वा पुनर्जन्म, सोयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥ १९ ॥

---

मिथ्याज्ञानेन रागद्वेषमोहा दोषा भवन्ति, मिथ्याज्ञानं चाविद्या सा च "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्युक्ता । दोषनिरूपणकारणं जिज्ञासते— प्रत्यात्मेति, अप्रसिद्धस्य हि ज्ञानार्थं लक्षणापेक्षा भवति रागादयो दोषाश्च प्रत्यात्मवेदनीयाः= प्रत्यात्मप्रसिद्धाः= सकलजीवप्रसिद्धा इति नैषां लक्षणापेक्षेत्यर्थः । उत्तरमाह– कर्मेति, रक्तः= रागविशिष्टः, द्विष्टः= द्वेषविशिष्टः, मूढः= मोहविशिष्ट एते रक्तद्विष्टमूढाः कर्मलक्षणाः= क्रियाप्रधानाः= क्रियापरायणा भवन्ति । एतेषां कर्माह– रक्तो हीति, द्विष्टस्तथा= तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते, मूढोपि तथा= तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते इत्यन्वयः । दोषाणां सर्वप्रसिद्धत्वेपि हेयत्वेन दोषा न ज्ञाता इति हेतोर्दोषा लक्षिता दोषाणां हेयत्वं च प्रवर्तकत्वाद् विज्ञेयम् अत एव रक्तादयः कर्मप्रधाना भवन्ति, कर्मणा हि संसारानुवृत्तिर्भवति अपवर्गप्राप्तिश्च न भवतीति तादृशकर्मकारणत्वाद् दोषा हेया इति हेयत्वज्ञापनार्थं प्रवर्तनालक्षणत्वमुक्तमित्यर्थः। अत्र "परिहारभाष्यम्– कर्मलक्षणा इति तस्यार्थः– स्वरूपतः स्फुटत्वेपि न निर्वेदविषयतया स्फुटता तया चेह प्रयोजनं प्रवर्तनावत्त्वेन चैते निर्वेदविषयाः सा च प्रवृत्त्या कार्येण लक्ष्यते इति कर्मलक्षणा इत्युक्तम्" इति तात्पर्यटीका । रागेति– यदि "प्रवर्तनालक्षणा दोषाः" इति नोच्येत किं तु 'रागद्वेषमोहा दोषाः' इत्युच्येत तदा प्रत्येकं रागद्वेषमोहानां पुनः स्वरूपकथने बहुनोक्तम्= बहूक्तं भवति= अधिकवक्तव्यत्वाद् गौरवं स्यादिति "प्रवर्तनालणा दोषाः" इत्युक्तं तथा च रागद्वेषमोहेषु प्रवर्तकत्वाद् दोषत्वं गृहीतं भवतीति प्रवर्तनालक्षणत्वं दोषत्वमिति लक्षणं सिद्धमित्यर्थः । अत्र "बहु नोक्तं भवतीति– स्वरूपमात्रं रागादीनामुक्तं भवति न तु प्रवर्तनावत्त्वमपि तेषामित्यर्थः" इति तात्पर्यटीका । किंवा बहूक्तं न भवतीत्यन्वयस्तथा च 'रागद्वेषमोहा दोषाः' इत्युक्ते दोषाणां नाममात्रमेवोक्तं स्यात् न तु लक्षणमपीति बहूक्तं न भवति, "प्रवर्तनालक्षणा दोषाः" इत्युक्ते तु दोषाणां लक्षणसिद्धया बहूक्तं जातमित्येवमुक्तमित्यर्थः ॥ १८ ॥

प्रेत्यभावं लक्षयति– पुनरिति, या पुनरुत्पत्तिः= मरणानन्तरं जन्म स प्रेत्यभावः, प्रेत्य= मृत्वा भावः= उत्पत्तिरिति सूत्रान्वयः । व्याचष्टे– उत्पन्नस्येति, क्वचित्= कस्मिन्नपि सत्त्वनिकाये= शरीरेन्द्रियसंघाते उत्पन्नस्य जीवस्य मृत्वा= मरणानन्तरं योत्पत्तिः सा पुनरुत्पत्तिः स एव प्रेत्यभाव इत्युच्यते । ननूत्पत्तिस्तु शरीरस्यैव संभवति नात्मनः– नित्यत्वात्, शरीरं च यदुत्पन्नं तदत्रैव भस्मीभूतं नष्टमिति न शरीरस्यापि पुनरुत्पत्तिरुपपद्यते इत्याशङ्क्य उत्पन्नस्येतिपदं व्याचष्टे– संबद्धस्येति, तथा च क्वचित् सत्त्वनिकाये उत्पन्नस्य= संबद्धस्येत्यर्थः, आत्मनो नित्यत्वेनैवाऽनेकशरीरैः सह संबन्धस्तु नानुपपन्नः शरीरस्य तु पुनरुत्पत्तिर्नोच्यते । संबन्धिनमाह– संबन्ध इति, देहेन्द्रियादिभिरात्मनो यः पुनः संबन्धः स एव प्रेत्यभाव इत्यर्थः । बुद्धिरत्र ज्ञानम् , वेदना च फलभोगः । पर्यवसितमाह– पुनरिति । पुनरुत्पत्तिरित्यत्र पुनःपदेन अभ्यासस्य= पौनःपुन्यस्याभिधानम्= बोधनमस्ति– प्रेत्यभावस्यानादि-

## प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

सुखदुःखसंवेदनं फलम्, सुखविपाकं कर्म दुःखविपाकं च, तत् पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतं तथा हि प्रवृत्तिदोषजनितोऽर्थः फलम् एतत्सर्वं भवति. तदेतत् फलम् उपात्तमुपात्तं हेयं. त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्यवसानं वास्ति, स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥ २० ॥

अथैतदेव—

## बाधनालक्षणं दुःखम् ॥ २१ ॥

बाधना= पीडा= ताप इति. तयाऽनुविद्धम्= अनुषक्तम्= अविनिर्भागेन वर्तमानं

त्वात् । प्रेत्यपदार्थमाह- यदिति, प्राणभृन्निकाये= शरीरे, पूर्वोपात्तान्= पूर्वगृहीतान्, तत् प्रैति= प्रैतीत्युच्यते, गृहीतदेहादीनां त्याग एव प्रेत्यपदार्थ इत्यर्थः । भावपदार्थमाह- यदिति, तत्र देशे अन्यत्र वा देशे लोके वेत्यर्थः । उपादत्ते= गृह्णाति, तद् भवति= संभवतीत्युच्यते, अन्यदेहादीनां ग्रहणमेव भावपदार्थ इत्यर्थः । पर्यवसितं प्रेत्यभावपदार्थमाह- मृत्वेति । उपसंहरति- सोयमिति, योयं जन्ममरणयोः प्रबन्धस्य= शृङ्खलायाः संबन्धस्य वाऽभ्यासः= पौनःपुन्यं सोऽनादिरपवर्गान्तः= अपवर्गपर्यन्तं वर्तमानः= अपवर्गनिवर्त्यः सोयं प्रेत्यभावो विज्ञेय इत्यन्वयः । "जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च" इति भगवगीतमनुसंधेयम् ॥ १९ ॥

प्रमेयसूत्रपठितं फलं लक्षयति- प्रवृत्तीति, प्रवृत्त्या= धर्माधर्माभ्यां रागद्वेषादिदोषैश्च जनितः= उत्पादितः अर्थः= सुखदुःखभोग एव फलपदार्थः, शरीरादिकमपि गौणं फलमेव- प्रवृत्तिजन्यत्वात् । यद्यपि फलस्य प्रवृत्तिजन्यत्वमेव तथापि रागद्वेषादिदोषैर्विना सुखादिभोगो न संभवतीतिहेतोरेव दोषाणामपि फलहेतुत्वमुक्तम् । अत्र "अत्र च 'प्रवृत्तिजनितः' इतिवक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावोऽपि तु प्रवृत्तिकार्ये सुखदुःखे अपि प्रतीतिदर्शनार्थम्- दोषसलिलावसिक्तायां खल्वात्मभूमौ धर्माधर्मबीजे सुखदुःखे जनयतो नान्यथा" इतितात्पर्यटीका, इतिसूत्रार्थः ।

व्याचष्टे- सुखेति, सुखदुःखयोः संवेदनम्= भोग एव प्रधानं फलम् । फलकारणमाह- सुखविपाकमिति, सुखविपाकम्= सुखजनकं पुण्यं दुःखविपाकम्= दुःखजनकं च पापं कर्म ततपुनः= तच्च सुखदुःखसंवेदनं देहादीनां सत्त्वे एव संभवति नान्यथेति फलं देहादिभिः सहैवाभिप्रेतम् अर्थाद् यथा सुखदुःखभोगः फलं तथा देहादिकमपि फलमेव- धर्माधर्मजन्यत्वात् । तथाहि= एवं हि= सुखदुःखसंवेदनेन सह देहादेरपि फलत्वस्वीकारात्. "प्रवृत्तिदोषजनितोर्थः फलम्" इतिसूत्रेण यत्फलमुक्तं तद् एतत्सर्वम्= देहादिकं सर्वं धर्माधर्मजन्यं फलमिति सिद्धं भवतीत्यर्थः । सुखदुःखसंवेदनं च देहेन्द्रियविषयबुद्धिभिर्विना न संभवतीति स्पष्टमेव । अत्र "शरीरादीन् धर्माधर्मावारभ्य सुखदुःखोपभोगे कुरुतः" इतिवार्तिकम् । तदेतत्= शरीरादिलक्षणं फलम् उपात्तमुपात्तं भोगावसानकाले मरणकाले च हेयम्= त्याज्यम्= त्यक्तं भवति, त्यक्तंत्यक्तम्= त्यक्तशरीरादिसदृशं त्यागानन्तरं वा शरीराद्यन्तरम् उपादेयम्= ग्राह्यम्= गृहीतं भवतीति अस्य फलस्य हानोपादानयोः= त्यागपरिग्रहयोः= गृहीतफलत्यागस्य अगृहीतफलग्रहणस्य च निष्ठा= पर्यवसानं नास्ति विनापवर्गं. प्रलयेपि पर्यवसानं न भवति पुनरपि सर्गे फलहानोपादानयोरवश्यम्भावात्, अत्र "निष्ठा समाप्तिः सा च प्रलयेप्यस्तीत्यत उक्तम्- पर्यवसानमिति अवसानमात्रमस्ति न पुनः परितः- पुनरपि सर्गे हानोपादानयोर्भावादित्यर्थः" इति तात्पर्यटीका । उपसंहरति- स इति, सोयं लोकः= जगत् फलविषयकहानोपादानयोः स्रोतसा= प्रवाहेण= नैरन्तर्येण उह्यते= निर्वाह्यते= धार्यते इत्यन्वयः- फलोपभोगप्रवाहस्यैव संसारपदार्थत्वादित्यर्थः ॥ २० ॥

क्रमप्राप्तं दुःखलक्षणमवतारयति- अथेति, एतदेव= शरीरादिलक्षणं फलमेव बाधनालक्षणम्= पीडास्वरूपं सद् दुःखमित्युच्यते. तत्र वस्तुतो दुःखमात्मसमवेतमेव अथापि तादृशदुःखजनकत्वात् शरी-

दुखयोगाद् दुःखमिति, सोयं सर्वं दुःखेनाऽनुविद्धमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते निर्विण्णो विरज्यते विरक्तो मुच्यते ॥ २१ ॥

यत्र तु निष्ठा= यत्र तु पर्यवसानं सोयम्—

## तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तेन दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः । कथम् ?, उपात्तस्य जन्मनो हानम् अन्यस्य चानुपादानम्, एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः, तद् अभयमऽजरमऽमृत्युपदं ब्रह्म क्षेमप्राप्तिरिति । नित्यं सुखमात्मनो महत्त्ववद् मोक्षे व्यज्यते तेनाभिव्यक्तेनाऽत्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते, तेषां प्रमाणाभावादनुपपत्तिः— न प्रत्यक्षं नानुमानं नागमो वा विद्यते— 'नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते' इति ॥

रादिकमपि दुःखमित्युच्यते इति सूत्रेण सहान्वयः, अत्र "एतदेव शरीरादि बाधनानुषङ्गाद् दुःखमित्युच्यते स्वभावतस्तु दुःखमेव दुःखम्" इति वार्त्तिकम् । व्याचष्टे— बाधनेति, तया= पीडया अनुषक्तम्= संबद्धम्= दुःखजनकमितियावत्, अविनिर्भागेन= दुःखसाहित्येन वर्तमानं सर्वमेव शरीरादिकं दुःखयोगाद् दुःखमित्युच्यते यथा मधुरसंयोगाद् मधुरमित्युच्यते तथा । उपसंहरति— सोयमिति, सोयं दुःखी सर्वं दुःखयुक्तमिति पश्यन्= जानानः दुःखस्यानिष्टत्वाद् दुःखं जिहासुर्जन्मनि दुःखदर्शी संसाराद् निर्विद्यते निर्विण्णः सन् विरज्यते विरक्तः सन् मुच्यते= अपवर्गपदं लभते इत्यन्वयः । तथा च संसारे किंचित्सुखे सत्यपि अपवर्गसाधनीभूतनिर्वेदस्य सिद्ध्यर्थं सर्वस्य दुःखमयत्वमुच्यते तथा च योगसूत्रम्— "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति ॥ २१ ॥

अपवर्गलक्षणमवतारयति— यत्रेति, यत्र= यस्यामवस्थायामुक्तयोः फलहानोपादानयोर्दुःखस्य वा निष्ठा= पर्यवसानम्= अत्यन्तसमाप्तिर्भवति सोयम्= साऽवस्थाऽपवर्ग इत्युच्यते इत्यन्वयः । तदिति— तत्= तस्य= दुःखस्याऽत्यन्तविमोक्षः= अत्यन्तनिवृत्तिरेवाऽपवर्गपदार्थः, प्रलयेपि दुःखनिवृत्तिर्भवति तद्व्यावृत्त्यर्थमऽत्यन्तपदं प्रलयानन्तरं सर्गे पुनर्दुःखभोगस्याऽवश्यम्भावाद् न प्रलयेऽत्यन्तदुःखनिवृत्तिः संभवति. अपवर्गानन्तरं तु न दुःखभोगसंभवोस्तीत्यपवर्गे दुःखस्यात्यन्तनिवृत्तिः संभवति, दुःखनिवृत्तेरात्यन्तिकत्वं च पुनरनुत्पाद इतिसूत्रार्थः । व्याचष्टे— तेनेति, तत्= तेन. दुःखेन= दुःखमयेन । जन्मनिवृत्त्या मरणनिवृत्तिरर्थादेव लब्धा । जन्मनोऽत्यन्तविमुक्तिप्रकारं जिज्ञासते— कथमिति । उत्तरमाह— उपात्तस्येति, गृहीतस्य जन्मनस्तत्प्रयोजकीभूतकर्मक्षयेण हानम्= निवृत्तिर्भवत्येव तत्त्वज्ञानमाहात्म्यादन्यस्य जन्मनो ग्रहणं न भवतीतिरीत्या जन्मनोऽत्यन्तविमुक्तिर्भवतीत्यर्थः । अपवर्गावस्थाया अविनाशित्वमाह— एतामिति, एताम्= जन्मनिवृत्तिलक्षणाम् । अपर्यन्ताम्= विनाशरहिताम् । अपवर्गस्वरूपमहत्त्वमाह— तदिति, अभयम्= पुनर्भयरहितम्, अमृत्युपदम्= मृत्युस्थानभिन्नं किं वा मृत्युरहितम् । तदेव वेदान्तिभिर्ब्रह्मत्युच्येते, तदेव दुःखनिवृत्त्या क्षेमप्राप्तिरित्युच्यते इत्यर्थः । परिहारार्थं वेदान्तमतमनुवदति— नित्यमिति, यथात्मनः स्वरूपभूतमपि महत्त्वम्= विभुत्वं संसारे नाभिव्यज्यते मोक्षावस्थायां चाभिव्यज्यते तथात्मनः स्वरूपभूतमेव नित्यं सुखं संसारे नाभिव्यज्यते मोक्षावस्थायां चाभिव्यज्यते मोक्षावस्थायां तेन नित्यसुखेनाभिव्यक्तेन विमुक्तः सुखी भवति तथा च न दुःखनिवृत्तिमात्रमपवर्गः किं तु नित्यसुखप्राप्तिरपीति केचित्= वेदान्तिनो मन्यन्ते, सुखस्यात्मस्वरूपत्वे च "सत्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिः प्रमाणम् । परिहरति— तेषामिति, तेषां वेदान्तिनां सुखरूपमोक्षमतस्य प्रमाणाभावादेवानुपपत्तिः । प्रमाणाभावमाह— नेति, 'आत्मनो नित्यं सुखं महत्त्ववन्मोक्षेभिव्यज्यते' इत्यत्र न प्रत्यक्षम्— इन्द्रियसंनिकर्षासंभवात्. नानुमानम्— लिङ्गाभावात्. नागमो वा प्रमाणं विद्यते इत्यप्रामाणिकमेव तन्मतमित्यर्थः । किं वा "तदभयम्" इत्यारभ्य पूर्वपक्षो विज्ञेयः, अत्र क्षेमप्राप्तिः= सुखप्राप्तिरित्यर्थः ॥

नित्यस्याभिव्यक्तिः= संवेदनम् , तस्य हेतुवचनम् ॥

नित्यस्याभिव्यक्तिः= संवेदनम् ज्ञानमिति, तस्य हेतुर्वाच्यो यतस्तदुत्पद्यते इति ॥

सुखवन्नित्यमितिचेत् ?. संसारस्थस्य मुक्तेनाऽविशेषः ॥

यथा मुक्तः सुखेन तत्संवेदनेन च सन्नित्येनोपपन्नस्तथा संसारस्थोपि प्रसज्यते इति— उभयस्य नित्यत्वात् ॥

अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्यम्= यौगपद्यं गृह्येत ॥

यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्यायेण तस्य च नित्यसंवेदनस्य च सहभावः= यौगपद्यं गृह्येत, न सुखाभावो नाऽनभिव्यक्तिरस्ति— उभयस्य नित्यत्वात् ।

अनित्यत्वे हेतुवचनम् ॥

अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम् ?, यत उत्पद्यते स हेतुर्वाच्यः ॥

---

ननु नित्यस्य स्वरूपभूतसुखस्य संवेदनम्= ज्ञानमेवाभिव्यक्तिपदार्थः ज्ञानं च मुक्तस्य नानुपपन्नम्- ज्ञानस्वरूपत्वादित्याशङ्कते— नित्यस्येति । उत्तरमाह— तस्येति, ज्ञानं हि सर्वं सहेतुकम्= कारणजन्यमेव दृष्टमिति तस्य= मोक्षावस्थायां नित्यसुखविषयकज्ञानस्य हेतुवचनम्= हेतुर्वक्तव्यः न च मुक्तावस्थायानात्ममनःसंयोगादिकं ज्ञानकारणमुपपद्यते इति न नित्यसुखज्ञानमप्युपपद्यते इत्यर्थः । स्ववाक्यं स्वयं व्याचष्टे— नित्यस्येति, तस्य= नित्यसुखविषयकज्ञानस्य । यतो हेतोः । तत्= नित्यसुखविषयकं ज्ञानम् ॥

नन्वऽनित्यस्य कारणं भवति न तु नित्यस्यापि नित्यसुखविषयकं च ज्ञानं सुखवन्नित्यमेवेति न तत्कारणवचनापत्तिरित्याशङ्कते— सुखवदिति । उत्तरमाह— संसारेति, सुखतज्ज्ञानयोर्नित्यत्वे हि संसारावस्थायामपि नित्यसुखज्ञानं प्राप्तं तथा च संसारस्थस्य मुक्तेनाऽविशेषः= बद्धमुक्तयोः साम्यं प्राप्तम्- नित्यसुखज्ञानवत्त्वादित्यर्थः । स्वयं व्याचष्टे— यथेति, तत्संवेदनेन= नित्यसुखज्ञानेन । सन्नित्येन— सता नित्येन च उपपन्नः= युक्तः किं वा ' मुक्तः सत् ' इत्यन्वयः । संसारस्थोपि । तथा= नित्यसुखज्ञानेनोपपन्नः प्रसज्यते । उक्ते हेतुमाह— उभयस्येति, उभयस्य= सुखतज्ज्ञानयोर्नित्यत्वात् संसारावस्थायामपि प्राप्तिः स्पष्टैव ॥

अस्तु संसारावस्थायामपि नित्यसुखज्ञानमित्याशङ्क्याह— अभ्यनुज्ञाने इति, संसारावस्थायामपि नित्यसुखज्ञानस्य स्वीकारे कृते सांसारिकेण धर्माधर्मफलेन दुःखादिना साहचर्यम्= यौगपद्यं नित्यसुखज्ञानस्य स्यात् न च यौगपद्यमुपलभ्यते इति प्रत्यक्षविरोध इति न नित्यसुखज्ञानोपपत्तिरित्यर्थः । स्वयं व्याचष्टे— यदिदमिति । उत्पत्तिस्थानेषु= देहादिषु । पर्यायेण= क्रमेण । तस्य= धर्माधर्मफलदुःखादेः । नित्यसंवेदनस्य= नित्यसुखज्ञानस्य । यौगपद्यं गृह्येत संसारावस्थायामपीत्यर्थः । यौगपद्यग्रहमुपपादयति— नेति, संसारावस्थायां तादृशसुखस्याप्यभावो नास्ति अनभिव्यक्तिः= तादृशसुखज्ञानस्याप्यभावो नास्ति— उभयस्य= तादृशसुखतज्ज्ञानयोर्नित्यत्वात् तथा च संसारावस्थायामपि मोक्षसुखानुभवः प्राप्तो न चोपलभ्यते इति न नित्यसुखज्ञानोपपत्तिरित्यर्थः ॥

ननु नित्यसुखस्य ज्ञानं न नित्यं येन संसारावस्थायामापद्येतेत्याशङ्क्याह— अनित्यत्वे इति, सुखज्ञानस्यानित्यत्वे तस्य हेतुवचनम्= कारणं वक्तव्यम्— अनित्यस्य कारणजन्यत्वनियमात् मोक्षावस्थायां च तादृशकारणं नोपपद्यते इति न नित्यसुखस्य ज्ञानसंभव इत्यर्थः । स्वयं व्याचष्टे— अथेति । उत्तरमाह— यत इति, मोक्षावस्थायां यतो हेतोर्ज्ञानमुत्पद्यते सुखस्य स हेतुर्वक्तव्यः न च वक्तुं शक्यते इत्यर्थः ॥

आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् ॥

आत्ममनस्संयोगो हेतुरितिचेत् ?. एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति ॥

धर्मस्य कारणवचनम् ॥

यदि धर्मो निमित्तान्तरम् ?. तस्य हेतुर्वाच्यो यत उत्पद्यते इति ॥

योगसमाधिजस्य कार्यावसायविरोधात् प्रक्षये संवेदननिवृत्तिः ॥

यदि योगसमाधिजो धर्मो हेतुः ?. तस्य कार्यावसायविरोधात् प्रक्षये संवेदनमत्यन्तं निवर्ततेति ॥

असंवेदने चाऽविद्यमानेनाऽविशेषः ॥

यदि धर्मक्षयात् संवेदनोपरमे नित्यं सुखं न संवेद्यते ? इति. किं विद्यमानं न संवेद्यते ? अथाऽविद्यमानमिति ?, नानुमानं विशिष्टेऽस्तीति ॥.

---

नन्वात्ममनस्संयोग एव तादृशज्ञानस्य हेतुरिति नानुपपत्तिरित्याशङ्क्याह— आत्मेति, आत्ममनस्संयोगस्य हि विषयसांनिध्यादिनिमित्तान्तरसहितस्यैव ज्ञानहेतुत्वं दृष्टं न तु स्वतन्त्रस्य अन्यथाऽऽत्ममनस्संयोगस्तु संसारावस्थायामस्त्येवेति संसारावस्थायामपि नित्यसुखस्य ज्ञानं स्यात्, मोक्षावस्थायां च नोक्तं निमित्तान्तरं संभवतीति न नित्यस्यापि सुखस्य ज्ञानं संभवतीत्यर्थः। स्वयं व्याचष्टे— आत्मेति। हेतुः= सुखज्ञानहेतुः। उत्तरमाह— एवमपीति, तस्य= आत्ममनस्संयोगस्य। स्पष्टमन्यत् ॥

ननु तादृशं निमित्तान्तरं धर्म एव तथा च धर्मसहित आत्ममनस्संयोगो मोक्षावस्थायां सुखज्ञानस्य हेतुरिति अनित्यज्ञानस्योत्पत्तिर्नानुपपन्नेत्याशङ्क्याह— धर्मस्येति, तादृशधर्मस्यापि कारणवचनम्= कारणं वक्तव्यं येन मोक्षावस्थायां स धर्म उत्पद्यते न च धर्मकारणं मोक्षावस्थायां संभवतीति न धर्मोपि संभवतीत्यर्थः। स्वयं व्याचष्टे— यदीति। उत्तरमाह— तस्येति, तस्य= धर्मस्य ॥

ननु न कर्मजन्यो धर्म आत्ममनस्संयोगस्य सहकारी येन तस्य हेतुवचनमापद्येत किं तु मोक्षप्रयोजकीभूतो य आत्मसाक्षात्कारस्तत्कारणीभूतो यो योगसमाधिस्तज्जन्यो धर्मो मोक्षावस्थायामपि वर्तते तस्याऽक्षयत्वादिति तादृशो योगसमाधिजो धर्म एवात्ममनस्संयोगस्य सहकारीति न तत्कारणवचनापत्तिरिति आत्ममनस्संयोगेन नित्यसुखस्य ज्ञानं मोक्षावस्थायामुपपन्नमित्याशङ्क्याह— योगेति, कार्यावसायस्य= प्रलयस्य विरोधात्= प्रलये किमपि जन्यं स्थातुं न शक्नोतीति प्रलयकाले योगसमाधिजन्यस्यापि धर्मस्य प्रक्षये= विनाशे जाते नित्यसुखसंवेदनस्य निवृत्तिः प्राप्तेति प्रलयकाले मुक्तस्य नित्यसुखज्ञानं नोपपद्यते इत्यर्थः। स्वयं व्याचष्टे— यदीति, हेतुः= आत्ममनस्संयोगसहकारी। तस्य= योगसमाधिजधर्मस्य। कार्यावसायविरोधात्= प्रलयविरोधात्= प्रलयानुरोधात् प्रक्षये= विनाशे जाते तत्कार्यभूतं नित्यसुखस्य संवेदनमपि प्रलये निवर्ततैव न तिष्ठेदित्यर्थः ॥

ननु सहकारिभूतस्य योगसमाधिजन्यस्य धर्मस्य प्रलयकाले परिक्षये सति नित्यसुखसंवेदनं मा भवतु नैतावता नित्यसुखस्याभावः प्राप्नोतीत्याशङ्क्याह— असंवेदने इति, एवं हि नित्यसुखस्याऽसंवेदने नित्यसुखस्याविद्यमानेनाऽविशेषः= तुल्यत्वं प्राप्तम्= अविद्यमानत्वम्= अभाव एव प्राप्त इत्यर्थः— ज्ञायमानस्यैव सुखस्य पुरुषार्थत्वसंभवात् सत्त्वसंभवाच्च। स्वयं व्याचष्टे— यदीति, धर्मक्षयात्= उक्तयोगसमाधिजधर्मक्षयात्। उक्ते द्विधा विकल्पयति— किमिति। संवेदनाभावो विद्यमानस्यापि भवति अविद्यमानस्यापि भवति तत्र विशिष्टे= विद्यमानस्यैव नित्यसुखस्य संवेदनाभावोयमितिविशेषपक्षेऽनुमानं न संभवतीति अविद्यमानस्यापि नित्यसुखस्य संवेदनाभावः प्राप्तस्तथा च सुखस्याविद्यमानत्वेनाऽनित्यत्वं प्राप्तं तादृशानि-

अप्रक्षयश्च धर्मस्य निरनुमानम्- उत्पत्तिधर्मकत्वात्[१२] ॥

योगसमाधिजो धर्मो न क्षीयते इति नास्त्यनुमानम्. उत्पत्तिधर्मकमऽनित्यमिति विपर्ययस्य त्वऽनुमानम् । यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुमेयं नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम्= यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च संवेदनस्य तूपरमो नास्ति- कारणस्य नित्यत्वात् तथा संसारस्थस्यापीति. एवं च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति ॥

शरीरादिसंबन्धः प्रतिबन्धहेतुरितिचेत् ?. न- शरीरादीनामुपभोगार्थत्वात्. विपर्ययस्य चाऽननुमानात्[१३] ॥

स्यान्मतम्- संसारावस्थस्य शरीरादिसंबन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकः तेना-

---

त्यसुखस्य मोक्षावस्थायां संवेदनस्वीकारे मुक्तस्य बद्धतुल्यत्वं स्यादित्यर्थः । किं चाविद्यमानस्य सुखस्यासंवेदनपक्षे उक्तस्य मोक्षकालिकसुखस्याभाव एव सिद्ध इति दुःखनिवृत्तिरेवापवर्ग इति सिद्धम् ॥

सहकारीभूतस्योक्तयोगसमाधिजधर्मस्याऽविनाशित्वं चानुपपन्नं येन प्रलयकालेपि नित्यसुखसंवेदनमुपपद्येतेत्यभिप्रायेणाह- अप्रक्षयश्चेति, धर्मस्य= उक्तयोगसमाधिजधर्मस्य अप्रक्षयः= अविनाशित्वं निरनुमानम्= अनुमानसाध्यं नास्ति- तस्य धर्मस्योत्पत्तिधर्मकत्वात्= कार्यत्वात्. यच्च कार्यं तद् विनाश्येव दृष्टं धर्मश्चायं योगसमाधिजन्यत्वात् कार्यमेव कार्यत्वाच्च विनाशी तथा च तस्य धर्मस्य प्रलये विनाशावश्यम्भावात् न तत्साहाय्येन मुक्तस्य नित्यसुखसंवेदनमुपपद्यते इत्यर्थः । स्वयं व्याचष्टे- योगेति, इति= इत्यत्र । योगसमाधिजधर्मस्य विनाशित्वेऽनुमानमाह- उत्पत्तीति, उत्पत्तिधर्मकम्= कार्यं सर्वमनित्यमेव दृष्टं घटादिवदिति योगसमाधिजमधर्मोप्यनित्यः कार्यत्वादिति विपर्ययस्य= योगसमाधिजधर्मविनाशित्वस्यानुमानं संभवति । विपक्षे बाधकमाह- यस्येति, यस्य मते मोक्षावस्थायां नित्यसुखसंवेदनस्य उपरमः= विनाशो नास्ति तेन संवेदनहेतोरपि नित्यत्वमनुमेयम्= वक्तव्यम्- संवेदनहेतुर्नित्यः संवेदनस्य नित्यत्वादिति, संवेदनहेतौ च नित्ये= संवेदनहेतोर्नित्यत्वे च मुक्तबद्धयोरविशेष एव स्यात्- सुखमपि नित्यं तत्संवेदनमपि नित्यं संवेदनकारणमपि नित्यमिति तादृशं सुखसंवेदनं मुक्तवद् बद्धस्यापि स्यादेव- नित्यत्वात् प्रतिबन्धकाभावाच्च किं वा विपर्यये कारणाभावादित्यर्थः । मुक्तसंसारस्थयोरुक्तमविशेषमेव विशदयति- यथेति, तत्संवेदनहेतुः= नित्यसुखसंवेदनहेतुः, उपरमः= विनाशः, कारणस्य= नित्यसुखसंवेदनकारणस्य, तथा= मुक्तवद् बद्धस्यापि नित्यसुखसंवेदनं प्राप्तं सुखस्य तत्संवेदनस्य संवेदनकारणस्य च त्वया नित्यत्वस्वीकारादिति बद्धमुक्तयोरविशेषः प्राप्तः । उपसंहरति- एवं चेति, एवम्= बद्धस्यापि नित्यसुखसंवेदने प्राप्ते तादृशं नित्यसुखसंवेदनं संसारावस्थायामपि धर्माधर्मफलभूतेन सुखदुःखसंवेदनेन सहोपलभ्येत न चोपलभ्यते इति न नित्यसुखसंवेदनमुपपद्यते इति न मुक्तस्यापि नित्यसुखसंवेदनमुपपद्यते इत्यर्थः । तस्य नित्यसुखसंवेदनस्य साहचर्यमित्यन्वयः ॥

ननु नित्यसुखसंवेदनस्य शरीरादिसंबन्धः प्रतिबन्धहेतुः= प्रतिबन्धकोस्तीति तादृशशरीरादिसंबन्धादेव बद्धस्य नित्यसुखसंवेदनापत्तिर्नास्तीत्याशङ्कते- शरीरादीति । परिहरति- नेति । परिहारहेतुमाह- शरीरादीनामिति, शरीरादीनामुपभोगार्थत्वेन नित्यसुखसंवेदनप्रतिबन्धकत्वं नोपपद्यते न हि भोगसाधनीभूतं शरीरादिकं भोगप्रतिबन्धकं संभवति- तत्साधनस्य तत्प्रतिबन्धकत्वासंभवात्. नित्यसुखसंवेदनं च भोग एव । विपर्ययस्य= विपर्यये= तत्साधनस्य तत्प्रतिबन्धकत्वे= शरीरादीनां नित्यसुखसंवेदनलक्षणभोगप्रतिबन्धकत्वे किं वा शरीररहितस्य भोगे अननुमानात्= अनुमानाभावात् शरीरादिसंबन्धस्य भोगप्रतिबन्धकत्वं नोपपद्यते येन बद्धस्य नित्यसुखसंवेदनापत्तिर्न स्यादित्यर्थः ।

ऽविशेषो नास्तीति?, एतच्चायुक्तम्– शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करीष्यन्तीत्यनुपपन्नम् । न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति ॥

इष्टाधिगमार्था प्रवृत्तिरितिचेत् ?. न– अनिष्टोपरमार्थत्वात्[१]

इदमनुमानम्– इष्टाधिगमार्थौ मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणां नोभयमनर्थकमिति । एतच्चायुक्तम्– अनिष्टोपरमार्थौ मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति । नेष्टमनिष्टेनाऽननुविद्धं संभवतीति इष्टमप्यनिष्टं संपद्यते. अनिष्टहानाय घटमान इष्टमपि जहाति– विवेकहानस्याऽशक्यत्वात् ॥

दृष्टातिक्रमश्च देहादिषु तुल्यः[५] ॥

यथा दृष्टमऽनित्यं सुखं परित्यज्य नित्यसुखं कामयते, एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः, साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति ॥

---

स्वयं व्याचष्टे– स्यान्मतमिति, शरीरादिसंबन्धस्य नित्यसुखसंवेदनहेतुप्रतिबन्धकत्वे नित्यसुखसंवेदनप्रतिबन्धकत्वमर्थादेव प्राप्तम् । पर्यवसितमाह– तेनेति, तेन= तस्मात् बद्धमुक्तयोरविशेषः= साम्यं नास्ति यतो बद्धस्य शरीरादिसंबन्धात् नित्यसुखसंवेदनापत्तिर्नास्ति मुक्तस्य च नित्यसुखसंवेदनमुपपद्यते– प्रतिबन्धकीभूतशरीरादिसंबन्धस्याभावादित्यर्थः । परिहरति– एतच्चेति । परिहारहेतुमाह– शरीरादय इति, अनुपपन्नम्– भोगसाधनस्य भोगप्रतिबन्धकत्वासंभवात् । विपक्षे बाधकमाह– न चेति, अस्ति= भवति । यद्यशरीरस्याप्यात्मनो भोगः स्यात्तदा शरीरादिसंबन्धस्य भोगप्रतिबन्धकत्वं कल्प्येतापि न चैवमस्ति सशरीरस्यैव भोगसंभवात् नित्यसुखसंवेदनस्यापि भोगत्वादेवेति मुक्तवद् बद्धस्यापि सुखसंवेदनं स्यादेव न चोपलभ्यते इति न मुक्तस्यापि सुखसंवेदनमुपपद्यते इत्यर्थः । प्रत्युताशरीरत्वात् मुक्तस्यैव सुखसंवेदनं नोपपद्यते– सशरीरस्यैव सुखसंवेदनादिलक्षणभोगसंभवादिति भावः ॥

ननु इष्टाधिगमार्था= इष्टप्राप्त्यर्था प्रवृत्तिर्भवतीति प्रसिद्धमेव तत्र यदि मुक्तस्य नित्यसुखसंवेदनलक्षणेष्टस्य प्राप्तिर्न स्यात्तदा मोक्षसाधनेषु प्रवृत्तिर्न स्यात् भवति च प्रवृत्तिरिति मुक्तस्य नित्यसुखसंवेदनलक्षणेष्टस्य प्राप्तिरनुमीयते इत्याशङ्कते– इष्टेति । परिहरति– नेति । परिहारहेतुमाह– अनिष्टेति, मोक्षसाधनेषु प्रवृत्तेरनिष्टोपरमार्थत्वात्= अनिष्टनिवृत्त्यर्थत्वात् अनिष्टनिवृत्त्यर्थमपि प्रवृत्तिर्दृश्यते तथा च संसारदुःखलक्षणानिष्टस्य निवृत्त्यर्थमेव मोक्षसाधनेषु प्रवृत्तिर्भवतीति न तादृशप्रवृत्तेर्नित्यसुखसंवेदनलाभं विनाऽनुपपत्तिरित्यर्थः । स्वयं व्याचष्टे– इदमति, मुक्तो नित्यसुखसंवेदनविशिष्टो मोक्षसाधनेषु पूर्वं प्रवृत्तत्वात् संप्रतिपन्नवत् इति । मुमुक्षूणां मोक्षोपदेशो मोक्षसाधनेषु प्रवृत्तिश्चेत्युभयं नाऽनर्थकं तस्मादिष्टाधिगमार्थम्= नित्यसुखसंवेदनलाभार्थमिति मुक्तस्य नित्यसुखसंवेदनं सिद्धमित्यर्थः । परिहरति– एतच्चेति । परिहारहेतुमाह– अनिष्टेति । स्वाभिप्रायमाह– नेष्टमिति, यद् यदिष्टं तदऽनिष्टेन= दुःखेनाऽननुविद्धम्= रहितं न संभवतीति तादृशानिष्टसंसर्गादिष्टमप्यनिष्टं संपद्यते यथा मधुसंपृक्तमन्नं विषसंसर्गादनिष्टं संपद्यते तत्रानिष्टहानाय= अनिष्टत्यागाय घटमानः= प्रवर्तमानः पुरुष इष्टमपि विवशं जहाति– विवेकहानस्य= विवेकेन हानस्य= केवलानिष्टमात्रपरित्यागस्याऽशक्यत्वात् तस्मात् संसारदुःखनिवृत्त्यर्थं सुखमपि त्याज्यमेवेति न मुक्तस्य नित्यसुखसंवेदनमुपपद्यते इत्यर्थः ॥

वेदान्तमते दोषान्तरमाह– दृष्टेति, यद् यत्सुखं तद् अनित्यमेव दृष्टमिति दृष्टस्यातिक्रमो मोक्षावस्थायां नित्यसुखस्वीकारः स च दृष्टातिक्रमो देहादिषु तुल्यः= मुक्तस्य सुखवद् देहादयोपि नित्याः स्वीकार्या इति न च मुक्तस्य नित्यदेहादिमत्त्वं स्वीक्रियते– देहादीनामनित्यत्वनियमदर्शनादिति. तथा

उपपत्तिविरुद्धमितिचेत् ?. समानम्[१६] ॥

देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानम्= सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति ॥

आत्यन्तिके च संसारदुःखाभावे सुखवचनाद् आगमेपि सत्यऽविरोधः[१७] ॥

यद्यपि कश्चिदागमः स्याद् मुक्तस्याऽऽत्यन्तिकं सुखमिति ?. सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते- दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोके इति ॥

नित्यसुखरागस्याऽप्रहाणे मोक्षाधिगमाभावः-

रागस्य बन्धनसमाज्ञानात्[१८] ॥

यद्ययं मोक्षे नित्यं सुखमभिव्यज्यते इति नित्यसुखरागेण मोक्षाय घटमानः ?. न मोक्षमऽधिगच्छेत्= नाधिगन्तुमर्हतीति- बन्धनसमाज्ञातो हि रागः न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यते इति ॥

---

च मुक्तस्य नित्यसुखमपि न संभवति- सुखस्याप्यनित्यत्वनियमदर्शनादित्यर्थः । स्वयं व्याचष्टे- यथेति, कामयते= कल्पयति वेदान्ती । अतिक्रम्य= देहादीनामनित्यत्वनियममुल्लङ्घ्य= परित्यज्य । विपक्षे बाधकमाह- साधीय इति, आक्षेपवाक्यमिदम् , एवम्= मुक्तस्य नित्यदेहादिमत्त्वस्वीकारे ऐकात्म्यम्= अद्वैतं न संभवति- नित्यदेहादिभिरेव सद्वितीयत्वापत्तेरित्याशयः ॥

ननु देहादीनां नित्यत्वं अनित्यत्वनियमादुपपत्तिविरुद्धमिति न मुक्तस्य नित्यदेहादिमत्त्वापत्तिरित्याशङ्कते- उपपत्तीति । उत्तरमाह- समानमिति, सुखस्यापि नित्यत्वमुपपत्तिविरुद्धमेव- अनित्यत्वनियमदर्शनादिति समानमेवेति न मुक्तस्य नित्यसुखसंवेदनमुपपद्यते इत्यर्थः । स्वयं व्याचष्टे- देहादीनामिति, प्रकृतं सामान्यमाह- सुखस्यापीति, प्रमाणविरुद्धम्= अनित्यत्वप्रत्यक्षविरुद्धम् । तस्मान्न मुक्तस्य नित्यं सुखं संभवतीत्यर्थः ॥

ननु " स स्वराड् भवति " इत्याद्यागमेन मुक्तस्य सुखमुच्यते इति मुक्तस्य सुखवत्त्वं प्रामाणिकमेवेत्याशङ्क्याह- आत्यन्तिके इति, मुक्तस्य सुखबोधके आगमे सत्यपि विरोधो नास्ति- यतस्तादृशागमेन मोक्षावस्थायामात्यन्तिकस्य संसारदुःखाभावस्य बोधनार्थमेव मुक्तस्य सुखमुच्यते. लोकेपि दुःखाभावे सुखवचनमुपलभ्यते यथा भारापगमे वदति सुखी संवृत्तोहमिति, मुक्तस्य दुःखनिवृत्तिमात्रकथने दुःखाभाव आत्यन्तिको न सिध्येदिति आत्यन्तिकस्य दुःखाभावस्य बोधनार्थमेवागमेन सुखमुच्यते इत्यर्थः । स्वयं व्याचष्टे- यदीति, यदि ' मुक्तस्यात्यन्तिकं सुखं भवति ' इति बोधकः कश्चिदागमोपि स्यात्तदापि तादृशागमे सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इति लक्षणावृत्त्या तादृश आगम उपपद्यते एवेति न तादृशागमविरोध इति न मुक्तस्य नित्यसुखसंवेदनापत्तिः । उक्ते विनिगमनामाह- दृष्ट इति, लोके यथा भारापगमे वदति सुखी संवृत्तोहमिति अत्र दुःखाभावबोधनार्थमेव सुखशब्दः प्रयुक्तो न तु सुखबोधनार्थ एवमेव मुक्तसुखबोधकागमेपि सुखशब्दो दुःखाभावपर इत्यर्थः ॥

उक्तवेदान्तमतेऽनुपपत्त्यन्तरमाह— नित्येति, वेदान्तिना हि मोक्षावस्थायां प्राप्स्यमाणस्य नित्यसुखस्य रागेणैव मोक्षसाधनेषु प्रवृत्तिर्वक्तव्या तत्र मुमुक्षोर्नित्यसुखविषयकरागस्य अप्रहाणे= अनिवृत्तौ मोक्षाधिगमाभावः= मोक्षप्राप्त्यऽभावः प्राप्तः- रागस्य बन्धनसमाज्ञानात्= बन्धनरूपत्वात् बन्धने सति च मोक्षासंभवात् नित्यसुखरागस्य च मोक्षकालेपि वक्तव्यत्वात् तत्प्राप्तिं विना तद्रागनिवृत्तेरसंभवात् . किं वा नित्यसुखप्राप्तौ नित्यसुखरागवृद्धेरपि संभवादित्यर्थः । स्वयं व्याचष्टे- यद्ययमिति, मोक्षे= मोक्षाव-

प्रहाणे नित्यसुखरागस्याऽप्रतिकूलत्वम्[१] ॥

अथास्य नित्यसुखरागः प्रहीयते तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति ?. यद्येवं ? मुक्तस्य नित्यं सुखं भवति अथापि न भवति. नाऽस्योभयोः पक्षयोर्मोक्षाधिगमो विकल्पते इति ॥ २२ ॥

॥ इति प्रमेयभाष्यम् ॥

---

स्थानवत एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते—

समानाऽनेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यऽव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥

---

स्थायां नित्यं स्वरूपभूतं सुखमभिव्यज्यते इति नित्यसुखस्य रागेण यद्ययं मुमुक्षुर्मोक्षाय घटमानः= घटते= प्रवर्तते= प्रवृत्तिं कृतवान् ? तदायं मोक्षं नाधिगच्छेत्= नाधिगन्तुम्= न प्राप्नुमर्हति हि= यतो रागो बन्धनसमाज्ञातः= बन्धनरूप एव बन्धने च सति न कश्चिदपि मुक्त इत्युपपद्यते= संभवति— बन्धमोक्षयोरेकत्र विरुद्धत्वादित्यन्वयः ॥

ननु मोक्षसाधनेषु नित्यसुखरागेण प्रवृत्तस्यापि मोक्षसाधनानुष्ठानमाहात्म्यादस्य नित्यसुखरागोपि पश्चात् प्रहीयते इति नित्यसुखरागस्य प्रहाणे= परित्यागे कृते ह्यप्रतिकूलत्वम्= मोक्षप्रतिकूलत्वं न संभवतीति न मोक्षानुपपत्तिरित्याशङ्कते— प्रहीणेति। वार्तिककारस्तु— प्रहीणनित्यसुखरागस्य अप्रतिकूलं दुःखहानमात्रं मोक्षे भवतीत्येवमभिप्रायेण वर्णयांचकार। स्वयं व्याचष्टे— अथेति, अस्य= मुमुक्षोः। तस्मिन्= नित्यसुखरागे। प्रतिकूलः= मोक्षप्रतिबन्धकः, नित्यसुखरागस्य नष्टत्वात् नष्टस्य च प्रतिबन्धकत्वासंभवादित्यर्थः। स्वाभिप्रायमाह— यद्येवमिति, यदि एवम्= मुमुक्षोर्नित्यसुखरागो नष्टस्तदा मुक्तस्य नित्यं सुखं भवति अथापि= किं वा न भवतीति वक्तव्यं तत्राऽस्य= वेदान्तिनो मते नित्यं सुखं भवति न वा भवतीति उभयोरपि पक्षयोर्मोक्षाधिगमो न विकल्पते= नोपपद्यते यतो नित्यसुखाभिव्यक्तिपक्षे तु पूर्वं दोषाः प्रदर्शिता एवेति मोक्षानुपपत्तिः, नित्यसुखाभिव्यक्त्यभावपक्षे तु नित्यसुखरहितस्य वेदान्तिना मोक्षत्वं न स्वीक्रियते इति मोक्षानुपपत्तिरित्याशयः प्रतिभाति। वाचस्पतिमिश्रास्त्वेवं वर्णयन्ति— "यद्येवमित्यादेर्भाष्यस्यायमर्थः— एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रसक्तस्य यदि नित्यं सुखं भवति कामं भवतु मा भूत् (वा) उभयोरपि पक्षयोर्वीतरागप्रवृत्तौ न मोक्षाधिगमो विकल्पते= न संदिग्धो भवतीत्यर्थः" इति, अत्र पक्षे अस्य= मुमुक्षोरित्यर्थः ॥ २२ ॥

प्रमेयनिरूपणानन्तरं संशयलक्षणमवतारयति— स्थानवत इति, स्थानवतः= क्रमवतः= क्रमेण प्राप्तस्य। तर्हि= प्रमेयनिरूपणानन्तरम्। तत्= संशयलक्षणम्। समानेति— विशेषापेक्षः= पुरुषत्वादिविशेषधर्मनिर्णयापेक्षः किं वा वक्ष्यमाणा विशेषरूपेणाऽपेक्षा= बुद्धिविशेषो यत्र स विशेषापेक्ष एतादृशो विमर्शः= किमिदमित्याकारकमनिश्चयात्मकं ज्ञानं संशय इतिलक्षणम्। संशयस्य चत्वारि कारणान्याह— समानेति, समानाः= सदृशा अनेके च ये धर्मास्तेषामुपपत्तेः= उपलब्ध्या संशयो जायते यथा स्थाणुपुरुषयोरारोहपरिणाहादीनां समानानेकधर्माणामुपलब्ध्या संशयो जायते—'स्थाणुर्वा पुरुषो वा इति, विप्रतिपत्तेः= परस्परविरुद्धसिद्धान्तज्ञानादपि संशयो जायते यथा केचिदात्मनो विभुत्वं वदन्ति केचिदणुत्वं तत्रैतादृशविरुद्धसिद्धान्तज्ञानात् संशयो जायते—'आत्मा विभुर्वाऽणुर्वा' इति, उपलब्धेरव्यवस्थातः= अनियमादपि संशयो जायते यथा सदेवोपलभ्यते इति नियमो नास्ति किं त्वऽसदपि शुक्तिरजतादिकमुपलभ्यते= ज्ञायते इति क्वचिद् रजतज्ञाने जाते सत्त्वासत्त्वनिर्णायकप्रमाणाभावात् संशयो जायते— किमिदं दृश्यमानं रजतं सदऽसद्वेति, अनुपलब्धेरव्यवस्थातः= अनियमादपि संशयो जायते यथाऽसत

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति= स्थाणुपुरुषयोः समानं धर्ममाऽऽरोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यनन्तरं नावधारयति तद् अनवधारणं ज्ञानं संशयः। 'समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभे' इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते तेन विशेषापेक्षो विमर्शः संशयः।

अनेकधर्मोपपत्तेरिति– समानजातीयमऽसमानजातीयं चाऽनेकं तस्यानेकस्य धर्मोपपत्तेः– विशेषस्योभयथा दृष्टत्वात्= समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते (यथा) गन्धवत्त्वात् पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च। अस्ति च शब्दे विभागजत्वं विशेषः तस्मिन् द्रव्यं गुणः कर्म वेति संदेहः– विशेषस्योभयथा दृष्टत्वात्= किं द्रव्यस्य सतो

---

एवानुपलब्धिर्भवतीति नियमो नास्ति किं तु सतोप्यनुपलब्धिर्भवति यथा पृथिव्यन्तर्गतस्य सलिलस्येति कचिदनुपलभ्यमाने पदार्थे संशयो जायते– किमसन्नोपलभ्यते– असत्वात् किं वा सन्नोपलभ्यते– प्रतिबन्धकादिति समानानेकधर्मोपपत्त्यादिकारणैर्जायमानो विशेषापेक्षो विमर्श एव संशयो यथा 'स्थाणुर्वा पुरुषो वा' इति इतिसूत्रान्वयः।

व्याचष्टे– समानेति, इदं च संशयलक्षणम्। उदाहरति– स्थाण्विति। समानधर्ममाह— आरोहेति, आरोहः= ऊर्ध्वत्वम्, परिणाहः= विस्तारः= स्थूलत्वम्, तयोः= स्थाणुपुरुषयोः पूर्वदृष्टं विशेषम्= स्थाणुत्वपुरुषत्वादिविशेषधर्मं किं वा पुरुषत्वादिव्याप्यधर्मं करचरणादिमत्त्वं बुभुत्समानः= जिज्ञासमानोपि अनन्तरम्= तादृशसमानधर्मज्ञानानन्तरं यत् किंस्वित्= किमिदमिति विशेषरूपं नावधारयति= न निश्चिनोति किं वा किंस्विदितिज्ञानानन्तरं यन्नावधारयति तदेवाऽनिश्चयात्मकं ज्ञानं संशय इत्यन्वयः। अपेक्षास्वरूपमाह— समानमिति, उपसंहरति– तेनेति, तेन= उक्तापेक्षायाः संशयप्रवर्तकत्वेन, विशेषापेक्षः= विशेषरूपेणापेक्षात्रेति विशेषापेक्षः किं वा विशेषस्य= विशेषधर्मस्याऽपेक्षा= अप्रतीतिर्जिज्ञासा वाऽत्रेति विशेषापेक्षो विमर्श एव संशय इत्यन्वयः।

अनेकधर्मोपपत्त्या संशयमुदाहरति— अनेकेति। अनेकशब्दं धर्मिपरमाह– समानेति, यथा पृथिव्याः जलादिकं द्रव्यत्वेन समानजातीयं गुणादिकं चाऽसमानजातीयं द्रव्यत्वानाक्रान्तत्वात्. अनेकस्य= समानजातीयाऽसमानजातीययोर्ये धर्मास्तेषामुपपत्तेः= उपलब्धेः संशयो जायते इत्यन्वयः। हेतुमाह– विशेषस्येति, उभयथा= समानजातीयेभ्योऽसमानजातीयेभ्यश्च विशेषस्य= व्यवच्छेदस्य किं वा व्यवच्छेदकधर्मविशिष्टत्वस्य दृष्टत्वात्= दृश्यमानत्वात्= निरूप्यमाणत्वात् तादृशविशेषनिरूपणकारणीभूतश्च संशयः समानाऽसमानजातीयधर्मोपपत्तेर्जायते इति प्राप्तम् अत एव समानाऽसमानजातीयेभ्यो विशेषस्य निरूपणात् स संशयो निवर्तते इत्याशयः। उक्तमुदाहरति– समानेति, समानजातीयेभ्योऽबादिभ्योऽसमानजातीयेभ्यश्च गुणादिभ्यः पृथिवी गन्धवत्त्वात्= गन्धवत्त्वधर्मेण विशिष्यते= व्यवच्छिद्यते– गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वेन जलादिषु गुणादिषु चावृत्तित्वात्। तत्र गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वेन गन्धवत्त्वात् पृथिव्याः द्रव्यत्वादिनिश्चयो न संभवतीति किं पृथिवी द्रव्यं वा गुणादिरूपा वेति संशयो जायते तत्र गन्धस्य गुणत्वात् गुणस्य च द्रव्यमात्रवृत्तित्वात् गन्धत्त्वेन पृथिव्या द्रव्यत्वं निश्चीयते। प्रकृतमाह– अस्तीति, विभागजत्वं शब्दमात्रवृत्तित्वात् शब्दस्य विशेषः= विशेषधर्मः, यदि विभागजत्वं द्रव्यादिषु कचिदपि स्यात्तदा तद्दृष्टान्तेन विभागजत्वात् शब्दस्य द्रव्यत्वादिनिश्चयः स्यादपि न चैवमस्तीति शब्दे द्रव्यत्वादिसंशयो जायते तदाह– तस्मिन्निति, तस्मिन्= शब्दे। उक्ते हेतुमाह– विशेषस्येति, उभयथा= समानजातीयेभ्यो गुणेभ्योऽसमानजातीयेभ्यश्च द्रव्यादिभ्यो विशेषस्य दृश्यमानत्वात् विभागजत्वस्य शब्दमात्रवृत्तित्वेन अन्यत्रावृत्तित्वात् तस्मात् शब्दे द्रव्यत्वादिसंदेहः। उक्तं विशदयति– किमिति, किं द्रव्यस्य सतः= द्रव्यभूतस्य शब्दस्य गुणकर्मभ्यो विशेषः= व्यतिरेकोस्ति?

गुणकर्मभ्यो विशेषः ?. आहोस्विद् गुणस्य सत इति ?. अथ कर्मणः सत इति ?, विशेषापेक्षा= अन्यतमस्य व्यवस्थापकं धर्मं नोपलभे इति बुद्धिरिति ।

विप्रतिपत्तेरिति– व्याहतमेकार्थदर्शनं विप्रतिपत्तिः= व्याघातः= विरोधः= असहभाव इति, 'अस्त्यात्मा' इत्येकं दर्शनम् 'नास्त्यात्मा' इत्यपरम्. न च सद्भावाऽसद्भावौ सहैकत्र संभवतः. न चान्यतरसाधको हेतुरुपलभ्यते तत्र तत्त्वानवधारणं संशय इति ।

उपलब्ध्यव्यवस्थातः खल्वपि– सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु चाविद्यमान-मुदकमिति. अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्याऽनुपलब्धेः 'किं सदुपल-भ्यते ? अथाऽसत् ?' इति संशयो भवति ।

अनुपलब्ध्यव्यवस्थातः– सच्च नोपलभ्यते मूलकीलकोदकादि असच्चानुत्पन्नं निरुद्धं वा. ततः क्वचिदनुपलभ्यमाने संशयः– किं सन्नोपलभ्यते उताऽसन्निति संशयो भवति, विशेषापेक्षा

---

किं वा गुणस्य सतः= गुणभूतस्य द्रव्यकर्मभ्यो विशेषोस्ति ? किं वा कर्मणः सतः= कर्मभूतस्यं शब्दस्य द्रव्यगुणेभ्यो विशेषोस्तीति ? संदेह इत्यन्वयः, शब्दस्य द्रव्यादिषु कस्मिन्नन्तर्भावोस्तीति संशयो जायते इतिप्रघट्टकार्थः । संशयकारणीभूतां विशेषापेक्षामाह– विशेषापेक्षेति, अन्यतमस्य= द्रव्यगुणकर्मत्वानामन्यतमस्य द्रव्यत्वादेर्व्यवस्थापकधर्मज्ञानाभावादेव शब्दे द्रव्यत्वादिसंशयो जात इत्यर्थः । व्यवस्थापकधर्माभावविषयकं ज्ञानमेव विशेषापेक्षेत्यन्वयः । तत्र शब्दो न द्रव्यं गुणाश्रयत्वा-भावात्. नापि कर्म संयोगविभागजनकत्वाभावात्. नापि सामान्यादिरूपो विनाशित्वात्. नाप्यभावः भावत्वेन प्रतीयमानत्वादिति पारिशेष्याद् गुणत्वनिश्चयो भवति– शब्दो गुणः विभागजत्वाद् विभागजवि भागवदिति संक्षेपः ॥

विप्रतिपत्तेः संशयोत्पत्तिमुदाहरति– विप्रतिपत्तेरिति । विप्रतिपतिपदार्थमाह– व्याहतमिति, व्याहतम्= परस्परविरुद्धम् एकार्थदर्शनम्= एकपदार्थविषयकं ज्ञानं विप्रतिपत्तिः । विप्रतिपत्तेः पर्याय-त्रयमाह– व्याघात इत्यादिना । उदाहरति– अस्तीति, स्वाभिप्रायमाह– न चेति, सद्भावासद्भावौ= सत्त्वासत्त्वे । सह= एकदा । अन्यतरस्य= सत्त्वस्य वाऽसत्वस्य वा साधको हेतुश्च नोपलभ्यते. तत्र= अन्यतरसाधकहेतोरनुपलम्भे सति तत्त्वस्य= सत्त्वासत्त्वयोरन्यतरस्यानवधारणमेव संशय इति, तत्र मृतशरीरादिषु चैतन्यव्यभिचारात् तादृशचैतन्याश्रय आत्मास्त्येवेति निश्चीयते ।

उपलब्ध्यव्यवस्थातः संशयोत्पत्तिमुदाहरति– उपलब्धीति, उपलब्धेरव्यवस्थातः= नियमाभा-वादपि 'किं सदुपलभ्यते अथाऽसत्' इति संशयो भवतीत्यन्वयः । निरूपयति– सच्चेति, सदप्युदकं तडागादिषूपलभ्यते अविद्यमानम्= असदप्युदकं मरीचिषु= सिकतामयमरुस्थलोपरिपतितेषु सूर्यकिरणे-षूपलभ्यते तथा च सदेवोपलभ्यते= प्रतीयते इति नियमो नास्ति किं त्वसदपि प्रतीयते यथा शुक्तिर-जतम् इत्येषोपलब्ध्यव्यवस्था अतः क्वचिदुपलभ्यमाने= प्रतीयमाने जलादौ तत्त्वव्यवस्थापकस्य= सत्त्वासत्त्वयोर्व्यवस्थापकस्य प्रमाणस्यानुपलब्धौ सत्त्वासत्त्वयोरन्यतरस्य निश्चयासंभवात् संशयो जायते– किमिदं प्रतीयमानं वस्तु सदस्ति किं वाऽसदिति, तदनन्तरं सत्त्वासत्त्वयोरन्यतरस्य व्यव-स्थापकप्रमाणसाहाय्यात् सत्त्वं वाऽसत्त्वं वा निश्चीयते तेन संशयो निवर्तते इत्यन्वयः ।

अनुपलब्ध्यव्यवस्थातः संशयोत्पत्तिमुदाहरति– अनुपलब्धीति, अनुपलब्धेरव्यवस्थातः= निय-माभावादपि 'किं सन्नोपलभ्यते उताऽसन्नोपलभ्यते' इति संशयो भवतीत्यन्वयः । निरूपयति– सच्चेति, कचित् सदपि नोपलभ्यते= न प्रतीयते यथाऽन्तःप्रविष्टं कीलकमूलमुदकं च. असदपि नोपल-भ्यते यथाऽनुत्पन्नं निरुद्धम्= विनष्टं च मूलकीलकोदकादि तथा चाऽसत एवानुपलब्धिर्भवतीति नियमो नास्ति किं तु सतोऽप्यावृतस्यानुपलब्धिर्भवतीत्येषाऽनुपलब्ध्यव्यवस्था ततश्च क्वचिदनुपलभ्य-

पूर्ववत् । पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः. उपलब्ध्यनुपलब्धी पुनर्ज्ञातृगते एतावता विशेषेण पुनर्वचनम् । समानधर्माधिगमात्= समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ॥ २३ ॥

स्थानवतां लक्षणमिति समानम्—

## यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् ॥ २४ ॥

यमर्थमाप्तव्यं हातव्यं वाऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद् वेदितव्यम् , प्रवृत्तिहेतुत्वादिममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः, एवं व्यवसीयमानोऽर्थोऽधिक्रियते इति ॥ २४ ॥

---

माने= अप्रतीयमाने सत्त्वासत्त्वयोरन्यतरस्य व्यवस्थापकप्रमाणानुपलब्धौ सत्त्वासत्त्वयोरन्यतरस्य निश्चयाभावात् संशयो जायते— यदिदं कीलकमूलं न प्रतीयते तत् सद्वाऽसद्वा= किं सदप्यावरणादिप्रतिबन्धकान्न प्रतीयते किं वाऽसत्त्वादेव न प्रतीयते इति । अत्र संशयकारणीभूतां विशेषापेक्षामाह— विशेषेति, पूर्ववत्= अनुपलभ्यमानस्य सत्त्वासत्त्वयोरन्यतरस्य व्यवस्थापकं प्रमाणं नोपलभे इति बुद्धिरेव विशेषापेक्षा । तादृशसंशयानन्तरम् उपलब्धिप्रतिबन्धके निश्चिते सति सतोऽनुपलब्धिः उपलब्धिप्रतिबन्धकाभावे च निश्चिते सत्त्यऽसतोऽनुपलब्धिरित्येवमनुपलभ्यमानस्य सत्त्वासत्त्वयोर्निश्चयो भवति तेन संशयो निवर्तते इत्यन्वयः । पूर्व इति— पूर्वः= सूत्रे प्रथमोक्तः समानो धर्मः= समानधर्मत्वम् अनेको धर्मः= अनेकधर्मवत्त्वं च ज्ञेयस्थम्= विषयस्थं विज्ञेयं यथा स्थाणुपुरुषयोः, उपलब्ध्यनुपलब्धी च ज्ञातृगते= ज्ञातृधर्मौ विज्ञेयौ, एतावता विशेषेण= उपलब्ध्यनुपलब्ध्योर्ज्ञातृगतत्वेनैव विशेषेण पृथगुक्तिरस्ति वस्तुतस्तु उपलब्ध्यव्यवस्थास्थलेऽनुपलब्ध्यव्यवस्थास्थलेपि च समानानेकधर्मोपपत्तेर्विप्रतिपत्तेर्वा संशयो जायते यथोपलब्धिरनुपलब्धिश्च सदसतोः समानैवोपलभ्यते किं वोपलब्ध्यव्यवस्थातोऽनुपलब्ध्यव्यवस्थातश्चापि समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरेव वा संशयो जायते न साक्षादिति पृथग्वचनापेक्षा नास्ति अथापि ज्ञातृगतयोरपि उपलब्ध्यनुपलब्ध्योः संशयजनकत्वमस्तीति विशेषेण पृथगुक्तिरस्तीत्याशयः प्रतिभाति विशेषस्तु चिन्तनीयः । संशयलक्षणमुपसंहरति— समानेति, समानधर्मज्ञानाज्जायमानः स्थाणुपुरुषयोर्विशेषधर्मस्मृतिसापेक्षो विमर्श एव संशय इत्यर्थः, वस्तुतस्तूक्तस्वरूपो विमर्श एव संशय इत्यवधार्यम्. विमर्शस्वरूपं चोक्तमेव ॥ २३ ॥

प्रयोजनलक्षणमवतारयति— स्थानवतामिति, स्थानवताम्= क्रमेण प्राप्तानां प्रयोजनादीनां लक्षणमुच्यते इति समानम्= पूर्वोक्तसंशयलक्षणसमानमेव किं वाऽग्रे सर्वत्रानुसंधेयमित्यर्थः । यमिति— यमर्थम्= पदार्थमधिकृत्य= निश्चयेनोद्दिश्य पुरुषः प्रवर्तते तत् प्रयोजनं यथा ज्ञानमुद्दिश्याध्ययने प्रवृत्तस्य ज्ञानं प्रयोजनं शमदमाद्यनुष्ठाने प्रवृत्तस्याऽपवर्गः प्रयोजनमिति सूत्रान्वयः । व्याचष्टे— यमिति— यमर्थम् आप्तव्यमध्यवसाय= प्राप्तव्यत्वेन निश्चित्य तत्प्राप्त्युपायमनुतिष्ठति तत् प्राप्तव्यं प्रयोजनं वेदितव्यम्. यं चार्थं हातव्यमध्यवसाय= त्याज्यत्वेन निश्चित्य तद्धानोपायमनुतिष्ठति तद् हातव्यं प्रयोजनं वेदितव्यं. वस्तुतस्तु हेयस्य हानमेव प्रयोजनं हानकर्मत्वाद् हेयमपि प्रयोजनमित्युक्तमित्यर्थः । अधिकृत्येतिपदार्थघटकमधिकारपदार्थमाह— प्रवृत्तीति, इममर्थम्= सुखजनकपदार्थमाप्स्यामि दुःखजनकपदार्थं हास्यामि इति व्यवसायः= निश्चय एवार्थस्याधिकारः= उद्देशः= निश्चयविषयत्वम्— प्रवृत्तिहेतुत्वात् एतादृशाध्यवसाये सत्येव प्रवृत्तेर्जायमानत्वाद् अध्यवसायं विना प्रवृत्त्यभावादित्यध्यवसाय एवात्राधिकारपदार्थः, किं वा सर्वत्रैवैतादृशोध्यवसाय एवाधिकारपदार्थो विज्ञेयः— मोक्षं प्राप्स्यामीत्यध्यवसायेनैव मोक्षसाधनेषु प्रवृत्तिसंभवादित्यर्थः । अधिकारविषयं किं वाऽधिक्रियमाणमाह— एवमिति, व्यवसीयमानः= निश्चीयमानो योऽर्थोऽधिक्रियते= उद्दिश्यते तत् प्रयोजनं भवति, किं वा व्यवसीयमानोऽर्थोऽधिक्रियते= अधिकृतो भवतीति तदेव प्रयोजनं विज्ञेयमित्यन्वयः । अत्र " सुखदुःखयोरवाप्तिहानाभ्यामयं लोकः प्रयुज्यते इति सुखदुःखाप्तिहानी प्रयोजनमिति " इति वार्तिकम् ॥ २४ ॥

## लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

लोकसामान्यमऽनतीता लौकिकाः= नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः. तद्विपरीताः परीक्षकाः– तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति, यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति. दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति. अवयवेषु चोदाहरणाय कल्पते इति ॥ २५ ॥

अथ सिद्धान्तः– इदमित्थम्भूतं चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धं. सिद्धस्य संस्थितिः सिद्धान्तः, संस्थितिः= इत्थम्भावव्यवस्था= धर्मनियमः । स खल्वयम्—

## तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥

---

दृष्टान्तलक्षणमाह– लौकिकेति, यस्मिन् पदार्थे लौकिकानाम्= शास्त्रीयज्ञानरहितानां परीक्षकाणाम्= शास्त्रीयज्ञानवतां च बुद्धिसाम्यम्= साध्यसाधनयोः सामानाधिकरण्यविषयकबुद्धेः साम्यं भवति स दृष्टान्तो यथा महानसे वह्निधूमयोः सामानाधिकरण्यविषयिका बुद्धिर्लौकिकानां परीक्षकाणां च साम्येन वर्तते इति वह्निसाधने महानसो दृष्टान्तः एवमन्यत्रापि योज्यमिति सूत्रान्वयः ।

व्याचष्टे— लोकेति, लोकसामान्यम्= लोकप्रणालीं किं वा लोकमतिमऽनतीताः= अनुरुध्य वर्तमाना एव लौकिकाः शास्त्रीयज्ञानरहिता इतियावत्, उक्तं व्याचष्टे– नैसर्गिकमिति, नैसर्गिकम्= स्वभावसिद्धं वैनयिकम्= शिक्षाजन्यं च बुद्ध्यतिशयमप्राप्ता एव लौकिकाः तद्विपरीताः= लौकिकविपरीताः= नैसर्गिकं वा वैनयिकं वा बुद्ध्यतिशयं प्राप्ताः परीक्षका इत्युच्यन्ते तत्र केषां चित् शिक्षां विनैव बुद्ध्यतिशयो भवतीति ते नैसर्गिकबुद्ध्यतिशययुक्ता विज्ञेयाः केषां चिच्च शिक्षया बुद्ध्यतिशयो भवतीति ते वैनयिकबुद्ध्यतिशययुक्ता विज्ञेयाः, शास्त्रीयज्ञानवन्तो परीक्षका इतियावत्, उक्ते हेतुमाह– तर्केणेति, उक्तबुद्ध्यतिशययुक्ता हि तर्केण प्रमाणैश्चार्थं परीक्षितुमर्हन्तीति परीक्षका इत्युच्यन्ते न तु लौकिका एवं भवन्तीत्यर्थः । उदाहरति– यथेति, यमर्थं महानसादिकं लौकिका यथा= वह्निधूमयोः सामानाधिकरण्यविशिष्टं बुध्यन्ते परीक्षका अपि तमर्थं महानसादिकं तथा= वह्निधूमयोः सामानाधिकरण्यविशिष्टमेव बुद्ध्यन्ते इति सोऽर्थः= महानसादिर्दृष्टान्त इत्युच्यते वह्न्यादिसाधने । दृष्टान्तस्य फलमाह– दृष्टान्तेति, प्रतिपक्षाः= स्वविरुद्धाः प्रतिवादिपक्षाः यथा वह्निमान् जलन्हृदवदित्युक्ते दृष्टान्तविरोधेन= जलन्हृदविरोधेन वह्निमत्त्वं प्रतिषिध्यते जलन्हृदे वह्निधूमयोरसंभवप्रदर्शनद्वारा । दृष्टान्तसमाधिना= दृष्टान्तानुकूल्येन यथा वह्निमान् महानसवदित्यत्र दृष्टान्तभूते महानसे वह्निधूमयोः सामानाधिकरण्यप्रदर्शनेन स्वपक्षो वह्निमत्त्वं स्थापनीयं भवति, प्रतिज्ञादिपञ्चावयवेषु चायमेव दृष्टान्त उदाहरणमित्युच्यते किं वा उदाहरणाय= साध्यसाधनयोः सामानाधिकरण्यनिदर्शनाय कल्पते= समर्थो भवति ॥ २५ ॥

सिद्धान्तलक्षणमाह– अथेति, इत्थम्भूतम्= एतद्रूपम्, यथाऽयमात्मा इत्थम्भूतः= नित्य एवेति रूपेणाऽभ्यनुज्ञायमानम्= स्वीक्रियमाणमर्थजातम्= आत्मनित्यत्वादिकं सिद्धमित्युच्यते– प्रमाणेन सिद्धत्वात् तादृशस्य सिद्धस्य संस्थितिः= व्यवस्थैवान्तः. सिद्धस्यान्तः सिद्धान्त इत्यन्वयः । संस्थितिपदार्थमाह– संस्थितिरिति, इत्थम्भावस्य या व्यवस्था= नियमः सा संस्थितिः= धर्मनियमः= सिद्धस्य धर्मनियमो यथा सिद्धस्यात्मनो नित्यत्वधर्मनियम एव सिद्धान्त इत्यर्थः । अत्र " अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्टे– अथ सिद्धान्त इत्यादिनेति तात्पर्यटीकायां दृश्यते तेन सामान्यलक्षणसूत्रं ( सिद्धान्तस्य ) क्विमप्यासीद् यदद्यत्वे न काप्युपलभ्यते इतिबोध्यम् " इति श्रीगुरुचरणाः । एवं सिद्धान्तशब्दव्युत्पत्तिं प्रदर्श्याग्रिमसूत्रमवतारयति– स इति, सोयं सिद्धान्तः तत्राधिक-

तन्त्रार्थसंस्थितिः तन्त्रसंस्थितिः, तन्त्रम्= इतरेतराभिसंवद्धस्याऽर्थसमूहस्योपदेशः= शास्त्रम् । अधिकरणानुपक्तार्थसंस्थितिः अधिकरणसंस्थितिः । अभ्युपगमसंस्थितिः=अनवधारितार्थपरिग्रहः तद्विशेषपरीक्षणायाऽभ्युपगमसिद्धान्तः ॥ २६ ॥

तन्त्रभेदात्तु खलु स चतुर्विधः—

**सर्वतन्त्रप्रतितन्त्राऽधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥**

तत्रैताश्चतस्रः संस्थितयोऽर्थान्तरभूताः ॥ २७ ॥

तासाम्—

**सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥**

यथा घ्राणादीनीन्द्रियाणि. गन्धादय इन्द्रियार्थाः. पृथिव्यादीनि भूतानि. प्रमाणैरर्थस्य ग्रहणमिति ॥ २८ ॥

---

रणाभ्युपगमानां संस्थितिलक्षणो विज्ञेय इत्यन्वयः । तत्रेति- तत्रसंस्थितिः सिद्धान्तः तत्रशब्देनाग्रिमसूत्रानुरोधात् सर्वतत्रं प्रतितत्रं च द्वयमपि ग्राह्यम् १ अधिकरणसंस्थितिः सिद्धान्तः २ अभ्युपगमसंस्थितिः सिद्धान्तः ३ इति त्रिधा सिद्धान्त इति सूत्रान्वयः । तत्रं हि शास्त्रं तस्य सिद्धान्तस्तत्रसिद्धान्तो यथा न्यायशास्त्रस्य परमाणुवादः सांख्यस्य प्रकृतिवाद इति, अधिकरणं हि शास्त्रस्य भागविशेषो यथा मीमांसायां प्रसिद्धं तस्य सिद्धान्तोऽधिकरणसिद्धान्तः, अभ्युपगमः किंचित्कालं परपक्षस्वीकारस्तस्य सिद्धान्तोऽभ्युपगमसिद्धान्तः= परसिद्धान्त इति यावत् स चाभ्युपगमोपि दोषप्रदर्शनार्थ इतिसूत्रार्थः ।

व्याचष्टे- तत्रार्थेति, संस्थितिः= व्यवस्था= नियमः । तत्रपदार्थमाह- इतरेतरेति, पर्यवसितमाह- शास्त्रमिति । एकमात्रविषयस्य शास्त्रत्वं संमतं नास्तीति इतरेतराभिसंवद्धस्येत्युक्तं परस्परसंवद्धस्येत्यर्थः । अधिकरणसिद्धान्तमाह- अधिकरणेति, अधिकरणानुपक्तार्थस्य= अधिकरणसंवद्धार्थस्य, यथा पञ्चलक्षण्यां तत्तल्लक्षणसिद्धान्त इति, वस्तुतस्त्वधिकरणसिद्धान्तलक्षणमग्रे तन्निरूपकसूत्रभाष्ययोर्द्रष्टव्यम् । अभ्युपगमसिद्धान्तमाह- अभ्युपगमेति । अनवधारितार्थपरिग्रहः= अनिश्चितपदार्थस्वीकारः= परसिद्धान्त इतियावत्, अस्य फलमाह- तदिति, परसिद्धान्तस्य विशेषरूपेण परीक्षणाय स्वीकारः क्रियते यत्र सोऽभ्युपगमसिद्धान्त इत्याशयः ॥ २६ ॥

अग्रिमसूत्रमवतारयति- तन्त्रभेदादिति, अत्र 'तन्त्रादिभेदात्' इत्येवं वक्तव्यमासीत्, सः= सिद्धान्तः । सिद्धान्तभेदे सूत्रेण कारणमाह- सर्वेति, सर्वतत्रसंस्थितिः परतत्रसंस्थितिः अधिकरणसंस्थितिरभ्युपगमसंस्थितिरिति चतुर्धा संस्थितिः संभवति आसां चतसृणामपि संस्थितीनाम् अर्थान्तरभावात्= अर्थान्तरत्वात्= पदार्थान्तरत्वात्= परस्परं भेदात् सिद्धान्तोपि चतुर्विधो भवति यथा सर्वतत्रसिद्धान्तः प्रतितत्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्त इति, लक्षणं चैषामग्रे स्पष्टमेवेति सूत्रान्वयः । व्याचष्टे- तत्रेति, एताः= सूत्रोक्ताः सर्वतत्रसंस्थित्यादिरूपाः । अर्थान्तरभूताः= परस्परं भिन्ना इति संस्थितीनां भेदात् सिद्धान्तोपि चतुर्धा भिन्नो भवतीत्यर्थः ॥ २७ ॥

अग्रिमसूत्रमवतारयति- तासामिति, तासाम्= उक्तानां चतसृणां संस्थितीनां मध्ये सर्वतत्रसंस्थितिः सर्वतत्रसिद्धान्त इत्यर्थः । सर्वेति- सर्वैस्तत्रैरविरुद्धः= स्वीकृतः स्वतत्रेप्यधिकृतः= प्रतिपादितो योऽर्थस्तस्य सिद्धान्तः सर्वतत्रसिद्धान्त इत्युच्यते यथा पृथिव्यादीनि भूतानीति सर्वैरपि शास्त्रैः स्वीकृतमस्तीति पृथिव्यादीनां भूतत्वं सर्वतत्रसिद्धान्त इतिसूत्रान्वयः । व्याचष्टे- यथेति, घ्राणादीनामिन्द्रियत्वं गन्धादीनामिन्द्रियार्थत्वम्= घ्राणादीन्द्रियग्राह्यत्वं पृथिव्यादीनां भूतत्वं पदार्थस्य प्रमाणैर्ग्रहणम्= निश्चय इत्यादयः सर्वतत्रसिद्धान्ताः- सर्वशास्त्रैः स्वीकृतत्वादित्यन्वयः ॥ २८ ॥

## समानतन्त्रासिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥

यथा– नाऽसत आत्मलाभः, न सत आत्महानम्, निरतिशयाश्चेतनाः, देहेन्द्रियमनस्सु विषयेषु तत्कारणे च विशेष इति सांख्यानाम्, पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते उत्पन्नं निरुध्यते इति योगानाम् ॥ २९ ॥

## यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते= न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधिष्ठानाः सोऽधिकरणसिद्धान्तः यथा– देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिभिः,

---

प्रतितन्त्रसिद्धान्तस्य लक्षणमाह– समानेति, समानतन्त्रे= स्वशास्त्रसदृशशास्त्रेऽसिद्धः= अप्रतिपादितः परतन्त्रे च सिद्धः= प्रतिपादितो यः सिद्धान्तेन विषयः स प्रतितन्त्रसिद्धान्तः, तन्त्रं तन्त्रं प्रतीति प्रतितन्त्रं प्रतितन्त्रस्य सिद्धान्तः प्रतितन्त्रसिद्धान्तः तत्तच्छास्त्रसिद्धान्त इतियावत् यथा षोडशपदार्थवादो न्यायशास्त्रसिद्धान्तः, सप्तपदार्थवादः वैशेषिकशास्त्रसिद्धान्त इति प्रतितन्त्रसिद्धान्त इति वक्तुं शक्यते, समानतन्त्रे यथा न्यायवैशेषिकौ सांख्ययोगौ इतिसूत्रान्वयः । अत्र– " समानशब्द एकपर्यायः नैयायिकानां हि समानं तन्त्रं न्यायशास्त्रं परतन्त्रं च सांख्यादिशास्त्रम् " इति तात्पर्यटीका । सा चैषा चिन्त्या, अत्र " समानतन्त्रासिद्धः परतन्त्रासिद्धः " " समानतन्त्रसिद्धः परतन्त्रासिद्धः " इत्येवमपि द्विधा सूत्रपाठ उपलभ्यते स तु संगतो न प्रतिभाति, । वस्तुतस्तु ' प्रतितन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः ' इत्येवं सूत्रं पठनीयमासीत् । भाष्यकारः सूत्रव्याख्यामुपेक्ष्य उदाहरणमात्रमाह– यथेति, आत्मलाभः= उत्पत्तिः सदेवोत्पद्यते इत्यर्थः, आत्महानम्= विनाशः सन्न विनश्यतीत्यर्थः, निरतिशयाः= विशेषरहिताः चेतनाः= आत्मानः चेतनत्वादिरूपेण सर्वेष्यात्मानः समानस्वरूपा इत्यर्थः, देहादौ स्थूलत्वादिरूपः कफाद्याधिक्यादिरूपश्च विशेषः, इन्द्रियेषु पटुत्वापटुत्वादिरूपो विशेषः, मनस्सु सत्त्वादिगुणकृतो विशेषः– यत्कस्यचिन्मनः सात्त्विकं भवति कस्यचिद्राजसमिति, विषयेषु= शब्दस्पर्शादिषु च विशेषः स्पष्ट एव, तत्कारणे= देहादिकारणे, कारणे विशेषं विना कार्ये विशेषासंभवात्, इन्द्रियाणां मनसश्च सांख्यमतेऽहङ्कारः कारणम् । सांख्यानाम्= सांख्यानामेव । उक्तं च सांख्यैः– " असदकरणात् " " तद्विपरीतस्तथा च पुमान् " " प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः " " एते स्मृता विशेषाः " इत्यादीत्यलम् । मतान्तरसिद्धान्तमाह– पुरुषेति, दोषाः= रागादयः, प्रवृत्तिः= धर्माधर्मौ, धर्मो धर्महेतुः पापं च पापहेतुरित्याशयः, चेतनाः= आत्मानः स्वगुणविशिष्टाः= ज्ञानादिगुणविशिष्टास्तथा च गुणतारतम्येन सातिशयत्वं प्राप्तम्, असदेव घटादिकमुत्पद्यते– सत उत्पत्त्यसंभवात्, उत्पन्नं च निरुध्यते= विनश्यति इति योगानाम्= योगानामेव मतम्, अत्र योगशब्दो वैशेषिकपर इति केचित् इत्यर्थः । अत्र " निरतिशयाश्चेतनाः " इति न सांख्यमात्रमतम्– वेदान्तैरपि स्वीकारात् " पुरुषकर्मनिमित्तः " इत्यादिकमपि न योगमात्रमतम्– अन्यैरपि बहुभिः शास्त्रैरेवमेव स्वीकारादिति चिन्त्यम्, भाष्यकारोयं बहुत्र प्रमादं करोतीत्यनुसंधीयते बहुभ्यः श्रूयते चेत्यलम् ॥ २९ ॥

अधिकरणसिद्धान्तस्य लक्षणमाह– यदिति, यस्य सिद्धौ सत्याम् अन्यप्रकरणसिद्धिः= अन्येषां प्राकरणिकानां पदार्थानां सिद्धिरापतति सोऽधिकरणसिद्धान्तो यथा प्रपञ्चकर्तृत्वेनेश्वरसिद्धौ सत्यामीश्वरस्य सर्वज्ञत्वादिकं सिध्यति– सर्वज्ञत्वादिकं विना प्रपञ्चकर्तृत्वानुपपत्तेरितीश्वरसिद्धिरधिकरणसिद्धान्तः, परस्परसंबद्धानां पदार्थानां सिद्धान्तोऽधिकरणसिद्धान्त इतियावत् इति सूत्रान्वयः । व्याचष्टे– यस्येति, प्रकृते यथा यस्यार्थस्य आत्मनः सिद्धौ अन्येऽर्थाः इन्द्रियनानात्वादय अनुषज्यन्ते= आक्षिप्यन्ते अर्थात् तैः इन्द्रियनानात्वादिभिर्विना सोऽर्थः आत्मा न सिध्यति ते चार्थाः इन्द्रियनानात्वादय यदधिष्ठानाः= यदधीनसिद्धयः स आत्मा अधिकरणसिद्धान्त इत्यन्वयः, यदि देहेन्द्रियाद्यतिरिक्त आत्मा न-

अत्रानुषङ्गिणोर्थाः- इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि. गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्. अनियतविषयाश्चेतना इति, पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति. न तैर्विना सोर्थः संभवतीति ॥ ३० ॥

## अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥

स्यात्तदा इन्द्रियनानात्वादिकं न सिध्येत् किं त्वेकेनापीन्द्रियेण सर्वज्ञानसंभवः स्यात् एवं हीन्द्रियस्यैवात्मत्वं स्यात्. आत्मनश्च चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञा जायते सा चात्मैक्यं प्रयोजयतीतीन्द्रियस्याप्यात्मभूतस्यैक्यमेव स्यात् न नानात्वम्, यदा हि देहेन्द्रियव्यतिरिक्त आत्मा तदात्मनो रूपज्ञानकरणं चक्षुर्गन्धज्ञानकरणं घ्राणमिति इन्द्रियनानात्वं चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञा च जायते इति इन्द्रियनानात्वादिकमात्मसिद्ध्यधीनमित्यात्माधिकरणसिद्धान्त इत्यर्थः । उदाहरति— यथेति, दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्= चक्षुषा पूर्वं दृष्टस्य चक्षुर्विनाशानन्तरं त्वचा प्रत्यभिज्ञानात् देहेन्द्रियव्यतिरिक्तो ज्ञाता आत्मा सिध्यति यदि देहेन्द्रियसमुदाय एव ज्ञाता स्यात् तदा द्रष्टुश्चक्षुषो विनाशानन्तरं चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञा न स्यात् अन्यदृष्टस्यान्येन प्रत्यभिज्ञानासंभवादिति देहेन्द्रियव्यतिरिक्तो ज्ञातेति सिद्ध्यति— तस्यैक्यात् प्रत्यभिज्ञानसंभवादित्याशयः । प्रकृतमाह— अत्रेति, अनुषङ्गिणः= संबद्धाः= अर्थात्प्राप्ताः । एकस्मिन्नात्मनि सिद्धे तस्यात्मनो ज्ञानकरणानामिन्द्रियाणां ज्ञेयरूपादिनानात्वेन नानात्वं प्राप्तं नानात्वेन च नियतविषयत्वं प्राप्तं यथा रूपग्राहकं चक्षुर्गन्धग्राहकं घ्राणमिति, यद्यात्मा इन्द्रियातिरिक्तो न स्यात् किं तु इन्द्रियमेवात्मा स्यात्तदा तस्य प्रत्यभिज्ञावशादेकत्वं स्यादितीन्द्रियनानात्वं न सिध्येत् ततश्च तस्येन्द्रियस्य सर्वग्राहकत्वापत्त्या नियतविषयत्वमपि न स्यात् । देहेन्द्रियातिरिक्तात्मसत्त्वे हि रूपादिस्वस्वविषयकज्ञानलक्षणलिङ्गेनेन्द्रियाणि ज्ञातुर्ज्ञानसाधनानीत्यपि सिध्यति अन्यथेन्द्रियस्यैवात्मत्वे तस्य ज्ञातृत्वमेव स्यान्न तु ज्ञानसाधनत्वं तथा च स्वविषयज्ञानानुमेयत्वमपि न स्यात् किं तु स्वयंप्रकाशत्वमेव स्यादात्मनः स्वयंप्रकाशत्वादित्यर्थः । गन्धादीति— यदि गन्धाद्यतिरिक्तं गन्धादिगुणाधिकरणं च द्रव्यं न स्यात्तदा तस्य चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञानं न स्यात्— त्वचो रूपादिग्राहकत्वाभावादिति, यदा हि गन्धाद्यतिरिक्तं द्रव्यं तदा तस्य चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञानं संभवति तथा रूपादिगुणाश्रयत्वाच्चक्षुरादिग्राह्यत्वमप्युपपद्यते— चक्षुरादीनां रूपादिद्वारैव द्रव्यग्राहकत्वात्, किं च यद्यात्मलक्षणं द्रव्यं ज्ञानादिगुणाधिकरणं न स्यात्तदा तस्य चाक्षुषादिज्ञानकर्तृत्वं प्रत्यभिज्ञाकर्तृत्वं च न स्यादित्यात्मसाधकप्रत्यभिज्ञावशादेव द्रव्यस्य गन्धादिगुणातिरिक्तत्वं गुणाश्रयत्वं च प्राप्तम् । अनियतेति— यद्यात्मापि नियतविषयः= रूपादिषु किंचिन्मात्रग्राहकः स्यात्तदा तस्य रूपादिकिंचिद्ग्राहकत्वेपि स्पर्शादिग्राहकत्वाभावापत्त्या त्वचा प्रत्यभिज्ञा न स्याद् भवति च प्रत्यभिज्ञेति चेतनाः= आत्मानोऽनियतविषयाः= सामग्र्यां सत्यां पर्यायेण सर्वग्राहका इत्यपि सिद्धम् । उपसंहरति— पूर्वार्थेति, पूर्वार्थस्य= देहाद्यतिरिक्तात्मनः सिद्धौ एतेऽर्थाः= इन्द्रियनानात्वादय उपपादितप्रकारेण सिध्यन्ति, तैः= इन्द्रियनानात्वादिभिश्च विना सोर्थः= आत्मापि न सिध्यति तथा हि यदीन्द्रियाणां नानात्वं नियतविषयत्वं च न स्यात्तदेकत्वादनियतविषयत्वाच्चैकेनेन्द्रियेणैव पूर्वदृष्टस्य प्रत्यभिज्ञासंभवाद् देहेन्द्रियातिरिक्त आत्मा न सिध्येत् इतीन्द्रियनानात्वाद्यधीनाऽऽत्मसिद्धिः, तथा यदि द्रव्यं गन्धादिगुणातिरिक्तं न स्यात्तदा गन्धादीनां घ्राणादिना ग्रहणसंभवात् आत्मग्राह्यस्याभावापत्त्याऽऽत्मसिद्धिर्न स्यात् प्रत्यभिज्ञा चोक्ता द्रव्यस्यैव भवति रूपाद्यतिरिक्तद्रव्याभावे च द्रव्यप्रत्यभिज्ञैव न प्राप्नोति यथात्मसिद्धिः स्यादिति द्रव्यस्य गुणातिरिक्तत्वाधीना चात्मसिद्धिरित्याशयः । तथा चैते विषयाः परस्परसापेक्षत्वादधिकरणसिद्धान्तभूता इत्युपपन्नं विस्तरस्तु स्वयमेव कर्तव्य इत्यलम् ॥ ३० ॥

अभ्युपगमसिद्धान्तलक्षणमाह— अपरीक्षितेति, तद्विशेषपरीक्षणम्= परकीयसिद्धान्तविषयस्य विशेषरूपेण परीक्षणार्थं योऽपरीक्षितस्य= स्वशास्त्रासिद्धस्याऽभ्युपगमः= स्वीकारः सोऽभ्युपगमसिद्धान्त

यत्र किंचिदर्थजातमपरीक्षितमभ्युपगम्यते— अस्तु द्रव्यं शब्दः स तु नित्यो अथाऽनित्यः ? इति द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते सोऽभ्युपगमसिद्धान्तः, स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यऽवज्ञानाय प्रवर्तते इति ॥ ३१ ॥

अथावयवाः—

## प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यऽवयवाः ॥ ३२ ॥

दशावयवानेके नैयायिका वाक्य संचक्षते— जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति. ते कस्मान्नोच्यन्ते ? इति, तत्राऽप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्तिका जिज्ञासा. अप्रतीयमानमर्थं कस्मात् जिज्ञासते ?. तं तत्त्वतो ज्ञातं हास्यामि वोपादास्ये उपे-

---

इत्यर्थः, अपरीक्षितस्याभ्युपगमादभ्युपगमसिद्धान्त इत्युच्यते इत्यन्वयः। तद्विशेषपरीक्षणं तु कारणमेवेति कार्यकारणयोरभेदमभ्युपगम्य सामानाधिकरण्येन "तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः" इत्युक्तम् ।

व्याचष्टे— यत्रेति, अपरीक्षितम्= स्वशास्त्रासिद्धम् । उदाहरति— अस्त्विति, न्यायमते शब्दो द्रव्यं न किं तु गुण एव अथापि मीमांसकमतेन शब्दस्य द्रव्यत्वमभ्युपगम्य नित्यत्वानित्यत्वे परीक्ष्येते इत्यर्थः, सः= शब्दः, द्रव्यस्य सतः= द्रव्यभूतस्य= द्रव्यत्वेन स्वीकृतस्यापि शब्दस्य तद्विशेषः= शब्दधर्मौ नित्यत्वमनित्यत्वं वेति परीक्ष्यते यत्र तत्र शब्दस्य द्रव्यत्वाभ्युपगमोयमभ्युपगमसिद्धान्त एवमन्यत्रापीत्यन्वयः। अभ्युपगमसिद्धान्तकारणमाह— स्वबुद्धीति, स्वबुद्धेरतिशयस्य= महत्त्वस्य चिख्यापयिषया= प्रकाशनेच्छया परबुद्धेः= प्रतिवादिबुद्धेरवज्ञानाय= अवहेलनाय= मन्दत्वज्ञापनाय चाभ्युपगमसिद्धान्ते पुरुषः प्रवर्तते= परकीयसिद्धान्तमभ्युपगम्यापि तद्विशेषं निराकरोति यथा शब्दस्य द्रव्यत्वमभ्युपगम्यापि नित्यत्वं निराकरोति— यदि शब्दो नित्यः स्यात्तदा विनैव व्यापारं नित्यमुपलभ्येत न चोपलभ्यते इति द्रव्यभूतोपि शब्दो नित्यो न संभवतीत्येवम्। "परबुद्ध्यवज्ञानाय" इत्यत्र "परबुद्ध्यवज्ञानाच्च" इत्यपि पाठः स तु चिन्त्य एव— पञ्चम्यनुपपत्तेः ॥ ३१ ॥

अवयवविभागसूत्रमवतारयति— अथेति, निरूप्यन्ते इति शेषः । प्रतिज्ञेति— 'पर्वतो वह्निमान्' इतिप्रतिज्ञा. 'धूमात्' इतिहेतुः, 'यो यो धूमवान् स स वह्निमान् यथा महानसः' इत्युदाहरणम् 'धूमवांश्चायम्' इत्युपनयः 'तस्माद्वह्निमान्' इतिनिगमनम्= उपसंहार इति पञ्चाऽनुमानस्यावयवा इतिसूत्रान्वयः, लक्षणं चैषामग्रे स्पष्टमेव। उदाहरणोपनयाभ्यां व्यवयवमनुमानं बौद्धाः संगिरन्ते. उदाहरणान्तमुदाहरणादि वेति त्र्यवयवमनुमानं मीमांसकादयः संगिरन्ते इत्यादिकं सर्वं तत्तच्छास्त्रेष्वेव द्रष्टव्यं विस्तरभयान्नेह प्रतन्यते । सूत्रस्य स्पष्टार्थत्वाद्भाष्यकार एकदेशिनां मतमनुवदति— दशेति, वाक्ये= अनुमानवाक्ये, संचक्षते= संगिरन्ते । तेषु दशस्ववयवेषु पञ्च त्ववयवा एते प्रतिज्ञादय एव सूत्रोक्ता ज्ञेयाः शेषान् पञ्चावयवानाह— जिज्ञासेति, प्रथमं पर्वते वह्नेर्जिज्ञासा जायते. तदनन्तरम् 'अस्ति न वा' इति संशयः. तदनन्तरं शक्यप्राप्तिः= साध्यसंभवः किं वा प्रमाणे यत्साध्यसाधकत्वं तस्य ज्ञानं जायते. अत्र "शक्यं प्रमेयं तस्मिन् प्राप्तिः= शक्तता प्रमाणानां प्रमातुश्च" इति तात्पर्यटीका, तदनन्तरं प्रयोजनमुपतिष्ठते "प्रयोजनमनुद्दिश्य" इतिन्यायात्, तदनन्तरं शक्यप्राप्त्या संशयव्युदासो भवति. तदनन्तरं प्रतिज्ञाद्यवयवाः प्रवर्तन्ते नान्यथेति तेषामाशयः । अत्र 'जिज्ञासा संशयः शक्यप्राप्तिः संशयव्युदासः प्रयोजनम्' इतिक्रमेण वक्तव्यमासीत् शक्यप्राप्त्या संशयव्युदासे जाते प्रयोजनोपस्थितिसंभवात् उत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुत्वादित्यनुसंधेयम् । अत्र शिष्यप्रश्नमनुवदति— ते इति, ते= जिज्ञासादयः पञ्चावयवाः ।

प्रथमं जिज्ञासाकार्यमाह— तत्रेति, तत्र= जिज्ञासादिषु मध्ये । पदार्थेऽप्रतीयमाने= अज्ञाते सति तद्विषयकज्ञाने प्रत्ययार्थस्य= तद्विषयकज्ञानार्थिनः पुंसः प्रवर्तिका भवति जिज्ञासा न तु प्रकृत-

**क्षिप्ये वेति. ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थः तदर्थमयं जिज्ञासते सा खल्वियमसाधनमर्थस्येति । जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसंघातात् क्व तत्त्वज्ञाने प्रत्यासन्नः ? व्याहतयोर्हि धर्मयोरन्यतरत् तत्त्वं भवितुमर्हतीति. स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति । प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति । प्रयोजनं तत्त्वावधारणम् अर्थसाधकस्य वाक्यस्य फलं नैकदेश इति । संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधे तत्त्वाभ्यनुज्ञानार्थं न त्वयं साधकवाक्यैकदेश इति । प्रकरणे तु जिज्ञासादयः समर्थाः— अवधारणीयार्थोपकारात्, तत्त्वार्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागाः= एकदेशाः= अवयवा इति ॥ ३२ ॥**

साध्यसाधिकेति न जिज्ञासाया अनुमानावयवत्वं संभवतीत्यर्थः । अप्रतीयमानविषयकजिज्ञासाकारणं पृच्छति— अप्रतीयमानमिति । उत्तरमाह— तमिति, तम्= अप्रतीयमानं तत्त्वतो ज्ञातम्= ज्ञात्वा अनिष्टं हास्यामि इष्टमुपादास्ये इष्टानिष्टाभ्यामतिरिक्तमुपेक्षिष्ये इतिविचार्याऽप्रतीयमानं जिज्ञासते. तत्र ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्याऽर्थः= प्रयोजनभूताः= फलभूता इत्ययम्= पुरुषः तदर्थम्= हानोपादानोपेक्षाबुद्ध्यर्थम्= हानाद्यर्थमेवाऽप्रतीयमानं जिज्ञासते सा चैषा जिज्ञासाऽर्थस्य= अनुमेयस्याऽसाधनमेव— तद्विषयकज्ञानमात्रे प्रवर्तकत्वेन प्रकृतसाध्यसाधने प्रवर्तकत्वाभावात् साध्यसाधकत्वाभावाच्च साध्यसाधकस्यैवानुमानावयवत्वसंभवादिति न जिज्ञासाऽनुमानावयव इत्यर्थः । संशयस्यानुमानावयवत्वं प्रत्याचष्टे— जिज्ञासाधिष्ठानमिति, जिज्ञासानन्तरं संशयो जायते इति संशयो जिज्ञासाधिष्ठानम्= जिज्ञासाकार्यं स च संशयो व्याहतयोः= परस्परविरुद्धयोर्धर्मयोरुपसंघातात्= प्राप्तेः= दर्शनात् जायमानः कस्मिन् तत्त्वज्ञाने प्रत्यासन्नः= संबद्धो भवति ? न कस्यापि तत्त्वज्ञानस्य कारणं भवतीति नानुमानावयवो भवतीत्यर्थः । कारणमाह— व्याहतयोरिति, व्याहतयोर्धर्मयोरन्यतर एव धर्मो तत्त्वं भवितुमर्हति न तु धर्मद्वयमपि येन विरुद्धधर्मद्वयावगाहकस्य संशयस्यापि तत्त्वज्ञानाङ्गत्वं स्यात्, स च संशयः प्रथमसूत्रे पृथगुपदिष्टोपि न कस्यचिदर्थस्य साधको भवतीति नानुमानावयव इत्यर्थः । क्वशब्दरहितपाठपक्षे तु ' उक्तस्वरूपः संशयस्तत्त्वज्ञाने= तत्त्वविचारे एव प्रत्यासन्नः= संबद्धो भवति— संशयानन्तरं विचारप्रवृत्तेः, नत्वनुमानसंबद्ध इति न संशयोऽप्यनुमानावयवः' इत्येवं व्याख्येयम् । शक्यप्राप्तेरनुमानावयवत्वं प्रत्याचष्टे— प्रमातुरिति, प्रमातुः प्रमाणानि= इन्द्रियसंयोगादीनि प्रमेयज्ञानार्थानि भवन्ति तत्र प्रमेयज्ञाने प्रमाणानां प्रमातुश्च यत्सामर्थ्यं सा शक्यप्राप्तिरित्युच्यते सा च प्रमाणप्रमातृगतेति न साधकस्य वाक्यस्य= अनुमानवाक्यस्य प्रतिज्ञादिवद् भागेन युज्यते= भागो भवितुमर्हतीति न शक्यप्राप्तिरप्यनुमानावयव इत्यर्थः, अत्र—" शक्यं प्रमेयं तस्मिन् प्राप्तिः= शक्तता प्रमाणानां प्रमातुश्च सा च स्वरूपसहकारिभ्यां द्वेधा तामिमां भाष्यकारोऽनया वाचोभङ्ग्या दर्शयति— प्रमातुः प्रमाणानीति " इति तात्पर्यटीका, अत्र प्रमाणानां प्रमेयज्ञानोत्पादने स्वरूपेण शक्ततायां सत्यामपि सहकार्यपेक्षयोक्तं स्वरूपसहकारिभ्यामिति । प्रयोजनस्यानुमानावयवत्वं निराचष्टे— प्रयोजनमिति, प्रयोजनं हि तत्त्वावधारणं वा हानादिकं वा तत्त्वार्थसाधकस्य वाक्यस्य= अनुमानवाक्यस्य फलमेव न तु कारणमित्येकदेशः= अवयवो भवितुं नार्हतीत्यर्थः । संशयव्युदासस्यानुमानावयवत्वं प्रत्याचष्टे— संशयेति, प्रतिपक्षोपवर्णनमिति— साध्यविरुद्धधर्मोपपादनमेव प्रतिपक्षोपवर्णनम्= प्रतिपक्षस्य विरुद्धधर्मस्योपवर्णनम्= उपपादनं तदेव संशयव्युदासः स च तत्त्वाभ्यनुज्ञानार्थः= तत्त्वज्ञानजनको भवतीत्यन्वयः । विरुद्धधर्मोपपादनेन संशयनिरासो भवतीति विरुद्धधर्मोपपादनमेव संशयव्युदासस्तत्र तत्प्रतिषेधे= एकतरस्य विरुद्धधर्मस्य प्रतिषेधे कृते संजातोऽयं संशयव्युदासस्तर्कभूतस्तदेव प्रतिपक्षोवर्णनं तच्च तत्त्वाभ्यनुज्ञानार्थम्= तत्त्वज्ञानजनकं किं वा तत्त्वस्वीकारकारणं भवति तथा च संशयव्युदासः तर्करूपत्वात् साधकवाक्यैकदेशः= अनुमानवाक्यावयवो भवितुं नार्हतीत्यर्थः, यथा शब्दानित्यत्वस्य प्रतिपक्षभूते

तेषां तु यथाविभक्तानाम्—

## साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा= साध्यनिर्देशः— अनित्यः शब्द इति ॥ ३३ ॥

## उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ॥ ३४ ॥

उदाहरणेन सामान्यात् साध्यस्य धर्मस्य साधनम्= प्रज्ञापनं हेतुः= साध्ये प्रतिसंधाय धर्मम् उदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः— उत्पत्तिधर्मकत्वादिति, उत्पत्तिधर्मकमनित्यं दृष्टमिति ॥ ३४ ॥

---

नित्यत्वे निराकृते नित्यत्वानित्यत्वयोः संशयव्युदासेनानित्यत्वं परेण स्वीक्रियते, अत्र— "तदुपवर्णनप्रतिषेधे सति तत्त्वज्ञानाभ्यनुज्ञानार्थम्, ज्ञायतेऽनेनेति तत्त्वज्ञानं प्रमाणं तदभ्यनुज्ञानार्थं संशयव्युदासस्तर्कापरनामा व्युदस्यते ह्यनेन प्रमाणाभ्यनुज्ञानद्वारेण प्रमाणेतिकर्तव्यताभूतेन संशय इति" इति तात्पर्यटीका । जिज्ञासादीनां प्रयोजनमाह— प्रकरणे इति, प्रकरणे= कथाप्रवृत्तौ= वादारम्भे एव जिज्ञासादयः समर्थाः= कारणभूताः— जिज्ञासादिकं विना कथाप्रवृत्तेरसंभवादिति कथाप्रवृत्तिकारणीभूता अपि जिज्ञासादयो नानुमानवाक्यावयवा इत्यर्थः । अत्र— " प्रकरणम्= कथाप्रवृत्तिः, ते च जिज्ञासादय उत्पन्नाः प्रकरणस्योत्थापकाः स्वरूपेण न पुनः स्वज्ञानेन येन स्वशब्दप्रतिपाद्याः सन्तः प्रकरणेप्यङ्गं भवेयुर्यथा प्रतिज्ञादयः स्वज्ञानेन स्वार्थान् प्रतिपादयन्तः, तस्मात् सर्वथैव जिज्ञासादिवाचकपदप्रयोगोऽनर्थक इति भावः " इति तात्पर्यटीका । जिज्ञासादीनां प्रकरणाङ्गत्वे कारणमाह— अवधारणीयेति, अवधारणीयार्थोपकारात्= निश्चेयस्याऽर्थस्य उपकारकत्वात्= निश्चयजनकत्वात् । प्रतिज्ञादीनामनुमानावयवत्वे कारणमाह— तत्त्वार्थेति, तत्त्वसाधकभावात्= साध्यसाधकत्वात् प्रतिज्ञादय एवोक्ताः पञ्चाऽनुमानवाक्यस्य भागाः= एकदेशाः= अवयवाः न तु जिज्ञासादयोपि— साक्षात् साध्यसाधकत्वाभावादित्यर्थः ॥ ३२ ॥

प्रतिज्ञालक्षणमवतारयति— तेषामिति, तेषाम्= प्रतिज्ञाद्यवयवानां यथाविभक्तानाम्= विभागक्रमेण प्राप्तानां मध्ये साध्यनिर्देशः प्रतिज्ञेत्यन्वयः । साध्यस्य निर्देशः= कथनं प्रतिज्ञेति सूत्रान्वयः । व्याचष्टे— प्रज्ञापनीयेनेति, प्रज्ञापनीयेन= साध्येन धर्मेण= पदार्थेन वह्न्यादिना विशिष्टस्य धर्मिणः= पक्षस्य पर्वतादेः यत् परिग्राहकं वचनं सा प्रतिज्ञा यथा— ' पर्वतो वह्निमान् ' इति । प्रकृतार्थमाह— साध्यनिर्देश इति । अत्र— "परिगृह्यतेऽनेनेति परिग्रहः स च वचनं चेति परिग्रहवचनम् " इति तात्पर्यटीका । उदाहरति— अनित्य इति । स्पष्टं सर्वम् ॥ ३३ ॥

हेतुलक्षणमाह— उदाहरणेति, उदाहरणस्य साधर्म्यात्= सादृश्यात्. यथोदाहरणे महानसादौ वह्निधूमयोः साहित्यं दृष्टमिति तत्सादृश्यात् पर्वतेपि धूमसत्त्वे वह्निसत्त्वं प्राप्नोतीति उदाहरणसाधर्म्यात् साध्यस्य यत् साधनम्= साधकं स हेतुर्यथा 'धूमात्' इति धूम इतिसूत्रान्वयः । व्याचष्टे— उदाहरणेनेति, प्रतियोगित्वं तृतीयार्थः, सामान्यात्= सादृश्यात् दृष्टान्तसादृश्यादित्यर्थः । साध्यस्य धर्मस्य= साध्यलक्षणधर्मस्य । पर्यवसितमाह— साध्ये इति, साध्ये= पक्षे धर्मम्= हेतुभूतपदार्थं धूमादिकं प्रतिसंधाय= दृष्ट्वा उदाहरणे च महानसादौ प्रतिसंधाय= अनुसंधाय= साध्यव्याप्यत्वेन स्मृत्वा तस्य धर्मस्य धूमादेर्यत् साधनतावचनम्= साध्यसाधकत्वकथनम्= साध्यसाधकवचनं स हेतुरित्यन्वयः । उदाहरति— उत्पत्तिधर्मकत्वात्= जन्यत्वादिति, ' अनित्यः शब्द उत्पत्तिधर्मकत्वात् ' इत्यन्वयः । उदाहरणसाधर्म्यमाह— उत्पत्तिधर्मकमिति, उत्पत्तिधर्मकं जन्यमनित्यं दृष्टं यथा घटादिकम् उत्पत्तिधर्मकश्च शब्द इत्यनित्य इत्यर्थ इत्यनित्यत्वसाधकमुत्पत्तिधर्मकत्वं हेतुरित्यलम् ॥ ३४ ॥

किमेतावद् हेतुलक्षणमिति ?. नेत्युच्यते. किं तर्हि ?—

## तथा वैधर्म्यात् ॥ ३५ ॥

उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः, कथम् ?. अनित्यः शब्द उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यं यथाऽऽत्मादिद्रव्यमिति ॥ ३५ ॥

## साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥

साध्येन साधर्म्यम्= समानधर्मता. साध्यसाधर्म्यात् कारणात् तद्धर्मभावी दृष्टान्त इति, तस्य धर्मस्तद्धर्मः. तस्य= साध्यस्य, साध्यं च द्विविधम्- धर्मिविशिष्टो वा धर्मः- शब्दस्यानित्यत्वम् १, धर्मविशिष्टो वा धर्मी- अनित्यः शब्द इति २, इहोत्तरं तद्ग्रहणेन गृह्यते इति, कस्मात् ? पृथग्धर्मवचनात् । तस्य धर्मस्तद्धर्मस्तद्धर्मस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते

---

शङ्कते- किमिति, एतावत्= साध्यसाधर्म्यात् साध्यसाधकत्वम् । उत्तरमाह- नेति । आधिक्यं जिज्ञासते- किमिति । हेतोर्द्वितीयं स्वरूपमाह- तथेति, वैधर्म्यात्= विपक्षोदाहरणवैधर्म्यादपि तथा= साध्यसाधको हेतुरित्यन्वयः, यो न वह्निमान् स न धूमवान् यथा जलह्रद इतिव्यतिरेकव्याप्त्या जलन्हदवैधर्म्यादपि धूमः पर्वते वह्निसाधको भवति. जलह्रदवैधर्म्यं च धूमे व्यतिरेकित्वमितिसूत्रार्थः । व्याचष्टे- उदाहरणेति, उदाहरणवैधर्म्यात्= व्यतिरेक्युदाहरणवैधर्म्यात् साध्यसाधनम्= साध्यसाधको हेतुः, यथान्वय्युदाहरणसाधर्म्याद् हेतोः साध्यसाधकत्वं भवति तथा व्यतिरेक्युदाहरणवैधर्म्यादपि हेतोः साध्यसाधकत्वं भवतीत्याशयः तदेतद् अन्वयव्यतिरेकिहेतुस्थले बोध्यम् । साधर्म्येण साधकत्वमाह- अनित्य इति । वैधर्म्यात् साध्यसाधकत्वमाह- अनुत्पत्तिधर्मकमिति, यन्नोत्पत्तिधर्मकं तन्नित्यं भवति यथात्मादिद्रव्यं शब्दश्चोत्पत्तिधर्मक इति न नित्यो भवितुमर्हति तथा चात्मादिनित्यपदार्थवैधर्म्यादप्युत्पत्तिधर्मकत्वं हेतुरनित्यत्वस्य साधको भवतीति व्यतिरेक्युदाहरणवैधर्म्यादपि साध्यसाधकत्वं हेतुलक्षणमित्यर्थः ॥ ३५ ॥

उदाहरणलक्षणमाह- साध्येति, साध्येन= पक्षेण साधर्म्यात्= सादृश्यात्. साधनभूतधूमादिपदार्थाधिकरणत्वेन पक्षसदृश इतियावत्, तद्धर्मभावी= पक्षधर्मविशिष्टः= पक्षे साध्यमानो यो धर्मः= पदार्थो वह्नयादिस्तद्विशिष्ट इतियावत् एतादृशो यो दृष्टान्तः स एवोदाहरणमित्युच्यते यथा महानसादिरिति सूत्रान्वयः, तदेतदन्वयिदृष्टान्तलक्षणम् । व्याचष्टे- साध्येनेति, साध्येन= पक्षेण प्रतियोगित्वं तृतीयार्थः, साध्यवत्त्वेन पक्षस्यापि साध्यत्वात्, साधर्म्यम्= समानधर्मता= साधनीभूतपदार्थविशिष्टत्वेन सादृश्यम् । एतादृशात् साधनवत्त्वसादृश्यादेव महानसादिर्दृष्टान्तस्तद्धर्मभावी भवतीत्याह- साध्यसाधर्म्यात् कारणादिति, तद्धर्मभाविशब्दस्य व्युत्पत्तिमाह- तस्येति, साध्यस्य= पक्षस्य पर्वतादेः । पक्षस्य द्वैविध्यमाह- साध्यं चेति, धर्मिविशिष्टः= पक्षवृत्तिः धर्मः= पदार्थो वह्नयादिरपि पक्षो भवति यत्र वह्नयादिकमुद्दिश्य पर्वतादिवृत्तित्वं साध्यते यथा- 'वह्निः पर्वतवृत्तिः पर्वते दृश्यमानधूमजनकत्वात्' इति, उदाहरति- शब्दस्येति, अनित्यत्वमुद्दिश्य शब्दवृत्तित्वसाधनेऽनित्यत्वमेव पक्षः स्यात् । द्वितीयां विधामाह- धर्मविशिष्ट इति, धर्मेण= वह्नयादिपदार्थेन विशिष्टो धर्मी= पर्वतादिरपि पक्षो भवति यत्र पर्वतादिकमुद्दिश्य वह्नयादिमत्त्वं साध्यते यथा- 'पर्वतो वह्निमान्' इति । उदाहरति- अनित्य इति, यथाऽनित्यत्वविशिष्टः शब्दो पक्षः- 'शब्दोऽनित्यः' इति शब्दमुद्दिश्यानित्यत्वं साध्यते इति शब्द एव पक्षः । अत्र ग्राह्यं पक्षस्वरूपमाह- इहेति, तद्ग्रहणेन= तद्धर्मभावी इत्यत्र तत्पदेन उत्तरम्= धर्मविशिष्टो धर्मी पर्वतादिः शब्दादिश्च पक्षत्वेन ग्राह्य इत्यन्वयः । इहोत्तरग्रहणे कारणं जिज्ञासते- कस्मादिति । उत्तरमाह- पृथगिति, "तद्धर्मभावी" इत्यत्र धर्मशब्दस्य पृथक्प्रयोगादित्यन्वयः, यद्यत्र

वर्तते स दृष्टान्तः साध्यसाधर्म्यात् तद्धर्मभावी भवति स चोदाहरणमिष्यते, तत्र यदुत्पद्यते तदुत्पत्तिधर्मकं तच्च भूत्वा न भवति= आत्मानं जहाति= निरुध्यते इत्यऽनित्यम्. एवमुत्पत्तिधर्मकत्वं साधनम् अनित्यत्वं साध्यम्. सोयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्यात् व्यवस्थित उपलभ्यते. तं दृष्टान्ते उपलभमानः शब्देप्यनुमिनोति– शब्दोप्युत्पत्तिधर्मकत्वाद् अनित्यः स्थाल्यादिवदिति । उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥३६॥

## तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

"दृष्टान्त उदाहरणम्" इति प्रकृतम्. साध्यवैधर्म्याद्ऽतद्धर्मभावी दृष्टान्त उदाहरणमिति– अनित्यः शब्द उत्पत्तिधर्मकत्वाद्. अनुत्पत्तिधर्मकं नित्यमात्मादि. सोयमात्मादिर्दृ-

पूर्वं वह्न्यादिकमेव पक्षत्वेन तत्पदेन गृहीतं स्यात्तदा वह्न्यादिधर्माणामुष्णत्वादीनां दृष्टान्ते महानसादावनुपलब्ध्या धर्मपदमनपेक्षितं स्यादिति सूत्रे 'तद्भावी' इत्येवोच्येत. तद्भावित्वं च वह्न्यादिमत्त्वं तच्च महानसादौ संभवति, अत्र च धर्मशब्दः पृथक्प्रयुक्त इति तस्य पक्षस्य यो धर्मो वह्न्यादिस्तद्भावित्वं महानसादावस्तीत्यत्र तत्पदेन पक्षत्वेनोत्तरं धर्मविशिष्टो धर्मी पर्वतादिरेव गृह्यते एवं च धर्मपदमनर्थकं न भवतीत्याशयः, वस्तुतस्तु नैतदपि युक्तं वह्न्यादिकमुद्दिश्य पर्वतादिवृत्तित्वसाधने महानसादेर्दृष्टान्तत्वाभावात् पर्वतादिवृत्तिपदार्थान्तरस्यैव दृष्टान्तत्वसंभवादित्यनुसंधेयम् । संप्रति तद्धर्मभाविशब्दस्य साकल्येन व्युत्पत्तिमाह– तस्येति, तस्य= पक्षस्य पर्वतादेर्धर्मविशिष्टधर्मिणः । सः= तद्धर्मभावः= साध्यवत्त्वम् । सः= साध्यसाधर्म्यात् तद्धर्मभावी यो दृष्टान्त स एवोदाहरणमित्यन्वयः । अत्र– "साध्येन साधर्म्यमित्यादिभाष्यं तस्यार्थः– साध्येन धर्मिणा ( प्रकृते ) शब्देन साधर्म्यं दृष्टान्तस्य स्थाल्यादेः कृतकत्वं हेतुस्तदनित्यत्वेन साध्ये च शब्दे दृष्टान्ते च स्थाल्यादौ समानं तस्मात् कारणात्= प्रयोजकात् तद्धर्मभावी= तस्यैव साध्यस्य शब्दस्य धर्मः= धर्मान्तरम्= येन विशिष्टः शब्दः सिषाधयिषितोऽनित्यत्वेन तद् अनित्यत्वं तद्धर्मः स एव भावस्तद्भावः सोऽस्यास्तीति तद्धर्मभावी स्थाल्यादिः अनित्यत्वधर्मवानितियावत् तेन तादृशा दृष्टान्तेनोपलक्षितं तद्विषयं वचनमुदाहरणमिति" इति तात्पर्यटीका । प्रकृते अनित्यः शब्द इत्यत्र नियोजयति– तत्रेति, तत्र= उत्पत्तिधर्मकं च, भूत्वा= उत्पद्य. न भवति= विनश्यतीत्यर्थः, अस्यार्थमाह– आत्मानमिति, आत्मानम्= स्वरूपम्= स्वव्यक्तिम् । अस्याप्यर्थमाह– निरुध्यते इति, निरुध्यते= विनश्यति, तथा चोत्पत्तिधर्मकम् इति= इति हेतोः= विनाशप्रतियोगित्वादनित्यमित्यर्थः । साध्यसाधनयोः प्रकृते स्वरूपमाह– एवमिति, एवम्= उत्पत्तिधर्मकस्य विनाशित्वात् । अनुमितिप्रकारमाह– सोयमिति, द्वयोर्धर्मयोः= प्रकृतेऽनित्यत्वोत्पत्तिधर्मकत्वयोः सोयं साध्यसाधनभावः एकस्मिन्= पक्षे शब्दादौ साधर्म्यात्= साहचर्यात् व्यवस्थितः= नियत उपलभ्यते– यत्रोत्पत्तिधर्मकत्वं तत्रानित्यत्वमिति, तम्= साध्यसाधनभावं दृष्टान्ते स्थाल्यादौ उपलभमानः= जानानः पुरुषः शब्देप्यनुमिनोति– शब्दोप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति, प्रथमं पक्षे साध्यसाधनयोः साहचर्यं सामान्यतो ज्ञात्वा तदनन्तरं दृष्टान्ते स्मृत्वा तदनन्तरं तेन साधनेन तं साध्यं पक्षेऽनुमिनोतीति= प्रमाणेनावधारयतीत्यर्थः । उदाहरणशब्दव्युत्पत्तिमाह– उदाह्रियते इति, धर्मयोः= साध्यसाधनयोः साध्यसाधनभाव उदाह्रियते अनेनेत्युदाहरणमित्यन्वयः यथा महानसवदित्यलम् ॥ ३६ ॥

व्यतिरेकिदृष्टान्तस्य लक्षणमाह– तदिति, तद्विपर्ययात्= पक्षवैधर्म्याद् विपरीतम्= अतद्धर्मभावी= साध्यरहितो दृष्टान्तो व्यतिरेकि उदाहरणं यथा यो नाऽनित्यः स नोत्पत्तिधर्मकः यथाऽऽत्मेति अत्रात्मनि दृष्टान्ते उत्पत्तिधर्मकत्वं नास्तीति शब्दवैधर्म्यं तस्मात् अनित्यत्वमपि नास्तीत्यऽतद्धर्मभावित्वं प्राप्तमित्यात्मा व्यतिरेकी दृष्टान्तः प्रकृते इतिसूत्रार्थः । व्याचष्टे– दृष्टान्त इति, प्रकृतम्= पूर्वसूत्रादनुव-

ष्टान्तः साध्यवैधर्म्यात्= अनुत्पत्तिधर्मकत्वात् अतद्धर्मभावी= योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन्न भवतीति. अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्मकत्वस्याभावादऽनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति— उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति ।

साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्, वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादऽतद्धर्मभावी दृष्टान्त उदाहरणम्, पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येपि तयोः साध्यसाधनभावमनुमिनोति, उत्तरस्मिन् दृष्टान्ते ययोर्धर्मयोरेकस्याऽभावादितरस्याभावं पश्यति तयोरेकस्याऽभावादितरस्याभावं साध्येऽनुमिनोतीति. तदेतद् हेत्वाभासेषु न संभवतीत्यऽहेतवो हेत्वाभासाः । तदिदं हेतूदाहरणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितरूपवेदनीयमिति ॥ ३७ ॥

तेनीयं तथा च ' तद्विपर्ययाद् दृष्टान्तो विपरीतमुदाहरणम् ' इति सूत्रव्यक्तिः सिद्धा । तद्विपर्ययपदार्थमाह— साध्यवैधर्म्यादिति, हेतोरसत्त्वेन पक्षवैधर्म्यादित्यर्थः, विपरीतत्वपदार्थमाह— अतद्धर्मभावीति, साध्यरहित इत्यर्थः । एतादृशो दृष्टान्तो व्यतिरेक्युदाहरणमित्यन्वयः । प्रकृतपक्षसाध्यहेतूनाह— अनित्य इति, व्यतिरेक्युदाहरणमुदाहरति— अनुत्पत्तिधर्मकमिति, तदनेनात्मनः पक्षवैधर्म्यं हेतुराहित्यं प्रदर्शितम्, नित्यमित्यनेनाऽतद्धर्मभावित्वम्= अनित्यत्वराहित्यं प्रदर्शितम् । निगमयति— सोयमिति, दृष्टान्तः= व्यतिरेकदृष्टान्तः, आत्मनि पक्षवैधर्म्यमाह— साध्येति, उत्पत्तिधर्मकत्वाभाव एव शब्दवैधर्म्यं तस्माद् अतद्धर्मभावी= अनित्यत्वरहितः । आत्मन्यतद्धर्मभावं समन्वयति— योसाविति, साध्यस्य= पक्षभूतशब्दस्य, तस्मिन्= आत्मनि न भवति= नास्तीत्यऽतद्धर्मभावी आत्मा । उपसंहरति— अत्रेति, आत्मनि उत्पत्तिधर्मकत्वाभावाद् अनित्यत्वाभावम् उपलभमानः= प्रमीयमाणः पुरुषः अनित्यत्वोत्पत्तिधर्मकत्वयोः साध्यसाधनभावं प्रमाय शब्दे उत्पत्तिधर्मकत्वाद् विपर्ययम्= नित्यत्वाभावम्= अनित्यत्वमनुमिनोति— अनित्यः शब्द उत्पत्तिधर्मकत्वस्य भावात्= सत्त्वात्= उत्पत्तिधर्मकत्वात् यो नाऽनित्यः स नोत्पत्तिधर्मको यथाऽऽत्मेति अत्रात्मा तद्विपर्ययाद् विपरीतम्= व्यतिरेक्युदाहरणमित्यन्वयः ।

अन्वयव्यतिरेकाभ्यामुक्तयोर्हेतुदृष्टान्तयोः परस्परं व्यवस्थामाह— साधर्म्येति, साधर्म्येण= अन्वयव्याप्त्या उक्तस्य हेतोरुक्तरीत्या यः साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्तः स एवोदाहरणं भवति महानसादिकं. यथा पर्वतो वह्निमान् धूमात् महानसवदिति. न तु व्यतिरेकी दृष्टान्तो जलह्रदादिरुदाहरणं भवतीत्यर्थः । वैधर्म्येण= व्यतिरेकव्याप्त्या उक्तस्य च हेतोरुक्तरीत्या यः साध्यवैधर्म्याद् अतद्धर्मभावी दृष्टान्तो भवति स एवोदाहरणं भवति जलह्रदादिकं यथा यो न वह्निमान् स न धूमवान् भवति यथा जलह्रद इति. नास्यान्वयी दृष्टान्तो महानसादिरुदाहरणं भवतीत्यर्थः । प्रथमकल्पं समन्वयति— पूर्वेति, पूर्वस्मिन्= अन्वयिनि दृष्टान्ते महानसादौ यौ तौ धर्मौ= वह्निधूमौ साध्यसाधनभूतौ= साध्यसाधनभावेन पुमान् पश्यति साध्ये= पक्षेपि तयोः= वह्निधूमयोः साध्यसाधनभावमनुमिनोति= साध्यसाधनभावेन साधनात् साध्यमनुमिनोतीत्यर्थः । उत्तरस्मिन्= व्यतिरेकिणि दृष्टान्ते जलह्रदादौ ययोर्धर्मयोः= वह्निधूमयोर्मध्ये एकस्य= वह्नेरभावाद् इतरस्य= धूमस्याभावं पश्यति साध्ये= पक्षेपि तयोः= वह्न्यभावधूमाभावयोर्मध्ये एकस्य= धूमाभावस्याऽभावात्= धूमसत्त्वात् इतरस्य= वह्न्यभावस्याऽभावम्= वह्निसत्त्वमनुमिनोतीत्यनेन प्रकारेण व्यतिरेकिदृष्टान्तस्यानुमानोपकारकत्वं विज्ञेयम्, एवमेव ' अनित्यः शब्द उत्पत्तिधर्मकत्वात् ' इत्यत्रापि समन्वयः कर्तव्यः अत्रान्वयी दृष्टान्तः स्थाल्यादिर्व्यतिरेकी च दृष्टान्त आत्मादिरिति सर्वं पूर्वत्र स्पष्टम् । हेत्वाभासेभ्यो हेतूनां विशेषमाह— तदेतदिति, तदेतत्= साध्यसाधकत्वं साध्यसाधनभावो वा व्याप्यव्यापकभावो वा साध्यव्याप्यत्वं वा । हेतुदृष्टान्तयोः प्रतिपादनमुपसंहरति— तदिदमिति, सामर्थ्यम्= साध्यसाधकत्वलक्षणसामर्थ्यम् । पण्डि-

## उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८॥

उदाहरणापेक्षः= उदाहरणतन्त्रः= उदाहरणवशः, वशः= सामर्थ्यम्। साध्यसाधर्म्ययुक्ते उदाहरणे— स्थाल्यादिद्रव्यमुत्पत्तिधर्मकम् अनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते, साध्यवैधर्म्ययुक्ते पुनरुदाहरणे— आत्मादिद्रव्यमऽनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इत्यऽनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेन उत्पत्तिधर्मकत्वमुपसंह्रियते, तदिदमुपसंहारद्वैतमुदाहरणद्वैताद् भवति। उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्य इति। द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैतं च समानम् ॥ ३८ ॥

---

तद्रूपवेदनीयम्= प्रशस्ततार्किकग्राह्यमित्यर्थः— स्थूलदृष्ट्या हेतुत्वोदाहरणत्वप्रतीतौ सत्यामपि पर्यवसाने सूक्ष्मबुद्धया व्यभिचारप्राप्तेः संभवाद् बहुत्र दर्शनाच्च, प्रशस्तपण्डितवेदनीयं यथा घटादौ पार्थिवत्वलोहलेख्यत्वयोर्व्याप्तिग्रहे जातेपि हीरकादौ व्यभिचारदर्शनं जायते लोहलेख्यत्वाभाववत्यपि हीरकादौ पार्थिवत्वस्य सत्त्वाद् व्यभिचारः प्राप्त इत्यलम् ॥ ३७ ॥

उपनयलक्षणमाह— उदाहरणेति, साध्यस्य= पक्षस्य= य उदाहरणापेक्षः= दृष्टान्ताधीनोऽन्वयिदृष्टान्तस्थले तथा= तथा चायमित्युपसंहारः व्यतिरेकिदृष्टान्तस्थले च न तथा= न चायं तथेत्युपसंहार स उपनय इत्यन्वयः, उपसंह्रियते हेतुरनेन पक्षे इत्युपसंहारः स एवोपनयः, यथा 'पर्वतो वह्निमान् धूमाद् यो यो धूमवान् स वह्निमान् यथा महानसः तथा चायं पर्वतः' इति तथा= वह्निव्याप्यधूमवानित्यन्वयिदृष्टान्तेनोपनयः, यो न वह्निमान् स न धूमवान् यथा जलह्रदः अयं च न तथा= अयं पर्वतस्तु तथा= धूमाभाववान्न किं तु धूमवानेवेति व्यतिरेकिदृष्टान्तेनोपनयः। उदाहरणं विनोपनयस्य संभावना नास्तीति उदाहरणापेक्ष इत्युक्तमिति सूत्रार्थः, अत्र— "साध्यस्य= पक्षस्य उदाहरणापेक्षः= उदाहरणानुसारी य उपसंहारः= न्यासः प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविषयकबोधजनको न्यायावयव इत्यर्थः" इति विश्वनाथभट्टाः। व्याचष्टे— उदाहरणेति, इति त्रयमपि पर्यायपदम्, उदाहरणवशः= उपाहरणवश्यः= उदाहरणाधीनः— उदाहरणं विनोपनयस्याऽसंभवात्, उदाहरणेन सिद्धस्यैवार्थस्योपनयेन पक्षे उपसंहारादित्यर्थः। अन्वयिदृष्टान्तसाध्यमुपनयमुदाहरति— साध्यसाधर्म्येति, साध्यसाधर्म्येण युक्ते= प्रयुक्ते सति उदाहरणे, अन्वय्युदाहरणस्थले इत्यर्थः, प्रकृतमाह— स्थाल्यादीति, अनित्यः शब्दः उत्पत्तिधर्मकत्वाद् उत्पत्तिधर्मकं च स्थाल्यादिद्रव्यमनित्यं दृष्टं शब्दश्चायं तथा= उत्पत्तिधर्मक इति साध्यस्य शब्दस्य= पक्षभूते शब्दे उत्पत्तिधर्मकत्वं हेतुरुपनयेनोपसंह्रियते इत्यन्वयः, व्यतिरेकिदृष्टान्तसाध्यमुपनयमाह— साध्यवैधर्म्येति, पक्षवैधर्म्येण प्रयुक्ते चोदाहरणे— अनित्यः शब्द उत्पत्तिधर्मकत्वाद् अनुत्पत्तिधर्मकं चात्मादिद्रव्यं नित्यं दृष्टं शब्दश्चायं तथा= अनुत्पत्तिधर्मको न किं तूत्पत्तिधर्मक एव, तथा चाऽनुत्पत्तिधर्मकत्वस्य उपसंहारप्रतिषेधेन= न तथा इत्यनेन पक्षे शब्दे उत्पत्तिधर्मकत्वमुपनयेनोपसंह्रियते इत्यन्वयः। उपनयद्वैतस्य कारणमाह— तदिदमिति, उपसंहारद्वैतम्= उपनयद्वैतम्, अन्वय्युदाहरणस्थलेऽन्वयेन व्यतिरेक्युदाहरणस्थले च व्यतिरेकेणोपसंहारो भवतीत्युपनयद्वैतं सिद्धम्। उपनयस्योपसंहारत्वकारणमाह— उपसंह्रियते इति, अनया व्युत्पत्त्या उपनय एवोपसंहारो वेदितव्य इत्यर्थः। उपनयद्वैते विनिगमनामाह— द्विविधस्येति, अन्वयिव्यतिरेकित्वाभ्यां द्विविधस्य, हेतूदाहरणयोर्द्वैते तयोरुपसंहारस्यापि द्वैतं समानम्= तुल्यं युक्तं वेत्यर्थः। यदाहि अन्वयिव्यतिरेकित्वाभ्यां हेतूदाहरणयोर्द्वैतं तदोपसंहारस्य= उपनयस्यापि द्वैतमावश्यकमेवेत्यर्थः। किं वेदं वाक्यमग्रिमसूत्रस्यावरणभूतं विज्ञेयम् ॥ ३८ ॥

## हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥

साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते- तस्मादुत्पत्तिधर्मकत्वादऽनित्यः शब्द इति निगमनम्, निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम्. निगम्यन्ते= समर्थ्यन्ते= संबध्यन्ते । तत्र साधर्म्योक्ते तावद् हेतौ वाक्यम्- अनित्यः शब्द इति प्रतिज्ञा. उत्पत्तिधर्मकत्वादिति हेतुः. उत्पत्तिधर्मकं स्थाल्यादिद्रव्यमऽनित्यमित्युदाहरणम्. तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः. तस्मादुत्पत्तिधर्मकत्वादऽनित्यः शब्द इति निगमनम्, वैधर्म्योक्तेपि- अनित्यः शब्दः १ उत्पत्तिधर्मकत्वात् २ अनुत्पत्तिधर्मकमात्मादिद्रव्यं नित्यं दृष्टम् ३ न च तथाऽनुत्पत्तिधर्मकः शब्दः ४ तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः ५ इति ।

अवयवसमुदाये च वाक्ये संभूयेतरेतराभिसंबन्धात् प्रमाणान्यर्थं साधयन्तीति, संभवः तावत् शब्दविषया प्रतिज्ञा आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानात् अनृषेश्च स्वात-

---

निगमनलक्षणमुपपादयति- हेत्विति, हेत्वपदेशात्= हेतुव्यपदेशात्= उपनयकृतहेतुनिर्देशमाश्रित्य प्रतिज्ञाया यत् पुनर्वचनं तद् निगमनं यथा ' तस्मात्तथा= वह्निमान् ' इति, तथाच पर्वतो वह्निमान् १ धूमात् २ यो यो धूमवान् स वह्निमान् यथा महानसः ३ तथा चायम् ४ तस्मात्तथा ५ इत्यत्र 'तस्मात्तथा' इति प्रतिज्ञायाः पुनर्वचनमेव निगमनम् । उपनयेन हेतूपसंहारः कृत इति तदनन्तरं साध्योपसंहारोप्यावश्यक एवेति स एव निगमनेन क्रियते, साध्योपसंहारश्च प्रतिज्ञायाः पुनर्वचनमेवेति सूत्रार्थः । व्याचष्टे- साधर्म्योक्ते इति, हेतौ साधर्म्येण= उदाहरणसाधर्म्येण= अन्वयव्याप्त्या वोक्ते वैधर्म्येण= उदाहरणवैधर्म्येण= व्यतिरेकव्याप्त्या वोक्ते यथोदाहरणम्= उदाहरणानुसारेण पक्षे निगमनेन साध्यमुपसंह्रियते इत्यन्वयः, उदाहरति- तस्मादिति, 'अनित्यः शब्दः ' इति साध्योपसंहार एव निगमनम् । निगमनशब्दव्युत्पत्तिमाह- निगम्यन्ते इति, एकत्र= साध्यसिद्धौ, निगमनेन साध्योपसंहारे कृते हि प्रतिज्ञाहेतूदाहरणोपनयानां साध्यसाधने पर्यवसानं भवति नाऽन्यथेत्यर्थः । निगमनपदार्थमाह- समर्थ्यन्ते= संबध्यन्ते इति, निगमनेनैव प्रतिज्ञादीनां साध्यसिद्ध्या संबन्धो भवति- साध्यप्रतिपादकत्वात, साध्यसाधकत्वं भवतीति यावत् इत्याशयः प्रतिभाति । साधर्म्येणोक्तहेतुपक्षे पञ्चावयववाक्यान्याह- तत्रेत्यादिना, तथा= स्थाल्यादिद्रव्यवत् । निगमनावयववाक्यमाह- तस्मादिति, अत्र ' अनित्यः शब्दः' इत्येव निगमनम् । वैधर्म्येणोक्तहेतुपक्षे पञ्चावयववाक्यान्याह- वैधर्म्योक्तेपीति, वैधर्म्योक्तेपि हेतौ तावद् वाक्यमित्यन्वयः । अनित्यः शब्द इति प्रतिज्ञा, उत्पत्तिधर्मकत्वादिति हेतुः, अनुत्पत्तिधर्मकमात्मादिद्रव्यं नित्यं भवतीति व्यतिरेक्युदाहरणम्, न च तथाऽनुत्पत्तिधर्मकः शब्द इति व्यतिरेक्युपनयः, यदा हि नानुत्पत्तिधर्मकस्तदोत्पत्तिधर्मकस्तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनं निगमनस्य साध्योपसंहारार्थत्वाद् व्यतिरेकित्वं न संभवतीत्यनुसंधेयम् ।

प्रतिज्ञाद्यवयवानां संभूयार्थप्रतिपादकत्वमाह- अवयवेति, अवयवसमुदाये वाक्ये= पञ्चावयवसमुदायात्मके वाक्ये प्रमाणानि= प्रतिज्ञादीनि संभूय संयुज्य= मिलित्वा= परस्परसंबन्धादेव अर्थम्= साध्यं साधयन्ति नाऽन्यथेत्यन्वयः । संभूयेति धात्वर्थः संभव एवेति प्रतिज्ञानन्तरं हेत्वाद्यवयवानां संभवम्= प्राप्तिमाह- संभव इति, शब्दविषया= शब्दानित्यत्वविषया प्रथमं प्रतिज्ञा केनचित् कृता- ' अनित्यः शब्दः ' इति, सा च प्रतिज्ञाऽऽप्तोपदेशरूपैव- आप्तोक्तवाक्यरूपत्वात् आप्तोपदेशस्य च सति संभवे प्रत्यक्षेण परीक्षा क्रियते प्रत्यक्षासंभवे चानुमानेन प्रतिसंधानात्= परीक्षणात्, उक्ते हेतुमाह- अनृषेरिति, ऋषिभिन्नस्य= योगसामर्थ्यरहितस्य पुरुषस्य स्वातन्त्र्यानुपपत्तेः- प्रत्यक्षानुमानाभ्यां विना स्वातन्त्र्येण योगसामर्थ्याभावात् पदार्थावधारणं नोपपद्यते शब्दानित्यत्वं च न प्रत्यक्षमित्यनुमानेनैवावधारणी-

न्यथानुपपत्तेरनुमानं हेतुः, उदाहरणे सादृश्यप्रतिपत्तेः तच्चोदाहरणभाष्ये व्याख्यातम्— प्रत्यक्षविषयमुदाहरणम्— दृष्टेनादृष्टसिद्धेः, उपमानमुपनयः— तथेत्युपसंहारात्. न च तथेति चोपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः, सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति।

इतरेतराभिसंबन्धोपि— असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्तेरन्, असति हेतौ कस्य साधनभावः प्रदर्श्येत उदाहरणे ? साध्ये च कस्योपसंहारः स्यात् ? कस्य चापदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति ?, असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत ? कस्य वा साधर्म्यवशादुपसंहारः प्रवर्तेत ?, उपनयं चान्तरेण साध्येऽनुप-

---

यम् अनुमानं च हेतुरेवेति 'अनित्यः शब्दः' इत्याप्तोपदेशरूपायाः प्रतिज्ञायाः परीक्षणं हेतुनैव संभवतीति प्रतिज्ञानन्तरम् 'उत्पत्तिधर्मकत्वात्' इत्यादिर्हेतुरुच्यते इति हेतुसंभवः सिद्ध इत्यर्थः । उत्पत्तिधर्मकत्वेपि शब्दस्यानित्यत्वं कथं स्यात् किंवद्वा स्यादित्येवं हेत्वनन्तरं सादृश्यजिज्ञासा जायते तच्च सादृश्यं उदाहरणे ज्ञायते— 'यथोत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिस्तथा शब्दोप्यनित्यः' इत्युदाहरणे एव सादृश्यप्रतिपत्तेर्हेत्वनन्तरमुदाहरणसंभवः सिद्ध इत्याह— उदाहरणे इति, "सादृश्यप्रतिप्रतिपत्तेः" इत्यत्र 'सादृश्यप्रतिपत्तिः' इतिवक्तव्यमासीत् । तच्च= पक्षसपक्षयोः सादृश्यं चोदाहरणभाष्ये= उदाहरणसूत्रभाष्ये व्याख्यातमित्यन्वयः। उदाहरणस्य विशेषमाह— प्रत्यक्षेति, तच्चोदाहरणं प्रत्यक्षज्ञानविषयम्= प्रत्यक्षभूतमेव ग्राह्यं नाऽप्रत्यक्षम्, उक्ते हेतुमाह— दृष्टेनेति, प्रत्यक्षेणैवोदाहरणेनाऽप्रत्यक्षपदार्थसिद्धिसंभवात् यथा प्रत्यक्षेण वास्यादिकरणवत्त्वेनात्मनः सकरणत्वमनुमीयते= साध्यते, यद्युदाहरणमप्रत्यक्षं स्यात्तदा तत्राभिप्रेतधर्मसिद्ध्यर्थमनुमानान्तरापेक्षायामनवस्थैव स्यादिति प्रत्यक्षमेवोदाहरणं भवतीत्यर्थः। उपनयसंभवमाह— उपमानमिति, उदाहरणानन्तरं तत्सादृश्येन साध्यव्याप्यहेतोः पक्षे उपसंहार आवश्यक इति तदर्थमुपनयसंभवः सिद्धः उपनयश्चोपमानमेवेत्यर्थः, उपनयस्योपमानत्वे हेतुमाह— तथेति, तथेत्युपसंहार उपमानेनैव भवतीति तथेत्युपसंहारादुपनय उपमानमित्यर्थः । व्यतिरेक्युपनयस्य प्रकृतहेतूपसंहारकत्वमाह— न च तथेति, अयं शब्दश्च तथा अनुत्पत्तिधर्मको नेत्यनेनोपमानधर्मस्य= अनुत्पत्तिधर्मकत्वस्य प्रतिषेधे कृते तद्विपरीतधर्मस्य= उत्पत्तिधर्मकत्वस्य उपसंहारः सिध्यतीति व्यतिरेक्युपनयस्यापि पर्यवसाने प्रकृतसाध्यव्याप्यहेतूपसंहारकत्वं सिद्धमित्यर्थः । उपनयेन हेतूपसंहारे कृते साध्योपसंहारापेक्षा जायते इत्युपनयानन्तरं निगमनसंभवः सिद्ध इत्याह— सर्वेषामिति, सर्वेषाम्= प्रतिज्ञाद्युपनयान्तानाम् एकार्थप्रतिपत्तौ= साध्यप्रतिपत्तौ सामर्थ्यप्रदर्शनमेव निगमनम्— यतोयं साध्यव्याप्यहेतुमान् अतः साध्यवानिति निगमेन प्रतिपादनात् प्रतिज्ञादीनां साध्यसाधकत्वलक्षणं सामर्थ्यं स्फुटीभवतीत्याशयः ।

प्रतिज्ञाद्यवयवनां परस्परसंबन्धं वा परस्परसापेक्षत्वं वोपपादयति— इतरेतरेति, हेत्वाद्यवयवानां प्रतिज्ञैवाश्रयः— सत्यामेव प्रतिज्ञायां हेत्वाद्यवयवानां प्रवृत्तिसंभवादिति हेत्वाद्यवयवानां प्रतिज्ञया संबन्धः सिद्ध इत्याह— असत्यामिति । हेतोरावश्यकतामाह— असतीति, प्रतिज्ञासिद्धिर्हेतुनैव संभवतीति हेतुसंबन्धः सिद्धः, साधनभावः= प्रतिज्ञासाधकत्वम्, स च साध्यसाधनभाव उदाहरणे प्रदर्शनीयो भवति यथा— यो धूमवान् स वह्निमान् महानसवदित्याह— उदाहरणे इति । किं चाऽसति हेतावुपनयेन साध्ये= पक्षे कस्योपसंहारः स्यात् ? न कस्यापीति हेतोरावश्यकता— उपनयेन पक्षे हेतोरेवोपसंहारात्, किं च यद्युपनयेन पक्षे हेतूपसंहारो न स्यात् तदा कस्य व्यपदेशात् प्रतिज्ञायाः पुनर्वचनलक्षणं निगमनमपि स्यात् ? इति निगमनेनापि हेतुसंबन्धः सिद्धः । उदाहरणसंबन्धमाह— असत्युदाहरणे इति, यद्युदाहरणं न स्यात्तदा साध्यसाधकं पक्षे साधर्म्यं वा वैधर्म्यं वा केनोपपाद्येत ? कस्य च साधर्म्यवशात् पक्षे उपनयनिगमनाभ्यां हेतुसाध्ययोरुपसंहारः स्यात् ? न स्यादेवेति तदर्थमुदाहरणापेक्षा प्राप्ता

संहृतः साधको धर्मो नार्थं साधयेत् ?, निगमनाभावे च नाऽनभिव्यक्तसंबन्धानां प्रतिज्ञादीना-मेकार्थेन प्रतीयेतार्थप्रतिपादकत्वम् ? इति ।

अथावयवार्थः– साध्यस्य धर्मस्य धर्मिणा संबन्धोपादानं प्रतिज्ञार्थः, उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचनं हेत्वर्थः, धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्र उदाहरणार्थः, साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः, उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम् ।

न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् जातिनिग्रहस्थानबहुत्वं प्रक्रमते– अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जाति-

---

तथा चोदाहरणस्यापि संबन्धः सिद्धः । उपनयनसंबन्धमाह– उपनयमिति, अन्तरेण= विना, यद्युपनयो न स्यात् तदा साध्ये= पक्षे साधको धर्मः= हेतुर्नोपसंहृतः स्यात् अनुपसंहृतश्चाऽर्थम्= साध्यं न साधयेदिति हेतूपसंहारायोपनयापेक्षा प्राप्तेत्युपनयसंबन्धः सिद्धः । निगमनसंबन्धमाह– निगमनाभावे इति, निगमने सत्येव प्रतिज्ञादीनां परस्परसंबन्धस्याभिव्यक्तिर्भवति– निगमनेनैव प्रतिज्ञोपसंहारादिति, यदि निगमनं न स्यात्तदाऽनभिव्यक्तसंबन्धानां प्रतिज्ञादीनाम् एकार्थेन= पक्षेण किं वा समुच्चयेन= एकीभावेन अर्थप्रतिपादकत्वम्= साध्यसाधकत्वं न प्रतीयेत निगमने सति च साध्यसाधकत्वं प्रतीयते इति निगमनसंबन्धः सिद्धः । पर्यवसाने निगमनेनैवोपसंहाराद् निगमनेन प्रतिज्ञादीनां परस्परं संबन्धाभिव्यक्तिर्भवतीत्यनुसंधेयम् यथा निगमनेन साध्योपसंहारे कृते साध्यस्य हेतुना संबन्धः सिद्धः. साध्यसाधनभावप्रदर्शनार्थं दृष्टान्तेन संबन्धाभिव्यक्तिर्भवति ततश्च प्रतिज्ञाहेतुभ्यामपि संबन्धाभिव्यक्तिर्भवतीत्यलम् ।

संप्रत्यवयवानां प्रयोजनं प्रतिपादयति– अथेति, साध्यस्य धर्मस्य वह्न्यादेः धर्मिणा= पक्षेण सह संबन्धोपादानम्= संबन्धबोधनमेव प्रतिज्ञार्थः= प्रतिज्ञाप्रयोजनम्– 'पर्वतो वह्निमान्, इतिप्रतिज्ञया वह्नेः पर्वते सत्त्वज्ञानस्य जायमानत्वात् । हेतुप्रयोजनमाह– उदाहरणेनेति, अन्वय्युदाहरणेन समानस्य साध्यस्य व्यतिरेक्युदाहरणेन विपरीतस्य वा साध्यस्य साधकभाववचनम्= सत्त्वोपपादनं हेतुप्रयोजनम्– साधकभाववचनमात्रस्य हेतुस्वरूपत्वात् किं वात्र 'साध्यत्ववचनम्' इतिवक्तव्यमासीत्, "सामानस्य विपरीतस्य वा साध्यस्य" इति तु पूर्वत्र स्पष्टम् । धर्मयोः= साध्यसाधनयोरेकत्र साध्यसाधनभावप्रदर्शनमेवोदाहरणप्रयोजनम्, किं वा "एकत्र" इत्यस्य 'सामानाधिकरण्ये सति' इत्यर्थः । साधनभूतस्य धर्मस्य धूमादेः साध्येन धर्मेण वह्न्यादिना सह सामानाधिकरण्योपपादनमुपनयप्रयोजनम्– उपनयेन साध्यविशिष्टपक्षे हेतोः सत्त्वोपपादनादित्यर्थः । उदाहरणस्थयोर्धर्मयोः= साध्यसाधनयोरुदाहरणे सामानाधिकरण्येन अविनाभावेन वा साध्यसाधनभावोपपत्तौ जातायां साध्ये= पक्षे विपरीतप्रसङ्गस्य= साध्याभावापत्तेः प्रतिषेध एव निगमनप्रयोजनम्– निगमनेन साध्याभावे प्रतिषिद्धे साध्यसिद्धेः संभवादित्यन्वयः ।

पञ्चस्ववयवेषु मध्ये प्रतिज्ञा तु साध्यत्वात् साधिकैव न भवति उपनयनिगमने च हेतुसाध्ययोरुपसंहारपरे एवेति न ते अपि साध्यसाधके भवत इति पारिशेष्यात् हेतूदाहरणयोरेव वस्तुतः साध्यसाधकत्वं पर्यवस्यति ते च हेतूदाहरणे यद्यऽव्यभिचारिणी भवतस्तदा साध्यसाधके भवत इति हेतूदाहरणयोः परिशुद्धेः= अव्यभिचारित्वस्य फलमाह– न चेति, एतस्याम्= उक्तरूपायाम्= अव्यभिचारित्वरूपायां हेतूदाहरणयोः परिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् जातिनिग्रहस्थान-

वादी प्रत्यवतिष्ठते. व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य न वैधर्म्यमात्रस्य वेति ॥ ३९ ॥

अत ऊर्ध्वं तर्को लक्षणीयस्तर्क इति—

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥**

अथेदमुच्यते— अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते— जानीये इममर्थमिति, अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति— किंस्विदित्येवम् ? आहोस्विन्नैवम् ? इति, विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति— संभवत्यस्मिन् कारणम्= प्रमाणम्= हेतुरिति, कारणोपपत्त्या स्यादेवमेतद् नेतरदिति ।

योर्बहुत्वं न प्रक्रमते= न प्राप्नोतीत्यन्वयः । किं वा साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानविकल्पाज्जातिनिग्रहस्थानबहुत्वमुक्तमग्रे सा जातिर्निग्रहस्थानं च हेतूदाहरणयोः परिशुद्धौ सत्यां न प्रक्रमते इत्यन्वयः । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् जातिनिग्रहस्थानबहुत्वमित्यादि सर्वमेतदध्यायान्ते द्रष्टव्यं नेह विस्तरभयादुपपाद्यते । उक्ते हेतुमाह— अव्यवस्थाप्येति, धर्मयोः= साध्यसाधनत्वेनाभिमतयोः पदार्थयोरुदाहरणे साध्यसाधनभावमव्यवस्थाप्यैव जातिवादी= जात्युत्तरवादी प्रत्यवतिष्ठते= शङ्कते, साध्यसाधनभावे व्यवस्थिते तु जातेरवसरो न भवतीत्याह— व्यवस्थिते इति, धर्मयोः= साध्यसाधनयोर्दृष्टान्तस्थे साध्यसानभावे व्यवस्थिते= व्यभिचाररहिते गृह्यमाणे तु साधनभूतस्य धर्मस्य धूमादेर्यद् हेतुत्वेनोपादानं तन्न साधर्म्यमात्रस्य= साधर्म्यमात्रेण येन वैधर्म्येण प्रत्यवस्थानात् जातिः प्रसरेत् न वा वैधर्म्यमात्रस्य= वैधर्म्यमात्रेणोपादानं येन साधर्म्येण प्रत्यवस्थानात् जातिः प्रसरेत् किं तु अव्यभिचारिणो हेतोः साधर्म्यवैधर्म्याभ्याम्= अन्वयव्यतिरेकव्याप्तिवैशिष्ट्येनैवोपादानं भवतीति न साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् जातिनिग्रहस्थानबहुत्वं प्रक्रमते इत्यन्वयः । यदा हि केन चिदुक्तम् 'पर्वतो वह्निमान् पाषाणमयत्वात्' इति तत्र वैधर्म्येण जातिवादी प्रत्यवतिष्ठते— 'यो न वह्निमान् स न पाषाणमयः' इति व्यतिरेकव्याप्तिर्नास्तीति वह्न्यभाववत्यपि जलह्रदे पाषाणमयत्वस्य संभवात् पाषाणमयत्वं वह्निसाधकं नेति वैधर्म्येण प्रत्यवस्थानं विज्ञेयम्, यदा हि केन चिदुक्तम्—' पर्वतो वह्निमान् जलाभावात्' इति तत्र साधर्म्येण जातिवादी प्रत्यवतिष्ठते 'यो जलाभाववान् स वह्निमान्' इत्यन्वयव्याप्तिर्नास्ति— घटादौ जलाभाव सत्त्वेपि वह्न्यभावादिति जलाभाववत्त्वं वह्निसाधकं नेति साधर्म्येण प्रत्यवस्थानं विज्ञेयम्, तदेतत् प्रत्यवस्थानमऽन्वयव्यतिरेकव्याप्तौ शुद्धायां न संभवतीत्यलम् ॥ ३९ ॥

तर्कलक्षणमवतारयति— अत इति, तर्कः= एवम्भूतस्तर्क इत्येवं तर्को लक्षणीय इत्यन्वयः । अविज्ञातेति— अर्थे= पदार्थे अविज्ञाततत्त्वे= अविज्ञातस्वरूपे सति कारणोपपत्तितः= हेतूपपादनद्वारा तादृशपदार्थस्य तत्त्वज्ञानार्थम्= यथार्थस्वरूपज्ञानार्थं य ऊहः= संभावना स तर्कः यथा स्थाणुर्वा पुरुषो वेति संशये जाते एतादृशदेशकालयोः पुरुषसत्त्वं नोपपद्यते इत्यादिकारणप्रतिपादनेन दृश्यमानस्य यत् स्थाणुत्वसंभावनं स तर्कः, यथा च यद्यत्र वह्निर्न स्यात्तदा धूमोपि न स्यादिति धूमोपपादनेन वह्निसंभावनं तर्कः स च संशये सति प्रमाणानां तत्त्वावधारणे सहकारिकारणमिति सूत्रार्थः । व्याचष्टे— अथेदमिति, सामान्यतो ज्ञाते तत्त्वतश्चाज्ञाते तत्त्वज्ञानार्थं जिज्ञासा तावत्= प्रथमं जायते, जिज्ञासास्वरूपमाह— जानीये इममर्थमिति । अथ= जिज्ञासानन्तरं जिज्ञासाविषयीभूतस्य पदार्थस्य व्याहतौ= परस्परविरुद्धौ धर्मौ विभागेन= पार्थक्येन विमृशति यथा स्थाणुपुरुषधर्मौ यथा च पर्वते वह्निमत्त्वं वन्ह्यभाववत्त्वं च वक्ष्यमाणोदाहरणस्थले चात्मन उत्पत्तिधर्मकत्वमनुत्पत्तिधर्मकत्वं चेति, विमर्शमुदाहरति— किमिति, इत्येवम्= उत्पत्तिधर्मकः, नैवम्= अनुत्पत्तिधर्मको वाऽऽत्मेति, अत्र "किं स्विदित्थम् ? आहोस्विन्नेत्थम् ?" इत्यपिपाठः । विमर्शानन्तरं तर्कमाह— विमृश्येति, विमृश्यमानयोर्धर्मयोः=

तत्र निदर्शनम्- योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं च भो तत्त्वतो जानीय इति जिज्ञासा, स किमुत्पत्तिधर्मको वाऽनुत्पत्तिधर्मक इति? विमर्शः, विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याऽभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति- यद्ययमनुत्पत्तिधर्मकस्ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता. दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम् उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ, उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्- उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः संबध्यते इति नाऽस्येदं स्वकृतस्य कर्मणः फलम्- उत्पन्नश्च भूत्वा न भवतीति तस्याऽविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति तदेवमेकस्याऽनेकशरीरयोगः शरीरवियोगश्चात्यन्तं न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति, सोयमेवंलक्षण ऊहस्तर्क इत्युच्यते ।

उत्पत्तिधर्मकत्वानुत्पत्तिधर्मकत्वयोर्मध्ये एकम्= एकतरं धर्मम्= अनुत्पत्तिधर्मकत्वं कारणोपपत्त्या= आत्मनो नित्यत्वे एव कर्मादिफलं संभवति अन्यथा कृतहानिरकृताभ्यागमः स्यादित्यादिना नित्यत्व-कारणोपपादनेनाऽनुजानाति= संभावयति । अभ्यनुज्ञास्वरूपमाह- संभवतीति, अस्मिन्= यथाऽनुत्प-त्तिधर्मकत्वे कारणम्= प्रमाणलक्षणं हेतुः संभवतीति नित्यत्वकारणस्य कृतकर्मफलभोक्तृत्वस्योपपत्त्या एतत्= आत्मा एवम्= अनुत्पत्तिधर्मक एव, इतरत्= उत्पत्तिधर्मक आत्मा नेत्यन्वयः ।

स्वयमुदाहरति तर्कम्- तत्रेति, तत्र= तर्के निदर्शनम्= उदाहरणम् । योयं ज्ञातव्यार्थंज्ञाता तं जानीय इति आत्मविषया जिज्ञासा प्रथमं जायते, जिज्ञासानन्तरं जायमानं संशयमाह- स इति, सः= ज्ञाता= आत्मा । विमर्शः= संशयः । एवमर्थे= आत्मपदार्थेऽविज्ञाततत्त्वे अत एव विमृश्यमाने यस्य धर्मस्य= उत्पत्तिधर्मकत्वस्य वाऽनुत्पत्तिधर्मकत्वस्य वाऽभ्यनुज्ञाकारणम्= स्वीकारकारणमुपपद्यते तमेव धर्ममनुजानाति, अत्रानुत्पत्तिधर्मकत्वस्य कारणमुपपादयति- यदीति, अयम्= आत्मा, ततः= अनुत्पत्तिधर्मकत्वात्= नित्यत्वात्, नित्यस्य हि शरीरवियोगानन्तरं स्वर्गनरकदेहान्तरादिषु गमनं संभवतीति तत्र तत्रायमात्मा स्वकृतकर्मफलमनुभवति= अनुभवितुमर्हति, आत्मज्ञाने जाते च दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां मध्ये उत्तरमुत्तरं पूर्वपूर्वस्य कारणमिति कारणाभावे कार्याभा-वन्यायेन उत्तरोत्तरापाये तदनन्तराभावात्= पूर्वपूर्वापायादपवर्गोपि संभवतीति आत्मनो नित्यत्वे संसारापवर्गौ संभवत इत्यन्वयः । दुःखजन्मेति पूर्वं व्याख्यातम् । विपक्षे बाधकमाह- उत्पत्तिधर्मके इति, यद्यऽनित्यः स्यादात्मा तदा तस्य संसारापवर्गौ न संभवत इत्यर्थः । उक्तमुपपादयति- उत्पन्न इत्यादिना, ज्ञाता= आत्मा यद्यनित्यः स्यात्तदोत्पन्नः सन् देहेन्द्रियबुद्धिवेदनाभिः संबध्यते= संबध्येतेति अस्य= आत्मन इदम्= शरीरादिकं स्वकृतकर्मणः फलं न स्यात् यतोऽनित्यत्वेन पूर्वमात्मैव न संभवति न तरां तत्कृतं कर्मेति कथमिदं कर्मफलं स्यादित्यर्थः । आत्मनोऽनित्यत्वे दोषान्तरं किं वा विनाशि-त्वमाह- उत्पन्नश्चेति, उत्पन्नः= अनित्यश्च पदार्थः भूत्वा= उत्पद्य न भवति= विनश्यत्येवेति तस्य= अनित्यस्यात्मनः अविद्यमानस्य= अनुत्पन्नस्य निरुद्धस्य= विनष्टस्य च स्वकृतकर्मणः फलोपभोगो नास्ति= न संभवति- विद्यमानस्यैव भोगसंभवात्, अनित्यस्य च प्रागभावप्रध्वंसौ नियतावेवेत्यात्म-नोपि स्यातामनित्यत्वादेवेत्यर्थः । उपसंहरति- तदेवमिति, तदेवम्= आत्मन उत्पत्तिधर्मकत्वेनाऽनित्यत्वे चात्मनोऽनेकशरीरैः संयोगो वियोगश्चाऽत्यन्तम्= सर्वथा न संभवति, तत्र फलोपभोगस्य वैषम्यात् कर्मफलत्वमुपपद्यते स्वकृतकर्मफलस्य प्राप्तिश्चात्मनो नित्यत्वे एवोपपद्यते इत्यात्माऽनुत्पत्तिधर्मकः= नित्य एवेत्यर्थः । "शरीरवियोगः" इत्यत्र 'अनेकशरीरवियोगः' इति वक्तव्यमासीत् । तर्कव्यतिरे-कमाह- यत्रेति, यत्र कारणोपपत्तिर्न भवति तन्नाऽनुजानाति यथात्मन उत्पत्तिधर्मकत्वमिति, आत्मन उत्पत्तिधर्मकत्वे कृतहानिरकृताभ्यागमश्च दोषः स्यादिति नोत्पत्तिधर्मकत्वं तर्केण सिध्यतीत्यर्थः । तर्क-लक्षणमुपसंहरति- सोयमिति, एवं लक्षणः= सूत्रोक्तस्वरूपविशिष्ट ऊह एव तर्कः ।

कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति ?. अनवधारणात्= अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न त्ववधारयति= न व्यवस्यति= न निश्चिनोति– एवमेवेदमिति । कथं तत्त्वज्ञानार्थ इति ?. तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद् भावितात् प्रसन्नादनन्तरं प्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यते इत्येवं तत्त्वज्ञानार्थ इति । सोयं तर्कः प्रमाणानि प्रतिसंदधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे प्रदिष्ट इति अविज्ञाततत्त्वमनुजानाति यथा सोऽर्थो भवति तस्य यथाभावः तत्त्वम्= अविपर्ययः= याथातथ्यम् ॥ ४० ॥

अस्मिंश्च तर्कविषये—

## विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

स्थापना= साधनं प्रतिषेधः= उपालम्भः तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावऽनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते. तयोरन्यतरस्य निवृत्तिरेकतरस्याऽवस्थान-

---

ननूक्तलक्षणस्तर्कस्तु तत्त्वज्ञानमेवेति विज्ञायते ‘ अनुत्पत्तिधर्मक आत्मा ’ इत्यादितर्कस्य तत्त्वज्ञानरूपत्वादिति अयम्= तर्कस्तत्त्वज्ञानार्थ इति कथमुक्तमित्याशङ्कते– कथमिति । उत्तरमाह– अनवधारणादिति, उक्तं व्याचष्टे– अनुजानातीति, अयम्= तर्ककरः कारणोपपत्त्या= हेतुप्रतिपत्त्या एकतरं धर्मं यथोक्तरीत्यात्मन अनुत्पत्तिधर्मकत्वमऽनुजानाति= संभावयतीतियावत् न त्ववधारयति= न निश्चिनोति– एवमेवेदमिति= आत्माऽनुत्पत्तिधर्मक एवेति न निश्चिनोति. तथा च तर्कस्य निश्चयरूपत्वाभावान्न तत्त्वज्ञानं तर्कः किं तु तत्त्वज्ञानार्थः= तत्त्वज्ञानसहकारीत्यर्थः । तर्कस्य तत्त्वज्ञानरूपत्वाभावेपि तत्त्वज्ञानार्थत्वं जिज्ञासते– कथमिति । उत्तरमाह– तत्त्वज्ञानेति, तत्त्वज्ञानविषयस्य आत्मानुत्पत्तिधर्मकत्वस्य याऽभ्यनुज्ञा= उपपत्तिः उपपत्त्यनुसंधानं वा तल्लक्षणादूहात् भावितात्= चिन्तितात् प्रसन्नात्= अबाधितात् एतादृशादूहादनन्तरम्= एतादृशोहसहकारेण प्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यते इत्येवंरीत्या= प्रमाणसहकारित्वेन तत्त्वज्ञानार्थस्तर्क इत्युच्यते इत्यन्वयः । “अभ्यनुज्ञालक्षणादूहात् ” इत्यत्र “ अभ्यनुज्ञालक्षणानुग्रहात् ” इत्यपि पाठः । उपसंहरति– सोयमिति, तर्कोयं प्रमाणानि प्रतिसंदधानः= समादधानः= प्रमाणसमाधानपरः प्रमाणाभ्यनुज्ञानात्= प्रमाणानुकूल्यात्= प्रमाणानुकूलो वादे प्रदिष्टः= उपदिष्टो वेदितव्यो न तु प्रमाणप्रतिकूलोपीत्यन्वयः । “ अविज्ञाततत्त्वमनुजानाति ” इत्यत्रत्यं तत्त्वपदार्थमाह– अविज्ञातेति, सोर्थो यथा भवति तस्यार्थस्य यथाभाव एव तत्त्वम्= अविपर्ययः= याथातथ्यम्= यथार्थत्वमेव तत्त्वमित्यन्वयः, यथाऽऽत्मानुत्पत्तिधर्मकोस्तीति तस्य नित्यत्वमेव यथाभावः तदेव तत्त्वं तच्च पूर्वं न निश्चितमासीदित्यऽविज्ञाततत्त्वे आत्मनि तर्कसाहाय्येन प्रमाणैस्तत्त्वज्ञानम्= नित्यत्वज्ञानमुत्पाद्यते इत्यर्थः । तदनेन तर्केण तर्ककरोऽविज्ञाततत्त्वं पदार्थमनुजानाति= अवधारयतीत्यन्वयः ॥४०॥

निर्णयलक्षणमवतारयति– अस्मिन्निति, अस्मिन्= उक्ते तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यां यदर्थावधारणं स निर्णय इत्यन्वयः । विमृश्येति– विमृश्य= इदमेवं वाऽनेवं वेति संशयं कृत्वा पक्षप्रतिपक्षाभ्याम्= संदिग्धविषयकखण्डनमण्डनाभ्यां सिद्धार्थविषयकं यदवधारणम्= निश्चयः स निर्णय इतिसूत्रान्वयः । तदेतल्लक्षणं संदिह्य परीक्षानन्तरं जायमानस्य निर्णयस्येति विज्ञेयम्– भाष्यकारेण वादादिकृत निर्णये विमर्शराहित्यस्य वक्ष्यमाणत्वात्. प्रत्यक्षादिप्रमाणैर्जायमाननिर्णये च पक्षप्रतिपक्षयोरप्यभावात् तस्मात् ‘ तत्त्वावधारणं निर्णयः ’ इत्येव व्यापकं लक्षणं मन्तव्यम् । व्याचष्टे– स्थापनेति, स्वपक्षस्थापना साधनमित्युच्यते. परपक्षस्य प्रतिषेधः= खण्डनम् उपालम्भ इत्युच्यते तौ साधनोपालम्भौ यौ यथाक्रमं पक्षप्रतिपक्षाश्रयौ= पक्षप्रतियक्षविषयकौ व्यतिषक्तौ= परस्परसंबद्धौ= उत्तरप्रत्युत्तररूपौ अनुबन्धेन= उत्तरोत्तरं क्रमेण प्रवर्तमानौ तौ पक्षप्रतिपक्षावित्युच्येते एतादृशाभ्यां पक्षप्रतिपक्षाभ्याम्= उक्तविशेषणविशिष्टसाधनोपालम्भाभ्याम्= खण्डनमण्डनाभ्यामर्थावधारणं निर्णय इत्यर्थः । पर्यवसितमाह– तयो-

मवश्यम्भावि यस्यावस्थानं तस्यावधारणं निर्णयः, नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं संभवतीति। एको हि प्रतिज्ञातमर्थं तं हेतुतः स्थापयति प्रतिपिद्धं चोद्धरतीति. द्वितीयस्य द्वितीयेन स्थापनाहेतुः प्रतिपिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते स निवर्तते. तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारणं निर्णयः, उभाभ्यामेवार्थावधारणमित्याह । कया युक्त्या ?. एकस्य संभवो द्वितीयस्याऽसंभवः, तावेतौ संभवासंभवौ विमर्शं सह निवर्तयत उभयसंभवे. उभयासंभवे त्वऽनिवृत्तो विमर्श इति । विमृश्येति= विमर्शं कृत्वा, सोयं विमर्शः पक्षप्रतिपक्षावऽवद्योत्य न्यायं प्रवर्तयतीत्युपादीयते इति, एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम् ।

यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः संभवतस्तत्र समुच्चयः— हेतुतोऽर्थस्य तथाभावोपपत्तेः यथा— ‘ क्रियावद् द्रव्यम् ’ इतिलक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः

रिति, तयोः= उक्तलक्षणपक्षप्रतिपक्षयोर्मध्ये अन्यतरस्य निवृत्तिः= निवृत्त्या एकतरस्य= द्वितीयपक्षस्याऽवस्थानम्= सिद्धिरावश्यकीति यस्य पक्षस्याऽवस्थानम्= सिद्धिस्तस्य पक्षस्यावधारणं निर्णय इत्यन्वयः । इदं चार्थावधारणं पक्षप्रतिपक्षमात्राभ्यां न संभवति— पक्षप्रतिपक्षयोः सत्त्वेपि तद्दर्शनादिति पक्षप्रतिपक्षयोः “व्यतिपक्तौ” इत्यादीनि विशेषणान्युक्तानि. सूत्रे च “ विमृश्य ” इत्युक्तं तथा च विमर्शानन्तरं पक्षप्रतिपक्षाभ्यां निर्णयो जायते परीक्षास्थले इत्यर्थः । निर्णयस्येतिकर्तव्यतामाह— एक इत्यादिना, एकः= पक्षी तं स्वप्रतिज्ञातमर्थं हेतुना स्थापयति यथा ‘ आत्माऽनुत्पत्तिधर्मकः कर्मफलभोक्तृत्वात् ’ इति, परेण प्रतिपिद्धं चात्मनित्यत्वमुद्धरति= प्रत्याचष्टे, द्वितीयेन= प्रतिपक्षिणा द्वितीयस्य= पक्षिणः स्थापनाहेतुः प्रतिपिध्यते यथोक्तं कर्मफलभोक्तृत्वं तस्य= तेन वादिना पक्षिणा यः प्रतिपक्षिसाध्यस्य प्रतिषेधहेतुरुक्तः स प्रतिपक्षिणा उद्ध्रियते= निरस्यते तथा च स निरस्तो हेतुर्निवर्तते तस्य निवृत्तौ जातायां यः प्रतिवादिहेतुरवतिष्ठते= स्थिरो भवति तेन स्थिरेण हेतुना यत् तत्त्वार्थावधारणं स निर्णय इत्युच्यते इति निर्णयसिद्धिप्रकारः, तथा चोभाभ्याम्= पक्षप्रतिपक्षाभ्यामुभाभ्यामेवार्थावधारणं संभवति नान्यतरेणेति सूत्रकार उभाभ्यामेवार्थावधारणमित्याहेत्याह— उभाभ्यामिति । नन्वर्थावधारणं ह्येकेनैव पक्षेण संभवति न द्वाभ्यां निरस्तस्य द्वितीयपक्षस्य तत्त्वावधारकत्वासंभवादिति कथमुभाभ्यामेवार्थावधारणमित्युक्तमिति जिज्ञासते— कयेति, कया युक्त्या उभाभ्यामेवार्थावधारणमित्यर्थः । उत्तरमाह— एकस्येति, एकस्य पक्षस्य संभवः= सिद्धिर्भवति द्वितीयस्य पक्षस्याऽसंभवः= असिद्धिर्भवतीति यस्य सिद्धिर्भवति तस्यावधारणं भवतीत्येवंरीत्या परीक्षायां पक्षप्रतिपक्षाभ्यामर्थावधारणं सिद्धमित्यन्वयः । तावेतौ= पक्षप्रतिपक्षयोः सिद्ध्यसिद्धिलक्षणौ संभवासंभवौ सह= मिलित्वा विमर्शम्= संशयं निवर्तयतः उभयसंभवे= स्वपक्षस्थापनस्य परपक्षप्रतिषेधस्य च संभवे= सत्त्वे सति, उभयासंभवे= स्वपक्षस्थापनमात्रेण वा परपक्षप्रतिषेधमात्रेण वा विमर्शोऽनिवृत्तः= न निवर्तते इत्यन्वयः । अत्र “साधनमात्रनिर्देशे प्रतिवाद्युक्तदूषणानुद्धरणे सत्प्रतिपक्षितत्त्वेन दूषणानुद्भावनेपि दूषणसंभावनामात्रेणापि संशयावस्थितिसंभवात् परीक्षायाः संशयपूर्वकत्वेन संशयकारणतयोपस्थितकोटिद्वयमध्ये एकतरकोटेरबाधने प्रतिज्ञामात्रेण संशयनिवृत्तेरसंभवात् ” इति श्रीगुरुचरणाः । विमृश्येतिपदं व्याचष्टे— विमृश्येति । विमर्शापेक्षाकारणमाह— सोयमिति, सोयं संशयो वादिप्रतिवादिनोः पक्षप्रतिपक्षौ अवद्योत्य= प्रकाश्य= संस्थाप्य न्यायम्= प्रतिज्ञाद्यवयवान् प्रवर्तयतीति हेतोरेव उपादीयते= गृह्यते= प्रथमं संशय्यते इत्यर्थः । एतच्च= एकपक्षावधारणं तत्र भवति यत्र एकधर्मिस्थयोरेव विरुद्धयोर्धर्मयोः संशयो भवति यथात्मनि नित्यत्वानित्यत्वयोः परस्परविरुद्धयोः धर्मयोः संशये जाते एकतरधर्मावधारणं भवति— उभयधर्मोपसंहारासंभवादित्यर्थः ।

समुच्चयपक्षमाह— यत्रेति, धर्मिसामान्ये हेतुतो विरुद्धयोर्धर्मयोः संभवे हि समुच्चयो भवति न त्वन्यतरबाधः— अर्थस्य= सामान्यधर्मिणो हेतुतस्तथाभावस्य= तादृशविरुद्धधर्मवैशिष्ट्यस्योपपत्तेः । उदा-

संभवति तत् क्रियावत् यस्य न संभवति तदक्रियमिति । एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पो यथा– तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनरक्रियमिति ।

न चायं निर्णये नियमः– विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति किं तु इन्द्रियार्थसंनिकर्षोत्पन्नप्रत्यक्षेऽर्थावधारणं निर्णय इति, परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः, शास्त्रे वादे च विमर्शवर्जम् ॥ ४१ ॥

॥ इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथममाह्निकम् ॥

---

हरति– यथेति, 'क्रियावद् द्रव्यम्' इति द्रव्यलक्षणे कृते यस्य वाय्वादिद्रव्यस्य क्रियायोगः= क्रियावत्त्वं हेतुतः= गमनादिलक्षणहेतुतः संभवति तद् वाय्वादिद्रव्यं क्रियावत् सिध्यति. यस्य चाकाशस्य क्रियावत्त्वं न संभवति– व्यापकत्वात् तद् अक्रियमपि सिध्यति. तथा च क्रियावत्त्वं क्रियारहितत्त्वं चेति विरुद्धावपि धर्मौ सामान्यतो द्रव्ये संभवत इति नैकतरस्य बाधः । धर्मिविशेषेपि विरुद्धयोर्धर्मयोः क्वचित् कालभेदेनोपसंहारो भवतीत्याह– एकेति, अयुगपद्भाविनोः= एकस्मिन् कालेऽसंभवतोः, कालविकल्पः= कालभेदेनोपपत्तिः । उदाहरति– यथेति, यथा घटः क्रियायोगकाले क्रियावान् भवति अनुत्पन्नोपरतक्रियम्= अनुत्पन्ना उपरता वा क्रिया यस्य तद् अनुत्पन्नोपरतक्रियं क्रियानुत्पत्तिकाले क्रियाविनाशकाले च स एव घटोऽक्रियम्= क्रियारहितोपि भवतीति एकस्मिन्नपि घटादिद्रव्ये क्रियारहितत्त्वक्रियासहितत्त्वयोर्विरुद्धयोर्धर्मयोः कालभेदेनोपसंहारो भवति एवमन्यत्रापि सति संभवे उपसंहारो विज्ञेयः, नित्यत्वानित्यत्वयोस्तु कालभेदेनाप्येकत्रोपसंहारो न संभवतीत्येकतरस्य बाध एव भवतीत्यलम् ।

"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इतिलक्षणं निर्णयमात्रस्य नास्ति किं तु परीक्षाविषयकनिर्णयमात्रस्येत्याह– न चेति । स्वाभिप्रायमाह– किं त्विति, इन्द्रियार्थसंनिकर्षेणोत्पन्नप्रत्यक्षस्थले तु तादृशप्रत्यक्षेणैव विषयस्यार्थस्यावधारणं निर्णय इत्येव लक्षणं तत्र विमर्शपक्षप्रतिपक्षाणामभावात् । विमर्शपक्षप्रतिपक्षैर्निर्णयसंभवस्थलमाह– परीक्षेति, परीक्षायां प्रवृत्तायां परीक्षणीयविषयं विमृश्य पक्षप्रतिपक्षाभ्यामेवार्थावधारणं भवतीति तत्रैवेदं निर्णयलक्षणं समन्वेति, शास्त्रे च वादे च विमर्शवर्जम्= संशयं विनैव निर्णयो भवति तथा च शास्त्रेण निर्णये विमर्शपक्षप्रतिपक्षाणां त्रयाणामपि प्राप्तिर्नास्ति, वादजल्पवितण्डासु च निर्णये पक्षप्रतिपक्षयोः संभवेपि विमर्शस्य प्राप्तिर्नास्ति– वादिप्रतिवादिनोस्तादृशविषयस्य निश्चयसत्त्वेन संशयाऽसंभवात्, संशये सति हि परीक्षणीयस्य विषयस्य विमृश्य पक्षप्रतिपक्षाभ्यां निर्णयो जायते इतिविवेकः । विमर्शवर्जमर्थावधारणं निर्णय इत्यन्वयः । अत्र–"न हि ज्योतिष्टोमादीनां स्वर्गादिसंबन्धनिर्णये आगमेन कर्तव्ये विमर्शोऽस्ति ( भवति ) नापि वादजल्पवितण्डासु विमर्शः– निश्चितयोरेव वादिनोस्तत्र प्रवृत्तेरित्यर्थः" इति तात्पर्यटीका ॥ ४१ ॥

॥ इति न्यायभाष्यप्रसन्नपदायां प्रथमाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

अथ

## न्यायभाष्यप्रथमाध्यायस्य द्वितीयमाह्निकम्

तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति. तासाम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चा-
वयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ— प्रत्यनीकभावात्— अस्त्यात्मा नास्त्यात्मेति। नानाधिकरणस्थौ विरुद्धौ न पक्षप्रतिपक्षौ यथा नित्य आत्मा. अनित्या बुद्धिरिति। परिग्रहः= अभ्युपगमव्यवस्था, सोयं पक्षप्रतिपक्षपरिग्रहो वादः, तस्य विशेषणम्— प्रमाणतर्कसाधनोपालम्भः= प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियते इति। साधनम्= स्थापना. उपालम्भः= प्रतिषेधस्तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तौ= अनुबद्धौ यावदेको निवृत्त एकतरो व्यवस्थित इति, निवृत्तस्योपालम्भः व्यवस्थितस्य साधनमिति।

---

वादलक्षणमवतारयति— तिस्र इति, अत्र—"नानाप्रवक्तृके विचारे वसति तद्विचारवस्तु विचारविषया वाक्यसंदृब्धिः कथेति यावत् तस्यां कथायामेष नियमस्तिस्र एवेति" इति तात्पर्यटीका। तासाम्= वादजल्पवितण्डानां मध्ये वादो निरूप्यते इत्यन्वयः। प्रमाणेति— प्रमाणतर्काभ्यामेव साधनम्= स्वपक्षस्थापनम् उपालम्भः= परपक्षप्रतिषेधो यस्मिन् स प्रमाणतर्कसाधनोपालम्भः, किं वा प्रमाणैः साधनं तर्केण चोपालम्भो यस्मिन् स इत्येवमन्वयः, तदनेन विशेषणेन जल्पवितण्डाभ्यां वादस्य व्यावृत्तिः सिद्धा— जल्पवितण्डयोः प्रमाणाभासैस्तर्काभासैरपि च साधनोपालम्भयोः संभवात्। सिद्धान्ताविरुद्धः= सिद्धान्तानुकूलः प्रतिज्ञाद्युक्तपञ्चावयवसंपन्न एवम्भूतो यः पक्षप्रतिपक्षयोर्वादिप्रतिवादिभ्यां परिग्रहः स वाद इति सूत्रान्वयः। व्याचष्टे— एकेति, एकाधिकरणस्थौ= एकविषयकौ यौ विरुद्धौ धर्मौ तौ पक्षप्रतिपक्षावित्युच्येते— प्रत्यनीकभावात्= परस्परविरुद्धत्वात् पक्षस्य प्रत्यनीकः (विरुद्धः) प्रतिपक्ष इत्यर्थः यथा— 'अस्त्यात्मा' 'नास्त्यात्मा' इति पक्षप्रतिपक्षौ— एकस्यैवात्मनः परस्परविरुद्धयोर्भावाभावयोः प्रतिपादकत्वात् एतादृशपक्षप्रतिपक्षयोः परिग्रहो वाद इत्यर्थः। प्रत्युदाहरणमाह— नानेति, नानाधिकरणस्थौ= भिन्नविषयकौ विरुद्धावपि धर्मौ पक्षप्रतिपक्षौ न भवतो यथा— 'नित्य आत्मा' 'अनित्या-बुद्धिः' इति— आत्मनित्यत्वेन बुद्ध्यनित्यत्वस्य विरोधाभावात्। नित्यत्वानित्यत्वयोः सामान्यतः परस्परं विरोधाद् विरुद्धावित्युक्तं स च विरोधो विषयभेदेन वितर्तते इति तत्र पक्षप्रतिपक्षत्वयोरपि निवृत्तिर्भवति। परिग्रहपदार्थमाह— परिग्रह इति, अभ्युपगमस्य= स्वीकारस्य व्यवस्था यथा वादिप्रतिवादिनोर्मध्ये एकेनात्मनो नित्यत्वं परेण चानित्यत्वं स्वीकार्यं एवमेव वादसंभवात्। उपसंहरति— सोयमिति, उक्तलक्षणयोः पक्षप्रतिपक्षयोरुक्तलक्षणो यः परिग्रहः स वाद इत्यन्वयः। वादविशेषणमाह— तस्येति, तस्य= वादस्य प्रमाणतर्कसाधनोपालम्भ इति विशेषणम्, व्युत्पत्तिमाह— प्रमाणैरिति, स प्रमाणतर्कसाधनोपालम्भ इतिशेषः। साधनपदार्थमाह— साधनमिति, स्थापना= स्वपक्षस्थापना, उपालम्भपदार्थमाह— उपालम्भ इति, प्रतिषेधः= परपक्षखण्डनम्। ताविति— तौ साधनोपालम्भौ उभयोरपि वादिप्रतिवादिनोः पक्षयोर्व्यतिषक्तौ= संबद्धौ भवतस्तथा च वादिनापि स्वपक्षस्थापनं प्रतिवादिपक्षखण्डनं च कर्तव्यं प्रतिवादिनापि स्वपक्षस्थापनं वादिपक्षखण्डनं च कर्तव्यमित्यर्थः। साधनोपालम्भयोरवधिमाह— यावदिति; एकः पक्षः किं वा वादिप्रतिवादिनोर्मध्ये एकः। निवृत्तः= परास्तो न भवति एकतरश्च व्यवस्थितः= सिद्धो न भवति यावत् तावत् साधनोपालम्भौ प्रवर्तेते इत्यर्थः। फलमाह— निवृत्तस्येति, निवृत्तस्य=

जल्पे निग्रहस्थानविनियोगाद् वादे तत्प्रतिषेधः । प्रतिषेधे कस्यचिदभ्यनुज्ञानार्थं सिद्धान्ताऽविरुद्ध इतिवचनम् । सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति हेत्वाभासस्य निग्रहस्थानस्याऽभ्यनुज्ञा वादे ।

पञ्चावयवोपपन्न इति– "हीनमन्यतमेनाप्यवयवेन न्यूनम् ५–२–१२" "हेतूदाहरणाधिकमधिकम् ५–२–१३" इति चैतयोरभ्यनुज्ञानार्थमिति । अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम् अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात् । अन्तरेणापि चावयवसंबन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टं तेनापि कल्पेन

---

वादपराङ्मुखस्य, उपालम्भः= पराजयः, विज्ञेय इतिशेषः । साधनम्= सिद्धिः= जयः । जल्पापेक्षया वादस्य विशेषमाह– जल्पेति, तदेतदग्रिमसूत्रे स्पष्टम्, तत्प्रतिषेधः= निग्रहस्थानविनियोगाभावो वादे विज्ञेय इतिविशेषः । द्वितीयविशेषणसार्थक्यामाह– प्रतिषेधे इति, परपक्षप्रतिषेधस्थले कस्यचित्स्वीकार आवश्यक एव– परपक्षप्रतिकूलपक्षस्वीकारं विना परपक्षप्रतिषेधासंभवादिति वादे कस्य चिदर्थस्य स्वीकारार्थमेव सिद्धान्ताविरुद्ध इतिवचनम्= विशेषणम् । हेत्वाभासलक्षणनिग्रहस्थानस्य वादे विनियोगमाह– सिद्धान्तमिति, कंचित् सिद्धान्तं स्वीकृत्यैव तद्विरोधी हेतुर्विरुद्ध इतिवक्तुं शक्यते तथा च सिद्धान्ताविरुद्ध इत्येन वादे सिद्धान्तविरुद्धस्य प्रत्याख्यानं प्राप्तं तच्च प्रत्याख्यानं प्रतिवादिना विरुद्धस्य प्रयोगे कृते एव संभवतीति वादे विरुद्धस्याभ्यनुज्ञा प्राप्ता विरुद्धसादृश्याच्चान्येषामपि हेत्वाभासानामनुज्ञा प्राप्ता तत्र हेत्वाभासानां निग्रहस्थानेष्वेव गणनास्ति निग्रहस्थानानां च वादे प्रतिषेध उक्त इति हेत्वाभासातिरिक्तानामेव निग्रहस्थानानां वादे प्रतिषेधो विज्ञेय इतिपर्यवसितमित्यर्थः ।

तृतीयविशेषणस्य सार्थक्यमाह– पञ्चेति, प्रतिज्ञादिपञ्चावयवयुक्तो वादो भवतीति सूत्रेऽन्वयस्तत्र पञ्चत्वस्याविवक्षयाऽवयवानां न्यूनत्वमाधिक्यं च संभवति तत्र कर्तव्यम्– न्यूनत्वाधिक्ययोर्निग्रहस्थानरूपत्वात् तथा चात्रावयवानां पञ्चत्वसंख्याया विवक्षितत्वात् "पञ्चावयवोपपन्नः" इति वचनमवयवानां न्यूनत्वे न्यूनस्याऽऽधिक्ये चाधिकस्याभ्यनुज्ञानार्थम्= निग्रहस्थानत्वसिद्ध्यर्थमेव बोध्यमित्यर्थः । न्यूनलक्षणमाह– हीनमिति, अधिकलक्षणमाह– हेत्विति । अवयवेष्विति– वादे हि विशेषतोऽनुमानप्रमाणस्यैव प्रसारो भवति अवयवाश्चानुमानावयवा एव तथा च प्रमाणतर्कयोरवयवेष्वन्तर्भावः प्राप्तः– अनुमानेन तदपेक्षिततर्कस्यापि प्राप्तेरिति पञ्चावयवोपपन्न इत्यनेनैव वादे प्रमाणतर्कयोर्लाभे सिद्धेपि पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्= उभयोरपि साधनोपालम्भयोर्वादे व्यतिषङ्गस्य= संबन्धनियमस्य ज्ञापनार्थमित्यर्थः, अत्र–"पञ्चावयवोपपन्न इत्यनेनैव प्रमाणतर्कसाधनोपालम्भत्वलाभे सिद्धे पुनरुपादानं प्रमाणैः साधनमेव कार्यं तर्केणोपालम्भ एव कार्य इतिबोधनार्थम्" इति श्रीगुरुचरणाः । विपक्षे बाधकमाह– अन्यथेति, अन्यथा= उक्तनियमाभावे उभावपि पक्षौ= वादिप्रतिवादिपक्षौ स्थापनाहेतुना= स्वपक्षस्थापनामात्रेण प्रवृत्तौ सन्तौ वादसंज्ञां लभेतां न चैवमस्तीति प्रमाणेन साधनं तर्केण चोपालम्भ इति व्यवस्था विज्ञेया, अत्र–"अन्यथैकः स्वस्थानस्थित एव शब्दस्यानित्यत्वं प्रति पञ्चावयवोपपन्नं वाक्यं प्रयुङ्क्ते अपरोपि तादृशः शब्दनित्यतां प्रति तादृशमेव वाक्यं प्रयुङ्क्ते इति सोपि वादः प्रसज्येत, साधनोपालम्भविशेषणाय च प्रमाणतर्कग्रहणं कर्तव्यमितिभावः" इति तात्पर्यटीका, स्वपक्षसाधनमात्रस्य परपक्षखण्डनमात्रस्य वा वादत्वं न प्राप्नुयादिति हेतोः पृथक्प्रमाणतर्कग्रहणं कृतं तथा चावयवपञ्चकेन प्रमाणतर्काभ्यां च साध्यं पृथक् पृथगेवेति प्राप्तं तत्र स्वपक्षसाधनं परपक्षखण्डनं चेत्युभयात्मकस्यैव वादत्वं सिद्धं न तु स्वपक्षसाधनमात्रस्य वा परपक्षखण्डनमात्रस्य वा, अन्यथा पृथक् प्रमाणतर्कग्रहणमनर्थकं स्यादित्याशयः । पृथक् प्रमाणतर्कग्रहणस्य प्रयोजनान्तरमप्याह– अन्तरेणेति, अवयवप्रयोगं विनापि प्रमाणैरर्थसिद्धिर्भवत्येवेति तेनापि कल्पेन= अवयवनिरपेक्षैरपि प्रमाणैरर्थसाधनप्रका-

साधनोपालम्भौ वादे भवत इति ज्ञापयति । " छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः २" इतिवचनाद् विनिग्रहो वाद इति मा विज्ञायि= छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणम् ॥ १ ॥

## यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनो-पालम्भो जल्पः ॥ २ ॥

यथोक्तोपपन्न इति प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रहस्थानसाधनोपालम्भ इति- छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियते इत्येवंविशेषणो जल्पः ।

न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य संभवति- प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते- " वचनविघातोऽर्थविकल्पोपपत्त्या छलम् १-२-१० "

रेण= अवयवप्रयोगरहितैरपि प्रमाणैः साधनोपालम्भौ वादे भवत इति पृथक् प्रमाणतर्कग्रहणेन सूत्रकारो विज्ञापयति । पृथक् प्रमाणतर्कग्रहणस्य प्रयोजनान्तरमाह- छलेति, "छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः " इत्यग्रिमसूत्रवाक्याद् विनिग्रहः= निग्रहस्थानै रहितो वाद इति मा विज्ञायि किं तु निग्रहस्थानानां वादेपि प्रयोगो भवत्येवेत्यर्थः, अत्र " विनिग्रहो जल्पः " इतिपाठस्त्वसंगतो भाति, स्वोक्तमेव व्याचष्टे- छलजातीति, छलजातिनिग्रहस्थानानां वादे प्रमाणतर्कयोश्च जल्पे प्रयोगो न भवतीति न विज्ञेयं किं तूभयत्रैव भवतीत्यर्थः तदेतत् पृथक् प्रमाणतर्कग्रहणेन लभ्यते इत्यन्वयः, लाभप्रकारं चैनं भाष्यकार एव ज्ञातवान् । किं वा परेण प्रयुक्तानां छलजातिनिग्रहस्थानानां परिहारार्थमेव विशेषतस्तत्कर्त्रपेक्षा जायते इति पञ्चावयवापेक्षया पृथगपि प्रमाणतर्कग्रहणेन वादजल्पयोरुभयोरपि छलजातिनिग्रहस्थानानामभ्यनुज्ञा प्राप्ता । किं वा पञ्चावयवग्रहणेनैव प्रमाणतर्कौ लब्धाविति पृथक् प्रमाणतर्कग्रहणं स्वसाफल्यार्थं वादजल्पयोरुभयोरपि छलजातिनिग्रहस्थानानां प्रयोगं द्योतयति तथा च स्वपक्षस्थापनं पञ्चभिरवयवैः कर्तव्यं परप्रयुक्तछलादीनां निरासश्च प्रमाणतर्काभ्यां कर्तव्य इत्याशयः प्रतीयते अन्यत्तु नावधारयामीत्यलम् । वस्तुतस्त्वेवं संकरेण वादजल्पयोः पार्थक्यं न संभवतीति प्रमादेनैवेदमुपपादयति भाष्यकारोयं कामशास्त्रपरायणत्वात् यतः कामसूत्रनिर्मातायमिति क्षन्तव्यम् । अत्र- "प्रयोजनान्तरमन्वाचिनोति- छलजातीति, विनिग्रहो जल्पो मा विज्ञायि= वादगतनिग्रहस्थानरहितो मा विज्ञायीत्यर्थः, तद्विज्ञाने कीदृशोर्थो भवतीत्याह- छलजातिनिग्रहस्थानेति, वादगतो निग्रहो न जल्पे जल्पगतश्च निग्रहो न वादे इति मा विज्ञायि, सोयमिष्टोर्थो प्रमाणतर्कग्रहणाल्लभ्यते " इतितात्पर्यटीका ॥१॥

जल्पं लक्षयति- यथोक्तिति, यथोक्तोपपन्नः= वादविशेषणैर्युक्तः, तथा च प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः छलजातिनिग्रहस्थानोपालम्भश्च पक्षप्रतिपक्षपरिग्रहो जल्प इत्यन्वयः, किं वा प्रमाणतर्कछलजातिनिग्रहस्थानोपालम्भ इत्येवमन्वयः कर्तव्यः, अर्थश्च पूर्ववदेव व्याख्येयः । व्याचष्टे- यथेति । यथोक्तोपपन्नपदग्राह्यं पदार्थचतुष्टयमाह- प्रमाणेत्यादिना । छलजातीतिविशेषणव्युत्पत्तिमाह- छलजातीति, स्पष्टं सर्वम् । अत्र- " जल्पे प्रमाणादीनां प्रयोगेपि प्रमाणेनैव साधनं तर्केणैवोपालम्भ इतिनियमाभावाद् नैतल्लक्षणस्य वादेतिव्याप्तिः " इति श्रीगुरुचरणाः । सूत्रकाराशयेन तु छलजातिनिग्रहस्थानानां जल्पे एव विनियोगो न वादे इतिसिध्यति तेन वादजल्पयोर्भेदोपि सिध्यतीति विभावनीयम् ।

छलजातिनिग्रहस्थानैः खण्डनमेव संभवति न कस्यचिन्मण्डनमपीति कथं सूत्रे छलजातिनिग्रहस्थानैः साधनमुक्तमित्याशङ्क्य समाधानाय पूर्वपक्षमाह- न खल्विति । एषाम्= छलजातिनिग्रह-

"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः १-२-१८" "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् १-२-१९" इति, विशेषलक्षणेष्वपि यथास्वमिति ?। न चैतद्विजानीयात्- प्रतिषेधार्थतयैवार्थं साधयन्तीति, 'छलजातिनिग्रहस्थानोपालम्भो जल्पः' इत्येवमप्युच्यमाने विज्ञायते एतदिति- प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्गभावः स्वपक्षरक्षणार्थत्वात् न स्वतन्त्राणां साधनभावः= यत्तत् प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावो रक्षणार्थत्वात्- तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति तथा चोक्तम्- "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहरक्षणार्थं कण्टकशाखावरणवत् ४-२-५०" इति, यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातसहकारीणि भवन्ति. तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे न स्वतन्त्राणां साधनभावः. उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥ २ ॥

---

स्थानानाम् । छलस्य सामान्यं लक्षणमाह- वचनेति । जातेः सामान्यं लक्षणमाह- साधर्म्येति । निग्रहस्थानस्य सामान्यं लक्षणमाह- विप्रतिपत्तिरिति । अर्थश्चैषामग्रे भाष्ये एव द्रष्टव्यः । विशेषलक्षणानि तु छलस्य प्रथमाध्यायद्वितीयाह्निके जातेश्च पञ्चमाध्यायप्रथमाह्निके निग्रहस्थानस्यच पञ्चमाध्यायद्वितीयाह्निके द्रष्टव्यानि, छलजातिनिग्रहस्थानानां विशेषलक्षणेष्वपि यथास्वम्= तत्तल्लक्षणवाक्यानुसारेण प्रतिषेधार्थतैव विज्ञायते न साधकत्वमित्यन्वयः । उक्तं परिहरति- न चेति, छलजातिनिग्रहस्थानानि अर्थम्= स्वपक्षं प्रतिषेधार्थतयैव= परपक्षप्रतिषेधमुखेनैव साधयन्तीत्येतद् न विजानीयादित्यर्थमेव सूत्रे " छलजातिनिग्रहस्थानसाधनोपालम्भः " इत्युक्तं तदनेन वचनेन छलजातिनिग्रहस्थानानामपि स्वपक्षसाधनत्वमपि प्राप्तमित्यर्थः । स्वाभिप्रायमुद्घाटयति- छलजातीति, " छलजातिनिग्रहस्थानोपालम्भः " इत्यत्र 'छलजातिनिग्रहस्थानसाधनोपालम्भः' इत्येवं पाठो युक्तः- सूत्रानुसारात् । "छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" इत्युच्यमाने यद्विज्ञायते तदाह- प्रमाणैरिति, प्रमाणैः साधने उपालम्भे च क्रियमाणे छलजातिनिग्रहस्थानानां स्वपक्षरक्षणार्थत्वात्= स्वपक्षरक्षकत्वात् अङ्गभावः= अङ्गत्वम्= सहकारित्वं भवति. स्वतन्त्राणाम्= प्रमाणनिरपेक्षाणां साधनभावः= साधनत्वं= स्वपक्षसाधकत्वं न संभवति. तथा च छलजातिनिग्रहस्थानानां प्रमाणाङ्गत्वेन स्वपक्षरक्षकत्वे प्राप्ते प्रतिषेधमुखेनैवार्थसाधकत्वमिति नियमो नोपपद्यते इत्यर्थः । स्वोक्तमेव व्याचष्टे- यत्तदिति, अर्थस्य= स्वपक्षस्य, तत्र= स्वपक्षसाधने, अङ्गभावः= सहकारित्वम्, रक्षणार्थत्वात्= स्वपक्षरक्षकत्वात् । उक्ते हेतुमाह- तानीति, तानि= छलजातिनिग्रहस्थानानि, परपक्षखण्डनं हि स्वपक्षरक्षणार्थमेव भवतीति परपक्षखण्डनद्वारा छलजातिनिग्रहस्थानानां स्वपक्षरक्षकत्वमपि सिद्धम्, परपक्षविघातेन= परपक्षखण्डनद्वारा । उक्तं चतुर्थाध्यायसूत्रं प्रमाणयति- तत्त्वेति, यथा शस्यस्थानपरितः कण्टकशाखाभिरावरणं बीजप्ररोहस्य= बीजाङ्कुरस्य= शस्यस्य रक्षणार्थं भवति तथा जल्पवितण्डे अपि तत्त्वाध्यवसायस्य= स्वसिद्धान्तस्य रक्षणार्थं भवत इति सूत्रार्थः, छलजातिनिग्रहस्थानप्रधानयोर्जल्पवितण्डयोः स्वपक्षरक्षकत्ववचनात् प्राप्ताप्राप्तविवेकन्यायेन छलजातिनिग्रहस्थानानामेवं स्वपक्षरक्षकत्वमपि सिद्धं तच्च परपक्षप्रतिषेधमुखेनेत्यर्थः । सूत्राभिप्रायमाह- यश्चेति, उपालम्भः= खण्डनं क्रियते तस्य= परपक्षखण्डनस्य= परपक्षखण्डनार्थं चैतानि= छलजातिनिग्रहस्थानानि प्रयुज्यमानानि प्रतिषेधस्य= स्वपक्षप्रतिषेधरूपस्य परपक्षस्य विघातेन प्रमाणानां सहकारीणि भवन्ति । उपसंहरति- तदेवमिति, एवम्= उक्तप्रकारेण जल्पे छलादीनां यदुपादानम्= प्रयोगः सोऽङ्गीभूतानाम्= प्रमाणाङ्गत्वेनैव भवति. स्वतन्त्राणाम्= प्रमाणनिरपेक्षाणां तु छलजातिनिग्रहस्थानानां साधनभावः= स्वपक्षसाधकत्वं न भवति. उपालम्भे= परपक्षखण्डने तु स्वातन्त्र्यमप्यस्त्येव= छलजातिनिग्रहस्थानान प्रमाणनिरपेक्षाणामपि परपक्षविघातकत्वं तूपपद्यते- परपक्षप्रतिघातार्थमेव कल्पितत्वादित्यन्वयः ॥ २ ॥

## स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

सः= जल्पो वितण्डा भवति, किंविशेषणः ?. प्रतिपक्षस्थापनया हीनः= यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तं तयोरेकतरं वैतण्डिको न स्थापयतीति. परपक्षप्रतिषेधेनैव प्रवर्तते इति । अस्तु तर्हि 'स प्रतिपक्षहीनो वितण्डा' ? । यद्वै खलु तत् परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः, न त्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति तस्माद् यथान्यासमेवास्त्विति ॥ ३ ॥

हेतुलक्षणाभावादहेतवो हेतुसामान्याद् हेतुवदाभासमानाः, ते इमे—

## सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः ॥ ४ ॥

---

वितण्डां लक्षयति- स इति, सः= जल्प एव प्रतिपक्षस्थापनाहीनः= स्वपक्षस्थापनाहीनः= परपक्षखण्डनमात्रपरः सन् वितण्डेत्युच्यते तथा च प्रमाणतर्काभ्यां पञ्चभिरवयवैः छलजातिनिग्रहस्थानैश्च यत् परपक्षखण्डनमात्रं क्रियते स्वपक्षश्च न स्थाप्यते सा वितण्डेत्यन्वयः, परपक्षस्य स्वपक्ष एव प्रतिपक्षो भवतीति सूत्रे प्रतिपक्षशब्देन स्वपक्ष एव ग्राह्यस्तदेतद् भाष्येण स्पष्टमिति सूत्रार्थः । व्याचष्टे- स इति । किंविशेषणः= केन विशेषेण विशिष्टः सन् जल्पो वितण्डा भवतीति जिज्ञासते- किमिति । उत्तरमाह- प्रतिपक्षेति, प्रतिपक्षस्थापनया= स्वपक्षस्थापनया । स्वाभिप्रायं विशदयति- याविति, पक्षप्रतिपक्षयोः स्वरूपं चैतद्वादलक्षणभाष्ये स्पष्टमुपपादितम् । तयोः= पक्षप्रतिपक्षयोर्मध्ये एकतरम्= स्वपक्षं वा प्रतिपक्षभूतं परपक्षं वा वैतण्डिकः= वितण्डया प्रवृत्तो न स्थापयति किं तु परपक्षप्रतिषेधेनैव प्रवर्तते= परपक्षखण्डनमात्रं करोति अत एव स वैतण्डिक इत्युच्यते- स्वपक्षस्थापनाहीनस्य परपक्षखण्डनमात्रस्य वितण्डापदवाच्यत्वादित्यन्वयः । ननु स्वपक्षस्य स्थापनाभावेनाऽभाव एव प्राप्तस्तथा च 'प्रतिपक्षहीनः= स्वपक्षहीनः सन् सः= जल्पो वितण्डा' इत्येव वितण्डालक्षणं किं न क्रियते इत्याशङ्कते- अस्त्विति । उत्तरमाह- यद्वै इति, वैतण्डिकस्य स्वपक्षाभावो नास्ति- क्रियमाणस्यैव स्वपक्षत्वात् तथा च परप्रतिषेधलक्षणं वाक्यम्= परपक्षखण्डनमेव वैतण्डिकस्य पक्षोऽस्तीति तादृशपक्षसत्त्वात् 'स प्रतिपक्षहीनो वितण्डा' इत्येवं वितण्डालक्षणं नोपपद्यते । असौ= वैतण्डिकः साध्यं कमप्यर्थं प्रतिज्ञाय न स्थापयतीति 'प्रतिपक्षस्थापनाहीनो जल्पो वितण्डा' इत्येव सूत्रोक्तं लक्षणं संभवतीत्युपसंहरति- तस्मादिति, यथान्यासम्= सूत्रानुसारेणैव लक्षणमस्तु= युक्तम्- "स प्रतिपक्षस्थापनाहीनो वितण्डा" इति इत्यर्थः ॥ ३ ॥

हेत्वाभासनिरूपणमारभते- हेतुलक्षणेति, हेतुलक्षणस्य= साध्यव्याप्यत्वस्य अभावात् हेत्वाभासा अहेतवः, हेतुसामान्यात्= हेतुसादृश्यात्. सादृश्यं च हेतुत्वबोधकविभक्त्यन्तपदप्रतिपाद्यत्वं यथा 'वह्निमान् धूमात्' इत्यत्र धूमपदप्रयोगस्तथैव 'धूमवान् वह्नेः' इत्यत्र वह्निपदप्रयोगाद् वह्नेर्हेतुत्वं प्रतीयते वस्तुतस्तु वह्नेर्धूमहेतुत्वं नास्ति- व्यभिचारित्वादिति पञ्चम्यन्तपदप्रतिपाद्यत्वाद्वह्निर्हेतुवदाभासते इति हेत्वाभासः । हेतुसामान्याद् हेतुवदाभासमाना हेत्वाभासा हेतुलक्षणाभावात्= हेतुलक्षणानाक्रान्तत्वादहेतव इत्यन्वयः । सामान्यलक्षणं च यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वं हेत्वाभासत्वमिति, हेत्वाभासत्वविषयकज्ञानस्यानुमितिविरोधित्वं च स्पष्टमेवेत्यलम् । हेत्वाभासविभागसूत्रमवतारयति- ते इति, ते इमे हेत्वाभासाः पञ्चविधा इत्यर्थः । सव्यभिचारो विरुद्धः प्रकरणसमः साध्यसमः कालातीत इति पञ्चविधा हेत्वाभासा इति सूत्रान्वयः ॥ ४ ॥

तेषाम्—

## अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

व्यभिचारः= एकत्राऽव्यवस्था. सह व्यभिचारेण वर्तते इति सव्यभिचारः, निदर्शनम्— नित्यः शब्दोऽस्पर्शत्वात्. स्पर्शवान् कुम्भोऽनित्यो दृष्टो न च तथा स्पर्शवान् शब्दस्तस्माद् अस्पर्शत्वात् नित्यः शब्द इति । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते— स्पर्शवांश्चाऽणुर्नित्यश्चेति । आत्मादौ च दृष्टान्ते "उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः१–१–३४" इति. अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति— अस्पर्शा बुद्धिरनित्या चेति, एवं द्विविधेपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति । नित्यत्वमप्येकोऽन्तः अनित्यत्वमप्येकोऽन्तः एकस्मिन्नन्ते विद्यते इत्यैकान्तिको विपर्ययादऽनैकान्तिकः— उभयान्तव्यापकत्वादिति ॥ ५ ॥

---

हेत्वाभासानां विशेषलक्षणान्यवतारयति— तेषामिति, तेषाम्= उक्तानां पञ्चविधानां हेत्वाभासानां मध्ये योऽनैकान्तिकः स सव्यभिचार इत्यर्थः । अनैकान्तिकः= व्यभिचारी हेतुर्व्यभिचारेण सह वर्तमानत्वात्= व्यभिचारयुक्तत्वात् सव्यभिचार इत्युच्यते यथा धूमवान् वह्नेरिति धूमाभाववत्यङ्गारशकटे वृत्तित्वाद्वह्निर्धूमव्यभिचारीति सव्यभिचार इतिसूत्रान्वयः । व्याचष्टे— व्यभिचार इति, एकत्र= साध्यवति अव्यवस्था= सत्त्वनियमाभावः यथा धूमवत्येव वह्निर्वर्तते इतिनियमो नास्ति, धूमश्च वह्निमत्येव वर्तते इति नियमोस्ति । सव्यभिचारशब्दस्य व्युत्पत्तिमाह— सहेति । सव्यभिचारमुदाहरति— नित्य इति, निदर्शनम्= उदाहरणम् । अत्राऽस्पर्शत्वम्= स्पर्शरहितत्वं हेतुर्नित्यत्वव्यभिचारी विज्ञेयः— नित्यत्वरहितेपि ज्ञानादौ वृत्तित्वात् । पूर्वपक्षी अस्पर्शत्वस्य हेतोर्नित्यत्वसाधकत्वमुपपादयति— स्पर्शवानिति, नित्यत्वरहिते कुम्भादावस्पर्शत्वं नास्ति नित्ये चात्मादावस्तीति साध्यव्याप्यत्वं प्राप्तमित्यर्थः, तथा= कुम्भादिवत् । उपसंहरति— तस्मादिति । उक्तं प्रत्याचष्टे— दृष्टान्ते इत्यादिना, दृष्टान्ते= व्यतिरेकदृष्टान्ते कुम्भे, अनित्यत्वं स्पर्शवत्त्वसाध्यं नास्तीत्यर्थः, धर्मौ= अनित्यत्वस्पर्शवत्त्वे । स्पर्शवत्त्वस्यानित्यत्वासाधकत्वप्रदर्शनार्थं व्यभिचारं प्रदर्शयति— स्पर्शवानिति, अणुः= परमाणुर्नित्योपि स्पर्शवानस्ति तथा चाऽनित्यत्वाभाववत्यपि परमाणौ वृत्तित्वात् स्पर्शवत्त्वमनित्यत्वव्यभिचारि जातमिति नाऽनित्यत्वसाधकं संभवतीत्यर्थः । अन्वयव्याप्तिं दूषयति— आत्मादाविति, आत्मादावन्वयिदृष्टान्तेपि च नित्यत्वाऽस्पर्शत्वयोः साध्यसाधनभावो न दृश्यते— अस्पर्शत्वस्य नित्यत्वव्यभिचारित्वादित्यर्थः, भाष्यपाठस्तु विकल इव प्रतिभाति । हेतुस्वरूपमाह— उदाहरणेति, तदेतत् प्रथमाह्निकस्य चतुस्त्रिंशत्सूत्रे स्पष्टम्, अस्पर्शत्वस्य चात्माद्युदाहरणसाधर्म्यात् नित्यत्वसाधकत्वं न संभवति— व्यभिचारित्वादित्यर्थः । किं वात्मादिदृष्टान्ते उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः= अस्पर्शत्वहेतोः शब्दनित्यत्वसाधकत्वमुच्यते तच्च न संभवति बुद्ध्यादौ व्यभिचारादित्येवं व्याख्येयम् । व्यभिचारं प्रदर्शयति— अस्पर्शत्वादिति, नित्यत्वाभाववत्यामपि बुद्धौ वर्तमानत्वादस्पर्शत्वं नित्यत्वव्यभिचारि जातमिति शब्दनित्यत्वसाधकं न संभवतीत्यर्थः । उपसंहरति— एवमिति, एवम्= उक्तरीत्या द्विविधेपि दृष्टान्ते= अन्वयिदृष्टान्ते व्यतिरेकिदृष्टान्ते च व्यभिचारात् नित्यत्वास्पर्शत्वयोः साध्यसाधनभावो नास्तीति लक्षणाभावात्= साध्यव्याप्यत्वाभावादस्पर्शत्वमत्राऽहेतुः= हेत्वाभास एव । यत्र यत्राऽस्पर्शत्वं तत्र तत्र नित्यत्वमित्यन्वयव्याप्तिरपि नास्ति— बुद्धौ व्यभिचारात् । यत्राऽस्पर्शत्वं नास्ति तत्र नित्यत्वमपि नास्तीति व्यतिरेकव्याप्तिरपि नास्ति— परमाणौ व्यभिचारादित्यस्पर्शत्वं नित्यत्वसाधकं न संभवतीत्यर्थः । व्यतिरेकव्याप्त्यभावश्चायं भाष्योक्तपरमाणुदृष्टान्तानुरोधेन प्रदर्शित इत्यनुसंधेयम् । किं वा यत्र नित्यत्वं नास्ति तत्राऽस्पर्शत्वं नास्तीति व्यतिरेकव्याप्तिर्नास्ति— बुद्धौ व्यभिचारात् । अनैकान्तिकशब्दस्य व्युत्पत्तिमाह— नित्यत्वमिति, अन्तः= कोटिः, प्रकृते इतिशेषः,

# सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

तं विरुणद्धीति तद्विरोधी= अभ्युपेतं सिद्धान्तं व्याहन्तीति, यथा– सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्, अपेतोप्यस्ति विनाशप्रतिषेधात्, न नित्यो विकार उपपद्यते इत्येवं हेतुः 'व्यक्तेरपेतोपि विकारोस्ति' इत्यनेन स्वसिद्धान्तेन विरुध्यते ।

कथम् ?, व्यक्तिः= आत्मलाभः अपायः= प्रच्युतिः. यद्यात्मलाभात् प्रच्युतो विकारोस्ति? नित्यत्वप्रतिषेधो नोपपद्यते– यद् व्यक्तेरपेतस्यापि विकारस्याऽस्तित्वं तत् खलु नित्यत्वमिति,

एकस्मिन्नन्ते= एककोटिविशिष्टे वर्तते इत्यैकान्तिकः= अव्यभिचारी. विपर्ययात्= तद्विपरीतः= ऐकान्तिकविपरीतः= व्यभिचारी हेतुरनैकान्तिक इत्युच्यते– उभयान्तव्यापकत्वात्= साध्यवति साध्याभाववति च वर्तमानत्वादैकान्तिकः= अव्यभिचारी न भवतीत्यर्थः ॥ ५ ॥

विरुद्धाख्यं हेत्वाभासं लक्षयति– सिद्धान्तमिति, न कश्चिदपि सर्वविरुद्धो भवतीत्यभिप्रायेण सिद्धान्तमित्युक्तम्, सिद्धान्तमभ्युपेत्य= यः सिद्धान्तोऽभ्युपेतस्तद्विरोधी हेतुर्विरुद्ध इत्युच्यते. साध्याभावव्याप्यो हेतुर्विरुद्ध इतियावत् यथा वह्निमान् जलादित्यत्र जलं वह्न्यभावव्याप्यत्वाद् वह्निविरुद्धम् । विशेषविवक्षायां चात्र सिद्धान्तपदेन साध्यं ग्राह्यं तथा च साध्यविरोधी विरुद्ध इतिसूत्रार्थः । व्याचष्टे– तमिति, तम्= सिद्धान्तम्= साध्यम्, तदेतद् विरुद्धशब्दनिर्वचनम् । उक्तं व्याचष्टे– अभ्युपेतमिति, यो हेतुः स्वीकृतं सिद्धान्तं व्याहन्ति= साध्याभावापादको भवति स हेतुर्विरुद्ध इत्यन्वयः । उदाहरति– सोयमिति, सतोपि विकारस्य स्वरूपप्रच्युतिसाधनार्थं सांख्यानुमानमिदम्, अयम्= महत्तत्त्वादिलक्षणो विकारः= प्रकृतिविकारः व्यक्तेरपैति= स्वरूपात् प्रच्युतो भवति= रूपान्तरेण परिणमते इत्यर्थः, हेतुमाह– नित्यत्वप्रतिषेधादिति. अनित्यत्वादित्यर्थः, यत्र यत्रानित्यत्वं तत्र तत्र परिणामित्वं यथा मृदादाविति स्पष्टमेव, अस्यैव व्याख्यानं क्रियते– "न नित्यो विकार उपपद्यते" इति, यो हि विकारः स विकारत्वादेवाऽनित्यः– विकारत्वं हि कार्यत्वं कार्यश्चानित्य इति स्पष्टमेवेत्यर्थः । सांख्यसिद्धान्तमाह– अपेत इति, अपेतः= व्यक्तेरपेतः= स्वरूपप्रच्युतोपि महत्तत्त्वादिलक्षणो विकारोऽस्ति= सन्नेव न त्वऽसन्– विनाशप्रतिषेधात्= विनाशाऽप्रतियोगित्वात्= सत्त्वात् विनाशाप्रतियोगिनश्च सत्त्वं स्पष्टमेव, सांख्यमते विकाराणां नित्यत्वाभावेपि सत्त्वमस्ति– सद्भावस्वीकारात् सतश्च सर्वथा विनाशास्वीकारादित्याशयः, उक्तं च तैः– "सत्कार्यम्" इति । उपसंहरति– इत्येवमिति, हेतुः= नित्यत्वप्रतिषेधादितिहेतुः 'व्यक्तेरपेतोपि विकारोस्ति' इत्यनेन स्वसिद्धान्तेन= सांख्यादिसिद्धान्तेन विरुध्यते इति विरुद्धः– सांख्यसिद्धान्तविरुद्धस्य विकारासत्त्वस्यापदकत्वादित्यन्वयः । अत्र– "अत्रोदाहरणभाष्यम्– यथा सोयं विकार इति, महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियभूतसूक्ष्ममहाभूतानि विकारस्तस्य व्यक्तिः= धर्मलक्षणावस्थापरिणामस्तस्मादपाय इति, अत्र हेतुः= नित्यत्वप्रतिषेधादिति, तस्य व्याख्यानम्– न नित्यो विकार उपपद्यते इति, अपेतोपि विकारोस्ति– विनाशप्रतिषेधात्, सोयं नित्यत्वप्रतिषेधादिति हेतुः 'व्यक्तेरपेतोपि विकारोस्ति' इत्यनेन स्वसिद्धान्तेन विरुध्यते" इतितात्पर्यटीका । नित्यत्वप्रतिषेधात्= नित्यत्वाभावादितिहेतुना विकाराणामसत्त्वं प्राप्तं तच्च सांख्यसिद्धान्तविरुद्धमित्याशयः, अनित्यस्य सत्त्वं न संभवति नित्यस्यैव सत्त्वसंभवादिति नैय्यायिकाभिप्रायः ।

उक्तहेतोः सिद्धान्तविरुद्धत्वं जिज्ञासते– कथमिति । जिज्ञासितमुपपादयति– व्यक्तिरित्यादिना, व्यक्तिः= प्राकट्यम्= आत्मलाभः= स्वरूपसत्त्वम्, अपायः= प्रच्युतिः= स्वरूपविनाश इतियावत्, स्वाभिप्रायमाह– यदीति, यद्यात्मलाभात् प्रच्युतः= स्वरूपेणाविद्यमानोपि विकारोऽस्ति= सन्नेव तदा नित्यत्वप्रतिषेधः= नित्यत्वप्रतिषेधादितिहेतुर्नोपपद्यते– विकारस्य सत्त्वेन नित्यत्वलाभादित्याशयः । नित्यत्वस्वरूपमाह– यदिति, अस्तित्वमेव नित्यत्वमिति नियमाभावेपि व्यक्तेरपेतस्यास्तित्वं तु नित्य-

नित्यत्वप्रतिषेधो नाम विकारस्याऽऽत्मलाभात् प्रच्युतेरुपपत्तिः— यदात्मलाभात् प्रच्यवते तदऽनित्यं दृष्टम्, यदस्ति न तदात्मलाभात् प्रच्यवते, अस्तित्वं चात्मलाभात् प्रच्युतिरिति विरुद्धावेतौ धर्मौ न सह संभवत इति, सोयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति ॥ ६ ॥

## यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभौ अनवसितौ प्रकरणं तस्य चिन्ता, विमर्शात् प्रभृति प्राङ् निर्णयात् यत् समीक्षणं सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्तः उभयपक्षसाम्यात्

---

त्वमेव स्यात् अन्यथा व्यक्तेरपेतस्यास्तित्वमेव न स्यादित्यर्थः । नित्यत्वप्रतिषेधस्वरूपमाह— नित्यत्वेति, प्रच्युतेरुपपत्तिः= प्रच्युतिरित्यर्थः । आत्मलाभात् प्रच्युतस्यानित्यत्वमाह— यदिति, यथा घटादिकमितिशेषः, तथा च यदि विकार आत्मलाभात्= स्वरूपात् प्रच्युतो भवति तदा तस्य नित्यत्वप्रतिषेध उपपद्यते इत्यर्थः । सत आत्मलाभात् प्रच्युतेरभावमाह— यदस्तीति, यदस्ति तन्नात्मलाभात् प्रच्यवते इति, यदि विकारोऽस्ति= सन्नेव तदा तस्यात्मलाभात् प्रच्युतिर्नोपपद्यते इत्यर्थः । पर्यवसितमाह— अस्तित्वमिति, अस्तित्वं स्वरूपप्रच्युतिरिति च परस्परविरुद्धौ धर्माविति सह= एकत्र न संभवत इति विकाराणामस्तित्वं वा स्वरूपप्रच्युतिर्वोपपद्यते न तु द्वयमपीति नैय्यायिकाभिप्रायः, एतद्विरुद्धं च सांख्यैः स्वरूपप्रच्युतस्यापि विकारस्यास्तित्वं स्वीकृतं, तत्र सांख्यैः स्वरूपप्रच्युतिसाधनार्थं नित्यत्वप्रतिषेधादितिहेतुः प्रयुक्तः— नित्यत्वस्य स्वरूपप्रच्युतिप्रतिबन्धकत्वात्, तत्र नित्यत्वप्रतिषेधादितिहेतुर्विकारस्यास्तित्वसिद्धान्तेन विरुध्यते— अस्तित्वे सति नित्यत्वप्रतिषेधानुपपत्तेः नित्यत्वप्रतिषेधे च सत्यस्तित्वानुपपत्तेरित्याशयः । उपसंहरति— सोयमिति, सोयं विरुद्धाख्यो हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्तते= प्रयुज्यते तमेव व्याहन्तीति सिद्धान्तविरुद्धत्वाद्विरुद्ध इत्युच्यते इत्यर्थः । यद्यपि विरुद्धः व्यभिचारी भवति तथापि साध्याभावव्याप्यत्वलक्षणदोषविशेषमाश्रित्य व्यभिचारितो विरुद्धस्य भेदः— व्यभिचारिणि साध्याभावव्याप्यत्वनियमासंभवादित्यलम् ॥ ६ ॥

प्रकरणसमं हेत्वाभासं लक्षयति— यस्मादिति, यस्मात् हेतोः साध्यसाधनार्थं प्रयुक्तात् प्रकरणस्य= पक्षप्रतिपक्षयोः= साध्यतदभावयोरर्थात् अयं पक्षः साध्यवान् वा साध्याभाववान् वेति चिन्ता= जिज्ञासा जायते स हेतुनिर्णयार्थम्= साध्यसाधनार्थमपदिष्टः= प्रयुक्तः सन् प्रकरणसमः= सत्प्रतिपक्ष इत्युच्यते, एतादृशहेतोः साध्यतदभावेत्युभयव्याप्यत्वादेतस्मादुक्ता चिन्ता जायते इति सूत्रान्वयः । अत्र— "तथा च निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किं तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्ताम्= जिज्ञासां प्रवर्तयति स प्रकरणसमः" इति विश्वनाथभट्टाः । व्याचष्टे— विमर्शेति, विमर्शाधिष्ठानौ= संशयमाश्रितौ= संशयेन प्रवृत्तौ अनवसितौ= असमाप्तौ=निर्णयात् पूर्वकालिकौ यौ पक्षप्रतिपक्षौ उक्तौ तावुभौ प्रकरणमित्युच्यते तस्य प्रकरणस्य चिन्ता= जिज्ञासा, साध्यतदभावविषयकत्वात् पक्षप्रतिपक्षौ साध्यतदभावावेव तयोरेव प्रकरणमिति नामधेयम्, सत्प्रतिपक्षस्थले साध्यतदभावयोरन्यतरस्य निश्चयो न भवतीति पक्षः साध्यवान् वा साध्याभाववान् वेति जिज्ञासा जायते यथा वह्निमान् पाषाणमयत्वादित्यत्र पाषाणमयत्वहेतुना वह्नितदभावयोरन्यतरस्य निश्चयासंभवादन्यतरजिज्ञासा जायते— किंविशिष्टः पक्ष इति । चिन्तापदार्थमाह— विमर्शादिति, संशयमारभ्य निर्णयपर्यन्तं यत् समीक्षणम्= विचारः स एव जिज्ञासा सैव चिन्तेत्युच्यते, चिन्तनम्= विचारणं सा चिन्ता यत्कृता= येन प्रवृत्ता= येन न निवृत्ता सः= एतादृशो हेतुर्निर्णयार्थं प्रयुक्तः सन् प्रकरणसम इत्युच्यते, प्रकरणसमशब्दस्य व्युत्पत्तिमाह— उभयेति, उभयपक्षसाम्यात्= पक्षप्रतिपक्षयोः

प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते। प्रज्ञापनं तु- अनित्यः शब्दो नित्यधर्मानुपलब्धेरिति. अनुपलभ्यमाननित्यधर्मकमऽनित्यं दृष्टं स्थाल्यादि, नित्यः शब्दोऽनित्यधर्मानुपलब्धेः अनुपलभ्यमानाऽनित्यधर्मकं नित्यं दृष्टमाकाशादि ( इति )।

यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव, या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च सा प्रकरणं प्रवर्तयति- यथा शब्दे नित्यधर्मो नोपलभ्यते एवमनित्यधर्मोपि. सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्तयति। कथम् ?. विपर्यये हि प्रकरणनिवृत्तेः- यदि नित्यधर्मः शब्दे गृह्यते ? न स्यात् प्रकरणं. यदि वाऽनित्यधर्मो गृह्येत? एवमपि निवर्तेत प्रकरणम्। सोयं हेतुरुभौ पक्षौ प्रवर्तयन् अन्यतरस्य निर्णयाय न प्रकल्पते ॥ ७ ॥

समानत्वात्= साध्यतदभावाभ्यां व्याप्यत्वात् प्रकरणमनतिवर्तमानः= पक्षप्रतिपक्षयोरनिवर्तक इति प्रकरणसम इत्युच्यते स च निर्णयाय समर्थो न भवतीत्यन्वयः। प्रज्ञापनम्= उदाहरणम्, उदाहरति- अनित्य इति, नित्यस्य पदार्थस्य यो धर्मोऽविनाशित्वादिकं तदनुपलब्धेरित्यर्थः। दृष्टान्तमाह- अनुपलभ्येति, नोपलभ्यमानो नित्यपदार्थधर्मो यत्र तद् अनुपलभ्यमाननित्यधर्मकम् अनित्यं भवति यथा स्थाल्यादीति नित्यधर्मानुपलब्धेरितिहेतुना शब्दस्यानित्यत्वं प्राप्तमित्यन्वयः, नित्यत्वसाधकप्रयोगमाह- नित्य इति, प्रयोगद्वयस्यापि परस्परव्याघातकत्वात् प्रकरणसमत्वम्। अत्र यथा ह्यविद्यमानस्य नित्यधर्मस्यानुपलब्धिः संभवति तथा विद्यमानस्यापि प्रतिबन्धकात् संभवतीति नित्यधर्मानुपलब्धेरिति हेतुना शब्दे नित्यत्वानित्यत्वयोरन्यतरनिश्चयो न संभवतीति प्रकरणचिन्ता प्रवर्तते एव न निवर्तते इत्ययं हेतुः प्रकरणसम इत्यर्थः। अत्र "यथा नित्यत्वपक्षे नित्यधर्मानुपलब्धिरेवमनित्यत्वपक्षेपि नित्यधर्मानुपलब्धिः सेयं तत्त्वानुपलब्धिमात्रविवक्षयोभयपक्षसमा. प्रकरणसमा तु यथा प्रकरणमनिश्चायकमेवमियमपीत्यर्थः व्युत्पत्तिमात्रं चैतत्. प्रकरणसमपदस्य प्रवृत्तिनिमित्तं तु सत्प्रतिपक्षत्वमन्यथाऽनैकान्तिकस्यापि प्रकरणसमत्वप्रसङ्गादिति" इति तात्पर्यटीका।

सव्यभिचारप्रकरणसमयोर्भेदमुपपादयति- यत्रेति, समानः= साध्यतदभावयोः समानः सन् एक एव यः संशयकारणं भवति स यत्र हेतुत्वेन प्रयुज्यते स संशयसम इत्युच्यते यथा संशयो विचारसमापको न भवति तथा सोपीति संशयसमः स च सव्यभिचार एव यथा धूमवान् वह्नेरित्यत्र वह्निर्धूमतदभावयोः समान एव. स च सत्प्रतिपक्षानुत्थापकत्वात् प्रकरणसमो न भवतीत्यर्थः। प्रकरणसमस्य विशेषमाह- येति, या विमर्शस्य= संशयस्य विशेषापेक्षिता= निर्णयापेक्षिता या चोभयोः पक्षयोः= पक्षप्रतिपक्षयोः= साध्यतदभावयोर्विशेषानुपलब्धिः सा प्रकरणं प्रवर्तयति तादृशप्रकरणप्रवर्तको हेतुः प्रकरणसम इत्युच्यते। विशेषानुपलब्धिमाह- यथेति, नित्यधर्मः= नित्यपदार्थधर्मः नित्यत्वसाधकः, अनित्यधर्मः= अनित्यपदार्थधर्मः= अनित्यत्वसाधकोपि नोपलभ्यते इत्यन्वयः। उपसंहरति- सेयमिति। उभयपक्षयोः= नित्यत्वानित्यत्वपक्षयोः। प्रकरणचिन्ताम्= साध्यतदभावयोरन्यतरस्य जिज्ञासाम्। प्रकरणचिन्ताप्रवृत्तिं जिज्ञासते- कथमिति, उत्तरमाह- विपर्यये इति, विपर्यये= प्रकरणचिन्ताया अभावे प्रकरण निवृत्तिः= विचारनिवृत्तिः स्यात् न च विचारो निवर्तते इत्युभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्तयतीत्यन्वयः। विपर्ययं विशदयति- यदीति, न स्यात्= न प्रवर्तेत, एवमपि= अनित्यधर्मग्रहणेपि। उपसंहरति- सोयमिति, अयम्= प्रकरणसमः। पक्षौ= पक्षप्रतिपक्षौ, अन्यतरस्य= पक्षप्रतिपक्षयोः= साध्यतदभावयोरन्यतरस्य निर्णायको न भवतीति हेत्वाभासः। यत्रैक एव हेतुः साध्यतदभावयोरुभयोरपि व्याप्यो भवति स सव्यभिचारः, यत्र हेतुद्वयं परस्परसाध्याभावव्याप्यं प्रयुज्यते स प्रकरणसम इतिनिष्कर्षः ॥ ७ ॥

## साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥ ८ ॥

द्रव्यं छायेति साध्यं गतिमत्त्वादिति हेतुः साध्येनाविशिष्टः— साधनीयत्वात् साध्यसमः= अयमप्यसिद्धत्वात् साध्यवत् प्रज्ञापयितव्यः, साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति ? आहोस्वित् आवरकद्रव्ये संसर्पति आवरणसंतानादसंनिधिसंतानोयं तेजसो गृह्यते ? इति, सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्याऽसंनिधिरेवाऽविच्छिन्नो गृह्यते इति। आवरणं तु प्राप्तिप्रतिषेधः ॥ ८ ॥

## कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

---

साध्यसमं हेत्वाभासं लक्षयति— साध्येति, साध्यत्वात्= साध्यवत् साधनीयत्वात् साध्याविशिष्टः= साध्यसदृशः= साध्यवत् निश्चयाविषयीभूतो हेतुः साध्यसम इत्युच्यते यथा छाया द्रव्यं गतिमत्त्वादित्यत्र छायायां गतिमत्त्वं निश्चितं नास्तीति साध्यसमः— साध्यत्वादिति सूत्रान्वयः। व्याचष्टे— द्रव्यमिति, अत्र छायायां द्रव्यत्वं साध्यं गतिमत्त्वादितिहेतुः यत्र यत्र गतिमत्त्वं तत्र तत्र द्रव्यत्वं यथा शरीरादाविति स्पष्टमेव, अत्र छायायां गतिमत्त्वं हेतुः सिद्धं नास्तीति साध्येनाविशिष्टः= साधनीयत्वादेव साध्यसमोस्ति। उक्तं व्याचष्टे— अयमपीति, गतिमत्त्वादित्ययं हेतुरपि छायायामद्यावधि असिद्धत्वात् साध्यवत्= द्रव्यत्ववत् प्रज्ञापयितव्यः= हेत्वन्तरेण साधनीय एवेति साध्यसम इत्युच्यते इत्यन्वयः। छायायां गतिमत्त्वस्य साध्यत्वमाह— साध्यमिति, एतत्= गतिमत्त्वम्। गतिमत्त्वस्य साधनार्थं संशयपक्षमाह— किमिति। द्वितीयपक्षमाह— आवरकेति, आवरकद्रव्ये इति— तेजसः= प्रकाशस्यावरके द्रव्ये शरीरादौ संसर्पति= गच्छति सति आवरणसंतानात्= आवरककृतं यत् प्रकाशावरणं तस्य संतानात्= कालिकनैरन्तर्यात् तेजसः= प्रकाशस्य असंनिधिसंतानः= संयोगाभावनैरन्तर्यमिदं तादृशदेशे ( छायाविशिष्टत्वेन गृह्यमाणे देशे ) गृह्यते किमित्यन्वयः, अस्मिन् पक्षे प्रकाशावरकं शरीरादिकमेव गच्छति न तु छायापि छाया हि प्रकाशावरणमात्रं किं वा प्रकाशावरणकृतं प्रकाशसंयोगाभावमात्रमिति न तस्य गतिमत्त्वमुपपद्यते किं तु प्रकाशावरके शरीरादौ वर्तमानं गतिमत्त्वं छायायां भ्रान्त्या प्रतीयते यथा कण्ठोपरि वर्तमानं मुखं भ्रान्त्या दर्पणे प्रतीयते. अन्यथा शरीरादीनामगमनेपि छाया गच्छेत् न चैवमस्तीति न छाया गच्छतीत्यर्थः। सिद्धान्तमाह— सर्पतेति, सर्पता= गच्छता द्रव्येण शरीरादिना योयस्तेजोभागः आव्रियते तस्य तस्य तेजोभागस्याऽसंनिधिः= छायासबन्धयोग्यदेशे संयोगाभाव एवाऽविच्छिन्नः= नैरन्तर्येण यो गृह्यते स एव छाया न तु द्रव्यान्तरं येन छायायां गतिमत्त्वं स्यादिति गतिमत्त्वं छायायामसिद्धत्वात् साध्यसमस्ततश्च न द्रव्यत्वसाधक इत्यन्वयः। वस्तुतस्त्वत्र— 'सर्पता द्रव्येण यो यो भूभाग आव्रियते तत्र तत्र यस्तेजसोऽसंनिधिः स एव छाया न द्रव्यान्तरम्' इत्येवं वक्तव्यमासीत्। आवरणपदार्थमाह— आवरणमिति, प्राप्तिप्रतिषेधः= संयोगाभावस्तेजसः ॥ ८ ॥

कालातीतं हेत्वाभासं लक्षयति— कालेति, यस्य हेतोरेकदेशः कालात्येनं युक्तो भवति= पक्षग्रहणकाले न संभवति एतादृशोऽपदिष्टः= निर्दिष्टो हेतुः कालातीत इत्युच्यते यथा "नित्यः शब्दः संयोगव्यङ्ग्यत्वात्= भेरीदण्डादिसंयोगव्यङ्ग्यत्वात्' इत्यत्र भेरीदण्डादिसंयोगानन्तरं शब्दग्रहणं भवतीति शब्दग्रहणकाले संयोगव्यङ्ग्यत्वादिति हेतोरेकदेशः संयोगः= भेरीदण्डादिसंयोगः स्वरूपेण न संभवतीत्यत्र संयोगव्यङ्ग्यत्वादितिहेतुः कालात्ययापदिष्टत्वात् कालातीतः यथा च पर्वतो वह्निमान् केनचित् संबन्धेन वह्न्युत्पादकव्यापारविशिष्टत्वादित्यत्र पर्वतग्रहणकाले साध्यसाधनकाले वा हेत्वेकदेशो वह्न्युत्पादकव्यापारो नास्ति तदनन्तरमेव वह्निसंभवादिति वह्न्युत्पादकव्यापारविशिष्टत्वादिति हेतुरत्र कालातीत इति सूत्रान्वयः। अत्र— "यस्यापदिश्यमानस्य कालात्ययेनैकदेशो युज्यते स एकदेशात्ययात्

कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते, निदर्शनम्- नित्यः शब्दः संयोगव्यङ्ग्यत्वाद् रूपवत्. प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते तथा च शब्दोप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा तस्मात् संयोगव्यङ्ग्यत्वात् नित्यः शब्दः. इत्ययमहेतुः कालात्ययापदेशात्= व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति- सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति. न निवृत्ते संयोगे रूपं गृह्यते, निवृत्ते (तु)दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले, सेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति न संयोगनिमित्ता भवति, कस्मात् ?. कारणाभावाद्धि कार्याभाव इति, एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति।

---

कालात्ययापदिष्टः कालातीत इत्युच्यते उदाहरणम्- नित्यः शब्दः संयोगव्यङ्ग्यत्वादिति उपलब्धिकाले संयोगो नास्ति सोयं संयोगो हेतुविशेषणत्वेनोपात्त उपलब्धिकालमत्येति यदोपलभ्यते ( शब्दः ) तदा संयोगो नास्ति दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ शब्दोपलब्धिरिति ” इति वार्तिकम्।

व्याचष्टे- कालात्ययेनेति, अपदिश्यमानस्य= निर्दिष्टस्य= प्रयुक्तस्य यस्यार्थस्य= हेतोरेकदेशः कालात्ययेन= अतिकालेन युक्तः= अवर्तमानः स कालात्यय इति कालातीत इत्युच्यते- कालात्यये अपदिष्टः कलात्ययापदिष्टस्तत्त्वात्, कालम्= पक्षग्रहणकालं साध्यसाधनकालं वाऽत्येतीति कालातीत इत्यन्वयः। उदाहरति- नित्य इति, शब्दः पक्षः नित्यत्वं साध्यम्. रूपे प्रकाशसंयोगव्यङ्ग्यत्वं शब्दे च भेरीदण्डादिसंयोगव्यङ्ग्यत्वं व्यङ्ग्यत्वे च कृतकत्वनिवृत्त्या नित्यत्वं प्राप्नोतीत्याशयः। दृष्टान्तसमन्वयमाह- प्रागिति, व्यक्तेः= अभिव्यक्तितः प्राक्= पूर्वम् ऊर्ध्वम्= पश्चाच्चावस्थितम्= विद्यमानमेव घटरूपं प्रदीपघटसंयोगेन व्यज्यते तथा च= तथैव= रूपवदेव शब्दोपि स्वाभिव्यक्तेः प्रागूर्ध्वं चावस्थितः= विद्यमान एव भेरीदण्डसंयोगेन दारुपरशुसंयोगेन च व्यज्यते नोत्पाद्यते येनानित्यः स्यादिति भेरीदण्डादिसंयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्येवं पूर्वपक्षेण शब्दनित्यत्वमुपपादितम्। उक्तहेतौ कालातीतत्वमुपपादयति- इत्ययमिति, संयोगव्यङ्ग्यत्वादिति शब्दनित्यत्वस्याहेतुः= असाधकः- कालात्ययापदेशात्= कालात्ययापदिष्टत्वात्। रूपे प्रकाशसंयोगाभिव्यङ्ग्यत्वमुपपादयति- व्यञ्जकस्येति, व्यङ्ग्यस्य= प्रकाशसंयोगाभिव्यङ्ग्यस्य दृष्टान्तस्य रूपस्य व्यक्तिः= अभिव्यक्तिर्व्यञ्जकस्य प्रकाशसंयोगस्य कालं नाऽत्येति यतः प्रदीपसंयोगे सत्येव रूपग्रहणं भवति प्रदीपसंयोगे निवृत्ते च रूपं न गृह्यते इत्यन्वयव्यतिरेकाभ्यां रूपे प्रकाशसंयोगाभिव्यङ्ग्यत्वमुपपद्यते, शब्दे संयोगाभिव्यङ्ग्यत्वस्याभावमाह- निवृत्ते इति, दारुपरशुसंयोगे निवृत्ते सति दारुपरशुविभागकाले दूरस्थेन शब्दः श्रूयते अभिव्यञ्जकनिवृत्तौ चाभिव्यङ्ग्यस्याभिव्यक्तिर्न भवति यथा प्रकाशसंयोगनिवृत्तौ रूपस्य तथा च यदि शब्दोपि भेरीदण्डादिसंयोगाभिव्यङ्ग्यः स्यात्तदा संयोगनिवृत्तौ न गृह्येत गृह्यते च संयोगनिवृत्तावपीति न संयोगाभिव्यङ्ग्यः शब्द इत्यन्वयः। उपसंहरति- सेयमिति, व्यक्तिः= अभिव्यक्तिः= ग्रहणम् , संयोगकालमत्येति= संयोगकाले न भवतीति न भेरीदण्डादिसंयोगनिमित्ता संभवति- कारणं विना तत्कार्यासंभवात्। शब्दग्रहणस्य संयोगकारणकत्वाभावं जिज्ञासते- कस्मादिति। उत्तरमाह- कारणेति, कारणाभावे कार्यं न भवतीति नियमात् यदि शब्दग्रहणस्य भेरीदण्डादिसंयोगः कारणं स्यात्तदा तादृशसंयोगे निवृत्ते शब्दग्रहणं न स्यात् भवति च संयोगे निवृत्तेपि शब्दग्रहणमिति न शब्दग्रहणं तादृशसंयोगकारणकं किं तु तादृशसंयोगेन शब्द उत्पाद्यते उत्पन्नश्च शब्दस्तादृशसंयोगानन्तरमपि ग्रहणसामग्र्या गृह्यते इत्यर्थः। उपसंहरति- एवमिति- एवमुक्तरीत्या उदाहरणसाधर्म्यस्य= रूपसादृश्याभावाद् अर्थाद् यथोक्तरीत्या रूपे प्रकाशसंयोगाभिव्यङ्ग्यत्वमुपपद्ये तथा शब्दे भेरीदण्डादिसंयोगाभिव्यङ्ग्यत्वं नोपपद्यते इति संयोगव्यङ्ग्यत्वादित्ययं हेतुरसाधनम्= शब्दनित्यत्वसाधकं न भवतीति कालातीताख्यो हेत्वाभास एवेत्यन्वयः।

अवयवविपर्यासवचनं न सूत्रार्थः। कस्मात्?. "यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः. अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" इत्येतद्वचनाद् विपर्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात् तथा वैधर्म्यात् साध्यसाधनं हेतुलक्षणं न जहाति अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति। "अवयवविपर्यासवचनमप्राप्तकालम् ५-२-११" इतिनिग्रहस्थानमुक्तं तदेवेदं पुनरुच्यते इत्यतस्तन्न सूत्रार्थः। ॥ ९ ॥

अथ छलम्—

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १०॥**

न सामान्यलक्षणे छलं शक्यमुदाहर्तुं विभागे तूदाहरणानि ॥ १० ॥

विभागश्च—

**तत् त्रिविधम्— वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥**

---

सूत्रकारानभिमतमुक्तसूत्रस्य व्याख्यानान्तरं प्रत्याचष्टे— अवयवेति, प्रतिज्ञाद्यवयवानां विपर्यासेन= व्युत्क्रमेण यद् वचनम्= प्रयोगः स कालात्ययेऽपदिष्टत्वात् कालातीतो यथा— 'पर्वतो धूमाद् वह्निमान्' इति किं वा 'वह्निमान् महानसवद् धूमात्' इत्यादिव्युत्क्रमेणप्रयोगे. अत्र हेत्ववयवस्य कालात्ययो जात इति कालातीतो हेतुर्हेत्वाभास इत्येवं कालातीतशब्दस्य स्थूलार्थबुद्ध्या केनचित् सूत्रं व्याख्यातं स न सूत्रार्थ इत्यर्थः। अवयवविपर्यासवचनस्य सूत्रानर्थत्वे कारणं जिज्ञासते— कस्मादिति। उत्तरं पद्येनाह— यस्येति, यस्य पदार्थस्य येन पदार्थेन सह अर्थतः= सामर्थ्यात् संबन्धो भवति तस्य पदार्थस्य तेन पदार्थेन सह स संबन्धः समीपस्थस्येव दूरस्थस्यापि भवत्येव यथा पित्रा पुत्रस्य तथा च वह्निना धूमस्य स्वज्ञानज्ञाप्यत्वलक्षणः संबन्धो यथा 'वह्निमान् धूमात्' इत्यत्र भवति तथा 'वह्निमान् महानसवद् धूमात्' इत्यादावपि व्यवधाने सत्यपि भवतीति अवयवविपर्यासेन वचनेपि हेतोर्हेत्वाभासत्वं नापद्यते इत्यर्थः, विपक्षे बाधकमाह— अर्थत इति, अर्थतः स्वशक्त्या असमर्थानाम्= परस्परसंबन्धरहितानामानन्तर्यं साध्यसाधनभावे कारणं न भवति. नहि वह्निमान् जलादित्येवमानन्तर्येपि वह्निजलयोः साध्यसाधनभावः संभवति तस्माद् हेतोर्विपर्यासेन वचनेपि हेत्वाभासत्वानुपपत्त्या उक्तमवयवविपर्यासवचनम्= व्याख्यानं न सूत्रार्थ इत्यर्थः। स्ववक्तव्यमाह— इत्येतदिति, उक्तवचनानुकूल्यात् 'वह्निमान् महानसवद् धूमात्' इत्येवं विपर्यासेनाप्युक्तो हेतुः उदाहरणसाधर्म्यात् प्रत्युदाहरणवैधर्म्याच्च यत् साध्यसाधनम्= साध्यसाधकत्वं हेतुलक्षणं तन्न जहाति अजहद्धेतुलक्षणम्= हेतुलक्षणाभावरहितः= हेतुलक्षणयुक्तश्च हेतुर्हेत्वाभासो न भवतीति हेतोर्विपर्यासेनापि प्रयोगे साध्यसाधकत्वसंभवाद् हेत्वाभासत्वापत्तिर्नास्तीत्यन्वयः, अवयवानां विपर्यासेन वचने तु अप्राप्तकालनामकं निग्रहस्थानं पञ्चमाध्याये उक्तमिति तादृशावयवविपर्यासस्यैवात्रापि सूत्रार्थत्वे पुनरुक्तिरेव स्यादिति तन्न सूत्रार्थः किं तु भाष्योक्त एव सूत्रार्थ इत्याह— अवयवेति ॥ ९ ॥

छलं लक्षयति— वचनेति, अर्थविकल्पस्य= अर्थभेदस्य= वक्तुरनभिप्रेतस्यार्थान्तरस्योपपादनेन यो वचनविघातः= वाक्यविरोधप्रदर्शनं तत् छलमित्युच्यते यथा— नवीनकम्बलत्वाभिप्रायेण 'नवकम्बलः' इत्युक्ते नवत्वसंख्यानुपपत्तिप्रदर्शनेन वाक्यविरोधप्रदर्शनं छलमिति सूत्रार्थः। अत्र सामान्यलक्षणे उदाहरणप्रदर्शनासंभवमाह— नेति। विभागे= विशेषलक्षणेषु। द्रष्टव्यानीतिशेषः ॥ १० ॥

छलविभागसूत्रमवतारयति— विभागश्चेति, छलानां विभाग इत्यन्वयः। तदिति— तत्= छलं त्रिविधम्— वाक्छलं सामान्यच्छलमुपचारच्छलं चेति सूत्रान्वयः ॥ ११ ॥

तेषाम्—

## अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥

नवकम्बलोयं माणवक इति प्रयोगः अत्र ' नवः कम्बलोऽस्य ' इति वक्तुरभिप्रायः, विग्रहे तु विशेषो न समासे, तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यार्थम्– 'नव कम्बला अस्येति तावदभिहितं भवता' इति कल्पयति. कल्पयित्वा चाऽसंभवेन प्रतिषेधति– 'एकोऽस्य कम्बलः कुतो नव कम्बलाः' इति, तदिदं सामान्यशब्दे= वाचि छलं वाक्छलमिति ।

अस्य प्रत्यवस्थानम्– सामान्यशब्दस्याऽनेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम्–' नवकम्बलः ' इत्यनेकार्थस्याभिधानम्– 'नवः कम्बलोऽस्य ' ' नव कम्बला अस्य 'इति. एतस्मिन् प्रयुक्ते येयं कल्पना ' नव कम्बला अस्येत्येतद् भवताऽभिहितं तच्च न संभवति ' इति एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः यस्माद्विशेषोऽर्थविशेषेषु विज्ञायते– अयमर्थोऽनेनाभिहित इति. स च विशेषो नास्ति तस्माद् मिथ्यानियोगमात्रमेतदिति । प्रसिद्धश्च लोके

अग्रिमसूत्रमवतारयति– तेषामिति, तेषां विभक्तानां छलानां मध्ये सूत्रकृत् वाक्छलं लक्षयतीत्यर्थः । अविशेषेति, अत्र ' अविशेषाभिहितार्थे ' इति वक्तव्यमासीत्. अविशेषेण= सामान्यरूपेणाऽभिहितोऽर्थो यस्य तादृशे= अविशेषेणार्थबोधके वाक्ये प्रयुक्ते सति वक्तुरभिप्रायात्= अभिप्रायापेक्षया याऽर्थान्तरकल्पना तद् वाक्छलं यथा नवीनकम्बलत्वाभिप्रायेण ' नवकम्बलः' इतिसामान्यवाक्ये प्रयुक्ते वक्तुरभिप्रायापेक्षया याऽर्थान्तरस्य नवसंख्याककम्बलत्वस्य कल्पना तया चैककम्बले वाक्यविरोधप्रदर्शनं तद् वाक्छलमिति सूत्रार्थः, यथाश्रुतसूत्रपक्षे तु अर्थे= पदार्थे अविशेषाभिहितत्वं नोपपद्यते वक्त्रा विशेषेणैवाभिधानाद् वाक्ये त्वविशेषेणाभिहितार्थत्वमुपपद्यते इत्यनुसंधेयम् । व्याचष्टे– नवेति, प्रयोगः= उदाहरणम् । अत्र वक्तुरभिप्रायमाह– अत्रेति, ' नवः कम्बलोऽस्य ' इति वक्तुरभिप्रायपक्षे विग्रहः. ' नव= नवसंख्याकाः कम्बला अस्य ' इति छलवाद्यभिप्रायपक्षे विग्रह इति विग्रहे विशेषोस्ति समासस्तूभयत्रापि ' नवकम्बलः' इत्येवेति समासे विशेषो नास्तीति वाक्यस्य नवसंख्याककम्बलपरत्ववर्णनमपि संभवतीत्यर्थः । छलापत्तिं प्रदर्शयति– तत्रेति । अन्यार्थमाह– नवेति । कल्पयति वाक्यार्थम् । प्रतिषेधमाह– एक इति । नव= नवसंख्याकाः । उपसंहरति– तदिदमिति, सामान्येति वाक्छलशब्दस्य व्युत्पत्तिः । तथा च ' नवकम्बलः ' इति सामान्यरूपेण= उभयपक्षानुकूल्येनार्थबोधके वाक्ये कम्बलस्य नवत्वसंख्याकत्वानुपपत्तिप्रदर्शनमेव वाक्छलमित्यन्वयः स्पष्टमन्यत् ।

एवं निरूपितछलस्य प्रत्याख्यानप्रकारमाह– अस्येति, अस्य= उक्तच्छलस्य, प्रत्यवस्थानम्= खण्डनमारभ्यते, प्रयुक्तः सामान्यशब्दो यत्रानेकार्थो भवति तत्र तस्यान्यतराभिधानकल्पनायाम्= अन्यतरार्थकल्पनायां विशेषवचनम्= कल्पितान्यतरार्थोपपादको विशेषो वक्तव्यो भवति येन तादृशविशेषात् स कल्पितोऽर्थ उपपद्येतेत्यर्थः । उदाहरति– नवेति, ' नवकम्बलः ' इति सामान्यपदं यदुक्तं तद् अनेकार्थाभिधानम्= अनेकार्थबोधकमस्ति यतोस्य 'नवः कम्बलोऽस्य' इत्यपि 'नव कम्बला अस्य' इत्यपि चार्थः संभवति अत एवायं शब्दः सामान्यशब्द इत्युच्यते. एतस्मिन्= 'नवकम्बलः' इतिपदे प्रयुक्ते सति या भवतः ' नव कम्बला अस्येति भवताऽभिहितम्= उक्तं तत्= नवसंख्याककम्बलवत्त्वं च न संभवति– एकस्यैव कम्बलस्य दृश्यमानत्वात्' इतीयमन्यार्थकल्पना एतस्यामन्यतराभिधानकल्पनायां विशेषः= एतत्कल्पनोपपादको विशेषो वक्तव्यः यस्माद् विशेषवचनादर्थविशेषेषु= ' नव कम्बला अस्य ', इत्यस्मिन्नर्थे विशेषः= अयमेवार्थो मयोक्त इति विशेषो विज्ञायते= विज्ञायेत= 'अयमर्थोऽनेन वक्त्राऽभिहितः' इति विज्ञायेत सः= तादृशश्च विशेषोत्र नास्ति येन ' नव कम्बला अस्य ' इत्यर्थो मयोक्त इति

शब्दार्थसंबन्धोऽभिधानाभिधेयनियमनियोगः— अस्याभिधानस्याऽयमर्थोऽभिधेय इति. समानः सामान्यशब्दस्य विशेषो विशिष्टशब्दस्य, प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाऽप्रयुक्तपूर्वाः, प्रयोगश्चार्थसंप्रत्ययार्थः अर्थप्रत्ययाच्च व्यवहार इति, तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात् सामान्यशब्दस्य प्रयोगनियमः. 'अजां ग्रामं नय' 'सर्पिराहर' 'ब्राह्मणं भोजय, इति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते. सामर्थ्याद् यत्रार्थक्रियादेशना संभवति तत्र प्रवर्तन्ते नार्थसामान्ये— क्रियादेशनाऽसंभवात्, एवमयं सामान्यशब्दः 'नवकम्बलः' इति. योऽर्थः संभवति— 'नवः कम्बलोऽस्य' इति तत्र प्रवर्तते. यस्तु न संभवति— 'नव कम्बला अस्य' इति तत्र न प्रवर्तते, सोयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भो न कल्पते इति ॥१२॥

---

सिध्येत् तस्मात् एतत्= 'नव कम्बला अस्येति भवताभिहितं नवकम्बलशब्देन' इति नियोगः= कुचोद्यं मिथ्यानियोगमात्रं यतो मया नवीनकम्बलाभिप्रायेणैव नवकम्बल इत्युक्तं न तु नवसंख्याककम्बलाभिप्रायेणेत्येवं छलस्य प्रत्याख्यानं कर्तव्यमित्यन्वयः। अत्र 'नवकम्बलः' इतिशब्दस्य 'नवः कम्बलोऽस्य' इत्येवार्थः संभवति न त्वन्य इत्युपपादनार्थं ग्रन्थमारभते— प्रसिद्धश्चेति, लोके शब्दार्थयोरभिधानाभिधेयनियमनियोगः= वाच्यवाचकभावलक्षणः संबन्धः प्रसिद्ध एव यथा 'अस्याभिधानस्य— घटादिशब्दस्य अयमर्थः= कम्बुग्रीवादिमदादिपदार्थः अभिधेयः= वाच्यस्तस्य च घटादिशब्दो वाचकः' इति, तत्रापि सामान्यशब्दस्य समानः= सामान्यार्थो वाच्यो भवति यथा ब्राह्मणशब्दस्य ब्राह्मणत्वावच्छिन्नः सामान्यः. विशिष्टशब्दस्य= विशेषशब्दस्य विशेषो वाच्यो भवति यथा तैलङ्गशब्दस्य तैलङ्गः स च विशेषार्थ एव। अनेनोपपादनेन प्रकृते भवन्मते किं प्राप्तमित्याशङ्क्याह— प्रयुक्तेति, इमे सर्वे शब्दा प्रयुक्तपूर्वाः= तत्तदर्थविशेषबोधनार्थं पूर्वैराप्तैः प्रयुक्ता एवाधुनाऽर्थे= अर्थप्रत्यायनार्थं प्रयुज्यन्ते न त्वऽप्रयुक्तपूर्वास्तथा च तत्तदर्थप्रत्यायनार्थं शब्दप्रयोगोऽनादिकालिकः सिद्धः शब्दप्रयोगश्चार्थसंप्रत्ययार्थः= तत्तदर्थप्रतीत्यर्थ एव तादृशार्थप्रत्ययाच्च लोकव्यवहारो भवति लोकव्यवहारश्च प्रसिद्धार्थविषयको भवति। पर्यवसितमाह— तत्रेति, एवमुक्तरीत्या शब्दप्रयोगे अर्थगत्यर्थे= तत्तदर्थप्रतीत्यर्थे सिद्धे सामान्यशब्दस्य प्रयोगनियमः= तदर्थबोधकत्वं सामर्थ्याद् भवति यतो यादृशार्थप्रतिपादनसमर्थः शब्दो भवति तादृशार्थे प्रयोगो भवति नान्यत्र। उदाहरति— अजामिति, अत्र अजाग्रामसर्पिर्ब्राह्मणशब्दाः सामान्यशब्दाः— सामान्यत एवाजादिपदार्थानां बोधकत्वात् अथापि अर्थावयवेषु= व्यक्तिविशेषेष्वेव प्रयुज्यन्ते अर्थादेते सामान्यशब्दा अपि यत्र यस्यां व्यक्तौ अर्थक्रियादेशना= नयनादिक्रियानिर्देशः संभवति तत्र= तस्यामेव व्यक्तौ तद्बोधानार्थं सामर्थ्यात्= स्वशक्त्या प्रवर्तन्ते यथात्राजादिशब्दः संनिहितायामेवाजादिव्यक्तौ प्रवर्तते न त्वर्थसामान्ये= अजादिपदार्थमात्रे— क्रियादेशनाऽसंभवात्= अजादिपदार्थमात्रे नयनादिक्रियानिर्देशासंभवात् न हि केनाप्यऽप्रमत्तेनाजादिमात्रस्य नयनादिक्रिया निर्देष्टुं शक्यते. न च 'अजां नय' इत्यजादिशब्देन सामान्यवाचकेनाप्यजामात्रस्य नयनं प्रतिपादयितुं शक्यते तस्मात् सामान्यशब्देनापि वक्तुर्विशेषार्थविषयकाभिप्राये सति विशेषव्यक्तिरेव बोध्यते न सामान्यं. विशेषशब्दस्य तु सामान्यबोधने शक्तिरेव नास्तीत्यर्थः। प्रकृतमाह— एवमिति, एवम्= अजादिशब्दवत् 'नवकम्बलः' इत्ययमपि सामान्यशब्द एव अस्य योऽर्थः संभवति— 'नवः कम्बलोऽस्य' इति तत्र प्रवर्तते= तमेव बोधयति यस्त्वर्थो न संभवति— 'नव कम्बला अस्य' इति तत्र न प्रवर्तते= तं न बोधयति. असंभवश्चात्र नवसंख्याककम्बलानां प्रत्यक्षानुपलब्ध्या बाधादेव। उपसंहरति— सोयमिति, 'नव कम्बला अस्येति भवताभिहितं तच्च न संभवति— कम्बलस्यैकत्वात्' इत्येवं योऽनुपपद्यमानार्थकल्पनया परवाक्योपालम्भः= मद्वाक्यविरोधप्रदर्शनं तद् न कल्पते= न युक्त इत्येवं प्रदर्शितच्छलस्य प्रत्याख्यानं कर्तव्यमित्यन्वयः ॥ १२ ॥

## संभवतोऽर्थस्याऽतिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥

'अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्नः' इत्युक्ते कश्चिदाह- 'संभवति ब्राह्मणे विद्याचरणसंपत्' इति, अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्या= असंभूतार्थविकल्पनया क्रियते- 'यदि ब्राह्मणे विद्याचरणसंपत् संभवति ? व्रात्येपि संभवेत् व्रात्योपि ब्राह्मणः सोप्यस्तु विद्याचरणसंपन्नः' इति, यद् विवक्षितमर्थमाप्नोति चाऽत्येति च तदतिसामान्यं यथा ब्राह्मणत्वं विद्याचरणसंपदं कचिदाप्नोति कचिदत्येति, सामान्यनिमित्तं छलं सामान्यच्छलमिति ।

अस्य च प्रत्यवस्थानम्- अविवक्षितहेतुकस्य विषयानुवादः प्रशंसार्थत्वाद् वाक्यस्य. तदत्राऽसंभूतार्थकल्पनानुपपत्तिः यथा- 'संभवन्त्यस्मिन् क्षेत्रे शालयः' इति. अनिराकृतम-

---

सामान्यच्छलं लक्षयति- संभवत इति, संभवतोऽर्थस्य= संभावितार्थस्य वाक्यस्य किं वा संभावितस्यार्थविशेषस्य यथा ब्राह्मणविशेषस्य अतिसामान्ययोगात्= अतिसामान्यस्य ब्राह्मणत्वादिधर्मस्य संबन्धाद् याऽसंभूतार्थकल्पना तत् सामान्यच्छलमित्युच्यते- सामान्यधर्माश्रयणेन प्रवृत्तत्वाद्. यथा 'संभवति ब्राह्मणे विद्याया आचारस्य च संपत्तिः' इत्युक्ते परो वदति 'यदि ब्राह्मणे विद्याचरणसंपत् तदा सा व्रात्येपि स्यात् व्रात्योपि ब्राह्मणः' इति. अत्र व्रात्यस्य ब्राह्मणत्वेपि उपनयनादिसंस्काराभावाद् वस्तुतो विद्याचरणसंपद् न संभवति तत्रातिसामान्यं ब्राह्मणत्वमाश्रित्य असंभूतार्थस्य= असंभावितार्थस्य व्रात्ये विद्याचरणसंपदो या कल्पना तदेव सामान्यच्छलमिति सूत्रार्थः । व्याचष्टे- अहो इति, ब्राह्मणः= ब्राह्मणविशेषः । उक्तं कश्चित् स्वीकरोति- संभवतीति । अत्र छलमवतारयति- अस्येति, अस्य= उक्तस्य, अर्थविकल्पोपपत्त्या वचनविघातश्छलमिति सामान्यलक्षणमनुवदति- वचनस्येति, अर्थविकल्पोपपत्त्या= अर्थविकल्पोपपादनपूर्वकमसंभूतार्थकल्पनयोक्तवचनस्य विघातः क्रियते= विरोधः प्रदर्श्यते यत् तदेव च्छलमित्यर्थः, किं वात्राऽसंभूतार्थकल्पनैवार्थविकल्पोपपत्तिर्विज्ञेया । छलवाक्यमाह- यदीति, व्रात्ये= उपनयनादिसंस्कारहीने जन्ममात्रेण ब्राह्मणे, सः= व्रात्यः । अत्र "सावित्रीपतिता व्रात्याः" इत्यादिस्मृतिरनुसंधेया. व्रात्यस्य संस्काराभावाद् विद्या न संभवति अथापि व्रात्यगतब्राह्मणत्वमाश्रित्य या विद्याचरणसंपत्कल्पना सा ह्यऽसंभूतार्थकल्पनैव तया पूर्वोक्तवाक्ये यो विरोधः प्रदर्शितस्तदेव च्छलम्, सा चासंभूतार्थकल्पना ब्राह्मणत्वं सामान्यमाश्रित्य कृतेति सर्वं स्पष्टम् । अत्रोक्तं ब्राह्मणत्वस्य विद्याचरणसंपत्प्रयोजकत्वं न संभवतीति प्रदर्शनमेव विरोधप्रदर्शनम् । अतिसामान्यस्य स्वरूपमाह- यदिति, विवक्षितमर्थं यथात्र विद्याचरणसंपदम्, आप्नोति= सामानाधिकरण्येन प्राप्नोति यथा ब्राह्मणविशेषव्यक्तौ ब्राह्मणत्वस्य विद्याचरणसंपदश्च सामानाधिकरण्यं स्पष्टम्, अत्येति= व्यभिचरति व्रात्ये । उक्तमुदाहरति- यथेति । सामान्यच्छलशब्दस्य व्युत्पत्तिमाह- सामान्येति ।

उक्तच्छलस्य खण्डनप्रकारमाह- अस्येत्यादिना । न विवक्षितः उक्तो हेतुर्यत्र तस्याविवक्षितहेतुकस्य वाक्यस्य प्रशंसार्थत्वाद् विषयानुवादः= विषयानुवादमात्रपरत्वं भवति यथोक्तवाक्ये ब्राह्मणत्वं विद्याचरणसंपद्धेतुत्वेन नोक्तं येन ब्राह्मणत्वहेतुना व्रात्ये विद्याचरणसंपदापत्तिः स्यात् किं तूक्तं वाक्यं ब्राह्मणविशेषस्य प्रशंसापरमिति तादृशब्राह्मणे विषयभूताया विद्यमानाया विद्याचरणसंपदोऽनुवादमात्रपरमेवेति तत्= तस्मादत्र= उक्तवाक्येऽसंभूतार्थस्य= व्रात्ये विद्याचरणसंपदः कल्पना नोपपद्यते- ब्राह्मणत्वस्य विद्याचरणसंपद्धेतुत्वेनानुक्तत्वादित्यन्वयः, उदाहरति- यथेति, 'संभवन्त्यस्मिन् क्षेत्रे शालयः'

ऽविवक्षितं च बीजजन्म. प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते. सोयं क्षेत्रानुवादो नास्मिन् शालयो विधीयन्ते इति, बीजात्तु शालिर्निर्वृत्तिः सती न विवक्षिता, एवम् 'संभवति ब्राह्मणे विद्याचरणसंपत्' इति संपद्विषयो ब्राह्मणत्वं न संपद्धेतुः, न चात्र हेतुर्विवक्षितः- विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य । सति ब्राह्मणत्वे संपद्धेतुः समर्थ इति विषयं च प्रशंसता वाक्येन यथाहेतु फलनिर्वृत्तिर्न प्रत्याख्यायते, तदेवं सति वचनविघातोऽसंभूतार्थकल्पनया नोपपद्यते इति ॥ १३ ॥

## धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

अभिधानस्य धर्मो यथार्थप्रयोगः धर्मविकल्पः= अन्यत्र दृष्टस्यान्यत्र प्रयोगः तस्य निर्देशे= धर्मविकल्पनिर्देशे यथा- 'मञ्चाः क्रोशन्ति' इति. अर्थसद्भावेन प्रतिषेधः-'मञ्चस्थाः

---

इत्यत्र बीजजन्म= शालिसत्त्वं न निराकृतम्- 'शालयो न सन्ति' इति, नापि विवक्षितम्-'शालयः सन्ति' इति. किं त्वनेन वाक्येन प्रवृत्तिविषयः= व्यवहारविषयभूतम्= दृश्यमानम्= प्रस्तुतं क्षेत्रं प्रशस्यते- शाल्युत्पादनसमर्थमिदं क्षेत्रमिति, सोयं क्षेत्रानुवाद एव प्रशंसागर्भत्वादित्यस्मिन् वाक्ये शालयो न विधीयन्ते= शालिसत्त्वं न प्रतिपाद्यते, बीजात्तु या शालिनिर्वृत्तिः= शालिसंपत्तिरस्ति सा न विवक्षितास्ति नापि निराकृतास्ति. तथा च यथेदं वाक्यं क्षेत्रप्रशंसापरमेव न तु शालिसत्त्वपरं तथैवोक्तं वाक्यं ब्राह्मणविशेषस्य प्रशंसापरमेव न तु ब्राह्मणत्वस्य विद्याचरणसंपद्धेतुत्वप्रतिपादनपरं येन व्रात्ये विद्याचरणसंपदापत्तिस्तेन स्यादित्यर्थः । प्रकृतमाह- एवमिति, संपद्विषयः= विद्याचरणसंपत्समानाधिकरणम् । नेति- अत्र वाक्ये हेतुः= हेतुत्वेन ब्राह्मणत्वं न विवक्षितं येन तादृशब्राह्मणत्वेन व्रात्येपि विद्याचरणसंपदापत्तिः स्यात् किं त्वस्य वाक्यस्य प्रशंसार्थत्वात् विषयस्य= ब्राह्मणविशेषनिष्ठाया विद्याचरणसंपदोऽनुवादमात्रमित्यर्थः । सतीति- ब्राह्मणत्वे सति विद्याचरणसंपदो हेतुरध्ययनाभ्यासादिः समर्थः= संपज्जनको भवति नान्यथेति विषयप्रशंसापरेण वाक्येन यथाहेतु= अभ्यासाद्यनुसारेण फलनिर्वृत्तिः= संपत्प्राप्तिर्न प्रत्याख्यायते तथा च विद्याचरणसंपत् यत्रास्ति तत्र स्वहेतुनास्ति न तु ब्राह्मणत्वमात्रेण येन व्रात्येप्यापद्येत तथा चैवमसंभूतार्थकल्पनया वचनविघातः= उक्तवाक्ये विरोधो नोपपद्यते किं तु संभूतार्थकल्पनयैव विरोध आपद्यते इत्येवमुपसंहरति- तदेवमिति ॥ १३ ॥

उपचारच्छलं लक्षयति- धर्मेति, धर्मविकल्पेन= शक्तिलक्षणयोरन्यतरवृत्त्या निर्देशे= प्रयोगे कृते अर्थात् शक्त्या शब्दप्रयोगे कृते लक्षणया योर्थसद्भावस्य प्रतिषेधस्तथा लक्षणया शब्दप्रयोगे कृते शक्त्या यस्तदर्थसद्भावस्य प्रतिषेधस्तद् उपचारच्छलं यथा लक्षणया 'गङ्गायां घोषः' इत्युक्ते 'न गङ्गायां घोषः संभवति' इति शक्त्या यो गङ्गाप्रवाहे घोषसद्भावप्रतिषेधस्तदुपचारच्छलं. यथा च शक्त्या 'गङ्गायां मीनः' इत्युक्ते गङ्गापदलक्षणया यो गङ्गातीरे मीनसद्भावप्रतिषेधस्तदुपचारच्छलमिति सूत्रान्वयः, अत्र- "धर्मः शब्दस्यार्थेन संबन्धस्तस्य विकल्पः= विविधः कल्पः शक्तिलक्षणान्यतररूपस्तथा च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम्" इति विश्वनाथभट्टाः । व्याचष्टे- अभिधानस्येति, अभिधानस्य= शब्दस्य यथार्थप्रयोगः= शक्त्या यः प्रयोगः स एव धर्मः, अन्यत्र दृष्टस्य योऽन्यत्र प्रयोगः= लक्षणया प्रयोगः स एव धर्मविकल्पस्तस्य धर्मविकल्पस्य निर्देशे अर्थात् लाक्षणिकशब्दप्रयोगे कृते शक्त्या यस्तदर्थसद्भावस्य प्रतिषेधस्तदुपचारच्छलमित्यन्वयः । उदाहरति- यथेति, अत्र मञ्चशब्दस्य मञ्चस्थपुरुषे लक्षणा । अत्र छलमवतारयति- अर्थेति, अर्थस्य= क्रोशनकर्तृत्वस्य मञ्चस्थपुरुषेषु सद्भावेन मञ्चेषु प्रतिषेध इत्यर्थः, वस्तुतस्त्वत्र 'अर्थासद्भावेन' इति वा 'अर्थ-

पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति'। का पुनरत्रार्थविकल्पोपपत्तिः ?, अन्यथा प्रयुक्तस्याऽन्यथाऽर्थकल्पनम्= भक्त्या प्रयोगे प्राधान्येन कल्पनम्। उपचारविषयं छलम् उपचारच्छलम्, उपचारः= नीतार्थः= सहचरणादिनिमित्तेनाऽतद्भावे तद्वदभिधानम् उपचार इति।

अत्र समाधिः– प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरनुज्ञा प्रतिषेधो वा न छन्दतः, प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः. सिद्धप्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न छन्दतः, यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते ? तथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न छन्दतः, अथ गुणभूतं ? तदा गुणभूतस्य, यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति ? स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ॥ १४ ॥

---

सद्भावस्य' इति वा पाठो युक्तः। प्रतिपेधवाक्यमाह– मञ्चस्था इति। सामान्यलक्षणोक्तामर्थविकल्पोपपत्तिमत्र जिज्ञासते– केति। उत्तरमाह– अन्यथेति, अन्यथा= लक्षणया प्रयुक्तस्यात्र मञ्चशब्दस्य अन्यथा= शक्त्याऽर्थकल्पनम्= शक्यार्थग्रहणमेवार्थविकल्पोपपत्तिः। उक्तं व्याचष्टे— भक्त्येति, भक्त्या= लक्षणया प्रयोगे कृते प्राधान्येन= शक्त्याऽर्थकल्पनम्= शक्त्यार्थग्रहणमितियावत्। उपचारच्छलशब्दस्य व्युत्पत्तिमाह– उपचारेति, उपचारविषयम्= लक्षणाविषयम्। उपचारपदार्थमाह– नीतार्थ इति, नेयार्थ इत्यर्थः, गौणीलक्षणाकारणमितियावत्। व्याचष्टे– सहेति, अतद्भावेपि= मञ्चानां क्रोशनकर्तृत्वाभावेपि सहचरणादिनिमित्तेन= क्रोशनकर्तृपुरुषसंबन्धेन तद्वत्= क्रोशनकर्तृवद् यदभिधानम्= शब्देन कथनं स उपचार इत्यलम्।

उक्तच्छलस्य खण्डनप्रकारमाह– अत्रेति, समाधिः= स्वपक्षसमाधानं तत्प्रकार उच्यते इत्यर्थः। प्रसिद्धे शब्दप्रयोगे कृते वक्तुः यथाभिप्रायम्= अभिप्रायानुसारेणैव शब्दार्थयोः= शब्दार्थस्य अनुज्ञा= स्वीकारः= मण्डनं प्रतिषेधः= खण्डनं वा कर्तव्यं न छन्दतः= स्वेच्छया= वक्त्रभिप्रायप्रातिकूल्येन, किं वा शब्दार्थयोरित्यत्र अर्थस्य खण्डनमण्डने प्रसिद्धे एव शब्दस्यापि यथा सूर्याभिप्रायेण 'मित्रः' इत्युक्ते सुहृदभिप्रायेण 'मित्रम्' इति वक्तव्यं न 'मित्रः' इति पुंस्त्वखण्डनमित्येवं शब्दस्वरूपस्यापि खण्डनमण्डने संभवतस्ते अपि वक्त्रभिप्रायानुसारेणैव कर्तव्ये न छन्दतस्तथा च सुहृदभिप्रायेण 'मित्रः' इत्युक्ते सूर्याभिप्रायेण च 'मित्रम्' इत्युक्ते खण्डनं कर्तव्यम्. 'मित्रः' इत्यस्य सूर्याभिप्रायेण 'मित्रम्' इत्यस्य च सुहृदभिप्रायेण मण्डनं च कर्तव्यं न छन्दत इत्यनुसंधेयम्। प्रधानभूतस्य शक्तस्येत्यर्थः, भाक्तस्य= लाक्षणिकस्य. भाक्तस्य गुणभूतत्वं च गौणार्थबोधकत्वात्, उभयोः= शाक्तभाक्तयोः प्रयोगो लोके प्रसिद्ध एव यथा– 'गङ्गायां मीनः' 'गङ्गायां घोषः' इति। उक्तमेवाह– सिद्धेति, सिद्धप्रयोगे= प्रसिद्धप्रयोगस्थले, तथा= वक्त्रभिप्रायानुसारेण। स्वाभिप्रायं विशदयति– यदीति, यदि वक्ता प्रधानशब्दम्= शक्त्या= शक्यार्थाभिप्रायेण शब्दं प्रयुङ्क्ते तदा तथाभूतस्य= शक्यार्थस्यैव= शक्यार्थमाश्रित्यैव खण्डनमण्डने कर्तव्ये न छन्दतः= अशक्यार्थमाश्रित्य खण्डनमण्डने न कर्तव्ये इत्यर्थः, अथ= यदि च वक्ता गुणभूतम्= लाक्षणिकम्= लक्ष्यार्थाभिप्रायेण शब्दं प्रयुङ्क्ते तदा गुणभूतस्य= लक्ष्यार्थस्यैव= लक्ष्यार्थमाश्रित्यैव खण्डनमण्डने कर्तव्ये न त्वऽलक्ष्यार्थमाश्रित्येत्यर्थः। उपसंहरति– यत्रेति, यत्र= 'मञ्चाः क्रोशन्ति' इत्यादौ गुणभूतम्= लाक्षणिकं मञ्चादिशब्दं प्रयुङ्क्ते प्रधानभूतम्= शक्यार्थं च मञ्चादिकमभिप्रेत्य= आश्रित्य परः प्रतिषेधति– 'न मञ्चाः क्रोशन्ति' इति तदसौ प्रतिषेधः स्वमनीषया= छन्दतः क्रियते इति परोपालम्भः= परवाक्यदोषो न भवतीत्येवमुक्तच्छलस्य निराकरणं कर्तव्यमित्यन्वयः ॥ १४ ॥

## वाक्छलमेवोपचारच्छलम्– तदविशेषात् ॥ १५ ॥

न वाक्छलादुपचारच्छलं भिद्यते– तस्याप्यर्थान्तरकल्पनयाऽविशेषात्, इहापि स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यते इति ॥ १५ ॥

## न– तदर्थान्तरभावात् ॥ १६ ॥

न वाक्छलमेवोपचारच्छलम्– तस्यार्थसद्भावप्रतिषेधस्याऽर्थान्तरभावात् । कुतः ?, अर्थान्तरकल्पनात्= अन्या ह्यर्थान्तरकल्पना अन्योऽर्थसद्भावप्रतिषेध इति ॥ १६ ॥

## अविशेषे वा किंचित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते–किंचित्साधर्म्यात्. यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यऽभ्यनुज्ञातं प्रतिषेधति– विद्यते हि किंचित्साधर्म्यं द्वयोरपीति । अथ द्वित्वं किंचित्साधर्म्यान्न निवर्तते ? त्रित्वमपि न निवर्त्स्यति ॥ १७ ॥

---

वाक्छलोपचारच्छलयोरभेदमाशङ्कते– वागिति, उपचारच्छलं वाक्छलमेव न तु वाक्छलातिरिक्तम्– तदविशेषात्= उपचारच्छले वाक्छलापेक्षया विशेषाभावात् यथा 'नवकम्बलः' इत्यत्र नवसंख्याककम्बललक्षणस्यार्थान्तरस्य कल्पनेन दोषापत्तिस्तथैव 'मञ्चाः' इत्यत्र मञ्चलक्षणस्यार्थान्तरस्य कल्पनेन दोषापत्तिरिति वाक्छलोपचारच्छलयोरविशेषादैक्यमेव न भेद इति सूत्रार्थः । व्याचष्टे– नेति । भेदाभावे हेतुमाह– तस्येति, तस्य= उपचारच्छलस्यापि अविशेषात्= वाक्छलापेक्षया विशेषाभावादित्यर्थः । उक्तं विशदयति– इहापीति, यथा वाक्छलेऽर्थान्तरं कल्पयित्वा प्रतिषिध्यते– न नव कम्बला इति तथेहापि= उपचारच्छलेपि मञ्चशब्दः स्थान्यर्थः= मञ्चस्थपुरुषपरो गुणशब्दः= लाक्षणिकोस्ति तं स्थानार्थः= शक्यमञ्चपरः प्रधानशब्दः= शक्त इति कल्पयित्वा= मञ्चशब्दस्य मञ्चलक्षणं शक्यार्थमाश्रित्य क्रोशनकर्तृत्वं प्रतिषिध्यते तथा चार्थान्तरकल्पनमुभयत्र समानमेवेति वाक्छलोपचारच्छलयोरभेद एवेत्यर्थः ॥ १५ ॥

उक्ताभेदं निराचष्टे– नेति, वाक्छलोपचारच्छलयोरभेदो नास्ति– कारणभेदात्. वाक्छलेऽर्थान्तरकल्पनम् उपचारच्छले चार्थसद्भावप्रतिषेध इति तत्= तस्य= अर्थसद्भावप्रतिषेधस्य अर्थान्तरकल्पनापेक्षया अर्थान्तरभावात्= भिन्नत्वादिति सूत्रान्वयः । व्याचष्टे– नेति, हेतुमाह– तस्येति, अर्थान्तरभावात्= अर्थान्तरकल्पनापेक्षया भिन्नत्वादित्यर्थः । भेदप्रतियोगिनं जिज्ञासते– कुत इति, कस्मादर्थान्तरत्वम् ? इत्यर्थः । उत्तरमाह– अर्थान्तरेति, वाक्छले अर्थान्तरकल्पनात् उपचारच्छले चार्थान्तरकल्पनस्याभावादुभयोःछलयोर्भेदः सिद्ध इत्यर्थः । प्रघट्टकार्थमाह– अन्येति । यत्र शक्येनार्थान्तरेण शक्यार्थस्य लक्ष्येणार्थान्तरेण लक्ष्यार्थस्य वा प्रतिषेधस्तत्र वाक्छलं यत्र च शक्यार्थेन लक्ष्यार्थस्य लक्ष्यार्थेन वा शक्यार्थस्य प्रतिषेधस्तत्रोपचारच्छलमितिविवेकस्तदेतदुपचारच्छलवृत्त्या स्पष्टम् ॥ १६ ॥

विपक्षे बाधकमाह– अविशेषे इति, वाक्छलोपचारच्छलयोरुक्तरीत्या किंचित्साधर्म्यात्= अर्थान्तरकल्पनामात्रप्रयुक्तसाधर्म्यादविशेषे= अभेदे हि त्रयाणामपि छलानां किंचित्साधर्म्यं संभवत्येव तस्माच्च साधर्म्यात् त्रयाणामपि छलानामैक्यं स्यादिति एकच्छलप्रसङ्गः= एकमेव छलं स्याद् न तु द्वे अपीति सूत्रान्वयः । व्याचष्टे– छलस्येति, वाक्छलसामान्यच्छलयोः स्वीकारेण छलस्य द्वित्वम्= भेदद्वयमभ्यनुज्ञाय= स्वीकृत्य उपचारच्छलाऽस्वीकारेण छलस्य त्रित्वम्= भेदत्रयं प्रतिषिध्यते त्वया । त्रित्वप्रतिषेधे हेतुमाह– किंचिदिति, किंचित्साधर्म्यात्= अर्थान्तरकल्पनाप्रयुक्तसाधर्म्यात् । त्रित्वप्रति-

अत ऊर्ध्वम्—

## साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः, स च प्रसङ्गः= साधर्म्यवैधर्म्याभ्यां प्रत्यवास्थानम्= उपालम्भः= प्रतिषेध इति । उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः इत्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्. उदाहरणवैधर्म्यात् साध्यसाधनं हेतुः इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥ १८ ॥

## विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

---

षेधे बाधकमाह– यथेति, हेतुः= किंचित्साधर्म्यादितिहेतुः, यथा– वाक्छलोपचारच्छलयोरभेदः किंचित्साधर्म्यात् इत्येवं त्रित्वं प्रतिषेधति तथा–त्रयाणामपि छलानामभेदः किंचित्साधर्म्यात् इत्येवं द्वित्वमपि स्वीकृतं प्रतिषेधति= प्रतिषेधेत् तथा च छलैक्यमेव स्यान्न तु छलद्वित्वमपीत्यर्थः, द्वित्वप्रतिषेधे हेतुमाह– विद्यते इति, द्वयोः= वाक्छलसामान्यच्छलयोरपि किंचित्साधर्म्यम्= अर्थविकल्पोपपत्तिप्रयुक्तं साधर्म्यं विद्यते एव अर्थविकल्पोपपत्तिर्हि छलसामान्यलक्षणोक्तत्वात् त्रिष्वपि छलेष्वनुस्यूतास्तीति तादृशसाधर्म्यात् छलैक्यमेवस्यात् । विपक्षेबाधकमाह– अथेति, यदि किंचित्साधर्म्यात्= अर्थविकल्पोपपत्तिप्रयुक्तसाधर्म्येपि द्वित्वं न निवर्तते= वाक्छलसामान्यच्छलेतिभेदद्वयं स्वीक्रियते तदा किंचित्साधर्म्येपि= वाक्छलोपचारच्छलयोरर्थान्तरकल्पनाप्रयुक्तसाधर्म्येपि त्रित्वमपि न निवर्त्स्यतीतिछलस्य भेदत्रयमुपपन्नमित्यर्थः ॥ १७ ॥

जातिलक्षणमवतारयति– अत इति, जातिर्लक्षणीयेतिशेषः । साधर्म्येति– वादिनोदाहरणसाधर्म्येण= अन्वयव्याप्त्या साध्यसाधने कृते प्रतिवादिना यत्तत्र वैधर्म्येण= व्यतिरेकव्याप्त्या प्रत्यवस्थानम्= विप्रतिपत्तिः= साध्यानुपपत्तिप्रदर्शनं सा जातिर्यथा 'अनित्यः शब्दः कृतकत्वाद् घटवद् व्यतिरेकेण व्योमवत्' इत्युक्ते 'यदि नित्याकाशवैधर्म्यादनित्यः स्यात् शब्दस्तदाकाशेनाऽमूर्तत्वसाधर्म्यान्नित्यः किं न स्यात्' इत्येवं जातिर्वक्तव्या, तथा वादिनोदाहरणवैधर्म्येण= व्यतिरेकव्याप्त्या साध्यसाधने कृते यत्तत्र प्रतिवादिना उदाहरणसाधर्म्येण प्रत्यवस्थानं सा जातिर्यथा 'अनित्यः शब्दः कृतकत्वाद् घटवद् यन्न कृतकं तन्नानित्यं यथाकाशः' इत्युक्ते 'यद्यनित्यघटसाधर्म्यादनित्यः स्याच्छब्दस्तदाऽमूर्तत्वलक्षणादनित्यघटवैधर्म्यान्नित्यः किं न स्यात्' इत्येवं जातिर्वक्तव्या तदेतद् वृत्तौ स्पष्टमितिसूत्रार्थः । व्याचष्टे– प्रयुक्ते इति, साध्यसाधनार्थं प्रयुक्ते । प्रसङ्गः= आपत्तिः= स्वसाध्यानुपपत्तिरितियावत् । उक्तप्रसङ्गस्य स्वरूपमाह– स चेति, प्रत्यवस्थानपदार्थमाह– उपालम्भ इति, उपालम्भस्वरूपमप्याह– प्रतिषेध इति, साध्यप्रतिषेधो जातिरित्यर्थः । विभागमाह– उदाहरणेति, यत्रोदाहरणसाधर्म्याद् हेतुः साध्यसाधको भवति तत्रोदाहरवैधर्म्येण प्रत्यवस्थानम्= साध्यानुपपत्तिप्रदर्शनं कर्तव्यं यत्र चोदाहरणवैधर्म्याद् हेतुः साध्यसाधको भवति तत्रोदाहरणसाधर्म्येण प्रत्यवस्थानं कर्तव्यम् एतादृशं प्रत्यवस्थानमेव जातिरित्यन्वयः । जातिप्रभेदाश्च सोदाहरणाः पञ्चमाध्यायारम्भे द्रष्टव्या इदं तु सामान्यलक्षणमात्रम् । जातिशब्दस्य व्युत्पत्तिमाह– प्रत्यनीकेति, प्रत्यनीकभावात्= विरोधात्= वाद्याश्रितसाध्यसाधनप्रकारापेक्षया विरुद्धप्रकाराज्जायमानोर्थः= साध्याक्षेपः= साध्यप्रतिषेध एव जातिरित्यन्वयः, जायते इति जातिरित्यर्थः । जातिर्व्याप्तिनिरपेक्षेति विश्वनाथभट्टाः ॥ १८ ॥

निग्रहस्थानलक्षणमाह– विप्रतीति, विप्रतिपत्तिः= विपरीतं ज्ञानं यथाऽहेतौ हेतुत्वज्ञानम्. अप्रतिपत्तिः= अज्ञानं च निग्रहस्थानं विशेषस्तु पञ्चमाध्यायद्वितीयाह्निके द्रष्टव्य इति सूत्रान्वयः । व्याचष्टे–

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः, विप्रतिपद्यमानः पराजयं प्राप्नोति निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषयेप्यऽप्रारम्भः= परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति । असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥

किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ सिद्धान्तवद्भेदः ? इत्यतः आह—

## तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तस्य= साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्, तयोश्च विप्रतिपत्त्यऽप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम् । नानाकल्पो विकल्पः विविधो वा कल्पो विकल्पः । तत्र— अननुभाषणमऽज्ञानमऽप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यऽप्रतिपत्तिर्निग्रहस्थानं शेषस्तु विप्रतिपत्तिरिति ॥ २० ॥

---

विपरीतेति । फलमाह— विप्रतीति, विप्रतिपद्यमानः= उक्त विप्रतिपत्तिविशिष्टः । पराजयप्राप्तौ हेतुमाह— निग्रहेति, पराजयप्राप्तिः= पराजयप्राप्तिकारणमित्यर्थः । विप्रतिपत्तिश्चोक्ता निग्रहस्थानमेवेत्युक्तविप्रतिपत्तिविशिष्टः पराजयं प्राप्नोतीतिसारः । अप्रतिपत्तिपदार्थमाह— अप्रतीति, आरम्भविषयेपि= वाद्युक्तस्य खण्डनयोग्यतायामपि यः खण्डनस्याऽप्रारम्भः स एवाप्रतिपत्तिः । उक्तं विशदयति— परेणेति, यत् परेण स्थापितम्= साधितं परो न प्रतिषेधति= न खण्डयति सोऽप्रारम्भस्तथा परेण स्वपक्षे प्रदर्शितं प्रतिषेधम्= खण्डनं नोद्धरति= न प्रत्याचष्टे सोप्यऽप्रारम्भः एतादृशोऽप्रारम्भ एवाऽप्रतिपत्तिरित्यन्वयः । द्विविधमेव निग्रहस्थानमिति न भ्रमितव्यमित्याह— असमासादिति, 'विप्रतिपत्त्यप्रतिपत्त्यौ' इत्येवं समासे कृते द्विवचनसार्थक्यान्निग्रहस्थानस्य द्वैविध्यमापद्येत एकवचनं तु साधुत्वार्थमप्युपन्नमिति न द्वैविध्यापत्तिः, वस्तुतस्तु विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानकारणं तत्प्रस्तारान्निग्रहस्थानबहुत्वं भवति जातिबहुत्ववदित्यन्वयः ॥ १९ ॥

अग्रिमसूत्रमवतारयति— किं पुनरिति, अत्र जातिनिग्रहस्थानयोः परस्परं भेदाभेदयोर्जिज्ञासा नास्ति किं त्वऽवान्तरभेदतदभावयोरेवेति विभाव्यम्, तथा हि— जातिनिग्रहस्थानयोः किं दृष्टान्तवदऽभेदः ? किं वा सिद्धान्तवद्भेदः ? अर्थात् यथा दृष्टान्तस्यैक एव प्रकारोऽस्ति न तैऽवान्तरभेदास्तथा जातिनिग्रहस्थानयोरपि किमेकैक एव प्रकारः किं वा यथा सिद्धान्तस्य सर्वतन्त्रप्रतितन्त्रादिलक्षणा अवान्तरभेदा बहवस्तथा जातिनिग्रहस्थानयोरपि अवान्तरभेदा बहव इत्याशङ्क्य जातिनिग्रहस्थानयोरपि सिद्धान्तवदऽवान्तरभेदान् सूत्रकारः प्रतिजानीते— तद्विकल्पादिति, यद्यपि उदाहरणमेव दृष्टान्त उदाहरणस्य च साधर्म्यवैधर्म्याभ्यां द्वैविध्यमुक्तमिति दृष्टान्तस्यापि द्वैविध्यं संभवति तथापि दृष्टान्तलक्षणे दृष्टान्तस्यानेकप्रकारत्वं नोक्तं किं चोदाहरणमवयवविशेष इति दृष्टान्तोदाहरणयोर्भेद इतिविज्ञेयम् ।

तद्विकल्पादिति— तत्= तस्य= साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात्= बाहुल्याज्जातिबहुत्वम्= जातेर्बहवः= चतुर्विंशतिसंख्याकाः प्रकारा भवन्ति तथा तत्= तयोः विप्रतिपत्त्यऽप्रतिपत्त्योर्विकल्पात्= बाहुल्यान्निग्रहस्थानबहुत्वम्= निग्रहस्थानस्य बहवः= द्वाविंशतिसंख्याकाः प्रकारा भवन्तीति सूत्रान्वयः । व्याचष्टे— तस्येति, विकल्पात्= बहुत्वात् । निग्रहस्थानपक्षे तत्पदार्थमाह— तयोरिति । विकल्पपदार्थमाह— नानेति, अत्र "नानाकल्प इति स्वरूपतः, विविध इति प्रकारतः" इति तात्पर्यटीका । निग्रहस्थानेषु विप्रतिपत्त्यप्रतिपत्त्योर्विभागमाह— तत्रेति, अननुभाषणादिषु षट्सु निग्रहस्थानेषु अप्रतिपत्तिर्निग्रहस्थानम्= निग्रहस्थानकारणं किं वा पराजयकारणं शेषः= शेषेषु= अन्येषु प्रतिज्ञाहान्यादिनिग्रहस्थानेषु विप्रतिपत्तिर्निग्रहस्थानम्= निग्रहस्थानकारणं किं वा पराजयकारणमित्यर्थः ॥२०॥

**इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं लक्षिताः, यथालक्षणं परीक्षिष्यन्ते इति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥**

**॥ इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयमाह्निकं समाप्तम् ॥**

**प्रथमाध्यायश्च समाप्तः ॥**

---

प्रथमाध्यायमुपसंहरति– इमे इति, प्रथमसूत्रेण उद्दिष्टास्तदग्रे यथोद्देशम्= उद्देशक्रमेण लक्षिताः= लक्षणेन प्रतिपादिता इत अग्रे द्वितीयाध्यायमारभ्य इमे प्रमाणादयः पदार्थाः परीक्षिष्यन्ते इतिहेतोरस्य न्यायशास्त्रस्य प्रवृत्तिरुद्देशलक्षणपरीक्षाभिस्त्रिविधा वेदितव्येत्यन्वयः ॥ श्रीः ॥

**॥ इति न्यायभाष्यप्रथमाध्यायस्य प्रसन्नपदाख्या व्याख्या समाप्ता ॥**

अथ
सटीके

## न्यायभाष्ये द्वितीयाध्यायस्य प्रथममाह्निकम्

अत ऊर्ध्वं प्रमाणादिपरीक्षा सा च "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः १-१-४१" इत्यग्रे विमर्श एव परीक्ष्यते—

### समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥

समानस्य धर्मस्याऽध्यवसायात् संशयो न धर्ममात्रात्, अथ वा 'समानमनयोर्धर्ममुपलभे' इति धर्मधर्मिग्रहणे संशयाभाव इति, अथ वा समानधर्माध्यवसायादर्थान्तरभूते धर्मिणि

अथ

## द्वितीयाध्यायप्रसन्नपदा

देववन्द्यं हयग्रीवं प्रणम्य वरदायकम् ।
द्वितीयाध्यायटीकेयं न्यायभाष्यस्य तन्यते ॥

उद्दिष्टानां लक्षितानां च प्रमाणादीनां परीक्षणार्थं द्वितीयाध्यायमवतारयति— अत इति, अतः= प्रथमाध्यायाद् ऊर्ध्वम्= अनन्तरम्, किं वा लक्षणानन्तरमित्यर्थः । सा च परीक्षा विमृश्य पक्षप्रतिपक्षाभ्यां यदर्थावधारणं तद्रूपेति प्रथमं विमर्शः= संशय एव परीक्ष्यते— विमर्शस्य प्रथमभावित्वादित्यन्वयः । यद्यप्युद्देशक्रमेण प्रथमं प्रमाणपरीक्षा प्राप्नोति तथापि प्रमाणप्रवृत्तेरपि प्रायः संशयपूर्वकत्वादर्थक्रमेण संशयपरीक्षैव प्रथमं युक्ता— पाठक्रमापेक्षयाऽर्थक्रमस्य प्रबलत्वादित्याशयः ।

समानेति— अत्र संशयलक्षणसूत्रभाष्यं प्रथमं द्रष्टव्यम्, समानधर्मस्य= सदृशधर्मस्याध्यवसायाद् यः संशयः प्रथमाध्याये लक्षितः स न संभवति— सदृशयोरपि पदार्थयोर्धर्मा भिन्ना एव भवन्ति न हि स्थाणुधर्माः पुरुषे पुरुषधर्मा वा स्थाणौ संभवन्ति येन संशयः संभवेत् तद्धर्माध्यवसायेन च तस्मिन् संशयासंभवात्, अनेकस्य धर्मोऽनेकधर्मो यथा कृतकत्वं शब्दस्य समानजातीयानां गन्धादिगुणानामसमानजातीयानां घटादिद्रव्याणां च धर्मस्तदध्यवसायादपि संशयो न संभवति— न हि कृतकत्वधर्माध्यवसायात् शब्दो द्रव्यं वा गुणो वेति संशयो जायते, द्वयोः स्थाणुपुरुषयोरन्यतरस्य धर्माध्यवसायात्= असाधारणधर्माध्यवसायादपि संशयो न संभवति— असाधारणधर्माध्यवसायस्य निश्चयहेतुत्वेन प्रत्युत संशयप्रतिकूलत्वात् तथा च प्रथमाध्याये यः संशय उद्दिष्टो लक्षितश्च "समानानेकधर्मोपपत्तेः २३" इत्यादिना स नोपपद्यते इति सूत्रान्वयः । अस्य प्रत्याख्यानं च पञ्चसूत्रमारभ्य वक्ष्यति । व्याचष्टे— समानस्येति, समानस्य= उभयसाधारणस्य धर्मस्याऽध्यवसायात्= ज्ञानात् निश्चयाद्वा संशयः संभवति न धर्ममात्रात्= समानधर्मसत्त्वमात्रात् समानधर्मो हि ज्ञातः सन् संशयजनको भवति न तु स्वरूपसत्तामात्रेणेत्यर्थः तथा च समानधर्मोपपत्तेर्यत् संशयकारणत्वमुक्तं तन्नोपपद्यते इत्याशयः । नन्वस्तु समानधर्माध्यवसायादेव संशय इत्याशङ्क्य वर्णकान्तरमाह— अथ वेति, अनयोः स्थाणुपुरुषयोः समानं धर्ममारोहादिकमुपलभे इति ज्ञानमेव समानधर्माध्यवसायस्तदत्र धर्मधर्मिणोर्ग्रहणं जातं धर्मधर्मिग्रहणे च जाते संशयाभावः= संशयानुपपत्तिरित्यर्थः । ननु धर्मधर्मिग्रहणे जातेपि धर्मस्योभयसाधारणत्वज्ञानात् कथं न संशयः स्यात्? इत्याशङ्क्य वर्णकान्तरमाह— अथ वेति, समानधर्मस्य= साधारणधर्मविशिष्टधर्मिणोऽध्यवसायादपि पदार्थान्तरभूते धर्मिणि

संशयोऽनुपपन्नः- न जातु रूपस्यार्थान्तरभूतस्याऽध्यवसायादर्थान्तरभूते स्पर्शे संशय इति, अथ वा नाऽध्यवसायात्=अर्थावधारणादऽनवधारणज्ञानं संशय उपपद्यते- कार्यकारणयोः सारूप्याभवादिति। एतेन "अनेकधर्माध्यवसायात्" इति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति- ततो ह्यन्यतरावधारणमेवेति ॥ १ ॥

## विप्रतिपत्त्यऽव्यवस्थाध्यवसायाच्च ॥ २ ॥

न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः, किं तर्हि ?. विप्रतिपत्तिमुपलभमानस्य संशयः, एवमव्यवस्थायामपीति। अथ वा 'अस्त्यात्मा' इत्येके 'नास्त्यात्मा' इत्यपरे मन्यन्ते इत्युपलब्धेः कथं संशयः स्यात्? इति। तथोपलब्धिरव्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यते इति ॥ २ ॥

---

संशयो न संभवति, उदाहरति- नेति। किं वा समानस्य धर्मस्याध्यवसायादपि साम्यानुयोगिनि धर्मे एव संभवति संशयो न तु धर्मिणि= धर्मिविषयक इत्यर्थः। नन्वेवमपि संशयस्वरूपमुपपन्नमित्याशङ्कयाह- अथ वेति, अर्थावधारणात्= पदार्थनिश्चयात् अनिश्चयात्मकः संशयो नोपपद्यते, अत्र हेतुमाह- कार्येति, कार्यकारणयोः= संशयावधारणयोः सारूप्यस्य= साम्यस्याभावात्= परस्परं विरुद्धत्वात् कार्यकारणभावश्च सरूपयोरेव भवति. विरोधश्चात्र अवधारणत्वानवधारणत्वरूपाभ्यां विज्ञेयः। वस्तुतस्तु सूत्रार्थमज्ञात्वैवायं भाष्यकारः सूत्रव्याख्याने प्रवृत्तः अत एवानेकानऽर्थविकल्पान् करोति इत्यनुसंधेयम् एवं बहुत्र प्रमाद उपलभ्यते। उक्तमन्यत्रातिदिशति- एतेनेति, अनेकधर्ममात्रात् 'अनेकं धर्ममनयोरुपलभे' इति धर्मधर्मिग्रहणे च अनेकधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नस्तथाऽनेकधर्माध्यवसायादनवधारणात्मकः संशयोऽनुपपन्न इत्येवमुक्तवत् प्रस्तारः कर्तव्य इत्यर्थः। तृतीयं व्याचष्टे- अन्यतरेति, ततः= अन्यतरधर्माध्यवसायादन्यतरधर्मिनिश्चय एव संभवति न संशय इति ॥ १ ॥

विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थायाश्च यत्संशयलक्षणे संशयकारणत्वमुक्तं तत्रानुपपत्तिमाह- विप्रतीति, "न संशयः" इतिपूर्वसूत्रादनुवर्तनीयम्, विप्रतिपत्त्यध्यवसायादपि संशयो न संभवति- विप्रतिपत्तिर्हि 'अस्त्यात्मेत्येके नास्त्यात्मेत्यन्ये' इत्यादिरूपो विरोध एव तत्रैतादृशविप्रतिपत्तेरध्यवसायादपि संशयो नोपपद्यते- व्यवस्थाज्ञानसंभवात्. न ह्युभयोर्वादिप्रतिवादिनोः परस्परं मतविरोधेपि तटस्थस्य वा वादिप्रतिवादिनोर्वा संशयः संभवति- स्वाचार्यवाक्यानुकूल्येनैकतरपक्षस्यावधारितत्वात्। अव्यवस्थायाः= उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्चाध्यवसायादपि संशयो न संभवति यत उपलब्ध्यव्यवस्थायाम्- 'सदप्युपलभ्यतेऽसदप्युपलभ्यते इत्युपलभ्यमाने सत्त्वासत्त्वयोः संशयो जायते' इत्युदाहृतं तत्र यदुपलभ्यते तत् सदेव भवति मरुमरीचिकास्वपि जलस्य पञ्चीकरणप्रक्रियया सत्त्वात् किं वा तत्र प्रभाकरमतेन जलस्य स्मर्यमाणत्वादुपलब्धिरेव नास्ति येनाऽसदुपलब्धिः सिध्येत् ततश्चोपलभ्यमाने जलादावसत्त्वसंशयः स्यादिति नोपलब्ध्यव्यवस्थाध्यवसायात् संशयः संभवति। अनुपलब्ध्यव्यवस्थाध्यवसायादपि संशयो नोपपद्यते यतोऽनुपलब्ध्यव्यवस्थायाम्- 'सतोप्यनुपलब्धिर्भवति असतोप्यनुपलब्धिर्भवतीति अनुपलभ्यमानेपि सत्त्वासत्त्वयोः संशयो जायते' इत्युदाहृतं तत्र अन्तर्हितमनुपलभ्यमानमपि व्यवधानादिप्रतिबन्धकवशान्नोपलभ्यते इति सदेव. यच्चासत्त्वादेवानुपलभ्यमानं तदसदेवेति निश्चयसंभवान्न विदुषोनुपलभ्यमाने सत्त्वासत्त्वयोः संशयो जायते अविदुषां चात्राधिकार एव नास्ति तथा चानुपलब्ध्यव्यवस्थाध्यवसायादपि संशयो नोपपद्यते इति सूत्रान्वयः। व्याचष्टे- नेति। संशयकारणं जिज्ञासते- किमिति। उत्तरमाह- विप्रतिपत्तिमिति। उक्तमन्यत्रातिदिशति- एवमिति, विप्रतिपत्तिरव्यवस्था च न स्वरूपसती संशयकारणं किं तु ज्ञाता सतीत्यर्थः। नन्वस्तु विप्रतिपत्तेरुक्ताव्यवस्थायाश्च ज्ञानादेव संशय इति संशयापत्तिमाशङ्कय पक्षान्तरमाह- अथ वेति, इत्युपलब्धेः=

## विप्रतिपत्तौ च संप्रतिपत्तेः ॥ ३ ॥

यां च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते सा संप्रतिपत्तिः– सा हि द्वयोः प्रत्यनीकधर्मविषया. तत्र यदि विप्रत्तिपत्तेः संशयः ? संप्रतिपत्तेरेव संशय इति ॥ ३ ॥

## अव्यवस्थात्मनि व्यवस्थितत्वाचाऽव्यवस्थायाः ॥ ४ ॥

न संशयः, यदि तावदियमव्यवस्था आत्मन्येव व्यवस्थिता ? व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः, अथाऽव्यवस्थाऽऽत्मनि न व्यवस्थिता ? एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति ॥ ४ ॥

---

आत्मादेः सत्त्वासत्त्वयोर्मतभेदेन व्यवस्थयोपलब्धेः संशयो नोपपद्यते इत्यर्थः । अव्यवस्थाध्यवसायादपि संशयानुपपत्तिं व्याचष्टे– तथेति, कचिदुपलब्धिरव्यवस्थिता कचिचानुपलब्धिरव्यवस्थितेति विभागेन अध्यवसिते= अव्यवस्थाध्यवसाये जाते संशयो नोपपद्यते– अध्यवसायस्य संशयविरुद्धत्वादित्यन्वयः, अत्र "विभागेनाध्यवसिते" इत्यत्र "विभागो नाध्यवसिते" इति पाठान्तरं तथा च उपलब्धिरव्यवस्थिता अनुपलब्धिश्चाव्यवस्थिता इतिविभागः पदार्थेऽध्यवसिते सति न संभवतीति संशयो नोपपद्यते, पदार्थाध्यवसाये जाते सत उपलब्धिरसतश्चानुपलब्धिरिति निश्चयसंभवेन उपलब्ध्यनुपलब्ध्योरव्यवस्थाया विभागो नोपपद्यते येन संशय उपपद्येतेत्यन्वयः । वस्तुतस्त्वस्पष्टार्थमिदं वाक्यमित्यलम् ॥ २ ॥

विप्रतिपत्तेः संशयहेतुत्वे दोषान्तरमाह किं वा विप्रतिपत्तिमुपलभमानस्यापि संशयो नोपपद्यते इत्याह– विप्रतिपत्ताविति, 'अस्त्यात्मा नास्त्यात्मा' इत्यादिविप्रतिपत्तौ सत्यामपि संप्रतिपत्तेः= निश्चयस्य सत्त्वादेव संशयो नोपपद्यते इत्यन्वयः, वादार्थे विप्रतिपत्तावुपस्थितायामपि कस्यचित् 'अस्त्यात्मा' इति संप्रतिपत्तिः कस्यचिच्च नास्त्यात्मा इति संप्रतिपत्तिर्भवत्येव संप्रतिपत्तौ च सत्यां संशयो नोपपद्यते– परस्परविरोधादिति सूत्रार्थः । व्याचष्टे– यामिति, भवान् संशयस्थापकः संशयकारणत्वेन यां विप्रतिपत्तिं निर्दिशति सा विप्रतिपत्तिः संप्रतिपत्तिरेव– एकस्य पक्षस्य संप्रतिपन्नत्वादेवेत्यर्थः । हेतुमाह– सा हीति, सा विप्रतिपत्तिर्हि द्वयोः= वादिप्रतिवादिनोः प्रत्यनीकधर्मविषया= परस्परविरुद्धधर्मविषया= आत्मनः सत्त्वासत्त्व[illegible]यास्ति तत्रैकेन सत्त्वमपरेण चासत्त्वं संप्रतिपन्नमेवेति विप्रतिपत्तिः संप्रतिपत्तिरेव तत्र यदि विप्रतिपत्त्या संशयस्तदा संप्रतिपत्त्यैव संशय इति प्राप्तम्– उक्तरीत्या विप्रतिपत्तिसंप्रतिपत्त्योरभेदात् संप्रतिपत्त्या च संशयो नोपपद्यते विरोधात् तथा च विप्रतिपत्त्यापि संशयो नोपपद्यते– विप्रतिपत्तेः संप्रतिपत्तिरूपत्वादित्यन्वयः ॥ ३ ॥

उपलब्ध्यनुपलब्ध्योरव्यवस्थातः संशयानुपपत्तिमाह– अव्यवस्थेति, अव्यवस्थाया अव्यवस्थात्मनि= स्वस्वरूपे व्यवस्थितत्वादुक्ताव्यवस्थयापि संशयो नोपपद्यते इत्यन्वयः, उपलब्ध्यव्यवस्थाऽनुपलब्ध्यव्यवस्था च स्वात्मनि व्यवस्थितास्ति न त्वव्यवस्थिता येन संशयापत्तिः स्यात्, उपलब्ध्यव्यवस्था उपलब्धौ व्यवस्थिता अनुपलब्ध्यव्यवस्था चानुपलब्धौ व्यवस्थिता न तु पदार्थे साऽव्यवस्था व्यवस्थितास्ति येन पदार्थे संशयः स्यादित्यर्थः । किं वा यथा पूर्वसूत्रे विप्रतिपत्तिसंप्रतिपत्त्योरभेदः प्रदर्शितस्तथात्र व्यवस्थाया अव्यवस्थायाश्चाभेदः प्रदर्श्यते– अव्यवस्थायाः स्वात्मनि स्वरूपेण वा व्यवस्थितत्वात् अव्यवस्थाया अपि अव्यवस्थितत्वाभावेन व्यवस्थारूपत्वात् तत्र व्यवस्थातस्तु संशयो नोपपद्यते– विरोधादेव, यदा हि व्यवस्थातः संशयो नोपपद्यते तदाऽव्यवस्थातोपि संशयो नोपपद्यते– उक्तरीत्या व्यवस्थाऽव्यवस्थयोरभेदादित्यर्थः । व्याचष्टे– नेति, न संशय इत्यनुवर्तनीयं तथा चाव्यवस्थायाः स्वात्मनि व्यवस्थितत्वादेव तया न संशय उपपद्यते इत्यन्वयः । उक्ताव्यवस्था स्वात्मनि व्यवस्थिता वाऽनवस्थिता वेति द्विधा विकल्प्य प्रथमपक्षे संशयानुपपत्तिमाह– यदीति, अव्यवस्था आत्मनि= स्वात्मनि= स्वरूपे व्यवस्थानात्= व्यवस्थितत्वादव्यवस्थारूपा न भवतीत्यनुपपन्नः संशयः– तयाऽव्यव-

## तथाऽत्यन्तसंशयः- तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते तेन खल्वत्यन्तसंशयः प्रसज्यते- समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः- नायमतद्धर्मा धर्मी विमृश्यमानो गृह्यते सततं तु तद्धर्मा भवतीति ॥ ५ ॥

अस्य प्रतिषेधप्रपञ्चस्य संक्षेपेणोद्धारः—

## यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नाऽसंशयो नाऽत्यन्तसंशयो वा ॥ ६ ॥

न संशयानुत्पत्तिः संशयानुच्छेदश्च प्रसज्यते, कथम्?. यत्तावत्- 'समानधर्माध्यवसायः संशयहतुः न समानधर्ममात्रमिति,' एवमेतत् । कस्मादेवं नोच्यते? इति, "विशेषापेक्षः"

---

स्थाया एव संशयजनकत्वस्योक्तत्वादित्यन्वयः, द्वितीयपक्षे संशयानुपपत्तिमाह- अथेति, यदि चाव्यवस्था स्वात्मनि न व्यवस्थिता तदा अतादात्म्यात्= व्यवस्थितत्वाभावादेवाऽव्यवस्था न संभवति यतः पदार्थस्य स्वरूपव्यवस्थायामेव स्वरूपसिद्धिर्भवतीति अव्यवस्थाया अपि व्यवस्थायामेव स्वरूपसिद्धिः= अव्यवस्थात्वं संभवति न त्वव्यवस्थायामपीति अव्यवस्थाया अव्यवस्थितत्वेऽव्यवस्थास्वरूपसिद्ध्यऽभावादेव संशयाभावः= संशयानुपपत्तिः सिद्धा- अव्यवस्थास्वरूपे सिद्धे एव संशयापत्तिसंभवात् अव्यवस्थास्वरूपं च तदव्यवस्थानादेवासिद्धमित्याशयः ॥ ४ ॥

संययस्वीकारेऽत्यन्तसंशयापत्तिलक्षणं दोषमाह- तथेति, यथा संशयकारणानुपपत्तिस्तथा संशयस्वीकारे तद्धर्मसातत्योपपत्तेः= संशयकारणानुवृत्त्युपपत्तेरत्यन्तं संशयः स्यात्= संशयनिवृत्तिर्न स्यात्, पदार्थमात्रस्यानुवृत्तिः संभवतीति उक्तस्य समानधर्मोपपत्त्यादिलक्षणस्य संशयकारणस्यापि ज्ञानरूपत्वादनुवृत्तिः संभवति सति च कारणे कार्यावश्यंभावात् संशयानुच्छेदः प्राप्तः स च नेष्ट इति संशयो न स्वीकार्यस्तथा च संशयकारणासंभवेन तदनुवृत्त्यसंभवादत्यन्तसंशयापत्तिर्नास्तीति सूत्रार्थः । व्याचष्टे- येनेति, येन कल्पेन= प्रकारेण समानधर्मोपपत्तेः संशयो जायते इति भवान् मन्यते तेनैव कल्पेन समानधर्मज्ञानानुवृत्त्याऽत्यन्तसंशयः= संशयानुच्छेदः प्रसज्यते । अत्र हेतुमाह- समानेति । समानधर्मोपपत्त्यनुच्छेदे समानधर्मवैशिष्ट्यलक्षणं कारणमाह- नायमिति, अयं धर्मी= संशयविषयो विमृश्यमानः सन् अतद्धर्मा= समानधर्मरहितो न गृह्यते किं तु सततम्= सदा तद्धर्मा= समानधर्मविशिष्ट एव भवति तथा च समानधर्मविशिष्ट एव सदा गृह्यते समानधर्मविशिष्टज्ञानमेव संशयकारणं तदनुवृत्त्या हि संशयानुवृत्तिः प्राप्ता ततश्च संशयानुच्छेदः प्राप्तः स च नेष्ट इति संशयो न स्वीकार्यस्तथा च संशयकारणाभावेन तदनुवृत्तेरप्यसंभवात् संशयसातत्यापत्तिर्नस्यादित्यर्थः ॥ ५ ॥

एवं पञ्चभिः सूत्रैः प्रतिपादितस्य पूर्वपक्षस्य समाधानमारभते- अस्येति, प्रतिषेधस्य= संशयस्वरूपप्रतिषेधस्य, संक्षेपश्च सूत्रवाक्ये । यथोक्तेति- तद्विशेषापेक्षात्= अन्यतरस्वरूपनिर्णयाकाङ्क्षाविशिष्टाद् यथोक्ताध्यवसायात्= समानानेकधर्माध्यवसायात् संशयो जायते एव तदेवं संशये जाते उपपन्ने च नासंशयः= संशयाभावापत्तिर्नास्ति अत्यन्तसंशयापत्तिरपि च नास्ति- एकतरस्वरूपनिर्णयेन संशयोच्छेदसंभवादिति सूत्रार्थः, अन्यत्सर्वं संशयलक्षणसूत्रभाष्ये द्रष्टव्यम् । व्याचष्टे- नेति । संशयानुत्पत्तेः संशयानुच्छेदस्य च प्रसङ्गाभावकारणं जिज्ञासते- कथमिति । उत्तरमाह- यदिति, समानधर्माध्यवसायः संशयहेतुर्न तु समानधर्ममात्रमिति यदुक्तमत्रत्यप्रथमसूत्रभाष्ययोस्त्वया एवमेतत्= तद्युक्तमेवेत्यन्वयः, यदि समानधर्म एव संशयकारणं स्यात्तदा तदनुवृत्त्या संशयानुच्छेदापत्तिः स्यादपि न चैवमस्ति किं तु समानधर्माध्यवसायः संशयहेतुस्तत्र एकतरस्वरूपनिर्णयेन समानधर्माध्यवसायनिवृत्त्या संशय-

इतिवचनात् तत्सिद्धेः. विशेषस्यापेक्षा= आकाङ्क्षा सा चानुपलभ्यमाने विशेषे समर्था । न चोक्तम्– 'समानधर्मापेक्षः' इति । समाने च धर्मे कथमाकाङ्क्षा न भवेद् यद्ययमप्रत्यक्षः स्यात्, एतेन सामर्थ्येन विज्ञायते– 'समानधर्माध्यवसायात्' इति ।

उपपत्तिवचनाद्वा.

समानधर्मोपपत्तेरित्युच्यते. न चान्या सद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति, अनुपलभ्यमानसद्भावो हि समानो धर्मोऽविद्यमानवद् भवतीति ।

विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानं यथा लोके 'धूमेनाग्निरनुमीयते' इत्युक्ते 'धूमदर्शनेनाग्निरनुमीयते' इतिज्ञायते, कथम् ?. दृष्ट्वा हि धूममथाग्निमनुमिनोति नाऽदृष्ट्वा. न च वाक्ये दर्शनशब्दः श्रूयते. अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वं तेन मन्यामहे– विषयशब्देन विषयिणः प्रत्ययस्याभिधानं बोद्धाऽनुजानाति. एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति ।

---

निवृत्तिः संभवत्येव. स्वकारणात् समानधर्माध्यवसायात् निर्णयात्पूर्वं संशयोत्पत्तिरपि संभवतीत्यर्थः । स्वीकरोति– एवमिति, एतत्= उक्तम्, एवम्= युक्तमित्यर्थः । संशयलक्षणसूत्रे एवम्= अध्यवसायः स्पष्टः कथं नोक्त इति जिज्ञासते– कस्मादिति । उत्तरमाह– विशेषेति, संशयलक्षणे उक्तेन विशेषापेक्षशब्देनोक्ताध्यवसायस्य सिद्धिमुपपादयति– विशेषस्येति । आकाङ्क्षा= जिज्ञासा, सा च विशेषापेक्षा विशेषेनुपलभ्यमाने एव समर्था= उपपन्ना भवति न च विशेषोपलब्धावपि । विशेषानुलम्भे चार्थादेव संशयः प्राप्त इत्यर्थः । संशयानुच्छेदापत्त्यभावमाह– न चेति, यदि संशयलक्षणे 'समानधर्मापेक्षः= समानधर्मजन्यः संशयः' इत्युक्तं स्यात्तदा समानधर्मानुवृत्त्या संशयानुच्छेदः स्यादपि न चैवमुक्तम् । किं वा संशयस्य समानधर्मापेक्षत्वे समानधर्मानुवृत्त्या संशयानुवृत्तिः स्यादपि न चैवमुक्तं किं तु विशेषापेक्ष इत्युक्तम् अपेक्षिते च विशेषे विज्ञाते संशयोच्छेद उपपन्न इत्यर्थः । यदि समानो धर्मोऽप्रत्यक्षः स्यात्तदा समानधर्मस्याप्याकाङ्क्षा स्याद् न च भवतीति विज्ञायते संमानधर्मप्रत्यक्षं जातं तदेव संशयकारणं विशेषविज्ञानं च संशयनिवर्तकमिति संशयस्योत्पत्तिनिवृत्त्योरनुपपत्तिर्नास्तीत्याह– समाने चेति । एतेन सामर्थ्येन= समानधर्मप्रत्यक्षसत्तासामर्थ्येन समानधर्माध्यवसायात् संशयो जायते न तु समानधर्ममात्रादिति सिद्धं प्रकृतेऽध्यवसायस्य प्रत्यक्षरूपत्वादित्यर्थः ॥

एवं विशेषापेक्षशब्देनार्थात् प्रकृतार्थसिद्धिं प्रतिपाद्य संशयलक्षणघटकोपपत्तिशब्देन साक्षादपि प्रकृतार्थसिद्धिमुपपादयति– उपपत्तिवचनादिति, "समानानेकधर्मोपपत्तेः" इतिकथनात् समानानेकधर्माध्यवसाय एवोपलभ्यते– प्रकृते उपपत्तेरध्यवसायरूपत्वादित्यन्वयः । संक्षेपेणोक्तं स्ववाक्यं स्वयमेव व्याचष्टे– समानेति, इत्युच्यते= इत्युक्तम् । स्वाभिप्रायमाह– न चेति, समानधर्मस्य सद्भावसंवेदनमेव समानधर्मोपपत्तिरस्ति– स्वरूपान्तरासंभवात्. संवेदनं च प्रत्यक्षमेव तदेवाध्यवसायपदार्थ इत्युपपत्तिशब्दोऽत्राध्यवसायपर एवेत्यर्थः । उक्ते हेतुमाह– अनुपलभ्येति, अनुपलभ्यमानः सद्भावो यस्य तादृशः समानधर्मोऽसन्नेव स्यात्, उपलभ्यमानसद्भावश्चायं समानो धर्म इत्युपलभ्यमान इति प्राप्तं समानधर्मस्योपलब्धिरेवाध्यवसाय इति समानधर्माध्यवसायः सिद्धः ।

प्रकारान्तरेण समानधर्माध्यवसायसिद्धिमुपपादयति– विषयशब्देनेति, विषयवाचकशब्देन विषयिणः प्रत्ययस्य= तद्विषयकज्ञानस्याप्यभिधानम्= बोधो भवत्येव तथा चात्र समानधर्मशब्दः समानधर्मज्ञानपरः ज्ञानं चाध्यवसाय एवेतिरीत्यापि समानधर्माध्यवसाय उपलभ्यते इत्यर्थः । उदाहरति–– यथेति, इति ज्ञायते= इत्यर्थो भवतीत्यर्थः, 'धूमात्' इत्यत्र धूमशब्दः धूमज्ञानपरः । उक्तं जिज्ञासते–

यदुक्तम्– ' समानमनयोर्धर्ममुपलभे इति धर्मधर्मिग्रहणे संशयाभावः ' इति, पूर्वदृष्टविषयमेतत्= यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभे इति. कथं नु विशेषं पश्येयं येनाऽन्यतरमवधारयेयमिति, न चैतत् समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तते इति ।

यच्चोक्तम्– नार्थान्तराध्यवसायादन्यत्र संशय इति. यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति ।

यत्पुनरेतत्– कार्यकारणयोः सारूप्याभावादिति, कारणस्य भावाभावयोः कार्यस्य भावाभावौ कार्यकारणयोः सारूप्यम्= यस्योत्पादाद् यदुत्पद्यते यस्य चानुत्पादाद् यन्नोत्पद्यते

---

कथमिति । उत्तरमाह– दृष्ट्वेति अथ= धूमदर्शनानन्तरम्, दर्शनं च ज्ञानमेव. धूमे ह्यदृष्टेऽप्यनुमितिर्न भवति, वाक्ये= "धूमेनाग्निरनुमीयते" इतिवाक्ये । इदं वाक्यमपार्थकमेव किं न स्यात् ? इत्याशङ्क्याह– अनुजानातीति. स्वीकरोतीत्यर्थः । पर्यवसितमाह– तेनेति, वाक्यस्यार्थप्रत्यायकत्वाद् वाक्ये दर्शनशब्दाश्रवणाच्च विषयशब्दः= धूमशब्दो धूमज्ञानपरस्तथा प्रकृतेपि समानधर्मशब्दः समानधर्माध्यवसायपरः समानधर्माध्यवसायस्योपपत्तिश्च समानधर्मज्ञानादेवेत्यर्थः ।

अत्रत्यप्रथमसूत्रभाष्यगतं द्वितीयं संशयपरिहारवाक्यमनुवदति– यदुक्तमिति, वाक्यार्थस्तत्रैव द्रष्टव्यः, धर्मधर्मिणोर्ज्ञाने जाते संशयो नोपपद्यते इत्याशयः । तत् परिहरति– पूर्वदृष्टेति, एतत्= धर्मधर्मिग्रहणं समानधर्मग्रहणं वा पूर्वं दृष्टौ यौ स्थाणुपुरुषौ तद्विषयकं न चैतन्मात्रेण संशयाभाव उपपद्यते इत्यर्थः । संक्षेपेणोक्तं स्वयमेव व्याचष्टे– यावहमिति, अहं यावर्थौ= स्थाणुपुरुषौ पूर्वमद्राक्षं तयोः स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहादिकमुपलभे विशेषम्= पुरुषत्वव्याप्यं वा स्थाणुत्वव्याप्यं वा विशेषधर्मं नोपलभे येनान्यतरनिश्चयः स्यात् तदत्र कथं नु तादृशविशेषं पश्येयं येन विशेषधर्मदर्शनेन स्थाणुपुरुषयोरन्यतरमवधारयेयम् इत्यवधारणाकाङ्क्षा जायते प्रतीयते च तया चावधारणाभावः प्राप्तस्तेन च संशयः सिद्धः, एतत्= अयं पुरुषः अन्यतरावधारणाकाङ्क्षा वा एषा समानधर्मोपलब्धौ जातायां धर्मधर्मिग्रहणमात्रेण न निवर्तते किं त्वन्यतरावधारणेन निवर्तते तेन ज्ञायते समानधर्मोपलब्धौ सत्यां धर्मधर्मिज्ञानमात्रेण संशयाभावो नोपपद्यते किं तु संशय एवोपपद्यते, यदि धर्मधर्मिज्ञानमात्रेणान्यतरावधारणाकाङ्क्षा निवर्तेत तदा स्यादपि संशयाभावो न चैवमस्तीत्यन्वयः ॥

अत्रत्यप्रथमसूत्रभाष्यगतं तृतीयम् "समानधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नः" इत्येतत् संशयपरिहारवाक्यमनुवदति– यच्चोक्तमित्यादिना । अन्यत्र= अर्थान्तरे संशयोनुपपन्न इत्यर्थः विशेषस्तु तत्रैव द्रष्टव्यः । परिहरति– य इति, उपाददीत= वदेत्, एवम्= नार्थान्तरादित्येवम्, वाच्यः= उपालब्धव्यः । सूत्रकारेणार्थान्तराध्यवसायादर्थान्तरे संशयो नोक्तो यस्यैवं परिहारः स्यात् किं तु यद्गतसमानधर्मस्याध्यवसायस्तस्मिन्नेव संशय उक्तस्तस्य च नैवं प्रत्याख्यानं संभवतीत्यर्थः ।

अत्रत्यप्रथमसूत्रभाष्यगतं चतुर्थं संशयपरिहारवाक्यमनुवदति– यत्पुनरित्यादिना, समग्रं वाक्यं तदर्थश्च तत्रैव द्रष्टव्यौ, कार्यं संशयः कारणं च समानधर्माध्यवसायस्तयोः संशयत्वनिश्चयत्वलक्षणविरुद्धधर्माक्रान्तत्वेन सारूप्याभावः. कार्यकारणभावश्च सरूपयोरेव संभवतीति न समानधर्माध्यवसायात् संशय उपपद्यते इत्यर्थः । उक्तं परिहरन् सारूप्यपदार्थमाह– कारणस्येति, कारणसत्त्वे कार्यसत्त्वं कारणासत्त्वे च कार्यासत्त्वमित्येतौ यावन्वयव्यतिरेकौ तावेव कार्यकारणयोः सारूप्यं न तु समानधर्मवत्त्वम् । उक्तमेव व्याचष्टे– यस्येति, यस्य कारणस्य. उत्पादात्= सत्त्वात्. यत् कार्यम्, यस्य कारणस्य अनुत्पादात्= असत्त्वे सति. यत् कार्यम्, तत्= यस्येतिपदद्वयवाच्यम्, इतरत्= यदितिपदद्वयवाच्यम्, इत्येतत्= उक्तान्वयव्यतिरेकलक्षणमेव कार्यकारणयोः सारूप्यम् एतादृशं च सारूप्यं संशये संशयका-

तत् कारणं कार्यमितरद् इत्येतत्सारूप्यम् अस्ति च संशयकारणे संशये चैतदिति । एतेन अनेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति ।

यत्पुनरेतदुक्तम्— विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय इति, पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि= नोपलभे येनान्यतरमवधारयेयं तत्कोऽत्र विशेषः स्याद् येनैकतरमवधारयेयमिति संशयो विप्रतिपत्तिजनितोऽयं न शक्यो विप्रतिपत्तिसंप्रतिपत्तिमात्रेण निवर्तयितुमिति । एवम् उपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति ।

यत्पुनरेतत्— "विप्रतिपत्तौ च संप्रतिपत्तेः३" इति, विप्रतिपत्तिशब्दस्य योऽर्थः तदध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः= समानेऽधिकरणे व्याहरणे= समानधर्माध्यवसाये चास्त्येव— समानधर्माध्यवसाये सत्येव संशयसंभवादित्यन्वयः । उक्तमन्यत्रातिदिशति— एतेनेति, यदुक्तं प्रथमसूत्रभाष्येऽत्र 'अनेकधर्माध्यवसायादपि संशयो नोपपद्यते' इति सोऽपि प्रतिषेध उक्तरीत्या परिहृतो वेदितव्यस्तत्र यथोक्तरीत्या समानधर्माध्यवसायात् संशयः सिद्धस्तथानेकधर्माध्यवसायादपि संशयः सिद्ध एवेत्यर्थः, विशेषस्त्वस्य संशयलक्षणसूत्रभाष्ये द्रष्टव्यः । किं च समानधर्माध्यवसायात् समानधर्मे संशयासंभवेऽपि धर्मिणि संशयो नानुपपन्न इति विज्ञेयम् ।

संशयपरिहारपरं द्वितीयसूत्रं परिहर्तुमनुवदति— यत्पुनरिति, विप्रतीतिसूत्रार्थस्तु पूर्वं प्रतिपादितस्तत्रैव द्रष्टव्यः । उक्तं परिहरति— पृथगिति, पृथक्प्रवादयोः= स्वस्वसिद्धान्तेन वादे प्रवृत्तयोः पुरुषयोः किं वा सप्तम्यन्तं पदं भिन्नभिन्नशास्त्रयोरित्यर्थः व्याहतम्= परस्परविरुद्धम् अर्थम्= सिद्धान्तमुपलभे यथा— 'अस्त्यात्मेत्येके. नास्त्यात्मेत्यपरे' इति, आत्मास्ति वा नास्ति वेति विशेषम्= आत्मसत्त्वासत्त्वयोर्व्याप्यं धर्मं न जानामि= नोपलभे येन विशेषोपलम्भेनात्मसत्त्वासत्त्वयोर्मध्येऽन्यतरमवधारयेयं तदत्र को विशेषोऽस्ति येनैकतरमवधारयेयमित्याकाङ्क्षा वर्तते तया ज्ञायते संशयोऽस्तीति अन्यथाऽन्यतरावधारणाकाङ्क्षा न स्यात् तस्मात् 'अस्त्यात्मेत्येके नास्त्यात्मेत्यपरे' इति विप्रतिपत्तिजन्यः 'आत्मास्ति वा नास्ति वा' इति संशयः सिद्धः स च विप्रतिपत्तिसंप्रतिपत्तिमात्रेण= विप्रतिपत्तेर्मतभेदात् व्यवस्थाज्ञानमात्रेण निवर्तयितुं न शक्य इत्यन्वयः, वादिप्रतिवादिनोः स्वस्वमतानुसारेण निश्चयसंभवेऽप्यनभिज्ञस्य तटस्थस्य तु विप्रतिपत्तिव्यवस्थाज्ञानमात्रेण संशयाभावो नोपपद्यते इत्यर्थः । अत्र "विप्रतिपत्तिसंप्रतिपत्तिमात्रेण" इत्यत्र 'विप्रतिपत्तिव्यवस्थाज्ञानमात्रेण' इत्येवं पाठो युक्तः । एतादृशव्यवस्थाज्ञाने सत्यपि संशयः प्रसिद्ध एव । उक्तमन्यत्रातिदिशति— एवमिति, "अव्यवस्थाध्यवसायात्" इति द्वितीयसूत्रभागेन य उपलब्ध्यनुपलब्ध्योरव्यवस्थाध्यवसायाज्जायमानसंशयस्य परिहारः कृतः सोऽपि नोपपद्यते इत्यन्वयः, वेदितव्यम्= खण्डनखण्डनं वेदितव्यमित्यर्थः, अत्रत्यः पूर्वपक्षस्तु अत्रत्यद्वितीयसूत्रभाष्ये द्रष्टव्यः, उपलब्ध्यनुपलब्ध्योरव्यवस्थया संशयोत्पत्तिश्च संशयलक्षणसूत्रभाष्ये द्रष्टव्या तत्रोक्तप्रकारेणैवास्य पूर्वपक्षस्य परिहारः कर्तव्यो यथोदाहृतप्रकारेण सदसतोरुपलब्धिरनुपलब्धिश्च लोकप्रसिद्धास्ति ताभ्यां चोपलभ्यमानानुपलभ्यमानयोः सत्त्वासत्त्वसंशयः संभवत्येवेति तस्य वचनमात्रेणापह्नवो न संभवति, इत्यलं विस्तरेण ।

संशयपरिहारपरं तृतीयसूत्रमनुवदति— यत्पुनरिति. विप्रतिपत्ताविति सूत्रार्थस्तु पूर्वत्र द्रष्टव्यः । परिहरति— विप्रतिपत्तिशब्दस्येति, विप्रत्तिपत्तिशब्दस्य यः 'अस्त्यात्मा नास्त्यात्मा' इत्याकारकः परस्परविरोधलक्षणोऽर्थः तदध्यवसायः= आत्मसत्त्वासत्त्वयोरुपस्थितिरूपः स च विशेषापेक्षः= आत्मसत्त्वासत्त्वयोरन्यतरस्यावधारणाकाङ्क्षाविशिष्टः स एव संशयहेतुरुक्तस्तेन संशयो जायते एवान्यथाऽन्यतरावधारणाकाङ्क्षा न स्यात्, तस्य= उक्ताध्यवसायनिष्ठसंशयकारणत्वस्य समाख्यान्तरेण= तृतीयसूत्रोक्तनिमित्ताद् विप्रतिपत्तेः संप्रतिपत्तिरिति संज्ञान्तरकरणेन निवृत्तिः= बाधो नोपपद्यते इत्यन्वयः,

तार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः तदध्यवसायश्च विशेषापेक्षः संशयहेतुः न चास्य संप्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्तते. तदिदमकृतबुद्धिसंमोहनमिति।

यत्पुनः "अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः४" इति, संशयहेतोरर्थस्याऽप्रतिषेधात् अव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना व्यर्था, शब्दान्तरकल्पना–'अव्यवस्था खल्वऽव्यवस्था न भवति– अव्यवस्थात्मनि व्यवस्थितत्वादिति'। नाऽनयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते। यावता चाव्यवस्थात्मनि व्यवस्थिता न तावताऽऽत्मानं जहाति तावता ह्यनुज्ञाता भवत्यव्यवस्था, एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं साधयतीति।

सत्त्वासत्त्वयोर्मतभेदेन व्यवस्थया विप्रतिपत्तिः संप्रतिपत्तिरेवेति समाख्यान्तरकरणं तृतीसूत्रभाष्ये स्पष्टमेव। उक्तं व्याचष्टे– समाने इति, समानेऽधिकरणे= एकपदार्थविषयकौ व्याहतार्थौ= परस्परविरुद्धौ प्रवादौ= पक्षावेव विप्रतिपत्तिशब्दस्यार्थौ यथा– 'आत्मास्ति वा नास्ति वा' इति. तदध्यवसायः= आत्मसत्त्वासत्त्वयोरुपस्थितिः विशेषापेक्षः= अन्यतरावधारणाकाङ्क्षाविशिष्टो यः स संशयहेतुरित्युक्तं न चास्य= संशयकारणस्य विप्रतिपत्तिशब्देन सह "विप्रतिपत्तौ च संप्रतिपत्तेः" इत्येवं समाख्यान्तरे= संप्रतिपत्तिशब्दे संयोज्यमानेपि संशयहेतुत्वं निवर्तते किं त्वस्त्येवोक्ताध्यवसायस्य संशयहेतुत्वम्– तादृशाध्यवसायात् संशयोत्पत्तेर्दर्शनादित्यन्वयः। उपसंहरति– तदिदमिति, इदम्= "विप्रतिपत्तौ च संप्रतिपत्तेः" इतिवचनेन विप्रतिपत्तेः संप्रतिपत्त्यभेदकथनम् अकृतबुद्धिसंमोहनम्= मूर्खसंमोहनं संभवति न तु पण्डितसंमोहनमिति विप्रतिपत्त्याप्युक्तरीत्या सिद्धः संशय इत्यर्थः।

संशयपरिहारपरं चतुर्थसूत्रमनुवदति– यत्पुनरिति. अव्यवस्थात्मनीतिसूत्रार्थः पूर्वत्र द्रष्टव्यः। परिहरति– संशयेति, उक्तसूत्रेणाऽव्यवस्थायाः स्वस्वरूपे व्यवस्थितत्वं प्रदर्शितं न तु संशयहेतुभूतपदार्थस्य उपलब्ध्यनुपलब्ध्योरव्यवस्थायाः खण्डनं कृतमिति तदप्रतिषेधात् स्वस्वरूपे व्यवस्थितत्वप्रतिपादनार्थम् अव्यवस्थायाः स्वीकाराच्च तादृशाव्यवस्थाजन्यसंशयस्य प्रतिषेधो नोपपद्यते इति निमित्तान्तरेण= स्वस्वरूपे व्यवस्थितत्वेनाऽव्यवस्थात्वानुपपत्तिद्वारा संशयप्रतिषेधार्थं शब्दान्तरकल्पना= अव्यवस्थात्मनीतिसूत्रकल्पना व्यर्था तथा च संशयप्रतिषेधासंभवाद् उपलब्ध्यनुपलब्ध्योरव्यवस्थातोपि सिद्धः संशयः सा चैषा संशयसिद्धिः संशयलक्षणसूत्रभाष्ये द्रष्टव्या। यत् खलूक्तचतुर्थसूत्रेण अव्यवस्थाया व्यवस्थात्वमुपपादितं तादृशब्दान्तरकल्पनामनुवदति– शब्दान्तरकल्पनेति, अव्यवस्थेति। परिहारहेतुमाह– अव्यवस्थात्मनीति, अव्यवस्थाया अव्यवस्थात्मनि= स्वस्वरूपे व्यवस्थितत्वात् स्वरूपं सिद्धमेव स्वस्वरूपे व्यवस्थितस्यैव स्वरूपसंभवात् स्वस्वरूपे व्यवस्थितया चाऽव्यवस्थाया व्यवस्थात्वासंभवात् तथा चाव्यवस्थायाः सिद्ध्या तत्कार्यस्य संशयस्यापि सिद्धिर्निराबाधैवेत्यर्थः। उक्तं संशयहेतुप्रतिषेधाभावमुद्घाटयति– नेति, अनयोरुपलब्ध्यनुपलब्ध्योर्विशेषापेक्षम्= अन्यतरावधारणाकाङ्क्षाविशिष्टं यत् सदसद्विषयत्वं तदेवाऽव्यवस्था सैव संशयकारणं साऽव्यवस्था संशयकारणं न भवतीत्येवं न प्रतिषिध्यते= उक्ताव्यवस्थायाः संशयकारणत्वं न प्रतिषिध्यते किं तु व्यवस्थात्वमुपपाद्यते तेन च न संशयप्रतिषेध उपपद्यते इत्यर्थः। यावता= यावत्पर्यन्तं चाव्यवस्थाऽऽत्मनि= स्वरूपे व्यवस्थितास्ति तावता= तावत्पर्यन्तम् आत्मानम्= स्वरूपं न जहाति किं तु सत्येव, किं वा यावता= येन कारणेन तावता= तेनैव कारणेनेत्यर्थः, तावता= एतावता= अव्यवस्थायाः स्वरूपसत्त्वेनाव्यवस्था स्वीकृता भवति तेन चाव्यवस्थाकार्यभूतः संशयः सिद्धः। उपसंहरति– एवमिति, शब्दान्तरकल्पना= उक्तचतुर्थसूत्रकल्पना क्रियमाणापि अर्थान्तरम्= संशयाभावं न साधयतीत्यन्वयः।

यत्पुनरेतत्– "तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ५" इति, नायं समानधर्मादिभ्य एव संशयः। किं तर्हि?. तद्विषयाध्यवसायाद् विशेषस्मृतिसहितात् इति. अतो नात्यन्तसंशय इति।

"अन्यतरधर्माध्यवसायाद्वा न संशयः" इति. तन्न युक्तम्– विशेषापेक्षो विमर्शः संशयः इतिवचनात्. विशेषश्चान्यतरधर्मो न तस्मिन्नऽध्यवसीयमाने विशेषापेक्षा संभवतीति ॥ ६ ॥

## यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा तत्र तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति, अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति ॥ ७ ॥

अथ प्रमाणपरीक्षा—

## प्रत्यक्षादीनामप्रामाण्यम्– त्रैकाल्यासिद्धेः ॥ ८ ॥

प्रत्यक्षादीनां प्रामाण्यं नास्ति– त्रैकाल्यासिद्धेः= पूर्वापरसहभावानुपपत्तेरिति ॥ ८ ॥

---

संशयपरिहारपरं पञ्चमसूत्रमनुवदति– यत्पुनरिति। तथेतिसूत्रार्थः पूर्वत्र द्रष्टव्यः। परिहरति– नायमिति। अयं संशयः समानधर्मादिभ्यो न जायते यदि समानधर्मादिकमेव संशयकारणं स्यात्तदा तदनुवृत्त्या तत्कार्यभूतस्य संशयस्याप्यनुवृत्त्याऽनुच्छेदापत्तिः स्यादपि न चैवमस्ति। संशयकारणं जिज्ञासते– किमिति। उत्तरमाह– तद्विषयेति। विशेषस्मृतिसहितात्= संशयविषयभूतपदार्थविपतकस्मृतिसहितात् तद्विपायाध्यवसायात्= समानधर्मविषयकज्ञानात् संशयो जायते. विशेषावधारणेन तादृशाऽध्यवसायनिवृत्त्या संशयनिवृत्तिरपि भवत्येवेति अत्यन्तसंशयः= संशयानुच्छेदो नापद्यते इत्युपसंहरति– अत इति। संशयकाले स्थाणुपुरुषादीनां स्मृतिश्च प्रसिद्धैव।

संशयपरिहारपरस्य प्रथमसूत्रस्य द्वितीयखण्डं परिहारार्थमनुवदति– अन्यतरेति, अर्थस्तु तत्रैव द्रष्टव्यः। परिहरति– तन्नेति। परिहारहेतुमाह– विशेषेति, वचनात्= संशयलक्षणसूत्रे कथनात्। विशेषापेक्षशब्दप्रयोगस्याभिप्रायमाह– विशेषश्चेति, अन्यतरधर्म एव विशेषपदार्थस्तथा च तस्मिन्= अन्यतरधर्मेऽध्यवसीयमाने विशेषाध्यवसायो जात एवेति विशेषापेक्षा न संभवति विशेषापेक्षश्च संशय इत्युक्तं तथा चान्यतरधर्माध्यवसायात् संशयाभावो ममेष्ट एवेत्याशयः, अन्यतरधर्माध्यवसायस्य संशयकारणत्वं तु नोक्तमिति तत्परिहारो व्यर्थ एवेत्यर्थः। अन्यतरधर्माध्यवसायस्तु प्रत्युत निश्चयकारणं न संशयकारणमित्यनुसंधेयम्। समानज्ञानादिभिरुक्तैः संशयकारणैः संशयः संभवत्येवेति न संशयानुपपत्तिः ॥ ६ ॥

संशयपरीक्षामुपसंहरति– यत्रेति, यत्र= यस्मिन् पदार्थे संशयो जायते तत्रैवम्= उक्तसंशयसमाधानवत् उत्तरोत्तराणां प्रसङ्गः= उत्तरं वाच्यम्। उत्तरं च समाधानमेव। किं वा यत्र संशयः परेण प्रतिषिध्यते तत्रेत्यन्वय इतिसूत्रार्थः। व्याचष्टे– यत्रेति, कथायाम्= वादजल्पवितण्डासु। एवम्= उक्तरीत्या समाधिः= समाधानं कर्तव्यमित्यन्वयः। उपसंहरति– अत इति, परीक्षायाः संशयपूर्वकत्वात् संशयस्य सर्वपरीक्षाव्यापकत्वं प्राप्तं तस्मात्. प्रथमं संशय एव परीक्षित इत्यन्वयः॥ ७ ॥

॥ इति संशयपरीक्षा ॥

---

संशयपरीक्षानन्तरं प्रमाणपरीक्षामवतारयति– अथेति.। प्रत्यक्षादीनामिति– प्रत्यक्षादीनां चतुर्णामपि प्रमाणानां प्रामाण्यं नोपपद्यते– त्रैकाल्यासिद्धेः= कालत्रयवृत्तित्वासंभवात्, अनधिगताबाधितार्थविषयकत्वं हि प्रमाणानां प्रामाण्यं तदनेन प्रमाणविषयस्य यदि कालत्रयवृत्तिसत्त्वज्ञानं स्यात्तदा तत्प्रमाणस्य प्रामाण्यं स्यात्. कालत्रयवृत्तिसत्त्वग्राहकत्वं च प्रमाणानां नोपपद्यते– कालत्रयवृ-

अथ सामान्यवचनस्यार्थविभागः—

पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसंनिक-
र्षात् प्रत्यक्षोत्पत्तिः ॥ ९ ॥

गन्धादिविषयं ज्ञानं प्रत्यक्षं तद् यदि पूर्वं पश्चाद् गन्धादीनां सिद्धिः ? नेदं गन्धादि संनिकर्षादुत्पद्यते इति ॥ ९ ॥

पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥

असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयः स्यात् ?, प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयम् इत्येतत् सिध्यति ॥ १० ॥

युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वा-
ऽभावो बुद्धीनाम् ॥ ११ ॥

---

त्तित्वासंभवात् वर्तमानकालमात्रवृत्तित्वादिति प्रत्यक्षादिप्रमाणानामप्रामाण्यं प्राप्तम् । नच प्रमाणान्तरेण प्रमाणान्तरविषयस्य कालत्रयवृत्तित्तसत्त्वग्रहणं भविष्यतीति वाच्यम्— एवमपि भविष्यत्कालस्यानन्तत्वात् तत्रत्यविषयबाधशङ्कया प्रमाण्यापहारादिति सूत्रार्थः । व्याचष्टे— प्रत्यक्षादीनामिति । नास्तीत्यत्र हेतुमाह— त्रैकाल्येति, अस्यार्थमाह— पूर्वेति, प्रमाणप्रमेययोः पूर्वापरभावस्य सहभावस्य चानुपपत्तेरित्यर्थः । पूर्वापरसहभावानामनुपपत्तिश्चेयमग्रिमेण सूत्रत्रयेण क्रमेण व्युत्पाद्यते ॥ ८ ॥

सूत्रत्रयमवतारयति— अथेति, त्रैकाल्यासिद्धेरित्यस्य किं वा पूर्वापरसहभावानुपपत्तेरित्यस्य सामान्यवचनस्य विभागेनार्थः प्रतिपाद्यते इत्यर्थः । पूर्वमिति— प्रमेयापेक्षया पूर्वं प्रमाणस्य सिद्धौ इन्द्रियार्थसंनिकर्षात् प्रत्यक्षस्योत्पत्तिरुक्ता सा न संभवति, प्रत्यक्षलक्षणे "इन्द्रियार्थसंनिकर्षोत्पन्नम्" इत्येवं प्रत्यक्षस्येन्द्रियार्थसंनिकर्षोत्पन्नत्वमुक्तं तच्च प्रमाणापेक्षया पूर्वं प्रमेयसिद्धौ संभवति न तु प्रमेयापेक्षया पूर्वं प्रमाणसिद्धौ— प्रत्यक्षोत्पत्तिकाले ह्यऽसता प्रमेयेणेन्द्रियसंनिकर्षासंभवादिति सूत्रार्थः। व्याचष्टे— गन्धादीति, तत्= प्रत्यक्षम्, पूर्वम्= प्रमेयापेक्षया पूर्वम्, पश्चात्= प्रत्यक्षापेक्षया पश्चात् । पर्यवसितमाह— नेदमिति, एतस्मिन् पूर्वापरभावे इदं प्रत्यक्षं गन्धादिसंनिकर्षान्नोत्पत्तुमर्हति— तदा गन्धादीनामभावादित्यर्थः । तदनेन प्रत्यक्षलक्षणाव्याप्तिः प्रमाणप्रमेययोः पूर्वापरभावानुपपत्तिश्च प्रदर्शिता ॥ ९ ॥

उक्तविपरीतस्य पूर्वापरभावस्यानुपपत्तिमाह— पश्चादिति, प्रमेयापेक्षया यदि पश्चात् प्रमाणसिद्धिस्तदा प्रत्यक्षस्य प्रमेयेन्द्रियसंनिकर्षोत्पन्नत्वसंभवेपि प्रमाणेभ्यः प्रमेयसिद्धिर्योक्ता "मानाधीना मेयसिद्धिः" इति सा नोपपद्येत— प्रमाणापेक्षया पूर्वमेव मेयसिद्धेरत्र स्वीकारादिति सूत्रार्थः । व्याचष्टे— असतीति, प्रमीयते इति प्रमेयस्तस्य प्रमेयत्वं च प्रमाणाधीनमिति प्रमाणानन्तरमेव प्रमेयसिद्धिः संभवति न तु प्रमाणात् पूर्वमपि । प्रमेयस्य प्रमाणाधीनत्वमाह— प्रमाणेनेति, प्रमाणेनैव प्रमेयत्वं सिध्यतीत्यर्थः। अनेनापि प्रमाणप्रमेययोः पूर्वापरभावानुपपत्तिः प्रदर्शिता ॥ १० ॥

प्रमाणप्रमेययोः सहभावानुपपत्तिमाह— युगपदिति, प्रमाणप्रमेययोः युगपत्सिद्धौ= सहभावे= एककालिकत्वपक्षे बुद्धीनाम्= ज्ञानानां प्रत्यर्थनियतत्वात्= एकमात्रविषयग्राहकत्वात् किं वा घ्राणजादिज्ञानानां गन्धादिमात्रग्राहकत्वाद् यद् क्रमवृत्तित्वम्= क्रमेण जायमानत्वमुक्तं तदभावः= तदनुपपत्तिः प्राप्तेत्यन्वयः, ज्ञानानामेकार्थविषयकत्वेन प्रत्यर्थनियतत्वं प्राप्तम्— प्रत्यर्थनियतत्वाभावे ह्यनेकविषयकत्वसंभवेनैकार्थविषयकत्वनियमो न स्यात्, प्रत्यर्थनियतत्वेन च क्रमवृत्तित्वं प्राप्तं क्रमवृत्तित्वाभावे ह्येकस्मिन्नपि

यदि प्रमाणं प्रमेयं च युगपद् भवतः ? एवमपि गन्धादिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपद् संभवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः= या इमा बुद्धयः क्रमेणार्थेषु वर्तन्ते तासां क्रमवृत्तित्वं न संभवतीति। व्याघातश्च– "युगपद् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् १–१– १६" इति, एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः स चानुपपन्न इति. तस्मात् प्रत्यक्षादीनां प्रमाणत्वं न संभवतीति ॥ ११ ॥

अस्य समाधिः—

उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावाऽनियमाद् यथादर्शनं विभागवचनम्.

क्वचिदुपलब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयो यथाऽऽदित्यस्य प्रकाशः, उत्पद्यमानानां क्वचित् पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुर्यथाऽवस्थितानां प्रदीपः, क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतो यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं प्रमेयं तूपलब्धिविषयः।

---

कालेऽनेकार्थज्ञानैरनेकेषामर्थानां प्रतिभासे जाते ज्ञानानां प्रत्यर्थनियतत्वं नोपपद्येत– तादृशानेकार्थप्रतिभासानामेकज्ञानजन्यत्वप्रसङ्गापत्तेरिति ज्ञानानां प्रत्यर्थनियतत्वसिद्ध्यर्थं क्रमवृत्तित्वं स्वीकृतं तच्च क्रमवृत्तित्वं प्रमाणप्रमेययोः युगपत्सिद्धौ नोपपद्यते– यदा हि प्रमाणप्रमेययोर्युगपत्सिद्धिस्तदा घ्राणजज्ञानेन गन्धस्यैव सहभावः स्यादित्यत्र नियामकाभावात् सर्वेषामपि ज्ञानानां तद्विषयाणां च सहभावः प्राप्तः सहभावे च ज्ञानानां प्रत्यर्थनियतत्वनियामकं नोपपद्यते प्रत्यर्थनियतत्वोपपत्त्यभावे च क्रमवृत्तित्वं नोपपद्यते– प्रत्यर्थनियतत्वेनैव क्रमवृत्तित्वसंभवात्. स्वीकृतं च क्रमवृत्तित्वमिति प्रमाणप्रमेययोः युगपत्सिद्धिः= सहभावोपि नोपपद्यते तेन प्रमाणप्रमेयभावानुपपत्त्या प्रमाणानां प्रामाण्यानुपपत्तिरिति सूत्रार्थः प्रतिभाति, अत्र 'युगपत्सिद्धौ प्रत्यर्थनियतत्वाभावो बुद्धीनाम्' इत्येव वक्तव्यमासीत्। व्याचष्टे– यदीति। एवमपि= युगपद्भावेपि, विषयत्वं सप्तम्यर्थ इति इन्द्रियग्राह्यगन्धाद्यर्थविषयकाणि ज्ञानानि प्रत्यर्थनियतानि युगपत्= प्रमेयैः सह संभवन्ति= जायन्ते इति क्रमवृत्तित्वाभाव आपद्यते इत्यन्वयः, अत्र "प्रत्यर्थनियतत्वात्" इति क्रमवृत्तित्वांशे हेतुस्तथा च प्रत्यर्थनियतत्वाद् यत् क्रमवृत्तित्वं युक्तं ज्ञानानां तदभावः प्राप्त इत्यर्थः, वस्तुतस्तु "प्रत्यर्थनियतत्वात्" इति पाठो व्यर्थ एव– समन्वयासंभवादिति विभाव्यम्। स्वाभिप्रायं विशदयति– या इति। क्रमवृत्तित्वाभावस्वीकारे च न्यायसिद्धान्तविरोधमुद्घाटयति– व्याघात इति, युगपदितिसूत्रं पूर्वत्र व्याख्यातम् अत्र ज्ञानानां युगपदनुत्पत्तिरुक्ता सा च क्रमवृत्तित्वमेवेत्यर्थः तच्च क्रमवृत्तित्वमुक्तरीत्या प्रमाणप्रमेययोः सहभावे नोपपद्यते इतिभावः। पर्यवसितमाह– एतावांश्चेति, प्रमाणप्रमेययोः सद्भावस्य विषयः= प्रकारः पूर्वोत्तरसहभावैरुक्तैरेतावान्= त्रिविध एव संभवति स चोक्तरीत्या नोपपद्यते तस्मात् प्रमाणानां प्रामाण्यं नोपपद्यते इत्यर्थः ॥ ११ ॥

उक्तप्रामाण्यपरिहारस्य प्रत्याख्यानमारभते– अस्येति। उपेति– उपलब्धिहेतोः= प्रमाणस्य प्रमाणसहकारिणश्च उपलब्धिविषयस्य चार्थस्य= प्रमेयस्य च प्रदर्शितपूर्वापरसहभावानां नियमाभावाद् यथादर्शनम्= पूर्वापरसहभावा लोके यथा दृश्यन्ते तथा विभागेन वक्तव्यं न तु पूर्वापरसहभावेष्वेकस्य भावस्य सर्वत्र नियमः संभवतीत्यन्वयः। स्वोक्तं स्वयमेव व्याचष्टे– क्वचिदिति। आदित्यप्रकाश अनादित्वात् घटादिप्रकाश्यापेक्षया पूर्वभावीति स्पष्टमेव। द्वितीयं पूर्वापरभावमुदाहरति– उत्पद्येति, उत्पद्यमानानाम्= सादीनां घटादीनां मध्ये, अवस्थितानाम्= प्रदीपप्रकाशापेक्षया पूर्वमवस्थितानां प्रदीपप्रकाशः पश्चाद्भावीति स्पष्टमेव। सहभावमुदाहरति– क्वचिदिति, 'वह्निमान् धूमात्' इत्यत्र धूमज्ञानवह्निज्ञानयोरधिकपूर्वापरभावाभावादेव सहभावो विज्ञेयः, वस्तुतस्तु धूमज्ञानाद् वह्निज्ञानमनन्तरभावि वह्निश्च पूर्वभावी, सहभावस्तु तत्र विज्ञेयो यत्रोत्पत्तिकाले एव विषयो गृह्यते। उपलब्धिहेतुमुपलब्धि-

एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथाऽर्थो दृश्यते तथा विभज्य वचनीय इति, तत्रैकान्तेन प्रतिषेधानुपपत्तिः- सामान्येन खलु विभज्य प्रतिषेध उक्त इति ।

समाख्याहेतोस्त्रैकाल्ययोगात् तथाभूता समाख्या.

यत्पुनरिदम्- 'पश्चात्सिद्धौ= असति प्रमाणे प्रमेयं न सिध्यति- प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायते' इति, प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तं तस्य त्रैकाल्ययोगः- 'उपलब्धिमकार्षीत्' 'उपलब्धिं करोति' 'उपलब्धिं करिष्यति' इति समाख्याहेतोः त्रैकाल्ययोगात् समाख्या तथाभूता, प्रमितोऽनेनार्थः प्रमीयते प्रमास्यते इति प्रमाणम्. प्रमितं प्रमीयते प्रमास्यते इति च प्रमेयम्, एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिः= प्रमास्यतेऽयमर्थः प्रमेयमिदम् इत्येतत्सर्वं भवतीति ।

त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः.

---

विषयं चाह- उपलब्धीति, वस्तुतस्त्विदमपि न युक्तम्- प्रकाशादीनां प्रमाणत्वाभावात्, उपलब्धिहेतुशब्देन प्रमाणग्रहणे विरोधः स्पष्ट एव-प्रमेयापेक्षया तद्विषयकप्रमाणस्य पूर्वभावित्वादर्शनात् । पर्यवसितमाह- एवमिति, यथा= पूर्वं वा पश्चाद्वा । प्रमाणापेक्षया प्रमेयस्य पूर्वभावित्वमेव युक्तं प्रमेयगतप्रमेयत्वस्य प्रमाणाधीनत्वेपि प्रमेयस्वरूपस्य प्रमाणानधीनत्वात् । उपसंहरति- तत्रेति, प्रमाणप्रमेययोः सामान्यतः पूर्वापरसहभावनियमाभावेपि यः पूर्वापरसहभावनियममाश्रित्य प्रमाण्यप्रतिषेध एकान्तेन= नियमेनोक्तः स नोपपद्यते, कस्यचिज्ज्ञानस्य प्रामाण्यप्रतिषेधसंभवेपि सर्वेषां ज्ञानानां प्रामाण्यप्रतिषेधासंभवात् । उक्ते हेतुमाह- सामान्येति, सामान्येन= सामान्यतः यः खलु विभज्य= पूर्वापरसहभावानां विभागेन त्रिभिः सूत्रैः प्रामाण्यप्रतिषेध उक्तः स नोपपद्यते- सामान्यत उक्तत्वात् सामन्यतश्च प्रमाणानां प्रामाण्यप्रतिषेधासंभवात्, पूर्वापरसहभावस्यापि सामान्यरूपेण= एकरूपेण सर्वत्रासंभवादित्यर्थः प्रतिभाति ।

"पश्चात्सिद्धौ" इति दशमसूत्रोक्तं प्रामाण्यप्रतिषेधं प्रत्याचष्टे- समाख्येति, प्रमाणमितिसमाख्याया हेतोः= प्रवृत्तिनिमित्तभूतस्य उपलब्धिहेतुत्वस्य त्रैकाल्ययोगात्= कालत्रयेपि प्रमाणेषु संभवात् समाख्या= प्रमाणमितिसमाख्या तथाभूता= त्रिकालयुक्ता तथा च प्रमाणमिति समाख्यायास्त्रैकाल्ययोगात् प्रमाणानां प्रामाण्यं प्राप्तं घटेषु घटत्ववदित्यन्वयः । स्वोक्तस्याभिप्रायं विशदयति- यत्पुनरित्यादिना । परिहाराय दशमसूत्रभाष्यमर्थतोनुवदति- पश्चादिति, "मानाधीना मेयसिद्धिः" इत्युक्तमेव । उक्तं परिहरति- प्रमाणमिति, अत्र प्रथमं तत्रेति वक्तव्यमासीत्, निमित्तम्= प्रवृत्तिनिमित्तम्- उपलब्धिहेतुत्वेनैव प्रमाणमितिसमाख्यायाः प्रमाणेषु प्रवृत्तत्वात् । तस्य= उपलब्धिहेतुत्वस्य । त्रैकाल्ययोगमुदाहरति- उपलब्धिमिति, प्रमाणमितिशेषः । तथाभूता= त्रिकालयुक्ता । प्रमाणशब्दव्युत्पत्तेस्त्रैकाल्ययोगमाह- प्रमित इत्यादिना । प्रमेयशब्दव्युत्पत्तेस्त्रैकाल्ययोगमाह- प्रमितमिति । उपसंहरति- एवमिति, एवम्= प्रमाणप्रमेयसमाख्ययोस्त्रैकाल्ययोगात् अस्मिन्= प्रमेये= प्रमेयविषयोपलब्धिर्हेतुतः= प्रमाणेन भविष्यति यत्र प्रमाणस्य पश्चाद्भावस्तथा च प्रमाणविषयत्वेन प्रमेयमिति समाख्यायास्त्रैकाल्ययोगेन च प्रमेयत्वमुपपद्यते इति न दशमसूत्रभाष्योक्तदोषापत्तिरित्यर्थः । उक्तमेव विशदयति- प्रमास्यते इति । इत्येतत्= प्रमाणानां प्रमाणत्वं प्रमेयस्य च प्रमेयत्वमितिसर्वं भवति= सिध्यति ।

विपक्षे बाधकमाह- त्रैकाल्येति, उक्तस्य समाख्याहेतोः= प्रवृत्तिनिमित्तस्य त्रैकाल्यानभ्यनुज्ञाने= कालत्रयसंबन्धास्वीकारे च व्यवहारस्यानुपपत्तिरस्ति यथा 'पाचकमानय' इत्यत्र पाचकशब्दप्रवृत्तिनिमित्तस्य पाककर्तृत्वस्य कालत्रयसंबन्धस्वीकारे हि तद्विशिष्टस्य पाचकस्यानयनमुपपद्यते यदि च पाककर्तृत्वस्य न कालत्रयसंबन्धः स्वीक्रियते तदा तदानयनकाले पाककर्तृत्वस्याविद्यमानत्वात् तस्य

यश्चैवं नाभ्यनुजानीयात् तस्य 'पाचकमानय पक्ष्यति' 'लावकमानय लविष्यति' इतिव्यवहारो नोपपद्यते इति। "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः २-१-८" इत्येवमादिवाक्यं प्रमाणप्रतिषेधः. तत्रायं प्रष्टव्यः— अथाऽनेन प्रतिषेधेन भवता किं क्रियते इति, किं संभवो निवर्त्यते? अथाऽसंभावो ज्ञाप्यते? इति, तद् यदि संभवो निवर्त्यते? सति संभवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः, अथाऽसंभवो ज्ञाप्यते? प्रमाणलक्षणं प्राप्तस्तर्हि प्रतिषेधः— प्रमाणासंभवस्योपलब्धिहेतुत्वादिति ॥ ११ ॥

किं चातः—

## त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

अस्य तु विभागः— पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किमनेन प्रतिषिध्यते?,

---

पाचकत्वानुपपत्त्या पाचकानयनलक्षणो व्यवहारो नोपपद्यते भवति च व्यवहार इति प्रवृत्तिनिमित्तस्य त्रैकाल्यं स्वीकार्यम् एवं प्रमाणशब्दप्रवृत्तिनिमित्तस्य उपलब्धिहेतुत्वस्यापि त्रैकाल्यं स्वीकार्यं सिद्धे चोपलब्धिहेतुत्वे प्रमाणानां प्रामाण्यं सिद्धमेव— प्रामाण्यस्योपलब्धिहेतुत्वरूपत्वादित्यर्थः। स्वयं व्याचष्टे— यश्चेति, एवम्= समाख्यायाहेतोः= प्रवृत्तिनिमित्तस्य कालत्रयसंबन्धं नाभ्यनुजानीयात्= न स्वीकुर्यात् तस्य 'पाचकमानय' इत्यादिव्यवहारस्यानुपपत्तिः प्रदर्शितरीत्या विज्ञेया। अनुपपत्तिप्रदर्शनार्थं पूर्वपक्षप्रथमसूत्रमनुवदति— प्रत्यक्षादीनामिति, वाक्यम्= सूत्रवाक्यम्। तत्रेति विषयत्वं सप्तम्यर्थः, अयम्= पूर्वपक्षी। प्रष्टव्यमाह— अथेति, प्रत्यक्षादीनामित्यादिप्रतिषेधवाक्यं किमर्थमित्यर्थः। उक्तप्रतिषेधवाक्यप्रयोजनं द्विधा विभजते— किमिति, अत्र "अनेन प्रतिषेधेन" इत्यनुवर्तनीयम्। प्रथमकल्पे दोषमुद्घाटयति— तद् यदीति, यद्यनेन प्रतिषेधेन प्रमाणेषु प्रामाण्यस्य संभवो निवर्त्यते= संभवाभावः प्रतिपाद्यते तदा निष्प्रतियोगिकस्याभावस्याऽसंभवात् प्रामाण्यसंभवः प्रतियोगी स्वीकार्यस्तथा च प्रत्यक्षादिप्रमाणानां प्रामाण्यसंभवे सति प्रतिषेधानुपपत्तिः= प्रामाण्यप्रतिषेधो नोपपद्यते इत्यर्थः। द्वितीयकल्पे दोषमुद्घाटयति— अथेति, यद्यनेन प्रतिषेधेन प्रत्यक्षादिषु विद्यमान एव प्रमाण्यासंभवो ज्ञाप्यते प्रदीपेन घट इव तथा च प्रमाण्यसंभावाभावप्रतियोगित्वेन प्रमाण्यसंभवापत्तिर्नास्तीत्यभिप्रायस्तदा त्वत्प्रदर्शितः प्रतिषेधः= प्रामाण्यप्रतिषेधः प्रमाणलक्षणम्= प्रामाण्यं प्राप्तः— प्रामाण्यासंभवज्ञापकत्वात् ज्ञापकस्यैव प्रमाणत्वादित्यन्वयः, प्रामाण्यासंभवज्ञापकस्य प्रमाण्यप्रतिषेधस्य प्रामाण्यप्राप्तौ हेतुमाह— प्रमाणासंभवस्येति, प्रमाणस्य= प्रामाण्यस्याऽसंभवोऽनेनेति प्रमाणासंभवः=प्रामाण्यप्रतिषेधस्तस्य उपलब्धिहेतुत्वात्= प्रामाण्यासंभवज्ञापकत्वात् ज्ञापकस्य च प्रामाण्यावश्यम्भावात् प्रामाण्यस्य ज्ञापकत्वलक्षणत्वादित्यन्वयः। किं वा प्रमाणासंभवस्येत्यस्य प्रामाण्यासंभवज्ञापकस्य प्रतिषेधस्येत्यर्थः, उक्तप्रतिषेधस्य प्रामाण्ये ह्यविशेषात् प्रत्यक्षादीनामपि प्रामाण्यं सिद्धम् अप्रामाण्ये चाऽप्रामाण्यसाधकत्वं नोपपद्यते इत्युभयतः पाशारज्जुरित्यर्थः ॥ ११ ॥

प्रामाण्यप्रतिषेधस्य प्रतिषेधसूत्रमवतारयति— किं चेति, अतः= एतत्सूत्रोक्तप्रकारतश्चापि प्रमाणानां प्रामाण्यस्य प्रतिषेधो नोपपद्यते इत्यर्थः। त्रैकाल्यासिद्धेरिति— यथा प्रमाणानां त्रैकाल्यासिद्ध्या प्रामाण्यानुपपत्तिर्भवता प्रदर्शिता तथैव भवदुक्तस्य प्रामाण्यप्रतिषेधस्यापि त्रैकाल्यासिद्ध्या प्रामाण्यं नोपपद्यते प्रामाण्यप्रतिषेधस्य प्रामाण्याभावे च प्रमाणानां प्रामाण्यमुपपन्नं, यदि च त्रैकाल्यासिद्धिदोषे सत्यपि भवदुक्तप्रतिषेधस्य प्रामाण्यमस्ति तदा तद्वत् प्रमाणानामपि त्रैकाल्यासिद्धिदोषे सत्यपि प्रामाण्यमुपपन्नमिति सूत्रार्थः। व्याचष्टे— अस्येति, अस्य= एतत्सूत्रार्थस्य पूर्वापरसहभावैस्त्रिधा विभागो यथा पूर्वं प्रामाण्यप्रतिषेधः पश्चाच्च प्रमाणप्रामाण्यमिति प्रथमः कल्पस्तत्र प्रतिषेध्ये पूर्वं सत्येव तत्प्रतिषेधः संभवति नान्यथा अत्र च पक्षे प्रतिषेध्यं पूर्वं नास्तीति व्यर्थः प्रामाण्यप्रतिषेधः। यदि च प्रतिषेध्यं प्रामाण्यं

पश्चात् सिद्धौ प्रतिषेधासिद्धिः– प्रतिषेधाभावादिति, युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति, प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥ १२ ॥

## सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

कथम्?. "त्रैकाल्यासिद्धेः" इत्यस्य हेतोर्यद्युदाहरणमुपादीयते ? हेत्वर्थस्य साधकत्वं दृष्टान्ते दर्शयितव्यमिति. न च तर्हि प्रत्यक्षादीनामप्रामाण्यम्, अथ प्रत्यक्षादीनामप्रामाण्यम्?. उपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति. सोयं सर्वप्रमाणैर्व्याहतो हेतुरहेतुः– "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः १–२–६ "इति, वाक्यार्थो ह्यस्य सिद्धान्तः स च वाक्यार्थः –'प्रत्यक्षादीनि नार्थं साधयन्ति ' इति. इदं चावयवानामुपादानमर्थस्य साधनायेति। अथ नोपादीयते? अप्रदर्शितहेत्वर्थस्य दृष्टान्ते न साधकत्वमिति प्रतिषेधो नोपपद्यते– हेतुत्वासिद्धेरिति ॥ १३ ॥

---

पूर्वमस्ति पश्चाच्च प्रतिषेधसिद्धिरिति द्वितीयः कल्पस्तदापि पूर्वसिद्धस्य प्रामाण्यस्य प्रतिषेधासिद्धिः– प्रतिषेधासंभवादित्याह– पश्चादिति। पूर्वसिद्धस्य प्रामाण्यस्य पश्चात्सिद्धेन प्रामाण्यप्रतिषेधेन प्रतिषेधो नोपपद्यते– सिद्धस्य प्रतिषेधासंभवादित्यर्थः। यदि च प्रतिषेध्यस्य प्रामाण्यस्य तत्प्रतिषेधस्य च युगपत्सिद्धिरिति तृतीयः कल्पस्तदापि प्रतिषेध्यस्य प्रामाण्यस्य सिद्धिस्वीकारात् तत्प्रतिषेधो नोपपद्यते इति व्यर्थ एवेत्याह–युगपदिति। प्रतिषेधलक्षणे= प्रतिषेधरूपे वाक्येऽनुपपद्यमाने च प्रत्यक्षादीनां प्रामाण्यमुपपन्नमेवेत्याह–प्रतिषेधलक्षणे इति ॥ १२ ॥

दोषान्तरमाह– सर्वेति, सर्वेषां प्रमाणानां प्रामाण्यस्य प्रतिषेधे भवता कृते शब्दप्रमाणरूपस्य प्रामाण्यप्रतिषेधस्यापि प्रामाण्यं नोपपद्यते तथा चाऽप्रमाणेन पदार्थसिद्ध्यसंभवात् प्रामाण्यप्रतिषेधस्यानुपपत्तिस्ततश्च सिद्धं प्रमाणानां प्रामाण्यमिति सूत्रान्वयः। उक्तां प्रतिषेधानुपपत्तिं जिज्ञासते– कथमिति। उत्तरमाह– त्रैकाल्येति, प्रमाणानामप्रामाण्ये त्रैकाल्यासिद्धेरितिहेतुरुक्तस्तत्र हेतोरुदाहरणानुकूल्येनैव साध्यसाधकत्वं भवतीति त्रैकाल्यासिद्धेरित्यपि हेतुना प्रामाण्याभावसाधनार्थमुदाहरणं प्रदर्शनीयं तत्र यद्युदाहरणमुपादीयते= प्रदर्श्यते तदा तत्र दृष्टान्ते हेत्वर्थस्य= हेतुभूतपदार्थस्य त्रैकाल्यासिद्धेः साध्यसाधकत्वं प्रदर्शनीयं साध्यसाधकत्वं चात्र प्रामाण्याभावसाधकत्वमेव प्रामाण्याभावसिद्धिश्च प्रामाण्यप्रसिद्धिं विना नोपपद्यते– निष्प्रतियोगिकाभावस्यासंभवात् प्रामाण्यप्रसिद्धिश्च प्रत्यक्षादिष्वेव प्रदर्शनीयेति प्रत्यक्षादिषु प्रामाण्यप्रसिद्धिस्वीकारे प्रत्यक्षादीनामप्रामाण्यं नोपपद्यते इत्याशयः प्रतीयते, किं वा प्रदर्शितदृष्टान्ते हेतोः साध्यसाधकत्वे प्रामाण्यं स्वीकार्यमेव तथा च न प्रामाण्यप्रतिषेधोपपत्तिरिति न प्रत्यक्षादीनामप्यऽप्रामाण्यमित्याशयः, विपक्षे बाधकमाह– अथेति। उपादीयमानमपीति– प्रदर्शितमप्युदाहरणमर्थम्= प्रामाण्याभावं न साधयिष्यति– प्रत्यक्षादीनां सर्वेषामपि प्रमाणानामप्रामाण्यस्वीकारेण प्रामाण्याभावसाधकानुमानस्याप्यऽप्रामाण्यप्रसङ्गात् अनुमानाप्रामाण्ये च प्रदर्शितस्यापि दृष्टान्तस्य साध्यसाधकत्वासंभवादित्यर्थः । त्रैकाल्यासिद्धेरितिहेतोर्हेत्वाभासत्वमाह– सोयमिति, प्रमाणानामप्राण्ये किमपि न सिध्यतीति प्रमाणाप्रामाण्यसाधकोयं हेतुः सर्वप्रमाणैर्व्याहत एवेत्यऽहेतुः= हेत्वाभास एव। कोयं हेत्वाभास इत्याशङ्क्याह– सिद्धान्तमिति, सूत्रमिदं पूर्वत्र व्याख्यातं तथा च सिद्धान्तविरुद्धत्वाद् विरुद्ध इत्यर्थः। अस्य= पूर्वपक्षिणः सिद्धान्तमाह– वाक्यार्थ इति, वाक्यार्थः= प्रतिषेधसूत्रार्थः। तादृशवाक्यार्थमाह– प्रत्यक्षादीनीति, प्रत्यक्षादीन्यप्रमाणानीति पूर्वपक्षिणः सिद्धान्तस्तत्साधकत्वं च त्रैकाल्यासिद्धेरितिहेतोर्न संभवति प्रत्युत स्वप्रामाण्यापेक्षित्वेनाऽप्रामाण्यविरुद्धत्वमेव जातमिति नाऽप्रामाण्यसाधकत्वं संभवतीत्यर्थः। स्वाभिप्रायमाह– इदमिति, अत्र प्रत्यक्षादिकं पक्षीकृत्य अर्थासाधकत्वम्= अप्रामाण्यं त्रैकाल्यासिद्धेरितिहेतुना साध्यते तथा चेदं प्रतिज्ञाद्यवयवानामुपादानम्=

## तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येप्यवयवाश्रितानां प्रामाण्यं प्रसज्यते– अविशेषादिति. एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्ते इति । "विप्रतिषेधः" इति वीत्ययमुपसर्गः संप्रतिपत्त्यर्थे न व्याघाते– अर्थाभावादिति ॥ १४ ॥

## त्रैकाल्याप्रतिषेधश्च– शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

किमर्थं पुनरिदमुच्यते ? पूर्वोक्तनिबन्धनार्थम्. यत्तावत् पूर्वोक्तम्– 'उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनम्' इति तदितः समु-

---

प्रयोगोऽर्थस्य= अप्रामाण्यस्य साधनार्थैवास्ति तत्रैतादृशानुमानस्य प्रमाण्यं स्वीकार्यमिति न सर्वेषां प्रमाणानामप्रामाण्यमुपपद्यते इत्यर्थः । द्वितीयपक्षमाह– अथेति, उक्तदोषपरिजिहीर्षया यद्युदाहरणं नोपादीयते तदा दृष्टान्ते अप्रदर्शितहेत्वर्थस्य= अप्रदर्शितहेतुत्वस्य= व्याप्तिग्रहरहितस्य त्रैकाल्यासिद्धेरितिहेतोः प्रमाण्याभावसाधकत्वं नोपपद्यते इति प्रामाण्यप्रतिषेधो नोपपद्यते– प्रामाण्यप्रतिषेधकस्य त्रैकाल्यासिद्धेरिति हेतोर्हेतुत्वासिद्धेरित्यन्वयः । दृष्टान्तप्रदर्शनं विना साध्यसाधकत्वं न संभवतीत्यर्थः ॥ १३ ॥

विपक्षे बाधकमाह– तदिति, तत्= तस्य प्रामाण्यप्रतिषेधवाक्यस्य यदि प्रामाण्यमभ्युपगम्यते तदा सर्वेषां प्रमाणानां विप्रतिषेधः= प्रामाण्यप्रतिषेधो नोपपद्यते– प्रामाण्यप्रतिषेधवाक्यस्यापि प्रमाणत्वात् तस्य च त्वया प्रामाण्यस्वीकारात् किं च तद्दृष्टान्तेन सर्वेषामपि प्रमाणानां प्रामाण्यं सिद्धम्, प्रामाण्यप्रतिषेधवाक्यस्य प्रामाण्यास्वीकारे च तेन प्रामाण्यप्रतिषेधो नोपपद्यते– अप्रमाणस्य साधकत्वासंभवादिति सूत्रार्थः । व्याचष्टे– प्रतिषेधेति, प्रतिषेधलक्षणे= प्रतिषेधरूपे स्ववाक्ये– 'प्रत्यक्षादीन्यप्रमाणानि त्रैकाल्यासिद्धेः' इतिवाक्ये अवयवाश्रितानाम्= प्रतिज्ञाद्यवयवमूलकानां तेषामनुमानप्रत्यक्षादीनां प्रामाण्ये स्वीकृते परवाक्येपि प्रतिज्ञाद्यवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्यं प्रसज्यते– अविशेषात्= स्ववाक्यस्य प्रामाण्यं न तु परवाक्यस्येत्यत्र विशेषाभावादित्यन्वयः । उपसंहरति– एवमिति, एवम्= स्ववाक्यप्रामाण्यात् तद्दृष्टान्तेन च सर्वेषां प्रमाणानां प्रामाण्यापत्त्या न सर्वप्रमाणप्रामाण्यप्रतिषेध उपपद्यते, प्रतिषिध्यन्ते= प्रतिषेद्धुमर्हन्ति । विप्रतिषेधशब्दघटकस्य वीत्युपसर्गस्यार्थमाह– वीति, संप्रतिपत्त्यर्थे= विशेषार्थे, व्याघाते= विरुद्धार्थे न– अर्थाभावात्= वाक्यार्थानुपपत्तेः, अत्र यदि वीत्ययमुपसर्गो व्याघाते स्यात्तदा सर्वप्रमाणानां विप्रतिषेधः= प्रतिषेधाभावस्तस्य च नेतिपदेन प्रतिषेधे सर्वप्रमाणानां प्रतिषेध एव प्राप्तः स्यात् स च न सूत्रार्थः संभवतीति वीत्ययमुपसर्गो न व्याघाते किं तु संप्रतिपत्त्यर्थक इत्यर्थः ॥ १४ ॥

प्रमाणानां त्रैकाल्यप्रतिषेधो नोपपद्यते इत्याह– त्रैकाल्येति, प्रमाणानां त्रैकाल्यस्य= कालत्रयेपि यथायथं प्रमेयग्राहकत्वस्य अप्रतिषेधः= प्रतिषेधो नोपपद्यते– यथा शब्दात्= वाद्योत्पन्नशब्दाद् आतोद्यस्य= तच्छब्दोत्पादकवाद्यस्य सिद्धिः= अनुमितिर्भवति तथा तत्सिद्धेः=प्रमाणानां त्रैकाल्यसिद्धिः संभवति किं वा प्रमाणैर्जायमानप्रमया प्रमाणानां प्रामाण्यसिद्धिः संभवति– प्रामाण्यं विना प्रमोत्पत्तेरसंभवात् किं वा तत्सिद्धेः= प्रमाणात् प्रमेयसिद्धेः संभवात् प्रमाणानां त्रैकाल्यं सिद्धमिति न त्रैकाल्यप्रतिषेधः संभवतीति सूत्रार्थः । अत्र 'शब्दादातोद्यसिद्धिवत् त्रैकाल्याप्रतिषेधसिद्धिः' इत्येवं वक्तव्यमासीत्, अत एवात्र– "अत्र चकारान्तं न सूत्रान्तर्गतमिति तत्त्वालोके" इतिवृत्तिः । त्रैकाल्यासिद्धिस्तु पूर्वं द्वादशसूत्रे प्रत्याख्यातैवेति किमर्थमिदं सूत्रमिति जिज्ञासते– किमर्थमिति । उत्तरमाह– पूर्वेति, पूर्वोक्तस्य निबन्धनार्थम्= दार्ढ्यार्थम् । पूर्वोक्तं वाक्यमुपस्थापयति– उपलब्धीति, तदेतत् समाधान-

त्थानं यथा विज्ञायेत । अनियमदर्शी खल्वयं ऋषिर्नियमेन प्रतिषेधं प्रत्याचष्टे— त्रैकाल्यस्य चायुक्तः प्रतिषेध इति ।

तत्रैकां विधामुदाहरति— शब्दादातोद्यसिद्धिवदिति, यथा पश्चात् सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते. साध्यं चातोद्यं साधनं च शब्दः. अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमानं भवतीति— वीणा वाद्यते वेणुः पूर्यते इति स्वनविशेषेणातोद्यविशेषं प्रतिपद्यते. तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यते इति. निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदितव्यमिति । कस्मात् पुनरिह तन्नोच्यते पूर्वोक्तमुपपाद्यते ? इति, सर्वथा तावदयमर्थः प्रकाशयितव्यः स इह वा प्रकाश्येत तत्र वा न कश्चिद्विशेष इति । प्रमाणं प्रमेयमिति च समाख्या समावेशेन वर्तते— समाख्यानिमित्तवशात्. समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम् उपलब्धिविषयश्च प्रमेयमिति. यदा चोपलब्धिविषयः कचिदुपलब्धिसाधनं भवति तदा प्रमाणं प्रमेयमिति चैकोऽर्थोऽभिधीयते ॥ १५ ॥

---

भाष्यारम्भे द्रष्टव्यम् । तदिति— उपलब्धिहेतोरित्यादिभाष्यं यत्पूर्वमुक्तं तत्= तस्य इतः= अस्मात् सूत्रात् समुत्थानम्= उपपत्तिः समर्थनं वा यथा विज्ञायेत अत इदं सूत्रमुच्यते इत्यन्वयः प्रतिभाति, वस्तुतस्त्वयुक्तमेवेदं पूर्वजातेन सूत्रेण पश्चाद्भाविभाष्यस्य समर्थनासंभवात् । सूत्रप्रथमखण्डस्याभिप्रायमाह— अनियमेति, अनियमदर्शी= प्रमाणप्रमेययोरुक्तरीत्या पूर्वापरसहभावानामनियमदर्शी अयम्= सूत्रकारो ऋषिः पूर्वपक्षिणा पूर्वापरसहभावनियमेन= तादृशनियममाश्रित्य नवमसूत्रमारभ्य यः प्रामाण्यप्रतिषेध उक्तस्तं प्रत्याचष्टे इत्यन्वयः । प्रत्याख्यानवाक्यमाह— त्रैकाल्यस्येति, तदिदं सूत्रपूर्वखण्डस्य व्याख्यानम् । प्रमाणप्रमेययोः पूर्वापरसहभावनियमो नास्ति येन त्रैकाल्यप्रतिषेधः स्यात् किं तु यथायथं पूर्वापरसहभावसंभवात् त्रैकाल्यमुपपद्यते इत्यर्थः ।

तत्रेति— तत्र= पूर्वापरसहभावेषु. विधाम्= प्रकारम् । उक्तं व्याचष्टे— यथेति, आतोद्यम्= वाद्यं पूर्वसिद्धं तदुत्पन्नेन तत्पश्चाद्भाविना शब्देनानुमीयते— एतच्छब्दकारणीभूतं वाद्यं गृहाभ्यन्तरेऽस्तीति । साध्यसाधनपदार्थविभागमाह— साध्यमिति । पर्यवसितमाह— अन्तर्हिते इति, अन्तर्हिते= प्रत्यक्षागोचरे विषयत्वं सप्तम्यर्थः, स्वनतः= शब्दात् । अनुमितिमाह— वीणेति, वेणौ फूत्कारपूरणेन वादनं भवतीति "पूर्यते" इत्युक्तम् । दृष्टान्तमुपसंहरति— स्वनेति, वीणाशब्देन वीणां वेणुशब्देन वेणुं प्रतिपद्यते= जानाति= अनुमिनोतीत्यर्थः । प्रकृतमाह— तथेति, यथा पूर्वसिद्धमातोद्यं तच्छब्देन पश्चाद्भाविना प्रतिपद्यते तथा पूर्वसिद्धं घटादिकं पश्चाद्भाविना प्रत्यक्षादिप्रमाणेन प्रतिपत्तुं शक्यते इति न प्रमाणानामप्रामाण्यापत्तिरित्यर्थः । प्रकृतमुपसंहरति— निदर्शनेति, "शब्दादातोद्यसिद्धिवत्" इत्यस्य सूत्रवाक्यस्य निदर्शनार्थत्वात्= दृष्टान्तार्थत्वात्= दिक्प्रदर्शनार्थत्वात् प्रमाणप्रमेययोः पूर्वापरसहभावेषु शेषयोर्द्वयोः प्रकारयोः समाधानभाष्यारम्भोक्तमुदाहरणं वेदितव्यं यथा "कचिदुपलब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयो यथाऽऽदित्यस्य प्रकाशः" इति, उत्पत्तिकालिकविषयस्य विज्ञाने प्रमाणप्रमेययोः सहभाव उदाहर्तव्य इति । तादृशप्रकारद्वयमत्र किं नोदाहृतमिति जिज्ञासते— कस्मादिति । उपपाद्यते= स्मार्यते । उत्तरमाह— सर्वथेति । अयमर्थः= प्रमाणप्रमेययोः पूर्वापरसहभावः । प्रकाशयितव्यः= उदाहर्तव्यः । तत्र= पूर्वत्र । प्रमाणमपि प्रमेयं भवत्येवेत्याह— प्रमाणमिति । समाख्यासमावेशे हेतुमाह— समाख्येति । प्रमाणप्रमेयसमाख्ययोर्निमित्तम्= प्रवृत्तिनिमित्तमाह—समाख्यानिमित्तमिति । समावेशमुदाहरति— यदेति, यथैकैमेव चक्षुरुपलब्धिसाधनत्वात् प्रमाणमुपलब्धिविषयत्वाच्च प्रमेयमपि भवति, एवमेकोपि पदार्थः प्रत्यक्षादिः प्रमाणं च प्रमेयं च भवतीत्यभिधीयते इति न कश्चिद्विरोधः । स्पष्टमन्यत् ॥ १५ ॥

अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

## प्रमेयता च तुलाप्रामाण्यवत् ॥ १६ ॥

गुरुत्वपरिमाणज्ञानसाधनं तुला प्रमाणम्. ज्ञानविषयो गुरुद्रव्यं सुवर्णादि प्रमेयम्. यदा (च) सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति, एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः— आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः उपलब्धौ च स्वातन्त्र्यात् प्रमाता, बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्. उपलब्धिविषयत्वात् प्रमेयम्. उभयाभावात् प्रमितिः, एवमर्थविशेषे समाख्यासमावेशो योज्यः ।

तथा च कारकशब्दा निमित्तवशात् समावेशेन वर्तन्ते इति. 'वृक्षस्तिष्ठति' इति स्वस्थितौ स्वातन्त्र्यात् कर्ता, 'वृक्षं पश्यति' इतिदर्शनेनाप्तुमिष्यमाणत्वात् कर्म. 'वृक्षेण चन्द्रमसं ज्ञापयति' इति ज्ञापकस्य साधकतमत्वात् करणम्. 'वृक्षायोदकमासिञ्चति' इति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति संप्रदानम्. 'वृक्षात् पर्णं पतति' इति "ध्रुवमपायेऽपादानम्" इत्यपादानम्. 'वृक्षे वयांसि सन्ति' इति "आधारोऽधिकरणम्" इत्यधिकरणम्, एवं च सति न द्रव्यमात्रं

---

अग्रिमसूत्रमवतारयति— अस्येति, अस्यार्थस्य= प्रमाणप्रमेयसमाख्ययोः समावेशस्य. अवद्योतनार्थम्= उपपादनार्थम्, इदम्= अग्रिमसूत्रम् । प्रमेयतेति— यथा तुलायाः पदार्थान्तरपरिमाणज्ञाने प्रमाणत्वं भवति तुलान्तरेण तत्तुलायाः परिमाणज्ञाने च प्रमेयत्वमपि भवति तथा प्रत्यक्षादिप्रमाणानामपि प्रमेयत्वमपि संभवति— समाख्यानिमित्तात्= यथोपलब्धिसाधनत्वात् प्रमाणत्वमुपलब्धिविषयत्वाच्च प्रमेयत्वमितिसूत्रार्थः । अत्र 'तुलावत्' किं वा 'तुलाप्रमाणवत्' इति वक्तव्यमासीत् । तुलायाः प्रामाण्येपि यथा प्रमेयता तद्वदेव सर्वप्रमाणानां प्रमेयता संभवतीति सूत्रान्वयः । व्याचष्टे— गुरुत्वेति, गुरुत्वादिलक्षणपरिमाणज्ञानसाधनत्वात् तुला प्रमाणं प्रमेयं च तया सुवर्णादि । तुलायाः प्रमाणत्वमुपपाद्य प्रमेयत्वमुपपादयति— यदेति, सुवर्णादिना= पलादिना परिमाणद्रव्येन तुलान्तरं व्यवस्थाप्यते= परिमीयते यदा तदा तादृशतुलान्तरस्य ज्ञाने सुवर्णादि परिमाणद्रव्यं प्रमाणं भवति तादृशतुलान्तरं च प्रमेयं भवतीत्येकस्या एव तुलायाः सुवर्णादेश्च प्रमाणत्वं प्रमेयत्वं चोपपादितम् एवं सर्वप्रमाणानां प्रमेयत्वमपि संभवति— ज्ञानविषयत्वादित्यन्वयः । अत्र "सुवर्णादि" इत्यत्र 'तुलान्तरम्' इतिवक्तव्यमासीत् तथा च तुलान्तरेण तुलान्तरं प्रमेयमित्यर्थः स्यात् । उपसंहरति— एवमिति, अनवयवेन= साकल्येन, तन्त्रार्थः= शास्त्रसिद्धान्तः= एकत्र विविधसमाख्यासमावेशः । उद्दिष्टः= प्रतिपादितः । आत्मनि प्रमेयप्रमातृसमाख्ययोः समावेशमाह— आत्मेति, नवमसूत्रे परिपठितः, प्रमातृत्वमाह— उपलब्धाविति, प्रमाता= प्रमितिकर्ता "स्वतन्त्रः कर्ता" इत्यनुसंधेयम् । बुद्धौ प्रमाणप्रमेयप्रमितिसमाख्यानां समावेशमाह— बुद्धिरिति, उभयाभावात्= उपलब्धिसाधनत्वविषयत्वयोरभावात्, प्रमितिरिति प्रमाणजन्यो बोधः स च न प्रमाणं न च प्रमेयम् । उपसंहरति— एवमिति, अर्थविशेषे= पदार्थान्तरेषु । यथेन्द्रियादिकमुपलब्धिसाधनत्वात् प्रमाणमुपलविषयत्वाच्च प्रमेयमित्यलम् ।

कर्त्रादिकारकशब्दानां स्वस्वसमाख्याप्रवृत्तिनिमित्तवशादेकत्र समावेशमुदाहरति— तथा चेत्यादिना । एकस्यैव वृक्षस्य क्रमेण षड्विधकारकत्वमुदाहरति— वृक्ष इत्यादिना, कर्तृसमाख्यासमावेशे स्वातन्त्र्यं निमित्तम्— "स्वतन्त्रः कर्ता" इतिसूत्रम् १। कर्मत्वमाह— वृक्षमिति, दर्शनेनाप्तुमिष्यमाणत्वात्= दर्शनविषयत्वात्, वृक्ष इतिशेषः, "कर्तुरीप्सिततमं कर्म" इतिसूत्रम् २। करणत्वमाह— वृक्षेणेति, ज्ञापकस्य चैत्रादेः ज्ञापनसाधकतमत्वाद् वृक्षः करणम् "साधकतमं करणम्" इतिसूत्रम् ३। संप्रदानत्वमाह— वृक्षायेति, वृक्षः संप्रदानम् "कर्मणा यमभिप्रैति स संप्रदानम्" इतिसूत्रम् ४। अपादानत्वमाह— वृक्षादिति, सूत्रमाह— ध्रुवमिति । इत्यत्र वृक्षोऽपादानम् ५। अधिकरणत्वमाह— वृक्षे इति,

कारकं न वा क्रियामात्रम् । किं तर्हि ?, क्रियासाधनं क्रियाविशेषयुक्तं कारकम्– यत् क्रियासाधनं स्वतन्त्रः स कर्ता. न द्रव्यमात्रं न क्रियामात्रम्, क्रियया व्याप्तुमिष्यमाणतमं कर्म. न द्रव्यमात्रं न क्रियामात्रम्, एवं साधकतमादिष्वपि, एवं च कारकाऽन्वाख्यानं यथैवोपपत्तित एवं लक्षणतः कारकाऽन्वाख्यानमपि न द्रव्यमात्रेण न क्रियया वा । किं तर्हि ?. क्रियासाधने क्रियाविशेषयुक्त इति, कारकशब्दश्चायं प्रमाणं प्रमेयमिति स च कारकधर्मं न हातुमर्हति. अस्ति भो कारकशब्दानां निमित्तवशात् समावेशः. प्रत्यक्षादीनि च प्रमाणानि– उपलब्धिहेतुत्वात्. प्रमेयं च– उपलब्धिविषयत्वात्, संवेद्यानि प्रत्यक्षादीनि प्रमाणानि च– 'प्रत्यक्षेणोपलभे अनुमानेनोपलभे उपमानेनोपलभे आगमेनोपलभे. प्रत्यक्षं मे ज्ञानम् आनुमानिकं मे ज्ञानम् औपमानिकं मे ज्ञानम् आगमिकं मे ज्ञानम्' इति विशेषा गृह्यन्ते, लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेण– 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानम्' इत्येवमादिना ॥ १६ ॥

---

सूत्रमाह– आधार इति, इत्यत्र वृक्षोधिकरणम् । क्रियामात्रस्य वा क्रियारहितद्रव्यमात्रस्य वा कारकत्वं न भवति यद्येवं स्यात्तदा कर्त्रादिकारकशब्दानामेकत्र समावेशो न स्यात् स्वरूपस्य वैविध्यासंभवादित्याह– एवमिति । कारकस्वरूपं जिज्ञासते– किमिति । कारकस्वरूपमाह– क्रियेति, क्रियासाधनत्वे सति क्रियाविशेषयुक्तत्वं कारकत्वं यथा दण्डस्य घटाद्युत्पत्तिसाधनत्वमप्यस्ति स्वयमपि चक्रभ्रामणादिक्रियायुक्तत्वमस्ति एवमन्यत्रापि बोध्यम्. तथा च द्रव्यक्रिययोस्तत्तद्विशेष्यविशेषणभाववैविध्येन विशेषणीभूतक्रियावैविध्येन वैकत्र विविधसमाख्यानां समावेशः संभवतीत्यर्थः । कर्तृसमाख्यानिमित्तमाह–यदिति, स्वतन्त्रः क्रियासाधनमित्यन्वयः । प्रतिषेध्यमाह– नेति । कर्मसमाख्यानिमित्तमाह– क्रिययेति । प्रतिषेध्यमाह– नेति । कर्म विना क्रिया न भवतीति स्पष्टमेव । साधकतमादिषु= करणादिषु. व्याख्येयमितिशेषः, यथा 'साधकतमं करणम्' 'दानोद्देश्यं संप्रदानम्' 'विभागे ध्रुवमपादानम्' 'आधारोऽधिकरणम्' इति न द्रव्यमात्रं क्रियामात्रं वा करणादिकं भवतीति । उपसंहरति– एवं चेति, कर्त्रादिकारकाणाम् 'क्रियायां स्वातन्त्र्यात् कर्ता' 'परसमवेतक्रियाफलशालित्वात् कर्म' इत्याद्युपपत्तितोऽन्वाख्यानम्= उपपादनं तत्र च न द्रव्यमात्रस्य वा क्रियामात्रस्य वा कारकत्वं. तथा कर्त्रादिकारकाणाम् 'क्रियासाधने स्वतन्त्रः कर्ता' 'परसमवेतक्रियाफलशालि कर्म' इत्यादिलक्षणतोप्यन्वाख्यानं न द्रव्यमात्रेण= द्रव्यत्वमात्रेण न वा क्रियया= क्रियात्वमात्रेण संभवति, द्रव्यत्वं वा क्रियात्वं वा न कारकलक्षणं किं तूक्तरूपमेवेत्यर्थः । कारकलक्षणान्वाख्यानं जिज्ञासते– किमिति । उत्तरमाह– क्रियासाधने इति, पूर्वं व्याख्यातम् । पर्यवसितमाह– कारकशब्द इति, 'प्रमीयतेऽनेन' इतिव्युत्पत्त्या प्रमाणमिति करणकारकशब्दः, 'प्रमीयते' इतिव्युत्पत्त्या प्रमेयमिति कर्मकारकशब्दः, सः= प्रमाणप्रमेयादिकारकशब्दवाच्यश्च कारकधर्मम्= उपलब्धिसाधनत्वविषयत्वादिकं धर्मं हातुं नार्हतीति । फलितमाह– अस्तीति, कर्त्रादिकारकशब्दानामेकत्रैव वृक्षे समावेश उदाहृतस्तथा च प्रमाणप्रमेयशब्दयोरपि कारकशब्दत्वान् प्रवृत्तिनिमित्तवशेनैकत्र समावेशः संभवत्येव तदेवाह– प्रत्यक्षादीनीति, प्रत्यक्षादीनि उपलब्धिहेतुत्वात् प्रमाणानि भवन्ति उपलब्धिविषयत्वाच्च प्रमेयाण्यपि भवन्ति– प्रमेयत्वस्य केवलान्वयित्वात् । प्रत्यक्षादीनां प्रमेयत्वं प्रमाणत्वं चोपसंहरति– संवेद्यानीति, संवेद्यानीत्यनेन प्रमेयत्वमुक्तम् । प्रत्यक्षादीनां प्रमाणत्वमुदाहरति– प्रत्यक्षेणेति, तृतीययोपलब्धिसाधनत्वं प्राप्तं तेन च प्रमाणत्वम्, प्रत्यक्षादीनां प्रमेयत्वमुदाहरति– प्रत्यक्षमिति, अत्र प्रत्यक्षादीनां परामर्शान् प्रमेयत्वं प्राप्तम् । इति= इत्येवं विशेषाः= प्रमाणत्वप्रमेयत्वलक्षणा विशेषाः । सामान्यतः प्रमाणत्वमुक्त्वा प्रत्यक्षत्वादिविशेषलक्षणमुक्तं सूचयति– लक्षणत इति, विशेषेण= प्रत्यक्षत्वादिविशेषतस्तु लक्षणतो ज्ञाप्यमानानि ज्ञायन्ते लक्षणं च 'इन्द्रियार्थसंनिकर्षोत्पन्नम्' इत्यादिकं तच्च पूर्वमुक्तमित्यर्थः ॥ १६ ॥

सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतः ? अथाऽन्तरेण प्रमाणम्= असाधना ? इति, कश्चात्र विशेषः ?,

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७॥**

यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते ? येन प्रमाणेनोपलभ्यन्ते तत् प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यते इत्यनवस्थामाह– तस्याप्यन्येन तस्याप्यन्येनेति, न चानवस्था शक्याऽनुज्ञातुम्– अनुपपत्तेरिति ॥ १७ ॥

**तद्विनिवृत्तेर्वा ? प्रमाणसिद्धिवत् प्रमेयसिद्धिः ॥ १८ ॥**

यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते ? आत्मेत्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यति– अविशेषात्, एवं च सर्वप्रमाणविलोप इति ॥ १८ ॥

अत आह–

**न– प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः ॥ १९ ॥**

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वाद् दृश्यदर्शने प्रमाणं स च प्रत्यक्षान्तरेण= चक्षुषः

---

पूर्वपक्षी जिज्ञासते– सेयमिति, प्रत्यक्षादीनां प्रमेयत्वेन योपलब्धिरुक्ता सा प्रमाणान्तरेण भवति किं वा विनैव प्रमाणान्तरमिति जिज्ञासा, द्वितीयपक्षं विशदयति– असाधनेति । उक्तोपलब्धिः प्रमाणान्तरेण वा भवतु प्रमाणान्तरं विना वा कोत्र विशेष इति सिद्धान्ती जिज्ञासते– कश्चेति । पूर्वपक्षी सूत्रेण विशेषमाह– प्रमाणत इति, यदि प्रत्यक्षादीनामुपलब्धिः प्रमाणान्तरेण सिध्यति तदा तादृशप्रमाणान्तरस्याप्युपलब्धिः प्रमाणान्तरेणैव स्यादित्युत्तरोत्तरं प्रमाणोपलब्ध्यर्थं प्रमाणानाम्= प्रमाणविषयकाणां प्रमाणान्तराणां सिद्धिप्रसङ्गः= आपत्तिः स्यादित्यनवस्थादोष इति प्रथमपक्षे विशेष इतिसूत्रान्वयः । व्याचष्टे– यदीति, प्रमाणेन= प्रमाणान्तरेण । उक्ते दोषमाह– येनेति, प्रत्यक्षादीनीति शेषः, तथा च प्रत्यक्षाद्युपलब्ध्यर्थं प्रमाणान्तरं स्वीकार्यं तादृशप्रमाणान्तरस्याप्युपलब्ध्यर्थं प्रमाणान्तरं स्वीकार्यमिति तस्य तस्य प्रमाणान्तरस्य अन्येनान्येन प्रमाणान्तरेणोपलब्धावनवस्थेत्याह– तस्येति । अनवस्था च न स्वीकर्तुं शक्येत्याह– न चेति । उक्ते हेतुमाह– अनुपपत्तेरिति, अनवस्थायां पदार्थसिद्धेः पर्यवसानं न संभवतीति नानवस्था स्वीकर्तुं शक्येत्यन्वयः ॥ १७ ॥

प्रमाणान्तरमन्तरेण प्रमाणसिद्धौ दोषमाह– तदिति, तद्विनिवृत्तेः= प्रमाणान्तरविनिवृत्तेः, यदि प्रमाणन्तरं विना प्रत्यक्षादिप्रमाणसिद्धिरिति नानवस्था ? तदा यथा प्रमाणं विना प्रमाणसिद्धिस्तथा प्रमाणं विना प्रमेयसिद्धिरपि स्यादिति सर्वप्रमाणविलोप एव स्यादिति द्वितीयपक्षे विशेष इतिसूत्रार्थः । व्याचष्टे– यदीति, निवर्तते= नापेक्ष्यते, अत्र पक्षे दोषमाह– आत्मेति, विषयमात्रोपलब्धौ प्रमाणापेक्षा न स्यादित्यर्थः, प्रमेयस्य प्रमाणेनोपलब्धिर्न प्रमाणस्येत्यत्र विशेषाभावात् । उपसंसहरति– एवं चेति ॥१८॥

अग्रिमसूत्रमवतारयति– अत इति, अतः= पूर्वोक्तदोषप्राप्तेः । नेति— पूर्वोक्तदोषो नास्तीत्यर्थः, उक्ते हेतुमाह– प्रदीपेति, यथा घटादिभासकस्य प्रदीपप्रकाशस्य सिद्ध्यर्थम्= उपलब्ध्यर्थं प्रकाशान्तरापेक्षा न भवति तथा तत्सिद्धेः= प्रमाणसिद्ध्यर्थमपि प्रमाणान्तरापेक्षा न भवतीति प्रदीपप्रकाशसिद्धिवत् प्रमाणसिद्धिस्वीकारे न कोपि दोष इतिसूत्रार्थः, यदा हि प्रमाणानामुपलब्धिः प्रमाणान्तरेण तदा प्रमाणानां प्रमेयत्वमेव न प्रमाणत्वं प्रमेयस्य च प्रमाणेनोपलब्धौ न दोषः यदा हि प्रमाणत्वं तदा नोपलब्धिविषयत्वमिति न प्रमाणान्तरापेक्षेत्याशयः, अन्यथा स्वतःप्रामाण्यापत्तिः स्यात् सा चात्रानिष्टेत्यनुसंधेयम् व्याचष्टे–यथेति, प्रत्यक्षाङ्गत्वात्= प्रत्यक्षसहकारित्वात्, इत्यनेन प्रदीपप्रकाशस्य प्रमाणत्वमुक्तं. प्रमेयत्वं चाह– स चेति,

संनिकर्षेण गृह्यते, प्रदीपभावाभावयोर्दर्शनस्य तथाभावाद् दर्शनहेतुरनुमीयते. 'तमसि प्रदीपमुपाददीथाः' इत्याप्तोपदेशेनापि प्रतिपद्यते, एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः ।

इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते. अर्थाः प्रत्यक्षतो गृह्यन्ते. इन्द्रियार्थसंनिकर्षास्त्वावरणेन लिङ्गेनानुमीयन्ते. इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद् गृह्यते. एवं प्रमाणविशेषो विभज्य वचनीयः । यथा च दृश्यः सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते एवं प्रमेयं सत् किंचिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्थां लभते, सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो न च प्रमाणमन्तेरण निस्साधनेति ॥

---

तस्य प्रदीपप्रकाशस्य चक्षुस्संनिकर्षग्राह्यत्वात् प्रमेयत्वमपि प्राप्तमिति प्रदीपप्रकाशवत् सर्वप्रमाणानां प्रमाणत्वं प्रमेयत्वं चोपपन्नमित्यर्थः । प्रदीपप्रकाशस्यानुमितिविषयत्वमाह— प्रदीपभावेति, तथाभावात्= भावाभावयोः संभवात्, प्रदीपसत्त्वे दर्शनसत्त्वं प्रदीपासत्त्वे तमसि दर्शनासत्त्वमित्यन्वयव्यतिरेकाभ्यां प्रदीपप्रकाशो दर्शनहेतुरित्यनुमीयते अनुमितिविषयत्वाच्च प्रमेयत्वं प्राप्तम्, प्रदीपप्रकाशस्य शाब्दबोधविषयत्वमाह— तमसीति, इत्याप्तोपदेशेनापि प्रदीपप्रकाशो दर्शनहेतुरिति प्रतिपद्यते= ज्ञायते इति ज्ञानविषयत्वात् प्रमेयत्वं प्राप्तमित्यन्वयः । उपसंहरति— एवमिति, यथादर्शनम्= लोके यथा दृश्यते तदनुसारेणेत्यर्थः । वस्तुतस्तु प्रदीपप्रकाशस्य ग्राहकत्वेन प्रमाणत्वं ग्राह्यत्वेन प्रमेयत्वं चोपक्रम्य एवमुपसंहारः प्रमादकृत एवेत्यनुसंधेयम्— उपक्रमोपसंहारयोरेकविषयकत्वनियमात् । प्रत्यक्षादीनां प्रत्यक्षादिभिरेव सिद्धिसंभवात् प्रमाणान्तरस्वीकारापेक्षा नास्तीत्याशयः ।

प्रत्यक्षकारणीभूतानां पदार्थानां ज्ञानप्रकारमाह— इन्द्रियाणीति, आत्मा विभुरेवातो मनस्संयुक्तोऽप्यथापि कदाचिद् घटादिप्रत्यक्षं न भवति कदाचिद् भवतीति घटादिज्ञानेन तत्साधनीभूतानीन्द्रियाण्यनुमीयन्ते— क्रियामात्रस्य सकरणकत्वनियमेन ज्ञानक्रियाया अपि सकरणकत्वात् ज्ञानक्रियाकरणं चेन्द्रियाणीत्यर्थः । घटादीनां प्रत्यक्षग्राह्यत्वमाह— अर्था इति । इन्द्रियाणामपि आवृतपदार्थग्राहकत्वं न दृश्यते गृहाभ्यन्तरस्थितपदार्थग्रहणाभावादितीन्द्रियाणां ग्राह्येण संनिकर्षापेक्षा प्राप्ता— इन्द्रियैः स्वसंनिकृष्टस्यैव ग्रहणादित्यावरणेन लिङ्गेन= आवरणस्य पदार्थग्रहणप्रतिबन्धकत्वेनेन्द्रियार्थसंनिकर्षा अनुमीयन्ते, प्रत्यक्षस्य ग्रहणप्रकारमाह— इन्द्रियार्थेति, यथात्मनि समवेतत्वादात्मना मनस्संयोगविशेषेण सुखादिकं गृह्यते तथैव प्रत्यक्षादिज्ञानमप्यात्मनि समवेतत्वादात्मना मनस्संयोगविशेषेण गृह्यते चेतनस्य ग्रहणसमर्थत्वात् । स्वाभिप्रायमाह— एवमिति, किं केन प्रमाणेन कथं गृह्यते इति विभज्य= विशेषरूपेण वक्तव्यं न तु सामान्यरूपेण— सर्वस्य सर्वग्राहकत्वाभावात्, तथा च प्रत्यक्षादिज्ञानमात्मना गृह्यते ज्ञानं चात्मसमवेतमेवेति तद्ग्रहणार्थं बाह्यप्रमाणापेक्षा नास्ति येनानवस्था स्यात्. घटादिकं च नात्मसमवेतं येन ज्ञानवद् बाह्यप्रमाणं विनापि गृह्येतेति न सर्वप्रमाणविलोपापत्तिरित्यर्थः । प्रदीपप्रकाशस्य प्रमाणत्वं प्रमेयत्वं चाह— यथेति, दृश्यदर्शनव्यवस्थाम्= प्रमेयप्रमाणस्वरूपताम् । दृश्यतेऽनेनेति दर्शनम्= दर्शनप्रमाणमित्यर्थः । प्रमाणानां प्रमेयत्वमाह— एवमिति, किं चिदर्थजातम्= प्रत्यक्षादिकम् आत्मग्राह्यत्वात् प्रमेयं घटादिग्राहकत्वाच्च प्रमाणमिति प्रमाणप्रमेयव्यवस्थाम्= प्रमाणप्रमेयस्वरूपतां लभते । उपसंहरति— सेयमिति, प्रत्यक्षादीनामुपलब्धिः प्रमाणान्तरतोपि नास्ति येनोक्तानवस्था स्यात् प्रमाणं विनापि नास्ति येन निस्साधना स्यात् ततश्चोक्तरीत्या सर्वप्रमाणविलोपापत्तिः स्यात् । प्रत्यक्षाद्युपलब्धौचात्ममनस्संयोग एव साधनं न बाह्यं प्रमाणमित्युक्तमेवेति नानवस्थेत्यर्थः ॥

तेनैव तस्याऽग्रहणमिति चेत् ? न— अर्थभेदस्य लक्षणसामान्यात् ।

प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम्— अन्येन ह्यन्यस्य ग्रहणं दृष्टमिति, न— अर्थभेदस्य लक्षणसामान्यात्= प्रत्यक्षलक्षणेनाऽनेकोर्थः संगृहीतस्तत्र केन चित् कस्यचिद् ग्रहणमित्यदोषः, एवमनुमानादिष्वपीति, यथोद्धृतेनोदकेनाऽऽशयस्थस्य ग्रहणमिति ॥

ज्ञातृमनसोश्च दर्शनात् ।

'अहं सुखी अहं दुःखी च' इति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते. "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति च तेनैव मनसा तस्यैवानुमानं दृश्यते, ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राह्यस्य चाभेद इति ॥

---

यदुक्तम्— "सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिः" इति तत्रात्माश्रयदोषेणाशङ्कते— तेनैवेति, तनैव प्रत्यक्षेण तस्यैव प्रत्यक्षस्य ग्रहणं नोपपद्यते— आत्माश्रयदोषादसंभवाच्चेत्यर्थः, उक्तं परिहरति— नेति, परिहारहेतुमाह— अर्थेति, लक्षणसामान्यात्= सामान्यलक्षणाद् अर्थभेदस्य= लक्ष्यपदार्थभेदस्य प्राप्तत्वात्. सामान्यलक्षणं हि लक्ष्याणामनेकत्वे एव क्रियते न त्वेकव्यक्तिमात्रस्य प्रत्यक्षादीनां च "इन्द्रियार्थसंनिकर्षोत्पन्नम्" इत्यादि सामान्यलक्षणं कृतं तेन लक्ष्याणां प्रत्यक्षव्यक्तीनां भेदः= अनेकत्वं प्राप्तं तथा चैकस्याः प्रत्यक्षव्यक्तेरपरया प्रत्यक्षव्यक्त्या ग्रहणम्= उपलब्धिर्भवतीति नात्माश्रयदोषो न चाप्यनवस्था— उत्तरोत्तरप्रत्यक्षाणां नियमेन ग्रहणेच्छाया असंभवात् द्वित्रकोटिपर्यन्तं धावनेनाऽनाश्वासनिवृत्तिसंभवादित्यर्थः । अत्र "प्रत्यक्षजातीयेन प्रत्यक्षजातीयस्य ग्रहणमातिष्ठामहे न चानवस्थास्ति— किंचित् प्रमाणं यत् स्वज्ञानेनान्यधीहेतुर्यथा धूमादि किंचित् पुनरज्ञातमेव बुद्धिसाधनं यथा चक्षुरादि. तत्र पूर्वं स्वज्ञाने चक्षुराद्यपेक्षं चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमिति काऽनवस्था, बुभुत्सया च तदपि शक्यज्ञानं सा च कदाचिदेव क्वचिदिति नानवस्था" इति तात्पर्यटीका । व्याचष्टे— प्रत्यक्षादीनामिति, अयं हि सिद्धान्तिवाक्यानुवादः । अत्र पूर्वपक्षी दोषमाह— अन्येनेति, तथा च तेनैव प्रत्यक्षादिना तस्यैव प्रत्यक्षादेर्ग्रहणं नोपपद्यते इत्यर्थः । परिहरति— नेति । परिहारहेतुमाह— अर्थभेदस्येति, एतद्वाक्यं व्याचष्टे— प्रत्यक्षेति, "इन्द्रियार्थसंनिकर्षोत्पन्नम्" इतिप्रत्यक्षलक्षणेन अनेकोर्थः= प्रत्यक्षाणामनेकत्वं प्राप्तं तथा च केनचित् प्रत्यक्षेण कस्यचित् प्रत्यक्षान्तरस्य ग्रहणं भवतीति नात्माश्रयदोषः । एवमनुमानादिष्वप्यन्येनान्यस्य ग्रहणे न कोपि दोष इत्याह— एवमिति । सजातीयेन सजातीयग्रहणे दृष्टान्तमाह— यथेति, यथोर्ध्वमुद्धृतेनोदकेन तत्सजातीयत्वमाशयस्थस्य= कूपादिनिष्ठस्य जलस्य गृह्यते— मधुरमित्यादि. तथैव प्रत्यक्षान्तरेण प्रत्यक्षान्तरग्रहणे न कोपि दोष इत्यर्थः, अत्र "उद्धृतजलजातीयत्वं कूपादिस्थस्य जलस्योद्धृतादन्यस्यैव गृह्यते न तेनैव तस्य ग्रहणं तथेहापीत्यर्थः" इति श्रीगुरुचरणाः ॥

तेनैव तस्य ग्रहणे दृष्टान्तमाह— ज्ञातृमनसोरिति, यथा ज्ञात्रैवात्मना ज्ञाता गृह्यते यथा च मनसा मनो ग्राह्यते तथा प्रत्यक्षादिना प्रत्यक्षादिग्रहणे न कोपि दोष इत्यर्थः । दर्शनात्= ग्रहणदर्शनात् । व्याचष्टे— अहमिति, इति= इत्यत्र, ज्ञात्रा= आत्मना । तस्य= अहमित्यात्मनः । मनसा मनोग्रहणमुदाहरति— युगपदिति, युगपज्ज्ञानानुत्पत्तिलक्षणेन लिङ्गेन मनसैव मनसो ग्राह्यत्वं दृश्यते, स्वाभिप्रायमाह— ज्ञातुरिति, ज्ञात्रा ज्ञातृग्रहणे स एव ज्ञाता स एव च ज्ञेय इति ज्ञातृज्ञेययोरभेद एव. मनोनुमाने च मन एव ग्रहणम्= ग्रहणसाधनं करणे ल्युट्प्रत्ययश्रयणात् ग्राह्यं चेति ग्रहणग्राह्ययोरभेद इति यथात्राभेदेपि ग्राह्यत्वग्राहकत्वमुभयमुपपद्यते तथा प्रत्यक्षादीनामपि प्रत्यक्षादिभिर्ग्रहणमुपपद्यते इत्यर्थः ॥

निमित्तभेदोऽत्रेति चेत् ? समानम् ।

न निमित्तान्तरेण विना ज्ञाताऽऽत्मानं जानीते. न च निमित्तान्तरेण विना मनसा मनो गृह्यते इति, समानमेतत्= प्रत्यक्षादिभिः प्रत्यक्षादीनां ग्रहणम् इत्यत्राप्यर्थभेदो न गृह्यते इति ॥

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः ।

यदि स्यात् किंचिदर्थजातं प्रत्यक्षादीनामविषयः यत् प्रत्यक्षादिभिर्न शक्यं ग्रहीतुं तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत तत्तु न शक्यं केन चिदुपपादयितुमिति, प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चाऽसच्च सर्वं विषय इति ॥

केचित्तु दृष्टान्तमपरिगृहीतं हेतुना= विशेषहेतुमन्तरेण साध्यसाधनायोपाददते यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्ते इति. स चायम्—

---

पूर्वपक्षी शङ्कते— निमित्तेति, अत्र= ज्ञात्रा ज्ञातृग्रहणे मनसा च मनोग्रहणे निमित्तभेदोस्ति अर्थात् आत्मा केनचित् निमित्तेन= विशेषणेन ज्ञाता भवति यथा मनस्संयोगेन. केनचित् निमित्तेन सुखादिसमवायेन च ज्ञेयो भवति. मनोपि इन्द्रियसंयुक्तत्वादिना विशेषणेन ग्रहणम्= ग्रहणसाधनं भवति ज्ञानविषयत्वादिना च ग्राह्यं भवतीति निमित्तभेदादभेदेपि ग्राह्यग्राहकत्वमुपपद्यते न चैवं प्रत्यक्षादिभिः प्रत्यक्षादिग्रहणे निमित्तभेदः संभाव्यते इत्यर्थः । उत्तरमाह— समानमिति, निमित्तभेदोयं प्रत्यक्षादिष्वपि समानो यथोपलब्धिसाधनत्वात् प्रमाणत्वमुपलब्धिविषयत्वाच्च प्रमेयत्वमिति निमित्तभेदस्यापि सत्त्वात् प्रत्यक्षादीनां प्रत्यक्षादिभिर्ग्रहणे न कोपि दोष इत्यर्थः । पूर्वपक्षं व्याचष्टे— नेति, निमित्तान्तरं चोक्तमेव. आत्मानम्= स्वम् । उत्तरपक्षं व्याचष्टे— समानमिति, प्रत्यक्षादिष्विति शेषः, उक्तं व्याचष्टे— प्रत्यक्षादिभिरिति, प्रत्यक्षादिभिः प्रत्यक्षादीनां ग्रहणेपि अर्थभेदः= दृष्टान्तादुक्ताद् वैसादृश्यं न गृह्यते किंतु उक्तो निमित्तभेदोस्त्येवेत्यभेदेपि ग्राह्यग्राहकत्वमुपपद्यते इत्यर्थः । अत्र " अर्थभेदो गृह्यते " इति-पाठपक्षे तु अर्थभेदः= निमित्तभेदो गृह्यते= अस्त्येव प्रत्यक्षादिभिः प्रत्यक्षादिग्रहणे इत्यर्थः । निमित्तभेदश्चोक्त एव— प्रमेयत्वेन रूपेण ग्राह्यत्वं प्रमाणत्वेन च रूपेण ग्राहकत्वमिति ॥

प्रत्यक्षादीनां प्रत्यक्षादिविषयत्वे उपपत्तिमाह— प्रत्यक्षादीनामिति, प्रत्यक्षादीनामविषयः कोपि नास्ति किं तु सर्वमेव पदार्थजातं प्रत्यक्षादीनां विषय एव— प्रमेयत्वस्य केवलान्वयित्वादिति प्रत्यक्षादीनामपि प्रत्यक्षादिविषयत्वं प्राप्तं तेन प्रत्यक्षादिभिः प्रत्यक्षादिग्रहणं सिद्धमिति मूलार्थः । प्रत्यक्षादीनां कोप्यविषयोस्तीत्यत्रोपपत्तेरभावादित्यन्वयः, प्रत्यक्षाद्यविषयत्वानुपपत्तेरिति यावत् । व्याचष्टे— यदीति, यदि किंचिदर्थजातं प्रत्यक्षादीनामविषयः स्यात्तदा यत् प्रत्यक्षादिभिर्ग्रहीतुं न शक्येत तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत= अपेक्ष्येत ततश्च प्रत्यक्षादीनां प्रत्यक्षाद्यऽविषयत्वं स्यादपि तत्= पदार्थमात्रस्य प्रत्यक्षाद्यविषयत्वं तु केनाप्युपपादयितुं न शक्यते किं तु यथादर्शनम्= यथायोग्यमिदं सर्वं सच्चाऽसच्च पदार्थजातं यदस्ति तत्सर्वमेव प्रत्यक्षादीनां विषयो भवत्येवेति पदार्थत्वात् प्रत्यक्षादीनामपि प्रत्यक्षादिविषयत्वं सिद्धमित्यर्थः । असतः शाब्दबोधविषयत्वं भट्टपादैरुक्तम्— " अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि " इति ॥

" न प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः " इत्युक्तसूत्रविषयकं प्रमाणानां स्वयंप्रकाशत्ववादिनामभिप्रायमनुवदति— केचिदिति, दृष्टान्तम्= तत्सूत्रोक्तं प्रदीपप्रकाशलक्षणं दृष्टान्तं हेतुनाऽपरिगृहीतम्= विशेषहेतुं विनैव= स्वयंप्रकाशत्वहेतुमुपेक्ष्य स्वरूपमात्रेण साध्यसाधनाय= प्रमाणेषु प्रमाणान्तरानपेक्षत्वसाधनायोपाददते= समर्थयन्ति तथा हि— यथा प्रदीपप्रकाशो न प्रदीपान्तरसापेक्षः किं तु

क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः ।

यथाऽयं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते एवं प्रमेयसाधनायाप्युपादेयः- अविशेषहेतुत्वात्, यथा स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते एवं प्रमाण साधनायाप्युपादेयः- विशेषहेत्वभावात्, सोयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन् पक्षे उपादेयो न प्रतिपक्षे इत्यनेकान्तः= एकस्मिंश्च पक्षे दृष्टान्त इत्यनेकान्तः- विशेषहेत्वभावादिति॥

स्वयंप्रकाश एव तथा प्रमाणान्यपि न प्रमाणान्तरसापेक्षाणि किं तु स्वयंप्रकाशान्येव तथा च प्रमाणानां प्रमाणान्तरग्राह्यत्वापेक्षा नोपपद्यते इत्यर्थः। अत्र "अपरं तु हेतुविशेषपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते यथा किल प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणान्यपि प्रमाणान्तरमन्तरेण ग्रहीष्यन्ते इति तान् प्रतीदमुच्यते- क्वचिन्निवृत्तिदर्शनात् (इत्यादि)" इति-वार्तिकम्। ये प्रदीपप्रकाशदृष्टान्तेन प्रमाणानां प्रमाणान्तराविषयत्वं साधयन्ति तेषां मतेऽत्र प्रदीप-प्रकाशः स्वरूपमात्रेण दृष्टान्तः स्वयंप्रकाशश्च किं वा स्वयंप्रकाशत्वहेतुना दृष्टान्त इति विकल्प्य प्रथमकल्पे दोषमाह- क्वचिदिति, स चायं प्रदीपप्रकाशः स्वरूपमात्रेण दृष्टान्तीकृतः क्वचिन्निवृत्ति-दर्शनात् क्वचिदनिवृत्तिदर्शनाच्चाऽनेकान्तः= व्यभिचारी=,साध्यासाधक इत्यन्वयः, प्रकाशकापेक्षायाः क्वचिन्निवृत्तिर्दृश्यते यथा प्रदीपप्रकाशे- प्रदीपप्रकाशस्य स्वप्रकाशार्थं प्रकाशान्तरापेक्षा न भवतीति. क्वचिच्च प्रकाशकापेक्षाया निवृत्तिर्न दृश्यते यथा घटादौ- घटादेः स्वप्रकाशार्थं प्रकाशापेक्षाया दर्शना-दिति स्वरूपमात्रतः प्रदर्शितेन प्रदीपप्रकाशदृष्टान्तेन पदार्थमात्रस्य प्रकाशकानपेक्षत्वं न सिध्यतीति प्रदीपप्रकाशदृष्टान्तः= अनेकान्तः= साध्यासाधक एव अन्यथा घटादीनामपि प्रकाशकानपेक्षत्वं स्यादि-त्यर्थः। प्रदीपप्रकाशस्य स्वरूपमात्रेण प्रकाशानपेक्षत्वं नास्ति येन प्रमाणानां प्रमाणान्तराविषयत्व-मापद्येत किं तु स्वयंप्रकाशत्वेन. स्वयंप्रकाशत्वं च प्रमाणेषु नास्ति येन प्रमाणानां प्रमाणान्तरानपेक्षत्व-मापद्येतेति भावः। इदं च क्वचिदित्यादिवाक्यं सूत्रकारस्यैव सूत्रमित्यपि केषांचिन्मतम्।

व्याचष्टे-यथेति, अयं प्रसङ्गः= प्रकाशकानपेक्षत्वप्रसङ्गः किं वा प्रदीपप्रकाशदृष्टान्तोयं यथा निवृत्तिदर्शनात्= प्रदीपप्रकाशप्रकाशार्थं प्रकाशकान्तरस्य निवृत्तिदर्शनात्= अनपेक्षादर्शनात् प्रमाण-साधनाय= प्रमाणानां प्रमाणानपेक्षत्वसाधनायोपादीयते= प्रदर्श्यते तथा प्रमेयसाधनाय= प्रमेयाणामपि प्रमाणानपेक्षत्वसाधनाय= स्वयंप्रकाशत्वसाधनायोपादेयः- अविशेषहेतुत्वात्= विशेषहेतोरभावात् नाम प्रदीपप्रकाशदृष्टान्तेन प्रमाणानां स्वयंप्रकाशत्वं संभवति प्रमेयाणां च न संभवतीत्यत्र हेतोरभावात् तथा च सर्वप्रमाणविलोपः स्यादित्याशयः। विरुद्धदृष्टान्तमाह- यथेति, यथा स्थाल्यादिरूपग्रहणकाले प्रमेयसाधनाय= रूपनिश्चयाय प्रदीपप्रकाश उपादीयते तथा प्रमाणसाधनाय प्रमाणान्तरापेक्षा स्यादेव-विशेषहेतोरभावात्= रूपादीनां परप्रकाश्यत्वं संभवति प्रमाणानां च न संभवतीत्यत्र हेतोरभावात् तथा च रूपादिवत् प्रमाणानामपि प्रमाणान्तरविषयत्वं सिद्धमित्यर्थः। उपसंहरति- सोयमिति, सोयं प्रदीप-प्रकाशो दृष्टान्तः स्वयंप्रकाशत्वहेतुपरिग्रहं विना स्वरूपमात्रेण एकस्मिन्= प्रमाणानामेव प्रमाणान्तरान-पेक्षत्वपक्षे उपादेयः= समर्थोऽस्ति न तु प्रतिपक्षे= प्रमेयाणां प्रमाणानपेक्षत्वेपीत्यनेकान्तः= साध्यासाधक इत्यन्वयः, उक्तमेव पुनराह- एकस्मिंश्चेति, दृष्टान्तस्यानेकान्तत्वे एकपक्षीयत्वं हेतुः एकपक्षीयत्वेपि विशेषहेतुर्नास्तीतिहेतुरित्यनेकान्तः, यद्येकपक्षीयत्वे विशेषहेतुः स्यात्तदा न स्यादप्यनेकान्तत्वमित्याशयः प्रतीयते। यदि महानसदृष्टान्तेन कस्य चिद्वह्निमत्वं स्यात् कस्य चिच्च न स्यात्तदा यथा महानसदृष्टान्त-स्यानेकान्तत्वमापन्नेन तथात्रापि विज्ञेयं. यथा च 'अयं विद्वान् चैत्रवत्' इत्यत्र चैत्रदृष्टान्तेन मूर्खस्य विद्वत्त्वं नापद्यते इति दृष्टान्तस्यानेकान्तत्वं तथा प्रदीपप्रकाशदृष्टान्तेन प्रमेयाणां स्वयंप्रकाशत्वं नापद्यते इति दृष्टान्तस्यानेकान्तत्वं प्राप्तं ततश्च प्रमाणेष्वपि स्वयंप्रकाशत्वसाधकत्वं नोपपद्यते इत्यर्थः। अत्र "अयं च प्रदीपप्रकाशदृष्टान्तः प्रमाणपक्षे भवतु मा भूत् प्रमेयपक्षे इत्यत्रापि नियमहेतुर्वक्तव्यः,

विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः ।

विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन् पक्षे उपसंह्रियमाणो न शक्योऽननुज्ञातुम् एवं च सति 'अनेकान्तः' इत्ययं प्रतिषेधो न भवति ।

प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावऽनवस्थेतिचेत्? न– संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः ।

प्रत्यक्षेणार्थमुपलभे अनुमानेनार्थमुपलभे उपमानेनार्थमुपलभे आगमेनार्थमुपलभे इति. प्रत्यक्षं मे ज्ञानम् आनुमानिकं मे ज्ञानम् औपमानिकं मे ज्ञानम् आगमिकं मे ज्ञानमिति संविद्विषयं संविन्निमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनः तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते सोयं तावत्यैव निर्वर्तते. न चास्ति व्यवहारान्तरमनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति ॥ १९ ॥

---

प्रदीपप्रकाशो दृष्टान्तो भवतु मा भूत् स्थाल्यादिदृष्टान्त इत्यत्रापि नियमहेतुर्वक्तव्यः, सोयमुभयथाऽनेकान्तो हेतुमन्तरेणाऽदृष्टान्तः प्रसक्तः" इति वार्त्तिकम् । तथा च स्थाल्यादिवत् प्रमाणान्यपि प्रमाणविषया भवन्तीति सारः ॥

द्वितीयकल्पे स्वाभिप्रायमाह– विशेषेति, स्वयंप्रकाशत्वलक्षणविशेषहेतोः परिग्रहे सति= स्वयंप्रकाशत्वलक्षणहेतुना परिगृहीतोयं प्रदीपप्रकाशदृष्टान्तो यथा यो यः स्वयंप्रकाशः स प्रमाणान्तरानपेक्षः प्रदीपप्रकाशवदिति प्रदीपप्रकाशदृष्टान्तस्य एकस्मिन्नेव पक्षे= प्रमाणपक्षे एव उपसंहारस्य संभवेन अनुज्ञानात्= स्वीकारात् अप्रतिषेधः= 'अनेकान्तः' इत्युक्तप्रतिषेधो न संभवति यतो दीपप्रकाशस्य प्रकाशकत्वादेव प्रकाशान्तरानपेक्षत्वमुच्यते प्रकाशकत्वं च प्रमाणेष्वस्तीति प्रमाणानां प्रमाणान्तरानपेक्षत्वमापद्यते न तु घटादिप्रमेयाणामपि– घटादिषु प्रकाशकत्वाभावादिति प्रदीपप्रकाशदृष्टान्तेऽनेकान्तत्वदोषापत्तिर्नास्ति दोषान्तरं तु भवति यथा स्वप्रकाशकस्यापि दीपप्रकाशस्य चक्षुषा ग्रहणं भवति तथा प्रमाणानामपि प्रमाणान्तरैर्ग्रहणमुपपद्यते इति विरुद्धत्वं दोष इत्यर्थः । व्याचष्टे– विशेषेति, विशेषहेतुः प्रकाशकत्वम् । पक्षे= प्रमाणपक्षे । उपसंह्रियमाणः= समन्वीयमानः, अननुज्ञातुम्= अस्वीकर्तुं न शक्यः, एवं च सति= दृष्टान्ते दृष्टान्तोपसंहारे वा स्वीकृते 'अनेकान्तः' इति प्रतिषेधो न भवति= दृष्टान्तस्योक्तमनेकान्तत्वं न भवतीत्यन्वयः ॥

अनवस्थादोषेणाशङ्कते– प्रत्यक्षादीनामिति, उत्तरोत्तरं प्रत्यक्षाद्यन्तरापेक्षयाऽनवस्था स्पष्टैवेति प्रमाणानां प्रमाणान्तरग्राह्यत्वं न स्वीकार्यमित्यर्थः, परिहरति– नेति, परिहारहेतुमाह– संविदिति, संविद्विषयाणां घटादीनां संविन्निमित्तानां प्रमाणानां चोपलब्ध्या संविद्विषयनिमित्तविषयकस्य व्यवहारस्योपपत्तिः संभवतीति नाऽनवस्थादोष इत्यन्वयः, यथा घटविषयकप्रमाणेन घटोपलब्धौ जातायां घटविषयको ग्रहणादिव्यवहार उपपद्यते न तु प्रमाणपरम्परापेक्षा तथा प्रमाणविषयकेणानुव्यवसायादिप्रमाणेन पूर्वप्रमाणोपलब्धौ जातायां प्रमाणविषयकः स्वप्रमेयविषयकत्वादिव्यवहारः प्रामाण्यव्यवहारो वोपपद्यते एवेति न प्रमाणपरम्परापेक्षा येनानवस्था स्यात्– द्वित्रकोटिपर्यन्तमात्रधावनेनाऽविश्वासनिवृत्तेः संभवादित्यर्थः । संविद्विषयोपलब्धिमुदाहरति– प्रत्यक्षेणेति, 'अर्थमुपलभे' इति संविद्विषयस्योपलब्धिः स्पष्टैव तत्र प्रत्यक्षादिकं प्रमाणं करणम्, संविन्निमित्तस्य प्रमाणस्योपलब्धिमुदाहरति– प्रत्यक्षमिति, 'प्रत्यक्षं मे ज्ञानम्' इति प्रत्यक्षादेरुपलब्धिः प्रत्यक्षादिकं च संविन्निमित्तमितीयं संविन्निमित्तोपलब्धिः, संविद्विषयं घटादिकं संविन्निमित्तं प्रत्यक्षादिप्रमाणं चोपलभमानस्य= ज्ञातुः पुरुषस्य धर्मादिपुरुषार्थप्रयोजनः= धर्मादिषु प्रवृत्तिरूपो व्यवहारः तत्प्रत्यनीकपरिवर्जनप्रयोजनः= धर्मादिविरुद्धहिंसादिनिवृत्ति-

सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते, तत्र—

**प्रत्यक्षलक्षणानुपपत्तिः— असमग्रवचनात् ॥ २० ॥**

आत्ममनस्संनिकर्षो हि कारणान्तरं नोक्तमिति, न चासंयुक्ते द्रव्ये संयोगजन्यस्य गुणस्योत्पत्तिरिति. ज्ञानोत्पत्तिदर्शनादात्ममनस्संनिकर्षः कारणम् । मनस्संनिकर्षानपेक्षस्य चेन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वे युगपदुत्पद्येरन् बुद्धय इति मनस्संनिकर्षोपि कारणम् ॥२०॥

तदिदं सूत्रं पुरस्तात् कृतभाष्यम्—

**नात्ममनसोः संनिकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥**

आत्ममनसोः संनिकर्षाभावे नोत्पद्यते प्रत्यक्षम् इन्द्रियार्थसंनिकर्षाभाववदिति, सति चेन्द्रियार्थसंनिकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं ब्रुवते ॥ २१ ॥

---

रूपश्च व्यवहार उपपद्यते एव सोयं व्यवहारः तावत्यैव= संविद्विषयनिमित्तयोरुपलब्धिमात्रेणैव निर्वर्तते= संपद्यते एवेति नानवस्थापत्तिरित्यन्वयः । अनवस्थापत्तिं प्रत्याचष्टे— न चेति, उक्तप्रमाणप्रमेयविषयकव्यवहारातिरिक्तं अनवस्थासाधनीयम्= प्रमाणपरम्परासाध्यं व्यवहारान्तरमेव नास्ति यदर्थं प्रमाणानवस्था स्वीक्रियेतेति नानवस्थापत्तिर्दोप इत्यन्वयः । येन व्यवहारान्तरेण, उपाददीत= स्वीकुर्यात् । तावतीशब्द उक्तोपलब्धिपरः ॥ १९ ॥

॥ इति सामान्यतः प्रमाणपरीक्षा समाप्ता ॥

---

सामान्यतः प्रमाणपरीक्षां समाप्य विशेपतः प्रमाणपरीक्षारम्भमाह— सामान्येनेति । विशेषविरीक्षायां प्रत्यक्षपरीक्षासूत्रमवतारयति— तत्रेति । प्रत्यक्षेति— चतुर्थसूत्रोक्तं प्रत्यक्षलक्षणं नोपपद्यते— असमग्रवचनात्= सर्वेषां प्रत्यक्षकारणानामकथनादित्यन्वयः, आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमिति न्यायशास्त्रे प्रत्यक्षप्रकारस्तत्र प्रत्यक्षलक्षणसूत्रे प्रत्यक्षकारणीभूत इन्द्रियार्थसंनिकर्ष एवोक्त आत्ममनस्संनिकर्षो मनइन्द्रियसंनिकर्षश्च नोक्त इत्येवमसमग्रवचनात् प्रत्यक्षलक्षणस्यानुपपत्तिः— असंभवदोपग्रस्तत्वात् केवलमिन्द्रियार्थसंनिकर्षमात्रेण प्रत्यक्षमात्रस्योत्पत्तेरसंभवादिति सूत्रार्थः । व्याचष्टे— आत्मेति, आत्ममनस्संनिकर्षोपि प्रत्यक्षकारणं तच्च प्रत्यक्षलक्षणे नोक्तमित्यसमग्रवचनता प्राप्ता । आत्ममनसंनिकर्षस्य प्रत्यक्षकारणत्वमाह— न चेति, यथा वह्निसंयोगजन्यस्य रूपस्य गुणस्य वह्निसंयोगं विनोत्पत्तिर्न संभवति तथाऽऽत्ममनस्संयोगजन्यस्य प्रत्यक्षस्य ज्ञानस्यापि मनसाऽसंयुक्ते आत्मनि द्रव्ये उत्पत्तिर्न संभवति आत्ममनस्संनिकर्षेण च ज्ञानोत्पत्तिदर्शनात् आत्ममनस्संनिकर्षोपि कारणं स च प्रत्यक्षलक्षणे नोक्त इत्यसमग्रवचनता । विपक्षेबाधकमाह— मन इति, यद्यात्ममनस्संनिकर्षो मनइन्द्रियसंनिकर्षश्च प्रत्यक्षकारणं न स्यात्तदा पञ्चानामपीन्द्रियाणामेकस्मिन्नपि काले स्वस्वविषयै रूपादिभिः संयोगसंभवात् सर्वैरपि तादृशेन्द्रियैरेकस्मिन् काले आत्मनोपि विभुत्वेन संयोगसंभवाद् युगपदेव रूपाद्यनेकार्थविषयकाणि ज्ञानान्युत्पद्येरन् न चोत्पद्यन्ते इति आत्ममनस्संनिकर्षोपि प्रत्यक्षकारणं स्वीकार्यं तथा चैकस्मिन् काले सर्वेषामिन्द्रियाणां स्वस्वविपयैस्तादृशेन्द्रियैश्चात्मनः संयोगस्य संभवेपि मनसः सर्वैरिन्द्रियैरेकस्मिन् काले संयोगो न संभवति— अणुत्वादिति युगपज्ज्ञानानुत्पत्तिसमर्थनार्थं मनस्संनिकर्षोपि प्रत्यक्षकारणं स्वीकार्यं तच्च प्रत्यक्षलक्षणे नोक्तमित्यनुपपत्तिरित्यन्वयः ॥ २० ॥

"नात्ममनसोः" इत्यग्रिमसूत्रेण यत्प्रतिपाद्यं तत् प्रत्यक्षलक्षणसूत्रभाष्ये प्रतिपादितमेवेत्याह— तदिदमिति । "तदिदम्= नात्ममनसोः संनिकर्षेत्यादि" इति तात्पर्यटीका । वस्तुतस्त्विदं वाक्यं भाष्यान्ते वक्तव्यमासीत् । नात्मेति— आत्ममनसोः संनिकर्षाभावे प्रत्यक्षोत्पत्तिर्न संभवतीत्यात्ममनस्संनिकर्षोपि

## दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥

दिगादिषु सत्सु ज्ञानभावात् तान्यपि कारणानीति. अकारणभावेपि ज्ञानोत्पत्तेर्दिगादिसंनिधेरवर्जनीयत्वात्= यदाप्यकारणं दिगादीनि ज्ञानोत्पत्तौ तदापि सत्सु दिगादिषु ज्ञानेन भवितव्यं न हि दिगादीनां संनिधिः शक्यः परिवर्जयितुमिति । तत्र कारणभावे हेतुवचनम्- एतस्माद् हेतोर्दिगादीनि ज्ञानकारणानीति । आत्ममनस्संनिकर्षस्तर्ह्युपसंख्येय इति ॥ २२ ॥

तत्रेदमुच्यते—

## ज्ञानलिङ्गत्वादात्मनो नाऽनवरोधः ॥ २३ ॥

ज्ञानमात्मलिङ्गम्- तद्गुणत्वात्. न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥ २३ ॥

---

प्रत्यक्षकारणं तच्च प्रत्यक्षलक्षणे नोक्तमिति प्रत्यक्षलक्षणस्याऽसमग्रवचनत्वं प्राप्तमिति दोष इति सूत्रान्वयः । व्याचष्टे- आत्मेति, यथेन्द्रियार्थसंनिकर्षाऽभावे प्रत्यक्षं नोत्पद्यते इन्द्रियार्थसंनिकर्षे सति चोत्पद्यते इत्यन्वयव्यतिरेकाभ्यामिन्द्रियार्थसंनिकर्षस्य कारणभावम्= प्रत्यक्षकारणत्वं ब्रुवते= कथयन्ति शास्त्रकारास्तथात्ममनस्संनिकर्षस्याप्यऽभावे प्रत्यक्षं नोत्पद्यते भावे चोत्पद्यते इति तस्यापि प्रत्यक्षकारणत्वं प्राप्तं तच्च प्रत्यक्षलक्षणे नोक्तमित्यसमग्रवचनता ततश्चासंभवदोषः प्राप्त इत्यन्वयः ॥ २१ ॥

उक्तमन्यत्रातिदिशति- दिगिति, दिग्देशकालाकाशेषु सत्सु प्रत्यक्षमुत्पद्यते न चासत्स्विति तेषामपि कारणत्वेनाऽकथनात् एवम्= उक्तवत् प्रसङ्गः= असमग्रवचनताप्रसङ्गः, सप्तम्यर्थो निरूपितत्वमिति सूत्रार्थः । व्याचष्टे- दिगादिष्विति, तानि= दिगादीनि । अकारणभावे= प्रत्यक्षं प्रत्यकारणत्वेपि दिगादिसंयोगस्य निवृत्तिर्न संभवतीति प्रत्यक्षं प्रति कारणत्वं प्राप्तं स च नोक्त इति प्रत्यक्षलक्षणे दोष इत्यर्थः, उक्तं विशदयति- यदापीति । दिगादिसंयोगस्य कारणत्वं नास्ति- अन्यथासिद्धत्वादित्याह सिद्धान्ती- तत्रेति, कारणभावे= दिगादेः कारणत्वे, उक्तं विशदयति- एतस्मादिति, तथा च दिगादीनामकारणत्वेन तदकथनं न दोष इत्यर्थः । अत्र- "नित्यं दिगादि व्यापकं चेति नित्यत्वाद् व्यापकत्वाच्च न शक्यः संनिधिः परिवर्जयितुमिति तत्र कारणभावे हेतुर्वक्तव्यः- न हि संनिधिमात्रं हेतुत्वे कारणम्" इति- वार्तिकम् । पूर्वपक्ष्याह- आत्मेति, अस्तु दिगादीनामकारणत्वम् आत्ममनस्संनिकर्षस्तु प्रत्यक्षकारणमस्ति स तूपसंख्येयः= प्रत्यक्षलक्षणे वक्तव्यो न चोक्त इति प्रत्यक्षलक्षणे समग्रवचनाभावो दोषः प्राप्त इत्यन्वयः ॥ २२ ॥

उक्तपूर्वपक्षस्य प्रत्याख्यानारम्भमाह- तत्रेदमिति, तत्र= प्रत्यक्षलक्षणदोषे प्राप्ते इदम्= अग्रिमसूत्रमुच्यते । ज्ञानेति- आत्मनो ज्ञानलिङ्गत्वात्= ज्ञानज्ञाप्यत्वात्= ज्ञानगुणकत्वात् तादृशज्ञानस्य च भावकार्यत्वात् भावकार्यस्य चाऽसमवायिकारणसापेक्षत्वात् असमवायिकारणं चात्रात्ममनस्संनिकर्ष एव संभवति- ज्ञानसमवायिकारणे आत्मनि वर्तमानत्वादित्यात्ममनस्संनिकर्षस्य अनवरोधः= असंग्रहो नास्ति किं त्वर्थादेव संग्रहः संभवतीति न प्रत्यक्षलक्षणे आत्ममनस्संनिकर्षस्याऽवचनं दोषः- अर्थादेव प्राप्तत्वादिति सूत्रार्थः । व्याचष्टे- ज्ञानमिति, ज्ञानस्यात्मलिङ्गत्वे हेतुमाह- तदिति, ज्ञानस्य तद्गुणत्वात्= आत्मासाधारणधर्मत्वादात्मलिङ्गत्वम्, तच्च ज्ञानमात्ममनस्संनिकर्षजन्यमेव न चासंयुक्ते द्रव्ये आत्मनि संयोगजस्य गुणस्य ज्ञानस्योत्पत्तिः संभवतीति अर्थादेव ज्ञानकारणीभूत आत्ममनस्संनिकर्ष उपलभ्यते इति न प्रत्यक्षलक्षणे आत्ममनस्संनिकर्षस्यावचनं दोषायेत्यर्थः ॥ २३ ॥

## तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥

अनवरोध इति वर्तते, "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् १-१-१६" इत्युच्यमाने सिध्यत्येव मनस्संनिकर्षापेक्ष इन्द्रियार्थसंनिकर्षो ज्ञानकारणमिति ॥ २४ ॥

## प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः संनिकर्षस्य स्वशब्देन वचनम् ॥ २५ ॥

प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनस्संनिकर्षः. प्रत्यक्षस्यैवेन्द्रियार्थसंनिकर्ष इत्यऽसमानोऽसमानत्वात् तस्य ग्रहणम् ॥ २५ ॥

## सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः संनिकर्षनिमित्तत्वात् ॥ २६ ॥

इन्द्रियार्थसंनिकर्षस्य ग्रहणं नात्ममनसोः संनिकर्षस्येति, एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते, यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतस्तदा

---

मनइन्द्रियसंनिकर्षस्याप्यर्थात् प्राप्तिमाह- तदिति, मनसः तदयौगपद्यलिङ्गत्वात्= ज्ञानायौगपद्यज्ञाप्यत्वाद् मनइन्द्रियसंनिकर्षस्यापि अनवरोधः= असंग्रहो नास्ति किं तु मनइन्द्रियसंनिकर्षोप्यर्थादेव ज्ञानकारणत्वेन प्राप्त इति प्रत्यक्षलक्षणे तस्याप्यवचनं न दोषायेति सूत्रार्थः । व्याचष्टे- अनवरोध इति, वर्तते= पूर्वसूत्रादनुवर्तनीयमित्यर्थः । मनस्संनिकर्षस्यावश्यकतामाह- युगपदिति, सूत्रमिदं पूर्वत्र व्याख्यातम्, दृश्यमानाया युगपज्ज्ञानानुत्पत्तेः समर्थनाय मनस इन्द्रियेण संनिकर्षस्य ज्ञानकारणत्वं स्वीकार्यमेवेति इन्द्रियार्थसंनिकर्षो मनस्संनिकर्षापेक्षः= मनइन्द्रियसंयोगसापेक्ष एव ज्ञानकारणं भवतीति मनइन्द्रियसंनिकर्षस्य ज्ञानकारणत्वेनार्थादेव लभ्यमानत्वात् प्रत्यक्षलक्षणे तस्याप्यवचनं न दोषायेत्यर्थः । ज्ञानकारणमिति सिध्यत्येवेत्यन्वयः ॥ २४ ॥

ननु यदि प्रत्यक्षकारणस्यात्ममनस्संनिकर्षस्य मनइन्द्रियसंनिकर्षस्य चार्थात् प्राप्तिसंभवात् प्रत्यक्षलक्षणे कथनापेक्षा नास्ति तदा इन्द्रियार्थसंनिकर्षोपि न वक्तव्यः- अर्थात्प्राप्तिसंभवादित्याशङ्क्य वास्तवमुत्तरमाह- प्रत्यक्षेति, इन्द्रियार्थयोः संनिकर्षस्य प्रत्यक्षनिमित्तत्वात्= प्रत्यक्षासाधारणकारणत्वात् प्रत्यक्षलक्षणे "इन्द्रियार्थसंनिकर्षोत्पन्नम्" इत्येवं स्वशब्देन= तद्वाचकशब्देन वचनम्= कथनमस्ति आत्ममनस्संनिकर्षस्तु ज्ञानमात्रस्य साधारणकारणमिति स नोक्तः- असाधारणस्यैव वक्तव्यत्वादिति न प्रत्यक्षलक्षणे कोपि दोष इतिसूत्रार्थः । व्याचष्टे- प्रत्यक्षेति, आत्ममनस्संनिकर्षः प्रत्यक्षादीनां सर्वेषामेव निमित्तम्= साधारणकारणमिति प्रत्यक्षलक्षणे नोक्तः, इन्द्रियार्थसंनिकर्षस्तु प्रत्यक्षस्यैवाऽसमानः= असाधारणकारणमित्यसमानत्वात् तस्य= इन्द्रियार्थसंनिकर्षस्य ग्रहणम्= कथनमस्त्येवेति न प्रत्यक्षलक्षणे कोपि दोषः । एवं मनइन्द्रियसंनिकर्षेपि विज्ञेयम् ॥ २५ ॥

प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्षमात्रग्रहणे उपपत्त्यन्तरमाह- सुप्तेति, सुप्तस्य व्यासक्तमनसः= अन्यत्र संलग्नचित्तस्य च यत् प्रत्यक्षं जायते तस्य इन्द्रियार्थसंनिकर्षनिमित्तत्वात्= इन्द्रियार्थसंनिकर्षमात्रजन्यत्वादपि प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्षमात्रस्य ग्रहणं कृतं नात्ममनस्संनिकर्षस्येत्यन्वयः, सुप्तिकाले ह्यात्मा न मनः प्रेरयति येनात्ममनस्संनिकर्षो मनइन्द्रियसंनिकर्षश्च स्यात् किं तु सुप्तस्य य आकस्मिकः प्रबोधः स शब्दश्रवणेन्द्रियसंनिकर्षाद्वा त्वचा पदार्थसंनिकर्षाद्वा भवतीति तत् प्रत्यक्षं केवलमिन्द्रियार्थसंनिकर्षमात्रादेव जायते. यदा च पुरुषस्य चित्तं क्वचित्संलग्नं भवति तदापि यत्पदार्थान्तरप्रत्यक्षं तदपि इन्द्रियार्थसंनिकर्षमात्रादेव जायते- मनसोऽन्यत्र व्यासक्तत्वात् पदार्थान्तराभिमुख्यासंभवादिति सूत्रार्थः । व्याचष्टे- इन्द्रियार्थेति, प्रत्यक्षलक्षणे इतिशेषः । इन्द्रियार्थसंनिकर्षमात्रजन्यस्य प्रत्यक्षस्य प्रतिपादनमुपक्रमते- एकदेति, एकदा= कदाचित्, अयम्= जीवः, प्रबोधकालं प्रणिधाय=

प्रसुप्तस्येन्द्रियार्थसंनिकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते तत्र न ज्ञातुर्मनसश्च संनिकर्षस्य प्राधान्यं भवति, किं तर्हि?. इन्द्रियार्थयोः संनिकर्षस्य— नह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति। एकदा खल्वयं विषयान्तराऽव्यासक्तमनाः संकल्पवशाद् विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद् विषयान्तरं जानीते, यदा तु खल्वस्य निस्संकल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाद् ज्ञानमुत्पद्यते तदेन्द्रियार्थसंनिकर्षस्य प्राधान्यम्— न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति। प्राधान्याच्चेन्द्रियार्थसंनिकर्षस्य ग्रहणं कार्यं गुणत्वान्नात्ममनसोः संनिकर्षस्येति ॥ २६ ॥

प्राधान्ये च हेत्वन्तरम्—

## तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २७ ॥

तैः= इन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः, कथम्?. 'घ्राणेन जिघ्रति' 'चक्षुषा पश्यति' 'रसनया रसयति' इति. 'घ्राणविज्ञानं चक्षुर्विज्ञानं रसनविज्ञानम्' 'गन्धविज्ञानं

---

अमुकसमये मयोत्थातव्यमितिसंकल्प्य सुप्तः प्रणिधानवशात्= तादृशसंकल्पवशात् प्रबुध्यते इति तत्रात्मनस्संनिकर्षोऽपि कारणं भवति। इन्द्रियार्थसंनिकर्षमात्रजन्यज्ञानमाह— यदेति, यदा तु सुप्तस्य तीव्रशब्देन वा तीव्रस्पर्शेन वा प्रबोधो जायते तदा तादृशं प्रबोधात्मकं ज्ञानमिन्द्रियमात्रस्य शब्दस्पर्शादिविषयेण संनिकर्षाज्जायते शब्दादेश्च तत्र प्रत्यक्षं भवति तत्रात्ममनस्संनिकर्षस्य मनइन्द्रियसंनिकर्षस्य च प्राधान्यं न भवति— सुप्तत्वात्, किं तु इन्द्रियार्थसंनिकर्षस्यैव प्राधान्यं भवतीति प्रत्यक्षमात्रव्यापकत्वेन प्राधान्यात् इन्द्रियार्थसंनिकर्षस्यैव प्रत्यक्षलक्षणे ग्रहणं कृतं नान्यस्येत्यन्वयः। उक्तप्रत्यक्षे कस्य प्राधान्यं भवतीति जिज्ञासते— किमिति। उत्तरमाह— इन्द्रियार्थयोरिति। उक्ते हेतुमाह— नहीति, उक्ताकस्मिकप्रबोधस्थले आत्मनः पदार्थजिज्ञासापि न भवति प्रयत्नोऽपि न भवति सुप्तत्वात् ततश्च न मनः= चित्तं प्रेरयति तस्मात् तत्रेन्द्रियार्थसंनिकर्षस्यैव प्राधान्यं भवतीत्यर्थः। जिज्ञासापूर्वकप्रत्यक्षमुदाहरति— एकदेति, एकदा= कदाचित्. अयम्= जीवः, यदा मनो विषयान्तरे व्यासक्तं न भवति तदा विषयान्तरज्ञानविषयकसंकल्पवशात् विषयान्तरं जिज्ञासमानः प्रयत्नेन मनः प्रेरयति प्रेरितं च मन इन्द्रियेण संयुज्यते इन्द्रियं च विषयेण संयुज्यते ततश्च तत्प्रत्यक्षं जायते एतादृशप्रत्यक्षे चात्ममनस्संनिकर्षोऽपि कारणं भवति। प्रकृतं व्यासक्तमनस इन्द्रियार्थसंनिकर्षमात्रजन्यं प्रत्यक्षमुदाहरति— यदेति, यदा जीवो व्यासक्तमना भवति तदा विषयान्तरस्य संकल्पो जिज्ञासा च न भवति अथापि बाह्यस्य विषयस्य शब्दादेरुपनिपातनात्= इन्द्रियेण तीव्रसंनिकर्षाद् ज्ञानम्= तत्प्रत्यक्षं जायते तादृशप्रत्यक्षेऽपीन्द्रियार्थसंनिकर्षस्यैव प्राधान्यं भवति नात्ममनस्संनिकर्षादेः— तदाऽन्यत्र व्यासक्तमनस्त्वात् उक्तप्रत्यक्षविषयीभूतपदार्थस्य जिज्ञासायाः प्रयत्नस्य चाभावादित्यन्वयः। उक्ते हेतुमाह— नहीति, अत्र=, बाह्यविषये किं वा मनसोऽन्यत्र व्यासक्तिकाले। असौ= व्यासक्तमनाः। यदि हि मनसः प्रेरणापूर्वकं संनिकर्षः स्यात्तदा स्यादपि तस्य प्राधान्यं न चैवमस्ति। उपसंहरति= प्राधान्यादिति, प्रत्यक्षलक्षणे इतिशेषः, गुणत्वात्= अप्रधानत्वात्। यद्यप्युक्तस्थलयोरप्यात्ममनस्संनिकर्षो भवत्येव तथापि तस्य प्राधान्यं न भवतीत्यर्थः। एतादृशस्थले पदार्थे इन्द्रियेण इन्द्रियं मनसा मनश्चात्मना संयुज्यते इत्येवं व्युत्क्रमेण संयोगा भवन्तीति प्रथमं जायमानत्वादेवेन्द्रियार्थसंनिकर्षस्य प्राधान्यं विज्ञेयम् ॥ २६ ॥

अग्रिमसूत्रमवतारयति— प्राधान्ये इति, प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्य प्राधान्येऽग्रिमसूत्रेण हेत्वन्तरमाहेत्यन्वयः। तैरिति— ज्ञानविशेषाणाम्= प्रत्यक्षविशेषाणां तैः= इन्द्रियैरर्थैश्चाऽपदेशः= व्यपदेशो भवति यथा 'चाक्षुषं मे ज्ञानं रासनं मे ज्ञानम्' इतीन्द्रियैर्व्यपदेशः 'रूपज्ञानं रसज्ञानम्' इत्यर्थैर्व्यपदेशः— "प्राधान्येन व्यपदेशा भवन्ति" इतिन्यायात् तथा चेन्द्रियैरर्थैश्च प्रत्यक्षाणां व्यपदेशात् प्रत्यक्षे-

रूपविज्ञानं रसविज्ञानम्' इति च, इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति अतः प्राधान्यमिन्द्रियार्थसंनिकर्षस्येति ॥ २७ ॥

यदुक्तम्– 'इन्द्रियार्थसंनिकर्षग्रहणं कार्यं नात्ममनसोः संनिकर्षस्येति, कस्मात्?, सुप्तव्यासक्तमनसामिन्द्रियार्थयोः संनिकर्षस्य ज्ञाननिमित्तत्वात्' इति, सोयम्—

## व्याहतत्वादहेतुः ॥ २८ ॥

यदि तावत् क्वचिदात्ममनसोः संनिकर्षस्य ज्ञानकारणत्वं नेष्यते? तदा "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् १–१–१६" इति व्याहन्येत, नेदानीं मनसः संनिकर्षमिन्द्रियार्थसंनिकर्षोऽपेक्षते, मनस्संयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्वविज्ञानानामात्ममनसोः संनिकर्षः कारणमिष्यते? तदवस्थमेवेदं भवति– 'ज्ञानकारणत्वादात्ममनसोः संनिकर्षस्य ग्रहणं कार्यम्' इति ॥ २८ ॥

---

त्विन्द्रियार्थसंनिकर्षस्य प्राधान्यं प्राप्तं तेन तस्य प्रत्यक्षलक्षणे ग्रहणं कृतं नात्ममनस्संनिकर्षस्येति सूत्रार्थः। व्याचष्टे– तैरित्यादिना, ज्ञानविशेषाः= प्रत्यक्षाणि। उक्तव्यपदेशस्य प्रकारं जिज्ञासते– कथमिति। इन्द्रियैर्व्यपदेशमुदाहरति– घ्राणेनेति, करणत्वं तृतीयार्थः, इदं भेदगर्भमुदाहरणम्, अभेदगर्भमाह– घ्राणविज्ञानमित्यादिना, घ्राणजन्यं विज्ञानमित्यर्थः। अर्थेन व्यपदेशमुदाहरति– गन्धविज्ञानमित्यादिना, पूर्वत्रेन्द्रियस्य ज्ञाननिरूपकत्वादिन्द्रियेण ज्ञानव्यपदेश उत्तरत्रार्थस्य ज्ञाननिरूपकत्वादर्थेन ज्ञानव्यपदेशः। इन्द्रियेति– इन्द्रियाणां चक्षुरादीनां पञ्चानां विषयाणां शब्दस्पर्शरूपरसगन्धानां च पञ्चानां विशेषात्= भेदाद् रूपादिविषया चक्षुरादिजन्या बुद्धिः= प्रत्यक्षं पञ्चधा भवति। उपसंहरति– अत इति, प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्यैव प्राधान्यमिति तस्यैव प्रत्यक्षलक्षणे ग्रहणं कृतं नान्यस्य, प्राधान्ये चात्रेन्द्रियाणामर्थानां च प्रत्यक्षव्यपदेशमूलत्वमेव हेतुरित्यन्वयः ॥ २७ ॥

पूर्वपक्षी दूषयितुं सिद्धान्तिनोक्तमनुवदति– यदुक्तमित्यादिना, 'सुप्तव्यासक्तमनसां यज्ज्ञानं जायते तद् इन्द्रियार्थसंनिकर्षेण जायते नात्ममनस्संनिकर्षेणेति प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्य प्राधान्यं प्राप्तं तेन च प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्षस्य ग्रहणं कार्यं नात्ममनस्संनिकर्षस्य' इति यदुक्तम्= योयं हेतुरुक्तः सोयं हेतुरहेतुरेव व्याहतत्वादित्यन्वयः। उक्तां त्रिसूत्रीं पूर्वपक्षी प्रत्याचष्टे– व्याहतत्वादिति, यदुक्तसूत्रत्रयेण प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्य प्राधान्यं कारणत्वं चोपपादितं तत् युगपज्ज्ञानानुत्पत्तिसिद्धान्तेन विरुद्धत्वाद् व्याहतं व्याहतत्वाच्चाहेतुः, यदि प्रत्यक्षे इन्द्रियार्थसंनिकर्ष एव कारणं स्यात्तदा एकस्मिन्नपि काले चक्षुरादीनां पञ्चानामपीन्द्रियाणां स्वस्वविषयै रूपादिभिः संनिकर्षसंभवाद् युगपदप्यनेकानि ज्ञानान्युत्पद्येरन् न चैवं स्वीकृतमिति युगपज्ज्ञानानुत्पत्तिसमर्थनार्थं मनस्संनिकर्षस्यापि प्रत्यक्षकारणत्वं स्वीकार्यं तथा चेन्द्रियार्थसंनिकर्षमात्रस्य प्रत्यक्षकारणत्वे य उक्तो हेतुः स व्याहतत्वात् साध्यसाधको न भवतीति प्रत्यक्षलक्षणे मनस्संनिकर्षस्य ग्रहणं कार्यं न च कृतमिति प्रत्यक्षलक्षणे दोषः प्राप्त इतिसूत्रार्थः। व्याचष्टे– यदीति, त्वदुक्तरीत्याऽऽत्ममनस्संनिकर्षस्य ज्ञानाऽकारणत्वे स्वीकृते युगपदनेकज्ञानानुत्पत्तिर्व्याहन्येतेत्यर्थः। सिद्धान्त्युक्तपक्षे मनस्संनिकर्षानपेक्षामाह– नेदानीमिति, इदानीम्= इन्द्रियार्थसंनिकर्षमात्रस्य प्रत्यक्षकारणत्वपक्षे प्रत्यक्षोत्पादने इन्द्रियार्थसंनिकर्षस्य मनस्संनिकर्षापेक्षा न संभवति– स्वमात्रस्य कारणत्वात्, अत्रानिष्टमाह– मन इति, मनस्संयोगानपेक्षायाम्= मनस्संनिकर्षस्य प्रत्यक्षाकारणत्वे युगपदनेकज्ञानोत्पत्तिप्रसङ्गः स्यात्– सर्वेषामपीन्द्रियाणामेकस्मिन्नपि काले स्वस्वविषयैः सह संनिकर्षसंभवात् तादृशेन्द्रियैश्च सह विभोरात्मनोप्येकस्मिन् काले संनिकर्षसंभवादित्यर्थः। उक्तव्याघातास्वीकारपक्षे प्रकृतदोषमाह– अथेति, यदि युगपदनेकज्ञानानुत्पत्तेः प्रदर्शितव्याघातो न स्वीक्रियते

# न- अर्थविशेषप्राबल्यात् ॥ २९ ॥

नास्ति व्याघातः- न ह्यात्ममनस्संनिकर्षस्य ज्ञानकारणत्वं व्यभिचरति. इन्द्रियार्थसंनिकर्षस्य प्राधान्यमुपादीयते- अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थस्तस्य प्राबल्यं तीव्रतापटुते, तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसंनिकर्षविषयं नात्ममनसोः संनिकर्षविषयं तस्मादिन्द्रियार्थसंनिकर्षः प्रधानमिति ।

असति प्रणिधाने संकल्पे चाऽसति सुप्तव्यासक्तमनसां यद् इन्द्रियार्थसंनिकर्षादुत्पद्यते ज्ञानं तत्र मनस्संयोगोपि कारणमिति मनसि क्रियाकारणं वाच्यमिति, यथैव ज्ञातुः खल्वय-

---

तदा युगपज्ज्ञानानुत्पत्तिसमर्थनार्थं मनस्संनिकर्षस्यापि प्रत्यक्षकारणत्वं स्वीकार्यं ततश्च मनसोऽणुत्वात् एकस्मिन् कालेऽनेकैरिन्द्रियैः संनिकर्षो न संभवतीति युगपदनेकज्ञानापत्तिर्नास्ति ततश्च युगपदनेकज्ञानानुत्पत्तेर्व्याघातो नापद्यते किं तु मनस्संनिकर्षस्य प्रत्यक्षकारणत्वं प्राप्तं तेन तस्य प्रत्यक्षलक्षणे ग्रहणं कार्यं न तु कृतमिति प्रत्यक्षलक्षणे स दोषस्तदवस्थ एवेत्याह- तदवस्थमिति, प्रत्यक्षकारणत्वादात्ममनसोः संनिकर्षस्य प्रत्यक्षलक्षणे ग्रहणं कर्थमितीदं प्रदर्शितं दूषणं तदवस्थमेव= पूर्ववत् प्राप्तमेवेत्यन्वयः ॥ २८ ॥

पूर्वपक्षिणा प्रदर्शितं व्याघातं प्रत्याचष्टे- नेति, प्रदर्शितो व्याघातो नास्ति- प्रत्यक्षे अर्थविशेपस्य= इन्द्रियार्थसंनिकर्षस्य प्राबल्यात्= प्राधान्यादेव प्रत्यक्षलक्षणे ग्रहणं कृतं न तु मनस्संनिकर्षप्रतिषेधार्थम् तथा च प्रत्यक्षेपि मनस्संनिकर्षस्वीकाराद् युगपज्ज्ञानानुत्पत्तेर्व्याघातो नास्ति मनस्संनिकर्षश्च ज्ञानमात्रस्य साधारणं कारणमिति प्रत्यक्षेप्यर्थात् प्राप्तमेवेति तस्य प्रत्यक्षलक्षणे ग्रहणापेक्षा नास्तीति न तद्ग्रहणप्रयुक्तः प्रत्यक्षलक्षणे कोपि दोष इतिसूत्रार्थः । व्याचष्टे- नास्तीति । " संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत् " इतिन्यायात् मनस्संनिकर्षस्य ज्ञानेषु व्यभिचाराभावादेव तस्य प्रत्यक्षलक्षणे ग्रहणं न कार्यम् इन्द्रियार्थसंनिकर्षस्य त्वनुमानादौ व्यभिचारात् ग्रहणं कार्यमित्याह- नहीति । किं च प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्षस्य ग्रहणेन प्राधान्यमुपादीयते= प्रतिपाद्यते न तु मनस्संनिकर्षस्याभावः प्रत्यक्षे इत्याह- इन्द्रियार्थेति । प्रत्यक्षे इन्द्रियार्थसंनिकर्षप्राबल्यस्योक्तं कारणं स्मारयति- अर्थविशेषेति, सुप्तव्यासक्तमनसामेकदा= कदा चित् अर्थविशेपस्य= इन्द्रियसंयुक्तार्थस्य प्राबल्यादेव ज्ञानोत्पत्तिर्भवतीति प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्य प्राधान्यं प्राप्तं प्राधान्यादेव प्रत्यक्षलक्षणे ग्रहणं कृतमित्यन्वयः तदेतत् पूर्वत्र स्पष्टम् । अर्थप्राबल्यस्वरूपमाह- अर्थेति, अर्थविशेषः शब्दादिः कश्चिदेव कदाचिद् इन्द्रियार्थः= इन्द्रियसंयुक्तो भवति न सर्वः सर्वदा तत्रेन्द्रियसंयुक्तस्य या तीव्रता पटुता वा तदेव प्राबल्यम् , तत्र शब्दे तीव्रता स्पर्शे च पटुता= निद्रानाशकता सर्वाङ्गीणता वा विज्ञेया, शब्दस्पर्शाभ्यामेव निद्रानाशसंभवात् । उक्तं चार्थविशेषस्य प्राबल्यमिन्द्रियार्थसंनिकर्षविषयम्= इन्द्रियार्थसंनिकर्षजनकं भवति नात्ममनसोः संनिकर्षजनकं भवतीति प्रत्यक्षे इन्द्रियार्थसंनिकर्षस्य प्राधान्यं प्राप्तं प्राधान्याच्चास्य प्रत्यक्षलक्षणे ग्रहणं कृतं नान्यस्येत्यर्थः । इन्द्रियार्थसंनिकर्षो विषयो यस्येत्येवं वा इन्द्रियार्थसंनिकर्षस्य विषय इत्येवं पुंस्त्वपरिणामेन वा व्याख्येयम् ॥

उक्तेन प्रत्यक्षे मनस्संनिकर्षस्यापि कारणत्वं प्राप्तं मनस्संनिकर्षश्च मनस्समवेतक्रियाजन्यो वाच्य इति तादृशक्रियाकारणं जिज्ञासते- असतीति, प्रणिधाने प्रयत्ने संकल्पे= इच्छायाम् अत्र " प्रयुक्तं प्रणिधानं संकल्प इच्छा " इति तात्पर्यटीका, यदा हि आत्मनि प्रणिधानादिकं भवति तदा तेन प्रेरिते मनसि क्रिया संभवति क्रियया च मनस्संनिकर्षो यदा चात्मनि प्रणिधानादिकं न भवति तदात्मना प्रेरणाभावान्मनसि क्रिया न संभवति क्रियाया अभावे च मनस्संनिकर्षोपि न संभवति भवति च मनस्संनिकर्ष इति तादृशक्रियायाः कारणं वक्तव्यमिति जिज्ञासार्थः । अन्यत् पूर्वं प्रतिपा-

मिच्छाजनितः प्रयत्नो मनसः प्रेरक आत्मगुण एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति येन प्रेरितं मन इन्द्रियेण संबध्यते. तेन ह्यप्रेर्यमाणे मनसि संयोगाभावात् ज्ञानानुत्पत्तौ सर्वार्थताऽस्य निवर्तेत. एषितव्यं चास्य गुणान्तरस्य द्रव्यगुणकर्मकारकत्वम् अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसंभवात् शरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥ २९ ॥

प्रत्यक्षमनुमानम्— एकदेशग्रहणादुपलब्धेः ॥ ३० ॥

यदिदमिन्द्रियार्थसंनिकर्षादुत्पद्यते ज्ञानम् 'वृक्षः' इति एतत् किल प्रत्यक्षं तत्खल्वनुमानमेव, कस्मात्?. एकदेशग्रहणाद् वृक्षस्योपलब्धेः= अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते न चैकदेशो वृक्षः, तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद् भवति।

---

दितमेव। उत्तरमाह— यथैवेति, यथा प्रणिधानादिकाले आत्मनि पदार्थज्ञानेच्छा जायते तया चेच्छया प्रयत्नो भवति स च प्रयत्न आत्मगुण एव मनसः प्रेरको भवतीति तेन प्रयत्नेन मनसि संनिकर्षानुकूला क्रिया जायते तया च क्रियया मनसः संनिकर्षस्तथैवात्मनि प्रवृत्तिजनितम्= धर्माधर्मजन्यं रागद्वेषादिदोषजन्यं च सर्वस्य साधकम्= जनकम् अदृष्टाख्यं गुणान्तरमप्यस्ति येन= तेनादृष्टेन मनसः प्रेरणं भवति तादृशप्रेरणेन मनसि संनिकर्षानुकूला क्रिया जायते तया मनस इन्द्रियेण संनिकर्षो जायते तथा च सुप्तव्यासक्तमनसां यद् इन्द्रियार्थसंनिकर्षादुत्पद्यते ज्ञानं तत्र यो मनस्संनिकर्षस्तस्य कारणीभूता या क्रिया तस्याः कारणमात्मसमवेतमदृष्टमेवेत्यर्थः इदं चादृष्टं प्रणिधानादिकालेपि कारणं भवत्येवेत्यनुसंधेयम्। विपक्षे बाधकमाह— तेनेति, तेनादृष्टेन यदि मनसः प्रेरणं न स्यात्तदा मनस इन्द्रियेण संनिकर्षोपि न स्यात्तथा च ज्ञानमपि नोत्पद्येत ततश्च भोगोपि न स्यात् ततश्चाऽस्य= अदृष्टस्य सर्वार्थता= सर्वसाधकत्वं निवर्तेत, न चैवं संभवति भोगस्य प्रत्यक्षसिद्धत्वादित्यस्य= अदृष्टाख्यस्य गुणान्तरस्य= आत्मगुणस्य द्रव्यगुणकर्मसाधकत्वं स्वीकार्यं तथा चैतादृशादृष्टमेव मनस्समवेतक्रियाकारणमित्यन्वयः। विपक्षे बाधकमाह— अन्यथेति, यद्यदृष्टं मनसि क्रियाजनकं न स्यात्तदा भूतसूक्ष्माण भूतसूक्ष्मरूपाणां पार्थिवादिचतुर्विधानामणूनां मनसां च या क्रिया तस्यास्ततः= अदृष्टादन्यस्य हेतोरसंभवात् तादृशी क्रिया न स्यात् ततश्च शरीरादीनामुत्पत्तिरपि न स्यादित्यदृष्टस्य क्रियाकारणत्वं स्वीकार्यमित्यर्थः। शरीरादीनामुत्पत्तिश्च क्रियाविशिष्टपरमाणुभिरेवेति स्पष्टमेव ॥ २९ ॥

॥ इति प्रत्यक्षलक्षणपरीक्षा समाप्ता ॥

---

संप्रति प्रत्यक्षस्यानुमानेन्तर्भावमाशङ्कते— प्रत्यक्षमिति, यदिदं प्रत्यक्षलक्षणसिद्धं प्रत्यक्षं तद् अनुमानमेव= अनुमानातिरिक्तं न संभवति, हेतुमाह— एकेति, यथानुमाने एकदेशस्य साधनस्य धूमादेर्ग्रहणाद् एकदेशस्य वह्न्यादेरुपलब्धिः= बोधो जायते तथैव प्रत्यक्षस्थलेपि वृक्षादिपदार्थस्यैकदेशेन पूर्वभागेनेन्द्रियसंनिकर्षो भवतीति तावन्मात्रस्य ग्रहणाद् इन्द्रियाऽसंनिकृष्टस्य परभागस्योपलब्धिर्भवतीति अनुमानापेक्षया प्रत्यक्षे विशेषाभावात् प्रत्यक्षस्यानुमानेऽन्तर्भावो युक्त इतिसूत्रार्थः। व्याचष्टे— यदिदमिति, इन्द्रियार्थसंनिकर्षादुत्पद्यमानं यत् 'वृक्षोयम्' इत्याकारकं ज्ञानं तदेव प्रत्यक्षमित्युच्यते तत्त्वऽनुमानमेवेत्यन्वयः। प्रत्यक्षस्यानुमानत्वे हेतुं जिज्ञासते— कस्मादिति। उत्तरमाह— एकदेशेति, एकदेशग्रहणात्= वृक्षपूर्वभागमात्रग्रहणात् वृक्षस्योपलब्धिर्भवति न तु सर्वेण वृक्षेणेन्द्रियसंयोगो भवति— अशक्यत्वात्. अनुमानेप्युक्तरीत्यैकदेशग्रहणादुपलब्धिर्भवतीति तत्साद्दश्यात् प्रत्यक्षमनुमानमेवेत्यर्थः। उक्तं विशयदति—

किं पुनर्गृह्यमाणादेकदेशाद् अर्थान्तरमनुमेयं मन्यसे ?, अवयवसमूहपक्षे अवयवान्तराणि द्रव्योत्पत्तिपक्षे तानि चाऽवयवी चेति । अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः– न ह्यगृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशवदिति । अथ एकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसंधानात् तत्र वृक्षबुद्धिः ?, न तर्हि वृक्षबुद्धिरनुमानमेवं सति भवितुमर्हतीति । द्रव्यान्तरोत्पत्तिपक्षे नाऽवयव्यनुमेयः– अस्यैकदेशसंबद्धस्याग्रहणाद् ग्रहणे चाविशेषादनुमेयत्वाभावः, तस्माद् वृक्षबुद्धिरनुमानं न भवति ॥ ३० ॥

---

अर्वागिति, अयं पुरुषः अर्वाग्भागम्= वृक्षस्येन्द्रियसंनिकृष्टभागमात्रं गृहीत्वा वृक्षमुपलभते= वृक्षविषयकज्ञानवान् भवति वृक्षैकदेशस्तु वृक्षो न भवति तथा च यथा धूमग्रहणेन वह्निज्ञानं जायते तथैव वृक्षैकदेशग्रहणेन वृक्षज्ञानं जायते इति तत्= प्रत्यक्षं तादृगेव= अनुमानसदृशमेव भवतीत्यनुमानमेव न प्रमाणान्तरमित्यन्वयः ।

'वृक्षोयम्' इतिप्रत्यक्षेऽनुमेयव्यक्तिं सिद्धान्ती पृच्छति– किमिति, यथा गृह्यमाणाद् धूमादनुमेयो वह्निः पदार्थान्तरमेव तथा 'वृक्षोयम्' इतिप्रत्यक्षस्थले गृह्यमाणाद् वृक्षैकदेशाद् विज्ञेयो वृक्षो न पदार्थान्तरं यदनुमेयं स्यादित्याक्षेपः । पूर्वपक्षी अत्रानुमेयमाह– अवयवेति, अवयविनो बौद्धमतेन अवयवसमूहरूपत्वपक्षे अवयवान्तराणि= इन्द्रियासंनिकृष्टान्यवयवान्तराण्यनुमेयानि, द्रव्योत्पत्तिपक्षे= अवयवेष्वऽवयविन उत्पत्तिपक्षे= अवयसमूहातिरिक्तावयविपक्षे च तानि= अवयवान्तराणि अवयवी चानुमेयः– इन्द्रियासंनिकृष्टत्वादित्यर्थः । अत्रोत्तरमाह– अवयवसमूहेति, अवयवसमुदायातिरिक्तोऽवयवी नास्तीतिपक्षे वृक्षज्ञानाभाव एव– वृक्षज्ञानोपपत्तेरभावात्. इन्द्रियेण तावद् वृक्षैकदेश एव गृहीतः स च न वृक्ष इति त्वयैवोक्तम्. यथा हीन्द्रियसंनिकृष्ट एकदेशो वृक्षो न भवति तथैवाऽगृह्यमाणमपि वृक्षस्यैकदेशान्तरं वृक्षो न भवति– एकदेशत्वादिति ज्ञानद्वयमपि तत्तदेकदेशविषयकं जातं न तु अवयवसमूहविषयकं वृक्षश्चाऽवयवसमूह एव न तु एकदेश इति प्रथमकल्पे वृक्षबुद्धेरभाव एव प्राप्तः न चैतद्युक्तमिति नावयवसमूहोऽवयवीत्यर्थः । भवति चेन्द्रियसंनिकर्षे सति वृक्षप्रतिभास इति तदेव वृक्षप्रत्यक्षं न त्वनुमानमित्याशयः । नन्वेकदेशग्रहणादेकदेशान्तरस्यानुमाने जाते मिलितस्य समुदायस्यापि प्रतिसंधानम्= ज्ञानं जायते इति तत्र= प्रथमकल्पे वृक्षबुद्धिरुपपद्यते– समुदायप्रतिसंधानस्यैव वृक्षबुद्धिरूपत्वादित्याशङ्कते– अथेति । प्रत्याचष्टे– नेति, एवं सति वृक्षबुद्धिरनुमानं न भवितुमर्हति यत एकदेशान्तरविषयकमेवानुमानं न तु समुदायविषयकं. वृक्षज्ञानं तु अवयवसमुदायविषयकमिति नानुमानमित्यर्थः । द्वितीयकल्पे दोषमाह– द्रव्यान्तरेति, अवयवेष्ववयवसमुदायातिरिक्ताऽवयविन उत्पत्तिपक्षे= अवयवसमूहातिरिक्तावयविपक्षे तस्यावयविनः 'वृक्षोयम्' इतिप्रत्यक्षस्थलेऽनुमेयत्वं न संभवति, अत्र हेतुमाह– अस्येति, अस्य= वृक्षस्य एकदेशे संबद्धस्य= समवेतस्याऽग्रहणात् अग्रहणे चैकदेशासंबद्धत्वं हेतुः नहि वृक्ष एकदेशसंबद्धो भवति येनैकदेशसंबद्धस्य ग्रहणं स्यात् किं तु सर्वावयवसंबद्धो भवति. सर्वेषां चावयवानां ग्रहणं न संभवति– संनिकृष्टैरवयवैर्व्यवधानात्, ग्रहणे= एकदेशसंबद्धस्य ग्रहणे चाविशेषात्= एकदेशवद् वृक्षस्यापि प्रत्यक्षविषयत्वं प्राप्तं नानुमेयत्वमिति वृक्षस्यानुमेयत्वाभावः प्राप्त इति नेन्द्रियसंनिकर्षजन्या वृक्षबुद्धिरनुमानं भवितुमर्हतीति उपसंहरति– तस्मादिति । वृक्षो यथेन्द्रियसंनिकृष्टभागमात्रसमवेतो न भवति तथेन्द्रियासंनिकृष्टभागमात्रसमवेतोपि न भवति यदीन्द्रियासंनिकृष्टभागमात्रसमवेतः स्यात्तदेन्द्रियासंनिकृष्टभागस्यानुमेयत्वे वृक्षोनुमेयः स्यादपि न चैवमस्तीत्याशयः । अत्र– "यथैवायमर्वाग्भागमिन्द्रियसंबद्धं प्रत्यक्षत उपलभते तथा वृक्षमपीति नानुमेयो वृक्षः" इतिवार्तिकम् । "ग्रहणे" इत्यत्र "एकदेशसंबद्धस्य ग्रहणे" इत्यपि पाठान्तरम् ॥ ३० ॥

एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते तच्च—

## न— प्रत्यक्षेण यावत् तावदप्युपलम्भात् ॥ ३१ ॥

न प्रत्यक्षमनुमानम्, कस्मात् ?. प्रत्यक्षेणैवोपलम्भात्= यत् तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः, न चोपलम्भो निर्विषयोस्ति यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं भवति । किं पुनस्ततोऽन्यदर्थजातम् ?. अवयवी समुदायो वा । न चैकदेशग्रहणम् अनुमानं भावयितुं शक्यम्— हेत्वभावादिति ॥

अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः— तत्पूर्वकत्वात् ।

प्रत्यक्षपूर्वकमनुमानम्— संबद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनाद् अग्नावनुमानं भवति. यच्च संबद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं यच्च लिङ्गमात्रप्रत्यक्षग्रहणं नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति न त्वेतदनुमानम्— इन्द्रियार्थसंनिकर्षजत्वात्. न चानुमेयस्येन्द्रियेण संनिकर्षादनुमानं भवति, सोयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति ॥ ३१ ॥

---

अग्रिमसूत्रमवतारयति— एकदेशेति, इन्द्रियेण वृक्षैकदेशस्य ग्रहणं भवति तेन वृक्षैकदेशान्तरस्य यद् ज्ञानं तदनुमानमेवेतिरीत्या प्रत्यक्षस्यानुमानत्वम्= अनुमानेऽन्तर्भाव उपपाद्यते तच्च प्रत्यक्षस्यानुमानत्वं नोपपद्यते इत्यन्वयः । नेति— प्रत्यक्षेण= इन्द्रियसंनिकर्षेण यावत्तावत्= यावतस्तावतः= यस्य कस्यचिद्भागस्य= वृक्षैकदेशस्योपलम्भात्= ग्रहणात् तच्च ग्रहणं प्रत्यक्षमेव— इन्द्रियसंनिकर्षजत्वादिति न प्रत्यक्षस्यानुमानत्वम्= अनुमानेऽन्तर्भाव उपपद्यते इतिसूत्रार्थः । वस्तुतस्त्वत्र 'न— प्रत्यक्षेणैकदेशोपलम्भस्वीकारात्' इत्येवं सूत्रं पठनीयमासीत् । अत्र "यत्तदेकदेशग्रहणं भवताऽऽश्रीयते प्रत्यक्षं तत् तावतापि च प्रत्यक्षस्य लक्षणं सिध्यति. न चैवं प्रतिज्ञायते— सर्वं प्रत्यक्षस्य विषयः किं तु यावदिन्द्रियार्थसंनिकर्षादुपलभ्यते तावत् प्रत्यक्षस्य विषय इति" इतिवार्तिकम् । व्याचष्टे— नेति । प्रत्यक्षं नानुमानमित्यत्र हेतुं जिज्ञासते— कस्मादिति । उत्तरमाह— प्रत्यक्षेणेति, वृक्षैकदेशस्य प्रत्यक्षेणोपलम्भात् तादृशप्रत्यक्षस्य त्वयापि स्वीकार्यत्वान्न प्रत्यक्षमनुमानमित्यर्थः । उक्तमेव व्याचष्टे— यदिति, यदेकदेशग्रहणं तत् प्रत्यक्षकृतमेवेत्यर्थः । न चेति— उपलम्भो हि निर्विषयो न भवतीति तस्य= उपलम्भस्य यावदर्थजातं विषयस्तावदर्थजातं स्वीक्रियमाणं स्वविषयकोपलम्भस्य= प्रत्यक्षस्य व्यवस्थापकम्= साधकं भवतीति सिद्धमनुमानातिरिक्तं प्रत्यक्षमित्यर्थः । वृक्षैकदेशादतिरिक्तं वृक्षप्रत्यक्षविषयं पृच्छति— किमिति, ततः= इन्द्रियसंनिकृष्टादेकदेशात् । उत्तरमाह— अवयवीति, अस्माकं मते एकदेशादतिरिक्तोऽवयवी प्रत्यक्षस्य विषयस्तव मते चावयवसमुदाय एव— न ह्येकदेशः समुदायो भवतीत्येकदेशादतिरिक्तः समुदाय एव वृक्षप्रत्यक्षविषय इत्यर्थः । उपसंहरति— न चेति, यत् खल्वेकदेशग्रहणं तद् अनुमानं भावयितुम्= कर्तुं न शक्यम्— तस्यानुमानत्वे हेतोरभावादिति तदेकदेशग्रहणं प्रत्यक्षमेव— इन्द्रियसंनिकर्षजन्यत्वादिति सिद्धमनुमानातिरिक्तं प्रत्यक्षमित्यन्वयः ॥

प्रत्यक्षस्यानुमानेऽन्तर्भावनिरासमुपसंहरति— अन्यथेति, अन्यथा= प्रकारान्तरेणापि प्रत्यक्षस्यानुमानेऽन्तर्भावो न संभवति— तत्पूर्वकत्वात्= अनुमानस्य प्रत्यक्षपूर्वकत्वात्= हेतुभूतधूमादिप्रत्यक्षं विनाऽनुमानस्याऽसंभवादिति न प्रत्यक्षस्य स्वरूपाभावः संभवतीत्यर्थः । स्वयमेव व्याचष्टे— प्रत्यक्षेति, अनुमानस्य प्रत्यक्षपूर्वकत्वमुपपादयति— संबद्धेति, संबद्धौ= समानाधिकरणौ किं वा व्याप्यव्यापकभावसंबन्धविशिष्टौ, दृष्टवतः= महानसादौ दृष्टवतः, धूमप्रत्यक्षदर्शनात्= धूमस्य प्रत्यक्षेण दर्शनात्, अग्नौ= अग्निविषयकम् । अनुमानस्य प्रत्यक्षं विनाऽसंभवमाह— यच्चेति, प्रत्यक्षं महानसादौ, एतदन्तरेण= उक्तप्रत्यक्षं विना । लिङ्गादिदर्शनं च नानुमानम्— इन्द्रियार्थसंनिकर्षजत्वादित्याह— न त्विति ।

## न चैकदेशोपलब्धिः– अवयविसद्भावात् ॥ ३२ ॥

न चैकदेशोपलब्धिमात्रम्, किं तर्हि ?. एकदेशोपलब्धिः तत्सहचरिताऽवयव्युपलब्धिश्च, कस्मात् ?. अवयविसद्भावात्= अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी, तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्य एकदेशोपलब्धौ अनुपलब्धिरनुपपन्नेति ॥

## अकृत्स्नग्रहणादितिचेत् ? न– कारणतोऽन्यस्यैकदेशस्याभावात्[३] ।

न चावयवाः कृत्स्ना गृह्यन्ते– अवयवैरेवाऽवयवान्तरव्यवधानात्. नावयवी कृत्स्नो गृह्यते इति– नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति, सेयमेकदेशोपलब्धिरनिवृत्तैवेति । कृत्स्न-

अनुमेयन चेन्द्रियसंनिकर्षो न भवतीत्याह– न चेति, अनुमेयस्य यदनुमानं भवति तद् इन्द्रियसंनिकर्षोत्र भवतीति नियमाद् लिङ्गविषयकं यदिन्द्रियसंनिकर्षजन्यं ज्ञानं तदप्यनुमानं न भवति किं तु प्रत्यक्षमेवेति सिद्धं प्रत्यक्षमित्यर्थः । उपसंहरति– सोयमिति, प्रत्यक्षमिन्द्रियसंनिकर्षजन्यं भवति अनुमानं चेन्द्रियसंनिकर्षजन्यं न भवतीत्ययं लक्षणभेदः= स्वरूपभेदः प्रत्यक्षानुमानयोर्महानस्तीति न प्रत्यक्षस्यानुमानेन्तर्भावः संभवतीत्यर्थः ॥ ३१ ॥

यदि प्रत्यक्षेण वृक्षैकदेशमात्रस्योपलब्धिः स्यात्तदा वृक्षज्ञानमनुमानं स्यादपि न चैवमस्तीत्याह– न चेति, प्रत्यक्षेण वृक्षैकदेशमात्रस्योपलब्धिर्न भवति किं त्वऽवयविनः सद्भावात् तस्याप्यवयविभूतस्य वृक्षस्य प्रत्यक्षेणैवोपलब्धिर्भवतीति प्रत्यक्षस्यानुमानान्तर्भावे हेतुत्वेनोपन्यस्ता एकदेशमात्रोपलब्धिर्निराकृता वेदितव्या– तादृशावयविज्ञानस्य व्याप्तिज्ञानादिमूलकत्वाभावेनानुमानत्वानुपपत्तेरिति सूत्रार्थः । व्याचष्टे– न चेति । एकदेशोपलब्धिमात्रम्= एकदेशमात्रोपलब्धिर्न भवतीत्यर्थः । यद्येकदेशस्योपलब्धिर्न भवति तदा कस्य भवतीति जिज्ञासते– किमिति । उत्तरमाह– एकदेशेति, वृक्षोयमिति प्रत्यक्षेणैकदेशस्य तदवयविनश्चोपलब्धिर्भवति न त्वेकदेशमात्रस्येत्यन्वयः । तत्सहचरितः= एकदेशसहचरितः= एकदेशविशिष्टः, किं वा वृक्षतदेकदेशयोरवयवसमुदायवृत्तित्वात् सहचारः सामानाधिकरण्यम्, अत्र "न हीन्द्रियेण संनिकृष्यमाणे एकदेशे तत्सहचरितोऽवयवी न संनिकृष्टः तेन यथैकदेशः संनिकर्षादुपलभ्यते एवमनयव्यपि संनिकर्षादुपलभ्यते" इति वार्तिकम् । अवयव्युपलब्धिकारणं जिज्ञासते– कस्मादिति । उत्तरमाह– अवयविसद्भावादिति, अवयवातिरिक्तावयविसद्भावमाह– अस्तीति, तस्य= अवयविनः अवयवस्थानस्य= अवयवाः स्थानमाश्रयो यस्य तस्य अवयवसमवेतस्येत्यर्थः, उपलब्धिकारणेनेन्द्रियेण प्राप्तस्य= संनिकृष्टस्यैकदेशोपलब्धौ जातायामनुपलब्धिरनुपपन्नैवेत्यन्वयः । यथा घटज्ञाने जाते घटसमवेतरूपस्यापि ज्ञानं जायते एव तथैकदेशप्रत्यक्षे जाते एकदेशसमवेतावयविनः प्रत्यक्षमवश्यम्भावि, किं च स एकदेशोऽवयविन एवेति तदेकदेशप्रत्यक्षे तदवयविनोपि प्रत्यक्षमवश्यम्भावीति नैकदेशमात्रोपलब्धिर्येनावयविप्रत्यक्षमनुमानं स्यादित्यर्थः ॥

नन्ववयवी कृत्स्नेष्ववयवेषु वर्तते न त्वेकदेशमात्रे कृत्स्नानां चावयवानां प्रत्यक्षेण ग्रहणं न भवतीति नैकदेशोपलब्धौ अवयव्युपलब्धिरुपपद्यते इत्याशङ्कते– अकृत्स्नेति, कृत्स्नावयवग्रहणाभावान्नावयव्युपलब्धिः प्रत्यक्षेण संभवतीत्यर्थः । निराकरोति– नेति, वृक्षस्योपादानकारणभूतो योऽवयवसमुदायस्तदतिरिक्तस्यैकदेशस्याऽभावात्. यदि हि कारणातिरिक्तोप्येकदेशः स्यात्तदा तदुपलब्धावपि अवयव्युपलब्धिर्न स्यादपि न चैवमस्ति तथा चोपलभ्यमानोप्येकदेशोवयविन उपादानकारणमेव उपादानकारणोपलब्धौ च तत्समवेतावयविनोप्युपलब्धिरवश्यम्भाविनीत्येकदेशोपलब्धौ अवयव्युपलब्धिरुपपन्नेत्यर्थः । पूर्वपक्षं व्याचष्टे– न चेति, उक्ते हेतुमाह– अवयवैरिति, अवयवैः= इन्द्रियसंनिहितैरवयवैः । अवयव्यनुपलब्धिमाह– नावयवीति, कृत्स्नः खल्ववयवसमुदायोऽवयवीत्युच्यते तत्रावयवा-

मिति वै खल्वशेषतायां सत्यां भवति. अकृत्स्नमिति शेषे सति. तच्चैतद् अवयवेषु बहुष्वस्ति– अव्यवधाने ग्रहणाद् व्यवधाने चाग्रहणादिति ।

अङ्ग तु भवान् पृष्टो व्याचष्टाम्– गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे ? येनैकदेशोपलब्धिः स्यादिति, न ह्यस्य कारणेभ्योऽन्ये एकदेशा भवन्तीति, तत्रावयववृत्तं नोपपद्यते इति । इदं तस्य वृत्तम्– येषामिन्द्रियसंनिकर्षाद् ग्रहणमवयवानां तैः सह गृह्यते येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते । न चैतत्कृतोस्ति भेद इति । समुदायोप्यशेषता वा

न्तरव्यवधानात् कृत्स्नस्यावयवसमुदायस्य ग्रहणासंभवात् कृत्स्नावयवसमुदायलक्षणस्यावयविनो ग्रहणं न संभवतीत्यर्थः । उक्ते हेतुमाह– नायमिति, यद्यवयवी गृह्यमाणेष्वेकदेशावयवेषु परिसमाप्तः= पर्याप्त्या समवेतः स्यात्तदैकदेशोपलब्धौ अवयव्युपलब्धिः स्यादपि न चायमेकदेशमात्रसमवेत इत्येकदेशोपलब्धावपि नोपलभ्यते प्रत्यक्षेणेत्यर्थः । उपसंहरति– सेयमिति, तथा चैकदेशमात्रस्य योपलब्धिरुक्ता सा न निवर्तते= न प्रत्याख्यातुं शक्यते तथा चैकदेशमात्रोपलब्ध्याऽवयविनः प्रत्यक्षाभावादनुमानमेव भवतीत्यर्थः । प्रत्याख्यानमारभते– कृत्स्नमिति, अशेषतायाम्= यदि शेषो न भवति तदा कृत्स्नशब्दप्रयोगो भवति. यदि च शेषो भवति तदैवाऽकृत्स्नशब्दप्रयोगो भवति. तच्चैतत्= कृत्स्नाकृत्स्नशब्दप्रयोगः किं वा कृत्स्नाऽकृत्स्नग्रहणमवयवानां बहुत्वे सति भवति तत्र अव्यवधाने कृत्स्नग्रहणात् व्यवधाने च कृत्स्नाग्रहणात्. तथा चावयवानां बहुत्वात् कृत्स्नग्रहणमकृत्स्नग्रहणं वा संभवति अवयवी त्वेक एवेति न तस्य कृत्स्नाकृत्स्नग्रहणमुपपद्यते किं त्वेकदेशप्रत्यक्षे सति एकदेशसहचरितावयविनः प्रत्यक्षं स्यादेवेति यदुक्तम्–" नावयवी कृत्स्नो गृह्यते " इति तदनुपपन्नमित्यर्थः । अत्र– " उत्तरभाष्यविवरणपरं भाष्यम्– कृत्स्नमिति वै खल्वित्यादि. तदेकग्रन्थतया अङ्ग तु भवानित्यादिसंबोधनोपक्रमं भाष्यं व्यवस्थितम् " इति तात्पर्यटीका वस्तुतस्तु कृत्स्नमित्यादिभाष्यमपि पूर्वपक्षभाष्यमेवेति रोचते यतः– कृत्स्नाकृत्स्नग्रहणमवयवानामेवोपपद्यते नावयविन इत्यवयविनोनुमानमेव स्वीकार्यमित्याशयः, अत एवाग्रे अङ्गेत्यादिकं सिद्धान्तिवाक्यं संगच्छते, ।

एकदेशमात्रोपलब्ध्यनुपपत्तिप्रतिपादनमारभते– अङ्गेति, संबोधनमिदम् । व्याचष्टाम्= वदतु । वक्तव्यं पृच्छति– गृह्यमाणस्येति, एकदेशग्रहणेऽवयविग्रहणं भवत्येवेति नैकदेशमात्रोपलब्धिरित्यर्थः । अस्य= अवयविनः कारणेभ्यः= अवयवभूतेभ्य उपादानकारणेभ्योऽन्ये एकदेशा न भवन्ति किं तूपादानकारणान्येव. तेषु च गृहीतेषु तत्समवेतस्यावयविनोपि ग्रहणं भवत्येवेति नैकदेशमात्रोपलब्धिरित्याह– न हीति । तत्र= कारणातिरिक्तैकदेशेषु अवयववृत्तम्= अवयत्वं नोपपद्यते– उपादानकारणानामेवाऽवयवयवत्वादित्याह– तत्रेति, किं वा तत्र= अवयविनि अवयववृत्तम्= अवयवस्वभावः= एकदेशे उपलभ्यमाने एकदेशान्तरवद् अनुपलभ्यमानत्वं नोपपद्यते किं तूपलभ्यमानत्वमेवेत्यवयविग्रहणमुपपन्नमित्यर्थः । पूर्वपक्षी स्वाभिप्रायमाह– इदमिति, तस्य= अवयविनः, वृत्तम्= स्वभावः । येषामवयवानामिन्द्रियसंनिकर्षाद् ग्रहणं भवति तैरवयवैः सहावयवी गृह्यते येषां चावयवानां व्यवधानादग्रहणं तैरवयवैः सह= तादृशावयवसमवेतो न गृह्यते इति वृत्तं तथा चैकोऽवयवी न सिध्यति एकत्वे ग्रहणाग्रहणयोरुभयोरसंभवादित्यऽवयवसमुदायातिरिक्तोऽवयवी नास्तीत्यर्थः, तथा चात्र वार्तिकम्– " यथा गृह्यमाणानामगृह्यमाणानां चावयवानां भेदस्तथाऽवयविनोपि गृह्यमाणागृह्यमाणावयवाश्रितस्य भेदः प्राप्तस्ततश्च नैकोऽवयवी " इति । एतत् प्रत्याचष्टे– न चेति, एतत्कृतः अवयवानां ग्रहणाग्रहणकृतोऽवयवानामेव भेदः सिध्यति न त्ववयविनोपीत्यर्थः । अवयवसमूहमात्रपक्षे= अवयव्यस्वीकारपक्षे वृक्षबुद्धेरभावमुपपादयति– समुदायोपीत्यादिना, वाशब्द एवकारार्थः– अशेषतैव समुदायपदार्थस्तत्र वृक्षबुद्धिविषयो वृक्षः किमवयवसमुदायः ? किं वा तत्प्राप्तिः= अवयवसंयोगः ? इतिवक्तव्यम् , स्वाभिप्रायमाह– उभयथेति उभयथा=

समुदायो वृक्षः स्यात् ? तत्प्राप्तिर्वा ? उभयथा ग्रहणाभावः= मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात् ? प्राप्तिर्वा समुदायिनामिति ? उभयथा ( अपि ) समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यते इति= अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते प्राप्तिग्रहणमपि नोपपद्यते- प्राप्तिमतामग्रहणात्, सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदायमात्रे इति ॥ ३२ ॥

## साध्यत्वादवयविनि संदेहः ॥ ३३ ॥

"अवयविसद्भावात्" इत्ययमहेतुः- साध्यत्वात्= साध्यं तावदेतत्- कारणेभ्यो द्रव्यान्तरमुत्पद्यते इति. अनुपपादितमेतत्, एवं च सति विप्रतिपत्तिमात्रं भवति विप्रतिपत्तेश्चावयविनि संशय इति ॥ ३३ ॥

## सर्वाग्रहणमवयव्यऽसिद्धेः ॥ ३४ ॥

यद्यवयवी नास्ति ? सर्वस्य ग्रहणं नोपपद्यते । किं तत् सर्वम् ?, द्रव्यगुणकर्मसामान्य-

---

उभयथापि= कल्पद्वयेपि ग्रहणाभावः= वृक्षग्रहणाभावः= वृक्षबुद्धेरभाव एव स्यादित्यर्थः, तदेतदग्रे स्पष्टम्। प्रथमकल्पं विशदयति- मूलेति, मूलादयो ह्यवयवास्तेषां याऽशेषता स समुदायः स एव वृक्ष इति, वाशब्दार्थश्चिन्त्यः । द्वितीयकल्पं विशदयति- प्राप्तिरिति, समुदायिनामवयवानां प्राप्तिः= परस्परसंबन्धो वा वृक्ष इत्यर्थः । कल्पद्वयेपि वृक्षबुद्धेरभावमाह- उभयथेति । प्रथमकल्पे वृक्षग्रहणासंभवमाह- अवयवैरिति, इन्द्रियसंनिकृष्टैरवयवैरवयवान्तराणां व्यवधानादशेषावयवग्रहणं नोपपद्यते अशेषतैव समुदाय इति समुदायग्रहणं नोपपद्यते समुदाय एव भवन्मते वृक्ष इति वृक्षग्रहणमपि नोपपद्यते इत्यर्थः । द्वितीयकल्पे वृक्षग्रहणाभावमाह- प्राप्तीति, प्राप्तिमताम्= अशेषावयवानां ग्रहणं नोपपद्यते व्यवधानादित्युक्तमेव तत्र प्राप्तिमतामग्रहणे प्राप्तिग्रहणमपि नोपपद्यते अत्र पक्षे प्राप्तिरेव वृक्ष इति वृक्षग्रहणमपि नोपपद्यते तथा च कल्पद्वयेपि पूर्वपक्षिमते वृक्षबुद्धेरभावः सिद्धः । उपसंहरति- सेयमिति, एकदेशग्रहणेन सह जायमाना सेयं वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ= अवयवातिरिक्तावयविस्वीकारपक्षे एव कल्पते= उपपद्यते न तु अवयवसमुदायमात्रपक्षे इति तदुपपादनार्थमवयवसमुदायातिरिक्तोऽवयवी स्वीकार्य इत्यर्थः ॥ ३२ ॥

पूर्वसूत्रेऽवयव्युपलब्धौ अवयविसद्भावो यो हेतुरुक्तस्तं पूर्वपक्षी प्रत्याचष्टे- साध्यत्वादिति, अवयविनः साध्यत्वात्= सिद्धत्वाभावात्तत्रावयविनि संदेह एव- अवयवी अस्ति न वेति, तथा च "अवयविसद्भावात्" इतिहेतुर्न संभवतीति सूत्रार्थः । व्याचष्टे- अवयवीति, अहेतुः= अवयव्युपलब्धेरहेतुः । अहेतुत्वे हेतुमाह- साध्यत्वादिति, उक्तं व्याचष्टे- साध्यमिति, साध्यमाह- कारणेभ्य इति, कारणेभ्यः= उपादानकारणीभूतावयवेभ्यः, द्रव्यान्तरम्= अवयवातिरिक्तोऽवयवी उत्पद्यते इति साध्यमेव न सिद्धम्, पर्यवसितमाह- अनुपपादितमिति, एतत्= अवयविसद्भावः । उपसंहरति- एवं चेति, एवम्= "अवयविसद्भावात्" इतिवचनमात्रात् अवयविनि विप्रतिपत्तिमात्रम्= विरुद्धपक्षोत्थापनमात्रं जातं तादृशविप्रतिपत्तेश्चावयविनि संशयो जातो न निश्चय इति "अवयविसद्भावात्" इत्ययमहेतुः- अवयविसद्भावस्य सिद्धत्वाभावादित्यन्वयः ॥ ३३ ॥

अवयविसद्भावास्वीकारे सिद्धान्ती दोषमाह- सर्वेति, अवयव्यसिद्धेः= यद्यवयविसद्भावो न स्वीक्रियते तदा सर्वग्रहणं नोपपद्यते- सर्वैरवयवैरिन्द्रियसंनिकर्षासंभवात् इन्द्रियसंनिकृष्टैकदेशेन एकदेशान्तरस्य व्यवधानाद् व्यवधाने च ग्रहणासंभवादिति सर्वग्रहणानुपपत्तिः, अवयविस्वीकारे तु एकदेशेन सहावयविनोपि ग्रहणमुपपद्यते अवयवी चैक एवेति सर्वग्रहणमुपपद्यते अवयविस्वीकारे च "अवयविसद्भावात्" इति हेतुरुपपन्न इतिसूत्रार्थः । व्याचष्टे- यदीति, तदेत्यध्याहार्यं तदा सर्वस्येत्यन्वयः ।

विशेषसमवायाः । कथं कृत्वा ?, परमाणुसमवस्थानं तावद् दर्शनविषयो न भवति- अतीन्द्रियत्वादणूनाम्. द्रव्यान्तरं चावयविभूतं दर्शनविषयो नास्ति. दर्शनविषयाश्चेमे द्रव्यादयो गृह्यन्ते ते निरधिष्ठाना न गृह्येरन् गृह्यन्ते तु- 'कुम्भोयं श्याम एको महान् संयुक्तः स्पन्दते अस्ति मृन्मयश्च ' इति. सन्ति चेमे गुणादयो धर्मा इति. तेन सर्वस्य ग्रहणात् पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति ॥ ३४ ॥

## धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥

अवयव्यऽर्थान्तरभूत इति, संग्रहकारिते वै धारणाकर्षणे, संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितम् अपां संयोगादामे कुम्भे अग्निसंयोगात् पक्के । यदि त्ववयवका-

---

उक्तं सर्वपदार्थं जिज्ञासते- किमिति । सर्वपदार्थमाह- द्रव्येति, 'वृक्षोयम् ' इत्यत्र द्रव्यं पत्रादिकं रूपादिर्गुणः कर्म चलनकम्पनादिकं सामान्यं वृक्षत्वं विशेषः तद्व्यक्तित्वं किं वा सजातीयविजातीयभेदः समवायः वृक्षत्वसंबन्धः अवयवावयविसंबन्धश्चेति द्रव्यादीनां समुदायः सर्वपदार्थः । अवयव्यऽस्वीकारपक्षे पूर्वपक्षी सर्वग्रहणासंभवं जिज्ञासते- कथमिति, कथंकृत्वा= केन प्रकारेण सर्वाग्रहणमुच्यते इत्यर्थः । सर्वाग्रहणमुपपादयति- परमाण्विति, परमाणुसमवस्थानम्= परमाणुसमुदायो दर्शनविषयः= प्रत्यक्षविषयो न भवति- अणूनाम्= परमाणूनामतीन्द्रियत्वात् इन्द्रियाग्राह्यत्वात्. अवयविभूतं द्रव्यान्तरं स्थूलमपि दर्शनविषयो न भवति- त्वयाऽवयविनोऽस्वीकारात्- अस्वीकृतस्य दर्शनविषयत्वासंभवादित्यन्वयः । विपक्षे बाधकमाह- दर्शनविषया इति, गृह्यन्ते तु इमे द्रव्यगुणादयो दर्शनविषयाः= दर्शनविषयीभूतास्ते द्रव्यादयो निरधिष्ठानाः= निराश्रया न गृह्येरन्= न ग्रहीतुं शक्यन्ते तस्मात्तेषां गृह्यमाणानां ग्रहणसिद्ध्यर्थं तेषामश्रयीभूतोऽवयवी स्वीकार्य इत्यर्थः, एतदेवाह- गृह्यन्ते इति, कुम्भ इति द्रव्यमुक्तं 'श्याम एको महान् संयुक्तः ' इत्यनेन रूपसंख्यामहत्त्वसंयोगा गुणा उक्ता. स्पन्दते इति कर्म. अस्तीति सामान्यं सत्तारूपत्वात्. मृन्मय इति विशेषः । स्वाभिप्रायमाह- सन्तीति, गुणादयो धर्मा एव धर्माश्च निराश्रया न भवन्तीति तेषामाश्रयभूतोऽवयवी स्वीकार्य इत्यर्थः । उपसंहरति-- तेनेति, सर्वस्य= द्रव्यादिसमुदायस्य ग्रहणात् द्रव्यान्तरभूतः= अवयवातिरिक्तोऽवयवी सिद्धस्तथा च तद्ग्रहणेन तदाश्रितानां तद्धर्मभूतानां गुणादीनां ग्रहणं संभवति एक इतिबुद्धिरपि संभवति. अवयव्यस्वीकारपक्षे च सर्वग्रहणम् एक इतिज्ञानं चोक्तरीत्या न संभवति- अनेकेष्ववयवेष्वेकत्वस्यासंभवादित्यन्वयः ॥ ३४ ॥

अवयविसद्भावे हेत्वन्तरमाह- धारणेति, धारणं यथा घटस्य शिरसि स्थापनम् आकर्षणं सर्वस्य ग्रहणं स्वाभिमुखीकरणं वा एतयोर्धारणाकर्षणयोरुपपत्त्यर्थमपि एकोऽवयवी स्वीकार्यस्तस्यैकत्वाद् धारणाकर्षणे संभवतः, अवयवानां तु धारणाकर्षणे न संभवत एकत्वाभावात् अवयवावस्थायां परस्परं संयुक्तत्वाभावाच्च सिकताराशिवदिति सूत्रार्थः, धारणाकर्षणयोरवयविन्येवोपपत्तेरवयविसद्भावः सिद्ध इत्यन्वयः । व्याचष्टे- अवयवीति, धारणाकर्षणोपपत्तेरवयवी अर्थान्तरभूतः= अवयवातिरिक्तः सिद्ध इत्यर्थः । उपपादयति- संग्रहेति, धारणाकर्षणे संग्रहकारिते= एकत्रीभावकृते= अवयवानां परस्परदृढसंयोगेन संभवत इति अवयव्यवस्थानापन्नानाम् अवयवानां परस्परं दृढसंयोगाभावात् साकल्येन धारणाकर्षणे न संभवत इति तदुपपत्त्यर्थमवयवी स्वीकार्य इत्यर्थः । संग्रहपदार्थमाह- संग्रह इति, संयोगसहचरितम्= संयोगसमानाधिकरणं गुणान्तरम्= धर्मान्तरं एकत्रीभावलक्षणं किं वा दार्ढ्यम्, तदेतद् घटादिषु प्रत्यक्षम् । अस्य कारणमाह- स्नेहेति, स्नेहेन द्रवीभावेन चायं संग्रहो जायते यथा घृतेन वा जलेन वा गोधूमचूर्णस्य । उदाहरति- अपामिति, आमे= अपक्के कुम्भे यः संग्रहः= अवयवसंयोगः स मृत्तिकायामपां संयोगात् जायते. पक्के च कुम्भे यः संग्रहः सोऽग्निसंयोगाज्जायते इत्यन्वयः ।

रिते अभविष्यताम् ? पांशुराशिप्रभृतिष्वप्यज्ञास्येताम् , द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यतामिति ।

अथाऽवयविनं प्रत्याचक्षाणकः 'मा भूत् प्रत्यक्षलोपः' इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्यः ? इति, 'एकमिदं द्रव्यम्' इत्येकबुद्धेर्विषयं पर्यनुयोज्यः= किमेकबुद्धिरभिन्नार्थविषया ? आहो भिन्नार्थविषया ? इति, अभिन्नार्थविषयेति चेत् ? अर्थान्तरानुज्ञानादवयविसिद्धिः, नानार्थविषयेति चेत् ? भिन्नेष्वेकदर्शनानुपपत्तिः= अनेकस्मिन् एक इति व्याहता बुद्धिर्न दृश्यते इति ॥ ३५ ॥

## सेनावनवद् ग्रहणमितिचेत् ? न- अतीन्द्रियत्वादणूनाम् ॥ ३६ ॥

विपक्षे बाधकमाह- यदीति, यदि धारणाकर्षणे अवयवकारिते= अवयवानामेव साकल्येनाभविष्यतां तदा पांशुराशिप्रभृतिषु= धूलिराशेरपि अज्ञास्येताम्= भवेतां न च भवत इति धारणाकर्षणे अवयविन्येव संभवतो नावयवेष्विति अवयवी स्वीकार्य इत्यर्थः । अवयव्यस्वीकारे दोषमाह- द्रव्यान्तरेति, द्रव्यान्तरानुत्पत्तौ= अवयवातिरिक्तावयव्यस्वीकारे तृणादिषु जतुना= लाक्षया संगृहीतेष्वपि ( विषयत्वं सप्तम्यर्थः ) धारणाकर्षणे नाभविष्यताम्. जतुसंगृहीतेष्वप्यवयवेष्वेकत्वाभावात् साकल्येन धारणाकर्षणे न संभवतः अवयवातिरिक्तावयविनस्तु संभवत एकत्वादित्यर्थः । जतुना संग्रहश्चावयव्युत्पादनार्थ एव अन्यथा संग्रहवैयर्थ्यमेव- अवयवानां पूर्वमपि सत्त्वात्. तथा च यः संग्रहविशिष्ट सोऽवयव्येवेति सिद्धोऽवयवीत्यर्थः ॥

पूर्वपक्षिणि पूर्वपक्षमुपक्रमते- अथेति, यः पूर्वपक्षी अवयविनं न स्वीकरोति 'वृक्षोयम्' इत्याकारकप्रत्यक्षं च स्वीकरोतीति तादृशप्रत्यक्षस्य लोपो मा भूदिति हेतोरणुसञ्चयम्= परमाणुसमूहं दर्शनविषयम्= प्रत्यक्षविषयं प्रतिजानानः= स्वीकुर्वाणः= स्वीकरोति स किम्= कथम् अनुयोक्तव्यः= प्रष्टव्यः ? येन परास्तः स्यादिति विचारः । प्रष्टव्यमाह- एकमिति, 'एकमिदं द्रव्यम्' इत्यत्रैकत्वज्ञानस्य विषयम्= विषयं प्रति= को विषय इति पर्यनुयोज्यः= प्रष्टव्य इत्यन्वयः । प्रष्टव्यं द्विधा विकल्पयति- किमेकेति, 'एकमिदम्' इत्येषा एकत्वबुद्धिः किमभिन्नार्थविषया ? किं वा भिन्नार्थविषया ? इति । प्रथमकल्पमनुवदति- अभिन्नेति, एकत्वबुद्धेरभिन्नार्थविषयकत्वे अर्थान्तरस्य= अवयवातिरिक्तावयविनः अनुज्ञानात्= स्वीकारापत्त्या अवयविसिद्धिः संजाता यतोऽवयवानां परस्परं भेदाद् अभिन्नत्वं न संभवति एकत्वबुद्धेश्चाभिन्नार्थविषयकत्वं स्वीकृतमिति. अवयवी त्वेकत्वादभिन्न एवेति एकत्वबुद्धिरवयविविषया सिद्धेत्यर्थः । द्वितीयकल्पमनुवदति- नानार्थेति, भिन्नार्थविषया चेदित्यर्थः, अत्र दोषमाह- भिन्नेष्विति अवयवेषु भिन्नेषु= अनेकेषु एकदर्शनानुपपत्तिः= एकत्वज्ञानं नोपपद्यते विरोधात् , उक्तं व्याचष्टे- अनेकस्मिन्निति, अनेकस्मिन्= अनेकेष्ववयवेषु 'एकमिदम्' इति व्याहता विरुद्धा बुद्धिर्न दृश्यते= न संभवति तस्मात् एकत्वज्ञानमेकद्रव्यविषयकमिति वक्तव्यम् एकं च द्रव्यमवयव्येव संभवति- एकत्वसमवायात्. अनेकेष्ववयवेषु चैकत्वं नोपपद्यते इत्येकत्वबुद्धिविषयत्वेनाप्यवयवी अवयवातिरिक्तः सिद्ध इत्यर्थः ॥ ३५ ॥

पूर्वपक्षी अनेकेष्वप्यवयवेष्वेकत्वबुद्धिमुपपादयति- सेनेति, यथाऽनेकेष्वपि सेनाङ्गेषु हस्त्यादिषु वनाङ्गेषु च वृक्षेषु 'एका सेना' 'एकं वनम्' इत्येवमेकत्वबुद्धिरुपपद्यते तथाऽवयवेष्वप्यनेकेष्वेकत्वेन ग्रहणम्= एकत्वबुद्धिरुपपद्यते इत्यर्थः । प्रत्याचष्टे- नेति, हेतुमाह- अतीति, सेनाङ्गानां वनाङ्गानां च स्थूलत्वेनेन्द्रियग्राह्यत्वात् तत्र .तत्समुदायविषया एकत्वबुद्धिरुपपद्यते प्रकृतावयवानां तु परमाणुरूपत्वेनाऽतीन्द्रियत्वात् तत्समुदायविषयाप्येकत्वबुद्धिर्नोपपद्यते यदि परमाणूनामिन्द्रियग्राह्यत्वं स्यात्तदा तत्रै-

यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेषु 'एकम्' इत्युपपद्यते बुद्धिः एवम-णुषु संचितेष्वगृह्यमाणपृथक्त्वेषु 'एकम्' इत्युपपद्यते बुद्धिरिति। यथाऽगृह्यमाणपृथक्त्वानां सेनावनाङ्गानाम् आरात् कारणान्तरतः पृथक्त्वस्याग्रहणं यथाऽगृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाऽऽरात् जातिग्रहणं भवति यथाऽगृह्यमाणप्रस्पन्दानां नाऽऽरात् स्पन्दग्रह-णम्. गृह्यमाणे चार्थजाते पृथक्त्वस्याऽग्रहणात् 'एकम्' इति भाक्तः प्रत्ययो भवति. न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद् भाक्त एकप्रत्ययः— अतीन्द्रियत्वादणूना-मिति। इदमेव परीक्ष्यते— किमेकप्रत्ययोऽणुसंचयविषयः? आहो स्विन्न? इति, अणुसंचय एव सेनावनाङ्गानि. न च परीक्ष्यमाणमुदाहरणमिति युक्तम्— साध्यत्वादिति॥

दृष्टमितिचेत्? न— तद्विषयस्य परीक्षोपपत्तेः॥ १४॥

कत्वबुद्धिरपि जायेत न चैवमस्तीत्येकत्वबुद्धेरुपपत्त्यर्थमवयवी स्वीकार्यः स च एकः स्थूलश्चेति तत्रैकत्व-बुद्धिरुपपद्यते इति सूत्रार्थः। पूर्वपक्षं व्याचष्टे— यथेति, दूरादगृह्यमाणं पृथक्त्वं येषां तेषु। पृथक्त्वग्रहणे ह्येकत्वबुद्धिर्न जायते इत्यनुसंधेयम्। प्रकृतमाह— एवमिति, संचितेषु= एकत्रीभूतेषु. परमाणूनामेकत्री-भावं विनेन्द्रियग्राह्यत्वासंभवादित्याशयः। उक्तं प्रत्याख्यातुमारभते— यथेति, अगृह्यमाणपृथक्त्वानाम्= पृथक्त्वेन ग्रहणायोग्यानाम् आरात्= दूरात् कारणान्तरतः= दृष्टिदोषात् पृथक्त्वस्य ग्रहणं न भवतीति. यथा चा गृह्यमाणजातीनाम्= पलाश इति वा खदिर इति वेति पलाशत्वादिजात्या ग्रहणायोग्यानां वनाङ्गानां दूरात् पलाशत्वादिजातिग्रहणं न भवतीति. यथा चा गृह्यमाणप्रस्पन्दानाम्= ग्रहणायोग्य-कम्पानां वृक्षाणां दूरात् स्पन्दग्रहणं न भवतीति. तत्रार्थजाते= सेनाद्यङ्गे गृह्यमाणे सति तद्धर्मस्य पृथक्त्वस्याऽग्रहणात् 'एकमिदम्' इति भाक्तः= गौणः प्रत्ययः= ज्ञानं जायते. अनेकेष्वेकत्वज्ञानं गौणमेवेति स्पष्टमेवेत्यन्वयः। एवं जातिग्रहणाभावे भाक्तः साम्यप्रत्ययः स्पन्दग्रहणाभावे च भाक्तो निश्चलत्वप्रत्ययो विज्ञेयः, अत्र— "भक्तिर्नामाऽतथाभूतस्य तथाभावि सामान्यं उभयेन भज्यते इति भक्तिः यथा वाहीकस्य मन्दामन्तस्संज्ञामुपादाय वाहीको गौरिति" इतिवार्तिकम्, उभयेन= उपमानोपमेया-भ्यामित्यर्थः प्रकृते एकत्वविशिष्टाविशिष्टयोरेकत्वप्रत्ययस्य साम्येन जायमानत्वाद् भाक्तत्वं विज्ञेयम्। प्रकृ-तमाह— न त्विति, पूर्वं यथाशब्दप्रयोगादत्र तथेत्यध्याहार्यम्, परमाणूनां तु गृह्यमाणपृथक्त्वानाम्= अनु-मानादिना पृथक्त्वेन ग्रहणयोग्यानामित्यर्थः विशेषणमिदं न समञ्जसमिति 'अगृह्यमाणपृथक्त्वानाम्' इतिपठनीयम्' कारणतः पृथक्त्वस्याऽग्रहणादपि भाक्तोपि एकत्वप्रत्ययो न संभवति— परमाणूनामतीन्द्रि-यत्वेन कथमपि प्रत्यक्षविषयत्वं नोपपद्यते इति न संचितेष्वपि परमाणुषु सेनावनाङ्गवदेकत्वबुद्धिरुपपद्यते तस्मादेकत्वबुद्धेरुपपत्त्यर्थं तद्विषयोऽवयवी स्वीकार्य इत्यर्थः। इदं ह्यस्य भाष्यकारस्य लेखपाण्डित्यं यदुत्तरपक्षारम्भोप्यत्र न स्पष्ट इति विभावनीयम्। सेनावनाङ्गयोर्दृष्टान्तत्वासंभवमाह— इदमेवेति। परी-क्ष्यमाह— किमेकेति, किमेकत्वप्रत्ययः परमाणुसमूहविषयकः संभवति किं वा न संभवतीति परीक्षणीयम-स्ति—यतः सेनावनाङ्गानि दृष्टान्तभूतानि भवन्मते परमाणुसमूह एव— अवयविनोऽस्वीकारात् तथा च सेनावनाङ्गानामप्येकत्वप्रत्ययविषयत्वं परीक्ष्यमाणमेवास्ति न तु सिद्धं. परीक्ष्यमाणं नोदाहरणं न युक्तम्= न संभवति— साध्यत्वात्= साध्यनिश्चयाविषयत्वात् सिद्धस्यैवोदाहरणत्वसंभवात् तथा च परमाणुभूतेषु सेनावनाङ्गेष्वेवैकत्वप्रत्ययविषयत्वं नास्तीति कथं तद्दृष्टान्तेन वृक्षाद्यवयवभूतपरमाणुष्वे-कत्वप्रत्ययविषयत्वं स्यात्, यदि सेनावनाङ्गानि स्थूलानि तदा स्थूलस्यावयवित्वात् सिद्धोऽवयवी तस्मादेकत्वप्रत्ययविषयोऽवयवी स्वीकार्य इत्यर्थः॥

ननु सेनावनाङ्गेषु 'एकमिदम्' इत्येवमेकत्वप्रत्ययो दृष्ट इति न "सेनावनवत्" इति दृष्टान्त-स्यासिद्धिरिति तद्वत् प्रकृतेप्यवयसमूहस्यैकत्वप्रत्ययविषयत्वं संभवतीति नाऽवयविस्वीकारापत्तिरि-

यदपि मन्येत- दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेन 'एकम्' इतिग्रहणं न च दृष्टं शक्यं प्रत्याख्यातुमिति। तच्च नैवम्- तद्विषयस्य परीक्षोपपत्तेः= दर्शनविषय एवायं परीक्ष्यते= योयमेकमिति प्रत्ययो दृश्यते स परीक्ष्यते--- किं द्रव्यान्तरविषयो वा? अथाणुसंचयविषयः? इति, अत्र दर्शनमन्यतरस्य साधकं न भवति। नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेन 'एकम्' इतिग्रहणम् अतस्मिंस्तदितिप्रत्ययो यथा स्थाणौ पुरुष इति। ततः किम्?. अतस्मिंस्तदितिप्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः। स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम्?. योऽसौ पुरुषे पुरुषप्रत्ययः तस्मिन् सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोयमिति, एवं नानाभूतेषु 'एकम्' इति सामान्यग्रहणात् प्रधाने सति भवितुमर्हति प्रधानं च सर्वस्याग्रहणाद् नोपपद्यते इति. तस्मादभिन्ने एवायमभेदप्रत्ययः- 'एकम्' इति ॥

त्याशङ्कते- दृष्टमिति। परिहरति- नेति। परिहारहेतुमाह- तद्विषयस्येति, सेनावनाङ्गेषु य एकत्वप्रत्ययस्तद्विषयस्य परीक्षोपपत्तेः= परीक्षणीयत्वात्. नामैकत्वप्रत्ययस्य किं परमाणुसमूहो विषयः किं वाऽवयवी विषय इतिपरीक्षणीयमस्ति न तु परिक्षितमिति "सेनावनवत्" इतिदृष्टान्तस्यासिद्धत्वं तदवस्थमेवेत्यर्थः। पूर्वपक्षं व्याचष्टे- यदपीति, 'एकम्' इतीदं ग्रहणम्= एकत्वेन ग्रहणम्= एकत्वप्रत्ययविषयत्वं दृष्टमित्यन्वयः। दृष्टस्य= प्रत्यक्षस्य च प्रत्याख्यानं न संभवति तथा च "सेनावनवत्" इतिदृष्टान्तः सिद्धस्तेन परमाणुसमूहस्यैकत्वप्रत्ययविषयत्वं प्राप्नोतीत्यर्थस्तदाह- न चेति। उक्तं परिहरति- तच्चेति। परिहारहेतुमाह- तद्विषयस्येति। उक्तं व्याचष्टे- दर्शनेति, दर्शनविषयः= एकत्वप्रत्ययविषय एव परीक्ष्यते किमवयवी वा परमाणुसमूहो वेत्यर्थः। परीक्ष्यमाह- योयमिति। एकत्वप्रत्ययविषयं द्विधा विकल्पयति- किमिति। द्रव्यान्तरम्= अवयवी। स्वविवक्षितमाह- अत्रेति, अत्र= एवं संशये जाते दर्शनम्= सेनावनाङ्गेषु 'एकम्' इतिज्ञानमात्रम् अन्यतरस्य= अन्यतरकल्पस्य= एकत्वप्रत्ययोणुसंचयविषयक इतिपक्षस्य साधकं न भवतीत्यन्वयः। उक्तदर्शनस्याऽसाधकत्वमुपपादयति- नानाभावे इत्यादिना, परमाणूनां नानाभावे= नानात्वे सति तेषां पृथक्त्वस्याग्रहणादभेदेन यदिदम् 'एकम्' इति एकत्वेन ग्रहणं तद् अतस्मिंस्तदितिप्रत्ययः= अनेकस्मिन् एक इति प्रत्ययो यथा स्थाणौ पुरुष इति प्रत्ययस्तथा च मिथ्याभूत इति न साध्यसाधनसमर्थ इत्यन्वयः। ननु भवतु परमाणुषु एकमितिज्ञानम् अतस्मिंस्तदितिप्रत्ययस्तेन का नो हानिः प्राप्तेति जिज्ञासते- ततः किमिति। उत्तरमाह- अतस्मिन्निति, अतस्मिंस्तदितिप्रत्ययः प्रधानप्रत्ययसापेक्षः= तस्मिंस्तदितिप्रत्ययसापेक्षो भवति तथा च यथा रजते रजतज्ञानं विना शुक्तिरजतज्ञानं न संभवतीति शुक्तिरजतज्ञानेन रजते रजतज्ञानं सिध्यति तथा एकस्मिन् एकत्वज्ञानं विना अनेकस्मिन् एकत्वज्ञानं न संभवतीति अनेकस्मिन् एकत्वज्ञानेन एकस्मिन् एकत्वज्ञानं सिद्धम् तत्र परमाणोस्त्वेकस्य प्रत्यक्षं न संभवति- अतीन्द्रियत्वादिति प्रधानभूतमेकत्वज्ञानमऽवयविविषयकमेव स्वीकार्यमिति सिद्धोऽवयवीत्यर्थः। स्थाणौ पुरुषप्रत्ययस्य प्रधानप्रत्ययं जिज्ञासते- स्थाणाविति। उत्तरमाह- योसाविति, योऽसौ पुरुषे पुरुषप्रत्ययः स स्थाणौ पुरुषप्रत्ययस्य प्रधानमित्यन्वयः। तस्य प्राधान्यकारणमाह- तस्मिन्निति, तस्मिन्= पुरुषे पुरुषप्रत्यये जाते सति हि पुरुषसामान्यग्रहणात्= पुरुषसादृश्यग्रहणात् स्थाणावपि पुरुषोयमिति प्रत्ययः संभवतीति हेतोस्तस्य प्राधान्यम्, प्रकृतमाह- एवमिति, एवं नानाभूतेषु= अनेकेषु परमाणुषु 'एकम्' इति प्रत्यक्षम् प्रधाने= एकस्मिन् एकमितिप्रत्यये सत्येव सामान्यग्रहणात्= अगृह्यमाणपृथक्त्वादिलक्षणसादृश्यग्रहणात् भवितुमर्हति, प्रधानम्= एकस्मिन् एकत्वज्ञानं च सर्वस्यावयवसमुदायस्याग्रहणान्नोपपद्यते सर्वेषामवयवानामग्रहणं च व्यवधानादुक्तमेव तथा च नानाभूतेषु परमाण्वेकत्वप्रत्ययसिद्धयर्थमेकस्मिन् एकत्वप्रत्ययः स्वीकार्यः स चाप्येकपरमाणुविषयको न संभवति परमाणोरतीन्द्रियत्वादिति अभिन्ने= एकस्मिन् अवयविन्येवा-

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमितिचेत् ?
न– विशेषहेत्वभावाद् दृष्टान्ताव्यवस्थौ ।

श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेषु एकप्रत्ययः प्रधानमऽनेकस्मिन्नेकप्रत्ययस्येति । एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते– विशेषहेत्वभावात्, अणुषु संचितेष्वेकप्रत्ययः किमतस्मिंस्तदितिप्रत्ययः स्थाणौ पुरुषप्रत्ययवत्? अथार्थस्य तथाभावात् तस्मिंस्तदितिप्रत्ययो यथा शब्दस्यैकत्वादेकः शब्द इति?, विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तौ संशयमापादयत इति । कुम्भवत् संचयमात्रं गन्धादयोपीत्यनुदाहरणं गन्धादय इति । एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्यः तेषु चैवं प्रसङ्ग इति ॥

---

ऽयम् अभेदप्रत्ययः= प्रधानभूत एकत्वप्रत्ययः स्वीकार्यः– अयवविनः स्थूलत्वेनेन्द्रियग्राह्यत्वात् तस्मिन् एकत्वप्रत्ययस्यानुपपत्तिर्नास्तीत्येवं रीत्याऽवयवी सिद्ध इत्यर्थः ॥

नन्ववयवभूतेषु परमाणुष्वनेकेषु येदकत्वज्ञानम् अतस्मिंस्तदितिप्रत्ययभूतं तस्यावयविन्येकत्वप्रत्यय एव प्रधानमिति राजाज्ञा नास्ति येन तस्मादवयवी सिध्येत् किं तु इन्द्रियान्तरविषयेषु= चक्षुरतिरिक्तश्रोत्रघ्राणादिविषयेषु शब्दगन्धादिषु अभिन्नेषु योऽभेदप्रत्ययः= एकत्वप्रत्ययः स एव प्रधानं तथा चानेकेषु परमाणुष्वेकत्वप्रत्ययसिद्ध्यर्थमप्युक्तरीत्या प्रधानापेक्षायामवयविन्येकत्वप्रत्ययापेक्षा नास्ति येनावयवी सिध्येत् किं तु शब्दादिविषयकैकत्वप्रत्ययेनैव प्रकृतैकत्वप्रत्ययस्य सिद्धिसंभव इत्याशङ्कते– इन्द्रियान्तरेति । परिहरति– नेति, परिहारहेतुमाह– विशेषेति, प्रधानप्रत्ययो हि अतस्मिंस्तदितिप्रत्ययस्य दृष्टान्तः= साधको भवति तत्र परमाणुष्वेकत्वप्रत्ययस्य किं शब्दादिविषयक एकत्वप्रत्ययो दृष्टान्तः किं वा स्थाणौ पुरुषत्वप्रत्ययो दृष्टान्त इति दृष्टान्तव्यवस्था न संभवति– विशेषहेतोः= दृष्टान्तव्यवस्थापकहेतोरभावात् तथा च स्थाणौ पुरुषत्वप्रत्ययस्य दृष्टान्तत्वे तद्वत् परमाणुष्वेकत्वप्रत्ययोऽतस्मिंस्तदिति प्रत्ययः स्यात् तत्र हि प्रधानप्रत्ययापेक्षा प्राप्ता प्रधानप्रत्ययेन चावयवी सिध्यतीति पूर्वोक्तदोषस्तदवस्थ एव, शब्दादिविषयकैकत्वप्रत्ययस्य दृष्टान्तत्वे चाऽवयविन्येकत्वप्रत्ययस्याऽपेक्षा न संभवति तस्याऽतस्मिंस्तदितिप्रत्ययत्वाभावात् किं तु शब्दादिविषयकैकत्वप्रत्यय एव दृष्टान्त इत्यत्र विशेषहेतुः= प्रमाणं नास्तीति नावयविप्रत्याख्यानमुपपद्यते इत्यर्थः । पूर्वपक्षं व्याचष्टे– श्रोत्रादीति, अनेकस्मिन्नेकप्रत्ययस्य= अनेकेषु परमाणुष्वेकत्वप्रत्ययस्य शब्दादिविषयक एकत्वप्रत्ययः प्रधानम्= साधको न त्ववयविन्येकत्वप्रत्ययो येन तस्मादवयविसिद्धिः स्यादित्यर्थः । अत्र दृष्टान्ताव्यवस्थादोषमाह– एवं चेति, एवम्= शब्दादिष्वेकत्वप्रत्ययस्य प्रधानत्वस्वीकारे । दृष्टान्ताव्यवस्थायां हेतुमाह– विशेषेति । दृष्टान्ताव्यवस्थां प्रदर्शयति– अणुष्विति, य एकत्वप्रत्ययः स किमित्येवमन्वयः । द्वितीयकल्पमाह– अथेति, अर्थस्य= प्रकृतैकत्वप्रत्ययविषयस्य, तथाभावात्= एकत्वात्, तथा च प्रथमकल्पे प्रधानप्रत्ययापेक्षायामुक्तरीत्याऽवयविसिद्धिः, द्वितीयकल्पेपि च प्रकृतैकत्वप्रत्ययविषयस्यैकत्वं प्राप्तम् एकत्वं चानेकेषु परमाणुषु न संभवतीति प्रकृतैकत्वप्रत्ययविषयत्वमेकत्वविशिष्टस्यावयविन एव स्वीकार्यमित्यवयविसिद्धिर्जातेति दृष्टान्तकल्पद्वयेप्यवयवी सिध्यत्यवेत्यर्थः । पूर्वपक्षिमतासिद्धिमाह– विशेषेति, विशेषहेतोः= दृष्टान्तव्यवस्थापकहेतोः परिग्रहम्= प्रदर्शनं विना, यथा वह्निमानित्यत्र जलह्रदमहानसयोर्द्वयोरपि दृष्टान्तत्वापत्तौ वह्निसंशयो जायते तथा प्रकृतेपि प्रदर्शितदृष्टान्तद्वयेन संचितपरमाणुविषयकैकत्वप्रत्यये तस्मिंस्तदितिप्रत्ययत्वस्य संशयो जायते न तु व्यवस्थेत्यर्थः । किं च शब्दगन्धादीनामप्यणुभूतानामिन्द्रियग्राह्यत्वासंभवादिन्द्रियग्राह्याणामणुसमुदायभूतत्वमेव वक्तव्यं तथा च गन्धादीनामपि घटादिवत् परमाणुसंचयरूपत्वं प्राप्तं तथा च गन्धादिष्वपि योऽभेदप्रत्ययः= एकत्वप्रत्ययः सोऽनेकस्मिन्नेकत्वप्रत्यय एवेति अतस्मिंस्तदितिप्रत्यय एव संजातस्तथा च तत्रापि उक्तप्रधानप्रत्ययापेक्षा प्राप्तेत्यवयवी सिध्यत्येव, तत्र परमा-

एकत्वबुद्धिस्तस्मिंस्तदितिप्रत्यय इति विशेषहेतुः– महदितिप्रत्ययेन सामानाधिकरण्यात्[१६] ।

'एकमिदं महच्च' इत्येकविषयौ प्रत्ययौ समानाधिकरणौ भवतस्तेन विज्ञायते– यन्महत् तदेकमिति । अणुसमूहातिशयग्रहणं महत्प्रत्यय इतिचेत् ? सोयमऽमहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदितिप्रत्ययो भवतीति । किं चातः ? अतस्मिंस्तदितिप्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति= भवितव्यं महत्येव महत्प्रत्ययेनेति ॥

अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरितिचेत् ? न– मन्दतीव्रताग्रहणमियत्तानवधारणाद् यथा द्रव्ये[१७] ।

णुष्वेकत्वप्रत्ययस्य तस्मिंस्तदितिप्रत्ययत्वसाधने गन्धादयः= गन्धादिविषयकैकत्वप्रत्यय उदाहरणं न संभवति– तस्मिंस्तदितिप्रत्ययत्वाभावादित्याह– कुम्भवदिति । उक्तमन्यत्रातिदिशति– एवमिति, महत्परिमाणं संयोगः स्पन्दो गोत्वादिजातिश्च प्रत्येकं परमाणुषु न संभवतीति तदाश्रयोऽवयवी स्वीकार्य इत्याशयः, स्पन्दग्रहणार्थं स्पन्दाश्रयग्रहणमावश्यकम्– धर्मिग्रहणं विना धर्मग्रहणानुपपत्तेस्तत्र परमाणोस्तु प्रत्यक्षं न संभवतीति 'स्पन्दते' इतिस्पन्दप्रत्यये स्पन्दाश्रयत्वेनाऽवयविनः प्रत्ययः प्राप्त इति स्पन्दप्रत्ययेनाऽवयविसिद्धिर्विज्ञेया अन्यदग्रिमभाष्ये स्पष्टमेव, पूर्वपक्षी एवम्= एकत्वप्रत्ययवत् परिमाणादिविशेषप्रत्ययान् प्रत्यपि अनुयोक्तव्यः= प्रष्टव्यः– महत्परिमाणादिप्रत्ययविषयः क इति, तेषु= परिमाणादिप्रत्ययेष्वपि एवम्= एकत्वप्रत्यये इव अवयविसिद्धेः प्रसङ्गः= आपत्तिरस्ति वक्ष्यमाणरीत्येत्यन्वयः ॥

परिमाणप्रत्ययेनाऽवयविसिद्धिं प्रदर्शयति– एकत्वेति, 'एकमिदम्' इत्येकत्वप्रत्ययो नाऽतस्मिंस्तदितिप्रत्ययः किं तु तस्मिंस्तदितिप्रत्यय एव महदितिप्रत्ययेन= महत्त्वप्रत्ययेन="एकमिदं महत्' इतिसामानाधिकरण्यात्= एकत्वप्रत्ययस्य महत्त्वप्रत्ययस्य चैकविषयकत्वात् तत्र परमाणुषु महत्त्वासंभवात् अवयविनि च संभवात् अवयव्येव 'एकमिदं महत्' इतिप्रत्ययस्य विषयस्तस्यैकत्वाच्चैकत्वप्रत्ययस्तस्मिंस्तदितिप्रत्यय एवेत्ययमवयविसिद्धौ विशेषहेतुरित्यर्थः । व्याचष्टे– एकमिदमिति, एकत्वप्रत्ययस्य महत्त्वप्रत्ययस्य चैकविषयकत्वाभावे सामानाधिकरण्यं न स्यात् । स्वाभिप्रायमाह– तेनेति, तेन= सामानाधिकरण्येन । ननु परमाणुसमूहस्य यदतिशयग्रहणम्= आधिक्यग्रहणं तदेव महत्त्वप्रत्ययो न त्ववयविग्रहणं येनावयविसिद्धिः स्यात्. आधिक्यग्रहणेपि महत्त्वप्रत्ययो भवति यथा वृष्टावित्याशङ्कते– अणुसमूहेति । उत्तरमाह– सोयमिति, यदि महत्त्वप्रत्ययः परमाणुविषयकस्तदा परमाणुषु महत्त्वाभावात् महत्त्वप्रत्ययोऽतस्मिंस्तदितिप्रत्ययो जात इत्यन्वयः । अत्र पूर्वपक्षी स्वानिष्टं जिज्ञासते– किं चात इति । उत्तरमाह– अतस्मिन्निति, प्रधानसिद्धिः= प्रधानमहत्त्वप्रत्ययसिद्धिर्जाता. प्रधानसिद्धिस्वरूपमाह– भवितव्यमिति, अतस्मिंस्तदितिप्रत्ययरूपस्य परमाणुविषयकमहत्त्वप्रत्ययस्य प्रधानं हि महद्विषयो महत्त्वप्रत्ययस्तस्य सिद्धिर्जाता– यतस्तेन विना परमाणुविषयको महत्त्वप्रत्ययो न संभवति– अतस्मिंस्तदितिप्रत्ययरूपत्वात् तत्र महद्विषयकमहत्त्वप्रत्ययेन महान् पदार्थः सिद्धः महत्त्वं च परमाणुषु न संभवतीति अवयव्येव महान् वक्तव्य इत्येवं महत्परिमाणप्रत्ययविशेषेणावयवी सिद्ध इत्यर्थः ॥

ननु परमाणुविषयकोऽतस्मिंस्तदितिप्रत्ययरूपो यो महत्त्वप्रत्ययः प्रदर्शितस्तस्यावयविविषयको महत्त्वप्रत्यय एव प्रधानम्= प्रधानप्रत्ययोस्तीति राजाज्ञा नास्ति येन तस्मादवयवी सिध्येत् किं तु 'अणुः शब्दः' 'महान् शब्दः' इति व्यवसायः= प्रत्ययो भवतीति 'महान् शब्दः' इतिप्रत्यय एव प्रधानमिति सिद्धम् अयं च प्रत्ययो नाऽवयविविषयको येनावयवी सिध्येदित्याशङ्कते– अणुरिति,

'अणुः शब्दोऽल्पो मन्दः' इत्येतस्य ग्रहणम् 'महान् शब्दः पटुस्तीव्रः' इत्येतस्य ग्रहणम्, कस्मात्? इयत्तानवधारणात्= न ह्ययम् 'महान् शब्दः' इतिव्यवस्यन् 'इयानयम्' इत्यवधारयति यथा बदरामलकबिल्वादीनि। 'संयुक्ते इमे' इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम्॥

द्वौ समुदायावाऽऽश्रयः संयोगस्येतिचेत्?

कोयं समुदायः? प्राप्तिरनेकस्य? अनेका वा प्राप्तिरेकस्य समुदाय इतिचेत्?

प्राप्तेरग्रहणं प्राप्त्याश्रितायाः[१]।

'संयुक्ते इमे वस्तुनी' इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते॥

'अणुः शब्दो महान् शब्दः' इत्यन्वयः। एतत् प्रत्याचष्टे— नेति। परिहारहेतुमाह— मन्देति, यथा द्रव्ये= द्रव्यस्य दूराद् इयत्तायाः= तत्परिमाणस्यानवधारणात् 'अणुरयम्' किं वा 'महानयम्' इति प्रत्ययो जायते तथा शब्दस्यापीयत्ताया अनवधारणादेव मन्दतीव्रताग्रहणम्= 'अणुः शब्दो महान् शब्दः' इति प्रत्ययो भवति तथा च शब्दविषयकमहत्त्वप्रत्ययस्यापीयत्तानवधारणमूलकत्वेनाऽतस्मिंस्तदितिप्रत्ययरूपत्वमेव प्राप्तं ततश्च नायं प्रधानं भवितुमर्हति किं त्ववयविषयक एव महत्त्वप्रत्ययः प्रधानं स्यात् तेन चावयवी सिद्ध एवेत्यर्थः। उत्तरवाक्येत्र मन्दशब्दोणुत्वपरस्तीव्रशब्दो महत्त्वपरः, तीव्रता= महत्त्वम्। मन्दतीव्रताग्रहणम्= शब्देऽणुत्वमहत्त्वग्रहणम्— 'अणुः शब्दो महान् शब्दः' इति। व्याचष्टे— अणुरिति, अणुः= अल्पः= मन्द इति पर्यायशब्दाः। महान्= पटुः= तीव्रः, इति च, अणुत्वादीनां शब्देऽसंभवात् मन्दस्तीव्रइत्यादिव्याख्यानम्। शब्दे महत्त्वादिग्रहणकारणं जिज्ञासते— कस्मादिति। तादृशकारणमाह— इयत्तेति। इयत्तानवधारणमाह— नहीति, अयम्= महत्त्वादिवेत्ता, यथा बदरादिकम् 'इयत्' इत्यवधारयति तथा 'महान् शब्दः' इति व्यवस्यन्नपि 'इयानयं शब्दः' इति नावधारयतीति इयत्तानवधारणादेवं शब्दे महत्त्वादिप्रत्ययो जायते इतीयत्तानवधारणमूलकत्वान्नायं प्रधानं भवितुमर्हतीति अवयविविषयकमहत्त्वप्रत्यय एव प्रधानं स्यात् तेन चावयवी सिद्ध इत्यर्थः। संयोगप्रत्ययेनावयविसिद्धिं प्रदर्शयति— संयुक्ते इति, 'संयुक्ते इमे' इति द्वित्वसमानाश्रयायाः= द्वित्वसमानाधिकरणायाः प्राप्तेः= संयोगस्य ग्रहणमस्ति तत्र द्वित्वं द्वयोरेव भवति परमाणुद्वयस्य च प्रत्यक्षं न संभवतीत्येतादृशसंयोगप्रत्ययविषयत्वमवयविद्वयस्यैव स्वीकार्यम्— प्रत्यक्षयोग्यत्वादिति संयोगप्रत्ययेनाप्यवयवी सिद्ध इत्यर्थः।

ननूक्तस्य द्वित्वसमानाधिकरणसंयोगस्य द्वौ परमाणुसमूहावाश्रयो नावयवी येन तादृशसंयोगप्रत्ययेनावयवी सिध्येदित्याशङ्कते— द्वाविति। उक्तवाक्यस्य स्पष्टार्थत्वात् व्याख्यानं परित्यज्य समुदायपदार्थं पृच्छति— कोयमिति, भाष्यमिदमसंगतमशुद्धं वा जातमिति विज्ञेयम्। अनेकस्य प्राप्तिः= संयोग एव समुदायः किं वा एकस्यानेका प्राप्तिः= संयोगः समुदाय इत्यन्वयः। अत्र— "कोयं समुदायः? किमनेकः समुदायी? उताऽनेकस्य प्राप्तिः? इति, अनेकस्य प्राप्तिः समुदाय इतिचेत्, 'प्राप्ती प्राप्ते' इति प्रत्ययः स्यादिति, किं कारणम्? समुदायस्य प्राप्तित्वेनाभ्युपगमात्, 'इमे वस्तुनी संयुक्ते' इति च न स्यात्। अथाऽनेकः समुदायी समुदायः? द्वित्वेन सामानाधिकरण्यं न स्यात्= 'संयुक्ते इमे वस्तुनी' इति द्वित्वसमानाधिकरणः प्रत्ययो न स्यात्" इति वार्तिकम्। पूर्वत्र प्राप्तेरेव समुदायत्वात् प्राप्ती इति द्विवचनम्, उत्तरत्र समुदायस्यैकत्वेन द्वित्वासंभव इतिविभावनीयम्।

द्वयोरपि कल्पयोर्दोषमाह— प्राप्तेरिति, उक्तकल्पद्वयेन प्राप्तिः= संयोग एव समुदाय इति प्राप्तं तत्र समुदायस्य संयोगाश्रयत्वे प्राप्तेरेव संयोगाश्रयत्वं प्राप्तं न च प्राप्त्याश्रितायाः= संयोगाश्रितायाः प्राप्तेः= संयोगस्य ग्रहणं भवति— संयोगस्य संयोगवृत्तित्वाभावादित्यर्थः। व्याचष्टे— संयुक्ते इति, 'संयुक्ते इमे वस्तुनी' इत्यत्र द्वे प्राप्ती संयुक्ते= द्वौ संयोगौ संयुक्तौ न गृह्येते इत्यन्वयः, 'संयुक्ते'

**अनेकसमूहः समुदाय इतिचेत्? न– द्वित्वेन सामानाधिकरण्यस्य ग्रहणात्[२०]।**

'द्वाविमौ संयुक्तावर्थौ' इति ग्रहणे सति नाऽनेकसमूहाश्रयः संयोगो गृह्यते न च द्वयोरण्वोर्ग्रहणमस्ति तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति ॥

**प्रत्यासत्तिः प्रतीघातावसाना संयोगो नार्थान्तरमितिचेत्? न– अर्थान्तरहेतुत्वात् संयोगस्य[२१]।**

शब्दरूपादिस्पन्दानां हेतुः संयोगः– न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पन्दे च कारणत्वं गृह्यते तस्माद् गुणान्तरम्।

इति द्विवचनान्तम्, यदि संयोगरूपा प्राप्तिरेव समुदायस्तदा संयोगस्य संयोगवृत्तित्वं प्राप्तं तेन संयोगयोः संयोग इति प्राप्तं न च द्वौ संयोगौ संयुक्तौ गृह्येते संयोगस्य संयुक्तद्रव्यमात्रवृत्तित्वेन संयोगवृत्तित्वाभावादिति न संयोगरूपा प्राप्तिः समुदायस्तथा च संयोगस्य समुदायद्वयवृत्तित्वासंभवादवयविद्वयवृत्तित्वमेव वक्तव्यमिति संयोगप्रत्ययेनाप्यवयवी सिद्ध इत्यर्थः ॥

नन्वनेकेषां परमाणूनां समूह एव समुदायस्तस्य च संयोगाश्रयत्वसंभवान्न पूर्वोक्तदोषापत्तिरित्याशङ्कते– अनेकेति। एतत् परिहरति– नेति। परिहारहेतुमाह– द्वित्वेनेति, 'द्वौ इमौ संयुक्तौ' इत्येवं द्वित्वसामानाधिकरण्यस्य प्रतीयमानत्वादित्यन्वयः, द्वित्वं च नाऽनेकेषु परमाणुषु संभवति– तेषां बहुत्वात् नापि परमाणुसमूहे– तस्यैकत्वादिति न परमाणुसमूहस्य संयोगाश्रयत्वमुपपद्यते इति संयोगाश्रयभूतमवयविद्वयं स्वीकार्यमित्यर्थः। व्याचष्टे– द्वाविति, यदा 'द्वाविमौ संयुक्तौ पदार्थौ' इतिग्रहणं भवति तदा नाऽनेकपरमाणुसमूहाश्रयः संयोगो गृह्यते– अत्र संयोगाश्रयस्य द्वित्वधीभनात् परमाणुसमूहे च द्वित्वासंभवात्– तस्यैकत्वात्। न चापि 'द्वाविमौ' इत्यत्र द्वयोः परमाण्वोर्ग्रहणं संभवति– परमाणुद्वये द्वित्वसंभवेपि परमाणुद्वयस्य प्रत्यक्षासंभवादित्याह– न चेति। उपसंहरति– तस्मादिति, 'द्वाविमौ' इत्यत्र महत्त्वविशिष्टे द्वित्वाश्रयभूते च द्रव्ये= अवयविनावेव संयोगस्य स्थानम्= आश्रयः संभवत इति संयोगप्रत्ययेनाप्यवयवी सिद्ध इत्यर्थः ॥

ननु न भवदभिमतः संयोगो येन स परमाणुसमूहे नोपपद्येत परमाणुसमूहस्य च संयोगाश्रयत्वं न स्यात् किं तु प्रतीघातावसाना= आघातनाश्या द्वैधीभावनाश्या वा प्रत्यासत्तिः= अव्यवहितसामीप्यमेव संयोगो न त्वऽर्थान्तरम्= भवदभिमतो गुणस्वरूपः, एतादृशा प्रत्यासत्तिश्च परमाणुसमूहेपि संभवतीति न संयोगाश्रयत्वेनावयविस्वीकारापत्तिरित्याशङ्कते– प्रत्यासत्तिरिति। परिहरति– नेति। परिहारहेतुमाह– अर्थान्तरेति, मदभिमतस्य संयोगस्य गुणभूतस्य पदार्थान्तरहेतुत्वात् यथा भेरीदण्डसंयोगेन शब्दो जायते पटरूपादिकमपि तन्तुसंयोगं विना न संभवति वृक्षस्पन्दे च वायुसंयोगः कारणमस्ति तत्र संयोगं विना शब्दाद्युत्पत्तिर्न स्यात् अस्ति च शब्दाद्युत्पत्तिरिति प्रत्यासत्त्यऽतिरिक्तो गुणभूतः संयोगः स्वीकार्यस्तथा च तादृशसंयोगाश्रयत्वेनावयव्यपि स्वीकार्यः– प्रत्यासत्तिमात्रेण शब्दाद्युत्पत्तेरदर्शनादित्यर्थः। व्याचष्टे– शब्देति, संयोगस्य शब्दादिहेतुत्वं प्रतिपादितमेव। विपक्षे बाधकमाह– न चेति, द्वयोर्द्रव्ययोर्गुणान्तरस्य= संयोगस्य उपजननमन्तरेण= उत्पत्तिं विना शब्दादिकारणत्वं न गृह्यते इत्यन्वयः, शब्दे रूपादिषु स्पन्दे चेति सप्तम्यर्थो निरूपितत्वं शब्दादिनिरूपितं कारणत्वमित्यर्थः, यदि भेरीदण्डयोरेव शब्दकारणत्वं स्यात्तदा भेरीदण्डसंयोगं विनापि प्रत्यासत्तिमात्रेण शब्दो जायेत न चैवं जायते शब्दः प्रत्यासत्तिमात्रेणेति भेरीदण्डसंयोगेनैव भेरीशब्दो जायते एवं रूपादिकं प्रत्यपि

प्रत्ययविषयश्चाऽर्थान्तरं तत्प्रतिषेधो वा[22] ।

'कुण्डली गुरुः अकुण्डलश्छात्रः' इति संयोगबुद्धेश्च यद्यर्थान्तरं न विषयः ? अर्थान्तरप्रतिषेधस्तर्हि विषयस्तत्र—

प्रतिषिध्यमानवचनम्[23] ।

'संयुक्ते द्रव्ये' इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद् वक्तव्यमिति । द्वयोर्महतोराश्रितस्य ग्रहणाद् नाऽण्वाश्रय इति ॥

जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याऽप्रत्याख्यानम्. प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः ।

---

तत्तत्पदार्थसंयोगस्य हेतुत्वं विज्ञेयम्. तस्मात् संयोगो गुणान्तरम् अर्थान्तरम्= प्रत्यासत्त्यतिरिक्तः प्रत्ययविषयश्चेति संयोगप्रत्ययेन संयोगाश्रयत्वेनावयवी सिद्ध इत्याह— तस्मादिति ॥

संयुक्त इत्यादिसंयोगबुद्धेर्यदि संयोगलक्षणमर्थान्तरं न विषयस्तदा तत्प्रतिषेधः= अर्थान्तरप्रतिषेधो विषयः स्यात् तत्र तादृशप्रतिषेधेन प्रतिषेध्यं वक्तव्यं स्यादित्याह— प्रत्ययविषय इति । व्याचष्टे— कुण्डलीति, कुण्डली= कुण्डलसंयोगवान्, अकुण्डलः= अकुण्डलसंयोगरहितश्छात्रः । अर्थान्तरम्= मदभिमतो गुणभूतः संयोगः । अर्थान्तरप्रतिषेधस्य संयोगबुद्धिविषयत्वे दोषप्रतिपादकवाक्यमवतारयति— तत्रेति ।

किं वा संयोगतदभावयोः प्रत्यक्षं प्रमाणयति— प्रत्ययेति, अर्थान्तरम्= उक्तप्रत्यासत्त्यतिरिक्त एव संयोगः 'कुण्डली गुरुः' इत्यादिप्रत्ययविषयो भवति— प्रत्यासत्तेः सामीप्यरूपत्वेन संयोगातिरिक्तत्वादित्यर्थः । संयोगाभावप्रत्यक्षमाह— तदिति, तत्प्रतिषेधः= संयोगप्रतिषेधोऽपि गृह्यते यथा— अकुण्डलश्छात्र इति तत्र प्रतिषेधस्य सप्रतियोगिकत्वनियमेन संयोगं विना संयोगप्रतिषेधो नोपपद्यते इति प्रत्यासत्त्यतिरिक्तः संयोगः स्वीकार्य इत्येवमर्थो व्याख्येयः, अत्र पक्षे 'कुण्डली गुरुरकुण्डलश्छात्रः' इत्युदाहरणं मन्तव्यम्, संयोगबुद्धेश्चेत्यादिकं च वाक्यमग्रिमप्रधानवाक्यस्यावतरणभूतं विज्ञेयम् ।

प्रतिषिध्येति— यदि संयोगबुद्धेरर्थान्तरप्रतिषेधो विषयस्तदा तादृशप्रतिषेधेन प्रतिषिध्यमानं वक्तव्यम्— प्रतिषेध्यं विना प्रतिषेधानुपपत्तेरित्यर्थः । व्याचष्टे— संयुक्ते इति, अन्यत्र दृष्टस्यैवान्यत्र प्रतिषेधो भवतीत्यभिप्रायेण "यदर्थान्तरमन्यत्र दृष्टम्" इत्युक्तम्, 'संयुक्ते द्रव्ये' इतिसंयोगबुद्धेरर्थान्तरप्रतिषेधविषयकत्वे यदिह प्रतिषिध्यते तत् प्रतिषेध्यं वक्तव्यं न चात्र प्रतिषेध्यं वक्तुं शक्यम्— प्रतिषेधबोधकशब्दस्यात्राभावादिति न संयोगबुद्धेरर्थान्तरप्रतिषेधो विषय इत्यर्थः । अत्र संयोगबुद्धिर्व्यवधानप्रतिषेधविषयापि संभवति यथा 'संयुक्तौ घटौ' इत्यस्य 'व्यवधानरहितौ घटौ' इत्यर्थसंभवादिति एतादृशार्थान्तरप्रतिषेधस्य संयोगबुद्धिविषयत्वम् "प्रतिषिध्यमानवचनम्" इत्यनेन निराक्रियते इत्याशयः प्रतीयते । स्वाभिप्रायमाह— द्वयोरिति, द्वयोर्महतोः= स्थूलयोर्द्रव्ययोराश्रितस्य= समवेतस्य संयोगस्य ग्रहणात् न संयोगो गृह्यमाणः परमाणुद्वयाश्रितः— परमाणोर्महत्त्वाभावेन ग्रहणासंभवात् . आश्रयिग्रहणं विना च तदाश्रितग्रहणासंभवादिति गृह्यमाणसंयोगाश्रयिभूतं तादृशद्रव्यं चावयव्येवेति सिद्धोऽवयवीत्यर्थः । प्रत्यासत्तेरपि संयोगत्वस्वीकारे न कश्चिद् दोषः— तादृशप्रत्यासत्तेरपि स्थूलद्रव्यद्वयनिष्ठाया एव ग्रहणसंभवेन तादृशप्रत्यासत्तिबुद्ध्याप्यवयविसिद्धिसंभवादित्यनुसंधेयम् ॥

संप्रति गोत्वादिजातिप्रत्ययेनावयविसिद्ध्यर्थं प्रथमं जातिं साधयति— जातीति, 'अयमपि गौरयमपि गौः' इत्येवं खण्डमुण्डादिगोव्यक्तिष्वनुगतं यद् गोत्वज्ञानं तदेव प्रत्ययानुवृत्तिः सा लिङ्गं साधकं यस्य तस्य प्रत्ययानुवृत्त्यभिव्यज्यमानस्य जातिविशेषस्येत्यन्वयः, गवां सकलासु व्यक्तिषु यद् 'गौः'

व्यधिकरणस्याऽनभिव्यक्तेरधिकरणवचनम्[३४] ।

अणुसमवस्थानं विषय इतिचेत्?—

प्राप्ताप्राप्तसामर्थ्यवचनम्[३५] ।

किमप्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते? अथ प्राप्ते? इति ।

अप्राप्ते ग्रहणमितिचेत्? व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः= व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत । प्राप्ते ग्रहणमितिचेत्? मध्यपरभागयोरप्राप्तौ अनभिव्यक्तिः । यावत् प्राप्तं भवति तावत्यभिव्यक्तिरितिचेत्? तावतोऽधिकरणत्वमणुसमवस्थानस्य यावति प्राप्ते जातिविशेषो गृह्यते तावदस्याऽधिकरणमिति प्राप्तं भवति तत्र—

इतिज्ञानं जायते तद् गोत्वं विना न संभवति- व्यक्तीनां परस्परं भेदात् 'गौः' इत्याकारकानुवृत्तज्ञानकारणत्वासंभवादिति प्रत्ययानुवृत्तिलिङ्गस्य जातिविशेषस्य गोत्वादेरप्रत्याख्यानम्= प्रत्याख्यानं न संभवति । विपक्षे बाधकमाह- प्रत्याख्याने वेति, यदि गोत्वादिजातिर्न स्वीक्रियेत तदा प्रत्ययस्य 'अयं गौः' इत्यादिज्ञानस्य व्यवस्था नोपपद्यते- गोत्वातिरिक्तस्य व्यवस्थापकधर्मस्यानुपलब्धेः, गव्येव 'गौः' इति ज्ञानं जायते न घटादौ इत्यत्र गोवृत्तिगोत्वमेव कारणम् उक्तं च- "गौः न स्वरूपेण गौर्नाप्यगौः गोत्वाभिसंबन्धात्तु गौः" इति, एवं घटादिष्वपि योज्यं तदनेन गोत्वादिजातिः सिद्धा तस्या अधिकरणत्वेनावयवी सिध्यति- परमाणूनां गोत्वाद्याश्रयत्वानुपपत्तेरित्यर्थः, गोत्वादिप्रतीतौ गोत्वाद्याश्रयस्य प्रत्यक्षं स्वीकार्यं स्वातन्त्र्येण गोत्वादेः प्रत्यक्षानर्हत्वात् तत्र परमाणूनां प्रत्यक्षानर्हत्वात् गोत्वाद्याश्रयत्वेन प्रत्यक्षविषयत्वमवयविन एव स्वीकार्यमित्याशयः ।

जात्यावयविसिद्धिमाह- व्यधिकरणस्येति, गोव्यक्तिषु गोत्वस्यैवाभिव्यक्तिर्भवति न तु व्यधिकरणस्य घटत्वादेरपीति अभिव्यज्यमानगोत्वादेरधिकरणं वक्तव्यम्= स्वीकार्यं यद् गोत्वाद्यधिकरणं तदेवावयवीत्यर्थः । यदि व्यधिकरणस्यापि जातिविशेषस्य व्यक्तिष्वभिव्यक्तिः स्यात्तदा सर्वासां जातीनां सर्वासु सजातीयाऽसजातीयासु व्यक्तिष्वभिव्यक्तया 'अयं गौरेव' इत्येषा प्रत्ययव्यवस्था न स्यात् ततश्च जातिसिद्धिरपि न स्यात् न चैवमस्तीत्याशयेन व्यधिकरणस्यानभिव्यक्तेरित्युक्तम् ।

ननु अणुसमवस्थानम्= परमाणुसमूह एव विषयः= जात्याश्रयः किं वा जात्याश्रयप्रत्ययविषयो न त्ववयवी येनाऽवयवी सिध्येदित्याशङ्कते- अणुसमवस्थानमिति । अत्र चोदयति- प्राप्तेति, अणुसमवस्थाने प्राप्ते= इन्द्रियसंनिकृष्टे सति किं वाऽप्राप्ते= इन्द्रियासंनिकृष्टेपि इन्द्रियस्य जातिग्रहणसामर्थ्यमस्तीति वक्तव्यमित्यर्थः । व्याचष्टे-किमिति । तदाश्रयः= परमाणुसमूहाश्रितः, स्पष्टमन्यत् ।

उक्तं प्रथमकल्पमनुवदति- अप्राप्ते इति, अणुसमूहे अप्राप्ते= इन्द्रियासंनिकृष्टे सति जातिग्रहणमितिचेदित्यर्थः । अत्र दोषमाह- व्यवहितस्येति, एवं हि व्यवहितस्यापि= इन्द्रियासंनिकृष्टस्यापि परमाणुसमूहस्योपलब्धिप्रसङ्गः= प्रत्यक्षं स्यात्. न चैवं संभवतीत्यर्थः । उक्तमेव विशदयति- व्यवहिते इति, व्यवहितस्य परमाणुसमूहस्य प्रत्यक्षे प्राप्ते तदाश्रयः= तदाश्रितो वृक्षत्वादिजातिविशेषोपि गृह्येत न चैवं व्यवधाने सति गृह्यते इत्यर्थः । द्वितीयकल्पमनुवदति- प्राप्ते इति, परमाणुसमूहे प्राप्ते= इन्द्रियसंनिकृष्टे सति तदाश्रिता जातिर्गृह्यते इति नोक्तदोष इति चेदित्यर्थः । अत्र दोषमाह- मध्येति, इन्द्रियसंनिकर्षो हि स्वाभिमुखभागेनैव संभवति न तु मध्यपरभागाभ्यामपि तथा च मध्यपरभागयोः अप्राप्तौ= इन्द्रियसंनिकर्षाभावेन वृक्षत्वादिजातेरभिव्यक्तिर्न स्यात्- वृक्षत्वाभिव्यक्त्यर्थं वृक्षत्वाश्रयीभूतानां सर्वेषामवयवानामिन्द्रियेण ग्रहणस्यावश्यकत्वात्. सर्वेषां ग्रहणस्य चासंभवाज्जात्यभिव्यक्तिरनुपपन्नेत्यर्थः । ननु यावत्= यावान् वृक्षभागः प्राप्तः= इन्द्रियसंनिकृष्टस्तावत्येव जात्यभिव्यक्तिर्भवती-

## एकसमुदाये प्रतीयमानेऽर्थभेदः ।

एवं च सति योऽणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत=यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति, तस्मात् समुदिताणुसमवस्थानस्याऽर्थान्तरस्य जातिविशेषाभिव्यक्तिविषयत्वाद् अवयव्यऽर्थान्तरभूत इति ॥ ३६ ॥

॥ परीक्षितं प्रत्यक्षम् ॥

अनुमानमिदानीं परीक्षते—

## रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमऽप्रमाणम् ॥ ३७ ॥

त्याशङ्कते— यावदिति । अत्र दोषमुपक्रमते— तावत इति, एवं हि यावति भागे जात्यभिव्यक्तिर्भवतीन्द्रियसंनिकृष्टे तावतोऽणुसमवस्थानस्य= परमाणुसमूहभागस्य जात्यधिकरणत्वं प्राप्तमित्यन्वयः । उक्तं विशदयति— यावतीति, यावति भागे प्राप्ते= इन्द्रियसंनिकृष्टे, तावत्= तावानेव भागः, अस्य= वृक्षत्वादिजातिविशेषस्याधिकरणमितिप्राप्तम् । अत्र दोषबोधकवाक्यमवतारयति— तत्रेति ।

उक्तपक्षे दोषमाह— एक इति, एकस्मिन् परमाणुसमूहे प्रतीयमाने सति अर्थभेदः= प्रतीयमानपदार्थानेकत्वं स्यादित्यन्वयः, यथा वृक्षावयवसमूहे प्रतीयमाने तादृशवृक्षावयवेषु पूर्वभागानामिन्द्रियसंनिकर्षे सति तत्र वृक्षत्वजात्यभिव्यक्त्या तादृशपूर्वभाग एको वृक्षः परभागैरिन्द्रियसंनिकर्षे तत्रापि वृक्षत्वजात्यभिव्यक्त्या तादृशपरभागोऽपरो वृक्ष इत्येवं एकस्मिन्नेव वृक्षे वृक्षानेकत्वं स्यात्— वृक्षत्वाधिकरणस्यैव वृक्षपदार्थत्वात् यत्र वृक्षत्वाभिव्यक्तिस्तस्यैव च वृक्षत्वाधिकरणत्वात्, वृक्षत्वाभिव्यक्तेश्च प्रतिभागं स्वीकारात्, न चैकस्मिन् वृक्षे वृक्षानेकत्वं लोकसंमतमस्तीति दोष इत्यर्थः । व्याचष्टे— एवं चेति, तत्र= वृक्षत्वेनाभिमते परमाणुसमूहे । उक्तं विशदयति— यत्रेति । वृक्षत्वेनाभिमतपरमाणुसमुदायस्य यस्मिन् यस्मिन् भागे इन्द्रियसंनिकृष्टे वृक्षत्वं गृह्येतोक्तरीत्या स स भागो वृक्षः स्यादित्येकस्मिन् वृक्षे वृक्षबहुत्वं प्राप्तं न चैवमस्तीति नायमपि पक्षो युक्तः । उपसंहरति— तस्मादिति, उक्तरीत्या परमाणुसमूहस्य जात्याश्रयत्वानुपपत्तेः, समुदिताणुसमवस्थानस्य= एकत्रीभूतावयवसमवेतस्य अर्थान्तरस्य= अवयवसमुदायातिरिक्तस्य तत्रोत्पन्नस्यावयविन एव जातिविशेषाभिव्यक्तिविषयत्वात्= जात्यभिव्यक्त्याश्रयत्वात्= जात्याश्रयत्वसंभवात् जातिप्रत्ययेनाप्यर्थान्तरभूतः= अवयवसमुदायातिरिक्तोऽवयवी सिद्धः, तस्य चैकत्वात् समग्रस्य च जात्याश्रयत्वात् तदवयवानां तज्जात्याश्रयत्वानङ्गीकाराच्च नोक्तदोषाणामापत्तिरित्यर्थः, तथा चावयविनः सत्त्वात् न तदेकदेशमात्रस्योपलब्धिर्भवति येन तदेकदेशेनावयविनोऽनुमानात् प्रत्यक्षस्यानुमानेऽन्तर्भावः स्यात् किं त्वऽवयविनोपि प्रत्यक्षमेव भवतीति प्रत्यक्षं प्रमाणान्तरमेव— प्रमाणान्तरत्वबाधकदोषाणां तत्र तत्र निराकृतत्वादित्यर्थ इत्येवम् "न प्रत्यक्षेण ३१" "नैकदेशोपलब्धिः ३२" इतिसूत्राभ्यामुपसंहारो योजनीय इत्यलम् ॥ ३६ ॥

॥ इति प्रत्यक्षप्रमाणपरीक्षा समाप्ता ॥

---

अनुमानपरीक्षामारभते— अनुमानमिति । रोधेति— अत्रानुमानलक्षणावसरे उक्तान्युदाहरणान्यनुसंधेयानि । नद्याः पूर्णत्वेन लिङ्गेन वृष्टेर्भूतत्वानुमानमुक्तं तत्राग्रभागे निरोधेनापि नद्याः पूर्णत्वं संभवतीति व्यभिचारि जातम्, पिपीलिकाण्डसंचारेण वृष्टेर्भविष्यत्त्वानुमानमुक्तं तत्र उपघातेनापि पिपीलिकाण्डसंचारो भवतीति स व्यभिचारी जातः, द्वितीयाध्यायप्रथमाह्निकपञ्चदशसूत्रभाष्ये शब्देन वाद्यानुमानमुक्तं तत्र तच्छब्दसदृशोपि शब्दो भवति न च तत्सदृशशब्देन तदनुमानं संभवतीति शब्दो व्यभिचारी जात इति तत्र तत्र यथायथं रोधोपघातसादृश्येभ्योऽनया रीत्या व्यभिचारादनुमानमप्रमाणम्— साध्यासाधकत्वा-

अप्रमाणमिति= एकदाप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते तदा च 'उपरिष्टाद् वृष्टो देवः' इति मिथ्यानुमानम्, नीडोपघातादपि पिपीलिकाण्डसंचारो भवति तदा च 'भविष्यति वृष्टिः' इति मिथ्यानुमानमिति, पुरुषोऽपि मयूरवाशितमनुकरोति तदाऽपि शब्दसादृश्याद् मिथ्यानुमानं भवति ॥ ३७ ॥

## न- एकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

नायमनुमानव्यभिचारः अननुमाने तु खल्वयमनुमानाभिमानः। कथम्?. नाऽविशिष्टो लिङ्गं भवितुमर्हति, पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्याः 'उपरि वृष्टो देवः' इत्यनुमिनोति नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्याण्डसंचारे 'भविष्यति वृष्टिः' इत्यनुमीयते न कासां चिदिति। 'नेदं मयूर-

दिति सूत्रार्थः। पूर्वपक्षसूत्रमिदम्। व्याचष्टे- अप्रमाणमिति, प्रतिपादकम्= साधकम्, अर्थस्य= साध्यस्य, यद्येकदाप्यनुमानं साध्यसाधकं स्यात्तदा प्रमाणं स्यादपि न चैवमस्तीत्यर्थः। सर्वदाऽर्थासाधकत्वमुपपादयति- रोधादित्यादिना, रोधात्= प्रवाहाभिमुखाभिरोधात्, उपरिष्टात्= पश्चाद्भागे, वृष्टेर्भूतत्वानुमानं मिथ्या भवतीत्यप्रमाणं भवतीत्यर्थः। नीडस्य= पिपीलिकानिवासस्थानस्योपघातादपि पिपीलिकाण्डसंचारो भवतीति तत्र वृष्टेर्भविष्यत्त्वानुमानं मिथ्या भवति तेन चाऽप्रमाणं भवतीत्यर्थः। वाशितमिति- "तिरश्चां वाशितं रुतम्" इत्यमरः, पुरुषोऽपि मयूरशब्दसदृशशब्दं कदाचिन् करोति तत्र तेनमयूरसत्त्वानुमानं शब्दसादृश्याज्जायमानं मिथ्या भवति तेनाप्रमाणं भवति- मिथ्याभूतस्य प्रामाण्यानुपपत्तेरिति नानुमानस्य प्रामाण्यं संभवति- उदाहृतस्थलेषु व्यभिचारस्य प्रदर्शनादित्यर्थः ॥ ३७ ॥

उक्तपूर्वपक्षं परिहरति- नेति, अनुमानमप्रमाणं न किं तु प्रमाणमेवेत्यर्थः। परिहारहेतुमाह- एकदेशेति, एकदेशरोधकृतपूर्णत्वापेक्षया नीडोपघातजत्रासकृतपिपीलिकाण्डसंचारापेक्षया सादृश्यानुयोगिभूतशब्दापेक्षया च अनुमितिहेतुत्वेनोक्तानां नदीपूर्णत्वपिपीलिकाण्डसंचारशब्दानाम् अर्थान्तरभावात्= भिन्नत्वादित्यन्वयस्तत्र रोधकृतपूर्णत्वापेक्षया वर्षाकृतं नद्याः पूर्णत्वं बहुदेशव्यापकत्वादिना विलक्षणं भवति तेनैव वृष्टेर्भूतत्त्वमनुमीयते न च तत्र व्यभिचारो भवति, त्रासकृतपिपीलिकाण्डसंचारापेक्षया वृष्टिपूर्वकालिकः पिपीलिकाण्डसंचारः बाहुल्यधैर्यादिना विलक्षणो भवति तेनैव वृष्टेर्भविष्यत्त्वमनुमीयते न च तत्र व्यभिचारो भवति, सदृशशब्दापेक्षया प्रधानः शब्दः किंचिद्विलक्षणो भवति तेनैव प्रधानशब्दकारिसत्त्वमनुमीयते न च तत्र व्यभिचारो भवतीति नानुमानमात्रस्याऽप्रामाण्यापत्तिः, प्रदर्शितपूर्णत्वादीनां हेत्वाभासत्वेन तत्र व्यभिचारेऽपि सर्वत्र दोषासंभवात्, नेदमुक्तं हेत्वाभासा न भवन्तीत्यर्थः। व्याचष्टे- नायमिति, अयम्= पूर्वसूत्रप्रदर्शितः, किं त्वनुमानाभासस्य व्यभिचारः स च युक्त एवेत्यर्थः। स्वाभिप्रायमाह- अननुमाने इति, अननुमाने= हेत्वाभासभूते रोधकृतपूर्णत्वादौ अनुमानाभिमानः= हेतुत्वाभिमान इतिहेतोस्तत्र व्यभिचार इति न स दोषायेत्यर्थः। उक्तं जिज्ञासते- कथमिति। उत्तरमाह- नेति, अविशिष्टः= विशेषरहितः पदार्थो हेतुर्न भवति न हि वह्न्यनुमितौ धूममात्रं हेतुर्भवति किं त्वधोदेशसंलग्नो धूमस्तथा प्रकृतेऽपि विशिष्टानामेव पूर्णत्वादीनां हेतुत्वं भवति। वृष्टिभूतत्वानुमापकं विशिष्टं पूर्णत्वमाह- पूर्वेति, यदा पूर्वोदके वर्षोदकं प्राप्नोति स्रोतसः= प्रवाहस्य शीघ्रतरत्वं बहुतरफेनादियुक्तत्वं चोपलभ्यते तदा नद्या एतादृशविशिष्टपूर्णत्वेन 'उपरि वृष्टो देवः' इत्येवं वृष्टेर्भूतत्वमनुमिनोति नोदकवृद्धिमात्रेण तत्र च न व्यभिचार इति प्रमाणमनुमानम्। वृष्टिभविष्यत्त्वानुमापकं विशिष्टं पिपीलिकाण्डसंचारमाह- पिपीलिकेति, पिपीलिकाप्रायस्य= बहुत्रपिपीलिकासमुदायस्याण्डसंचारेण 'भविष्यति वृष्टिः' इत्यनुमीयते न तु कासांचित् पिपीलिकानामण्डसंचारेण तत्र च न व्यभिचार इति प्रमाणमनुमानम्। नेदमिति- प्रदर्शितस्थले पुरुषकृतशब्दे सादृश्यदोषात

वाशितं तत्सदृशोयं शब्दः' इतिविशेषापरिज्ञानाद् मिथ्यानुमानमिति, यस्तु विशिष्टाच्छब्दाद् विशिष्टमयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गं यथा सर्पादीनामिति । सोयमनुमातुरपराधो नानुमानस्य योऽर्थविशेषेणानुमेयमर्थम् अविशिष्टार्थदर्शनेन बुभुत्सते इति ॥ ३८ ॥

त्रिकालविषयमनुमानम्- त्रैकाल्यग्रहणादित्युक्तम् अत्रच—

## वर्तमानाभावः- पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥

वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यद् ऊर्ध्वं स पतितोऽध्वा तत्संयुक्तः पतितकालः, योऽधस्तात् स पतितव्योऽध्वा तत्संयुक्तः कालः पतितव्यकालः, नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्तमानः कालो गृह्येत. तस्माद् वर्तमानः कालो न विद्यते इति ॥ ३९ ॥

## तयोरप्यभावो वर्तमानाभावे- तदपेक्षत्वात् ॥ ४० ॥

---

मयूरशब्दत्वज्ञानं जायते 'नायं मयूरशब्दः' इतिविशेषज्ञानं च न जायते इतिहेतोस्तत्र मयूरसत्तानुमानस्य व्यभिचारो भवति न तु वस्तुतो मयूरशब्देन मयूरसत्तानुमानस्येति प्रमाणमेवानुमानं तदाह- यस्त्विति, विशिष्टाच्छब्दात्= ध्वनिविशेषात् विशिष्टम्= वास्तविकं मयूरवाशितं गृह्णाति- इदं मयूरवाशितमेवेति तस्य पुरुषस्य विशिष्टोऽर्थः= वास्तविकमयूरशब्दो गृह्यमाणो लिङ्गम्= मयूरसत्तानुमापकं भवति यथा सर्पादीनामिति- सर्पमयूरयोः परस्परं वैरात् सर्पस्य वास्तविकमयूरशब्दज्ञानं भवति न मयूरशब्दसदृशशब्दे मयूरशब्दत्वभ्रान्तिर्भवति सर्पश्च तादृशमयूरशब्देन तत्र मयूरसत्तामनुमाय ततोऽपसर्पति न तत्रानुमानव्यभिचारो भवतीति प्रमाणमेवानुमानमित्यर्थः । उपसंहरति- सोयमिति, सोयम्= पूर्वसूत्रप्रदर्शितो हेत्वाभासैरनुमानव्यापारोऽनुमातुरेवापराधो नानुमानस्याऽपराधः= व्यभिचारः । अनुमातुरपराधमाह- य इति, योऽनुमाता अर्थविशेषेण= विशिष्टेन नदीपूर्णत्वादिना हेतुनाऽनुमेयमर्थम् अविशिष्टार्थदर्शनेन= सामान्यनदीपूर्णत्वादिदर्शनेन बुभुत्सते= अनुमातुमिच्छति= अनुमिनोतीति अनुमातुरेवापराधः- सामान्यस्य नदीपूर्णत्वादेर्वृष्ट्याद्यनुमित्यऽहेतुत्वादित्यर्थः । नदीपूर्णत्वादेर्विशिष्टत्वं चोक्तमेव । तथा च प्रमाणमेवानुमाननमिति सिद्धम् ॥ ३८ ॥

अग्रिमसूत्रमवतारयति- त्रिकालेति, भूतभविष्यद्वर्तमानविषयकमनुमानमिति अस्याह्निकस्यैकादशसूत्रस्य समाधिभाष्ये उक्तं तत्र दोषमाह पूर्वपक्षी- वर्तमानेति, पततः पतनादिक्रियाविशिष्टस्य पतितकालः= भूतकालः पतितव्यकालः= भविष्यत्कालश्चोपपद्यते न तु वर्तमानकालोपि येनानुमानस्य त्रिकालविषयत्वमुपपद्येतेत्यर्थः, अत्रानुमानस्य त्रिकालविषयत्वानुपपत्तिप्रदर्शनार्थं वर्तमानकालस्याभावः प्रतिपाद्यते- भूतभविष्यत्कालयोरेव ग्राह्यत्वाद् वर्तमानकालाभाव इति सूत्रार्थः । व्याचष्टे- वृन्तादिति, "वृन्तं प्रसवबन्धनम्" इत्यमरः, वृन्तात्= स्वमूलभागात् प्रच्युतस्य भूमौ प्रत्यासीदतः= सामीप्यं गच्छतः= भूमिं पततः फलस्य यदूर्ध्वम्= य ऊर्ध्वभागः स पतितोऽध्वा तत्संयुक्तः= तादृशोर्ध्वाध्वसंयोगावच्छिन्नः कालः पतितकालः= भूतकाल इत्युच्यते, यश्च तस्य फलस्य अधस्तात्= अधोभागः स पतितव्यः= गन्तव्योऽध्वा भवति तत्संयुक्तः= तादृशाधोध्वसंयोगावच्छिन्नः कालः पतितव्यकालः भविष्यत्काल इत्युच्यते. एवमन्यत्राप्युदाहार्यम् । इत्येवं भूतभविष्यत्कालद्वयं प्रतिपाद्य वर्तमानकालाभावमाह- नेदानीमिति, इदानीम्= एवमध्वनो द्वैविध्यमात्रसंभवात् तृतीयोऽध्वा न विद्यते यत्र पततीतिक्रियासंबन्धेन तत्संयुक्तो वर्तमानः कालो गृह्येतेत्यन्वयः । उपसंहरति- तस्मादिति, तथा चैवं वर्तमानकालाभावः सिद्ध इति कालत्रित्वासंभवादनुमानस्य त्रिकालविषयत्वमुक्तं नोपपद्यते इत्यनुमानदोष इत्यर्थः ॥ ३९ ॥

वर्तमानकालाभावं प्रत्याचष्टे- तयोरिति, वर्तमानाभावे= वर्तमानकालाभावे तयोः= प्रतिपादितयोर्भूतभविष्यत्कालयोरप्यभाव एव स्यात्- तयोस्तदपेक्षत्वात्- वर्तमानकालसापेक्षत्वात् वर्तमानकाल-

नाध्वव्यङ्ग्यः कालः, किं तर्हि?, क्रियाव्यङ्ग्यः= पततीति यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः, यदोत्पत्स्यते स पतितव्यकालः, यदा द्रव्ये वर्तमाना क्रिया गृह्यते स वर्तमानः कालः, यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्य उपरमम् उत्पत्स्यमानतां वा प्रतिपद्यते? । पतितः काल इति भूता क्रिया, पतितव्यः काल इति चोत्पत्स्यमाना क्रिया, उभयोः कालयोः क्रियाहीनं द्रव्यम्, अधः पततीति क्रियासंबद्धम्, सोयं क्रियाद्रव्ययोः संबन्धं गृह्णाति वर्तमानः कालः तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ४० ॥

अथापि—

## नाऽतीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४१ ॥

यद्यऽतीतानागतौ इतरेतरापेक्षौ सिध्येताम्? प्रतिपद्येमहि वर्तमानविलोपम्. नाऽतीतापे-

---

माश्रित्यैव तत्पूर्वकालस्य भूतत्वं तत्परस्य च कालस्य भविष्यत्त्वमुपपद्यते नान्यथेति सिद्धो वर्तमानः काल इतिसूत्रार्थः । व्याचष्टे– नाध्वेति, यद्युक्तरीत्या कालोध्वव्यङ्ग्यः स्यात् तदा तृतीयस्याध्वनोऽभावाद् वर्तमानकालस्याभावः स्यादपि न च कालोऽध्वव्यङ्ग्य इत्यर्थः । कालव्यञ्जकं जिज्ञासते– किं तर्हीति, यदि कालो नाध्वव्यङ्ग्यस्तर्हि किंव्यङ्ग्यः ? इत्यर्थः । कालव्यञ्जकमाह– क्रियेति । कालस्य क्रिया-व्यङ्ग्यत्वमुपपादयति– पततीति, यदा पततीतिशब्दबोध्या पतनक्रिया व्युपरता= समाप्ता भवति तदा सः= समाप्तपतनक्रियावच्छिन्नः= वर्तमानापेक्षया पूर्वः कालः पतितकालः= भूतकाल इत्युच्यते इति वर्तमानमपेक्ष्यैव भूतत्वं संभवतीति सिद्धो वर्तमानः काल इत्यर्थः, भविष्यत्कालमाह– यदेति, यदा पत-तीतिशब्दबोध्या पतनक्रिया उत्पत्स्यते तदा सः= भविष्यत्पतनक्रियावच्छिन्नः कालः पतितव्यकालः= भविष्यत्काल इत्युच्यते इति वर्तमानमपेक्ष्यैव भविष्यत्त्वं संभवतीति सिद्धो वर्तमानः काल इत्यर्थः, अनेन कालस्य क्रियाव्यङ्ग्यत्वमप्युपपादितं वेदितव्यम्. भूतक्रियाव्यङ्ग्यो भूतकालः भविष्यत्क्रियाव्यङ्ग्यो भविष्यत्कालः वर्तमानक्रियाव्यङ्ग्यश्च वर्तमानकाल इत्यर्थः । विपक्षे बाधकमाह– यदीति, यदि पतनं वर्तमानं न स्यात्तदा कस्य= कथं तस्योपरमं भविष्यत्त्वं च जानीयात्? तथा च वर्तमाने पतने सिद्धे तदवच्छिन्नो वर्तमानोपि कालः सिद्ध इत्यर्थः । पतितः= भूतः काल इत्युक्ते भूता क्रियेति बुध्यते. पतितव्यः काल इत्युक्ते उत्पत्स्यमाना क्रियेति बुध्यते क्रियाया एव भूतभविष्यत्त्वसंभवात् कालस्य सदा वर्तमानत्वादिति वार्तिकाशयः । उभयोरिति– उभयोरपि भूतभविष्यत्कालयोर्द्रव्यं क्रियाहीनं भवति– तयोः कालयोः क्रियासत्त्वासंभवस्योक्तत्वादिति वर्तमानकाले एव क्रिया संभवतीति क्रियाश्रयः काल वर्तमानकाल एवेति सिद्धो वर्तमानकाल इत्यर्थः । वर्तमानकाले क्रियासंबन्धमाह– अध इति, वर्तमान-काले द्रव्यं क्रियासंबद्धं भवतीति तादृशवर्तमानक्रियावच्छिन्नस्य वर्तमानकालस्य ग्रहणं स्पष्टमेति सिद्धो वर्तमानः काल इत्यर्थः । उपसंहरति– सोयमिति, सोयं वर्तमानः कालः क्रियाद्रव्ययोः आधाराधेयभावं संबन्धं समवायसंबधं वा गृह्णाति= ग्राहयतीति तद्ग्राहकत्वादेव सिद्धः. वस्तुतस्तु पदार्थमात्रस्य ग्राहको वर्तमान एव कालः, इतरौ= अतीतानागतौ कालौ तदाश्रयौ= वर्तमानकालाधीनौ– वर्तमानकालसापे-क्षत्वादिति तदभावे= वर्तमानकालाभावे अतीतानागतौ कालौ न सिध्येतामिति तत्सिद्ध्यर्थमपि वर्तमानः कालः स्वीकार्य एवेत्यर्थः ॥ ४० ॥

अग्रिमसूत्रमवतारयति– अथापीति, किं चेत्यर्थः । नेति– अतीतानागतयोः कालयोः सिद्धिः इतरेतरापेक्षा= परस्परापेक्षया वर्तमानकालं विना न संभवति– इतरेतरापेक्षायामन्योन्याश्रयदोषादिति अतीतानागतकालयोः सिद्धिर्वर्तमानकालेनैव संभवतीति सिद्धो वर्तमानः काल इतिसूत्रार्थः । व्याचष्टे– यदीति, यद्यतीतानागतौ कालौ इतरेतरापेक्षौ= वर्तमानकालं विना सेध्येताम्= अतीतेनाऽनागतः अनागतेन चातीतः सिध्येत तदा वर्तमानविलोपम्= वर्तमानकालाभावं प्रतिपद्येमहि. न चैवमस्ति–

क्षाऽनागतसिद्धिः नाप्यनागतापेक्षाऽतीतसिद्धिः । कया युक्त्या= केन कल्पेन अतीतः, कथमतीतापेक्षाऽनागतसिद्धिः? केन च कल्पेनाऽनागतः? इति. नैतच्छक्यं निर्वक्तुम्= अन्याकरणीयमेतद् वर्तमानलोपे इति ।

यच्च मन्येत-- ह्रस्वदीर्घयोः स्थलनिम्नयोः छायातपयोश्च यथेतरेतरापेक्षया सिद्धिरेवम् अतीतानागतयोरिति, तन्नोपपद्यते– विशेषहेत्वभावात्. दृष्टान्तवत् प्रतिदृष्टान्तोपि प्रसज्यते– यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यतः एवमतीतानागताविति नेतरेतरापेक्षा कस्य चित् सिद्धिरिति ।

यस्मादेकाभावेऽन्यतराभावादुभयाभावः ।४१।

यद्येकस्याऽन्यतरापेक्षा सिद्धिः? अन्यतरस्येदानीं किमपेक्षा?. यद्यन्यतरस्यैकापेक्षा सिद्धिः? एकस्येदानीं किमपेक्षा ?, एवमेकस्याभावे अन्यतरन्न सिध्यतीति उभयाभावः

---

अतीतानागतयोर्वर्तमानाधीनत्वादित्यन्वयः । अतीतानागतयोरितरेतरापेक्षया सिद्ध्यभावमाह– नेति, अनागतकालसिद्धिरतीतापेक्षा= अतीतकालमात्रेण न संभवति. अतीतकालसिद्धिश्च अनागतापेक्षा= अनागतकालमात्रेण न संभवति किं तु मध्यवर्तिनं वर्तमानकालमपेक्ष्येति सिद्धो वर्तमानकाल इत्यन्वयः । अतीतानागतकालसिद्ध्यर्थं वर्तमानकालापेक्षां किं वा वर्तमानकालं विनाऽतीतानागतयोरनुपपत्तिमाह– कयेति, अस्यार्थमाह– केनेति, किं वा प्रकारजिज्ञासापरं पृथगेव वाक्यमिदम्। यथा हि मध्यगतपदार्थं विना परापरभावो न निरूपयितुं शक्यते तथा वर्तमानलोपे= वर्तमानकालाभावे योऽतीत इत्युच्यते स केन प्रकारेणाऽतीत इत्युच्यते. अनागतसिद्धिश्च कथं तादृशातीतापेक्षेति. यश्चानागत इत्युच्यते स केन प्रकारेणानागत इत्युच्यते. कथं चातीतसिद्धिरनागतापेक्षेति सर्वं न निर्वक्तुं शक्यमित्यन्वयः, उक्तं व्याचष्टे– अव्याकरणीयमिति, व्याख्यातुमशक्यमित्यर्थः। यथा च मध्यस्थपदार्थेन परापरभावो निरूपयितुं शक्यते अन्यथा परस्पराश्रयदोषः स्यात् तथा मध्यगतवर्तमानकालेनैवातीतानागतयोर्निरूपणं शक्यमित्यर्थः।

ननु यथा ह्रस्वदीर्घयोः स्थलनिम्नयोः= उच्चनीचयोः छायातपयोः= तमःप्रकाशयोश्च परस्परापेक्षया सिद्धिर्भवति– एतस्माद् दीर्घादिदं ह्रस्वं ह्रस्वाच्चेदं दीर्घमित्यादि तथाऽतीतानागतयोरपि परस्परापेक्षया सिद्धिः संभवतीति न मध्यगतवर्तमानकालस्य स्वीकारापत्तिरिति चोदयति– यच्चेति । परिहरति– तन्नेति, परिहारहेतुमाह– विशेषेति, अतीतानागतयोः परस्परापेक्षया सिद्धौ विशेषहेतोरभावात्. विशेषहेतुं विना दृष्टान्तमात्रेण साध्यसिद्धेरसंभवादित्यन्वयः, दृष्टान्तवत्= प्रदर्शितह्रस्वदीर्घादिदृष्टान्तवत् प्रतिदृष्टान्तः= परस्परापेक्षसिद्धेरभावबोधकोपि दृष्टान्तः प्रसज्यते= संभवति. तदेवाह– यथेति, यथा रूपस्पर्शौ गन्धरसौ परस्परापेक्षया न सिध्यतः= न हि रूपेण रसस्य रसेण वा रूपस्य सिद्धिः संभवति तथाऽतीतानागतावपि परस्परापेक्षया न सिध्यत इति कस्यचित्= अतीतानागतयोर्मध्ये कस्यचिदपि परस्परापेक्षया सिद्धिर्न संभवतीति तत्सिद्ध्यर्थं वर्तमानकालः स्वीकार्य इत्यर्थः । वस्तुतस्तु नायं प्रतिदृष्टान्तो युक्तः– रूपादीनां किंचिन्निरूपितत्वाभावात् ।

इतरेतरापेक्षसिद्धेरसंभवमाह– यस्मादिति, इतरेतरापेक्षसिद्धौ परस्पराश्रयदोषादतीतं विनाऽनागतम् अनागतं विना चातीतं न सिध्यतीति एकाभावे= अन्यतराभावेऽन्यतराभावादतीतानागतयोरुभयोरपि कालयोरभावः प्रसज्यते इत्यर्थः । उक्तं व्याचष्टे– यदीति, यद्येकस्य= अतीतस्य अन्यतरापेक्षा= अनागतापेक्षा सिद्धिः इदानीम्= तदा अन्यतरस्य= अनागतस्य किमपेक्षा सिद्धिरिति वक्तव्यं न चाऽतीतापेक्षा– अनागतसिद्धेः पूर्वमतीतस्याभावात्– अतीतस्य अनागताधीनत्वात् , यदि चान्यतरस्य= अनागतस्य एकापेक्षा= अतीतापेक्षा सिद्धिः इदानीम्= तदा एकस्य= अतीतस्य सिद्धिः

प्रसज्यते । अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः- 'विद्यते द्रव्यम्' . 'विद्यते गुणः' 'विद्यते कर्म' इति ॥ ४१ ॥

यस्य चायं नास्ति तस्य—

**वर्तमानाभावे सर्वाग्रहणम्- प्रत्यक्षानुपपत्तेः॥ ४२ ॥**

प्रत्यक्षम् इन्द्रियार्थसंनिकर्षजं. न चाऽविद्यमानम्= असद् इन्द्रियेण संनिकृष्यते, न चायं विद्यमानम्= सत् किंचिदनुजानातीति प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वं नोपपद्यते. प्रत्यक्षानुपपत्तौ तत्पूर्वकत्वाद् अनुमानागमयोरनुपपत्तिः सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति ।

उभयथा च वर्तमानः कालो गृह्यते- क्वचिदर्थसद्भावव्यङ्ग्यो यथा 'अस्ति द्रव्यम्' इति. क्वचित् क्रियासंतानव्यङ्ग्यो यथा 'पचति छिनत्ति' इति. नानाविधा चैकार्था क्रिया

---

किमपेक्षेति वक्तव्यं न चाऽनागतापेक्षा- अतीतसिद्धेः पूर्वमनागतस्याभावात् अनागतसिद्धेरतीताधीनत्वादित्येवं विशेषरूपेण व्याख्येयम् । उपसंहरति- एवमिति, एवम्= उक्तरीत्याऽतीतानागतयोर्मध्ये एकस्याभावेऽन्यतरत् अन्यतराभावे एकश्च न सिध्यतीति वर्तमानकालं विना अतीतानागतयोरुभयोरपि कालयोरभावः प्रसज्यते । वर्तमानकालसिद्धिमाह- अर्थेति, अर्थस्य= पदार्थमात्रस्य सद्भावः= सत्ता वर्तमानकाले एव गृह्यते न त्वतीतानागतयोरपीति अर्थसद्भावव्यङ्ग्योयं वर्तमानकाल इत्यर्थसद्भावस्वीकारे वर्तमानकालस्वीकारापत्तिरावश्यकी । उदाहरति- विद्यते इति, 'द्रव्यं विद्यते' इतिद्रव्यसत्ताऽतीतानागतयोर्न ज्ञायते किं तु वर्तमानकाले इति सिद्धो वर्तमानकाल इत्यर्थः । एवमन्यत्रापि योज्यम् ॥ ४१ ॥

अग्रिमसूत्रमवतारयति- यस्येति, यस्य मते अयम्= वर्तमानकालो नास्ति तस्य मते पदार्थग्रहणमेव नोपपद्यते इत्येवं सूत्रार्थेनान्वयः । वर्तमानेति- वर्तमानकालाभावे प्रत्यक्षं नोपपद्यते- प्रत्यक्षस्य वर्तमानमात्रग्राहकत्वात् उक्तं च "संबद्धं वर्तमानं च गृह्यते चक्षुरादिना" इति, प्रत्यक्षाभावे च सर्वग्रहणानुपपत्तिः- अनुमानादीनामपि प्रमाणानां प्रत्यक्षपूर्वकत्वेन प्रत्यक्षं विनानुपपत्तेरिति सूत्रार्थः, सर्वग्रहणाभावे प्रत्यक्षानुपपत्तिः प्रत्यक्षानुपपत्तौ च वर्तमानकालाभावो हेतुरिति सूत्रान्वयः । व्याचष्टे- प्रत्यक्षमिति, प्रत्यक्षं हीन्द्रियार्थसंनिकर्षजन्यं भवति इन्द्रियसंनिकर्षश्च विद्यमानमात्रेण संभवति न त्वविद्यमानेन= अवर्तमानेन= असता, अयं च पूर्वपक्षी विद्यमानम्= सत्= वर्तमानं किंचिदपि न स्वीकरोति- वर्तमानकालास्वीकारात् तथा च वर्तमानकालाभावेन पदार्थस्य विद्यमानत्वासंभवात् प्रत्यक्षनिमित्तम्= इन्द्रियार्थसंनिकर्षो नोपपद्यते- वर्तमानेनैवेन्द्रियसंनिकर्षसंभवात्. प्रत्यक्षविषयोपि नोपपद्यते- वर्तमानस्यैव प्रत्यक्षविषयत्वसंभवात्. प्रत्यक्षज्ञानमपि नोपपद्यते- प्रत्यक्षज्ञानस्य वर्तमानमात्रविषयकत्वादिति सर्वं प्रत्यक्षनिमित्तादिकं नोपपद्यते, प्रत्यक्षानुपपत्तौ च अनुमानादीनामप्यनुपपत्तिः- तेषां तत्पूर्वकत्वात्= प्रत्यक्षपूर्वकत्वात् ततश्चैवं प्रत्यक्षादिसर्वप्रमाणानामभावे प्राप्ते सर्वग्रहणम्= कस्यापि पदार्थस्य ग्रहणं न संभवतीति वर्तमानाभावे सर्वग्रहणाभावः प्राप्तः न चैवमस्तीति सर्वोपपत्त्यर्थं वर्तमानः कालः स्वीकार्य इत्यर्थः ।

ग्रहणं विना पदार्थस्वीकारासंभवाद् वर्तमानकालग्रहणप्रकारमाह- उभयथेति, उभयथा= अर्थसद्भावेन क्रियासंतानेन च वर्तमानकालो गृह्यते, प्रथमप्रकारमाह- क्वचिदिति, उदाहरति- यथेति, 'अस्ति द्रव्यम्' इत्यत्र अस्तिपदबोध्यया द्रव्यसत्तया वर्तमानकालो व्यज्यते= गृह्यते- उक्तसत्ताया वर्तमानकालमात्रे संभवाद् अतीतानागतयोश्चासंभवादितिभावः । द्वितीयप्रकारमाह- क्वचिदिति, उदाहरति- यथेति, 'पचति' इत्यत्र क्रियासंतानेन= पाकक्रियापरम्परया वर्तमानकालो गृह्यते- अत्रातीता-

क्रियासंतानः क्रियाभ्यासश्च, नानाविधा चैकार्था क्रिया 'पचति' इति= स्थाल्यधिश्रयणम् उदकासेचनं तण्डुलावपनम् एधोपसर्पणम् अग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणम् अधोवतारणमिति. छिनत्तीति क्रियाभ्यासः- उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते ॥ ४२ ॥

यच्चेदं पच्यमानं छिद्यमानं च तत् क्रियमाणं तस्मिन् क्रियमाणे—

## कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥

---

नागतयोरप्रतीयमानत्वात् । क्रियासंतानपदार्थमाह- नानेति, नानाविधा= विविधावान्तरक्रियाविशिष्टा एकार्था= एकपदार्थविषया क्रिया क्रियासंतान इति क्रियाभ्यासश्चेत्युच्यते, प्रथमं क्रियासंतानमुदाहरति- पचतीति, पचतीतिक्रियासंतानस्यावान्तरक्रियाः आह- स्थालीत्यादिना, स्थाल्या अधिश्रयणम्= चुल्ल्युपरिस्थापनम् उदकासेचनम्= स्थाल्यामुदकनिक्षेपः तण्डुलावपनम्= स्थाल्यां तण्डुलनिक्षेपः एधोपसर्पणम्= चुल्लौ इन्धनसंयोजनम् अग्न्यभिज्वालनम् दर्वीघट्टनम्= स्थाल्यां दर्व्या परिभ्रामणम् मण्डनिस्सारणम् ततः स्थाल्या अधोवतारणम् इत्याद्यवान्तरक्रियाः पाके भवन्तीति पचतीति क्रियासंतान इत्युच्यते सा च पाकक्रिया एकपदार्थविषयेति स्पष्टमेव- 'तण्डुलं पचति' इति । क्रियाभ्यासमुदाहरति- छिनत्तीति, अभ्यासः= पौनःपुन्यं तदाह- उद्यम्येति, परशोः पुनः पुनः दारुणि निपातनेन क्रियाभ्यासः प्राप्तः स एव 'छिनत्ति' इत्यनेन बोध्यते, निपातयन् चैत्रः 'छिनत्ति' इत्युच्यते इत्यन्वयः, तथा च क्रियासंतानेन क्रियाभ्यासेन च वर्तमान एव कालो गृह्यते नातीतोऽनागतो वा- उक्तक्रियासंतानक्रिया-क्रियाभ्यासयोरपि वर्तमानकालमात्रे एव संभवादतीतानागतयोश्चासंभवादिति सिद्धो वर्तमानकाल इत्यर्थः । क्रियाभ्यासोप्येकार्थविषयक इति स्पष्टमेव अवान्तरक्रियाश्चात्र उद्यमननिपातनाद्या ग्राह्याः, पचतीत्यत्र अधिश्रयणाद्यवान्तरक्रियाणां पौनःपुन्यं नास्ति क्रियाभ्यासे छिनत्तीत्यत्र चोद्यमननिपातनाद्यवान्तरक्रियाणां पौनःपुन्यमस्तीति क्रियासंतानक्रियाभ्यासयोः परस्परं भेदः, लक्षणं चोक्तमुभयत्रैव समन्वेतीति विभावनीयम् ॥ ४२ ॥

अग्रिमसूत्रमवतारयति- यच्चेति, यत् पच्यमानं तण्डुलं यच्च छिद्यमानं काष्ठं तत् क्रियमाणम्= वर्तमानक्रियाविशिष्टमित्युच्यते तस्मिन् क्रियमाणे= क्रियाविशिष्टे सति= तत्कर्मकपाकादिक्रियायां प्रवृत्तायाम्= वर्तमानायां वर्तमानकालस्योभयथा ग्रहणं भवतीत्येवं सूत्रेण सहान्वयः । कृततेति- वर्तमाना हि पाकादिक्रिया क्रियासंतानः क्रियाभासश्चोच्यते तत्र काश्चित् स्थाल्यधिश्रयणादिरूपाः क्रियाः कृताः= जाता इति तासां कृतता काश्चित् दर्वीघट्टनादिरूपाः क्रियाः कर्तव्या इति तासां कर्तव्यतास्ति तथा चावान्तरक्रियाणां कृतत्वात् कर्तव्यत्वाच्च तत्संतानरूपायाः वर्तमानपाकक्रियाया अपि कृतत्वम्= भूतत्वं कर्तव्यत्वम्= भविष्यत्त्वं चोपपन्नं तादृशोपपत्तेस्तादृशवर्तमानक्रियाव्यङ्ग्यस्य वर्तमानकालस्य उभयथा= अतीतानागतकालाभ्यां संबद्धस्य असंबद्धस्य च ग्रहणं भवति तत्र 'पचति' इत्यत्र संबद्धस्य ग्रहणं भवति- उक्तरीत्याऽत्र पाकक्रियाया वर्तमानाया अपि अवान्तरक्रियाद्वारा भूतत्वभविष्यत्त्वयोः संभवेन तत्संबन्धात् तद्व्यज्यमानस्य वर्तमानकालस्यापि भूतभविष्यत्त्वसंबन्धेनातीतानागतकालसंबद्धत्वं प्राप्तम्, एवमेव क्रियाभ्यासस्थलेपि बोध्यम्- तत्राप्यवान्तरक्रियाणामुद्यमननिपातनादीनां भूतभविष्यत्त्वसंभवात् । 'विद्यते द्रव्यम्' इत्यत्रातीतानागतकालयोः संबन्धाभावादतीतानागतकालाभ्यामसंबद्धः शुद्ध एव वर्तमानकालः प्रतीयते इति वर्तमानकालस्योभयथा ग्रहणं सिद्धमिति सूत्रार्थः । अत्र-" क्व पुनर्व्यपवृक्तस्य ? 'विद्यते द्रव्यम्' इत्यत्र हिं केवलः शुद्धो वर्तमानोऽभिधीयते, 'पचति छिनत्ति' इत्यत्र संपृक्तः, कथम् ? काश्चिदत्र क्रिया व्यतीताः काश्चिदनागताः एका च वर्तमानेति " इतिवार्तिकम् ।

क्रियासंतानोऽनारब्धश्चिकीर्षितोऽनागतः कालः 'पक्ष्यति' इति. प्रयोजनावसानः क्रियासंतानोपरमोऽतीतः कालः 'अपाक्षीत्' इति. आरब्धक्रियासंतानो वर्तमानः कालः 'पचति' इति, तत्र या उपरता सा कृतता या चिकीर्षिता सा कर्तव्यता या क्रियमाना सा क्रियमाणता. तदेवं क्रियासंतानस्थः त्रैकाल्यसमाहारः 'पचति पच्यते' इति वर्तमानग्रहणेन गृह्यते- क्रियासंतानस्य ह्यत्राविच्छेदो विधीयते नारम्भो नोपरम इति। सोयमुभयथा वर्तमानो गृह्यते- अपवृक्तो व्यपवृक्तश्च अतीतानागताभ्याम्. स्थितिव्यङ्ग्यः- 'विद्यते द्रव्यम्' इति. क्रियासंतानाऽविच्छेदाऽभिधायी च त्रैकाल्यान्वितः- 'पचति छिनत्ति' इति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो लोकेप्युत्प्रेक्षितव्यः, तस्मादस्ति वर्तमानः काल इति ॥ ४३ ॥

व्याचष्टे- क्रियेति, उक्तः क्रियासंतानो यत्राऽनारब्धः चिकीर्षितः= भविष्यत्काले कर्तुमिष्टो भवति तत्राऽनागतः= भविष्यत्कालः प्रतीयते यथा 'पक्ष्यति' इत्यत्र, यत्र क्रियासंतानस्य प्रयोजनावसानः= फलनिष्पत्त्या उपरमः= समाप्तिर्भवति तत्राऽतीतः= भूतः कालः प्रतीयते यथा 'अपाक्षीत्' इत्यत्र, यत्र च क्रियासंतान आरब्धो वर्तमानः अनुपरतश्च भवति तत्र वर्तमानः कालः प्रतीयते यथा- 'पचति' इत्यत्रेति त्रयाणामपि कालानां प्रतीयमानत्वेन सिद्धिर्ज्ञातेत्यन्वयः। अतीतानागतकालयोः क्रियाया उपरमानारम्भयोरेव संभवात् क्रियासत्त्वस्य चासंभवात् क्रियासत्त्वविशिष्टः कालो वर्तमानकाल इति सिद्धमित्याशयः। पचतीत्यत्र विशेषमाह- तत्रेति, तत्र= पचतीतिक्रियासंताने या उपरता= उपरतता= समाप्तता सा कृतता या चिकीर्षिता= चिकीर्षितता= भविष्यत्काले कर्तुमिष्टता सा कर्तव्यता या च क्रियमाना= क्रियमानता सा क्रियमाणता वर्तमानता अवान्तरक्रियाणामितिशेष इत्यन्वयः, वाक्यमिदमसंगतमिति अत्र 'या उपरतता सा कृतता या चिकीर्षितता सा कर्तव्यता या क्रियमानता सा क्रियमाणता' इत्येवं किं वा 'या उपरता सा कृता या चिकीर्षिता सा कर्तव्या या क्रियमाना सा क्रियमाणा' इत्येवं वक्तव्यमासीत्। उपसंहरति- तदेवमिति, एवम्= उक्तरीत्या क्रियासंतानस्याऽवान्तरकृतकर्तव्यवर्तमानक्रियाविशिष्टत्वेन 'पचति' 'पच्यते' इत्यादौ क्रियासंतानस्थत्रैकाल्यसमाहारः= त्रिकालसमुच्चयो वर्तमानकालग्रहणेनैव गृह्यते इति सिद्धो वर्तमानकालः, वर्तमानकालं विना कालत्रित्वासंभवेन गृह्यमाणस्य त्रैकाल्यस्यासंभवात्, अत्र वर्तमानकालग्रहणे हेतुमाह- क्रियासंतानस्येति, अत्र= 'पचति' इत्यादौ क्रियासंतानस्य= स्थाल्यधिश्रयणादिलक्षणक्रियासमुदायस्याऽविच्छेदः= वर्तमानता विधीयते= अभिधीयते इत्यत्र वर्तमानकालो गृह्यते न आरम्भः= भविष्यत्त्वं येन क्रियासंतानस्य भविष्यत्त्वेन भविष्यत्कालबोधः स्यात् नाप्युपरमो येनाऽतीतकालबोधः स्यादित्यन्वयः, अत्र "नारम्भः" इत्यत्र 'न अनारम्भः' इतिवक्तव्यमासीत्- अनारम्भे एव भविष्यत्कालबोधात्। सूत्रार्थमुपपादयति- सोयमिति, सोयम्= पचतीत्यादौ गृह्यमाणो वर्तमानकालो द्विधा गृह्यते यथा- अतीतानागतकालाभ्यामपवृक्तः= संबद्धः. अपवृक्तो न भवतीति व्यपवृक्तः= असंबद्धश्चेति। व्यपवृक्तमुदाहरति- विद्यते इति, 'विद्यते द्रव्यम्' इत्यत्र द्रव्यस्थित्या वर्तमानकालो व्यज्यते स्थितिश्च नावान्तरक्रियाविशिष्टा क्रियासंतानरूपा येनात्रातीतानागतकालयोः प्रवेशः स्यादित्यत्र अतीतानागताभ्यामसंबद्ध एव शुद्धो वर्तमानकालो गृह्यते, अपवृक्तमुदाहरति- क्रियेति, क्रियासंतानस्याऽविच्छेदाभिधायी यः 'पचति' 'छिनत्ति' इत्यादिप्रयोगस्तत्र त्रैकाल्यान्वितो वर्तमानकालो गृह्यते- अत्र कासां चिदवान्तरक्रियाणां कृतत्वात् कासांचित् कर्तव्यत्वात् एकस्या वर्तमानत्वाच्च त्रैकाल्यसमाहार इत्यतीतानागतकालाभ्यां संबद्ध एवात्र वर्तमानकालो गृह्यते इत्यर्थः, यथा 'पचति' इत्यादावऽवान्तरक्रियाद्वारा त्रैकाल्यसमाहारः संभवति तथा 'विद्यते' इत्यादौ न संभवति- अवान्तरक्रियाणामभावादिति 'विद्यते' इत्यादि-

( अथोपमानपरीक्षा )

## अत्यन्तप्रायैकदेशसाधर्म्यादुपमानाऽसिद्धिः ॥ ४४ ॥

अत्यन्तसाधर्म्यादुपमानं न सिध्यति– न चैवं भवति 'यथा गौरेवं गौः' इति, प्रायस्साधर्म्यादुपमानं न सिध्यति– न हि भवति 'यथाऽनड्वानेवं महिषः' इति, एकदेशसाधर्म्यादुपमानं न सिध्यति– न हि सर्वेण सर्वमुपमीयते इति ॥ ४४ ॥

## प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्तते, किं तर्हि ?. प्रसिद्धसाधर्म्यात्

---

स्थले अतीतानागतसंबन्धरहित एव वर्तमानकालः प्रतीयते इतिविभावनीयम्। वर्तमानकालस्यान्यप्रकारानपि सूचयति– अन्य इति, प्रत्यासत्तिप्रभृतेः= वर्तमानकालस्य सामीप्यसंबन्धमाश्रित्य पदार्थविवक्षायां सत्यां तदभिधायी= प्रत्यासत्तिसंबद्धो बहुप्रकारो वर्तमानकालोऽस्ति स तु लोकेषु= व्यवहारात् उत्प्रेक्षितव्यः= ज्ञातव्यः अत्र विस्तरभयान्नोच्यते इत्यन्वयः। अत्र– "अन्यश्च लोके प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायामनेकप्रकारो वर्तमानस्य प्रयोगः– कदाचिदयं वर्तमानमतीते प्रयुङ्क्ते आगतः सन् ब्रवीति– 'एष आगच्छामि' इति, कदाचिदनागते प्रयुङ्क्ते यथा स्थितः सन् ब्रवीति– 'एष आगच्छामि' इति, एवमन्येषु प्रयोगेषूत्प्रेक्षितव्यमिति" इतिवार्तिकम्, एते च प्रयोगा वर्तमानसमीप्ये विज्ञेयाः तदेतत् "वर्तमानसामीप्ये" इति पाणिनिसूत्रे द्रष्टव्यम्। उपसंहरति– तस्मादिति, उक्तरीत्या वर्तमानकालः सिद्धस्तेन त्रैकाल्यं सिद्धम्– अतीतानागतयोः पूर्वपक्षिणा स्वीकृतत्वादेव तथा चानुमानस्य त्रैकाल्यविषयत्वमुक्तं सिद्धं पूर्वपक्षिकृता चानुमानस्य त्रैकाल्यविषयत्वानुपपत्तिः परास्तेत्यर्थः ॥ ४३ ॥

॥ इत्यनुमानपरीक्षा समाप्ता ॥

---

उपमानानुपपत्तिमाशङ्कते– अत्यन्तेति, उपमानप्रमाणमूलं हि साधर्म्यमेव तच्च साधर्म्यं त्रिविधं संभवति– अत्यन्तसाधर्म्यं प्रायस्साधर्म्यम् एकदेशसाधर्म्यं च तदनेनत्रिविधेनापि साधर्म्येणोपमानं न सिध्यति– यतोऽत्यन्तसाधर्म्यं हि गोर्गवैव संभवति तत्र नोपमानं प्रवर्तते न हि 'यथा गौस्तथा गौः' इत्येवं प्रयुज्यते, प्रायस्साधर्म्यं तु वृषभमहिषयोरपि संभवति तत्रापि नोपमानं प्रवर्तते न हि 'यथा वृषभस्तथा महिषः' इत्येवं प्रयुज्यते, एकदेशसाधर्म्यं तु सर्वस्य सर्वेण संभवति तत्रापि नोपमानं प्रवर्तते न हि सर्वेण सर्वमुपमीयते. न हि 'यथा गजस्तथा गवयः' इत्येवं प्रयुज्यते, गजगवययोश्च पशुत्वादिनैकदेशसाधर्म्यं विज्ञेयं तथा च त्रिविधस्यापि साधर्म्यस्य उपमानप्रयोजकत्वाभावात् प्रयोजकान्तरासंभवाच्चोपमानप्रमाणं न सिध्यतीति सूत्रार्थः। व्याचष्टे– अत्यन्तेति, अत्यन्तसाधर्म्यं हि सर्वावयवसाधर्म्यमेव तच्च तज्जात्यवच्छिन्नस्य तज्जात्यवच्छिन्नेनैव संभवति यथा गोर्गवा. गोगवययोश्च नात्यन्तसाधर्म्यं येन तत्रोपमानं प्रवर्तेत। अत्यन्तसाधर्म्यस्योपमानाप्रयोजकत्वेनाऽत्यन्तसदृशयोरुपमित्यसंभवमुदाहरति– न चेति। प्रायस्साधर्म्यं हि केषांचिदवयवानां साधर्म्यमेव तच्च महिषवृषभयोरपि संभवति– पुच्छविषाणाद्यनेकावयवसाम्यात् न च महिषवृषभयोरुपमितिः संभवतीत्याह– न हीति, एकदेशसाधर्म्यं च किंचित् साधर्म्यमेव तच्च सर्वस्य सर्वेण संभवति न च सर्वं सर्वेणोपमीयते इत्याह– एकेति, उपमानप्रमाणस्य साधर्म्यमेव प्रयोजकं वक्तव्यं तच्च त्रिविधमपि नोपमानप्रयोजकं संभवतीत्युपमानप्रमाणासिद्धिरित्यर्थः ॥ ४४ ॥

उक्ताशङ्कां प्रत्याचष्टे– प्रसिद्धेति, लोकप्रसिद्धात् साधर्म्यात् उपमानसिद्धिः संभवतीति यथोक्तदोषस्य= पूर्वसूत्रोक्तदोषस्योपपत्तिर्नास्ति– यतोऽत्यन्तप्रायैकदेशसाधर्म्याणामुपमानप्रयोजकत्वं नाश्रीयते किं तु सामान्दतः प्रसिद्धसाधर्म्यस्य तच्चास्त्येव गोगवययोरिति सिद्धमुपमानमपि प्रमाणमिति सूत्रार्थः। व्याचष्टे– नेति, येनोक्तदोषेणोपमानस्यानुपपत्तिः स्यादिति शेषः। उपमानप्रयोजकसाधर्म्यं जिज्ञासते—

साध्यसाधनभावमाश्रित्य प्रवर्तते. यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यं तस्माद् यथोक्तदोषो नोपपद्यते इति ॥ ४५ ॥

अस्तु तर्ह्युपमानमनुमानम्—

प्रत्यक्षेणाऽप्रत्यक्षसिद्धेः ॥ ४६ ॥

यथा धूमेन प्रत्यक्षेणाऽप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम् एवं गवा प्रत्यक्षेणाऽप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद् विशिष्यते ॥ ४६ ॥

विशिष्यते इत्याह, कया युक्त्या ?—

नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४७ ॥

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवा समानमर्थं पश्यति तदा अयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते न चैवमनुमानमिति । परार्थं चोपमानम्- यस्य ह्युपमेयमप्रसिद्धं

---

किमिति । उत्तरमाह- प्रसिद्धेति, प्रसिद्धात् साधर्म्याद् यः साध्यसाधनभावस्तमाश्रित्योपमानं प्रवर्तते. तत्र साध्यं गवयगवयशब्दयोर्वाच्यवाचकभावज्ञानम्= गवयशब्दशक्तिग्रहः तस्य साधनमुपमानप्रमाणम् एतादृशसाध्यसाधनभावमाश्रित्योपमानप्रमाणं प्रवर्तते, उक्तसाध्यसाधनभावाश्रयणे च प्रसिद्धसाधर्म्यं हेतुः न्यायनये उपमानस्य गवयादिपदशक्तिग्राहकत्वस्वीकारादित्यन्वयः । उपमानसिद्धिमाह- यत्रेति, यत्र= गोगवययोरेतत्= प्रसिद्धं साधर्म्यमस्ति तत्र उपमानप्रवृत्तिप्रतिषेधो नोपपद्यते तस्मात् पूर्वोक्तदोषानुपपत्तेः सिद्धमुपमानमपि प्रमाणमित्युपसंहरति- तस्मादिति ॥ ४५ ॥

उपमानस्यानुमानेऽन्तर्भावमाशङ्कते- अस्त्विति । उपमानस्यानुमानेऽन्तर्भावस्य कारणं सूत्रेणाह- प्रत्यक्षेणेति, यथानुमाने प्रत्यक्षेण धूमेनाप्रत्यक्षस्य वह्नेः सिद्धिर्भवति तथोपमानेऽपि प्रत्यक्षेण गवा गवयपदवाच्यत्वरूपेणाप्रत्यक्षस्य गवयस्य सिद्धिर्भवति किं वा प्रत्यक्षेण गोसादृश्येनाऽप्रत्यक्षस्य गवये गवयपदवाच्यत्वस्य सिद्धिर्भवतीति उपमानस्यानुमानतुल्यत्वादनुमानेऽन्तर्भावः स्वीकार्य इति नोपमानं प्रमाणान्तरमिति सूत्रार्थः । व्याचष्टे- यथेति । प्रकृतमाह- एवमिति, ग्रहणम्= गवयपदवाच्यत्वेन रूपेण ग्रहणमित्यर्थः । तथा चेदम्= उपमानमनुमानाद् न विशिष्यते इति नानुमानातिरिक्तं प्रमाणान्तरमित्यन्वयः, स्पष्टमन्यत् ॥ ४६ ॥

उपमानस्यानुमानेन्तर्भावासंभवमाह- विशिष्यते इति, उपमानमनुमानाद् विशिष्यते= भिन्नमेव प्रमाणमित्याह= इत्युच्यते इत्यर्थः । उपमानस्यानुमानाद् भेदकारणं जिज्ञासते- कयेति, युक्त्या= कारणेन= प्रकारेणेति यावत् । अस्य सूत्रेणोत्तरमाह- नेति, अप्रत्यक्षे गवये उपमानस्य प्रमाणस्यार्थम्= प्रयोजनं न पश्याम इतिहेतोरनुमानाद् भेद उपमानस्येत्यन्वयः, यदि प्रत्यक्षेण गवा गवयोऽप्रत्यक्षो गृह्येत धूमेन वह्निरिव तदानुमानसादृश्यादुपमानस्यानुमानेन्तर्भावः स्यादपि न चैवमस्ति किं तूपमानेन गवये गवयशब्दशक्तिर्गृह्यते न चानुमानं शक्तिग्राहकं भवति, गवयसादृश्यं च गोनिष्ठं गोदर्शनकाले ग्रहीतुं न शक्यते प्रत्यक्षेण तदानीं गवयस्यादृष्टत्वात् गवयप्रतियोगिकस्य गोनिष्ठसादृश्यस्य ग्रहणासंभवात् गवयदर्शनकाले च गोरेवाप्रत्यक्षत्वेन तन्निष्ठसादृश्यस्याप्रत्यक्षत्वादिति नोपमाने प्रत्यक्षेणाप्रत्यक्षप्रतिपत्तिः संभवति येनानुमानेन्तर्भावः स्यात् , नापि शब्देन्तर्भावः- उपमानप्रमेयस्य वाच्यवाचकभावस्य शब्देनानुक्तत्वादिति सूत्रार्थः । अत्र 'नाप्रमिते गवये सामर्थ्यमनुमानस्य पश्यामः' इत्येवं सूत्रं वक्तव्यमासीत् । व्याचष्टे- यदेति, उपयुक्तम्= प्रयुक्तम् 'गोसदृशो गवयः' इत्युपमानं यं प्रति स उपयुक्तोपमानो गोदर्शी= गां दृष्ट्वा यदाऽरण्ये गवा समानम्= गोदृशम् अर्थम्= गवयव्यक्तिं पश्यति तदाऽयं पुरुषः गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते= शक्तिं गृह्णाति न चैवमनुमाने शक्तिग्रहो

तदर्थं प्रसिद्धोपमेयेन क्रियते इति । परार्थमुपमानमितिचेत् ? न– स्वयमध्यवसायात्= भवति च भोः स्वयमध्यवसायः– यथा गौरेवं गवय इति । नाध्यवसायः प्रतिपिध्यते उपमानं तु तन्न भवति– "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् १–१–६" न च यस्योपमेयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यते इति ॥ ४७ ॥

अथापि—

## तथेत्युपसंहाराद्‌ उपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

तथेतिसमानधर्मोपसंहारादुपमानं सिध्यति नानुमानम्– अयं चानयोर्विशेष इति ॥४८॥

(अथ शब्दप्रमाणपरीक्षा–)

## शब्दोऽनुमानम्–अर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥

---

भवतीत्यनुमानाद् भिन्नमेवोपमानं प्रमाणमित्यन्वयः । भेदस्य कारणान्तरमाह– परार्थमिति, अनुमानं स्वार्थमपि भवति उपमानं च न स्वार्थं किं तु परार्थमेव भवतीत्यनुमानाद् भिन्नमेवेत्यर्थः, हेतुमाह– यस्येति, यस्य ह्युपमेयं गवयाद्यऽप्रसिद्धम्= अज्ञातं भवति तदर्थम्= अज्ञातोपमेयाय प्रसिद्धोपमेयेन= ज्ञातोपमेयेन गवयादिशब्दशक्तिग्रहाय उपमानं क्रियते= प्रयुज्यते न तु स्वार्थमिति परार्थत्वं सिद्धम् । उपमानस्योक्तं परार्थत्वमात्रं पूर्वपक्षी प्रत्याचष्टे– परार्थमिति, उपमानं परार्थमेव भवतीति न वक्तव्यम्, उक्ते हेतुमाह– स्वयमिति, स्वयमध्यवसायसत्तामाह– भवतीति, अध्यवसायस्वरूपमाह– यथेति, एवं ह्युपमानस्य स्वार्थत्वमपि सिद्धं तेन चानुमानतुल्यत्वमित्यर्थः । अस्योत्तरमाह– नाध्यवसाय इति, 'यथा गौस्तथा गवयः' इत्याकारकः स्वयमध्यवसायो न प्रतिपिध्यते किं तु स उपमानप्रमाणं न भवति– ज्ञातविषयकत्वात्= उक्ताध्यवसायविषयस्याध्यवसायकर्त्रा ज्ञातत्वादेव. प्रमाणानां चाज्ञातविषयकत्वस्वीकारात्, परेण चाऽज्ञातत्वात् तं प्रति प्रयुक्तस्योपमानस्य प्रामाण्यं संभवति– अज्ञातज्ञापकत्वादित्यर्थः । उक्ते उपमानलक्षणसूत्रं प्रमाणयति– प्रसिद्धेति, उपमानेनात्र साध्यसाधनमुक्तं प्रसिद्धोपमेयस्य च साध्यभूतो गवयशब्दशक्तिग्रहः सिद्ध एवेति न तस्य साधनं संभवति, एतमेवाभिप्रायमुद्घाटयति– न चेति, प्रसिद्धोपमेयं प्रति साध्यसाधनभावः= गवयशब्दशक्तिग्रहस्य साध्यत्वम् उपमानस्य च साधनत्वं न विद्यते= न संभवति– सिद्धत्वादेवेति परार्थमेवोपमानं भवति न स्वार्थमपीत्यनुमानाद् भेदः सिद्धः– अनुमाने स्वार्थत्वस्यापि सत्त्वादित्युपमानस्यानुमानेऽन्तर्भावो न संभवतीत्यर्थः ॥ ४७ ॥

अग्रिमसूत्रमवतारयति– अथापीति. किं चेत्यर्थः । उपमानस्यानुमानाद् भेदे कारणान्तरमाह– तथेति, 'यथा गौस्तथा गवयः' इत्येवमुपमाने तथादिशब्दैरुपसंहारो भवति न चैवमनुमाने तथादिशब्दैरुपसंहारो भवतीति नोपमानस्याऽनुमानादविशेषः= अभेदः संभवतीत्यनुमानादुपमानं प्रमाणान्तरमेवेति सिद्धमिति सूत्रार्थः । व्याचष्टे– तथेति, अनुमानं तु तथेतिसादृश्योपसंहारान्न सिध्यतीत्यन्वयः । अनयोः= उपमानानुमानयोरयमपि विशेषो यदुपमाने तथेत्युपसंहारो भवति अनुमाने च न भवति तस्माद् द्वयोर्भेदः सिद्ध इत्यर्थः ॥ ४८ ॥

॥ इत्युपमानपरीक्षा समाप्ता ॥

---

संप्रति शब्दप्रमाणपरीक्षामारभते, शब्दप्रमाणस्यानुमानेऽन्तर्भावमाशङ्कते– शब्द इति, शब्दः= शब्दप्रमाणम् अनुमानमेव– वाक्यप्रतिपाद्यस्यार्थस्याऽनुपलब्धेः= अप्रत्यक्षत्वेन अनुमेयत्वात् तस्मात् शब्दप्रमाणस्यानुमानेन्तर्भावः स्वीकार्यो न तु पृथक् प्रमाणत्वमिति सूत्रार्थः । एषा च वैशेषिकमतेनाशङ्का ।

शब्दोऽनुमानं न प्रमाणान्तरम्, कस्मात्?. शब्दार्थस्यानुमेयत्वात्, कथमनुमेयत्वम्? प्रत्यक्षतोऽनुपलब्धेः, यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चाद् मीयते इत्यनुमानम् एवं मितेन शब्देन पश्चाद् मीयतेऽर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः ॥ ४९ ॥

इतश्चानुमानं शब्दः—

## उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः= अन्यथा ह्युपलब्धिरनुमाने अन्यथोपमाने तद् व्याख्यातम्, शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः यथाऽनुमाने प्रवर्तते तथा शब्देपि, विशेषाभावादनुमानं शब्द इति ॥ ५० ॥

## संबन्धाच्च ॥ ५१ ॥

"शब्दोनुमानम्" इति वर्तते, संबद्धयोश्च शब्दार्थयोः संबन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं यथा संबद्धयोर्लिङ्गलिङ्गिनोः संबन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति ॥ ५१ ॥

---

व्याचष्टे- शब्द इति, शब्दः= शब्दप्रमाणम् । शब्दस्यानुमानेऽन्तर्भावस्य कारणं जिज्ञासते- कस्मादिति, उत्तरमाह- शब्दार्थस्येति, शब्दार्थस्य= वाक्यार्थस्य अनुमेयत्वकारणं जिज्ञासते- कथमिति । उत्तरमाह- प्रत्यक्षत इति, अत्र दृष्टान्तमाह- यथेति, लिङ्गी= साध्यः, मितेन= ज्ञातेन । अनुपलभ्यमानः= अप्रत्यक्षः । प्रकृतमाह- एवमिति, मितेन= श्रवणगृहीतेन, प्रमेयस्य वाक्यार्थस्य अनुमेयत्वे शब्दप्रमाणस्यानुमानविधया बोधकत्वेनानुमानेन्तर्भावः सिद्ध इत्यर्थः स्पष्टमन्यत् ॥ ४९ ॥

अग्रिमसूत्रमवतारयति- इतश्चेति, इतः= वक्ष्यमाणसूत्रोक्तकारणादित्यर्थः । उपलब्धेरिति- शब्दानुमानयोरुपलब्धेः= प्रमेयबोधस्य अद्विप्रवृत्तित्वात्= एकप्रकारत्वात्= समानरूपत्वात्- शब्दस्य लिङ्गविधया वोधकत्वाद् यथा चैत्रो घटविषयकाभिप्रायवान् उच्चारकत्वसंबन्धेन घटमानयेतिवाक्यविशिष्टत्वाद् मैत्रवत् इत्येवं वाक्यार्थस्यानुमेयत्वेन वाक्यस्य चानुमापकत्वेन शब्दानुमानयोः प्रमेयबोधस्यैकप्रकारत्वं सिद्धं तेन शब्दानुमानयोरेकत्वं सिद्धं तेन शब्दप्रमाणस्यानुमानेन्तर्भावः सिद्ध इति सूत्रार्थः । व्याचष्टे- प्रमाणेति, शब्दस्य प्रमाणान्तरभावे= अनुमानापेक्षया पृथक् प्रमाणत्वे शब्दानुमानयोः प्रमेयोपलब्धिः द्विप्रवृत्तिः= द्विप्रकारा= भिन्नभिन्नस्वरूपा स्यात् यथानुमाने प्रमेयोपलब्धिरन्यथा= अन्यप्रकारा= अनुमितिरूपास्ति उपमाने चाऽन्यथा= अन्यप्रकारा= उपमितिस्वरूपास्ति तथा चोपलब्धेः स्वरूपभेदादनुमानोपमानयोर्भेदः तत्= एतत् उपमानपरीक्षायां तथेत्युपसंहारादित्यादिना व्याख्यातमित्यन्वयः । प्रकृतमाह- शब्देति, शब्दानुमानयोस्तु प्रमेयोपलब्धिः अद्विप्रवृत्तिः= एकस्वरूपैवास्ति- अनुमितिरूपत्वात् शब्दस्योक्तरीत्या लिङ्गविधया बोधकत्वात्. तदाह- यथेति, अनुमाने यथा लिङ्गेन प्रमेयस्यानुमित्यर्थं प्रवर्तते पुरुषस्तथैव शब्देपि तादृशशब्देन शब्दार्थस्यानुमित्यर्थमेव प्रवर्तते नान्यथा तस्मादनुमानापेक्षया विशेषाभावादनुमानमेव शब्दो न तु प्रमाणान्तरमित्यन्वयः ॥ ५० ॥

शब्दस्यानुमानेन्तर्भावे हेत्वन्तरमाह- संबन्धादिति, यथानुमाने हेतुः संबन्धादेव साध्यबोधको भवति तथा शब्दोपि स्वार्थेन संबन्धादेव स्वार्थबोधको भवति तथा चानुमानतुल्यत्वादनुमानमेव शब्दो न प्रमाणान्तरमिति सूत्रार्थः । संबन्धाच्चोपलब्धेरित्येवं पूर्वसूत्रेणान्वयः । व्याचष्टे- शब्द इति, वर्तते= पूर्वपूर्वसूत्रादनुवर्तनीयमित्यर्थः । यथा परस्परं संबद्धयोर्लिङ्गलिङ्गिनोः व्याप्यव्यापकभावसंबन्धस्य प्रतीतौ सत्यामेव लिङ्गोपलब्धौ जातायां लिङ्गिग्रहणं भवति तथा शब्दार्थयोरपि परस्परं संबद्धयोरेव संबन्धप्रसिद्धौ= संबन्धज्ञाने जाते एव शब्दोपलब्धेः= शब्दप्रत्यक्षेण तदर्थस्य ग्रहणं भवतीत्यनुमानतुल्यत्वादनुमानमेव शब्दो न प्रमाणान्तरमित्यन्वयः । अत्र शब्दार्थयोः संबन्धो गम्यगमकभावरूपो विज्ञेयः॥५१॥

यत्तावत् 'अर्थस्यानुमेयत्वात्' इति तन्न—

आप्तोपदेशसामर्थ्यात् शब्दादर्थसंप्रत्ययः ॥ ५२ ॥

'स्वर्गः अप्सरसः उत्तराः कुरवः सप्त द्वीपाः समुद्रो लोकसंनिवेशः' इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः, किं तर्हि?. 'आप्तैरयमुक्तः शब्दः' इत्यतः संप्रत्ययः— विपर्ययेण संप्रत्ययाभावात् न त्वेवमनुमानमिति।

यत् पुनः— "उपलब्धेरद्विप्रवृत्तित्वात् २–१–५०" इति. अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः तत्र विशेषे सत्यऽहेतुः— 'विशेषाभावात्' इति।

यत् पुनरिदम्— "संबन्धाच्च" इति, अस्ति च शब्दार्थयोः संबन्धोऽनुज्ञातः अस्ति च प्रतिषिद्धः=‘अस्येदम्’ इतिषष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः प्राप्तिलक्षणस्तु शब्दार्थयोः

---

शब्दस्य प्रमाणान्तरत्वव्यवस्थापनाय उक्तपूर्वपक्षस्य प्रत्याख्यानमारभते— यत्तावदित्यादिना यदेकोनपञ्चाशत्सूत्रे "अर्थस्य– अनुमेयत्वात्" इत्येवं वाक्यार्थस्यानुमेयत्वमुक्तं तन्न संभवति, अत्र सूत्रेण हेतुमाह— आप्तेति, शब्दात्= वाक्याद् योऽर्थसंप्रत्ययः= वाक्यार्थबोधो जायते स नानुमानविषया जायते— शब्दार्थयोर्व्याप्यव्यापकभावसंबन्धासंभवात् किं तु आप्तोपदेशसामर्थ्यात्= अयं शब्दोऽस्यार्थस्य वाचक इत्याद्याप्तोपदेशमूलकशक्तिग्रहसामर्थ्यात् योग्यताकाङ्क्षादिज्ञानसहकृताज्जायते न चैवमनुमानस्य प्रकारः न ह्यनुमानस्थले धूमज्ञानस्य वह्नौ शक्तिग्रहो भवति— असंभवादित्यनुमानापेक्षया शब्दप्रमाणस्य विलक्षणत्वान्नानुमानत्वं संभवति किं तु प्रमाणान्तरत्वमेवेति सूत्रार्थः। व्याचष्टे— स्वर्ग इति, स्वर्ग इत्यादिलक्षणो लोकसंनिवेशः, पुराणेषु प्रसिद्ध एव इत्येवमादेः= स्वर्गादिरूपस्याऽप्रत्यक्षस्यार्थस्य न स्वर्गादिशब्दमात्रात् बोधो भवति येनानुमानेऽन्तर्भावः स्यादित्याक्षेपः, यदि शब्दमात्रात् शब्दार्थबोधः स्यात् तदा धूमेन वह्नेरिव शब्दार्थस्यानुमेयत्वं स्यादपि न चैवमस्तीत्यर्थः। शब्देन शब्दार्थबोधप्रकारं जिज्ञासते— किमिति। उत्तरमाह— आप्तैरिति, अयं घटशब्द आप्तैर्घटबोधनार्थमुक्तः= प्रयुक्त इत्यतः= इतिज्ञानात् किं वा 'घटशब्दः कम्बुग्रीवादिमत्पदार्थवाचकः' इति यदाप्तैरुक्तं तत्सामर्थ्यादेव घटशब्दाद् घटपदार्थबोधो भवति न तु तादृशोपदेशरहितात् श्रुतात् शब्दमात्रादिति शब्दः प्रमाणान्तरमेवेत्यर्थः। विपक्षे बाधकमाह— विपर्ययेणेति, विपर्ययेण= उक्ताप्तोपदेशं विना शब्दार्थबोधाभावादाप्तोपदेशसामर्थ्यादेव शब्दस्यार्थबोधकत्वं भवतीत्यर्थः। पर्यवसितमाह— नेति, न त्वेवमाप्तोपदेशसामर्थ्यादनुमाने लिङ्गस्य वाच्यवाचकभावसंबन्धेन साध्यबोधकत्वं भवतीति शब्दस्यानुमानापेक्षया विलक्षणत्वात् प्रमाणान्तरत्वं स्वीकार्यमित्यर्थः।

उपलब्धेरित्यादिसूत्रोक्तं परिहर्तुमनुवदति— यत्पुनरिति, यद् उपलब्धेरिति सूत्रेण शब्दानुमानयोरुपलब्धेरेकस्वरूपत्वमुक्तं तत्परिहरति— अयमेवेति अयम्= अत्रोक्तः, प्रवृत्तिभेदः= प्रकारभेदः, अनुमाने व्याप्त्यऽनुसंधानेन लिङ्गस्य लिङ्गिबोधकत्वं भवति शाब्दस्थले च शब्दस्याप्तोपदेशसामर्थ्यादर्थबोधकत्वं भवतीति शब्दानुमानयोः प्रमेयोपलब्धेः प्रकारभेदः= स्वरूपभेदोऽस्ति तत्र सत्यपि प्रमेयोपलब्धेः विशेषे= स्वरूपभेदे यः "विशेषाभावात्" इति शब्दस्यानुमानेऽन्तर्भावे हेतुरुक्तः सोऽहेतुरेव— विशेषस्य सत्त्वेन उक्तहेतोर्बाधितत्वादित्यर्थः।

संबन्धादितिसूत्रोक्तं परिहर्तुमनुवदति— यत्पुनरिदमित्यादिना, यत्पूर्वं सूत्रेण शब्दस्य लिङ्गविधयार्थबोधकत्वमुक्तं तस्योत्तरमाह— अस्तीति, शब्दार्थयोर्वाच्यवाचकभावः संबन्धोऽनुज्ञातः= स्वीकृतोऽस्ति. संयोगादिलक्षणश्च संबन्धः प्रतिषिद्धोऽस्ति तस्मान्न शब्दस्य लिङ्गविधयार्थबोधकत्वमुपपद्यते इत्यर्थः। उक्तं विशदयति— अस्येति 'अस्य शब्दस्येदं वाच्यमस्ति यथा घटशब्दस्य घटः' इत्यादिरूपस्य षष्ठी-

संबन्धः प्रतिषिद्धः। कस्मात्?, प्रमाणतोऽनुपलब्धेः= प्रत्यक्षतस्तावत् शब्दार्थप्राप्तेर्नोपलब्धिः- अतीन्द्रियत्वात्= येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते, अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः, समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यते इति। प्राप्तिलक्षणे च गृह्यमाणे संबन्धे शब्दार्थयोः शब्दान्तिके वार्थः स्यात् अर्थान्तिके वा शब्दः स्यात् उभयं वोभयत्र ॥५२॥

अथ खल्वयम्—

**पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः ॥ ५३ ॥**

स्थानकरणाभावादिति चार्थः। न चायमनुमानतोऽप्युपलभ्यते- शब्दान्तिकेऽर्थ इति। एतस्मिन् पक्षेऽप्याऽऽस्यस्थानकरणोच्चारणीयः शब्दस्तदन्तिकेऽर्थ इति अन्नाऽग्न्यऽसिशब्दोच्चारणे

---

विशिष्टस्याप्तोपदेशलक्षणवाक्यस्य अर्थविशेषः= प्रतिपाद्यो वाच्यवाचकभावरूपः शब्दार्थसंबन्धः स्वीक्रियते प्राप्तिलक्षणः= संयोगरूपस्तु संबन्धः शब्दार्थयोः प्रतिषिध्यते= न स्वीक्रियते येन शब्दस्य लिङ्गविनयार्थबोधकत्वमापद्येतेत्यर्थः। शब्दार्थयोः संयोगसंबन्धस्य प्रतिषेधकारणं जिज्ञासते- कस्मादिति। उत्तरमाह- प्रमाणत इति, शब्दार्थयोः संयोगसंबन्धः प्रमाणेन नोपलभ्यतेऽतः प्रतिषिध्यते इत्यर्थः। संक्षेपेणोक्तं व्याचष्टे- प्रत्यक्षत इति, शब्दार्थप्राप्तेः= शब्दार्थयोः संयोगस्य। प्रत्यक्षेणानुपलब्धौ हेतुमाह- अतीन्द्रियत्वादिति, पदार्थस्य शब्दग्राहकश्रवणेन्द्रियाग्राह्यत्वादित्यर्थः। उक्तं व्याचष्टे- येनेति, पदार्थो यद्यपीन्द्रियग्राह्योऽस्ति तथापि येन श्रवणेन्द्रियेण शब्दो गृह्यते तस्य श्रवणेन्द्रियस्य विषयभावम्= विषयत्वमतिवृत्तः= अतीतोऽस्ति= श्रवणेन्द्रियग्राह्यो नास्ती पदार्थ इति न श्रवणेन्द्रियेण गृह्यते। स्वाभिप्रायमाह- अस्तीति, यद्यप्यतीन्द्रियः= श्रवणेन्द्रियाग्राह्योऽपि शब्दवाच्यः पदार्थः विषयभूतः= चक्षुरादीन्द्रियविषयभूतोऽस्त्येव तथापि समानेन= एकेनेन्द्रियेण गृह्यमाणयोरेव पदार्थयोः प्राप्तिः= संयोगो ग्रहीतुं शक्यते यथा घटपटयोर्वह्निधूमयोश्च. शब्दार्थौ च नैकेन्द्रियग्राह्यौ शब्दस्य श्रवणेन्द्रियमात्रग्राह्यत्वात् तदर्थस्य श्रवणेन्द्रियाग्राह्यत्वादिति न शब्दार्थयोः संयोगसंबन्ध उपपद्यते गृह्यते च, ततश्च न शब्दस्य लिङ्गविश्रयार्थबोधकत्वापत्तिरित्याशयः। शब्दार्थयोः संयोगसंबन्धेऽनिष्टापत्तिमुपक्रमते- प्राप्तीति, शब्दार्थयोः प्राप्तिलक्षणे= संयोगरूपे संबन्धे गृह्यमाणे= स्वीकृते सति तादृशसंयोगोपपत्त्यर्थमर्थः= वाच्यः पदार्थः शब्दान्तिके= शब्दसमीपे स्यात् किं वा शब्दः अर्थान्तिके= स्ववाच्यसमीपे स्यात् किं वा उभयमुभयत्र स्यात् नाम पदार्थः शब्दसमीपे शब्दश्च पदार्थसमीपे स्यात्- अन्यथा संयोगासंभवादित्यन्वयः। अस्य खण्डनं चाग्रे द्रष्टव्यम् ॥ ५२ ॥

अग्रिमसूत्रमवतारयति- अथेति, अयम्= संयोगसंबन्धः शब्दार्थयोर्वक्ष्यमाणहेतुनाऽनुपपन्नो विज्ञेय इत्यर्थः। उक्तप्रथमकल्पे दोषमाह- पूरणेति, यदि पदार्थः शब्दसमीपे स्यात् तदा मुखे स्यादिति प्राप्तम्- शब्दस्य मुखे जायमानत्वात् तथा च अन्नादिशब्दानामुच्चारणे कृतेऽन्नादिना मुखं पूरणं स्यात् अग्न्यादिशब्दोच्चारणे कृते च मुखस्य दाहः स्यात् खड्गादिशब्दोच्चारणे कृते च मुखस्य पाटनं स्यात् न चैतदुपलभ्यते इति संबन्धाभावः= शब्दार्थयोः संयोगाभावः प्राप्तः= शब्दसमीपे पदार्थसत्ता न संभवतीति सूत्रार्थः। सूत्रे "संबन्धाभावः" इत्यत्र 'संयोगाभावः' इति वक्तव्यमासीत्। व्याचष्टे- स्थानेति, सूत्रघटकचकारेण 'स्थानकरणाभावात्' इति द्वितीयकल्पे दोषो ग्राह्य इत्यर्थस्तदेतदग्रे स्पष्टम्। शब्दान्तिकेऽर्थ इतिकल्पस्य प्रत्यक्षेणानुपलब्धिः सूत्रेणोक्तेति अनुमानेनानुपलब्धिमाह- न चेति, शब्दान्तिकेऽर्थ इतिपक्षोऽनुमानेनापि न सिध्यति- अनुमापकहेतोरभावात्। अस्य पक्षस्य सूत्रोक्तामनुपपत्तिमुपपादयति- एतस्मिन्निति, एतस्मिन्= शब्दान्तिकेऽर्थ इतिपक्षे, आस्यस्थानकरणोच्चारणीयः= मुखस्थाने= मुखदेशे प्रयत्नविशेषलक्षणकरणेन किं वा मुखस्थानगतकरणेनोच्चारणीयः शब्दो मुखे भवतीति प्राप्तं तथा च यद्यर्थस्तदन्तिके= शब्ददेशे भवति तदान्नाऽग्न्यादिशब्दोच्चारणे कृते यथासंख्यं मुखस्यान्ना-

पूरणप्रदाहपाटनानि गृह्येरन्, न च गृह्यन्ते, अग्रहणान्नानुमेयः प्राप्तिलक्षणः संबन्धः । अर्थान्तिके शब्द इति— स्थानकरणासंभवाद् अनुच्चारणम्, स्थानं कण्ठादयः करणं प्रयत्नविशेषः तस्यार्थान्तिकेऽनुपपत्तिरिति । उभयप्रतिषेधाच्च नोभयम् । तस्मान्न शब्देनार्थः प्राप्त इति ॥५३॥

## शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥

शब्दार्थप्रत्ययस्य व्यवस्थादर्शनाद् अनुमीयते— अस्ति शब्दार्थसंबन्धो व्यवस्थाकारणम्, असंबन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः तस्मादप्रतिषेधः संबन्धस्येति ॥ ५४ ॥

अत्र समाधिः—

## न—सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥

न संबन्धकारितं शब्दार्थव्यवस्थानम्, किं तर्हि ?, समयकारितं यत्तदवोचाम— 'अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः संबन्धः' इति समयं तमवोचाम इति ।

---

दिना पूरणादिकमुपलभ्येत न चोपलभ्यते तथा चाऽग्रहणात्= अन्नाग्न्यादिशब्दोच्चारणेऽन्नादिना मुखस्य पूरणत्वादेरनुपलब्ध्या शब्दार्थयोः प्राप्तिलक्षणः= संयोगरूपः संबन्धो नानुमेयः— बाधकर्तकस्य प्रदर्शितत्वादेवेत्यन्वयः । द्वितीयकल्पमनुवदति— अर्थेति, अर्थान्तिके शब्द इत्यपि कल्पो नोपपद्यते । अत्र सूत्रघटकचकारेण गृहीतं हेतुमाह— स्थानेति, यत्र भूतले घटादिपदार्थो भवति तत्र शब्दस्योच्चारणस्थानं मुखं करणं च न संभवतीत्यनुच्चरणम्= पदार्थदेशे शब्दसत्त्वं नोपपद्यते इत्यर्थः । शब्दस्य स्थानमाह— स्थानमिति, करणमाह— करणमिति, प्रयत्नः= उच्चारणानुकूलो व्यापारः, स्थानप्रयत्नौ व्याकरणारम्भे स्पष्टौ । स्वाभिप्रायमाह— तस्येति, तस्य= स्थानस्य करणस्य च, अनुपपत्तिः= अभावः । पदार्थदेशे शब्दस्य स्थानकरणयोरसंभवादसत्त्वं प्राप्तं तेन च शब्दार्थयोः संयोगाभावः प्राप्त इति द्वितीयकल्पोऽपि नोपपद्यते इत्यर्थः । तृतीयकल्पस्योक्तकल्पयोः समुच्चयरूपत्वेनोक्तकल्पयोरनुपपत्त्यैवानुपपत्तिर्विज्ञेयेत्याह— उभयेति । उपसंहरति— तस्मादिति, प्राप्तः= संयुक्तः, तदेवं शब्दार्थयोः संयोगसंबन्धो नोपपद्यते इति न शब्दस्य लिङ्गविधयार्थबोधकत्वापत्तिर्येनानुमानेऽन्तर्भावः स्यादित्यर्थः ॥ ५३ ॥

पूर्वपक्षी शब्दार्थयोः संबन्धावश्यकतामाह— शब्देति, शब्दार्थयोर्व्यवस्थानात्= व्यवस्थादर्शनात् यथा घटशब्देन घटस्यैव बोधो भवति न पटादेरिति तस्मात् शब्दार्थयोः संबन्धस्य प्रतिषेधो नोपपद्यते यदि शब्दार्थयोः संबन्धो न स्यात्तदोक्ता व्यवस्था न स्यात् किं तु सर्वैः शब्दैः सर्वेषां पदार्थानां बोधः स्याद् न चैवमस्तीति सिद्धः शब्दार्थयोः संबन्ध इति तादृशसंबन्धवशादेव शब्दस्यार्थबोधकत्वेन लिङ्गविधयैव बोधकत्वं स्यात् न हि साध्यतावच्छेदको हेतुतावच्छेदकश्च संयोग एव संबन्धो भवति येन शब्दार्थयोः संयोगाभावे शब्दस्य लिङ्गविधयार्थबोधकत्वं न स्यादिति सूत्रार्थः । व्याचष्टे— शब्देति, शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनात् यथा घटशब्देन घटस्यैव बोधो भवति तस्मात् शब्दार्थव्यवस्थाकारणं शब्दार्थयोः संबन्धोऽस्तीत्यनुमीयते तादृशसंबन्धश्च घटादिशब्दानां घटादिपदार्थैरेवास्ति न पटादिपदार्थैरिति शब्दार्थप्रत्ययव्यवस्थोपपद्यते । विपक्षे बाधकमाह— असंबन्धे इति । अर्थमात्रे इति सप्तम्यर्थो विषयत्वम् । उपसंहरति— तस्मादिति, उक्तव्यवस्थाकारणीभूतस्य संबन्धस्य प्रतिषेधो नोपपद्यते ॥५४॥

अग्रिमसूत्रमवतारयति— अत्रेति, अत्र= उक्तपूर्वपक्षे समाधिः= समाधानम् । समाधानसूत्रमाह— नेति, शब्दाद् यो व्यवस्थयार्थप्रत्ययः स संबन्धकृतो नास्ति— तस्य शब्दार्थसंप्रत्ययस्य= शब्दाज्जायमानस्य पदार्थबोधस्य सामयिकत्वात्= संकेतमूलकत्वात् संकेतश्च 'अस्य शब्दस्येदं वाच्यम्' इत्याप्तोपदेश एव तथा च न शब्दस्य लिङ्गविधया बोधकत्वमिति सूत्रार्थः । व्याचष्टे— नेति, शब्दार्थव्यवस्थानम्= शब्दादर्थप्रत्ययव्यवस्था संबन्धकारितम्= शब्दार्थसंबन्धकृता नेत्यर्थः । व्यवस्थाकारणं जिज्ञासते-

कः पुनरयं समयः?, 'अस्य शब्दस्येदमर्थजातमभिधेयम्' इत्यभिधानाभिधेयनियमनियोगः, तस्मिन्नुपयुक्ते शब्दादर्थसंप्रत्ययो भवति. विपर्यये हि शब्दश्रवणेपि प्रत्ययाभावः, संबन्धवादिनापि चायमवर्जनीय इति । प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम्, समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्. वाक्यलक्षणाया वाचोऽर्थलक्षणम्, पदसमूहो वाक्यम् अर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसंबन्धस्याऽर्थतुषोपि अनुमानहेतुर्न भवतीति ॥ ५५ ॥

किमिति । उत्तरमाह- समयेति । समयस्य पूर्वोक्तत्वमाह- यत्तदिति, आप्तोपदेशेत्यादिसूत्रभाष्ये उक्तं समयस्वरूपवाक्यमनुवदति- अस्येदमिति, अस्य शब्दस्येदं वाच्यमितिपष्ठीघटितस्य वाक्यस्य योऽर्थविशेषः= प्रतिपाद्यः स शब्दार्थयोः संबन्ध एव स चानुज्ञातः= स्वीकृत एव तत्कृतैव शब्दादर्थप्रत्ययव्यवस्थेत्यर्थः, 'अस्येदम्' इत्यादिना यदवोचाम तत् तम्= शब्दार्थव्यवस्थाकारणीभूतं समयमवोचामेत्यन्वयः ।

संकेतस्वरूपं जिज्ञासते- क इति । संकेतस्वरूपमाह- अस्येति, यथा 'घटशब्दस्य घटत्वावच्छिन्नं वाच्यम्' इति अभिधानाभिधेयनियमस्य= वाच्यवाचकभावसंबन्धनियमस्य नियोगः= उपदेश एव समय इत्यर्थः, अर्थजातम्= तज्जात्यवच्छिन्नम्, अभिधीयतेऽनेनेत्यभिधानम्= वाचकम् अभिधीयते इत्यभिधेयम्= वाच्यम् । अत्र- "अभिधानाभिधेययोर्नियमः- गोशब्दस्य सास्नादिमानेवार्थः एवमश्वशब्दस्य केसरादिमानेवेति तस्मिन्नियोगो बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ सोयं समय इत्ययमर्थः तस्मिन्नुपयुक्ते= ज्ञाते शब्दार्थव्यवस्था भवति" इति तात्पर्यटीका । पर्यवसितमाह- तस्मिन्निति, तस्मिन्= उक्तसमये उपयुक्ते= ज्ञाते सति शब्दादर्थबोधो जायते- पदार्थबोधं प्रति शक्तिज्ञानस्य कारणत्वात्, विपर्यये= उक्तसंकेतज्ञानाभावे हि शब्दश्रवणे जातेपि प्रत्ययाभावः= पदार्थज्ञानं न जायते इत्यन्वयव्यतिरेकाभ्यां शब्दादर्थव्यवस्थां प्रति तत्संकेतज्ञानस्य कारणत्वं सिद्धमिति न शब्दार्थव्यवस्था संबन्धान्तरकृता येन शब्दस्य लिङ्गविधया बोधकत्वमापद्येतेत्यर्थः । संबन्धवादिना= शब्दार्थयोः समयातिरिक्तसंबन्धान्तरस्वीकर्त्राप्ययम्= समयः अवर्जनीयः= स्वीकार्य एव- समयज्ञानं विना शब्दस्यार्थबोधकत्वाभावात्, तत्र संबन्धद्वयस्वीकारे गौरवादावश्यको वाच्यवाचकभाव एव संबन्धः स्वीकार्यो न तु संबन्धान्तरमित्यर्थः । संकेतज्ञानप्रकारमाह- प्रयुज्येति, लौकिकानाम्= लोके समयोपयोगः= समयज्ञानं प्रयुज्यमानग्रहणाद् भवति यथा घटादिबोधार्थं प्रयुज्यमानो यो घटादिशब्दस्तद्ग्रहणात् तटस्थस्य 'घटशब्दस्य घटे शक्तिः' इत्येवं संकेतज्ञानं जायते इत्यन्वयः । व्याकरणस्य संकेतज्ञापकत्वमाह- समयपालनार्थमिति, पदलक्षणाया वाचोऽन्वाख्यानम्= शब्दसाधुत्वव्युत्पादनलक्षणं यद् व्याकरणं तत् समयरक्षार्थमेव. व्याकरणे च "भू सत्तायाम्" इत्यादिना धातूनाम् "कर्मणि द्वितीया" इत्यादिना प्रत्ययानां च शक्तिरुक्तेति स्पष्टमेव, उक्तं च "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च" इत्यादि । वाक्यलक्षणवाचो नियामकशास्त्रमाह- वाक्येति, वाक्यलक्षणाया वाचः= वाक्यस्याऽर्थलक्षणम्= अर्थशास्त्रम्= वाक्यार्थप्रधानं मीमांसादिशास्त्रम् अन्वाख्यानम्= व्युत्पादकमस्ति- मीमांसादिशास्त्राणामेव वाक्यार्थनियामकत्वादित्यर्थः, अत्र "अर्थलक्षणम्" इत्यत्र "अर्थो लक्षणम्" इत्युपलभ्यमानः पाठस्त्वशुद्ध एवेति व्याकरणमञ्जूषायां द्रष्टव्यम् । वाक्यलक्षणमाह- पदसमूह इति, अर्थपरिसमाप्तौ= समग्रार्थबोधकः पदसमूहो वाक्यं यथा 'नीलं घटमानय' इति 'नीलं घटम्' इतिपदसमूहोपि सन् न वाक्यम्- साकाङ्क्षत्वात् समग्रार्थबोधकत्वाभावेनार्थपरिसमाप्तेरभावादित्यन्वयः । उपसंहरति- तदेवमिति, तदेवम्= उक्तरीत्या प्राप्तिलक्षणस्य= संयोगरूपस्य शब्दार्थयोः संबन्धस्यानुमानहेतुरर्थतुषः= प्रयोजनलेशोपि नास्तीति नानुमानं स्वीकारश्च संभवति- प्रयोजनं विनाऽनुमानासंभवात्, शब्दात् तदर्थप्रतीत्युपपत्त्यर्थमेव शब्दार्थयोः संबन्धोऽपेक्ष्यते अर्थप्रतीत्युपपत्तिश्च वाच्यवाचकभावसंबन्धेनैवोपपद्यते न संयोगसंबन्धेनेति न संयोगः स्वीकार्यः- शब्दार्थयोः संयोगेऽनिष्टस्यानुपपत्तेश्च प्रदर्शितत्वादेव तथा च

## जातिविशेषे चानियमात् ॥ ५६ ॥

सामयिकः शब्दादर्थसंप्रत्ययो न स्वाभाविकः— ऋष्यार्यम्लेच्छानां यथाकामं शब्दप्रयोगोऽर्थप्रत्यायनाय प्रवर्तते. स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्, यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥ ५६ ॥

## तदप्रामाण्यम्— अनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥

---

न शब्दो लिङ्गविषयार्थबोधको येनानुमानेन्तर्भूतः स्यादित्यर्थः। अत्र— "अर्थरूपस्तुपः= लेशोऽर्थतुपः स नास्ति. केवलं परैः प्राप्तिलक्षणः संबन्धः कल्पित इत्यर्थः" इति तात्पर्यटीका ॥ ५५ ॥

शब्दार्थप्रत्ययस्य संबन्धन्तराकारणकत्वे सूत्रेण हेत्वन्तरमाह— जातीति, यदि शब्दादर्थप्रत्यय उक्तरीत्या संकेतमूलको न स्यात् किं तु पूर्वपक्षिमतेन शब्दार्थयोः परस्परसंबन्धकृतः स्यात् तदा संबन्धस्याऽभावासंभवात् संबन्धकृतत्वात् स्वाभाविकः स्यात् यथा धूमाद् वह्निप्रत्ययः संबन्धकृतत्वात् स्वाभाविक इति सर्वसाधारण एव एवं शब्दादर्थप्रत्ययोपि संबन्धकृतत्वात् स्वाभाविकः सन् सर्वसाधारणः स्यात् तथा च जातिविशेषे= देशविशेषे किं वार्यम्लेच्छादिजातिविशेषे शब्दस्य स्वार्थप्रत्यायकत्वे अनियमः= व्यभिचारो न स्यात् तथा च यवशब्दस्यार्येषु दीर्घशूकान्नप्रत्यायकत्वेन म्लेच्छेष्वपि दीर्घशूकप्रत्यायकत्वं स्यात्— स्वाभाविकत्वात्. न चैवमस्ति किं तु म्लेच्छेषु प्रियङ्गुप्रत्यायकत्वं भवति आर्येषु च दीर्घशूकप्रत्यायकत्वं सोयं जातिविशेषे स्वार्थप्रत्यायकत्वानियमः अर्थप्रत्ययस्य शब्दार्थसंबन्धकृतत्वे नोपपद्यते संकेतकृतत्वे चोपपद्यते— संकेतस्येच्छाधीनत्वेन यवशब्दसंकेतस्यार्यैर्दीर्घशूके म्लेच्छैश्च प्रियङ्गौ कृतिसंभवादिति जातिविशेषे शब्दार्थप्रत्ययस्यानियमात्= एकरूपत्वनियमाभावात् शब्दादर्थप्रत्ययः समयकृत एव न तु तदतिरिक्तसंबन्धकृतः संभवतीतिसूत्रार्थः। अत्र "जातिविशेषशब्देन पुनर्देशोऽभिधीयते" इतिवार्तिकम्। व्याचष्टे— सामयिक इति, संकेतमूलक इत्यर्थः। न स्वाभाविकः= न संबन्धान्तरकृतः— संबन्धकृतस्यैव स्वाभाविकत्वप्रदर्शनात्, उक्ते हेतुमाह— ऋषीति, अत्र वाक्यादौ 'यतः' इत्यध्याहार्यम्। ऋष्यादीनामर्थप्रत्यायनाय शब्दप्रयोगो यथाकामम्= यथेच्छम्= स्वकृतसंकेतानुसारेण प्रवर्तते यथा यवशब्दस्यार्याणां दीर्घशूके म्लेच्छानां च प्रियङ्गौ प्रयोगो भवति— तथैव संकेतात् संकेतस्य च स्वाधीनत्वात्, संकेतश्चात्रानादिरेव ग्राह्यस्तेन न पदार्थान्तरप्रत्ययापत्तिः। विपक्षेबाधकमाह— स्वाभाविके इति, शब्दादर्थप्रत्ययो यदि स्वाभाविकः= संबन्धातरकृतः स्याच्चदा यथाकामं शब्दप्रयोगो न स्यात् किं तु यवशब्दस्य स्वभावेन दीर्घशूकबोधकत्वे म्लेच्छेषु प्रियङ्गुबोधकत्वं न स्यात्तेन म्लेच्छानां यवशब्दस्य प्रियङ्गौ प्रयोगो न स्यात् किं वा स्वभावेन प्रियङ्गुबोधकत्वे दीर्घशूकबोधकत्वं न स्यात्तेनार्याणां दीर्घशूके यथेच्छं प्रयोगो न स्यात्— स्वाभाविकस्य व्यभिचारासंभवादित्यर्थः। स्वाभाविकस्य व्यभिचाराभावे दृष्टान्तमाह— यथेति, यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वम्= रूपप्रकाशकत्वं जातिविशेषे= देशविशेषे न व्यभिचरति किं तु सर्वत्रैव रूपप्रकाशकत्वं भवत्येव तत्कस्य हेतोः ? स्वाभाविकत्वादेवेतिवक्तव्यं तथा यदि शब्दस्याप्यर्थप्रत्यायकत्वं संबन्धकृतत्वात् स्वाभाविकं स्यात्तदा कुत्रापि न व्यभिचरेदिति यवादिशब्दानां सर्वत्रैव समानरूपेण दीर्घशूकादिप्रत्यायकत्वं स्यात् न चैवमस्तीति तत्तदर्थप्रत्यायकत्वस्य व्यभिचाराच्छब्दस्यार्थप्रत्यायकत्वं न संबन्धकृतं किं तु संकेतमूलकमेवेत्यर्थः। किं वात्र पूर्वपक्षिमुखेन शब्दादर्थप्रत्ययस्य स्वाभाविकत्वमाक्षिप्य तस्य प्रत्याख्यानं सूत्रभाष्याभ्यां कर्तव्यं तथा चात्र स्वाभाविक इत्यस्य संबन्धान्तरकृत इत्यर्थो न कर्तव्यः किं तु मुख्य एवेति विभाव्यम् ॥ ५६ ॥

शब्दप्रमाणस्यानुमानेऽन्तर्भावो न संभवतीति पूर्वपक्षी अप्रामाण्यमाशङ्कते— तदिति, तत्= तस्य शब्दस्य= वाक्यस्याऽप्रामाण्यम्— अनृतत्वव्याघातपुनरुक्तदोषेभ्यः अनृतत्वादिदोषाणां वाक्यस्याऽप्रामा-

पुत्रकामेष्टिहवनाभ्यासेषु, तस्येति शब्दविशेषमेवाधिकुरुते भगवान् ऋषिः । शब्दस्य प्रमाणत्वं न संभवति, कस्मात्?. अनृतदोषात्- पुत्रकामेष्टौ- "पुत्रकामः पुत्रेष्ट्या यजेत" इति. नेष्टौ संस्थितायां पुत्रजन्म दृश्यते, दृष्टार्थस्य वाक्यस्याऽनृतत्वाद् अदृष्टार्थमपि वाक्यम्- "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्याद्यऽनृतमिति ज्ञायते । विहितव्याघातदोषाच्च- हवने "उदिते होतव्यम्" "अनुदिते होतव्यम्" "समयाध्युषिते होतव्यम्" इति विधाय विहितं व्याहन्ति- "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति" "शवलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति" "श्यावशवलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति" (इति) व्याघाताचान्यतरद् मिथ्येति । पुनरुक्तदोषाच्च- अभ्यासे देश्यमाने "त्रिः प्रथमामन्वाह त्रिरु-

ण्यापादकत्वात्, अनृतत्वम्= मिथ्यार्थबोधकत्वम्. व्याघातः= पूर्वापरवाक्ययोः परस्परविरुद्धत्वम्. पुनरुक्तत्वं च स्पष्टमेवेति सूत्रार्थः, तदनेन वेदवाक्यानामप्रामाण्यं प्रदर्शितं तेषामप्रामाण्ये लौकिकवाक्यानामप्यऽप्रामाण्यं स्यादेवेत्याशयः, अनृतत्वादिदोषोदाहरणानि च भाष्ये स्पष्टान्येव । व्याचष्टे- पुत्रेति, पुत्रकामेष्टिवाक्येऽनृतत्वम्. अग्निहोत्रहवनवाक्येषु व्याघातः "त्रिः प्रथमामन्वाह" इत्यादिष्वभ्यासबोधकवाक्येषु पुनरुक्तिर्दोषः इत्येवं यथासंख्यमन्वयः, अभ्यासः= एकवाक्यस्य पुनः पुनरुच्चारणम् । सूत्रघटकतच्छब्दस्य प्रतिपाद्यमाह- तस्येति, तस्येति= तच्छब्देन शब्दविशेषम्= वेदवाक्यम्. अधिकुरुते= आश्रयति अप्रामाण्यबोधनार्थम् ऋषिः= सूत्रकारः । अत्र तच्छब्दस्य वेदवाक्यापरत्वे वैयर्थ्यमेव स्यात्- सामान्यतः शब्दपदार्थस्य प्रकृतत्वेन पूर्वसूत्रेभ्यः प्राप्तिसंभवादित्यर्थः । सूत्रप्रतिपाद्यमाह- शब्दस्येति । शब्दाप्रामाण्यकारणं जिज्ञासते- कस्मादिति । पूर्वपक्षी उत्तरमाह- अनृतेति, "पुत्रकामः पुत्रेष्ट्या यजेत" इति पुत्रकामेष्टिवाक्ये अनृतदोषात्= अनृतत्वदोषादप्रामाण्यम्, अत्रानृतत्वमाह- नेष्टाविति, उक्तायामिष्टौ संस्थितायाम्= अनुष्ठितायाम्= कृतायामपि पुत्रो न जायते इत्यनृतत्वं दोषः । उक्तमन्यत्रातिदिशति- दृष्टार्थस्येति, यत् फलमेतच्छरीरेण लब्धुं शक्यते तद्बोधकं वाक्यं दृष्टार्थं यत् फलं शरीरान्तरेणैव लब्धुं शक्यते तद्बोधकं वाक्यमदृष्टार्थं यथा- "स्वर्गकामो यजेत" इत्यादिवाक्यम्- स्वर्गस्य शरीरान्तरेणैव लभ्यत्वस्वीकारात्. पुत्रस्य त्वेतच्छरीरेणापि लभ्यत्वात् पुत्रकामेष्टिवाक्यं दृष्टार्थं तत्र दृष्टार्थस्य पुत्रकामेष्ट्यादिवाक्यस्यानृतत्वे प्राप्ते "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिकमदृष्टार्थमपि वाक्यमनृतमिति ज्ञायते अनृतत्वाच्च तस्याप्यऽप्रामाण्यमित्यन्वयः । व्याघातदोषमाह- विहितेति, विहितस्य व्याघातः= दोषकथनं तादृशदोषाच्चाप्रामाण्यं वाक्यस्येत्यर्थः, हवने= अग्निहोत्रहोममुद्दिश्य "उदिते होतव्यम्" "अनुदिते होतव्यम्" "समयाध्युषिते होतव्यम्" इत्येवं सूर्यस्योदितादिकालेष्वग्निहोत्रविधानं कृतम्, समयाध्युषितकालोप्यनुदितकालविशेष एव तदुक्तम्- "तथा प्रभातसमये नष्टे नक्षत्रमण्डले । रविर्यावन्न दृश्येत समयाध्युषितं च तत्" इति । विहितस्य व्याघातमाह- विहितमित्यादिना, विहितं होमं व्याहन्ति= दूषयन्ति, उदितहोमस्य व्याघातकवाक्यमाह- श्याव इति, य उदिते जुहोति तस्याहुतिं श्यावः= यमश्वा राक्षसविशेषो वाऽभ्यवहरति= भक्षयति न साऽऽहुतिर्होमोद्देश्यदेवतां प्राप्नोतीत्यर्थः, अनुदितहोमस्य व्याघातकवाक्यमाह- शवल इति, शवलः= द्वितीयो यमश्वा राक्षसविशेषो वा, समयाध्युषितहोमस्य व्याघातकवाक्यमाह- श्यावशवलाविति, वाक्यं पूर्ववदेव व्याख्येयम्, तदेवमुदितहोमे कृते श्यावेनाहुतिभक्षणलक्षणः अनुदितहोमे शवलेनाहुतिभक्षणलक्षणः समयाध्युषितहोमे श्यावशवलाभ्यामाहुतिभक्षणलक्षणो दोष उक्त इति पूर्वोक्तोदितहोमादीनां व्याघातो जातस्तेन व्याघातेनाऽन्यतरत्= होमविधायकं वाक्यं किं वा व्याघातबोधकं वाक्यं मिथ्या स्यादेव मिथ्यार्थबोधकत्वाच्चाऽप्रामाण्यं प्राप्तमित्यर्थः । सिद्धान्ते तु यद्युदितहोमकर्ताऽनुदिते समयाध्युषिते वा जुहोति यदि चानुदितहोमकर्ता उदिते समयाध्युषिते वा जुहोति यदि च समयाध्युषितहोमकर्ता उदिते वाऽनुदिते वा सूर्ये जुहोति तत्र "श्यावः" इत्यादिवाक्यैर्दोष उक्तः स्वीकृतहोमकालस्य परित्यागे

त्तमाम्” इति पुनरुक्तदोषो भवति. पुनरुक्त च प्रमत्तवाक्यमिति. तस्मादप्रमाणं शब्दः– अनृतव्याघातपुनरुक्तदोषेभ्य इति ॥ ५७ ॥

## न– कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

नानृतदोषः पुत्रकामेष्टौ, कस्मात्?, कर्मकर्तृसाधनवैगुण्यात्, इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति, इष्टिः करणम्= साधनं. पितरौ कर्तारौ. संयोगः कर्म. त्रयाणां गुणयोगात् पुत्रजन्म. वैगुण्याद् विपर्ययः, इष्ट्याश्रयं तावत् कर्मवैगुण्यं समीहाभ्रेषः, कर्तृवैगुण्यम् अविद्वान् प्रयोक्ता कपूयाचरणश्च, साधनवैगुण्यं हविरसंस्कृतम् उपहतमिति. मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति. दक्षिणा दुरागता हीना निन्दिता चेति । अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासंप्रयोगः, कर्तृवैगुण्यं योनिव्यापादो बीजोपघातश्चेति, साधनवैगुण्यम् इष्टावऽभिहितम् । लोके च

[illegible]नार्थं. तथा [illegible] एव होत्यव्यमेवमन्यत्रापि विज्ञेयम् । पुनरुक्तिदोषादप्रामाण्य-[illegible]– पुनरुक्तेति, अभ्यासे= पुनरुच्चारणे क्रियमाने= विधीयमाने पुनरुक्तदोषो भवति, उदाहरति– त्रिरिति, यागेऽग्निसमिन्धनार्थाः सामिधेनीनामका एकादशसंख्याका ऋचः= मन्त्रा वेदे प्रसिद्धा एव तत्र श्रूयते “पञ्चदश सामधेनीरन्वाह” इति. एकादशानामृचां पञ्चदशत्वं च प्रथमान्त्ययो ऋचोः त्रिरभ्यासेन जायते तदेवोक्तम्– “त्रिः प्रथमामन्वाह त्रिरुत्तमाम्” इति, त्रिः= त्रिवारं प्रथमां ऋचम् उत्तमाम्= अन्त्याम् अन्वाह= पठति इत्यर्थः । तदेतत् पूर्वमीमांसायाः पञ्चमाध्यायतृतीयपादतृतीयाधिकरणेऽन्यत्र च द्रष्टव्यम् । पर्यवसितमाह– पुनरुक्तं चेति । उपसंहरति– तस्मादिति, शब्दस्याऽप्रामाण्ये सूत्रोक्तहेतुमनुवदति– अनृतेति, अनृतत्वादिदोषाणामप्रामाण्यापादकत्वात् तद्घटितं वाक्यमप्रमाणं तत्साहचर्यादन्यदपि वाक्यमप्रमाणमिति वाक्यमात्रस्याप्रामाण्यं प्राप्तमित्यर्थः ॥ ५७ ॥

पूर्वपक्षिप्रतिपादितं शब्दाप्रामाण्यं प्रत्याचष्टे– नेति, पुत्रकामेष्टिवाक्यस्याऽप्रामाण्यं नास्ति– पुत्रकामेष्टौ कृतायामपि यः पुत्रजन्माभावः स कर्मकर्तृसाधानानां वैगुण्यात्= वैकल्यात्= दोषादेव भवतीति न वाक्यस्याप्रामाण्यमितिसूत्रान्वयः । अन्यत् सर्वं भाष्ये स्पष्टमेव । व्याचष्टे– नेति, उक्ते पुत्रकामेष्टिवाक्येऽनृतत्वदोष एव नास्ति येनाऽप्रामाण्यं स्यात् । अनृतत्वदोषाभावकारणं जिज्ञासते– कस्मादिति । उत्तरमाह– कर्मेति, इष्ट्या= पुत्रकामेष्ट्यनन्तरं पितरौ= मातापितरौ ऋतुकाले संयुज्यमानौ पुत्रं जनयतः नान्यथेति लोकप्रसिद्धमेव । कर्मादीनां स्वरूपं वैगुण्यं चाह– इष्टिरित्यादिना, पुत्रोत्पत्तौ इष्टिः करणम्= साधनम्, इष्टिसंयोगकर्तारौ पितरौ उभयोरेवाधिकारात्, मातापित्रोः संयोगश्च कर्मेति कर्मादीनां स्वरूपमुक्तम्, त्रयाणाम्= कर्मकर्तृसाधनानां गुणयोगात्= साद्गुण्यात्= यथार्थप्रयोगात्= अपचाराभावात्पुत्रजन्म भवति, वैगुण्यात्= वैकल्यात्= अपचारात् विपर्ययः= पुत्रजन्माभाव आपद्यते । एषां वैगुण्यमाह– इष्ट्याश्रयमित्यादिना, इष्ट्याश्रयम्= इष्टौ. इष्ट्याश्रितकर्मणो वैगुण्यं हि समीहाभ्रेषः= क्रियाभ्रंश एव यथा कर्तव्यं तथा न कृतमिति, यत्र प्रयोक्ता विद्वान्= कर्मस्वरूपवेत्ता न भवति किं वा कपूयाचरणः= निन्दिताचारवान् भवति तत्र तत् कर्तृवैगुण्यम् । यत्र हविरुक्तसंस्काररहितं भवति किं वा उपहतम्= अपक्वं दग्धं भ्रष्टं वा भवति तत्र तत् साधनवैगुण्यम्, यत्र च मन्त्राणां न्यूनाधिकत्वं भवति स्वरवर्णादिहीनत्वं च भवति दक्षिणा दुरागता= असत्प्रतिग्रहादिप्राप्ता वा हीना= अल्पा वा निन्दिता= दानायोग्या वा भवति तदपि तत्र साधनवैगुण्यमेव– मन्त्रादीनामिष्टयङ्गत्वात् । एवमिष्टिपक्षीयं कर्मकर्तृसाधनवैगुण्यमुक्त्वा दृष्टोपाये कर्मादिवैगुण्यमाह– अथेति, उपजनाश्रयम्= पुत्रोत्पादने, पुत्रोत्पादनस्य कर्मणो वैगुण्यं मातापित्रोर्मिथ्यासंप्रयोगः= यादृशेन संयोगेन शुक्रस्य गर्भाशये प्राप्तिर्न स्यात् स मिथ्यासंप्रयोगः– नैवं पुत्रो जायते इति, योनिव्यापादः= योनिदोषो येन गर्भधारणशक्तिर्नश्यति स चाधिकमैथुनादिना भवति, बीजोपघातः= शुक्रदोषविशेषो येन गर्भे स्थितिशक्तिर्नश्यति

'अग्निकामो दारुणी मथ्नीयात्' इति विधिवाक्यम् तत्र कर्मवैगुण्यं मिथ्याभिमन्थनम्. कर्तृवैगुण्यं प्रज्ञाप्रयत्नगतः प्रमादः. साधनवैगुण्यम् आर्द्रं सुषिरं दारु इति. तत्र फलं न निष्पद्यते इति नाऽनृतदोषः, गुणयोगेन फलनिष्पत्तिदर्शनात्, न चेदं लौकिकाद् भिद्यते- "पुत्रकामः पुत्रेष्ट्या यजेत" इति ॥ ५८ ॥

## अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥

'न व्याघातो हवने' इत्यनुवर्तते, योऽभ्युपगतं हवनकालं भिनत्ति= ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते- "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति" तदिदं विधिभ्रेषे निन्दावचनमिति ॥ ५९ ॥

एतदत्र कर्तृवैगुण्यम्=, पुत्रोत्पादनकर्त्रोः= मातापित्रोर्वैगुण्यम्= दोषः= स्वरूपदोष इत्यर्थः, साधनवैगुण्यं चेष्टिवैगुण्यमेव तच्च पूर्वमिष्टिमुद्दिश्य अभिहितम्= उक्तमेवेत्याह- साधनवगुण्यैमिति, एतादृशवैगुण्येपि पुत्रो न जायते । अत्र लौकिकवाक्यमुदाहरति- अग्निकाम इति, दारुणी= काष्ठद्वयं मथ्नीयात् काष्ठद्वयमन्थनेनाग्निरुत्पद्यते यत इत्याशयः, अत्र कर्मादिवैगुण्यमाह- तत्रेति, यादृशमन्थनेनाग्निर्जायेताऽतादृशं मन्थनं मिथ्याभिमन्थनम् , कर्तृवैगुण्यमाह- कर्तृवैगुण्यमिति, प्रज्ञागतः प्रमादः मन्थनाज्ञानम् प्रयत्नगतः प्रमादः शैथिल्यम् , दारु= मन्थनीयं काष्ठं यदि आर्द्रं वा स्यात् सुषिरम्= सच्छिद्रम्= जर्जरं वा स्यात्तदा साधनवैगुण्यं विज्ञेयम्- अत्र मन्थनीयकाष्ठस्यैव साधनत्वात् , पर्यवसितमाह- तत्रेति, तत्र= उक्तकर्मादिवैगुण्ये सति तादृशवैगुण्यादेव फलाभावः= अग्नेरनुत्पत्तिर्भवतीति 'अग्निकामः' इत्यादिवाक्येऽनृतत्वदोषो नास्ति- कर्मादिसाद्गुण्ये फलदर्शनात् , तदाह- गुणयोगेनेति, गुणयोगः= यथार्थता= अपचाराभावः । प्रकृतमाह- न चेदमिति, इदम्= "पुत्रकामः" इतिवैदिकं पुत्रकामेष्टिवाक्यम् 'अग्निकामः' इति लौकिकवाक्यान्न भिद्यते- लौकिकवाक्यवदेव कर्मकर्तृसाधनानां साद्गुण्यसापेक्षत्वात् . तथा च यथोक्तरीत्या कर्मादिवैगुण्येन फलाभावेपि न लौकिकवाक्यस्याऽप्रामाण्यं तथा कर्मादिवैगुण्येन फलाभावेपि न वैदिकवाक्यस्याऽप्रामाण्यम्- प्रमाणमात्रस्य स्वेतिकर्तव्यतासापेक्षत्वात् स्वेतिकर्तव्यतां विना फलजनकत्वाभावादित्यर्थः ॥ ५८ ॥

प्रदर्शितव्याघातदोषस्याभावमाह- अभ्युपेत्येति, होमायोदितादिकालेष्वेकं कालमभ्युपेत्य= स्वीकृत्य कालभेदे= तादृशस्वीकृतकालस्य परित्यागे दोषवचनात्= "श्यावः" इत्यादिवचनैर्दोष उक्तस्तथा चोदितहोमस्वीकर्त्रा उदिते एव सूर्ये होतव्यम् नानुदिते समयाध्युषिते वा एवमनुदितादिहोमस्वीकारपक्षेपि नियमो विज्ञेयस्तथा च न वाक्येषु प्रदर्शितेषु व्याघातदोषो येनाऽप्रामाण्यं स्यादिति सूत्रार्थः । व्याचष्टे- नेति, नेति पूर्वसूत्रात् तत्पूर्वसूत्राच्च व्याघात इतिपदमनुवर्तनीयं तथा च हवने= हवनविधायकवाक्येषूक्तेषु न व्याघातो दोषो येनाऽप्रामाण्यं स्यादित्यर्थः । सूत्रप्रतिपाद्यमाह- य इति, अभ्युपगतम्= स्वीकृतं हवनकालम्= हवनस्योदितादिकालं भिनत्ति= त्यजति, भिनत्तीत्यस्यार्थमाह- तत इति, ततः= स्वीकृतकालादन्यत्र= अन्यस्मिन् काले जुहोति तत्र= स्वीकृतकालपरित्यागे तस्य दोष उच्यते, दोषबोधकवाक्यमाह- श्याव इति, वाक्यं पूर्वत्र व्याख्यातम्, होमाय उदितातिरिक्तकालस्वीकर्तुस्तत्परित्यागेऽयं दोष उक्तः, अनुदितातिरिक्तकालस्वीकर्तुस्तत्परित्यागे "शबलः" इत्यनेन दोष उक्तः, समयाध्युषितातिरिक्तकालस्वीकर्तुश्च तत्परित्यागे "श्यावशबलौ" इत्यनेन दोष उक्त इतिविज्ञेयम् । उपसंहरति- तदिदमिति, तत्= तस्मात् इदम्= "श्यावः" इत्यादिवाक्यं विधिभ्रेषे= स्वीकृतकालस्य परित्यागे निन्दावचनमेवेति नैषां वाक्यानामप्रामाण्यं नाप्येतादृशनिन्दावाक्यैरुक्तहोमविधायकवाक्यानां व्याघातो येनाऽप्रामाण्यं स्यादित्यर्थः ॥ ५९ ॥

## अनुवादोपपत्तेश्च ॥ ६० ॥

'पुनरुक्तदोषोऽभ्यासेन' इतिप्रकृतम्, अनर्थकोऽभ्यासः पुनरुक्तः, अर्थवानभ्यासोऽनुवादः, योऽयमभ्यासः– "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति अनुवाद उपपद्यते– अर्थवत्त्वात्, त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामधेनीनां भवति तथा च मन्त्राभिवादः– "इदमहं भ्रातृव्यं पञ्चदशारेण वाग्वज्रेण बाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति पञ्चदशसामिधेनीवज्रं मन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति ॥ ६० ॥

## वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥

प्रमाणं शब्दो यथा लोके ॥ ६१ ॥

प्रदर्शितपुनरुक्तेनाऽप्रामाण्याऽभावमाह- अनुवादेति, अनुवादत्वोपपत्तेरित्यर्थः, "त्रिः प्रथमामन्वाह" इत्युक्तस्याऽभ्यासस्य अनुवादत्वोपपत्तेः= अनुवादत्वसंभवात् पुनरुक्तत्वं नास्त्येव येन दोषत्वं स्यात्तेन चाऽप्रामाण्यं स्यादित्यन्वयः, निरर्थकस्याऽभ्यासस्य= पुनरुच्चारणस्य पुनरुक्तत्वं भवति न तु सार्थकस्यापि तस्यानुवादत्वसंभवात् अत्र च "पञ्चदश सामधेनीरन्वाह" इति श्रूयमाणं पञ्चदशत्वं सामधेनीनामेकादशसंख्याकर्चामभ्यासं विना नोपपद्यते स एवाभ्यासः "त्रिः प्रथमाम्" इतिवाक्येनोक्त इति सामधेनीनामृचां पञ्चदशत्वसंपादकत्वान्न निरर्थकस्तथा च न पुनरुक्तत्वलक्षणो दोषः किं तु अनुवाद एवेति न वाक्यस्याऽप्रामाण्यापत्तिरिति सूत्रार्थः, अत्र– "पुनरुक्तं नाम तस्यैवाऽर्थस्याऽनङ्गीकृतविशेषस्य सतः पुनर्वचनम्. अनुवादस्तु पुनः श्रुतिसामर्थ्यादङ्गीकृतविशेषस्यार्थस्य वादः एवं सति यथोक्तो न दोषः" इतिवार्तिकम्। व्याचष्टे– पुनरुक्तेति, "त्रिः प्रथमाम्" इत्यत्राऽभ्यासेन पुनरुक्तदोषस्तेन चाऽप्रामाण्यमिति यत् प्रकृतम्= पूर्वमुक्तं पूर्वपक्षिणा तस्यात्र निरासः क्रियते इत्यर्थः। अभ्यासस्य द्वैविध्यमाह– अनर्थक इति, अभ्यासोऽनर्थकः सार्थकश्च भवति तत्राऽनर्थक एव पुनरुक्तो भवति न सार्थकोपि स त्वनुवाद इत्युच्यते। प्रकृतमाह– योयमिति। सोयमितिशेषः "त्रिः प्रथमाम्" इत्युक्ताभ्यासस्यानुवादत्वे हेतुमाह– अर्थवत्त्वादिति, उक्तार्थवत्त्वमुपपादयति– त्रिर्वचनेनेति, प्रथमोत्तमयो ऋचोः "त्रिः प्रथमाम्" इत्युक्तेन त्रिर्वचनेन= त्रिवारंपाठेन सामधेनीनामृचां पञ्चदशत्वमुपपद्यते पञ्चदशत्वं चावश्यकम् "पञ्चदश सामधेनीरन्वाह" इत्यनेन विधानादिति नायमभ्यासो निरर्थको येन दोषः स्यात् किं त्वनुवादोयमित्यर्थः। पञ्चदशत्वस्य शत्रुबाधकत्वेन सार्थक्ये प्रमाणमाह– इदमिति, भ्रातृव्यम्= शत्रुम्. पञ्चदशऋग्लक्षणा अरा यस्य तत् पञ्चदशारं तेन वाग्वज्रेण= वाक्यलक्षणवज्रेण सामधेन्यात्मकेन बाधे इत्यन्वयः तमितिशेषः। पञ्चदशसामधेनीलक्षणं वज्रमुक्तमन्त्रोऽभिवदति= स्तौति तत्= सामधेनीनां पञ्चदशत्वमभ्यासं विना न संभवति– एकादशत्वादिति "त्रिः प्रथमाम्" इत्यभ्यासः सार्थकत्वान्न पुनरुक्तदोष इति नाऽप्रामाण्यापत्तिरित्यर्थः ॥ ६० ॥

नन्वनुवादत्वेपि कथं सार्थक्यं स्याद् येन प्रामाण्यं स्यादित्याशङ्क्य सूत्रकारोऽनुवादस्य सार्थक्यमाह– वाक्येति, वाक्यविभागस्य= वाक्यविशेषस्य= अनुवादस्य अर्थग्रहणात्= सप्रयोजनत्वात् सार्थक्यं तेन च प्रामाण्यमिति सूत्रार्थः, अत्र– "वाक्यविभागस्य= अनुवादत्वेन विभक्तवाक्यस्य अर्थग्रहणात्= प्रयोजनस्वीकारात् शिष्टैरिति शेषः" इतिविश्वनाथभट्टाः। व्याचष्टे– प्रमाणमिति, विध्यनुवादादीनां वाक्यविभागानां सार्थकत्वात् शब्दः= वेदवाक्यं सर्वमेव प्रमाणं यथा लोके= लौकिकवाक्यवदिति वेदवाक्यानां प्रामाण्यं सिद्धमित्यर्थः। अत्र= "समस्तानि वेदवाक्यानि पक्षीकृत्याभिधीयते– प्रमाणं वेदवाक्यानि अर्थविभागवत्त्वाद् मन्वादिवाक्यवत्" इति वार्तिकम् ॥ ६१ ॥

विभागश्च ब्राह्मणवाक्यानां त्रिविधः—

विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि- विधिवचनानि अर्थवादवचनानि अनुवादवचनानीति ॥ ६२ ॥

तत्र—

विधिर्विधायकः ॥ ६३ ॥

यद् वाक्यं विधायकम्= चोदकं स विधिः, विधिस्तु नियोगोऽनुज्ञा वा यथा- "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि ॥ ६३ ॥

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः संप्रत्ययार्था- स्तूयमानं श्रद्दधीतेति. प्रवर्तिका च- फलश्रवणात् प्रवर्तते- "सर्वजितो वै देवाः सर्वमजयन् सर्वस्याऽऽप्त्यै सर्वस्य जित्यै

---

अग्रिमसूत्रमवतारयति- विभागश्चेति, वेदस्य मन्त्रब्राह्मणभेदेन द्वौ भागौ तत्र ब्राह्मणभागस्य त्रैविध्यमुच्यते । विधीति- विधिवचनानि अर्थवादवचनानि अनुवादवचनानि चेत्येवं त्रिधा ब्राह्मणवाक्यानां विनियोगात्= समन्वयात् विभागाद्वा ब्राह्मणवाक्यानां त्रैविध्यं सिद्धं तत्र ब्राह्मणभागस्य सर्वस्यापि लौकिकवाक्यवत् प्रामाण्ये सिद्धे तद्घटकानामनुवादवाक्यानामपि प्रामाण्यं प्राप्तमिति न "त्रिः प्रथमाम्" इत्यादिवाक्यानामप्रामाण्यापत्तिरिति सूत्रार्थः । व्याचष्टे- त्रिधेति, विनियुक्तानि= विभक्तानि, त्रैविध्यमाह- विधीति ॥ ६२ ॥

तत्र विधिलक्षणसूत्रमवतारयति- तत्रेति । विधिरिति- विधायकं वाक्यं विधिरित्युच्यते यथा "स्वर्गकामो यजेत" इति वाक्यं यागविधायकत्वाद् विधिवाक्यमिति सूत्रार्थः । व्याचष्टे- यदिति । विधायकपदस्यार्थमाह- चोदकमिति. प्रवर्तकमित्यर्थः । विधिस्वरूपमाह- विधिरिति, नियोगः= विधानम्= अप्रवृत्तस्य प्रवर्तनम्, प्रवृत्तस्य प्रवर्तनमनुज्ञा, अत्र- "यद्वाक्यं विधत्ते- 'इदं कुर्यात्' इति स नियोगः, अनुज्ञा तु यत्कर्तारमनुजानाति तदनुज्ञावाक्यम् यथाग्निहोत्रवाक्यमेवैतत् साधनावाप्तिप्रवृत्तिपूर्वकत्वमनुजानाति" इति वार्तिकम्, अग्निहोत्रसाधनं यद् द्रव्यादि तदऽवाप्तौ प्रवृत्तिपूर्वकत्वममग्निहोत्रस्यानुजानाति- अग्निहोत्रसाधनं विनाग्निहोत्रासंभवात् तदर्थं द्रव्योपार्जनादौ प्रवृत्तस्य प्रवृत्तिमनुजानाति= स्वीकरोतीत्यर्थः । अत्र- "यदेतत् "अग्निहोत्रं जुहुयात् स्वर्गकामः" इतिवाक्यम् अप्रवृत्तप्रवर्तकलक्षणं कर्त्रपेक्षितोपायतां ज्ञापयद् विधिस्तदेव तत्साधनद्रव्याद्यवाप्तिप्रवृत्तिमनुजानाति" "तस्मात् तदेवाग्निहोत्रादिवाक्यमप्राप्तेऽग्निहोत्रादौ विधिः अन्यतः प्राप्ते तत्साधनेऽनुज्ञेति सिद्धम्" इति च तात्पर्यटीका, तत्साधनोपार्जने इत्यर्थः । विधिवाक्यमुदाहरति— यथेति ॥ ६३ ॥

अर्थवादं चतुर्धा विभजते- स्तुतिरिति, इत्येवं चतुर्विधोऽर्थवाद इत्यन्वयः । परस्परविरोधबोधकं वाक्यं परकृतिः इतिहासवाक्यं पुराकल्पः स्पष्टमन्यदितिसूत्रार्थः । व्याचष्टे- विधेरिति । फलवादलक्षणा= फलस्यार्थवादरूपा, स्तुतिप्रयोजनमाह- संप्रत्ययार्थेति, विधौ= यागादौ स्तूयमाने विश्वासोत्पादनार्थेत्यर्थः, अत्र हेतुमाह- स्तूयमानमिति, स्तूयमाने यागादौ तादृशस्तुत्या श्रद्धा जायते इति स्तुतिः संप्रत्ययार्था । स्तुतेः प्रवर्तकत्वमप्याह- प्रवर्तिकेति, प्रवर्तकत्वे हेतुमाह- फलश्रवणादिति, फलातिशयबोधनं च स्तुतिरिति फलश्रवणं स्तुतिश्रवणमेव तथा च फलश्रवणस्य प्रवर्तकत्वे स्तुतेः प्रवर्तकत्वं सिद्धमित्यर्थः । अत्र स्तुत्यर्थवादवाक्यमुदाहरति- सर्वेति, प्रकृतो यागः सर्वस्य जित्यै= जयाय भवति

सर्वमेव तेनाप्नोति सर्वं जयति" इत्येवमादि। अनिष्टफलवादो निन्दा वर्जनार्था- निन्दितं न समाचरेदिति "स एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनाऽनिष्ट्वाऽन्येन यजते गर्ते पतति= अयमेवैतद् जीर्यते वा प्रमीयते वा" इत्येवमादि।

अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः- "हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति 'अग्नेः प्राणाः पृषदाज्यं स्तोमम्' इत्येवमभिदधति" इत्येवमादि। ऐतिह्यसमाचरितो विधिः पुराकल्प इति- "तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममऽस्तौपन्- योने यज्ञं प्रतनवामहे" इत्येवमादि। कथं परकृति-पुराकल्पौ अर्थवादाविति?, स्तुतिनिन्दावाक्येनाभिसंबन्धाद् विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति ॥ ६४ ॥

## विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

अनेनैव देवाः सर्वमजयन् तेन= अनेन प्रकृतेन यागेनेत्यर्थः, तथा चैतद्वाक्यं स्तुत्या स्तूयमाने प्रकृते यागे श्रद्धां च प्रवृत्तिं चोत्पादयतीति स्तुतिवाक्यमित्यर्थः। निन्दास्वरूपमाह- अनिष्टेति, अनिष्टफल-कथनं निन्दा, निन्दाप्रयोजनमाह- वर्जनार्थेति, निन्दिते प्रवृत्तिवर्जनार्थेत्यर्थस्तदाह- निन्दितमिति। निन्दावाक्यमाह- स एष इति, सर्वेषां यज्ञानां मध्ये प्रथमो यज्ञो ज्योतिष्टोम एवेति सोमप्रधानयज्ञेषु प्रथमं ज्योतिष्टोम एव कर्तव्यः, यस्तुपुरुष एतेन ज्योतिष्टोमेनानिष्ट्वा= ज्योतिष्टोममकृत्वा अन्येन यागेन यजते स पतति, पतनपदार्थमाह- अयमिति, जीर्यते= विनश्यति. प्रमीयते= अपम्रियते, तदनेन सोम-प्रधानयागेषु प्रथमं ज्योतिष्टोमातिरिक्तयागे प्रवृत्तिर्निन्दितेति न कर्तव्येत्यर्थः, तदेतत् पूर्वमीमांसायाः पञ्चमाध्यायतृतीयपादचतुर्दशाधिकरणे द्रष्टव्यम्।

परकृतिस्वरूपमाह- अन्येति, व्याहतस्य= विरुद्धस्य, कर्तृभेदेन विरुद्धस्य विधेर्वादः= कथनं परकृतिरित्यर्थः, उदाहरति- हुत्वेति, होमानन्तरं वपामभिघारयन्ति तदनन्तरं पृषदाज्यम्, चरकाध्वर्य-वस्तु पृषदाज्यमेवाग्रेऽभिघारयन्ति. पृषदाज्यस्य प्रथमाभिघारणे प्रमाणमाहुः- अग्नेरिति, यतोऽग्नेः पृष-दाज्यं प्राणा अतस्तस्य प्रथममभिघारणमिति श्रुत्यर्थः, वपा= पशोर्हृदयस्य मेदः, अभिघारणम्= घृते-नाभिषेचनम्, पृषदाज्यम्= दधियुक्तमाज्यं होमार्थम्, चरकाध्वर्यवः= वैदिकविशेषाः, अत्रैकेषां प्रथमं वपाभिघारणमुक्तं तद्विरुद्धं च चरकाध्वर्यूणां प्रथमं पृषदाज्याभिघारणमिति परस्परविरुद्धविधेः कथनात परकृतिरित्याशयः। पुराकल्पस्वरूपमाह- ऐतिह्येति, ऐतिह्यसमाचरितः= इतिहाससदृशो विधिः पुरा-कल्पः= भूतार्थवाद इत्यर्थः, उदाहरति- तस्माद्वेति, "योने यज्ञम्" इत्यादिमन्त्रसमुदायात्मकं बहि-ष्पवमाननामकं सामस्तोममस्तौपन इति श्रुत्यर्थः, अत्र "अस्तौपन्" इति भूतार्थकथनात् पुराकल्पत्वं विज्ञेयम्। स्तावकं निन्दकं वा वाक्यमर्थवाद इत्युच्यते तत्र स्तुतिनिन्दारहितयोः परकृति पुराकल्पयो-रर्थवादत्वकारणं जिज्ञासते- कथमिति। उत्तरमाह- स्तुतीति, स्तुतिवाक्येन निन्दावाक्येन वा संब-न्धाद् विध्याश्रयस्य= विधिप्रतिपाद्यस्य विधेयसंबद्धस्य वा कस्यचिदर्थस्य द्योतनादेव परकृतिपुराकल्प-योरर्थवादत्वं विज्ञेयम्, यथा पूर्वत्र वपापृषदाज्ययोरभिघारणस्य वैदिकसमुदायभेदेन प्राथम्यमुच्यते, परत्र च बहिष्पवमानसामगानमुच्यते, हविषामभिघारणं सामगानं च विहितमेवेति पूर्वमीमांसायां प्रसिद्धमेव तदाश्रितावेतौ परकृतिपुराकल्पावित्यर्थवादरूपावित्यर्थः। पूर्वमीमांसायामप्युक्तम्- "परेण महता पुरुषेणेदं कर्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिर्यथा- "अग्निर्वा अकामयत्" इति, पर-प्रवक्तृकार्थादिप्रतिपादकः पुराकल्पः" इति ॥ ६४ ॥

उद्दिष्टस्यानुवादस्य स्वरूपमाह- विधीति, विधिविहितस्य पदार्थस्य अनुवचनम्= विधानानन्तरं किंचित्प्रयोजनाय कथनमनुवाद इत्युच्यते यथा-"दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत" इतिविधिवा-

विध्यनुवचनं चानुवादो विहितानुवचनं च, पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः, यथा पुनरुक्तं द्विविधम् एवमनुवादोपि। किमर्थं पुनर्विहितमनूद्यते ?, अधिकारार्थम्= विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा विधिशेषो वाऽभिधियते, विहितानन्तरार्थोऽपि चानुवादो भवति, एवमन्यदप्युत्प्रेक्षणीयम्।

लोकेपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्– 'ओदनं पचेत्' इति विधिवाक्यम्, अर्थवादवाक्यम्– 'आयुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम्', अनुवादः– 'पचतु पचतु भवान्' इत्यभ्यासः, 'क्षिप्रं पच्यताम्' इति वा 'अङ्ग पच्यताम्' इति (वा) अध्येषणार्थम्, 'पच्यतामेव' इति चावधारणार्थम्। यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वम् एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति ॥ ६५ ॥

---

क्येन विहितस्य दर्शयागस्य पौर्णमासयागस्य च– "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते" इत्यनुवादः अनेन हि षट्सु यागेषु मध्ये आग्नेयाग्नीषोमीयोपांशुयाजानां पौर्णमासीकालः अग्नेयैन्द्राग्नोपांशुयाजानां चामावास्याकालः प्रतिपाद्यते अन्यत् पूर्वमीमांसायां द्रष्टव्यमिति सूत्रार्थः। व्याचष्टे– विधीति, विधेरनुवचनं विहितस्यानुवचनं चेतिद्विविधोऽनुवादो भवति तत्र पूर्वः= विध्यनुवचनं शब्दानुवादः, अपरः= विहितानुवचनमर्थानुवादः यथा पुनरुक्तं द्विविधं भवति तत्र 'अनित्यः अनित्यः' इति शब्दपुनरुक्तं 'अनित्यो विनाशी' इत्यर्थपुनरुक्तं तथानुवादोपि द्विविध इत्यर्थस्तत्र विध्यनुवचनं यथा– "य एवं विद्वान्" इत्युदाहृतमत्र "दर्शपौर्णमासाभ्यां जयेत" इतिविधेः शब्दानुवाद एव, विहितानुवचनं यथा– "अग्निहोत्रं जुहोति" इतिविहितस्याग्निहोत्रस्य दधिकरणकत्वविधानाय– "दध्ना जुहोति" इत्यनुवाद इतितात्पर्यटीकाभिप्रायः। विहितानुवादस्य प्रयोजनं जिज्ञासते– किमर्थमिति। उत्तरमाह– अधिकारार्थमिति, उक्तं व्याचष्टे–विहितमिति विहितस्य यागादेः स्तुतिबोधनार्थं किं वा वेदविरुद्धत्वे निन्दाबोधनार्थं किं वा विधि शेषभूतगुणबोधनार्थमनुवादः क्रियते तत्र स्तुतिबोधनार्थं यथा– "य एवं विद्वान्" इत्यादि– स्तुतिबोधनात् यथा च "सर्वजितः" इत्याद्युदाहृतम्, निन्दाबोधनार्थं यथा– "स एष वा व प्रथमो यज्ञः" इत्याद्युदाहृतम्, विधिशेषबोधनार्थं यथा– "दध्ना जुहोति" इति विधिशेषस्य दधिद्रव्यस्य विधानाय– द्रव्यं विना होमासंभवादत्र दधि विधिशेषः। अनुवादस्य प्रयोजनान्तरमाह– विहितानन्तरेति, विहितयोरनन्तरार्थः= आनन्तर्यार्थः= आनन्तर्यबोधनायेत्यर्थः, अत्र– "यथा सोमो विहितो दर्शपौर्णमासौ च तयोरानन्तर्यं विधातुमुभयानुवादः– "दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति" इति तात्पर्यटीका, "सोमेन यजेत" सोमयागविधानम् "दर्शपौर्णमासाभ्याम्" इति दर्शपौर्णमासविधानम्। उपसंहरति– एवमिति, अन्यत्= अनुवादप्रयोजनम्, यथा मीमांसातृतीयाध्यायान्ते– "तरसाः सवनीयाः पुरोडाशा भवन्ति" इति सवनीयपुरोडाशानुवादः सवनीयपुरोडाशेष्वेव तरसत्वस्य= मांसमयत्वस्य नियमार्थः, इत्यादि स्वयमेव विभावनीयमित्यर्थः।

लौकिकवाक्यानामपि विध्यर्थवादानुवादभेदेन त्रैविध्यमाह– लोकेपीति। लौकिकं विधिवाक्यमाह– ओदनमिति। अर्थवादवाक्यमाह–आयुरिति, प्रतिभानम्= प्रतिभा, पचनीयान्नस्य प्रशंसाबोधकत्वादर्थवादः, आयुरादीनामन्नाश्रितत्वकथनं चान्नप्रशंसैव। अनुवादवाक्यमाह–पचतु इति, अभ्यासः= पुनरुक्तिः, 'पचतु पचतु' इत्यभ्यासेन विहितानुष्ठीयमानपाकक्रियाया अनुवादः स्पष्ट एव। प्रार्थनापूर्वकप्रवर्तनायामनुवादवाक्यद्वयमाह– क्षिप्रमिति अङ्गेति च, अनेन पाके प्रार्थनया प्रवृत्तिर्बोध्यते, अध्येषणा= प्रार्थनया नियोजनम्। अङ्गेति संबोधनम्। नियमार्थमनुवादवाक्यामाह– पच्यतामेवेति, एवकारेण पाकावधारणं बोध्यते। पर्यवसितमाह– यथेति, यथा प्रदर्शितलौकिकवाक्यानां विभागेन विध्य-

## नानुवादपुनरुक्तयोर्विशेषः– शब्दाभ्यासोपपत्तेः ॥ ६६ ॥

'पुनरुक्तमसाधु साधुरनुवादः' इत्ययं विशेषो नोपपद्यते । कस्मात्?, उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते, चरितार्थस्य शब्दस्याऽभ्यासादुभयमसाध्विति ॥ ६६ ॥

## शीघ्रतरगमनोपदेशवदभ्यासान्नाऽविशेषः ॥ ६७ ॥

नानुवादपुनरुक्तयोरविशेषः । कस्मात्?, अर्थवतोऽभ्यासस्याऽनुवादभावात्, समानेऽभ्यासे पुनरुक्तम् अनर्थकम् अर्थवानभ्यासोऽनुवादः– शीघ्रतरगमनोपदेशवत् 'शीघ्रं शीघ्रं गम्यताम्' इति क्रियातिशयोऽभ्यासेनैवोच्यते, उदाहरणार्थं चेदम्, एवमन्योप्यभ्यासः– 'पचति पचति' इति क्रियानुपरमः, 'ग्रामो ग्रामो रमणीयः' इति व्याप्तिः, 'परि परि त्रिगर्तेभ्यो वृष्टो

---

नुवादादिलक्षणस्यार्थस्य ग्रहणाद् ग्राहकत्वाद्वा प्रामाण्यं तथा वैदिकवाक्यानामपि विभागेन विध्यनुवादादिलक्षणस्यार्थस्य ग्रहणाद् ग्राहकत्वाद्वा प्रामाण्यमुपपद्यते, तथा च "त्रिः प्रथमामन्वाह" इत्यादिवाक्यानामनुवादत्वं सिद्धम् अनुवादश्च सार्थकः सार्थकस्य च प्रामाण्यमावश्यकमिति प्रामाण्यं सिद्धमिति "अनुवादोपपत्तेश्च ६०" "वाक्यविभागस्य चार्थग्रहणात्" इति सूत्राभ्यामुपसंहार्यम् इत्यलम् ॥ ६५ ॥

अनुवादपुनरुक्तयोः पूर्वपक्षी विशेषाभावमाशङ्कते– नेति, अनुवादपुनरुक्तयोः परस्परं विशेषो नास्ति– उभयत्रापि शब्दाभ्यासस्य= पुनरुच्चारणस्योपपत्तेः= सत्त्वात् तथा च पुनरुक्तस्याऽप्रामाण्येऽनुवादस्याप्यप्रामाण्यं प्राप्तं तथा च "त्रिः प्रथमामन्वाह" इत्यादिवाक्यानां पुनरप्रामाण्यं प्राप्तमिति सूत्रार्थः । व्याचष्टे– पुनरिति, अयं च षष्टिसूत्रोक्तसिद्धान्तवाक्यस्यानुवादः । स्ववक्तव्यमाह– इत्ययमिति, अनुवादपुनरुक्तयोः साधुत्वासाधुत्वाभ्यां विशेषो नोपपद्यते । विशेषाभावकारणं जिज्ञासते– कस्मादिति । पूर्वपक्ष्युत्तरमाह– उभयत्रेति, उभयत्र= पुनरुक्तानुवादयोर्ज्ञातार्थः शब्दः पुनरुच्चार्यते चरितार्थस्य= ज्ञातार्थस्य शब्दस्योभयत्राऽभ्यासादुभयमेवाऽसाधु= अप्रमाणं तथा च पुनरुक्तवदनुवादस्याप्यप्रामाण्ये प्राप्ते "त्रिः प्रथमाम्" इत्यादिवाक्यानामप्राण्यं प्राप्तमित्यर्थः ॥ ६६ ॥

उक्तपूर्वपक्षं प्रत्याचष्टे– शीघ्रेति, अभ्यासात्= पुनरुच्चारणमात्रसाम्यात् किं वा अभ्यासात्= पुनरुक्तादनुवादस्याविशेषो नास्ति किं त्वस्ति विशेषः किं वा यथा 'गम्यतां गम्यताम्' इत्यभ्यासात् शीघ्रतरगमनस्योपदेशो भवतीति सार्थक्यात् प्रामाण्यं तथानुवादेपि ज्ञातार्थशब्दाभ्यासस्यापि सार्थक्यात् प्रामाण्यं भवति पुनरुक्तं च न सार्थकमिति न प्रमाणमिति न पुनरुक्तानुवादयोरविशेष इतिसूत्रार्थः । व्याचष्टे– नेति । पुनरुक्तानुवादयोर्विशेषस्य कारणं जिज्ञासते– कस्मादिति । उत्तरमाह– अर्थवत इति, सार्थकस्याभ्यासस्य अनुवादभावात्= अनुवादत्वस्वीकारात्, पुनरुक्तानुवादयोर्विशेषोपपादनार्थं पुनरुक्तस्वरूपमाह– समाने इति, समाने= पूर्वोक्तापेक्षया समाने अनर्थके इति यावत्– पूर्वोक्तापेक्षया विशेषाभावेन साम्ये आनर्थक्यस्य स्पष्टत्वात्, सति सप्तमी । अनुवादस्वरूपमाह– अर्थवानिति, अर्थवत्त्वादेव च प्रामाण्यमनुवादस्य सिद्धम् । किं वा पुनरुक्तानुवादयोः शब्दाभ्यासे समानेपि पुनरुक्तमनर्थकम् अनुवादस्तु अर्थवान्= सार्थक इति प्रमाणमेवेत्यर्थः । अत्र दृष्टान्तमाह– शीघ्रेति, उदाहरति– शीघ्रमिति, यथा 'शीघ्रं शीघ्रं गम्यताम्' इत्यत्र शीघ्रपदाभ्यासेन शीघ्रतरगमनस्योपदेशो जायते इति सार्थक्यं प्रामाण्यं च, क्रियातिशयः= शीघ्रगमनम् । उक्तं संक्षेपं सूचयति– उदाहरणार्थमिति । उक्तमन्यत्रातिदिशति– एवमिति । उदाहरति– पचतीति, क्रियानुपरमः= पाकक्रियासातत्यम् 'पचति पचति' इत्यभ्यासेनैवोच्यते, 'ग्रामो ग्रामो रमणीयः' इत्यत्र देशे रमणीयत्वव्याप्तिरभ्यासेनैवोच्यते,

देवः' इति परिवर्जनम्, 'अध्यऽधिकुण्डं निषण्णम्, इति सामीप्यम्, 'तिक्तं तिक्तम्' इति प्रकारः, एवमनुवादस्य स्तुतिनिन्दाशेषविधिपु अधिकारार्थता विहितानन्तरार्थता चेति ॥६७॥

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति?. न, अतश्च—

## मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्— आप्तप्रामाण्यात् ॥ ६८ ॥

किं पुनरायुर्वेदस्य प्रामाण्यम्?, यत्तदायुर्वेदेनोपदिश्यते– 'इदं कृत्वेष्टमधिगच्छति इदं वर्जयित्वाऽनिष्टं जहाति' (इति) तस्यानुष्ठीयमानस्य तथाभावः= सत्यार्थता= अविपर्ययः, मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभावः. एतत् प्रामाण्यम्। किंकृतमेतत्?, आप्तप्रामाण्यकृतम्। किंपुनराप्तानां प्रामाण्यम्?, साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति= आप्ताः खलु साक्षात्कृतधर्माणः 'इदं हातव्यम् इदमस्य हानिहेतुः. इद-

'परि परि' इत्यत्र वृष्टेस्त्रिगर्तदेशपरिवर्जनमभ्यासेनैवोच्यते, 'अध्यधिकुण्डम्' इत्यत्र कुण्डसामीप्यमभ्यासेनैवोच्यते अत्र "नित्यवीप्सयोः" "उपर्यध्यधसः" इत्यादिसूत्रेणाऽध्यादिशब्दानां द्विरुक्तिरिति व्याकरणे द्रष्टव्यम्, 'तिक्तं तिक्तम्' इत्यत्र तिक्तत्वं प्रकारोऽभ्यासेनैवोच्यते इत्यन्वयस्तथा चैतादृशार्थबोधकत्वादत्राभ्यासः सार्थक एव तदेतद्व्याकरणस्य द्विरुक्तिप्रकरणे द्रष्टव्यम्। प्रकृतमाह– एवमिति, एवम्= उक्ताभ्यासानां सार्थक्यवत्, अनुवादस्य स्तुत्यादिष्वधिकारार्थत्वाद् विहितानन्तरार्थत्वाच्च सार्थक्यं सार्थक्याच्च प्रामाण्यमिति नानुवादपुनरुक्तयोरविशेषो येनानुवादस्याप्रामाण्यं स्यादित्यर्थः। अन्यत् "विधिविहितस्य" इतिसूत्रभाष्ये स्पष्टम्। स्तुतिनिन्दाशेषविधिपु= स्तुतिनिन्दाविधिशेषार्थस्यानुवादस्येत्येवं वा व्याख्येयम् ॥ ६७ ॥

अग्रिमसूत्रमवतारयति– किमिति, आक्षेपवाक्यमिदं न सिध्यतीत्यर्थः, शब्दप्रामाण्यस्य ये प्रतिषेधहेतवोऽनृतत्वादिदोषा उक्ता तेषामुद्धारात्= निरासात् शब्दस्याऽप्रामाण्यं निवर्तितुमर्हति न तु प्रामाण्यं प्राप्तुमपि अतः शब्दप्रामाण्यसाधनाय सूत्रेण प्रमाणमाहेत्यर्थः। मन्त्रेति– तत्= तस्य शब्दस्य वेदवाक्यस्य प्रामाण्यं सिद्धम्– आप्तप्रामाण्यात्= वाक्योपदेशकानामाप्तानां प्रामाण्यात् मन्त्रायुर्वेदप्रामाण्यवदिति सूत्रान्वयः, पुरुषस्य प्रामाण्ये तदुपदिष्टवाक्यस्य प्रामाण्यं लोकप्रसिद्धमेव. किं वा वेदवाक्यं प्रमाणम् आप्तप्रामाण्याद् मन्त्रायुर्वेदवाक्यवदित्येवमनुमानं कर्तव्यं आप्तप्रामाण्यं च पक्षभूते वाक्ये आप्तकर्तृकत्वसंबन्धेन संभवति। व्याचष्टे– किमिति, वेदप्रामाण्यं ह्येवं मन्त्रायुर्वेदप्रामाण्याधीनं जातमिति किमित्यादिनाऽऽयुर्वेदप्रामाण्यकारणं पृष्टम्। उत्तरमाह– यदिति, इदम्= औषधसेवनं कृत्वा. इदम्= अपथ्यं वर्जयित्वा= परित्यज्य, तस्य= उक्तोपदेशस्य. तथाभावः= इष्टजनकत्वम् अनिष्टनिवर्तकत्वं च यत् तदेव प्रामाण्यम्= प्रामाण्यकारणमित्यन्वयः, तथाभावं व्याचष्टे– सत्यार्थतेति, सत्यार्थतामपि व्याचष्टे– अविपर्यय इति फलाऽविसंवादः= फलोपलब्धिरित्यर्थः, सर्वत्रैव फलोपलब्धेः प्रामाण्यकारणत्वात्। मन्त्राणां प्रामाण्यकारणमाह– विषेति, 'विषं हर हर' 'भूतबाधां हर हर' इत्यादीनां मन्त्रपदानाम्= मन्त्रवाक्यानां विषादिप्रतिषेधार्थानां मन्त्रशास्त्रोक्तरीत्या प्रयोगे कृतेऽर्थस्य= मन्त्रवाक्यार्थस्य तथाभावः= सत्यता= विषनिवृत्यादेरुपलब्धिरेव मन्त्रप्रामाण्यकारणमित्यन्वयः, अशनिपदं शस्त्रास्त्रपरं विज्ञेयम्। उपसंहरति– एतदिति, उक्तमेव प्रामाण्यम्= प्रामाण्यकारणम्। उक्तप्रामाण्यस्य कारणं। जिज्ञासते– किमिति। उत्तरमाह– आप्तेति, आप्तप्रामाण्यकृतं मन्त्रादिप्रामाण्यमित्यर्थः। आप्तप्रामाण्यस्य कारणं स्वरूपं वा जिज्ञासते– किंपुनरिति। उत्तरमाह– साक्षादिति, साक्षात्कृतः= प्रत्यक्षेण दृष्टः पदार्थधर्मो येन स साक्षात्कृतधर्मस्तस्य भावः साक्षात्कृतधर्मता भूतदया= जीवेषु दया यथाभूतार्थस्य= यथार्थस्य चिख्यापयिषा= उपदेशेच्छा इति त्रयमेवाप्तानां प्रामाण्यस्य कारणं तच्च त्रितयं ऋष्यादिषु संभवत्येव। उक्तमाप्तेषु समन्वेति– आप्ता इत्यादिना, इदम्= दुःखम, अस्य= दुःखस्य हानहेतुरिदम्=

मस्याधिगतव्यम् इदमस्याधिगमहेतुः' इति भूतान्यनुकम्पन्ते, तेषां खलु वै प्राणभृतां स्वयमनवबुद्ध्यमानानां नान्यदुपदेशाद् अवबोधकारणमस्ति, न चाऽनवबोधे समीहा वर्जनं वा, न चाऽकृत्वा स्वस्तिभावः, नाप्यऽस्यान्य उपकारकोप्यस्ति, हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः ते इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्ति अधिगन्तव्यमेवाऽधिगमिष्यन्तीति एवमाप्तोपदेशः एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति. एवमाप्तोपदेशः प्रमाणम्, एवमाप्ताः प्रमाणम् ।

दृष्टार्थेनाप्तोपदेशेनाऽऽयुर्वेदेनाऽदृष्टार्थो वेदभागोऽनुमातव्यः– प्रमाणमिति– आप्तप्रामाण्यस्य हेतोः समानत्वादिति । अस्यापि चैकदेशः– "ग्रामकामो यजेत" इत्येवमादिर्दृष्टार्थस्तेनानुमातव्यमिति ।

लोके च भूयानुपदेशाश्रयो व्यवहारः, लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम् तत्परिग्रहादाप्तोपदेशः प्रमाणमिति । द्रष्टृप्रव-

---

दुःखप्रदपदार्थवर्जनम्, इदं सुखं अस्य= जीवस्य, अधिगन्तव्यम्= प्राप्यं सुखप्रदपदार्थार्जनं च सुखप्राप्तिहेतुरित्यन्वयः, इति= इत्येवमाप्ता विचार्य भूतानि अनुकम्पन्ते= स्वोपदेशेनानुगृह्णन्ति । एतादृशानुग्रहस्य कारणमाह– तेषामिति, तेषाम्= उपदेष्टव्यानां जीवानाम्, उपदेशं विना बोधकारणं नास्तीत्याप्ता उपदिशन्तीत्यर्थः । बोधावश्यकतामाह– न चेति, समीहा= इष्टसाधनेषु प्रवृत्तिः, वर्जनम्= अनिष्टसाधनाद् निवृत्तिः । प्रवृत्तिनिवृत्त्योरावश्यकतामाह– न चेति, अकृत्वा= उक्तप्रवृत्तिनिवृत्तिभ्यां विना, स्वस्तिभावः= सुखं दुःखनिवृत्तिश्च न संभवतीत्यर्थः । नापीति– अस्य= जीवस्य, अन्यः= उपदेशातिरिक्तो वाऽऽप्तातिरिक्तो वा । पुनराप्तविचारमाह– हन्तेति, हन्तपदमत्रानुकम्पायाम् । वयमाप्ताः, एभ्यः= जीवेभ्यः, यथादर्शनम्= स्वप्रत्यक्षानुसारेण, यथाभूतम्= पदार्थस्वरूपानुसारेण= यथार्थम्, ते इमे= जीवाः, प्रतिपद्यमानाः= श्रुतार्थबोधेन, हेयम्= दुःखादिकम्, अधिगन्तव्यम्= प्राप्यं सुखादिकम् । उपसंहरति– एवमिति, एतेन त्रिविधेन= साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषा च इत्यनेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतः= प्रमाणीभूतः ज्ञातो वा अनुष्ठीयमानः= सेव्यमान औषधादिरुपदेशो वार्थस्य= स्वेष्टस्यारोग्यादेः साधको भवति एवम्= तथा च फलोपलब्ध्या आप्तोपदेशः प्रमाणं भवति एवम्= ततश्च यथार्थोपदेशकत्वादाप्ताः प्रमाणम्= आप्तानां प्रामाण्यं सिद्धमित्यन्वयः ।

प्रकृतमाह– दृष्टार्थेति, दृष्टार्थेनायुर्वेदलक्षणेनाप्तोपदेशेनादृष्टार्थो वेदभागः 'प्रमाणम्' इत्यनुमातव्यः इत्यन्वयः, आयुर्वेदस्य दृष्टारोग्याद्यर्थत्वं स्पष्टमेव. वेदस्य च स्वर्गाद्यदृष्टार्थोपदेशकत्वेनादृष्टार्थत्वम् । उक्ते हेतुमाह– आप्तेति, आप्तप्रामाण्यलक्षणहेतोरुभयत्र समानत्वात् किं वायुर्वेदे इव वेदेपि सत्त्वादित्यर्थस्तथा च 'वेदः प्रमाणम् आप्तप्रामाण्याद् आयुर्वेदवत्' इत्यनुमानप्रयोगः । पक्षान्तरमाह– अस्येति, अस्य वेदस्यापि "ग्रामकामः" इत्याद्येकदेशो दृष्टार्थः– फलस्य ग्रामस्यानेन शरीरेणापि लब्धुं शक्यत्वात् कृतायां च ग्रामकामेष्टौ ग्राम इष्टिकर्तृभिरुपलब्ध इति "ग्रामकामः" इति वाक्यस्य प्रामाण्यं सिद्धमिति तेन= दृष्टार्थेन वेदभागेनादृष्टार्थस्य वेदभागस्य प्रामाण्यमनुमातव्यम्– अदृष्टार्थो वेदभागः प्रमाणं वेदत्वाद् दृष्टार्थवेदभागवद् इत्यन्वयः । न्यायनये वेदस्येश्वरनिर्मितत्वादीश्वरस्य चाप्तत्वादित्याप्तप्रामाण्यात्= आप्तनिर्मितत्वाद्वेदस्य प्रामाण्यमित्यनुसंधेयम् ।

त्रिविधं हि वाक्यम्– वेदवाक्यं शास्त्रवाक्यं लौकिकवाक्यं चेति, लौकिकवाक्येष्वपि प्रामाण्यकारणम् उक्तं भूतदयादित्रितयमेवेत्याह– लोकेति, लोके च भूयान् व्यवहार उपदेशाश्रयः= उपदेशाधीन एवेति तादृशव्यवहारप्रयोजकत्वाल्लौकिकवाक्यानां प्रामाण्यं प्राप्नोति तच्चोपदेष्टृप्रामाण्याधीनम्,

कृसामान्याच्चानुमानम्- ये एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च ते एवायुर्वेदप्रभृतीनाम् इत्यायुर्वेदप्रामाण्यवद् वेदप्रामाण्यमनुमातव्यमिति ।

नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे "तत्प्रामाण्यमाप्तप्रामाण्यात्" इत्ययुक्तम् । शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्, नित्यत्वे हि सर्वस्य सर्वेण वचनात् शब्दार्थव्यवस्थानुपपत्तिः । नाऽनित्यत्वे वाचकत्वमितिचेत्? न- लौकिकेष्वर्थदर्शनात् । तेपि नित्या इति-चेत्? न- अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः- नित्यत्वाद्धि शब्दः प्रमाणमिति । अनित्यः स इति चेत्? अविशेषवचनम्= अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति ।

---

लौकिकोपदेष्टुरपि च प्रामाण्यम् उपदेष्टव्यार्थज्ञानादित्रितयेनैव भवति, उपदेष्टव्यार्थज्ञानेन= साक्षात्कृतधर्मतया. तत्परिग्रहात्= उक्तत्रितयपरिज्ञानात्, आप्तवृत्तिभूतदयादिपरिज्ञानेन तदुपदेशस्य प्रामाण्यं भवति, तथा च यदेव त्रितयं लौकिकवाक्यस्य प्रामाण्यकारणं तदेव वेदेप्यस्तीति सिद्धं वेदप्रामाण्यमित्यर्थः । किं वा तत्परिग्रहात्= आप्तस्योपदेष्टुः प्रामाण्यज्ञानादित्यर्थः । प्रकारान्तरमाह- द्रष्ट्रीति, ये एवाप्ता मन्वादय आयुर्वेदप्रभृतीनां दृष्टार्थानां द्रष्टारः प्रवक्तारश्च ते एव वेदार्थानां द्रष्टारः वेदवाक्यानां च प्रवक्तार इति आयुर्वेदप्रामाण्यवद् वेदप्रामाण्यमनुमातव्यम्- वेदवाक्यं प्रमाणं मन्वाद्याप्तोपदिष्टत्वाद् आयुर्वेदादिवत् इत्येवं द्रष्टृप्रवक्त्रोः सामान्यात्= साम्यात्= ऐक्यादप्यनुमानमित्यन्वयः, अन्यथाऽऽयुर्वेदादेरपि प्रामाण्यं न स्यादिति वेदाप्रामाण्ये बाधकतर्कोनुसंधेय इत्यर्थः ।

वेदवाक्यानां प्रामाण्यं नित्यत्वादेवास्ति नत्वाप्तप्रामाण्याद् वेदनिर्मातुराप्तस्याभावादिति 'वेदप्रामाण्यमाप्तप्रामाण्यात्' इति यदुक्तं सूत्रेण तन्न युक्तमित्याशङ्कते- नित्यत्वादिति। उक्तं निराकरोति- शब्दस्येति, शब्दस्य= वाक्यस्य अर्थप्रतिपत्तौ= स्वार्थबोधनिरूपितं यत् प्रामाण्यं तद्वाचकत्वादेव= बोधकत्वादेव भवति न तु नित्यत्वात्. वाचकत्वेन प्रामाण्यं चाप्तप्रामाण्याधीनमेव- उपदेष्टृभूताप्तस्य प्रामाण्ये एव यथार्थबोधकत्वसंभवादित्यर्थः। विपक्षे बाधकमाह- नित्यत्वे इति, यदि शब्दा नित्याः स्युस्तदा ततः पूर्वं संकेतकर्तुरभावापत्त्या सर्वेण शब्देन सर्वस्य पदार्थस्य वचनात्= बोधापत्त्या शब्दविशेषादर्थविशेषस्य प्रतीतिव्यवस्था नोपपद्येत. न चैतदिष्टम्, शब्दानामनित्यत्वे तु ततः पूर्वं संकेतकर्तृसंभवात् संकेतानुसारेण बोधकत्वात् शब्दार्थप्रतीतिव्यवस्थोपपद्यते इत्यर्थः । ननु वेदशब्दानामनित्यत्वे वाचकत्वमेव नोपपद्यते येन प्रामाण्यं स्यादित्याशङ्कते- नेति, अनित्यत्वे हि यस्य शब्दस्य संकेतो गृहीतः स तदानीमेव नष्टः यश्चेदानीं बोधयति तस्य तु संकेतो न गृहीत इत्यनित्यत्वे बोधकत्वानुपपत्तिरित्याशयः । परिहरति- नेति, लौकिकानामनित्यानामपि शब्दानामर्थदर्शनात्= अर्थबोधस्य जायमानत्वात् वाचकत्वमस्तीति अनित्यत्वेपि वाचकत्वमुपपद्यते इत्यर्थः । ननु ते= लौकिकाः शब्दा अपि नित्या एवेति न तत्रोक्तनियमस्य व्यभिचार इत्याशङ्कते- तेपीति । निराकरोति- नेति, यदि नित्यत्वादेव शब्दः प्रमाणं तदाऽनाप्तोपदेशस्यापि नित्यत्वेन प्रामाण्यं स्यादेव तथा चाऽनाप्तोपदेशस्यार्थविसंवादो न स्यात् भवति चार्थविसंवाद इति न नित्यत्वात् प्रामाण्यं किं त्वाप्तप्रामाण्यादिति युक्तं तथा चानाप्तोपदेशे आप्तप्रामाण्याभावादप्रामाण्यं तेन चार्थविसंवाद उपपद्यते इत्यर्थः । स्यादिति शेषः । नन्वऽनाप्तोपदेशः सोऽनित्य एवेति न तस्य प्रामाण्यापत्तिरित्याशङ्कते- अनित्य इति, शब्दानां नित्यत्वेपि लौकिकवाक्यस्याऽनित्यत्वादित्यर्थः । परिहरति- अविशेषेति, अत्र विशेषहेतुर्नोक्त इत्यर्थः, उक्तं स्वयमेव व्याचष्टे- अनाप्तेति, इति= इत्यत्र, लौकिक आप्तोपदेशो नित्यः अनाप्तोपदेशश्च न नित्यः इत्यत्र कारणम्= हेतुः वक्तव्यः न चोक्त इति नेयं व्यवस्थोपपद्यते इत्यर्थः । तथा च शब्दानां नित्यत्वे सर्वबोधापत्तिदोषादनित्यत्वमेव युक्तमित्याप्तप्रामाण्यादेव प्रामाण्यमिति सिद्धमित्यर्थः ।

यथानियोगं चार्थस्य प्रत्यायनाद् नामधेयशब्दानां लोके प्रामाण्यम्. नित्यत्वात् प्रामाण्यानुपपत्तिः= यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात् प्रत्यायको भवति न नित्यत्वात् । मन्वन्तरयुगान्तरेषु चाऽतीतानागतेषु संप्रदायाभ्यासप्रयोगाऽविच्छेद इति वेदानां नित्यत्वम्. आप्तप्रामाण्याच्च प्रामाण्यम्, लौकिकेषु शब्देषु चैतत् समानमिति ॥ ६८ ॥

॥ इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य प्रथममाह्निकम् ॥

---

उपसंहरति– यथेति, लोके नामधेयशब्दानाम्= लौकिकशब्दानां यथानियोगम्= संकेतानुसारेणैवार्थप्रत्यायनादेव प्रामाण्यमस्ति न तु नित्यत्वात्. नित्यत्वात् प्रामाण्येऽनाप्तोपदेशस्यापि नित्यत्वापत्त्या प्रामाण्यं स्यात् न चैतद् युक्तमित्यन्वयः । उक्तमेव विशदयति– यत्रेति, लोके नामधेयशब्दो यत्रार्थे आप्तैर्नियुज्यते= संकित्यते तादृशसंकेतसामर्थ्यात् तस्यार्थस्य प्रत्यायको भवति न तु नित्यत्वात् । वेदानां नित्यत्वस्य स्वरूपमाह– मन्वन्तरेति, अतीतानागतेषु मन्वन्तरेषु युगान्तरेषु च वैदिकसंप्रदायानुसारेण वेदवाक्यानां योऽभ्यासः= पुनःपुनरुच्चारणं वेदार्थभूतयागादीनां च यः प्रयोगस्तयोर्विच्छेदः= वैपरीत्यम् अभावो वा न भवतीत्येतावन्मात्रेण वेदानां नित्यत्वमुच्यते न तु शब्दानां नित्यत्वेन तथा चाप्तप्रामाण्यादेव प्रामाण्यमिति सिद्धं तत्र सर्गादौ परमेश्वरस्तदनन्तरं च ऋष्यादयो वेदवाक्यानुपदिशन्ति ते चाप्ताः प्रमाणभूताश्चेति तेषां प्रामाण्यादेव वेदवाक्यानामपि प्रामाण्यमिति सिद्धम्. यथा केनचित् स्वयं निर्माय वाक्यम् इदं वेदवक्यमित्युक्ते तस्यापि वेदवाक्यत्वनिर्धारणार्थमाप्तेषु प्रश्नो भवति तत्राप्तोपदेशेन तस्याऽवेदत्वं वेदस्य च वेदत्वमवधार्यते इत्याप्तप्रामाण्याधीनमेव प्रामाण्यमापततीति विज्ञेयम् । एतत्= आप्तप्रामाण्याधीनं प्रामाण्यं लौकिकेष्वपि शब्देष्वस्तीति उभयत्र समानमेव तथा चायुर्वेदप्रामाण्यवद् वेदवाक्यानामपि यदाप्तप्रामाण्यात् प्रामाण्यमित्युक्तं तत् सिद्धमिति नाऽप्रामाण्यं नापि नित्यत्वात् प्रामाण्यं किं त्वाप्तप्रामाण्यादेव प्रामाण्यमिति सिद्धमित्यर्थः ॥ ६८ ॥

॥ इति शब्दप्रमाणपरीक्षा समाप्ता ॥

॥ इति न्यायभाष्यप्रसन्नपदायां द्वितीयाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

अथ

## ॥ न्यायभाष्यद्वितीयाध्यायस्य द्वितीयमान्हिकम् ॥

अयथार्थः प्रमाणोद्देश इति मत्वाऽऽह—

**न चतुष्ट्वम्– ऐतिह्यार्थापत्तिसंभवाऽभावप्रामाण्यात् ॥ १ ॥**

न चत्वार्येव प्रमाणानि। किं तर्हि ?. ऐतिह्यमर्थापत्तिः संभवोऽभाव इत्येतान्यपि प्रमाणानि तानि कस्मान्नोक्तानि ?। 'इति होचुः' इत्यऽनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम् ऐतिह्यम्। अर्थादापत्तिः अर्थापत्तिः. आपत्तिः= प्राप्तिः= प्रसङ्गः, यत्राऽभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः यथा– 'मेघेष्वऽसत्सु वृष्टिर्न भवति' इति, किमत्र प्रसज्यते ? 'सत्सु भवति' इति। संभवो नाम अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणं यथा– द्रोणस्य सत्ताग्रहणा-

---

प्रमाणानां प्रामाण्यपरीक्षां समाप्य संप्रति तत्संख्याविवेचनार्थमत्रत्यवक्ष्यमाणविषयविवेचनार्थं च द्वितीयमाह्निकमारभते– अयथार्थ इत्यादिना। प्रमाणोद्देशः= "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि १–१–३" इत्यत्रोक्तः प्रमाणानां चतुष्ट्वनिर्देशः अयथार्थः= अयुक्तः– परैरभ्युपगतानामर्थापत्त्यादीनामपि प्रमाणत्वादिति मत्वा पूर्वपक्षी "न चतुष्ट्वम्" इत्यादिसूत्रमाहेत्यन्वयः। नेति– प्रमाणानां चतुष्ट्वम्= चतुःसंख्याविशिष्टत्वं नोपपद्यते– उक्तप्रत्यक्षाद्यतिरिक्तानाम् ऐतिह्यार्थापत्तिसंभवाऽभावाख्यानामपि प्रमाणानां प्रामाण्यादिति सूत्रान्वयः। उक्तप्रमाणचतुष्टयेन सहार्थापत्तिपर्यन्तं पञ्च प्रमाणानीति प्राभाकराः, अभावः= अनुपलब्धिस्तत्पर्यन्तं षट् प्रमाणानीति भाट्टाः, ऐतिह्यमपि प्रमाणान्तरमिति पौराणिकाः, संभवोपि प्रमाणान्तरमिति ज्योतिर्विदः, उदाहरणानि तु भाष्ये द्रष्टव्यानि। व्याचष्टे– नेति। प्रमाणसंख्यां जिज्ञासते– किमिति। पूर्वपक्षी उत्तरमाह– ऐतिह्यमिति, अभावः= अनुपलब्धिः। आक्षिपति– तानीति, तानि= ऐतिह्यादीनि। ऐतिह्यस्वरूपमाह– इतीति, 'इतिहोचुर्वृद्धा इति ऐतिह्यम्' इति "अनन्तावसथ" इत्यादिव्याकरणसूत्रे द्रष्टव्यम्, यथा 'इह वटे यक्षः' इति वृद्धवाक्याद् वटे यक्षसत्ता निश्चीयते तत्र प्रत्यक्षादीनां सामर्थ्याभावादैतिह्यमेव प्रमाणं तच्च प्रवादपारम्पर्यरूपमित्यर्थः, न निर्दिष्टः प्रवक्ता यस्य तद् अनिर्दिष्टप्रवक्तृकं वाक्यं यथा 'इह वटे यक्षः' इत्यस्य प्रथमः प्रवक्ता येन तत्र यक्षो दृष्टः स्यात् स न निर्देष्टुं शक्यते इत्यर्थः। अर्थापत्तिमाह– अर्थादिति। आपत्तिपदार्थमाह– प्राप्तिरिति, प्रसङ्ग इत्यर्थः, लक्षणमाह– यत्रेति, अर्थापत्तिः= अर्थापत्तिविषय इत्यर्थः, यत्र वाक्ये 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ दिवा भोजनाभावेपि अर्थे= पीनत्वेऽभिधीयमाने योऽन्योर्थः= रात्रिभोजनं प्रसज्यते= कल्प्यते सोऽर्थापत्तेर्विषय इति समन्वयः, पीनत्वं भोजनं विना न संभवति दिवा भोजनं चात्र प्रतिषिद्धमिति रात्रिभोजनं कल्प्यते इत्यनुसंधेयम्। उदाहरति– यथेति, अत्र प्रसज्यमानमर्थं पृच्छति– किमिति, उत्तरमाह– सत्स्विति, 'मेघेष्वऽसत्सु वृष्टिर्न भवति' इत्युक्ते 'मेघेषु सत्सु वृष्टिर्भवति' इत्यर्थादापद्यते– मेघं विना वृष्टेरसंभवादित्यर्थपतिरित्यर्थः। संभवाख्यप्रमाणस्य स्वरूपमाह– संभव इति, अविनाभाविनः= व्याप्यस्य पदार्थस्य सत्ताज्ञानादन्यस्य= व्यापकस्य सत्ताज्ञानं सत्ताग्रहकं वा यत्तत् संभवाख्यं प्रमाणमित्यन्वयः, उदाहरति– यथेति, प्रस्थापेक्षयाऽऽढकम् अधिकम् आढकापेक्षया द्रोणोऽधिकस्तदुक्तम्—

"पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाढकम्।
अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते ॥" इति,

दाढकस्य सत्ताग्रहणम्. आढकस्य ग्रहणात् प्रस्थस्येति । अभावः— विरोधी अभूतं भूतस्य. अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्— विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति ॥ १ ॥

सत्यम् एतानि प्रमाणानि न तु प्रमाणान्तराणि. प्रमाणान्तरं च मन्यमानेन प्रतिषेध उच्यते सोऽयम्—

## शब्द ऐतिह्यानर्थान्तरभावाद् अनुमानेऽर्थापत्तिसंभवा- ऽभावाऽनर्थान्तरभावाच्चाऽप्रतिषेधः ॥ २ ॥

तथा च यत्र सहस्रं भवति तत्र शतं भवत्येवेतिवत् यत्र द्रोणो भवति तत्राढकं भवत्येव यत्र चाढकं भवति तत्र प्रस्थो भवत्येवेति व्याप्यानां द्रोणादीनां सत्ताज्ञानाद् यदाढकादीनां व्यापकानां सत्ताज्ञानं तत्संभवप्रमाणादेव— द्रोणपरिमाणे आढकपरिमाणस्य संभवात्, अधिकपरिमाणेऽल्पपरिमाणस्य संभवश्च स्पष्ट एवेत्यन्वयः "कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्" इत्यमरः । अल्पानां परिमाणानां संख्यानां च व्यापकत्वमधिकानां च व्याप्यत्वमित्यत्र विभावनीयम् । अभावाख्यप्रमाणस्य स्वरूपमाह— अभाव इति, अभावपदेन विरुद्धाभावो ग्राह्यस्तथा च तद्विरुद्धाभावज्ञानेन तद्विरुद्धपदार्थज्ञानजनकमभावप्रमाणमित्याशयः, अभावस्यात्र ज्ञानजनकत्वादभाव इति प्रमाणनामधेयम्, विरोधिनमुदाहरति— अभूतमिति, अभूतम्= अविद्यमानं भूतस्य= विद्यमानस्य स्वविरोधिनो विरोधि भवति यथा विद्यमानस्य घटाभावस्याऽविद्यमानो घटो विरोधी यथा चाविद्यमानं जलं विद्यमानस्य वह्नेर्विरोधि— वह्निजलयोर्वैयधिकरण्यनियमात् तत्रान्यतरसत्ताज्ञानेनान्यतराभावज्ञानं जायते एवेतिस्पष्टमेवेत्यन्वयः, अभूतम्= अविद्यमानमित्यादिव्याख्यानं च "अविद्यमानम्" इत्यादिमूलानुकूल्येन कृतमितिविभाव्यम्, भूताऽभूतयोर्विरोधश्च स्पष्ट एव, उदाहरति— अविद्यमानमिति, अविद्यमाना वर्षणक्रिया विद्यमानस्य वृष्टिनिरोधकस्य वाय्वभ्रसंयोगविशेषस्य प्रतिपादिका= बोधिका भवति तथा चाभूतस्य वृष्टिकर्मणो ज्ञानेन अर्थाद् वृष्ट्यभावज्ञानेन तद्विरुद्धस्य= वृष्टिनिरोधकस्य वाय्वभ्रसंयोगविशेषस्य यदत्र ज्ञानं तदभावाख्यप्रमाणेनेत्यन्वयः, वस्तुतस्तु अभावज्ञानमेवाभावप्रमाणस्य फलम् । उक्ते हेतुमाह— विधारके इति, विधारके= वृष्टिनिरोधके वाय्वभ्रसंयोगे विद्यमानेऽपां पतनं न भवति, गुरुत्वादपां पतनेन यद् भवितव्यं तन्न भवतीत्याशयः प्रतीयते, अभ्रस्याधोभागे वायुसंयोगेन वृष्टिनिरोधो भवति ऊर्ध्वभागे च संयोगेन वृष्टिर्भवतीत्यनुसंधेयम् । किं वा "अभावः" इत्यभावप्रमाणोद्देशः, विरोधीत्यादिना च तस्य निरूपणम्, अभावाख्यं चेदं प्रमाणम्. अभावेन हि तादृशाभावप्रतियोगिविरुद्धस्यैव सत्ताज्ञानं जायते इति परस्परं विरुद्धयोर्वक्तव्यत्वाद् भूताभूतयोर्विरुद्धत्वमुक्तम्— विरोधीति, इत्येवं व्याख्येयम्, वाक्यं चेदं सर्वथा क्लिष्टार्थमेव । वस्तुतस्त्वत्र— 'अभावो नाम अविद्यमानस्याभावेन विद्यमानग्रहणं किं वैतादृशग्राहकमभावप्रमाणम्' इतिवक्तव्यमासीत् । अत्र— "अभावो नाम प्रत्यनीकस्य ग्रहणात् तद्विरोधिनो ग्रहणं यथा— विधारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धादपां पातः प्रतिषिद्धः तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं प्रतिपद्यते" इतिवार्तिकम्, वार्तिकं चेदं चिन्त्यमेव— अपामपातस्य तादृशवाय्वभ्रसंयोगस्य च परस्परं विरोधाभावात्, विरुद्धग्रहणेन तद्विरुद्धग्रहणस्य चासंभवादिति । "अभावस्तु विरोध्यभावज्ञानाधीनविरोध्यन्तरकल्पनं यथा— नकुलाभावज्ञानेन नकुलविरोधिनो व्यालस्य कल्पनम्. अत्रापि व्याप्तिर्नापेक्षितेत्याशयः, अथ वा कारणाभावादिना कार्याभावादिज्ञानम् अभावः" इति विश्वनाथभट्टाः । उक्तस्थलेषु सर्वत्र व्यभिचारसंभवाद् योग्यानुपलब्ध्याऽभावज्ञानमेवाभावप्रमाणफलमित्यनुसंधेयं विस्तरोऽन्यत्र द्रष्टव्यः ॥ १ ॥

अग्रिमसूत्रमवतारयति— सत्यमिति, उक्तानामैतिह्यादीनां प्रमाणत्वं स्वीक्रियते प्रमाणान्तरत्वं तु न स्वीक्रियते— स्वीकृतेषु शब्दादिष्वन्तर्भावसंभवादित्यर्थः । ऐतिह्यादीनां प्रमाणान्तरत्वं च स्वीकृत्य

अनुपपन्नः प्रतिषेधः । कथम्?, 'आप्तोपदेशः शब्दः' इति. न च शब्दलक्षणम् ऐतिह्याद् व्यावर्तते. सोयं भेदः सामान्यात् संगृह्यते इति । प्रत्यक्षेणाऽप्रत्यक्षस्य संबद्धस्य प्रतिपत्तिरनुमानं तथा चाऽर्थापत्तिसंभवाऽभावाः, वाक्यार्थसंप्रत्ययेनाऽनभिहितस्यार्थस्य प्रत्यनीकभावाद् ग्रहणम् अर्थापत्तिरनुमानमेव, अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं संभवः तदप्यनुमानमेव, 'अस्मिन् सतीदं नोपपद्यते' इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते । सोयं यथार्थ एव प्रमाणोद्देश इति 'सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणि' इत्युक्तम् ॥ २ ॥

---

प्रत्यक्षादीनां प्रमाणानां चतुष्ट्वसंख्यायास्त्वया प्रतिषेध उच्यते सोयं प्रतिषेधः अप्रतिषेधः= नोपपद्यते इत्यर्थः- ऐतिह्यादीनां शब्दादिष्वन्तर्भावादित्यन्वयः । पूर्वपक्षं सूत्रेण प्रत्याचष्टे- शब्दे इति, 'इह वटे यक्षः' इत्यैतिह्यं वाक्यमेव तथा चास्यैतिह्यस्य शब्दे= शब्दमाणे अनर्थान्तरभावात्= अन्तर्भावात्= शब्दप्रमाणादभेदात्. व्याप्येन व्यापककल्पनारूपाणामर्थापत्त्यादीनां चानुमानेऽन्तर्भावात् अप्रतिषेधः= प्रमाणानां चतुष्ट्वसंख्यायाः प्रतिषेधो नोपपद्यते इति सूत्रान्वयः । अनर्थान्तरभावः= अभेदः । सूत्रे 'शब्दात्, अनुमानात्' इत्येवं वक्तव्यमासीत् । व्याचष्टे- अनुपपन्न इत्यादिना, प्रतिषेधः= प्रमाणचतुष्ट्वप्रतिषेधः, सिद्धान्तकथनमात्रमिदम् । प्रतिषेधानुपपन्नत्वं जिज्ञासते- कथमिति । उत्तरमाह- आप्त इति, इदं शब्दप्रमाणलक्षणम्, शब्दलक्षणम्= आप्तोपदेशत्वं तच्चैतिह्येप्यस्तीति ऐतिह्यस्य शब्दप्रमाणेऽन्तर्भावः सिद्धः, उपसंहरति- सोयमिति, अयमैतिह्यरूपः शब्दभेदः= शब्दविशेष आप्तोपदेशत्वलक्षणसामान्येन संग्रहीतुं शक्यते एवेति नैतिह्यं प्रमाणान्तरमित्यन्वयः । अर्थापत्त्यादीनामनुमानेन्तर्भावप्रदर्शनार्थमनुमानस्वरूपमाह- प्रत्यक्षेणेति, अन्तर्भावमाह- तथा चेति, तथा= तद्रूपाः= अनुमानस्वरूपा एवार्थापत्तिसंभवाभावाः- प्रत्यक्षेण= प्रत्यक्षपदार्थज्ञानेनाप्रत्यक्षपदार्थज्ञानस्य जायमानत्वादित्यर्थः, इत्येवं सामान्यरूपेणान्तर्भावमुक्त्वा विशेषरूपेणार्थापत्तेरनुमानेन्तर्भावमाह- वाक्येति, वाक्यार्थस्य पीनत्वस्य संप्रत्ययेन ज्ञानेन अनभिहितस्यार्थस्य= रात्रिभोजनस्य ज्ञानमर्थापत्तिरित्युच्यते तत्र पीनत्वं व्याप्यं भोजनं च व्यापकमिति व्याप्यज्ञानेन व्यापकज्ञानस्य जायमानत्वादिदमनुमानमेवेत्यर्थापत्तेरनुमानेऽन्तर्भावः सिद्धः, प्रत्यनीकभावात्= अनुपपत्त्या. भोजनं विना पीनत्वमनुपपन्नम्= विरुद्धमिति पीनत्वेन भोजनकल्पनं भवतीत्यर्थः । एवं मेघाभावे वृष्ट्यभावस्य वाक्यार्थस्य ज्ञानेन मेघसत्त्वे वृष्टिसत्त्वस्य ज्ञानं वह्न्यभावे धूमाभावस्य ज्ञानेन धूमसत्त्वे वह्निसत्त्वज्ञानवदनुमानमेव । संभवस्यानुमानेऽन्तर्भावप्रतिपादनार्थं संभवस्वरूपमाह- अविनेति, अविनाभाववृत्त्या= व्याप्यव्यापकभावसंबन्धेन संबद्धयोः समुदायसमुदायिनोर्व्याप्यव्यापकरूपयोर्मध्ये इत्यन्वयः, इतरस्य= समुदायिनः, अन्तर्भावमाह- तदपीति, तत्= संभवप्रमाणम्, आढकानां समुदाय एव द्रोणः, समुदायोऽस्यास्तीति समुदायि आढकं द्रोणाढके च व्याप्यव्यापकरूपे- समुदायसमुदायिनोर्व्याप्यव्यापकरूपत्वादिति व्याप्येन द्रोणादिना ( तज्ज्ञानेन ) व्यापकस्याढकादेर्यद् ज्ञानं तदनुमानमेवेति न संभवः प्रमाणान्तरमित्यर्थः । अभावस्यानुमानेऽन्तर्भावमाह- अस्मिन्निति, यथा कारणाभावे कार्यं नोपपद्यते वाय्वभ्रसंयोगविशेषे सति च वृष्टिर्नोपपद्यते इत्येवं विद्यमानानुपपद्यमानयोर्विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य= कारणनिष्ठं प्रतिबन्धकं किंवा कारणस्य कार्योत्पादप्रतिबन्धकमभावप्रमाणेन ज्ञायते इत्येव वक्तव्यं तत्र कार्यानुत्पत्तेः कारणप्रतिबन्धकं व्यापकमेव तथा च व्याप्यभूतकार्यानुत्पत्तेर्ज्ञानेन व्यापकीभूतप्रतिबन्धकस्य ज्ञानमनुमानमेवेति नाऽभावोपि प्रमाणान्तरमित्यर्थः, कारणस्य= जलपूर्णमेघस्य कार्यभूता या वृष्टिस्तत्प्रतिबन्धको वाय्वभ्रसंयोगविशेषः । अत्र "कारणस्य" इत्यत्र 'कार्यस्य' इतिवक्तव्यमासीत् । घटाद्यभावश्च प्रत्यक्षविषयो नैतादृशाभावप्रमाणविषयः । उपसंहरति- सोयमिति, प्रमाणोद्देशः= प्रत्यक्षानुमानेत्यादिः प्रमाणचतुष्ट्वनिर्देशः । उपक्रमोक्तं स्मारयति- सत्यमिति ॥ २ ॥

अत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते तथा हीयम्—

## अर्थापत्तिरप्रमाणम्– अनैकान्तिकत्वात् ॥ ३ ॥

असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवति इत्येतदर्थादापद्यते. सत्स्वपि चैकदा न भवति. सेयमर्थापत्तिरप्रमाणमिति ॥ ३ ॥

नाऽनैकान्तिकत्वमर्थापत्तेः—

## अनर्थापत्तौ अर्थापत्त्यभिमानात् ॥ ४ ॥

'असति कारणे कार्यं नोत्पद्यते' इतिवाक्यात् प्रत्यनीकभूतोऽर्थः– 'सति कारणे कार्यमुत्पद्यते' इत्यर्थादापद्यते. अभावस्य हि भावः प्रत्यनीक इति. सोयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति– न खल्वऽसति कारणे कार्यमुत्पद्यते तस्माद् नाऽनैकान्तिकी । यत्तु 'सति कारणे निमित्तप्रतिबन्धात् कार्यं नोत्पद्यते' इति?. कारणधर्मोऽसौ न त्वर्थापत्तेः प्रमेयम् । किं तर्ह्यस्याः प्रमेयम्?, सति कारणे कार्यमुत्पद्यते इति= योऽसौ

---

संप्रत्यर्थापत्तेरप्रामाण्यमाशङ्कते– अत्रेति, प्रमाणभावाभ्यनुज्ञा= प्रमाणत्वस्वीकारः । अप्रामाण्यमुपपादयति– तथा हीति, इयम् अर्थापत्तिरित्येवं सूत्रेणान्वयः । अर्थापत्तिरिति– इयमर्थापत्तिः अप्रमाणम्– अनैकान्तिकत्वात्= व्यभिचारित्वात्= 'मेघेषु सत्सु वृष्टिर्भवति' इत्युक्तस्यार्थापत्तिविषयस्य व्यभिचारात्– सत्स्वपि मेघेषु कदाचिद् वृष्टिर्न भवतीति व्यभिचारः स्पष्ट एवेति सूत्रान्वयः । व्याचष्टे– असत्स्विति, अर्थापत्त्यात्र लभ्यमाह– सत्स्विति । अर्थापत्तिविषयस्य व्यभिचारमाह– सत्स्वपीति । उपसंहरति । सेयमिति, यदा हि न प्रमाणं तदानुमानेऽन्तर्भावोप्यनुपपन्न इत्यर्थः ॥ ३ ॥

अर्थापत्तेरप्रामाण्यं निराकरोति– नेति । अत्र सूत्रेण हेतुमाह– अनर्थेति, अनर्थापत्तौ= अर्थापत्तिभिन्नायाम् अर्थापत्त्यभिमानात्= अर्थापत्तित्वज्ञानादनैकान्तिकत्वं वदसीति नार्थापत्तेरनैकान्तिकत्वापत्तिः यतः 'सत्सु मेघेषु वृष्टिर्भवति' इत्यनेन मेघस्य वृष्टिकारणत्वं प्रतिपाद्यते न तु मेघसत्त्वे वृष्टिनियमोपि येन व्यभिचारापत्तिः स्यात् तत्र कारणे सत्यपि प्रतिबन्धकवशात् कदाचित् कार्यं न जायते इति प्रतिबन्धकवशादेव मेघसत्त्वेपि कदाचिद् वृष्ट्यभाव उपलभ्यते नैतावता मेघे वृष्टिकारणत्वस्य व्यभिचारः संभवतीत्युपपन्नमर्थापत्तेः प्रामाण्यं तेन चानुमानेऽन्तर्भाव इति सूत्रार्थः । व्याचष्टे– असतीति, प्रत्यनीकभूतः= विरुद्धः= विपरीतः, विपरीतमर्थमाह– सतीति, अयमर्थापत्तिविषयः, यथा 'प्रकाशं विना रूपप्रत्यक्षं न जायते' इत्युक्ते 'प्रकाशे सति रूपप्रत्यक्षं जायते' इत्यर्थाल्लभ्यते तथा । प्रत्यनीकत्वमाह– अभावस्येति, प्रकृते अभावस्य= 'असति कारणे' इतिव्यतिरेकस्य भावः= 'सति कारणे' इत्यन्वयः प्रत्यनीकः= विरुद्धः, अन्वयव्यतिरेकयोश्च परस्परविरुद्धत्वं स्पष्टमेव व्यतिरेकव्याप्त्या चान्वयव्याप्तिलाभोपि स्पष्ट एव. असतीति व्यतिरेकव्याप्तिः सतीत्यन्वयव्याप्तिः । उपसंहरति– सोयमिति, असति कारणे' इत्याद्युक्ते सति कारणे कार्योत्पादोऽर्थादापद्यमानः कारणसत्तां न व्यभिचरति= कारणसत्तां विना नैव भवतीति सिध्यति । व्यभिचाराभावे हेतुमाह– न खल्विति । नानैकान्तिकी= अर्थापत्तेर्व्यभिचारो नास्ति– 'सत्सु मेघेषु' इत्यनेन 'मेघं विना वृष्टिर्न जायते' इत्यस्य प्रतिपाद्यत्वात्तत्र च व्यभिचाराभावादित्यर्थः । पूर्वपक्ष्यभिप्रायमनुवदति– यत्त्विति, निमित्तप्रतिबन्धात्= कारणगतप्रतिबन्धकात् किं वा कारणनिष्ठकार्योत्पादकत्वप्रतिबन्धादित्यर्थः । अत्र स्वतत्त्वमाह– कारणेति, कारणधर्मः= कारणदोषोयं यत्प्रतिबन्धकवशात् कार्यं नोत्पद्यते इति । अर्थापत्तिप्रमेयं जिज्ञासते– किमिति । उत्तरमाह– सतीति, एतदेव व्याचष्टे– योसाविति, कार्योत्पत्तेः कारणसत्त्वाव्यभिचार

कार्योत्पादः कारणसत्तां न व्यभिचरति तदस्याः प्रमेयम् । एवं तु सति अनर्थापत्तौ अर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति, दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥ ४ ॥

## प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

'अर्थापत्तिर्न प्रमाणम्– अनैकान्तिकत्वात्' इति वाक्यं प्रतिषेधः तेनाऽनेन अर्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः, एवमनैकान्तिको भवति. अनैकान्तिकत्वादप्रमाणेनाऽनेन न कश्चिदर्थः प्रतिषिध्यते इति ॥ ५ ॥

अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति. न च प्रतिषेधस्य सद्भावो विषयः ?, एवं तर्हि—

## तत्प्रामाण्ये वा नाऽर्थापत्त्यऽप्रामाण्यम् ॥ ६ ॥

अर्थापत्तेरपि कार्योत्पादने कारणसत्ताया अव्यभिचारो विषयः न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ॥ ६ ॥

---

एवात्रार्थापत्तेर्विषयस्तत्र च न व्यभिचार इत्यर्थः । उपसंहरति– एवमिति । प्रतिषेधः= अर्थापत्तिप्रामाण्यप्रतिषेधः पूर्वोक्तः । सत्यपि कारणे या कार्यानुत्पत्तिः सा प्रतिबन्धकादेव प्रतिबन्धश्च यत्र प्रत्यक्षसिद्धस्तत्र न तस्य प्रत्याख्यानं संभवति येन कार्यस्य कारणसत्ताव्यभिचारः स्यात्तेन चार्थापत्तिविषयस्य व्यभिचारादर्थापत्तेरप्रामाण्यं स्यादित्याह– दृष्टश्चेति । कारणधर्मः= कार्योत्पादप्रतिबन्धः ॥ ४ ॥

प्रतिबन्द्युत्तरमाह– प्रतिषेध इति, "अर्थापत्तिरप्रमाणम्" इत्येवं योऽर्थापत्तिप्रामाण्यस्य प्रतिषेध उक्तस्तस्याप्यऽप्रामाण्यम्– अनैकान्तिकत्वात्= व्यभिचारात्= तद्विषयस्य अर्थापत्त्यप्रामाण्यस्याऽसंभवात् विपयासत्त्वमेव च वाक्याऽप्रामाण्यम् अर्थापत्तिप्रामाण्यं च साधितमेवेति सूत्रार्थः । व्याचक्षाणः प्रतिषेधवाक्यमाह– अर्थापत्तिरिति । तेनानेन= उक्तेन प्रतिषेधेन । पर्यवसितमाह– एवमिति, एवम्= अर्थापत्तेः प्रामाण्यप्रतिषेधेपि सद्भावस्याऽप्रतिषेधात्, यदा हि सद्भावः सिद्धस्तदा हेतोः कचिदऽप्रामाण्येपि कचित् प्रामाण्यवदर्थापत्तेरपि कचिदप्रामाण्येपि कचित् प्रामाण्यमपि स्यादेवेति तत्रोक्तप्रतिषेधस्यानैकान्तिकत्वं प्राप्तं तेनाऽप्रामाण्यं प्राप्तं ततश्चानेन प्रतिषेधेन कश्चिदर्थः= अर्थापत्तिप्रामाण्यं न प्रतिषेद्धुं शक्यते इति सिद्धमर्थापत्तेः प्रामाण्यमित्यर्थः ॥ ५ ॥

अग्रिमसूत्रमवतारयति– अथेति, नियतविषयेष्वर्थेषु= नियतेषु बहुषु विषयभूतेषु पदार्थेषु मध्ये, किं वा 'अनियतविषयेषु' इतिच्छेदः, वस्तुतस्तु पदमिदं चिन्तनीयमेव. स्वविषये= स्वप्रतिपाद्ये यो व्यभिचारः स एव व्यभिचारो भवति नान्यत्रत्यः उक्तप्रतिषेधस्य चार्थापत्तिसद्भावो न विषयः= उक्तप्रतिषेधेनार्थापत्तिसद्भावो न प्रतिषिध्यते येनार्थापत्तिसद्भावेन प्रतिषेधस्य व्यभिचारित्वं स्यात् किं त्वर्थापत्तेरप्रामाण्यं विषयस्तत्र च न व्यभिचारः– अर्थापत्तेः प्रामाण्यासंभवादिति यदि मन्यसे एवं तर्हि= इत्यत्र सूत्रेणोत्तरमुच्यते इत्यन्वयः । अस्योत्तरमाह– तदिति, तत्= तस्य= उक्तप्रतिषेधस्य यदि स्वविषये व्यभिचाराभावात् प्रामाण्यं तदार्थापत्तेरपि स्वविषये= कार्यस्य कारणसत्त्वाव्यभिचारे व्यभिचाराभावात् प्रामाण्यं सिद्धं हेतोरुभयत्र समानत्वादन्यथा प्रतिषेधस्यापि प्रामाण्यं न स्यादिति सूत्रार्थः । व्याचक्षाणोऽर्थापत्तेर्विषयमाह– अर्थापत्तेरिति । अर्थापत्तेरविषयमाह– न चेति, निमित्तप्रतिबन्धात् यत् कार्यानुत्पादकत्वं कारणधर्मः स नार्थापत्तेर्विषयो येन तदादायार्थापत्तेरप्रामाण्यं स्यात्, यश्च कार्यस्य कारणसत्त्वाव्यभिचारोऽर्थापत्तेर्विषयस्तत्र न व्यभिचारः– कारणं विना कार्यासंभवादित्यर्थापत्तेरपि स्वविषये व्यभिचाराभावात् प्रामाण्यं सिद्धमित्यर्थः ॥ ६ ॥

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते. कथमिति ?—

नाऽभावप्रामाण्यम्— प्रमेयासिद्धेः ॥ ७ ॥

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते— "नाभावप्रामाण्यम्— प्रमेयासिद्धेः" इति ॥ ७ ॥

अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥ ८ ॥

तस्याऽभावस्य सिध्यति प्रमेयम् । कथम्?. लक्षितेषु वासस्सु अनुपादेयेषु उपादेयानामलक्षितानाम् अलक्षणलक्षितत्वात्= लक्षणाभावेन लक्षितत्वादिति, उभयसंनिधौ 'अलक्षितानि वासांस्यानय' इति प्रयुक्तो येषु वासस्सु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते प्रतिपद्य चानयति प्रतिपत्तिहेतुश्च प्रमाणमिति ॥ ८ ॥

असत्यर्थे नाभाव इतिचेत्? न— अन्यलक्षणोपपत्तेः ॥ ९ ॥

---

संप्रत्यनुपलब्धेरप्रामाण्यमाशङ्कते— अभावस्येति, प्रमाणभावाभ्यनुज्ञा= प्रामाण्यस्वीकारः । अभावस्याऽप्रामाण्यकारणं जिज्ञासते— कथमिति । सूत्रेणोत्तरमाह— नेति, अभावस्य= अनुपलब्धेः प्रामाण्यं नोपपद्यते— तत्प्रमेयस्यासिद्धेः— प्रमेयं विना तद्विषयकप्रमाणस्य स्वीकारासंभवात्, अभावपदार्थस्य च तुच्छत्वात् प्रमेयत्वं न संभवति किं वाऽभावप्रमाणेन भूतलादिकैवल्यमेव ग्रहीतव्यं तच्च प्रत्यक्षस्यैव विषय इति प्रमेयाभावादभावाख्यप्रमाणस्याऽप्रामाण्यं प्राप्तमिति सूत्रार्थः । अत्र— "नाभावः प्रमाणम्— विषयाभावात्. यदविषयं तदप्रमाणं यथा गोशब्दोऽश्वप्रतिपादने" इति वार्तिकम् । सूत्रार्थस्य स्पष्टत्वात् तदुपेक्ष्य भाष्यकारः पूर्वपक्षं प्रत्याचष्टे— अभावस्येति, अभावस्य= अभावप्रमाणस्य, प्रमेये घटाद्यभावे, वैयात्यात्= हठादिना । अत्र— "सिद्धान्तमाह— अभावस्य भूयसीति" इति तात्पर्यटीका ॥ ७ ॥

अग्रिमसूत्रमवतारयति— अथेति, अर्थबहुत्वात्= अभावप्रमाणस्य प्रमेयाणां घटाद्यभावानां बहुत्वात् साकल्येन प्रदर्शयितुमशक्यत्वेनायमर्थैकदेशः= सूत्रोक्तः प्रमेयैकदेश उदाह्रियते इत्यन्वयः । अभावस्य प्रमेयमाह— लक्षितेष्विति, लक्षितम्= रागादियुक्तम् 'अलक्षितानि वस्त्राण्यानय' इत्युक्ते लक्षितेषु= लक्षितालक्षितेषु वस्त्रेषु मध्ये यान्यऽलक्षितानि तान्यानयति तत्राऽलक्षितानाम्= रागादिरहितानां वस्त्राणाम् अलक्षणेन= लक्षणाभावेन लक्षितत्वात्= युक्तत्वाद् ज्ञातत्वाद्वा तल्लक्षकस्य लक्षणाभावस्य वस्त्रविशेषणीभूतस्य तत्प्रमेयसिद्धिः= अभावप्रमाणप्रमेयत्वसिद्धिस्तथा चाभावाख्यप्रमेयस्य सत्त्वात् तत्प्रमातुमभावप्रमाणस्य प्रामाण्यं स्वीकार्यं प्रमाणान्तरत्वं नास्तीत्युक्तमेवेति सूत्रार्थः । व्याचष्टे— तस्येति । प्रमेयसिद्धिकारणं जिज्ञासते— कथमिति । उत्तरमाह— लक्षितेष्विति, अनुपादेयेषु= अग्राह्येषु. यदा हि 'अलक्षितानि वासांस्यानय' इत्युक्तं तत्र लक्षितानामनुपादेयत्वमलक्षितानामुपादेयत्वं च स्पष्टमेव । उपादेयत्वे हेतुमाह— अलक्षणेति, एतद् व्याचष्टे— लक्षणाभावेनेति । उदाहरति— उभयेति, उभयसंनिधौ= लक्षितालक्षितवस्त्रसंनिधौ, प्रयुक्तः= प्रेरितः= आज्ञप्तो भृत्यः, लक्षणानि= रागादिचिह्नानि, तानि= अलक्षितानि= लक्षणाभावविशिष्टानि लक्षणाभावेन प्रतिपद्यते— तत्र लक्षणाभावस्यैव व्यावर्तकत्वात् यथा नीलादेः, प्रतिपद्य च तानि वस्त्राण्यानयति प्रतिपत्तिहेतुः= प्रमितिकारणं च प्रमाणमेव तथा चालक्षितवस्त्राणां व्यावर्तकस्य लक्षणाभावस्य प्रमेयस्य सिद्धया तद्विषयकस्याभावाख्यस्य प्रमाणस्य प्रामाण्यं सिद्धमित्यर्थः ॥ ८ ॥

प्रमेयभूतस्याऽभावस्याभावमाशङ्कते— असतीति, अर्थे= अभावप्रतियोगिन्यसति= अविद्यमाने सति तदभावो नोपपद्यते— निष्प्रतियोगिकाभावस्यासंभवात् तथा च येषु वस्त्रेषु लक्षणानि न सन्ति

यत्र भूत्वा किंचिन्न भवति तत्र तस्याभाव उपपद्यते. न चालक्षितेषु वासस्सु लक्षणानि भूत्वा न भवन्ति. तस्मात्तेषु लक्षणाभावोऽनुपपन्न इति, न— अन्यलक्षणोपपत्तेः= यथाऽयमन्येषु वासस्सु लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु सोयं लक्षणाभावं पश्यन् अभावेनार्थं प्रतिपद्यते इति ॥ ९ ॥

## तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

तेषु वासस्सु लक्षितेषु सिद्धिः= विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्= यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यऽहेतुः— यानि खलु भवन्ति तेषामभावो व्याहत इति ॥ १० ॥

## न—लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥

न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति किं तु केषु चिल्लक्षणान्यवस्थितानि

---

तेषु लक्षणाभावोपि कथं स्यात् यदि लक्षणानि तत्र सन्ति तदापि लक्षणाभावो न संभवतीत्यर्थः, परिहरति— नेति, परिहारहेतुमाह— अन्येति, अन्येषु= लक्षितेषु वस्त्रेषु लक्षणानामुपपत्तेः= सत्त्वात् तदभावोऽलक्षितेषु संभवत्येवेति नाऽभावाख्यस्य प्रमेयस्यापह्नवः संभवतीति सूत्रार्थः। अत्र "अन्यत्र लक्षणोपपत्तेः" इत्येवं पाठो वृत्तिकाराभिमतः, अन्यत्र= लक्षितेषु। पूर्वपक्षं व्याचष्टे— यत्रेति, भूत्वा= उत्पद्य, न भवति= विनश्यति। प्रकृतमाह— न चालक्षितेष्विति, अलक्षितेषु च वस्त्रेषु लक्षणानि भूत्वा= उत्पद्य न भवन्ति= विनश्यन्ति इति नास्ति येनालक्षितेषु लक्षणाभावः संभवेत्. उत्पत्त्यनन्तरं विनाशेनैव तदभावस्य संभवादित्यर्थः। उपसंहरति— तस्मादिति, तस्मात्= लक्षणानामुत्पत्तिविनाशयोरभावात् तेषु= अलक्षितेषु लक्षणाभावोऽनुपपन्न इति नाभावस्य प्रमेयत्वमुपपद्यते इत्यर्थः। निराकरोति— नेति। हेतुमाह— अन्येति, एतद् व्याचष्टे— यथेति, अयम्= आज्ञप्तः, अन्येषु= लक्षितेषु, उपपत्तिम्= सत्ताम् , नैवमलक्षितेषु लक्षणानां सत्तां पश्यतीत्यर्थः। उपसंहरति— सोयमिति, तेन दृष्टेन लक्षणाभावेन व्यावर्तकेनार्थम्= अलक्षितं वस्त्रं प्रतिपद्यते तथा च व्यावर्तकत्वेन लक्षणाभावसत्ता सिद्धा लक्षणाभावश्चाभावप्रमाणप्रमेयमिति सिद्धमभावप्रमाणस्य प्रामाण्यमित्यन्वयः, किं वा लक्षणाभावेन यदलक्षितानां ग्रहणं तदेवाभावाख्यं प्रमाणं तच्चोक्तरीत्या सिद्धमित्यर्थः ॥ ९ ॥

पूर्वपक्षी अभावस्योक्तव्यावर्तकत्वाभावमाह— तत्सिद्धेरिति, लक्षणानां लक्षितेषु सिद्धेः= सत्त्वात् व्यावर्तकत्वमुपपद्यते. अलक्षितेषु अहेतुः= व्यावृत्तिहेतुत्वं नोपपद्यते— अभावस्य तुच्छत्वेन व्यावर्तकत्वासंभवाद् भावस्यैव व्यावर्तकत्वादिति सूत्रार्थः, अत्र— "अभावस्य लक्षणाभावान्निस्स्वरूपस्य न व्यावर्तकत्वमिति भावः" इति वृत्तिर्द्रष्टव्या। व्याचष्टे— तेष्विति, येषां लक्षणानां सिद्धिरित्यन्वयः, सिद्धिपदार्थमाह— विद्यमानतेति। तेषां लक्षणानामभावो न संभवति— विद्यमानस्याभावासंभवादित्यर्थः। एतदेव व्याचष्टे— यानीति, अलक्षितेषु लक्षणाभावो व्यावर्तक इति यदुक्तं तद् अहेतुः= न युक्तं व्याहतत्वादित्यर्थः, अत्र हेतुमाह— यानि खल्विति, यानि भवन्ति विद्यन्ते तेषामभाव एव न संभवति कुतस्तस्य व्यावर्तकत्वमित्याशयः ॥ १० ॥

उक्तपूर्वपक्षं निराकरोति— नेति, निषेधहेतुमाह— लक्षणेति, लक्षितेषु वस्त्रेषु लक्षणानामवस्थितापेक्षया= अवस्थानापेक्षया= अवस्थितिमपेक्ष्य= अवस्थितत्वात्= अवस्थितिं ज्ञात्वा तेषां लक्षणानामलक्षितेषु वस्त्रेषु अभावस्य ज्ञानं संभवति ज्ञातश्चाभावस्तेषामलक्षितानां प्रतीतिहेतुर्व्यावृत्तिहेतुश्च संभवतीत्यभावस्य प्रतीतिहेतुत्वसिद्धेर्व्यावृत्तिहेतुत्वसिद्धेश्च यदहेतुत्वमुक्तं तन्नोपपद्यते इति सूत्रार्थः। व्याचष्टे— नेति, भवन्ति= लक्षितेषु सन्ति, यत्र सत्ता भवति तत्रैवान्यदा प्रध्वंसाभावो भवतीति अलक्षितेषु लक्ष-

अनवस्थितानि केषुचित्. अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यते इति ॥ ११ ॥

## प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

अभावद्वैतं खलु भवति– प्राक् चोत्पत्तेरविद्यमानता. उत्पन्नस्य चात्मनो हानादविद्यमानता. तत्राऽलक्षितेषु वासस्सु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥१२॥

"आप्तोपदेशः शब्दः १–१–७" इति प्रमाणभावे विशेषणं ब्रुवता 'नानाप्रकारः शब्दः' इति ज्ञाप्यते. तस्मिन् सामान्येन विचारः– किं नित्योऽथानित्यः ? इति, विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः, 'आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मकः' इत्येके, गन्धादिसह-

---

णानां सत्त्वाभावात् प्रध्वंसोपि नास्तीति स्वीक्रियते इत्याशयः । स्ववक्तव्यमाह– किं त्विति, लक्षणानि लक्षितेष्ववस्थितानि अलक्षितेपु चाऽनवस्थितानीति ब्रूमस्तत्र अलक्षितानि अपेक्षमाणो येषु वस्त्रेपु लक्षणानां भावम्= सत्तां न पश्यति तानि वस्त्राणि लक्षणाभावेन प्रतिपद्यते= अलक्षितान्येतानीति जानाति तत्र लक्षणाभावस्य प्रतीतिहेतुत्वं सिद्धम् यतोऽन्यत्र स्थितस्यान्यत्रात्यन्ताभावोपि ज्ञातुं शक्यते ज्ञातश्च प्रतीतिव्यावृत्त्योर्हेतुर्भवतीति प्रसिद्धमेवेति पूर्वपक्षो न युक्त इत्यर्थः ॥ ११ ॥

वास्तविकोत्तरमाह– प्रागिति, यथोत्पत्तेरनन्तरं प्रध्वंसाभावो भवति तथोत्पत्तेः प्राक् प्रागभावोपि भवत्येवेत्यऽलक्षितेषु लक्षणानामुत्पत्तेरभावात् प्रागभावो भवत्येव स एव वर्तमानः प्रागभावः प्रतीतिव्यावृत्त्योर्हेतुर्भवतीति न पूर्वपक्षो युक्त इति सूत्रार्थः । व्याचष्टे– अभावेति । अभावद्वैविध्यमाह– प्रागिति, उत्पत्तेः प्राग् याऽविद्यमानता स प्रागभावः, उत्पन्नस्य= उत्पत्त्यनन्तरम् आत्मनो हानात्= स्वरूपविनाशाद् याऽविद्यमानता स प्रध्वंसाभाव इत्युच्यते. तत्रालक्षितेषु लक्षणानां प्रध्वंसाभावस्यासंभवेपि प्रागभावः संभवत्येव स एव प्रतीतिव्यावृत्त्योर्हेतुर्भवति न इतरः= प्रध्वंसाभावः– असत्त्वादिति सिद्धमभावस्य प्रतीतिव्यावृत्त्योर्हेतुत्वमित्याह– तत्रेति तदेवमभावप्रमाणस्य प्रमेयसिद्ध्या प्रामाण्यमपि सिद्धं तस्य चानुमानेऽन्तर्भाव उक्त एवेत्यर्थापत्त्यादीनां प्रामाण्येप्युक्तप्रमाणचतुष्टये यथायथमन्तर्भावादुद्देशसूत्रोक्तं प्रमाणानां चतुष्ट्वं सिद्धम्– प्रमाणान्तरासंभवादित्यर्थः ॥ १२ ॥

॥ इति प्रमाणसंख्यापरीक्षा समाप्ता ॥

---

एवं प्रमाणपरीक्षां समाप्य शब्दस्य नित्यत्वानित्यत्वपरीक्षां भाष्यकार आरभते-- आप्त इति, प्रमाणभावे= शब्दस्य प्रामाण्ये "आप्तोपदेशः" इत्याप्तोपदेशत्वलक्षणं विशेषणं ब्रुवता सूत्रकृता 'नानाप्रकारः शब्दः' इति ज्ञाप्यते यतः "आप्तोपदेशः शब्दः" इत्युक्ते अनाप्तोपदेशलक्षणोपि शब्दः सिध्यति अन्यथाप्तोपदेशत्वविशेषणं व्यर्थं स्यादित्यर्थः । प्रकृतमाह– तस्मिन्निति, सामान्येन= शब्दमात्रमुद्दिश्य विचारः क्रियते इत्यर्थः । विचारार्थं विकल्पयति– किमिति, शब्द इत्यनुवर्तनीयम् । शब्दे नित्यत्वानित्यत्वयोः संशयस्य कारणमाह– विमर्शेति, विमर्शस्य= संशयस्य हेतोरनुयोगे= प्रश्ने जाते विप्रतिपत्तेः= तत्तच्छास्त्रकारैः परस्परविरुद्धप्रतिपादनादेव संशयो जायते इत्युत्तरं विज्ञेयमित्यर्थः । शब्दे विप्रतिपत्तिं प्रदर्शयति– आकाश इत्यादिना, तदेतत् प्रथमं प्रभाकरमतम्, अभिव्यक्तिधर्मकः= नित्यत्वादभिव्यज्यते प्रयत्नेन नोत्पद्यते इत्यर्थः, तदुक्तम्– "न चैवं सत्याकाशस्यासिद्धिरेव– शब्दलक्षणगुणानुमानसिद्धत्वात्" इत्याकाशगुणत्वमुक्तम्. तथा—

"एषा शालिकनाथेन शब्दनित्यत्वसाधनी ।
प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः परीक्षिता ॥" इति च शब्दस्य नित्यत्वमुक्तम् ।

वृत्तिर्द्रव्येषु संनिविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मकः’ इत्यपरे, ‘आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवत्’ इत्यपरे, ‘महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मकः’ इत्यन्ये. अतः संशयः– किमत्र तत्त्वम्? इति, ‘अनित्यः शब्दः’ इत्युत्तरम्।

कथम्?—

## आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १३ ॥

आदिः= योनिः= कारणम्– आदीयतेऽस्मादिति. कारणवद् अनित्यं दृष्टम्. संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति। का पुनरियमर्थदेशना– ‘कारणवत्त्वात्’ इति?, उत्पत्तिधर्मकत्वादनित्यः शब्द इति= भूत्वा न भवति= विनाशधर्मक इति। सांशयिकमेतत्– किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य? आहोस्विदभिव्यक्तिकारणम्?, इत्यत आह– ऐन्द्रियकत्वात् ( इति ) इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः।

---

सांख्यमतमाह– गन्धादीति, यत्र गन्धादयो वर्तन्ते तत्रैव शब्दोपि पृथिव्यादिषु वर्तते– शब्दस्पर्शादीनामुत्तरोत्तरभूतेषु सत्त्वस्वीकारात् गन्धादिवद् अवस्थितः= सन्नेव= सत्त्वादेवाभिव्यक्तिधर्मकः= अभिघातादिभिरभिव्यज्यमानो न तूत्पत्तिधर्मकः– सांख्यैरनित्यपदार्थानां सत्त्वाभिव्यक्त्योः स्वीकारात्, अत्र “सांख्यीयमतमाह– गन्धादिसहवृत्तिरिति” इति तात्पर्यटीका। वैशेषिकमतमाह– आकाशगुण इति, उत्पत्तिनिरोधधर्मकः= उत्पत्तिविनाशवान् बुद्धिवत्= ज्ञानवत्, तथा च वैशेषिकसूत्राणि– “श्रोत्रग्रहणो योऽर्थः स शब्दः २–२–२१” गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् २–२–२५” “अनित्यश्चायं कारणतः २–२–२८” “संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तिः २–२–३१” “लिङ्गाच्चानित्यः शब्दः २–२–३२” इति। बौद्धमतमाह– महाभूतेति, घटादिपदार्था महाभूतरूपा एव शब्दकारणीभूतमाघातादिकमेव संक्षोभपदार्थः, अनाश्रितः= न गुणभूत इत्येव वैशेषिकमतादत्र विशेषः, निरोधधर्मकः= विनाशी, अत्र– “बौद्धराद्धान्तमाह– महाभूतसंक्षोभज इति” इति तात्पर्यटीका। उपसंहरति– अत इति, अतः= उक्तमतानां परस्परं विप्रतिपत्तेः= विरोधात् शब्दस्य नित्यत्वानित्यत्वयोः संशयः। अत्र तत्त्वं जिज्ञासते– किमिति। तत्त्वमाह– अनित्यः इति, अनित्यः शब्द इति न्यायसिद्धान्त इत्यर्थः॥

शब्दानित्यत्वकारणं जिज्ञासते– कथमिति । सूत्रेण कारणमाह– आदीति, आदिमत्त्वात्= उत्पत्तिमत्त्वादनित्यः शब्दः– उत्पत्तिमतोऽनित्यत्वनियमात्, ननूत्पत्तिमत्त्वं न सिद्धमित्याशङ्क्याह– ऐन्द्रियकेति, ऐन्द्रियकत्वात्= इन्द्रियग्राह्यत्वादनित्यः शब्दः– इन्द्रियग्राह्यस्यानित्यत्वनियमात् रूपादिवत्, ननु नायमपि नियमः– सामान्यादौ व्यभिचारादित्याशङ्क्याह– कृतकेति, उपचारात्= प्रयोगात्, अनित्यपदार्थसदृशत्वादित्यर्थः, यथा ‘तीव्रं दुःखं मन्दं दुःखम्’ इत्यनित्यं दुःखमुपचर्यते तथा ‘तीव्रः शब्दो मन्दः शब्दः’ इत्युपचर्यते एतादृशोपचारादनित्यत्वं सिद्धम्– तीव्रत्वादिधर्माणां नित्येष्वसंभवादिति सूत्रार्थः। अत्र– “अत्र चोपचारेण प्रयोगेण तत्कारणं शब्दभेदप्रत्ययमुपलक्षयति– अस्ति हि शुकसारिकामनुष्यवक्त्रप्रभवेषु गकारादिषु स्फुटतरा रूपभेदप्रत्ययाः पुंसाम्” इतितात्पर्यटीका, गकारादीनामेतादृशभेदेनानित्यत्वं प्राप्तम्– नित्यत्वे भेदासंभवादित्याशयः। व्याचष्टे– आदिरिति, आदिमत्त्वात्= कारणवत्त्वात्, आदीयते= उत्पाद्यतेऽस्मादित्यादिः= कारणम्, कारणवच्चानित्यं भवति घटादिवत्। शब्दकारणमाह– संयोगेति। “कारणवत्त्वात्” इत्यनेन किं प्रतिपाद्यते इति पूर्वपक्षी जिज्ञासते– केति, अर्थदेशना= अर्थोपदेशः। उत्तरमाह– उत्पत्तीति। उक्तं व्याचष्टे– भूत्वेति, भूत्वा= उत्पद्य न भवति= विनश्यतीत्यर्थः, एतदपि व्याचष्टे– विनाशेति, उत्पत्तिविनाशधर्मकत्वादनित्यः शब्द इत्यर्थः।

किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् ? अथ संयोगजाच्छब्दाच्छब्दसंताने सति श्रोत्रप्रत्यासन्नो गृह्यते ? इति—

**संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम्१ ।**

दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते. न च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति तस्मान्न व्यञ्जकः संयोगः, उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति । इतश्च शब्द उत्पद्यते नाभिव्यज्यते— कृतकवदुपचारात्= 'तीव्रं मन्दम्' इति कृतकमुपचर्यते— 'तीव्रं सुखं मन्दं सुखम्. तीव्रं दुःखं मन्दं दुःखम्' इति. उपचर्यते च— 'तीव्रः शब्दो मन्दः शब्दः' इति ।

**व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत् ? न— अभिभवोपपत्तेः ।**

---

सूत्रोक्तं द्वितीयहेतुमवतारयति— सांशयिकमिति, संयोगविभागयोः शब्दाभिव्यक्तिकारणत्वस्यापि संभवात् शब्दोत्पत्तिकारणत्वं सांशयिकमेवेति न तेन शब्दस्यानित्यत्वमापद्यते इत्यर्थः, इत्याशङ्कायामाह— ऐन्द्रियकत्वादिति, एतद् व्याचष्टे— इन्द्रियेति, प्रत्यासत्तिः= संयोगः । इन्द्रियग्राह्यश्चाऽनित्यो भवति यथा घटादिरिति शब्दोऽप्यनित्यः— इन्द्रियग्राह्यत्वादित्यर्थः ।

शब्दस्येन्द्रियग्राह्यत्वमुक्तं तत्रेन्द्रियेण शब्दग्रहणप्रकारजिज्ञासार्थं द्विधा विकल्पयति— किमिति, अयम्= शब्दः, व्यञ्जकेन= संयोगादिना. किं यत्र संयोगादि भवति तत्रस्थः शब्दोऽभिव्यज्यते यथा रूपादिकं प्रकाशदेशस्थमभिव्यज्यते इति प्रथमकल्पार्थः, किं वा भेरीदण्डादिसंयोगेन यः शब्द उत्पन्नस्तत उत्तरोत्तरं शब्दसंताने= शब्दे उत्पन्ने सति श्रोत्रं प्राप्तः शब्दो गृह्यते इति द्वितीयकल्पार्थः । अत्रोत्तरमाह— संयोगेति, भेरीदण्डादिसंयोगे नष्टेपि दूरस्थेन स शब्दो गृह्यते. व्यञ्जके च प्रकाशे नष्टे व्यङ्ग्यस्य रूपस्य ग्रहणं न संभवति. एवं यदि संयोगादिरपि शब्दस्य व्यञ्जकः स्यात्तदा तस्मिन्नष्टे शब्दो न गृह्येत गृह्यते च शब्द इति न संयोगादिनाऽभिव्यज्यते किं तूत्पाद्यते तथा चोत्तरोत्तरं शब्दोत्पत्तिसंभवेन श्रोत्रप्रत्यासन्नो गृह्यते शब्द इति व्यञ्जकेन समानदेशस्य= व्यञ्जकदेशस्थस्य शब्दस्य ग्रहणं नोपपद्यते यत उत्पन्नः सन् वाऽभिव्यक्तः सन् वा शब्दो न व्यापकः संभवति श्रवणेन्द्रियमपि न व्यापकं येन व्यञ्जकदेशस्थस्य ग्रहणमुपपद्येत ग्रहणं तु भवतीति श्रोत्रं प्राप्त एव गृह्यते इति प्राप्तं. तत्रापि दूरोत्पन्नशब्दस्य श्रोत्रस्य च गत्यभावेन श्रोत्रप्राप्तेरसंभवात् श्रोत्रप्राप्त्यर्थं पूर्वपूर्वशब्दादुत्तरोत्तरशब्दानां श्रोत्रप्राप्तिपर्यन्तमुत्पत्तिः स्वीकार्येति न्यायसिद्धान्तः । स्ववाक्यं स्वयमेव व्याचष्टे— दारुव्रश्चने इति, दारुव्रश्चने= काष्ठच्छेदने प्रवृत्ते सति । शब्दस्य व्यङ्ग्यत्वपक्षे बाधकमाह— न चेति । उपसंहरति— तस्मादिति । स्वमते उपपत्तिमाह— उत्पादके इति, संयोगादेः शब्दोत्पादकत्वस्वीकारे इत्यर्थः, शब्दसन्ताने= उत्तरोत्तरं शब्दोत्पत्तौ सत्याम् । संयोगादेः शब्दोत्पादकत्वपक्षे संयोगे नष्टेपि शब्दग्रहणं युज्यते— उत्पादकनाशानन्तरमपि तदुत्पादितग्रहणस्य सिद्धत्वादित्यर्थः । ननु संयोगादेः शब्दोत्पादकत्वं संदिग्धमेव तेन च श्रोत्रप्रत्यासन्नस्य शब्दस्य ग्रहणमपि संदिग्धमेवेति नैवं शब्दानित्यत्वं सिध्यतीत्याशङ्क्य सूत्रोक्तं तृतीयहेतुमवतारयति— इतश्चेति, हेतुमाह— कृतकेति । व्याचष्टे— तीव्रमिति, 'तीव्रमिदं मन्दमिदम्' इत्येवं कृतकम्= जन्यमेवोपचर्यते= प्रयुज्यते न तु नित्यमपि । उदाहरति— तीव्रं सुखमिति, सुखादीनामनित्यत्वं तु स्पष्टमेव तद्वदुपचारात् शब्दस्याप्यनित्यत्वं सिद्धमित्यर्थः । दार्ष्टान्तिकमाह— तीव्रः शब्द इति, स्पष्टमन्यत् ॥

ननु यथा रूपव्यञ्जकस्य प्रकाशस्य तीव्रत्वेन रूपग्रहणस्य तीव्रत्वं मन्दत्वेन च मन्दत्वं भवति न तु प्रकाशाभिव्यङ्ग्यस्य रूपस्य तथा शब्दव्यञ्जकस्य संयोगादेस्तीव्रत्वेन शब्दग्रहणस्य तीव्रत्वं मन्दत्वेन

संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति न तु शब्दो भिद्यते यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति, तच्च नैवम्– अभिभवोपपत्तेः= तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दम् अभिभवति न मन्दः, न च शब्दग्रहणमभिभावकं शब्दश्च न भिद्यते (इति), शब्दे तु भिद्यमाने युक्तोऽभिभवः तस्मादुत्पद्यते शब्दो नाभिव्यज्यते इति ।

अभिभवानुपपत्तिश्च– व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात्[३] ।

'व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्दः' इत्येतस्मिन् पक्षे नोपपद्यतेऽभिभवः– न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति ।

अप्राप्तेऽभिभव इतिचेत्? शब्दमात्राभिभवप्रसङ्गः[४] ।

---

च मन्दत्वं भवति न तु शब्दस्वरूपस्यापि तीव्रत्वं मन्दत्वं वा येन शब्दस्यानित्यत्वमापद्येतेत्याशङ्कते– व्यञ्जकस्येति, तथाभावात्= तीव्रत्वात् मन्दत्वाद्वा । परिहरति– नेति । परिहारहेतुमाह– अभिभवेति, कस्य चिच्छब्दस्य केनचिच्छब्देनाभिभवो भवति अभिभवश्च तीव्रेण मन्दस्य संभवतीति शब्दस्यैव स्वरूपेण तीव्रत्वं मन्दत्वं च स्वीकार्यं तेन च शब्दस्यानित्यत्वं सिद्धमित्यर्थः । अभिभवोपपत्तेः= अभिभवस्योपपन्नत्वात् किं वाऽभिभवोपपत्त्यर्थमित्यर्थः । अत्र "रूपवत्" इत्यत्र 'रूपग्रहणवत्' इति वक्तव्यमासीत्, "अभिभवोपपत्तेः" इत्यत्र च 'अभिभवानुपपत्तेः' इत्येवं पूर्वपक्षिमते बाधकं वक्तव्यमासीदित्यनुसंधेयम् । पूर्वपक्षं व्याचष्टे– संयोगस्येति । विपक्षे बाधकमाह– न त्विति, शब्दभेदाभावे शब्दस्य तीव्रत्वं मन्दत्वं च नोपपद्यते इति शब्दस्य तीव्रत्वादिनिवृत्त्यर्थं शब्दभेदः प्रत्याख्यातः । अत्र 'न तु शब्दस्य' इति वक्तव्यमासीत् । दृष्टान्तमाह– यथेति, तीव्रमन्दतेतिशेषः । परिहरति– तच्चेति, तत्= एतत्= शब्दग्रहणस्य तीव्रमन्दत्वे नोपपद्येते इत्यर्थः । हेतुमाह– अभिभवोपपत्तेरिति । एतद् व्याचष्टे– तीव्र इति, तन्त्री= वीणा । न मन्दोऽभिभवति । एतादृशस्याऽभिभाव्याभिभावकत्वस्य सिद्ध्यर्थं शब्दस्यैव तीव्रमन्दत्वे स्वीकार्ये इत्यर्थः । ननु शब्दो न भिद्यते= न नाना येन शब्दस्य तीव्रमन्दत्वे स्यातां तयोर्भेदं विनाऽनुपपत्तेः किं तु शब्दग्रहणमेव तीव्रं मन्दं शब्दग्रहणमभिभवतीत्याशङ्क्याह– न चेति । परिहारहेतुमाह– शब्दे इति, ग्रहणं हि ज्ञानमेव न च ज्ञानं ज्ञानान्तरेणाभिभूयते लोके च शब्दस्यैवाभिभवः प्रसिद्ध इति तदुपपत्त्यर्थं शब्दस्यैव तीव्रमन्दत्वे स्वीकार्ये तीव्रमन्दत्वोपपत्त्यर्थं च शब्दभेदः स्वीकार्य इत्यर्थः, युक्तः= युज्यते । स्वमतेनोपसंहरति– तस्मादिति, उत्पन्नस्य शब्दस्य नानात्वं तेन तीव्रत्वं मन्दत्वं च तेनाभिभाव्याभिभावकभावश्चेति सर्वमुत्पत्तिपक्षे उपपद्यते नाभिव्यक्तिपक्षे इत्यन्वयः ॥

व्यञ्जकदेशस्थस्य शब्दस्याभिव्यक्तिपक्षे उक्ताभिभवानुपपत्तिमाह– अभिभवेति, व्यञ्जकसमानदेशस्य= व्यञ्जकदेशस्थस्य शब्दस्याभिव्यक्तिपक्षे भेरीशब्दवीणाशब्दयोः प्राप्तेरसंभवाद् भेरीशब्देन वीणाशब्दस्याभिभवो नोपपद्यते– प्राप्तयोरेवाभिभाव्याभिभावकभावसंभवादिति नाभिव्यक्तिपक्षो युक्त इत्यर्थः । उत्पत्तिपक्षे तु उत्तरोत्तरोत्पत्त्या संभवति प्राप्तिः= संयोगः । स्वोक्तं स्वयमेव व्याचष्टे– व्यञ्जकेनेति । अभिव्यक्तिपक्षेऽभिभवानुपपत्तौ हेतुमाह– न हीति । प्राप्तः= समानाधिकरणः । अभिव्यक्तिपक्षे तु अभिव्यज्यमानाः शब्दा अभिव्यञ्जकदेशस्था एव स्युरिति तेषां प्राप्तिर्न संभवति भिन्नदेशस्थानां प्राप्तेरसंभवादित्यर्थः । स्पष्टार्थमिदं भाष्यम् ॥

ननु भेरीशब्दवीणाशब्दयोः परस्परं प्राप्त्यभावेपि भेरीशब्देन वीणाशब्दस्याभिभवः किं न स्यात् प्रकाशेन तमस इवेत्याशङ्कते– अप्राप्ते इति, इदं शब्दविशेषणं किं वा 'अप्राप्तौ' इत्यर्थः । परिहारमाह– शब्देति, अप्राप्तस्याप्यभिभवस्वीकारे भेरीशब्देन वीणाशब्दमात्रस्याभिभवः स्यात्– अप्राप्तेः सर्वत्र समानत्वात्, प्राप्तस्याभिभवस्वीकारे तु दूरस्थस्य वीणाशब्दस्य भेरीशब्देन प्राप्तेरभावादभिभवापत्तिर्ना-

अथ मन्येत 'असत्यां प्राप्तावभिभवो भवति' इति, एवं सति यथा भेरीशब्दः कंचित् तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानानिव दवीयस्स्थोपादानानपि तन्त्रीस्वनानभिभवेत्– अप्राप्तेरविशेषात्. तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति। नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य= तीव्रेण मन्दस्याभिभवो युक्त इति। कः पुनरयमभिभवो नाम?, ग्राह्यसमानजातीयग्रहणकृतमग्रहणम् अभिभवः यथोल्काप्रकाशस्य ग्रहणार्हस्याऽऽदित्यप्रकाशेनेति ॥ १३ ॥

## न– घटाभावसामान्यनित्यत्वाद् नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥

न खल्वादिमत्त्वादनित्यः शब्दः। कस्मात्?, व्यभिचारात्= आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्?, कारणविभागेभ्यो हि घटो न भवति। कथमस्य नित्य-

स्तीति एतादृशप्राप्तेरुपपत्त्यर्थं शब्दोत्पत्तिः स्वीकार्येत्यर्थः। पूर्वपक्षं व्याचष्टे– अथेति। अत्र दोषमाह– एवमिति, एवं सति= प्राप्त्यभावेप्यभिभवस्वीकारे। कंचित्= समीपस्थम्, स्ववक्तव्यमाह– एवमिति, अन्तिकस्थम्= भेरीसमीपस्थम् उपादानम्= वीणादिकमभिव्यक्तिस्थानं येषां शब्दानां तानिव= समीपस्थान् शब्दानिव, दवीयस्स्थम्= दूरस्थम् उपादानम्= वीणादिकमभिव्यक्तिस्थानं येषां शब्दानां तानपि= दूरस्थानपि शब्दानभिभवेत्, अत्र हेतुमाह– अप्राप्तेरिति। उक्तदोषमुपसंहरति– तत्रेति, तत्र= अप्राप्तावप्यभिभवस्वीकारे भेरीशब्दकाले क्वचिदपि वीणाशब्दो न श्रूयेत– अप्राप्तानामप्यभिभवस्वीकारात्, प्रणादितायाम्= वादितायाम्। न चैवमस्तीति समीपस्थस्यैवाभिभवदर्शनात् प्राप्तौ सत्यामेवाभिभवः स्वीकार्यः प्राप्त्युपपत्त्यर्थं च शब्दोत्पत्तिः स्वीकार्या– उत्पन्नानां शब्दानां क्वचित् सामानाधिकरण्यसंभवादित्यर्थः। स्वपक्षे उपपत्तिमाह– नानेति, शब्दसंतानेषु= उत्तरोत्तरमुत्पन्नेषु शब्देषु, श्रोत्रप्रत्यासत्तिभावेन=श्रोत्रप्राप्तिसंभवेन तत्र श्रोत्रप्राप्तेन तीव्रेण शब्देन श्रोत्रप्राप्तस्य मन्दस्य शब्दस्याभिभवो युज्यते इत्यन्वयः। अभिभवस्वरूपं जिज्ञासते– क इति। उत्तरमाह– ग्राह्येति, दृष्टान्तमाह– यथेति, यथा ग्रहणार्हस्य= ग्राह्यस्य उल्काप्रकाशस्य तत्समानजातीयो य आदित्यप्रकाशस्तद्ग्रहणकृतं यदग्रहणं तदेवाभिभवस्तथा प्रकृते ग्राह्यस्य वीणाशब्दस्य तत्समानजातीयभेरीशब्दग्रहणकृतं यदग्रहणं तदेव वीणाशब्दस्य भेरीशब्देनाभिभव स च प्राप्तौ सत्यामेवोपपद्यते इत्यन्वयः ॥ १३ ॥

पूर्वसूत्रेण शब्दानित्यत्वे यद् हेतुत्रयमुक्तं तत् प्रत्याचष्टे– नेति, आदिमत्त्वादिहेतूनां शब्दानित्यत्वसाधकत्वं न संभवति– व्यभिचारित्वादित्यर्थः, व्यभिचारं प्रदर्शयति– घटेति, साध्याभाववति वृत्तित्वं हि व्यभिचारित्वं तत्र घटाभावे= घटप्रध्वंसे ह्यनित्यत्वं साध्यं नास्ति उत्पत्तिमत्त्वं त्वस्तीति तस्य व्यभिचारित्वं सिद्धम्, सामान्ये= घटत्वादावनित्यत्वं नास्ति ऐन्द्रियकत्वम्= इन्द्रियग्राह्यत्वं चास्तीति तस्य व्यभिचारित्वं सिद्धम्– येनेन्द्रियेण व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तन्निष्ठजातेर्ग्रहणस्वीकारादैन्द्रियकत्वं सामान्ये सिद्धम्, आकाशादावनित्यत्वं नास्ति अनित्यवदुपचारस्तु भवति– 'आकाशस्य प्रदेशः' इत्यादिरिति अनित्यवदुपचारस्यापि व्यभिचारित्वं सिद्धम्, व्यभिचारिणश्च हेतोः साध्यसाधकत्वं न संभवतीति आदिमत्त्वादिहेतूनानपि पूर्वसूत्रोक्तानां व्यभिचारित्वात् शब्दानित्यत्वसाधकत्वं नोपपद्यते इति सूत्रार्थः। घटाभावसामान्ययोः नित्यत्वात्= आदिमतोपि घटाभावस्य ऐन्द्रियकस्यापि सामान्यस्य च नित्यत्वादित्यन्वयः। व्याचष्टे– नेति। शब्दस्यादिमत्त्वेप्यनित्यत्वाभावे हेतुं जिज्ञासते– कस्मादिति। उत्तरमाह– व्यभिचारादिति, व्यभिचारं प्रदर्शयति– आदिमत इति, नित्येपि घटाभावे आदिमत्त्वमस्तीति अनित्यत्वव्यभिचारि जातमित्यर्थः। घटप्रध्वंसस्यादिमत्त्वकारणं जिज्ञासते– कथमिति। उत्तरमाह– कारणेति, न भवति= विनश्यति= घटप्रध्वंसो जायते कपालादिलक्षणकारणविभागेभ्य इत्यादिमान् प्रध्वंस इत्यर्थः। प्रध्वंसस्य नित्यत्वकारणं जिज्ञासते– कथमस्येति। उत्तरमाह– य इति, कारणविभा-

त्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्याऽभावो भावेन कदाचिद् निवर्त्यते इति। यदपि ऐन्द्रियकत्वात्. (इति) तदपि व्यभिचरति= ऐन्द्रियकं च सामान्यं नित्यं चेति। यदपि कृतकवदुपचारादिति. एतदपि व्यभिचरति= नित्येष्वनित्यवदुपचारो दृष्टो यथा हि भवति– 'वृक्षस्य प्रदेशः कम्बलस्य प्रदेशः' एवम्– 'आकाशस्य प्रदेश आत्मनः प्रदेशः' इति भवतीति ॥ १४ ॥

## तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥

नित्यमित्यत्र किं तावत् तत्त्वम्?, अर्थान्तरस्याऽनुत्पत्तिधर्मकस्याऽऽत्महानानुपपत्तिर्नित्यत्वं तच्चाऽभावे नोपपद्यते, भाक्तं तु भवति– यत्तत्रात्मानमहासीत्= यद् भूत्वा न भवति न जातु तत् पुनर्भवति. तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति। तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किंचिद् नित्यं दृश्यते इत्यव्यभिचारः ॥ १५ ॥

---

गाद् योऽसौ न भवति= प्रध्वंसो जायते तस्य प्रध्वंसस्याभावो न सिध्यतीति प्रध्वंसस्य नित्यत्वं सिद्धम्। वस्तुतस्तु "तस्याऽभावः" इत्यत्र 'तस्य भावः' इति वक्तव्यमासीत् तस्य च 'योऽसौ घटो न भवति= विनश्यति तस्य घटस्य भावः= पुनः सत्ता न सिध्यतीति घटप्रध्वंसस्य नित्यत्वं सिद्धम्' इत्यर्थः। प्रकृते तु तस्येतिपदेन प्रध्वंसपरामर्शासंभवः स्पष्ट एव। अत्र "निवर्त्यते" इति पाठपक्षे तु 'योसौ घटः कारणविभागेभ्यो नभवति= विनश्यति तस्याऽभावः= प्रध्वंसः केनापि भावेन= पदार्थेन न निवर्त्यते= न विनश्यतीति तस्य प्रध्वंसस्य नित्यत्वं सिद्धम्' इत्यन्वयः। ऐन्द्रियकत्वहेतोरनित्यत्वव्यभिचारित्वमाह– यदपीति, व्यभिचारमाह– ऐन्द्रियकमिति, नित्येपि सामान्ये= घटत्वादौ ऐन्द्रियकत्वमस्तीति अनित्यत्वव्यभिचारि जातम्। कृतकवदुपचारहेतोरनित्यत्वव्यभिचारित्वमाह– यदपीति। व्यभिचारं प्रदर्शयति– नित्येष्विति। उदाहरति– वृक्षस्येति, प्रकृतमाह– एव मिति, तथा च यथा नित्येप्याकाशे 'आकाशप्रदेशः' इत्यनित्यवदुपचारो भवति तथा नित्येपि शब्दे 'तीव्रो शब्दो मन्दो शब्दः' इत्यनित्यवदुपचारो भवति तस्मात् कृतकवदुपचारस्याप्यनित्यत्वव्यभिचारित्वं सिद्धमित्यनित्यत्वव्यभिचारिभिरादिमत्त्वादिभिः शब्दस्यानित्यत्वं नोपपद्यते इत्यर्थः। आकाशस्य पूर्वादिप्रदेशः आत्मनश्च हस्तपादाद्यवच्छेदेन प्रदेशो विज्ञेयः ॥ १४ ॥

पूर्वसूत्रे पूर्वपक्षिणादिमत्त्वादिहेतूनां यद् व्यभिचारित्वं प्रदर्शितं क्रमेण तन्निराकरोति– तत्त्वेति, तत्त्वभाक्तयोः= वास्तविकौपचारिकयोर्नित्यत्वयोर्नानात्वविभागात्= नानात्वेन विभागात्= परस्परं भेदात् प्रध्वंसे च भाक्तमेव नित्यत्वं न तु तात्त्विकमिति आदिमत्त्वहेतोरव्यभिचारः= अनित्यत्वव्यभिचारित्वं नास्तीति सूत्रान्वयः। प्रध्वंसस्योत्पत्तिमत्त्वात् तात्त्विकं नित्यत्वं नोपपद्यते– उत्पत्तिविनाशरहितस्यैवात्मादेस्तात्त्विकनित्यत्वस्वीकारात्. प्रध्वंसे च यद् विनाशराहित्यान्नित्यत्वमुच्यते तद् भाक्तमेवेत्याशयः। अत्र– "तत्त्वस्य= पारमार्थिकस्य भाक्तस्य च नानात्वस्य= भेदस्य विभागात्= विवेकान्न व्यभिचारः" इतिवृत्तिः। भवता नित्यत्वस्य तत्त्वम्= स्वरूपं किं ज्ञातमिति जिज्ञासया व्याचष्टे– नित्यमिति। नित्यत्वस्वरूपमाह– अर्थेति, अनुत्पत्तिधर्मकस्य= उत्पत्तिरहितस्याऽर्थान्तरस्य= पदार्थस्य यद् आत्महानानुपपत्तिः= स्वरूपविनाशराहित्यं तदेव नित्यत्वं वास्तविकं तत्त्वभूतं तत्= एतादृशं च नित्यत्वं प्रध्वंसे नोपपद्यते– उत्पत्तिमत्त्वात्, किं तु भाक्तं नित्यत्वमित्याह– भाक्तमिति, प्रध्वंसनित्यत्वस्य भाक्तत्वमुपपादयति– यदिति, यद्= घटादि आत्मानमहासीत्= स्वरूपेण नष्टः, उक्तं व्याचष्टे– यद् भूत्वेति, यत्= घटादि भूत्वा= उत्पद्य न भवति= विनश्यति तत्= विनष्टं घटादि पुनर्न जायते इत्येतावन्मात्रेण प्रध्वंसस्य नित्यत्वमुच्यते इति भाक्तमेव नित्यत्वं तदाह– तत्रेति, घटाभावो नित्यसदृशः सन् नित्य इत्यु-

यदपि 'सामान्यनित्यत्वात्' इति. इन्द्रियप्रत्यासत्तिग्राह्यम् ऐन्द्रियकम् इति—

सन्तानानुमानविशेषणात् ॥ १६ ॥

'नित्येष्वव्यभिचारः' इति प्रकृतम्, नेन्द्रियग्रहणसामर्थ्यात् शब्दस्यानित्यत्वम् । किं तर्हि ?, इन्द्रियप्रत्यासत्तिग्राह्यत्वात् संतानानुमानं तेनानित्यत्वमिति ॥ १६ ॥

यदपि– 'नित्येष्वप्यनित्यवदुपचारात्' इति. न—

कारणद्रव्यस्य प्रदेशशब्देनाभिधानाद् नित्येष्वप्यव्यभिचार इति ॥१७॥

च्यते– विनाशराहित्यमात्रादित्ययं पदार्थः= तत्त्वमस्तीति प्रध्वंसस्य भाक्तनित्यत्वं प्राप्तमिति न तात्त्विकनित्यत्वमिति आदिमत्त्वस्य प्रध्वंसवृत्तित्वेनापि अनित्यत्वव्यभिचारित्वं नापद्यते इति सिद्धमादिमत्त्वात् शब्दस्यानित्यत्वमित्यर्थः । उपसंहरति– तत्रेति, यथाजातीयकः= उत्पत्तिविनाशधर्मकः किं वा सत्त्वासत्त्वविशिष्टः किं वा उपलब्ध्यनुपलब्धिविशिष्ट इत्यर्थः । यदि शब्दसदृशं किंचित् कार्यं नित्यं स्यात्तदा तत्रोत्पत्तिमत्त्वस्य वृत्तित्वेन व्यभिचारित्वं स्यादपि न चैवमस्तीत्यव्यभिचार इत्युत्पत्तिमत्त्वेन शब्दस्यानित्यत्वं सिद्धमित्यर्थः ॥ १५ ॥

यचैन्द्रियकत्वहेतोः सामान्येऽनित्यत्वव्यभिचारित्वमुक्तं तन्निराकरोति, यदपीत्यादिना । "सामान्यनित्यत्वात्" इत्यनेन नित्ये सामान्ये वर्तमानत्वेनैन्द्रियकत्वस्यानित्यत्वव्यभिचारित्वं यदुक्तं तन्नोपपद्यते– वक्ष्यमाणहेतोरित्यर्थः । यद् इन्द्रियसंबन्धग्राह्यं तद् ऐन्द्रियकमित्युच्यते सामान्यमपीन्द्रियसंबन्धग्राह्यमिति तत्र नित्यभूते सामान्ये ऐन्द्रियकत्वं व्यभिचरतीति हेतोः प्रकृतसूत्रेण व्यभिचारनिवृत्त्यर्थमैन्द्रियकत्वे विशेषणान्तरं प्रदीयते इत्याशयः । किं वा 'तदनुपपन्नम्' इति वाक्यशेषः । संतानेति– संतानस्यानुमानविशेषणत्वादित्यन्वयः, संतानशब्दोऽत्र सामान्यवत्त्वपरः अनुमानशब्दश्च ऐन्द्रियकत्वहेतुपरः तयोर्विशेषणविशेष्यभावश्च– सामान्यवत्त्वे सति ऐन्द्रियकत्वम् इत्येवम्, तथा च नैन्द्रियकत्वमात्रेण शब्दस्यानित्यत्वं साध्यते येनोक्तरीत्या व्यभिचारः स्यात् किं तु सामान्यवत्त्वे सति ऐन्द्रियकत्वाद् इत्यनेन. अस्ति च शब्दे शब्दत्वं सामान्यं यथा घटत्वादिकं घटादिषु. नित्ये च सामान्ये सामान्यवत्त्वं नास्ति आत्मादौ चैन्द्रियकत्वं नास्तीति सामान्यवत्त्वे सत्यैन्द्रियकत्वादितिहेतुरनित्यत्वव्यभिचारी न संभवतीति तेन शब्दस्यानित्यत्वं सिद्धमिति सूत्रार्थः । अत्र– "संतानस्यानुमाने= अनुमितिकरणे लिङ्गे विशेषणात्. संतानः= संतन्यमानः= एकधर्मावच्छिन्नत्वेन ज्ञायमानस्तेन सामान्यवत्त्वे सतीति विशेषणीयमिति" इति विश्वनाथभट्टाः । व्याचष्टे– नित्ये इति, प्रकृतम्= अनुवर्तनीयम्, ऐन्द्रियकत्वहेतोर्नित्येषु व्यभिचारः= वृत्तित्वं नास्तीत्यर्थः । स्वाभिप्रायमाह– नेति, इन्द्रियग्रहणसामर्थ्यात्= इन्द्रियग्राह्यत्वात्= ऐन्द्रियकत्वमात्रादित्यर्थः । शब्दानित्यत्वसाधकं जिज्ञासते– किमिति । उत्तरमाह– इन्द्रियेति, शब्दस्येन्द्रियप्रत्यासत्तिग्राह्यत्वात् संतानानुमानम्= संतानसमानाधिकरणमनुमानं संतानानुमानं संतानं चात्र सामान्यवत्त्वम् अनुमानं चैन्द्रियकत्वमिति हेतुः तयोः सामानाधिकरण्येन 'सामान्यवत्त्वे सत्यैन्द्रियकत्वात्' इति प्राप्तं तेन= एतादृशेन= सामान्यवत्त्वे सत्यैन्द्रियकत्वादित्यनेन हेतुना शब्दस्यानित्यत्वमुच्यते न चायं हेतुरनित्यत्वव्यभिचारीति तेन शब्दस्यानित्यत्वं सिद्धमित्यर्थः । वस्तुतस्त्वत्र 'सामान्यवत्त्वस्य साधनविशेषणत्वात्' इत्येवं सूत्रं वक्तव्यमासीत् ॥ १६ ॥

कृतकवदुपचारादिति हेतोर्यद् व्यभिचारित्वमुक्तं वदनुवदति– यदपीति । परिहरति– नेति । परिहारहेतुं सूत्रेणाह– कारणेति, कारणद्रव्यस्य= कारणवतो द्रव्यस्य भागविशेषः किं वावयवलक्षणं कारणीभूतं द्रव्यं प्रदेशशब्देनाभिधीयते यथा 'कम्बलप्रदेशः' इति, नित्यानां चाकाशादीनां कारणाभावेन कारणवद्द्रव्यत्वाभावात् प्रदेश एव वस्तुतो नास्ति येनाभिधीयेत तथा चाकाशादिषु 'आकाशप्रदेशः' इत्यादिरनित्यवदुपचारः= प्रदेशव्यवहारो गौण एव न मुख्य इति नित्येषु= आकाशादिषु कृतकवदुप-

'एवमाकाशप्रदेशः आत्मप्रदेशः' इति. नाऽत्राऽऽकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य । कथं ह्यविद्यमानमभिधीयते, अविद्यमानता च प्रमाणतोऽनुपलब्धेः । किं तर्हि तत्राभिधीयते ?, संयोगस्याऽव्याप्यवृत्तित्वम्= परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाऽऽकाशं व्याप्नोति= अव्याप्य वर्तते इति. तदस्य कृतकेन द्रव्येण सामान्यम्, न ह्यामलकयोः संयोग आश्रयं व्याप्नोति, सामान्यकृता च भक्तिः- 'आकाशस्य प्रदेशः' इति, अनेनात्मप्रदेशो व्याख्यातः । संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति । परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति । कस्मात् पुनः सूत्रकारस्याऽस्मिन्नर्थे सूत्रं न श्रूयते इति ?, शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति. तत्र शास्त्रसिद्धान्तात् तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते, शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ॥१७॥

चरादितिहेतोरव्यभिचारः= व्यभिचारो नास्तीति तेन शब्दस्यानित्यत्वं यदुक्तं तत् सिद्धमिति सूत्रार्थः । व्याचष्टे- एवमिति, अयं हि नित्येष्वनित्यवदुपचारस्योक्तस्यानुवादः । स्वाभिप्रायमाह- नात्रेति, अत्र= 'आकाशप्रदेशः' इत्यत्राकाशादेः कारणद्रव्यम्= कारणवद्द्रव्यत्वं अवयवलक्षणं कारणीभूतं द्रव्यं वा नाभिधीयते यथा 'कम्बलप्रदेशः' इत्यत्र कृतकस्य कम्बलस्य कारणद्रव्यमभिधीयते तस्मात् 'आकाशप्रदेशः' इत्युपचारप्रयोगो गौण इति प्राप्तम् । अत्र कारणद्रव्यानभिधाने हेतुमाह- कथमिति, आकाशादिषु अविद्यमानं कारणद्रव्यं कथमभिधीयेत- विद्यमानस्यैवाभिधानसंभवादित्यर्थः । कारणद्रव्यस्याकाशादिष्वविद्यमानतायां हेतुमाह- अविद्यमानतेति, आकाशादीनां नित्यानामवयवलक्षणस्य कारणद्रव्यस्य प्रमाणेनानुपलब्ध्यैवाऽविद्यमानता= असत्त्वं सिद्धमित्यन्वयः । अत्र "अभिधीयते" इत्यत्र 'अभिधीयेत' इतिपाठो युक्तः । 'आकाशप्रदेशः' इत्यत्राभिधेयं जिज्ञासते- किमिति । उत्तरमाह- संयोगस्येति, एतद् व्याचष्टे- परिच्छिन्नेनेति, एतदपि व्याचष्टे- अव्याप्येति, परिच्छिन्नेन द्रव्येण= मेघादिप्रदेशेनाकाशस्य यः संयोगः स आकाशव्यापको न भवतीति तादृशसंयोगाभिप्रायेणैव 'आकाशप्रदेशः' इत्युच्यते, तत्= परिच्छिन्नद्रव्येणाकाशसंयोगस्य यदव्यापकत्वं तदेवास्य= आकाशस्य कृतकद्रव्येण सादृश्यमस्तीत्यन्वयः । कृतकद्रव्याव्यापकत्वमाह- न हीति, यथाऽऽमलकयोः संयोगो नामलकव्यापकस्तथाकाशसंयोगोपि नाकाशव्यापक इति कृतकसादृश्यमाकाशे सिद्धं सामान्यकृता= तादृशसादृश्यकृता च भक्तिः= 'आकाशप्रदेशः' इत्युपचार इति गौण इति मुख्यस्य कृतकवदुपचारस्य नित्येषु न व्यभिचार इति तेनाऽनित्यत्वाव्यभिचारिणा मुख्येन कृतकवदुपचारेण शब्दस्यानित्यत्वं सिध्यतीत्यर्थः । अन्यत्सर्वं पूर्वमुक्तमेव । एवं परिच्छिन्नद्रव्येणात्मसंयोगस्यात्मव्यापकत्वाभावात् कृतकसामान्येन 'आत्मप्रदेशः' इत्युच्यते इति गौण एव न मुख्य इति नात्मन्यपि कृतकवदुपचारो वस्तुतो वर्तते येनानित्यत्वव्यभिचारी स्यादित्याह- अनेनेति । संयोगवदिति- यथोक्तप्रकारेण संयोगस्य व्यापकत्वं नास्ति तथा शब्दादेराकाशव्यापकत्वं बुद्ध्यादीनां चात्मव्यापकत्वं नास्ति अणुत्वमपि नास्ति- इन्द्रियग्राह्यत्वादित्यनित्यत्वं मध्यमपरिमाणादपि सिद्धमित्यर्थः । शब्दे च यः कृतकवदुपचारः स न भाक्त इत्याह- परीक्षिता चेति, शब्दतत्त्वम्= शब्दस्वरूपमेव तीव्रं मन्दं च भवतीति यथार्थेन कृतकवदुपचारेण शब्दस्यानित्यत्वं यदुक्तं तत् सिद्धमित्यर्थः ।

नन्वाकाशात्मानौ निष्प्रदेशौ किं वा शब्दे शब्दत्वं वर्तते इति सूत्राकारेण किं नोक्तमिति जिज्ञासते- कस्मादिति । अत्र- "कतमस्मिन्नर्थे ? निष्प्रदेशमाकाशं निष्प्रदेश आत्मा इत्येतस्मिन्नर्थे, शब्दसंतानप्रतिपादने वा" इति वार्तिकम् । उत्तरमाह- शीलमिदमिति, शीलम्= सौशील्यम् । अधिकरणेषु= स्थलेषु । अव्यवस्थाप्यमानं चेदं पक्षद्वयं नावधार्यते, अत्र- "द्वौ पक्षौ न व्यवस्थापयतीति भाष्यस्यार्थः- निष्प्रदेशत्वमात्मादीनां शब्दसंतानं च साक्षादाचक्षाणः सूत्रकारः पक्षं व्यवस्थापयेत् न तु

अथापि खलु 'इदमस्ति इदं नास्ति' इति कुत एतत् प्रतिपत्तव्यमिति?, प्रमाणत उपलब्धेरनुपलब्धेश्चेति, अविद्यमानस्तर्हि शब्दः—

## प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥

प्रागुच्चारणान्नास्ति शब्दः । कस्मात्? अनुपलब्धेः, सतोऽनुपलब्धिरावरणादिभ्य एतन्नोपपद्यते । कस्मात्?, आवरणादीनामनुपलब्धिकारणानामग्रहणात्= अनेनावृतः शब्दो नोपलभ्यते असंनिकृष्टश्चेन्द्रियव्यवधानाद् इत्येवमादि अनुपलब्धिकारणं न गृह्यते इति, सोयमनुच्चारितो नास्तीति ।

---

तेनेदमेभिहितमिति " इति तात्पर्यटीका, अत्रापि " बहुष्वधिकरणेषु " इति पाठोऽसंगत एव स्यात् तस्मात् मन्ये " द्वौ पक्षौ " इत्यत्र 'स्वपक्षम्' इति पाठोयुक्तस्तस्यैव " द्वौ पक्षौ " इति विकृतिर्जाता. तथा च 'सूत्रकारो बहुष्वधिकरणेषु स्वपक्षं न व्यवस्थापयति तत्र पक्षे शास्त्रसिद्धान्तात्= अनुमानात् तत्त्वावधारणम्= अनुक्तपक्षावधारणं कर्तुमर्हति जिज्ञासुरिति मन्यते' इत्येवं सम्यगन्वयः संभवति, किं वा द्वौ पक्षौ= पूर्वपक्षसिद्धान्तपक्षौ तयोरव्यवस्थापनं च बहुत्र स्पष्टम्, किं वा क्वचित् पूर्वपक्षस्य क्वचित् सिद्धान्तपक्षस्य चाव्यवस्थापनं ज्ञेयम् । शास्त्रसिद्धान्तमाह–शास्त्रसिद्धान्त इति, न्यायसमाख्यातम्= न्यायपदवाच्यं यदनुमतम् अनुमानं तदेव शास्त्रसिद्धान्त इति अनुक्तो विषयोऽनुमानेनावधारणीय इति आत्मादीनां निष्प्रदेशत्वमपि नित्यत्वानुमानेन= नित्यत्वहेतुनावधारणीयम्– नित्यानां निरवयवत्वनियमादित्यर्थः । अत्र– " अनुमानतरोश्च पञ्चानां रूपाणां चतुर्णां वा संपदः शाखा बह्व इत्यर्थः " इति तात्पर्यटीका, तेनानुमानं बहुशाखमित्युक्तम् ॥ १७ ॥

शब्दानित्यत्वसाधनाय जिज्ञासते– अथेति, किं चेत्यर्थः । 'इदमस्ति इदं नास्ति' इत्येतत्= सत्त्वं चासत्त्वं च किं वा इदं नित्यमिदं चानित्यमिति कुतः= कथं प्रतिपत्तव्यमिति वक्तव्यम् । उत्तरमाह– प्रमाणत इति, प्रमाणतो यदुपलभ्यते तस्य सत्त्वं यन्नोपलभ्यते तस्य चासत्त्वं प्रतिपत्तव्यमित्यन्वयः, अत्र सिद्धान्ती स्वाभिप्रायमाह– अविद्यमान इति, यदि यत् प्रमाणतो नोपलभ्यते तस्यासत्त्वं प्रतिपत्तव्यं तर्हि= तदा शब्दोपि अविद्यमानः= असन्= विनाशीति प्राप्तम्– उच्चारणात् पूर्वोत्तरकालयोरनुपलब्धेरित्यर्थः । शब्दस्याऽविद्यमानत्वे सूत्रेण हेतुमाह– प्रागिति, उच्चारणान् प्राक्= पूर्वं शब्दस्यानुपलब्धेरसत्त्वं सिद्धम् । ननु सतोप्यावरणादनुपलब्धिः संभवतीत्याशङ्कयाह– आवरणेति, सतः प्रत्यक्षप्रतिबन्धकं यदावरणादि तदपि शब्दस्य नोपलभ्यते येनानुपलभ्यमानस्यापि शब्दस्य सत्त्वं स्यादिति शब्दो विनाश्येव न नित्य इति सूत्रार्थः । व्याचष्टे– प्रागिति । शब्दासत्त्वस्य ज्ञानकारणं जिज्ञासते– कस्मादिति । उत्तरमाह– अनुपलब्धेरिति । ननु सतोप्यावरणादिनानुपलब्धिः संभवतीत्याशङ्कते– सत इति । एतत् प्रत्याचष्टे– एतदिति, एतत्= आवरणादि । आवरणाद्यनुपपत्तिकारणं जिज्ञासते– कस्मादिति । उत्तरमाह– आवरणादीनामिति, सतोपि शब्दस्यानुपलब्धिकारणानाम् । उक्तं व्याचष्टे– अनेनेति, येन शब्दः सन्नपि आवृतः स नोपलभ्यते किं वा 'अनेनावृतः शब्द इति नोपलभ्यते= न ज्ञायते' इत्यन्वयः, यदि सन्नपि शब्द इन्द्रियव्यवधानाद् असंनिकृष्टः= इन्द्रियासंबद्ध इति नोपलभ्यते इत्युच्यते तदापीन्द्रियव्यवधानकारणमावरणादिकमेव स्यात् तच्च नोपलभ्यते इत्याह– असंनिकृष्ट इति, पुनरुक्तमिदं वाक्यम्, एवमादि= आवरणादि । उपसंहरति– सोयमिति, सोयम्= उच्चारणेन श्रूयमाणः शब्दः अनुच्चारितः= उच्चारणात् प्राक् पश्चाच्च नास्तीति सिद्धम् । यदि शब्दस्यावरकं किंचित्स्यात् तदाऽनुपलभ्यमानस्यापि सत्त्वं स्यात् न चावरकमस्ति न चोच्चारणात् पूर्वोत्तरकालयोः शब्द उपलभ्यते इति शब्दस्य विनाशित्वं सिद्धमित्यर्थः ।

उच्चारणमस्य व्यञ्जकं तदभावात् प्रागुच्चारणादनुपलब्धिरिति । किमिदमुच्चारणं नामेति?, विवक्षाजनितेन प्रयत्नेन कोष्ठ्यस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघाताद् वर्णाभिव्यक्तिरिति । संयोगविशेषो वै प्रतिघातः प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वं तस्मान्न व्यञ्जकाभावादग्रहणम् अपि त्वभावादेवेति. सोयमुच्चार्यमाणः श्रूयते श्रूयमाणश्चाऽभूत्वा भवति इत्यनुमीयते. ऊर्ध्वं चोच्चारणान्न श्रूयते स भूत्वा न भवति= अभावान्न श्रूयते इति । कथम्?. "आवरणाद्यनुपलब्धेः" इत्युक्तं तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १८ ॥

एवं च सति तत्त्वं पांशुभिरिवाऽऽकिरन्निदमाह—

## तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥

यद्यनुपलम्भादावरणं नास्ति?. आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति. तस्या अभावादप्रतिषिद्धमावरणमिति । कथं पुनर्जानीते भवान् नावरणानुपलब्धिरुपलभ्यते ? इति ।

---

पूर्वपक्षी स्वमतमाह– उच्चारणमिति, अस्य= शब्दस्य, तदभावात्= उच्चारणाभावात् , व्यञ्जकाभावेऽनुपलब्धिः स्पष्टैव, यथा प्रकाशाभावे रूपस्यानुपलब्धिः । सिद्धान्ती उच्चारणस्वरूपं जिज्ञासते– किमिदमिति । उत्तरमाह– विवक्षेति, वक्तुमिच्छा विवक्षा तज्जन्येन प्रयत्नेन प्रेरितस्य कोष्ठ्यस्य= आन्तरस्य वायोः कण्ठादिभिः सह प्रतिघातो भवति तदेवोच्चारणं तस्मात् यथास्थानम्= वर्णानां व्यवस्थितेन कण्ठादिस्थानेन वायोः प्रतिघाताद् वर्णस्याभिव्यक्तिर्भवति न तूत्पत्तिरिति शब्दस्य नित्यत्वं प्राप्तमित्यर्थः । एतत् सिद्धान्ती प्रत्याचष्टे– संयोगेति, कण्ठादिस्थानेन वायोर्यः प्रतिघात उक्तः स संयोगविशेष एव संयोगस्य च शब्दव्यञ्जकत्वं त्रयोदशसूत्रभाष्ये प्रतिषिद्धमेव तस्मात् शब्दस्य यदग्रहणम्= अनुपलब्धिः सा व्यञ्जकाभावप्रयुक्ता नास्ति किं तु शब्दाभावप्रयुक्तैवेति सिद्धं शब्दस्य विनाशित्वमित्यर्थः । उपसंहरति– सोऽयमिति, सोयं शब्द उच्चार्यमाणः= उच्चारणकाले श्रूयते न पूर्वमपीति श्रूयमाणोप्यऽभूत्वा= पूर्वमऽविद्यमान एव भवति= जायते= उत्पद्यते, तदनेन शब्दस्योत्पत्तिमत्त्वं प्रतिपादितं तस्मादुच्चारणात् पूर्वमऽभावादेव शब्दो न श्रूयते इत्युच्चारणेनोत्पद्यते शब्द इत्यनुमीयते इत्यन्वयः । विनाशानुमानमाह– ऊर्ध्वमिति, यथोच्चारणात्= प्राक् न श्रूयते तथा ऊर्ध्वम्= अनन्तरमपि न श्रूयते तस्मात् शब्दस्योच्चारणात् पूर्वं प्रागभाव ऊर्ध्वं च प्रध्वंसः सिद्ध इति सः= शब्दः उच्चारणेन भूत्वा= उत्पद्य तदनन्तरं नभवति= विनश्यति इति विनाशित्वमपि सिद्धम् , एतद् व्याचष्टे– अभावादिति, यतः शब्द उच्चारणात् पूर्वोत्तरकालयोर्न श्रूयते न चावरणमप्युपलभ्यतेऽतः स्वाऽभावादेव न श्रूयते इत्यनुमीयते इत्यन्वयः । 'अभावान्न श्रूयते' इत्युक्ते कारणं जिज्ञासते– कथमिति । उत्तरमाह– आवरणेति । आवरणाद्यभावेप्यनुपलभ्यमानस्याऽभावोऽवश्यम्भावीत्यर्थः । उपसंहरति– तस्मादिति, उत्पत्तितिरोभावधर्मकः= उत्पत्तिविनाशवान् शब्दो न नित्य इति सिद्धम् ॥ १८ ॥

अग्रिमसूत्रमवतारयति– एवं चेति, एवं च सति= संप्रति, तत्त्वम्= सिद्धं शब्दानित्यत्वम् । पांशुभिः धूलिप्रक्षेपेण । अग्रिमसूत्रद्वयेन जात्युत्तरं पूर्वपक्षी वदतीत्यर्थः, अत्र "जातिवादिनः सूत्रद्वयम्" इति तात्पर्यटीका । तदिति– या हि तत्= तस्य= शब्दावरणस्यानुपलब्धिरुक्ता सा नोपलभ्यते इति आवरणानुपलब्धेरनुपलम्भात् आवरणोपपत्तिः= शब्दावरणमुपपन्नं तथा चोच्चारणात् पूर्वोत्तरकालयोः सन्नपि शब्द आवरणेनावृतत्वान्नोपलभ्यते इति सिद्धं शब्दस्य नित्यत्वमिति सूत्रार्थः । यस्य पदार्थस्यानुपलब्धिर्न सिध्यति तस्य सत्त्वं सिध्यतीति शब्दावरणस्यापि अनुपलब्धेरसिद्ध्या सत्त्वं सिद्धमित्याशयः । व्याचष्टे– यदीति, आवरणम्= शब्दावरणम् । प्रतिबन्द्युत्तरमाह– आवरणेति, अनुपलभ्यमानाया आवरणानुपलब्धेरपि असत्त्वं सिद्धमावरणवदित्यर्थः, अन्यथा ह्यनुपलभ्यमानस्यावरणस्याप्यसत्त्वं न स्यादित्याशयः । पर्यवसितमाह– तस्या इति, तस्याः= आवरणानुपलब्धेरभावादावरणमप्रतिषिद्धम्= सिद्धमित्य

किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात् । समानम्= अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते- 'नावरणमुपलभे' इति, यथा कुड्येनावृतस्याऽऽवरणमुपलभमानः प्रत्यात्ममेव संवेदयते, सेयमावरणोपलब्धिवद् आवरणानुपलब्धिरपि संवेद्यैवेति, एवं च सत्यऽपहृतविषयमुत्तरवाक्यमस्तीति ॥ १९ ॥

अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

## अनुपलम्भादप्यनुपलब्धिसद्भाववद् नाऽऽवरणानुपपत्तिरनुपलम्भात् ॥ २० ॥

यथाऽनुपलभ्यमानाप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति । यद्यभ्यनुजानाति भवान्- 'नानुपलभ्यमानाऽऽवरणानुपलब्धिरस्ति' इति. अभ्यनुज्ञाय च वदति- 'नास्त्यावरणमनुपलम्भात्' इत्येतत्. एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यते इति ॥ २० ॥

र्थस्तथा चावरणवशादेव सन्नपि शब्दो नोपलभ्यते इति शब्दनित्यत्वं सिद्धम् । आवरणानुपलब्धेरभावज्ञानकारणं सिद्धान्ती जिज्ञासते- कथमिति, शब्दनित्यत्ववादी भवान् आवरणानुपलब्धेरनुपलब्धिम्= अभावं कथं जानीते इत्यर्थः । पूर्वपक्षी उत्तरमाह- किमत्रेति, आवरणानुपलब्धिर्नोपलभ्यते इत्यत्र ज्ञेयं गूढं किमपि नास्ति- प्रत्यात्मवेदनीयत्वात्= सर्वजनप्रसिद्धत्वादित्यन्वयः, शब्दावरणानुपलब्धिर्नोपलभ्यते इति सर्वजनप्रसिद्धमेव तेनावरणोपलब्धिः सिद्धा तया चावरणं सिद्धं तेन शब्दनित्यत्वं सिद्धमित्यर्थः । अत्र सिद्धान्ती प्रतिबन्द्युत्तरमाह- समानमिति, यथावरणानुपलब्धिर्नोपलभ्यते तथावरणमपि नोपलभ्यते इति समानमेवेत्यर्थस्तथा चावरणानुपलब्ध्या शब्दाश्रवणस्य शब्दासत्त्वमूलकत्वेन शब्दानित्यत्वं सिद्धमित्यर्थः । उक्तं साम्यमेव व्याचष्टे- अयमिति, अयम्= शब्दानित्यत्ववादी शब्दावरणमनुपलभमानः 'नावरणमुपलभे' इति प्रत्यात्ममेव= सर्वप्रसिद्धमेव आवरणानुपलम्भादावरणाभावमपि संवेदयते. अत्र दृष्टान्तमाह- यथेति, कुड्यलक्षणमावरणं यथा प्रत्यात्ममेव= सर्वप्रसिद्धमेव संवेदयते तथा । उपसंहरति- सेयमिति, यथावरणोपलब्धिर्वेद्यास्ति तथावरणानुपलब्धिरपि वेद्यास्ति आवरणानुपलब्ध्या चाश्रूयमाणस्य शब्दस्याऽसत्त्वापत्त्योक्तरीत्या ह्यनित्यत्वं सिद्धमित्यर्थः- विपक्षे विनिगमनाविरहात् । पर्यवसितमाह- एवमिति, एवम्= अनेन प्रकारेणावरणानुपलब्ध्यावरणाभावे सिद्धे उत्तरवाक्यम्= एतत्सूत्रात्मकं जात्युत्तरम्= आवरणोपपत्तिप्रतिपादनम् अपहृतविषयम्= निरस्तविषयम्= प्रत्याख्यातम्= मिथ्याभूतमस्तीति विज्ञेयमित्यन्वयः । अत्र-" अत्र सिद्धान्ती पृच्छति- कथं पुनरिति, जातिवाद्याह- किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वादिति, सिद्धान्त्याह- एवं सतीति, उत्तरवाक्यमिति- जात्युत्तरवाक्यमित्यर्थः " इति तात्पर्यटीका ॥ १९ ॥

अग्रिमसूत्रमवतारयति- अभ्यनुज्ञेति, जातिवादिना= पूर्वपक्षिणा जातिमाश्रित्य अभ्यनुज्ञावादेन= हठात् स्वीकृतपक्षेणोच्यते इत्यर्थः । अत्र- " ननु पूर्वेणैव सूत्रेणावरणोपपत्तौ दर्शितायां कृतमनुपलम्भादित्यनेन सूत्रेणेत्यत आह- अभ्यनुज्ञावादेनेति " इति तात्पर्यटीका । अनुपलम्भादिति- आवरणानुपलब्धेरनुपलम्भात्= अनुपलम्भेपि यथा सद्भावः= सत्त्वं स्वीक्रियते तथा शब्दावरणस्यापि अनुपलम्भात्= अनुपलम्भेपि सद्भावः स्वीकार्य इति शब्दावरणस्यानुपपत्तिर्नास्ति तथा च शब्दः सन्नपि उच्चारणाभावकाले आवरणवशान्नोपलभ्यते इति शब्दस्य नित्यत्वं प्राप्तमिति सूत्रार्थः । व्याचष्टे- यथेति, प्रकृतमाह- एवमिति, असद्भावसाधकस्यानुपलभ्यमानत्वस्य आवरणानुपलब्धाविव आवरणेपि सत्त्वादेव. अन्यथावरणानुपलब्धेरपि सत्त्वं न स्यादित्यर्थः । अत्र तार्किकसौहार्देन व्यतिरेकमाह- यदीति, भवान्=

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

यदुपलभ्यते तदस्ति. यन्नोपलभ्यते तन्नास्तीति अनुपलम्भात्मकम् असदिति व्यवस्थितम्, उपलब्ध्यभावश्चाऽनुपलब्धिरिति सेयमभावत्वान्नोपलभ्यते सच्च खल्वावरणं तस्योपलब्ध्या भवितव्यं न चोपलभ्यते तस्मान्नास्तीति । तत्र यदुक्तम्- "नावरणानुपपत्तिरनुपलम्भात्" इति अयुक्तमिति ॥ २१ ॥

अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद् हेतोः प्रतिजानीते?—

अस्पर्शत्वात् ॥ २२ ॥

अस्पर्शमाकाशं नित्यं दृष्टमिति तथा च शब्द इति ॥ २२ ॥

---

शब्दानित्यत्ववादी यदऽभ्यनुजानाति= निश्चिनोति, अभ्यनुज्ञेयमाह- नेति, 'आवरणानुपलब्धिरनुपलभ्यमानत्वान्नास्ति' इत्यभ्यनुजानाति. अनुपलभ्यमानत्वादेवावरणानुपलब्धेरसत्त्वमभ्यनुज्ञाय च 'शब्दावरणं नास्ति- अनुपलभ्यमानत्वादेव आवरणानुपलब्धिवत्' इत्येतत् वदति भवान्. तदा एतस्मिन्नपि अभ्यनुज्ञावादे= अभ्यनुज्ञापक्षे प्रतिपत्तिनियमः= त्वदुक्तनियमः= आवरणाभावो नोपपद्यते तथा हि यद्यावरणानुपलब्धिर्नास्ति तदावरणोपलब्धिः स्यादेवेत्यावरणसद्भावः सिद्धः, यदि चावरणानुपलब्धिरनुपलभ्यमानाप्यस्ति तदावरणानुपलब्धिवदावरणमप्यनुपलभ्यमानमप्यस्तीति सिद्धमित्यावरणाभावो नोपपद्यते तथा च सन्नपि शब्दोऽनुच्चारणकाले आवरणवशान्नोपलभ्यते न तु स्वाभावादिति सिद्धं शब्दस्य नित्यत्वमित्यर्थः ॥ २० ॥

पूर्वसूत्रद्वयोक्तं कुचोद्यं परिहरति- अनुपलम्भेति, आवरणस्यानुपलब्धेरनुपलम्भात्मकत्वात्= उपलम्भाभावरूपत्वात्= उपलब्ध्यभावरूपत्वादेवानुपलम्भोऽस्ति न चानुपलम्भोऽनुपलभ्यमानस्य सत्त्वसाधको भवति येनावरणस्य सत्त्वसाधकं स्यात् तथा चाऽऽवरणानुपलब्ध्यनुपलम्भः आवरणसद्भावस्य अहेतुः= न साधकः संभवतीत्यन्वयः, आवरणानुपलब्धिर्हि आवरणोपलब्ध्यभाव एव आवरणोपलब्धेश्चाभावे सिद्धे आवरणस्य सत्त्वापत्तिर्नास्ति अन्यथा घटोपलब्ध्यभावेन घटस्यापि सत्त्वमापद्येत न चैवमस्तीति आवरणानुपलब्धिसत्त्वेनापि तद्वदावरणस्य सत्त्वापत्तिर्नास्तीति सूत्रार्थः । व्याचष्टे- यदिति, अनुपलम्भात्मकम्= अनुपलभ्यमानं किं वा उपलम्भाभावः अभावत्वादेवासदिति व्यवस्थितमस्ति । प्रकृतमाह- उपलब्धीति, अनुपलब्धिर्हि उपलब्ध्यभाव एवेति सेयम्= आवरणानुपलब्धिरपि अभावत्वात्= अभावरूपत्वादेव चाक्षुषादिप्रत्यक्षेण नोपलभ्यते. शब्दावरणं तु सत्= भावस्वरूपमस्तीति तस्य= आवरणस्य उपलब्ध्या भवितव्यम्- भावपदार्थस्य प्रत्यक्षेणोपलम्भसंभवात् न चावरणमुपलभ्यते तस्माद् ज्ञायते शब्दावरणं नास्तीति तत्र= एवमावरणाभावे सिद्धेपि यत्पूर्वसूत्रेणोक्तम्- "नावरणानुपपत्तिरनुपलम्भात्" इति तद् अयुक्तमेव- आवरणानुपपत्तेः प्रदर्शितत्वेन आवरणानुपपत्तेरभावस्यासंभवात्, तथा च शब्दस्यावरणं नास्त्येव येन सन्नपि शब्दो नोपलभ्येत किं तु अनुपलभ्यमानः शब्दः स्वाभावादेव नोपलभ्यते इति उत्पत्तिविनाशधर्मकत्वादनित्यः शब्द इति सिद्धमित्यर्थः ॥ २१ ॥

तार्किकः शब्दनित्यत्वसाधकं हेतुं जिज्ञासते- अथेति । अत्र- "विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नः" "न च विप्रतिपत्तिः प्रमाणमन्तरेण युक्तेति नित्यत्वे प्रमाणं वक्तव्यमित्यत आह" इति वार्तिकम्, अत्र शब्दस्य नित्यत्वानित्यत्वयोर्विप्रतिपत्तिः । सूत्रेणोत्तरमाह- अस्पर्शत्वादिति, शब्दः नित्यः अस्पर्शत्वात्= स्पर्शगुणरहितत्वादाकाशवदिति सूत्रार्थः । व्याचष्टे- अस्पर्शत्वान्नित्यः शब्दः । स्पष्टमन्यत् ॥ २२ ॥

सोऽयमुभयतः सव्यभिचारः- स्पर्शवांश्चाणुर्नित्यः. अस्पर्शं च कर्माऽनित्यं दृष्टम् । "अस्पर्शत्वात्" इत्येतस्य साध्यसाधर्म्येणोदाहरणम्—

न- कर्माऽनित्यत्वात् ॥ २३ ॥

साध्यवैधर्म्येणोदाहरणम्—

न- अणुनित्यत्वात् ॥ २४ ॥

उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥ २४ ॥

अयं तर्हि हेतुः—

संप्रदानात् ॥ २५ ॥

संप्रदीयमानमवस्थितं दृष्टं संप्रदीयते च शब्द आचार्येणान्तेवासिने तस्मादवस्थित इति ॥ २५ ॥

तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

उक्तहेतोर्व्यभिचारित्वमाह- सोयमिति, अयम्= 'अस्पर्शत्वात्' इतिहेतुः उभयतः= अन्वयव्याप्त्या व्यतिरेकव्याप्त्या च व्यभिचारी, स्वाभिमतव्यतिरेकव्याप्त्या व्यभिचारमुदाहरति- स्पर्शवानिति, यत्राऽस्पर्शत्वं नास्ति तत्र नित्यत्वमपि नास्तीति व्यतिरेकव्याप्तिरपि नास्ति- परमाणौ व्यभिचारात्= परमाणौ अस्पर्शत्वस्याऽभावेपि नित्यत्वस्य सत्त्वात्. परमाणोः सस्पर्शपदार्थत्वात् । अन्वयव्याप्त्या व्यभिचारमुदाहरति- अस्पर्शमिति, यत्राऽस्पर्शत्वं तत्र नित्यत्वमित्यन्वयव्याप्तिरपि नास्ति- कर्मणि= क्रियायां व्यभिचारात्- कर्मणि अस्पर्शत्वस्य सत्त्वेपि नित्यत्वस्याऽसत्त्वात् क्रियाया अनित्यपदार्थत्वादित्यर्थः । एवमस्पर्शत्वहेतोर्नित्यत्वव्यभिचारित्वमुपपाद्य अग्रिमसूत्रमवतारयति- अस्पर्शत्वादिति, साध्यसाधर्म्येण= अन्वयव्याप्त्या उदाहरणम्= प्रत्युदाहरणं किं वा व्यभिचारोदाहरणं वक्ष्यमाणं कर्मेत्यर्थः । नेति- अस्पर्शत्वहेतुना शब्दस्य नित्यत्वं न संभवति- कर्मानित्यत्वात्= अस्पर्शस्यापि कर्मणोऽनित्यत्वात्, नित्यत्वाभाववत्यपि कर्मणि अस्पर्शत्वस्य सत्त्वेन नित्यत्वव्यभिचारित्वादित्यर्थः । भाष्यमत्र नास्ति- सूत्रस्य स्पष्टार्थत्वात् ॥ २३ ॥

अग्रिमसूत्रमवतारयति- साध्येति, साध्यवैधर्म्येण= व्यतिरेकव्याप्त्या उदाहरणम्= प्रत्युदाहरणं किं वा व्यभिचारोदाहरणं परमाणुरित्यर्थः । नेति- अस्पर्शत्वहेतुना शब्दस्य नित्यत्वं न संभवति- अणुनित्यत्वात्= अस्पर्शत्वरहितस्यापि परमाणोर्नित्यत्वात्. यन्नित्यं तदस्पर्शमित्यस्याः यत्रास्पर्शत्वं नास्ति तत्र नित्यत्वं नास्ति इत्यस्याश्च व्याप्तेः परमाणौ व्यभिचारादिति सूत्रार्थः । व्याचष्टे- उभयेति, उभयस्मिन्नुदाहरणे= कर्मणि परमाणौ च, व्यभिचारश्च प्रदर्शितः, न हेतुः= अस्पर्शत्वं शब्दनित्यत्वसाधकं न संभवतीत्यर्थः ॥ २४ ॥

अग्रिमं पूर्वपक्षसूत्रमवतारयति- अयमिति, यदि सव्यभिचारादस्पर्शत्वं न हेतुस्तर्हि अयम्= संप्रदानादिति शब्दनित्यत्वस्य हेतुः= साधक इत्यन्वयः । संप्रदानादिति- नित्यः शब्दः संप्रदानात्= प्रदानकर्मत्वादिति सूत्रान्वयः । व्याचष्टे- संप्रदीयमानमिति, संप्रदीयमानं धनादिकमवस्थितम्= अक्षणिकं दृष्टम् । प्रकृतमाह- संप्रदीयते इति, अन्तेवासिने= छात्राय । उपसंहरति- तस्मादिति, शब्द इतिशेषः, शब्दस्य संप्रदीयमानत्वेनाऽक्षणिकत्वे प्राप्ते उच्चारणानन्तरमपि स्थितौ सिद्धायां तदनन्तरं विनाशकारणासंभवान्नित्यत्वं भविष्यतीत्यर्थः ॥ २५ ॥

उक्तं प्रत्याचष्टे- तदन्तरालेति, तत्= तयोः= छात्राचार्ययोः अन्तराले= मध्यप्रदेशे शब्दस्यानुपलब्धेः- अनुपलभ्यमानत्वात् संप्रदीयमानत्वमेव नास्तीति किं वाऽवस्थितत्वं नास्तीति संप्रदा... इति

येन संप्रदीयते यस्मै च तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते?, संप्रदीयमानो ह्यवस्थितः संप्रदातुरपैति संप्रदानं च प्राप्नोति इत्यवर्जनीयमेतत् ॥ २६ ॥

## अध्यापनादप्रतिषेधः ॥ २७ ॥

अध्यापनं लिङ्गम्- असति संप्रदानेऽध्यापनं न स्यादिति ॥ २७ ॥

## उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥

समानमध्यापनमुभयोः पक्षयोः- संशयानिवृत्तेः- किमाचार्यस्थः शब्दोऽन्तेवासिनमापद्यते तदध्यापनम्? आहो स्वित् नृत्योपदेशवद् गृहीतस्यानुकरणम् अध्यापनम्? इति, एवमध्यापनमलिङ्गं संप्रदानस्येति ॥ २८ ॥

अयं तर्हि हेतुः—

## अभ्यासात् ॥ २९ ॥

अहेतुः= शब्दनित्यत्वासाधकइति सूत्रान्वयः । व्याचष्टे- येनेति, येन= आचार्येण. यस्मै= छात्राय. शब्दः इतिशेषः, तयोः= छात्राचार्ययोः, अस्य= शब्दस्य, केन लिङ्गेनोपलभ्यते ? न केनापीत्यर्थः । स्वाभिप्रायमाह- संप्रदीयमान इति, संप्रदीयमानोऽवस्थितो धनादिः संप्रदातुः= दानकर्तृतः अपैति= निवर्तते संप्रदानम्= ग्रहीतारं च प्राप्नोति इति अवर्जनीयम्= प्रतिपेद्धुमशक्यम्= सर्वलोकप्रसिद्धमस्ति न च शब्दः संप्रदातुराचार्यादपैतीति शब्दे संप्रदीयमानत्वमेव नास्ति येन तेन साध्यसिद्धिः स्यादित्यर्थः । किं च संप्रदीयमानस्यापि धनादेर्नित्यत्वं बाधितमेवेति न संप्रदानादिति हेतुः शब्दनित्यत्वसाधनक्षमः । आचार्येण च शब्द उपदिश्यते न प्रदीयते ॥ २६ ॥

उक्तं पूर्वपक्षी प्रत्याचष्टे- अध्यापनादिति, संप्रदीयमानत्वस्य शब्दे अप्रतिषेधः= प्रतिषेधो नोपपद्यते- अध्यापनात्= यदि शब्दस्य संप्रदानं न स्यात्तदाऽध्यापनं न स्यात् भवति चाध्यापनं तेन शब्दे संप्रदीयमानत्वं सिद्धं तेन चावस्थितत्वं सिद्धमिति सूत्रार्थः । किं वा शब्दे यत्संप्रदीयमानत्वं तदध्यापनस्वरूपमेव तस्य च प्रतिषेधो नोपपद्यते इति सूत्रार्थः । व्याचष्टे- अध्यापनमिति, लिङ्गम्= शब्दसंप्रदानस्य लिङ्गम्= साधकम् । विपक्षे बाधकमाह- असतीति, असति संप्रदाने= संप्रदानासंभवे इत्यर्थः । स्पष्टमन्यत् ॥ २७ ॥

उक्तपूर्वपक्षं प्रत्याचष्टे- उभयोरिति, शब्दे संप्रदीयमानत्वमस्तीत्येकः पक्षः नास्तीति द्वितीयः पक्षः एतयोरुभयोरपि पक्षयोर्मध्ये अन्यतरस्य= कस्याप्येकस्य पक्षस्याध्यापनात् प्रतिषेधो नोपपद्यते- उभयोरपि पक्षयोरध्यापनस्य समानत्वात्= यथा शब्दस्य संप्रदीयमानत्वपक्षेऽध्यापनमुपपद्यते तथाऽसंप्रदीयमानत्वपक्षेप्यध्यापनमुपपद्यते- स्वज्ञातशब्दसदृशशब्दस्योपदेशार्थमिति नाध्यापनात् शब्दे संप्रदीयमानत्वं सिध्यतीति सूत्रार्थः । व्याचष्टे- समानमिति । अध्यापनसाम्ये हेतुमाह- संशयेति, एकतरपक्षस्य नियामकाभावादित्यर्थः । पक्षद्वये प्रथमपक्षमाह- किमिति, आचार्येण शब्दस्य यत् संप्रदानं किं तद् अध्यापनमित्यर्थः, द्वितीयपक्षमाह- आहो इति, गृहीतस्य= आचार्येणोच्चारितस्य, अनुकरणम्= आचार्यवदुच्चारणम् । नृत्येति- नृत्यं हि क्रिया सा च नावस्थिता संभवति- क्षणिकत्वादिति नृत्योपदेशे हि आचार्यकृतचेष्टाया अनुकरणमेव संभवति न संप्रदानमिति तद्वदध्यापनेपि आचार्योच्चारणस्यानुकरणमेवेत्यर्थः । उपसंहरति- एवमिति, एवम्= उक्तरीत्योभयोरपि पक्षयोरध्यापनस्य समानत्वादध्यापनं शब्दसंप्रदानस्य साधकं न संभवतीत्यर्थः । पक्षद्वयं चोक्तमेव ॥ २८ ॥

अग्रिमसूत्रमवतारयति- अयमिति, शब्दनित्यत्वे अयम्= अभ्यासादिति हेतुः । पूर्वपक्षी शब्दनित्यत्वे हेत्वन्तरमाह- अभ्यासादिति, अभ्यस्यमानत्वादित्यर्थः, नित्यः शब्दोऽभ्यस्यमानत्वात् , अभ्य-

अभ्यस्यमानमवस्थितं दृष्टम्– 'पञ्चकृत्वः पश्यति' इति रूपमवस्थितं पुनः पुनर्दृश्यते, भवति च शब्देऽभ्यासः– 'दशकृत्वोऽधीतोऽनुवाकः विंशतिकृत्वोऽधीतः' इति, तस्मादवस्थितस्य पुनः पुनरुच्चारणम् अभ्यास इति ॥ २९ ॥

न– अन्यत्वेप्यभ्यासस्योपचारात् ॥ ३० ॥

अनवस्थानेप्यभ्यासस्याऽभिधानं भवति– 'द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवान्' इति 'द्विरनृत्यत् त्रिरनृत्यत्' 'द्विरग्निहोत्रं जुहोति' 'द्विर्भुङ्क्ते' (इति) ॥ ३० ॥

एवं व्यभिचारात् प्रतिपिद्धहेतौ अन्यशब्दस्य प्रयोगः प्रतिषिध्यते—

अन्यदन्यस्मादऽनन्यत्वादनन्यदित्यऽन्यताऽभावः ॥ ३१ ॥

यदिदम् 'अन्यत्' इति मन्यसे तत् स्वात्मनोऽनन्यत्वादन्यन्न भवति एवमन्यताया अभावः, तत्र यदुक्तम्– 'अन्यत्वेप्यभ्यासोपचारात्' इति एतदयुक्तमिति ॥ ३१ ॥

---

स्यमानत्वं हि पुनःपुनःक्रियमाणक्रियाविषयत्वं तच्च स्थिरस्यैव संभवति न क्षणिकस्येति शब्दस्याभ्यस्यमानत्वेन स्थिरत्वे प्राप्ते कालान्तरे विनाशकारणासंभवान्नित्यत्वं सिध्यतीति सूत्रार्थः । व्याचष्टे– अभ्यस्येति । उदाहरति– पञ्चेति, रूपमिति शेषः, पञ्चकृत्वो दर्शनं हि दर्शनाभ्यास एव तद्विषयस्य रूपस्यावस्थितत्वं प्रसिद्धमेव. क्षणिकस्य द्वितीयादिक्षणे विनाशेन द्वितीयदर्शनादिविषयत्वं नोपपद्यते इत्यर्थः । प्रकृतमाह– भवतीति । शब्दाभ्यासमुदाहरति दशेति, दशवारमधीतो विंशतिवारमधीतोनुवाक इत्यर्थः, अनुवाकश्च वेदभागविशेषः शब्दसमुदायात्मक एव. दशवारमध्ययनं च शब्दाभ्यास एव तद्विषयत्वात् शब्दस्यावस्थितत्वं सिद्धं रूपवत् । उपसंहरन् शब्दाभ्यासस्वरूपमाह– तस्मादिति, तस्मात् शब्दोऽवस्थित इत्यर्थः । स्पष्टमन्यत् ॥ २९ ॥

उक्तपूर्वपक्षं प्रत्याचष्टे– नेति, अभ्यासादभ्यस्यमानस्य स्थिरत्वं न संभवति– अन्यत्वेपि= अस्थिरत्वेन भेदेपि अभ्यासस्य उपचारात्= संभवात्. तथा च शब्दस्याऽस्थिरत्वेप्यभ्याससंभवान्नाऽभ्यासात् शब्दस्य नित्यत्वापत्तिरिति सूत्रान्वयः । व्याचष्टे– अनवस्थानेपीति, अस्थिरत्वेपीत्यर्थः, अभिधानम्= प्रयोगः= उपचारः । उक्तमुदाहरति– द्विरित्यादिना, नृत्यस्य यद् द्वित्वं त्रित्वं च तदभ्यास एव नृत्यं च क्रियेति न स्थिरमित्यस्थिरत्वेप्यभ्यासो भवति । उदाहरणान्तरमाह– द्विरिति, अग्निहोत्रभोजनादिकमपि क्रियैव तथा च यथा नृत्यादिक्रियाणामस्थिरत्वेप्यभ्यासो भवति तथा शब्दस्याप्यस्थिरत्वेपि पुनःपुनरुच्चारणलक्षणोऽभ्यासः संभवतीति नाऽभ्यासात् शब्दस्य नित्यत्वापत्तिरित्यर्थः ॥ ३० ॥

अग्रिमसूत्रमवतारयति– एवमिति, एवम्= उक्तरीत्या "अभ्यासात्" इतिहेतौ व्यभिचारात् प्रतिपिद्धे सति पूर्वसूत्रे योऽन्यशब्दस्य प्रयोगः कृतः स पूर्वपक्षिणाग्रिमसूत्रेण प्रतिषिध्यते इत्यन्वयः । व्यभिचारश्चास्थिरत्वेप्यभ्यासस्य संभवादुपपादित एव । अन्यदिति– यदन्यद् भवति तदऽन्यस्मादेवाऽन्यद् भवति न तु स्वस्मादिति स्वात्मनोऽनन्यत्वादऽनन्यदेव भवति नाऽन्यत्– स्वाभेदस्यावश्यम्भावित्वात् तथा चाऽन्यतायाः= भेदस्याऽभावः प्राप्त इति कथमन्यत्वेऽभ्यासः स्यात् स्वापेक्षयाऽन्यत्वस्यैवाभावात् तथा च शब्दस्यापि स्वात्मनो भेदाभावेनाऽभेदः प्राप्तस्तेन च स्थिरत्वं प्राप्तमिति स्थिरस्यैव शब्दस्याभ्यासान्नित्यत्वं सिद्धमिति नाऽस्थिरत्वापत्तिरिति सूत्रार्थः । व्याचष्टे– यदिदमिति, अन्यत्= इदं पदमन्यत् इदं च पदमन्यत् इतियन्मन्यसे तत्= अन्यत् स्वात्मनोऽनन्यत्वादन्यत् न भवति– अन्यत्वानन्यत्वयोः परस्परं विरोधात्, उपसंहरति– एवमिति, एवम्= अनन्यत्वात्, सिद्ध इतिशेषः । पर्यवसितमाह– तत्रेति, तत्र= एवमन्यत्वस्याभावे सिद्धे "अन्यत्वेप्यभ्यासोपचारात्" इति यदुक्तं तन्न युक्तम्– अन्यत्वासंभवेऽन्यत्वेनाऽभ्यासस्याप्यसंभवात् तथा चाभ्यस्यमानस्य शब्दस्य भेदाभावेन स्थिरत्वं सिद्धमित्यर्थः ॥३१॥

शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

**तदभावे नास्त्यनन्यता– तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥**

अन्यस्मादऽन्यतामुपपादयति भवान् उपपाद्य च अन्यत् प्रत्याचष्टे, 'अनन्यत्' इति च शब्दमनुजानाति. प्रयुङ्क्ते च 'अनन्यत्' इति एतत् समासपदम्. अन्यशब्दोयं प्रतिषेधेन सह समस्यते. यदि चात्रोत्तरं पदं नास्ति कस्यायं प्रतिषेधेन सह समासः?, तस्मात् तयोरन्याऽनन्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिध्यतीति तत्र यदुक्तम्– 'अन्यताया अभावः' इति एतदयुक्तमिति ॥ ३२ ॥

अस्तु तर्हीदानीं शब्दस्य नित्यत्वम्—

**विनाशकारणानुपलब्धेः ॥ ३३ ॥**

यदनित्यं तस्य विनाशः कारणाद् भवति यथा लोष्टस्य कारणद्रव्यविभागात्, शब्दश्चेदनित्यस्तस्य विनाशो यस्मात्कारणाद् भवति तदुपलभ्येत न चोपलभ्यते तस्मान्नित्य इति॥३३॥

---

अग्रिमसूत्रमवतारयति– शब्देति, शब्दप्रयोगम्= अन्यशब्दप्रयोगं प्रतिषेधतः= प्रतिषेधपरस्य पूर्वपक्षिणः शब्दान्तरप्रयोगः= अनन्यशब्दप्रयोगः सिद्धान्तिना प्रतिषिध्यते– "यथा चोद्यं तथोत्तरम्" इतिन्यायादित्यन्वयः। तदभावे इति– तदभावे= अन्यत्वाभावे अनन्यता नास्ति= न संभवति– तयोः= अन्यत्वानन्यत्वयोरितरेतरापेक्षसिद्धेः= परस्परापेक्षयैव सिद्धिसंभवात् अन्यत्वं विना तदभावरूपमनन्यत्वमपि न संभवतीत्यन्यत्वं सिद्धं तथा च शब्दस्याप्यन्यत्वेप्यभ्याससंभवात् स्थिरत्वं न सिध्यतीति सूत्रार्थः। व्याचष्टे– अन्यस्मादिति, भवान्= पूर्वपक्षी, उपपाद्य= "अन्यदन्यस्मात्" इत्युक्तेन अन्यस्मादन्यतामुपपाद्य अन्यत्= अन्यत्वं प्रत्याचष्टे इति परस्परं विरोधः प्राप्तः– अन्यत्वाभावेऽन्यस्मादप्यन्यत्वासंभवादित्यर्थः। पूर्वपक्षिणा स्वीकृतेनाऽनन्यत्वेनान्यत्वं साधयति– अनन्यदिति, अनुजानाति= स्वीकरोति भवान् प्रयुङ्क्ते चेत्यन्वयः। स्वाभिप्रायमाह– एतदिति, एतत्= अनन्यदितिपदं समासपदम्= समस्तं पदं तत्रान्यशब्दस्य प्रतिषेधेन= नञा सह समासात् 'अनन्यत्' इतिपदं सिध्यति, तत्र यदि उत्तरं पदम्= अन्यदितिपदं स्ववाच्यस्यान्यत्वस्याभावाद् नास्ति= न स्यात्तदा प्रतिषेधेन सहायं समासः कस्य स्यात्? न कस्यापीति 'अनन्यत्' इति पदमेव न स्यात् तथा चानन्यत्वमपि न सिध्येदिति अन्यत्वम् अन्यशब्दश्च स्वीकार्य इत्यर्थः। उपसंहरति– तस्मादिति, तयोरन्यानन्यशब्दयोर्मध्ये। अन्यशब्दाभावे नञ्समासेनानन्यशब्दस्यासंभवादनन्यशब्दस्याऽन्यशब्दापेक्षेत्यर्थः। पर्यवसितमाह– तत्रेति, तत्र= एवमन्यत्वे सिद्धे 'अन्यताया अभावः' इति यदुक्तं तदयुक्तमेव तथा चान्यत्वेप्यभ्याससंभवः सिद्ध इति शब्दस्याप्यभ्यस्यमानस्यान्यत्वेनास्थिरत्वं संभवतीति स्थिरत्वापत्तिर्नास्तीत्यर्थः॥ ३२॥

अग्रिमसूत्रमवतारयति– अस्त्विति, इदानीम्= वक्ष्यमाणहेतुनेत्यर्थः। विनाशेति– यत् संभवति तत् स्वकारणेनैव संभवति नान्यथा शब्दविनाशस्य च कारणं नोपलभ्यते अनुपलब्ध्या च शब्दविनाशकारणस्याभावः सिद्ध इति कारणाभावादेव शब्दविनाशाभावः प्राप्तस्तेन च शब्दस्य नित्यत्वं सिद्धमिति सूत्रार्थः। व्याचष्टे– यदिति, तस्य= अनित्यस्य, कारणात्= कारणनाशाद् विनाशकारणाद्वेत्यर्थः। उदाहरति– यथेति, लोष्टस्य= मृत्खण्डस्य विनाशः कारणद्रव्यविभागात्= आघातेनाऽवयवविभागाद् भवतीति विनाशकारणादेव विनाशः सिद्धः। प्रकृतमाह– शब्द इति, तस्य= शब्दस्य। शब्दस्य विनाशकारणं नोपलभ्यते इति विनाशाभावः प्राप्तस्तेन शब्दस्य नित्यत्वं प्राप्तमिति नित्य एव शब्दो नाऽनित्य इत्यन्वयः॥ ३३ ॥

## अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्गः एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्गः । व्यञ्जकाभावादश्रवणमितिचेत् ?. प्रतिषिद्धं व्यञ्जकम् । अथ विद्यमानस्य निर्निमित्तमऽश्रवणमिति ?. विद्यमानस्य निर्निमित्तो विनाश इति । समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥ ३४ ॥

## उपलभ्यमाने चानुपलब्धेरसत्त्वादऽनपदेशः ॥ ३५ ॥

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकरणे 'विनाशकारणानुपलब्धेः= असत्त्वात्' इत्यनपदेशः यथा 'यस्माद्विषाणी तस्मादश्वः' इति । किमनुमानमितिचेत् ?. संतानोपपत्तिः,

---

प्रतिबन्द्युत्तरमाह– अश्रवणेति, अश्रवणम्= श्रवणाभावः, यदि शब्दस्य विनाशकारणानुपलब्ध्या नित्यत्वं तदा नित्यस्य शब्दस्य अश्रवणकारणमपि नोपलभ्यते इति अश्रवणकारणानुपलब्ध्या शब्दश्रवणस्यापि नित्यत्वं स्यादिति सततम्= सर्वदा शब्दश्रवणप्रसङ्गोऽस्ति, न च सततं शब्दः श्रूयते तथा च यथा ह्यश्रवणकारणानुपलब्धावपि अश्रवणं स्वीक्रियते तथा शब्दस्य विनाशकारणानुपलब्धावपि विनाशः स्वीकार्य इति न शब्दस्य नित्यत्वापत्तिरिति सूत्रार्थः । व्याचष्टे– यथेति, शब्दस्येतिशेषः । प्रकृतमाह– एवमिति । नन्वश्रवणस्य कारणमस्ति शब्दव्यञ्जकस्योच्चारणादेरभावस्तथा च शब्दव्यञ्जकस्य भेरीदण्डसंयोगादेरभावेनाश्रवणमुपपद्यते इति न सततश्रवणप्रसङ्ग इत्याशङ्कते– व्यञ्जकेति । एतन्निराकरोति– प्रतिषिद्धमिति, पूर्वं संयोगादीनां शब्दव्यञ्जकत्वं प्रत्याख्यातमेवेत्यर्थः । ननु विद्यमानस्य= नित्यस्यापि शब्दस्याश्रवणं निर्निमित्तम्= अकारणकमेवेति नाऽश्रवणकारणापेक्षेत्याशङ्कते– अथेति । अत्र प्रतिबन्दीमाह– विद्यमानस्येति, यथा निर्निमित्तमश्रवणं स्वीकृतं तथा विद्यमानस्यापि शब्दस्य निर्निमित्तो विनाशोऽपि स्वीकार्य इत्यर्थः । ननु कारणं विना विनाशस्वीकारे दृष्टविरोधोऽस्ति विनाशकारणेनैव विनाशदर्शनादित्याशङ्क्याह– समान इति, कारणं विना विनाशस्वीकारे यथा दृष्टविरोधस्तथा कारणं विनाऽश्रवणस्वीकारेऽपि दृष्टविरोधोऽस्त्येव– कार्यमात्रस्य सकारणकत्वदर्शनात् तथा च विद्यमानस्य शब्दस्य निर्निमित्तमश्रवणं नोपपद्यते इति नित्यत्वे सततश्रवणप्रसङ्गः न च सततं शब्दः श्रूयते इति शब्दस्य विनाशित्वं सिद्धमित्यर्थः ॥ ३४ ॥

"विनाशकारणानुपलब्धेः" इतिपूर्वोक्तपूर्वपक्षस्य वास्तविकं प्रत्याख्यानमाह– उपलभ्यमाने इति, शब्दजनकस्य संयोगादेर्विनाश एव शब्दविनाशकारणं तस्मिन् उपलभ्यमानेऽपि यदुक्तम्– "विनाशकारणानुपलब्धेः" इति. तत् अनपदेशः= अहेतुः= शब्दनित्यत्वासाधकमेव= अयुक्तमेवेति यावत्– अनुपलब्धेरसत्त्वात्= शब्दस्य विनाशकारणोपलब्धौ विनाशकारणानुपलब्धेरसत्त्वात्= असंभवादिति शब्दस्य विनाशित्वं सिद्धमिति सूत्रार्थः । अत्र "अनपदेशः= अहेतुरित्यर्थः" इतितात्पर्यटीका ।

व्याचष्टे– अनुमानादिति । विनाशेति– अत्र 'विनाशकारणस्यानुपलब्धेः' इत्येवं वक्तव्यमासीत् तथा च 'विनाशकारणस्यानुपलब्धेः अर्थात् असत्त्वात्. किं वाऽनुपलब्ध्या च शब्दविनाशकारणस्याऽसत्त्वात्' इति यः शब्दनित्यत्वे हेतुरुक्तः सोऽनपदेशः= अहेतुः= शब्दनित्यत्वसाधको न भवति– शब्दविनाशकारणस्य शब्दोत्पादकविनाशस्योपलभ्यमानत्वादित्यन्वयः, किं वा 'विनाशकारणानुपलब्धेरसत्त्वात्' इति= इत्यनेन हेतुना पूर्वोक्तः– "विनाशकारणानुपलब्धेः" इतिहेतुरनपदेशः= अहेतुर्जात इत्यन्वयः । उदाहरति– यथेति, यथा गर्दभं पक्षीकृत्य 'यस्माद्विषाणी तस्मादश्वः= अयमश्वः विषाणित्वात्' इत्यनुमाने प्रयुक्ते गर्दभादेरश्वत्वसाधने विषाणित्वादितिहेतुरहेतुरेव– विषाणित्वस्याऽश्वत्वसाधकत्वाभावात्– अश्वे विषाणसंबन्धाभावात् गर्दभेऽपि विषाणाभावात्तथा "विनाशकारणानुपलब्धेः" इत्यपि शब्द-

उपपादितः शब्दसंतानः– संयोगविभागजात् शब्दाच्छब्दान्तरं ततोऽप्यन्यत् ततोऽप्यन्यदिति, तत्र कार्यः शब्दः कारणशब्दं विरुणद्धि. प्रतिघातिद्रव्यसंयोगस्तु अन्त्यस्य शब्दस्य निरोधकः, दृष्टं हि तिरःप्रतिकुड्यमऽन्तिकस्थेनाप्यश्रवणं शब्दस्य श्रवणं दूरस्थेनाप्यसति व्यवधाने इति। घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदाद् नानाशब्दसंतानोऽविच्छेदेन श्रूयते, तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं संतानवृत्ति वा अभिव्यक्तिकारणं

---

नित्यत्वसाधकं न संभवति– अभावात्= विनाशकारणोपलब्धेरित्यर्थः। अत्र– “यदा क्रमेलकं विषाणित्वादश्वत्वेन साधयति तदाऽस्य न विषाणं नापि तत्संबन्धः, यथा विषाणित्वं क्रमेलकेऽसिद्धं तथानुमानेन विनाशकारणोपलब्धौ तदनुपलब्धिरसिद्धेति” “अश्वत्वविषाणत्वयोर्यतः कोपि संबन्धोऽश्वेषु सिद्धो नास्ति तस्माद्विरोधादनुमानमेतदशोभनमित्यर्थः” इति तात्पर्यटीका। शब्दविनाशकारणोपलम्भकमनुमानम्= हेतुं जिज्ञासते– किमिति। उत्तरमाह– संतानेति, संतानस्य हेतुत्वेन संतानोपपत्तेर्हेतुत्वमुक्तमिति विज्ञेयम्– संतानस्य हेतुत्वे संतानोपपत्तेरपि हेतुत्वसंभवात्. यथा धूमोपपत्तेरपि वह्निहेतुत्वं तथा, या शब्दादुत्तरोत्तरं शब्दोत्पत्तिः स एव शब्दसंतानः स च पूर्वपूर्वशब्दस्य विनाशित्वे एवोपपद्यते. शब्दस्य नित्यत्वे तादृशसंतानस्य वैयर्थ्यात्. विनाशश्च स्वकारणेनैव संभवतीति शब्दसंतानेन शब्दस्य विनाशकारणमनुमीयते इत्यर्थः। हेतुभूतस्य शब्दसंतानस्य सिद्धिमाह– उपपादित इति, संयोगविभागजात्= प्रथमात् शब्दात्. ततः= शब्दान्तरादुत्पन्नात्, अन्यत्= शब्दान्तरमिति उत्तरोत्तरोत्पन्नशब्दानां परम्परैव शब्दसंतानः स च पूर्वं त्रयोदशसूत्रभाष्ये उपपादित इत्यन्वयः। शब्दविनाशकममाह– तत्रेति, कार्यः शब्दः= पूर्वशब्दादुत्पन्नः शब्दः, कारणशब्दम् = पूर्वं स्वोत्पादकं शब्दं निरुणद्धि= विनाशयति, एवमेव शब्दसंताने पूर्वपूर्वशब्दानां विनाशो विज्ञेयः, अन्तिमशब्दस्य विनाशमाह– प्रतिघातीति, प्रतिघातिद्रव्यं कुड्यादिकं तत्संयोगोऽन्त्यशब्दस्य निरोधकः= विनाशको भवति। प्रतिघातिद्रव्यसंयोगस्य शब्दविनाशकत्वे प्रत्यक्षप्रमाणमाह– दृष्टमिति, तिरःप्रतिकुड्यम्= कुड्यव्यवधाने सति अन्तिकस्थेन= शब्दोत्पत्तिस्थानसमीपस्थेनापि जनेन शब्दस्याश्रवणं दृष्टम्. असति च कुड्यादिव्यवधाने दूरस्थेन= शब्दोत्पत्तिस्थानाद् दूरस्थेनापि जनेन शब्दस्य श्रवणं दृष्टमित्यन्वयव्यतिरेकाभ्यां व्यवधायकसंयोगस्य शब्दविनाशकत्वं सिद्धम् अन्यथा श्रवणाभावो नोपपद्येतेत्यर्थः। पूर्वदिश्युत्पन्नस्य शब्दस्योत्तरदिशो दक्षिणदिशं प्राप्तं कुड्यं व्यवधायकं भवति नान्यथेति हेतोः “तिरःप्रतिकुड्यम्” इत्युक्तम्। शब्दसंतानमत्राप्याह– घण्टायामिति, घण्टासमीपस्थेन तारतरस्ततो दूरस्थेन तारस्ततो दूरस्थेन मन्दस्ततोपि दूरस्थेन मन्दतरः शब्दः श्रूयते, तारत्वादिरूपेणैतादृशशब्दसंतानसिद्धौ श्रुतिभेदः= श्रवणभेदः कारणं श्रवणभेदे च श्रोतृजनस्य सामीप्यादिकं कारणं समीपस्थेन प्रथमं श्रूयते इति तारतरः शब्दः श्रूयते इत्येवं व्याख्येयं तदनेन शब्दसंतान उपपादितः, शब्दसंतानास्वीकारे शब्दस्यैक्यं स्यात् एकस्मिंश्च शब्दे तारत्वमन्दत्वादिविरुद्धधर्मसमवायो नोपपद्यते इति शब्दभेदः स्वीकार्यस्तेन च संतानः सिद्धः संतानेन चोक्तरीत्या शब्दस्य विनाशित्वं तेन विनाशकारणमपि सिद्धमित्यर्थः। शब्दनित्यत्वपक्षेऽनुपपत्तिमाह– तत्रेति, नित्येशब्दे= शब्दनित्यत्वपक्षे शब्दस्याभिव्यक्तिकारणं तादृशं वक्तव्यं येनाभिव्यक्तिकारणेन श्रुतिसंतानः= तारत्वमन्दत्वादिरूपेण श्रवणवैविध्यमुपपद्येत न चैवं वक्तुं शक्यते इत्याशयः, अभिव्यक्तिकारणं चैतत् किं घण्टास्थं किं वान्यगतम्= श्रोत्रगतं तत्रापि किमवस्थितं किं वा संतानवृत्ति= अनवस्थितम् इति चतुर्धा विकल्पः, व्यञ्जकस्यावस्थितत्वपक्षे घण्टायां श्रोत्रे वाऽवस्थितत्वं विज्ञेयं संतानवृत्तित्वपक्षे घण्टास्थस्य वा श्रोत्रस्थस्य वा विनाशित्वं विज्ञेयम्, किं वा संतानवृत्तिशब्देन शब्दव्यञ्जकस्योत्तरोत्तरं संतानो ग्राह्यस्तेन पूर्वपूर्वाणां व्यञ्जकानां विनाशित्वमुत्तरोत्तरं मन्दत्वं च प्राप्तम्, किं चाऽसति शब्दभेदे शब्दनित्यत्ववादिना श्रुतिभेदः= तारत्वमन्दत्वादिरूपेण प्रत्यक्षः श्रवणभेद उपपादनीयः न चोपपादयितुं शक्यते– शब्दस्य नित्यत्वेनैकत्वे प्राप्ते एकस्मिन् शब्दे तारत्व-

वाच्यं येन श्रुतिसंतानो भवतीति, शब्दभेदे चाऽसति श्रुतिभेद उपपादयितव्य इति । अनित्ये तु शब्दे घण्टास्थं संतानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटुमन्दमनुवर्तते तस्यानुवृत्त्या शब्दसंतानानुवृत्तिः पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य, तत्कृतश्च श्रुतिभेद इति॥३५॥

न वै निर्निमित्तान्तरं संस्कार उपलभ्यते अनुपलब्धेर्नास्तीति—

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥

---

मन्दत्वादिविरुद्धधर्मसमवायस्यासंभवादित्याक्षेपः । अत्र— "शब्दस्य व्यज्यमानस्य यद् व्यक्तिकारणं तत् किं घण्टास्थम्? आहोस्विदन्यवृत्ति? इति, यदि घण्टास्थम्?. किमवस्थितम्? उत संतानवृत्ति? इति, अन्यवृत्तित्वेपि किमवस्थितम्? उत संतानवृत्ति?" इत्यादि वार्तिकं द्रष्टव्यम्। तथात्र— "यदि घण्टास्थेन व्यञ्जकेनाऽन्यवृत्तिना वाऽवस्थितेन संतानवृत्तिना वा नित्यः शब्दो व्यज्येत ततः तारतारतरतारतममन्दमन्दतरादिश्रुतिभेदो न स्यात्— नित्यस्य च शब्दस्य न स्वाभाविको भेदो नाप्यौपाधिक इत्युपपादितमधस्तात्" "अथ संतानवृत्तिस्तथापि सर्वे एव तत्संततिपतिताः समर्था इत्याद्येनैव सर्वे व्यज्येरन्" इति तात्पर्यटीका। अत्र यदि व्यञ्जकं घण्टायां श्रोत्रे वाऽवस्थितं तदावस्थितत्वादेव शब्दं सर्वदैव व्यंज्यादिति सततं शब्दश्रवणप्रसङ्गः, यदि शब्दसंतानानुवृत्ति व्यञ्जकं तदा संतानानुवर्तिना तारशब्दव्यञ्जकेन व्यक्तस्य सर्वत्र तारत्वमेव स्यादिति दूरदेशप्राप्तावपि मन्दत्वं न स्यात् न चैवमस्ति, किं च व्यञ्जकस्य व्यङ्ग्यवृत्तित्वमप्यनुपपन्नमेव, यदि संतानवृत्तिशब्देन शब्दव्यञ्जकस्यानवस्थितत्वं विवक्षितं तत्रानवस्थितत्वेनोत्तरोत्तरकाले मन्दत्वेन उत्तरोत्तरं शब्दमन्दत्वमुच्यते तदापि व्यञ्जकमनवस्थितत्वादेव वाद्यमानातिरिक्तघण्टास्वपि प्राप्तः स्यादिति तत्रापि शब्दाभिव्यक्तिः स्यात् न चैवं दृश्यते, यदि व्यञ्जकमनवस्थितं श्रोत्रगतमुच्यते तदाप्यनवस्थितत्वादेव दूरस्थश्रोत्रमपि प्राप्नुयादिति तत्रापि शब्दाभिव्यक्तिः स्यात् न चैवमस्तीति दोषाः, यदि संतानवृत्तिशब्देन शब्दव्यञ्जकस्य विनाशित्वं विवक्षितं तदा विनाशिनो व्यञ्जकस्य स्थितिकालनियमासंभवात् या कदाचित् शब्दश्रवणानुवृत्तिर्दृष्टा सा नोपपद्येत, तत्रोत्तरोत्तरं व्यञ्जकानामुत्पत्तिस्वीकारेपि तद्व्यवधानात् शब्दश्रवणानुवृत्तेर्नैरन्तर्यं नोपपद्येतेति दोषः, शब्दस्य नित्यत्वेनैकत्वात् तारत्वमन्दत्वादिरूपेण श्रवणभेदो नोपपद्यते इति सर्वेष्वपि पक्षेषु संकलितो दोषः । शब्दस्यानित्यत्वपक्षे उपपत्तिमाह— अनित्ये इति, शब्दस्य संस्कारभूतं यद् निमित्तान्तरं तद् घण्टास्थं सन्तानवृत्तिः= अनवस्थितं दण्डादिसंयोगः सहकारी यस्य तत् संयोगसहकारि उत्तरोत्तरं पटु मन्दं चानुवर्तते तस्य= एतादृशनिमित्तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः पटुमन्दभावात्= तीव्रत्वमन्दत्वादिना च शब्दस्य तीव्रत्वमन्दत्वादि तत्कृतः= शब्दस्य तीव्रत्वमन्दत्वादिकृतश्च तीव्रत्वमन्दत्वादिरूपेण श्रवणभेदः= श्रावणप्रत्यक्षभेद इति शब्दस्यानित्यत्वपक्षे सर्वमुपपद्यते इति शब्दानित्यत्वं स्वीकार्यमित्यर्थः, शब्दकारणीभूतो घण्टादिपदार्थनिष्ठः संस्कारः कम्पादिलक्षणो विज्ञेयः स च दण्डादिसंयोगजन्य इति संयोगसहकारी पटुमन्दरूपश्च भवतीति स्पष्टमेव । अत्र— "शब्दानामुत्पत्तिकारणं घण्टावृत्ति कदाचिद् भवति कदाचिद् भावेपि सति संतानवृत्ति तस्माद् निमित्तभेदानुविधायिनः शब्दाः कदाचिद् भवन्ति सन्तानवृत्तित्वाच्च मन्दतरमन्दतमादिभिन्नरूपानुविधायिनं शब्दमुत्पादयन्तीति तच्च कारणं संस्कार इति" इत्यादि वार्तिकं द्रष्टव्यमित्यलम्॥ ३५ ॥

अग्रिमसूत्रावतारायोक्तं निमित्तान्तरभूतं संस्कारमाक्षिपति पूर्वपक्षी— न वै इति, उक्तः संस्कारः निर्निमित्तान्तरम्= निमित्तान्तरं विना नोपपद्यते— अनित्यत्वात्. संस्कारजनकं च निमित्तान्तरं नोपलभ्यते इत्यनुपलब्ध्या ज्ञायते नास्तीति तथा च शब्दानित्यत्वपक्षोपपादकस्य संस्कारस्यासंभवेन शब्दानित्यत्वपक्षेऽनुपपत्तिः प्राप्तेत्यर्थः । अस्य सूत्रेणोत्तरमाह— पाणीति, घण्टायाः=भिहन्यमानायां पाणिनिमित्तकः= हस्तेन यः प्रश्लेषः= संयोगस्तस्मात् शब्दाभावो जायते तस्मिन् शब्दाभावे जायमाने शब्द-

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति तस्मिंश्च सति शब्दसंतानो नोपलभ्यते अतः श्रवणानुपपत्तिः, तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते. तस्य च निरोधात् शब्दसंतानो नोत्पद्यते अनुत्पन्ने च श्रुतिविच्छेदः, यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति। कम्पसंतानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्कारसंतानस्येति, तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३६ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३७ ॥

यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते? एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतं न तेषां विनाशकारणं भवतोपपाद्यते अनुपपादनादवस्थानम् अवस्थानात् तेषां नित्यत्वं प्रसज्यते इति, अथ नैवम्?: न तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३७ ॥

---

कारणस्याभावोऽनुमीयते शब्दकारणाभावेन च शब्दकारणं सिद्धम्— अभावस्य स्वप्रतियोग्यधीनत्वनियमादित्येवमुक्ते संस्कारेऽनुमानेनोपलभ्यमाने तस्यानुपलब्धिर्योक्ता सा न संभवतीति सूत्रार्थः। व्याचष्टे— पाणिकर्मणेति, तस्मिन्= पाणिघण्टासंयोगे जाते सति। अतः= शब्दसंतानानुपलब्धेः, श्रवणानुपपत्तिः= शब्दश्रवणाभाव उपपद्यते इत्यन्वयः, हस्तसंयोगेन शब्दोत्पत्तौ निरुद्धायां शब्दसंतानभावस्तेन शब्दश्रवणाभाव इत्यर्थः। उक्तसंस्कारस्यानुमितिमाह— तत्रेति, तत्र= पाणिघण्टासंयोगेन शब्दानुपलब्धौ सिद्धायां प्रतिघाति द्रव्यं हस्तादि किं वा प्रतिघाती= निरोधको यो द्रव्यसंयोगः= उक्तहस्तादिसंयोगः स शब्दस्य संस्कारलक्षणं निमित्तान्तरं निरुणद्धि तेन शब्दोत्पत्तिनिरोध उपपद्यते इत्यनुमीयते. तथा च निरुध्यमानस्य कम्पादिलक्षणस्य संस्कारविशेषस्य निरोधात् पूर्वं सत्ता सिद्धेति तादृशसंस्कारस्य यानुपलब्धिरुक्ता सा नोपपद्यते— उक्तानुमानेनोपलब्धेः सत्त्वात्, तस्य= उक्तसंस्कारभूतनिमित्तान्तरस्य निरोधात् शब्दो नोत्पद्यते अनुत्पत्तौ= एवं शब्दानुत्पत्तौ जातायां श्रुतिविच्छेदः= शब्दश्रवणाभावः शब्दानित्यत्वपक्षे उपपद्यते इत्यन्वयः। अत्र दृष्टान्तमाह— यथेति, यथा कुड्यादिप्रतिघातिद्रव्यसंयोगादिषोः= बाणस्य क्रियाहेतौ= गमनहेतुभूते संस्कारे निरुद्धे= विनष्टे सति गमनाभावस्तथा शब्दस्याप्युत्पत्तिकारणीभूते संस्कारे प्रतिघातिद्रव्यसंयोगान्नष्टे सति शब्दोत्पत्त्यभावो विज्ञेय इत्यन्वयः। कम्पेति— यद्वादनेन शब्दो भवति तादृशेषु कांस्यपात्रादिषु स्पर्शनेन्द्रियग्राह्यस्य= त्वगिन्द्रियग्राह्यस्य कम्पसंतानस्य पाणिप्रश्लेषेणोपरमः= निरोधो भवतीति स्पष्टमेव तथा च पाणिप्रश्लेषेण निरुध्यमानस्य संस्कारसंतानस्य पाणिप्रश्लेष एवानुमापकं लिङ्गम्— तदभावे कस्य निरोधः स्यादिति निमित्तान्तरस्य शब्दोत्पादकस्य संस्कारभूतस्योक्तरीत्या सिद्धत्वात् यानुपलब्धिरुक्ता सा नोपपद्यते इत्यर्थः ॥ ३६ ॥

"विनाशकारणानुपलब्धेः" इत्यस्य प्रतिबन्द्युत्तरमाह— विनाशेति, विनाशकारणानुपलब्धेः= विनाशकारणानुपलब्ध्या शब्दस्याऽवस्थाने= नित्यत्वे हि तत्= तस्य= शब्दश्रवणस्यापि विनाशकारणानुपलब्ध्या नित्यत्वं स्यात् न चैवमस्ति तथा च यथा विनाशकारणानुपलब्धावपि न शब्दश्रवणस्य नित्यत्वापत्तिस्तथा शब्दविनाशकारणानुपलब्धावपि न शब्दस्यापि नित्यत्वापत्तिरिति सूत्रार्थः। विनाशकारणानुपलब्धिश्च विनाशकारणाऽप्रतिपादनादेव विज्ञेया। सूत्रे तत्पदं पूर्वोक्तश्रवणपरामर्शकम्। व्याचष्टे— यदीति। प्रकृतमाह— एवमिति, शब्दश्रवणानीति नैयायिकमतम्. अभिव्यक्तय इति मीमांसकमतम्, तेषाम्= शब्दश्रवणानाम्। व्यतिरेकमाह— अथेति, यदि विनाशकारणानुपलब्धावपि शब्दश्रवणानां न नित्यत्वमित्यर्थः। प्रकृतमाह— न तर्हीति। एवं न शब्दस्यापि नित्यत्वं संभवतीत्यन्वयः। स्पष्टमन्यत्। "अथ नैवं. न तर्हि" इत्यत्र "अथ नैवं. तर्हि" इति पाठस्त्वसंगत एव ॥ ३७ ॥

कम्पसमानाश्रयस्य चाऽनुनादस्य पाणिप्रश्लेपात् कारणोपरमादभावः, वैयधिकरण्ये हि प्रतिघातिद्रव्याऽप्रश्लेपात् समानाधिकरणस्यैवोपरमः स्यादिति ।

## अस्पर्शत्वादप्रतिषेधः ॥ ३८ ॥

यदिदम् 'नाकाशगुणः शब्दः' इति प्रतिषिध्यते. अयमनुपपन्नः प्रतिषेधः– अस्पर्शत्वात् शब्दाश्रयस्य, रूपादिसमानदेशस्याग्रहणे शब्दसंतानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्दः इति ज्ञायते न च कम्पसमानाश्रय इति ॥ ३८ ॥

---

संप्रति प्रत्याख्यातुं सांख्यमतमुपस्थापयति– कम्पेति, तदेतत्सांख्यमतं पूर्वं द्वादशसूत्रभाष्यानन्तरमुक्तम् । यत्र वाद्यमानघण्टादावभिघातेन कम्पो भवति तत्रैव शब्दस्तिष्ठति न त्वाकाशे इति कम्पसमानाश्रयस्याऽनुनादस्य= शब्दस्य हस्तादिसंयोगेन कारणोपरमात् कम्पवदभावो भवति कारणं च संस्कारविशेषः, यदि हि शब्द आकाशनिष्ठः स्यात्तदा हस्तसंयोगस्य घण्टास्थत्वेन वैयधिकरण्यं प्राप्तं वैयधिकरण्ये हि प्रतिघातिद्रव्यस्य हस्तादेरप्रश्लेषात्= संयोगासंभवात् शब्दोपरमो न स्यादिति संयोगसमानाधिकरणस्यैव च शब्दस्योपरमः स्यात्= संभवति, प्रतिघातिद्रव्यसंयोगश्च घंटादिनैव भवतीति हस्तघण्टासंयोगेन शब्दनिवृत्त्युपपत्त्यर्थं शब्दस्य घण्टादिपदार्थस्थत्वं स्वीकार्यमिति शब्दः कम्पसमानाश्रय एव न त्वाकाशाश्रित इति सांख्यमतम्, न च घण्टादिपदार्थस्थस्य शब्दस्य संतानासंभवेन ग्रहणासंभवः– दूरस्थपुष्पनिष्ठगन्धस्येव ग्रहणसंभवात्, न चाकाशवृत्तित्वेऽप्याकाशगुणत्वं संभवति– गन्धादीनां घटादीनां चाप्याकाशवृत्तित्वेनाकाशगुणत्वं स्यादित्याशयः । अत्र– "संप्रति सांख्यः प्रत्यवतिष्ठते– कम्पसमानाश्रयस्येति । अनुवृत्तो नादः शब्दोऽनुनादः । वैयधिकरण्ये हीति– द्रव्यप्रश्लेषसमानाधिकरणस्यैव संस्कारस्योच्छेदः स्याद् न व्यधिकरणस्य शब्दस्य, व्यधिकरणस्य तूच्छेदाभ्युपगमेऽतिप्रसङ्गः स्यात् तस्मात् कम्पसंतानसंस्कारसमानाश्रयः शब्दोऽभ्युपगन्तव्यः, तदनेनाकाशाश्रयत्वं शब्दस्य प्रतिषिद्धम्" इति तात्पर्यटीका ।

उक्तं सांख्यमतं सूत्रेण निराकरोति– अस्पर्शेति, अप्रतिषेध इति– सांख्यैः शब्दे य आकाशाश्रितत्वस्य प्रतिषेधः कृतः स नोपपद्यते– शब्दाश्रयस्य अस्पर्शत्वात्= स्पर्शरहितत्वात्, शब्दाश्रयस्य सस्पर्शत्वे मूर्तत्वमव्यापकत्वं च स्यात्तथा च शब्दस्य घण्टादिपदार्थस्थत्वे घण्टादिभिः श्रोत्रसंयोगाभावकाले शब्दश्रवणं न स्यात्– इन्द्रियाणां स्वसंयुक्तमात्रग्राहकत्वात्. शब्दस्याकाशाश्रितत्वेतु आकाशस्य व्यापकत्वेन तदाश्रितशब्दस्य संतानप्रणाड्या श्रोत्रसंयोगः संभवतीत्याकाशाश्रित एव शब्दो न कम्पसमानाश्रय इति सूत्रार्थः । अत्र– "शब्दो हि न स्पर्शवद्विशेषगुणः– अग्निसंयोगासमवायिकारणकत्वाभाववदऽकारणगुणपूर्वककार्यत्वादित्याशयः" इति विश्वनाथभट्टास्तथा– "प्राप्यकारित्वमिन्द्रियाणां व्यवस्थितं प्राक्, घण्टाद्याश्रयः शब्दो न श्रोत्रं प्राप्नोति. एवं हि प्राप्नुयाद् यदि घण्टा कर्णशष्कुलीमागच्छेत् कर्णशष्कुली वा घण्टाम्. न चैतदुभयमस्ति, न चाहङ्कारिकमिन्द्रियं व्यापीत्युक्तम्, तस्मात् शब्दाधारो निस्पर्शो व्यापी चाकाशः तदाधारः शब्दः श्रोत्रमायाति संतानवृत्त्येति युक्तं तथा च श्रवणमस्योपपन्नं नान्यथेति" इति तात्पर्यटीका । घण्टायाश्च मूर्तत्वेनाव्यापकत्वेन च तत्र शब्दस्य संतानो नोपपद्यते इत्यपि विज्ञेयम् । व्याचष्टे– यदिदमिति, इति= इत्येवम्, "नाकाशगुणः" इत्यत्र "आकाशगुणः" इति पाठान्तरम्, स्ववक्तव्यमाह– अयमिति, शब्दस्य यदाकाशगुणत्वं प्रतिषिध्यते तदनुपपन्नमित्यर्थः । उक्ते हेतुमाह– अस्पर्शेति, शब्दाश्रयस्य अस्पर्शत्वात्= स्पर्शगुणराहित्यावश्यकत्वात् तच्चाकाशे संभवति न कम्पाश्रये घण्टादावित्यर्थः । स्वाभिप्रायमुद्घाटयति– रूपादीति, यदि शब्दो रूपादिसमानदेशः= कम्पसमानश्रयः= घण्टादिपदार्थस्थो गृह्येत= स्यात् तदा शब्दसंतानो नोपपद्येत– घण्टादिनिष्ठरूपादीनां संतानादर्शनात्, किं च घण्टादिपदार्थस्थस्य शब्दस्य श्रोत्रेण संबन्धो नोपपद्यते इति श्रावणप्रत्यक्षानुपपत्तिरित्युक्तमेव, रूपादिसमानदेशस्य= घण्टादिपदार्थस्थस्याग्रहणे= अस्वीकारे तु

प्रतिद्रव्यं रूपादिभिः सह संनिविष्टः शब्दः समानदेशो व्यज्यते इति नोपपद्यते। कथम् ?–

**विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥**

संतानोपपत्तेश्चेति चार्थः, तद् व्याख्यातम् । यदि रूपादयः शब्दश्च प्रतिद्रव्यं समस्ताः= समुदितास्तस्मिन् समाससमुदाये यो यथाजातीयकः संनिविष्टस्तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यं शब्दस्य रूपादिवत्, तत्र योऽयं विभागः एक द्रव्ये नानारूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते. यच्च विभागानन्तरं सरूपाः समानश्रुतयः सधर्माणः शब्दाः

---

शब्दसंतानः उपपद्यते तेन शब्दग्रहणमुपपद्यते, एवं हि आकाशाश्रयः शब्दः स्यात् आकाशस्य व्यापकत्वेन तन्निष्ठस्य शब्दसंतानस्य श्रोत्रसंबन्धः संभवतीति श्रवणमुपपद्यते इति हेतोः शब्दोऽस्पर्शी व्यापि च यद् द्रव्यमाकाशस्तदाश्रित इति ज्ञायते कम्पसमानाश्रय इति तु न संभवतीत्यर्थः ॥ ३८ ॥

पुनरपि सांख्यमतं दूषयति– प्रतिद्रव्यमिति, रूपादिभिः सह प्रतिद्रव्यम्= प्रत्येकं घण्टादिद्रव्ये शब्दः संनिविष्टः= स्थितस्तत्रैव समानदेशः= रूपादिसमानदेशो व्यज्यते इति नोपपद्यते इत्यन्वयः । उक्तानुपपत्तौ सांख्यवादी हेतुं जिज्ञासते–कथमिति । सूत्रेणोत्तरमाह– विभक्त्यन्तरेति, समासे= समुदाये= शब्दसंताने विभक्त्यन्तरस्य तीव्रत्वमन्दत्वादिरूपेण विभागस्य उपपत्तेः= संभवात् इत्यन्वयः, उत्तरोत्तरं शब्दपरम्परा शब्दसंतानस्तत्र कश्चिच्छब्दस्तीव्रः कश्चिच्च मन्द इत्युपपद्यते यदा हि रूपादिसमानाश्रयः शब्दस्तदा रूपादिवदेव संतानहीनः स्यादित्येक एव स्याद् एकस्य च शब्दस्य तीव्रत्वमन्दत्वादिभेदो नोपपद्यते–विरोधादिति सूत्रार्थः । अत्र– " समासः= समुदाय एतच्च स्पर्शवद्द्रव्यवृत्तिषु शब्देषु न प्राप्नोति गन्धादिवद् यथा प्रतिद्रव्यमेको गन्ध एवं प्रतिद्रव्यमेकः शब्द इति । संतानोपपत्तेश्चेति चार्थः– यद्ययं गन्धादिभिः सह संनिविष्टः स्यात् नान्यत्र वर्तमानः श्रोत्रे उपलभ्येत तस्मात् संतानवृत्तित्वादाकाशाश्रयः शब्द इति " इतिवार्तिकम् । तथात्र–" सांख्यानां रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यं तत्र समासे= समुदाये स्थित एव व्यज्यते ( शब्दः ) इति दर्शनम्, तस्मिन् समुदाये सांख्याभिमते विभक्त्यन्तरोपपत्तेश्च न व्यज्यते शब्दः, यदि समुदाये व्यज्येत शब्दः ? विभक्तिश्च षड्जधैवतगान्धारादिभेदेन विभागान्तरं च षड्जजातीयस्यैव तारमन्द्रादिरूपं नोपपद्यते– न हि तद्गतानां गन्धादीनामेकस्मिन्नेव द्रव्ये वीणादौ नानाजातीयानां च प्रतिक्षणं भेदो दृश्यते तस्माद् विभक्त्यन्तरोपपत्तेर्न समासे व्यज्यते शब्दोऽपि तु आकाशगुणः क्रियते ( उत्पाद्यते ) इति सांप्रतम् " इति तात्पर्यटीका । अत्र पक्षे ' न व्यज्यते ' इत्यध्याहार्यं सूत्रे तस्य ' समासे न व्यज्यते ' इत्यन्वय इति विज्ञेयम् ।

व्याचष्टे– संतानेति, चार्थः= सूत्रघटकचशब्दाद् ग्राह्यः । तत्= शब्दसंतानः । सांख्यमतेन यथा संभवति तदाह– यदीति, समस्ता इत्यस्य समुदिताः= एकत्रीभूता इत्यर्थः, यदि रूपादिसमानाश्रयः शब्दस्तदा तस्मिन् समाससमुदाये= समासेन किं वा समस्तानां रूपशब्दादीनां समूहे यः शब्दो यथाजातीयकः= तीव्रत्वादिरूपेण यादृशः स्थितस्तस्य शब्दस्य तथाजातीयस्य= तीव्रादिरूपस्यैव ग्रहणेन भवितव्यम्= प्रत्यक्षं संभवति नान्यथा रूपादिवत्= यथा रूपादिकं यादृशं तत्र संनिविष्टं तादृशमेव गृह्यते नान्यथाभूतमित्यन्वयः । अत्रानुपपत्तिमाह– तत्रेति, उक्तपक्षे विवक्षितविभागानुपपत्तिरित्यर्थः, विभागमाह– एकेति, एकद्रव्ये= एकस्मिन्नपि द्रव्ये वीणादौ नानारूपाः= षड्जगान्धारादिरूपा भिन्नाः श्रुतयः= तीव्राकुमुद्वत्यादयो येषां ते भिन्नश्रुतय अत एव विधर्माणः= परस्परं भिन्नाः शब्दाः श्रूयन्ते एतादृशं भेदेन श्रवणं नोपपद्यते– रूपादिसमानाश्रयस्य शब्दस्य रूपादिवदेव एकस्मिन्नेवाश्रये भेदासंभवादित्याशयः, षड्जादिसप्तस्वराणां यथाविभागं द्वाविंशतिः श्रुतयः संगीतशास्त्रे मन्निर्मिते संगीतसुदर्शनेपि च प्रसिद्धास्तदुक्तम्– 'तीव्राकुमुद्वती मन्दा ' इत्यादि । ननु यथैकस्मिन्नपि पटे

तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते. तदुभयं नोपपद्यते– नानाभूतानामुत्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति । अस्ति चायं विभागो विभागान्तरं च तेन विभागोपपत्तेर्मन्यामहे– न प्रतिद्रव्यं रूपादिभिः सह शब्दः संनिविष्टो व्यज्यते इति ॥ ३९ ॥

द्विविधश्चायं शब्दः– वर्णात्मको ध्वनिमात्रश्च तत्र वर्णात्मनि तावत्—

## विकारादेशोपदेशात् संशयः ॥ ४० ॥

'दध्यत्र' इति केचिद् इकारः इत्वं हित्वा यत्वमापद्यते इति विकारं मन्यन्ते, केचिद्

तन्तुभेदेन रूपादिभेद उपपद्यते तथैकस्मिन्नपि द्रव्ये वीणादौ स्वरस्थानभेदेन षड्जादिशब्दभेदः किं न स्यादित्याशङ्क्य सांख्यमतेऽनुपपत्त्यन्तरमाह– यथेति, विभागानन्तरम्= षड्जादिशब्दानां भेदेनोत्पत्त्यनन्तरं किं वा स्वस्वश्रुतिभेदेन स्वस्वस्थानभेदेन च भेदे सत्यपि समानाः श्रुतयो येषां ते समानश्रुतयः अत एव सधर्माणः अत एव सरूपाः= एकरूपा अपि शब्दाः षड्जादयस्तीव्रत्वमन्दत्वादिधर्मेण यद भिन्नाः कालभेदेन श्रूयन्ते तन्नोपपद्यते सांख्यमते इत्यन्वयः, अयमर्थः– तीव्राकुमुद्वतीमन्दाछन्दोवतीति चतुःश्रुत्यात्मकः षड्जो वीणायां स्वस्थाने प्रकटीभूतोऽपि यदुत्तरोत्तरकाले मन्दो भवति तन्नोपपद्यते न ह्येकस्मिन्नेव तन्तौ तद्रूपस्योत्तरोत्तरकाले भेदो दृश्यते तस्मादुत्तरोत्तरं शब्दसंतानः स्वीकार्यस्तथा च शब्दस्योत्पत्तिः सिद्धा भवति नाभिव्यक्तिः. शब्दस्य श्रोत्रेण संबन्धोपपत्त्यर्थं च व्यापकीभूताकाशाश्रितत्वं स्वीकार्यमिति न शब्दस्य रूपादिसमानाश्रयत्वमुपपद्यते इति । उक्तानुपपत्तिद्वयमाह– तदुभयमिति, उभयम्= षड्जगान्धारादीनां शब्दानां परस्परं विभागः तारत्वमन्द्रत्वादिरूपश्च प्रतिस्वरमवान्तरविभागश्च सांख्यमते नोपपद्यते । उक्ते हेतुमाह– नानेति, अयम्= उक्तलक्षणः धर्मः= धर्मभेदः, एकस्मिन् पदार्थे धर्मभेदासंभवादित्यर्थः । उक्तधर्मभेदसत्तामाह– अस्तीति, विभागः= षड्जत्वादिना भेदः, विभागान्तरम्= तारत्वमन्द्रत्वादिनाऽवान्तरभेदः । उपसंहरति– तेनेति, तेन= विभागसत्त्वेन, विभागोपपत्तेः= विभागदर्शनात् विभागोपपत्त्यर्थं वेत्यर्थः । उक्तेन सिद्धमाह– न प्रतिद्रव्यमिति, तदेतत् प्रतिपादितमेव । अत्र– "विभागश्च विभागान्तरं चेति विभक्त्यन्तरम्" इति वार्तिकम् ॥ ३९ ॥

अग्रिमसूत्रावतारार्थं शब्दं द्विधा विभजते– द्विविधश्चेति, ध्वनिमात्रः= वर्णातिरिक्तो ध्वन्यात्मकः । प्रकृतमाह– तत्रेति, 'वर्णात्मनि विकारादेशोपदेशात् नित्यत्वानित्यत्वयोः संशयः' इत्यन्वयः । अत्र– "तदेवम्– रूपादिसंनिविष्टः शब्दो व्यज्यते इति सांख्यमते दूषिते स एव सांख्यो वर्णेषु प्रकृतिविकारभावश्रुतेर्मृत्सुवर्णादिवत् परिणामिनित्या वर्णा इति यदि प्रत्यवतिष्ठते तत्र परीक्षामारभते– द्विविधश्चायं शब्द इति । विकारोपदेशोऽपि न ध्वनिमात्रे शब्देऽस्तीति न तस्य परिणामिनित्यतामापादयितुमर्हति केवलं वर्णात्मन्यापादयेद यत्राऽसंदेहः स्याद अस्ति तु तत्रापि संदेहस्तथा हि– "इको यणचि" इत्यादिकं विकारोपदेशमाचक्षते एके. अन्ये त्वादेशोपदेशं तत्र व्याख्यातृविप्रतिपत्तेः संशयः तन्नाऽपरीक्ष्य शक्यमवधारयितुमित्यर्थः, तत्र परीक्षायामादेशोपदेशस्तत्त्वमित्यवधारयति– आदेशोपदेश इति" इति तात्पर्यटीका । वस्तुतस्त्वत्र पूर्वपक्षो मीमांसकस्य प्रतिभाति– सांख्यैः प्रकृतिपुरुषातिरिक्तस्य नित्यत्वास्वीकारादिति विचार्यम् । विकारेति– "इको यणचि" इत्यादिस्थलेषु केचिद् वर्णानां विकारोपदेशं केचिच्चादेशोपदेशं व्याचक्षते तत्र विकारपक्षे इको विकारो यण् इति प्राप्तं तत्र यथा सुवर्णादीनां कटकादिरूपेण विकारे= परिणामेऽपि सुवर्णस्वरूपविनाशो न भवति– अनुवर्तमानत्वात् तथा वर्णानामपि विकारपक्षे परिणामिनित्यत्वेनाऽविनाशित्वं प्राप्नोति तेनाऽनित्यत्ववादो निरस्तो भवति, आदेशपक्षे च पूर्ववर्णस्थाने उत्तरवर्णादेशेन पूर्ववर्णस्य विनाश उत्तरवर्णस्य च तत्रोत्पत्तिः प्राप्नोतीति शब्दानित्यत्वं प्राप्नोति, तत्र विकारादेशयोर्विप्रतिपत्तेः शब्दे नित्यत्वानित्यत्वसंशयो जात इतिहेतोर्विचार्यते इति सूत्रार्थः । व्याचष्टे– दध्यत्रेति, इति= इत्यत्र, केचित्= मीमांसकादयः । इत्वादिधर्मपरित्यागेऽपि धर्मिण

इकारस्य प्रयोगे विपयक्रते यद् इकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते, संहितायां विषये इकारो न प्रयुज्यते तस्य स्थाने यकारः प्रयुज्यते स आदेश इति, उभयमिदमुपदिश्यते तत्र न ज्ञायते किं तत्त्वमिति ॥

आदेशोपदेशस्तत्त्वम्—

विकारोपदेशे ह्यन्वयस्याग्रहणाद् विकाराननुमानमिति[४] ।

सत्यऽन्वये किंचिद् निवर्तते किंचिदुपजायते इति शक्येत विकारोऽनुमातुं न चाऽन्वयो गृह्यते तस्माद् विकारो नास्तीति ॥

भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः ।

विवृतकरण इकारः ईषत्स्पृष्टकरणो यकारः तावि मौ पृथक् करणाख्येन प्रयत्नेनोच्चारणीयौ तयोरेकस्याऽप्रयोगेऽन्यस्य प्रयोग उपपन्न इति ॥

इकारादेर्विनाशाभावादत्र पक्षे नित्यत्वं प्राप्तमित्यर्थः । पक्षान्तरमाह— केचिदिति, केचित्= वैयाकरणप्रभृतयः, विपयक्रते= विपयीकृते= प्राप्ते इत्यर्थः, यत स्थानमित्यन्वयः, अत्रापि पक्षे वर्णानित्यत्वं न प्राप्नोति— इकारादेः प्रयोगस्य परित्यागेपि विनाशित्वासंभवादित्याशयः । स्वाभिमतमादेशपक्षमाह— संहितायामिति, संहितायाम्= अव्यवहितसंयोगे, तदेतद् व्याकरणे प्रसिद्धम् । तस्य= इकारस्य, या वर्णान्तरस्थाने वर्णान्तरोत्पत्तिः स आदेश इत्यर्थः, अत्र पक्षे पूर्ववर्णविनाशेनोत्तरवर्णोत्पत्त्या च वर्णानामनित्यत्वं प्राप्नोतीत्याशयः । उपसंहरति— उभयमिति, उभयम्= विकार आदेशश्च. तत्र पूर्वोक्तपक्षद्वये विकारस्तृतीयपक्षे चादेश इत्युभयमित्युक्तम् । प्राप्तसंशयमाह— तत्रेति, तत्र= विकारादेशयोर्मध्ये. विकारपक्षो वा तत्त्वमादेशपक्षो वा तत्त्वमिति निश्चयाभावात् तत्र संशय इत्यन्वयः ॥

संशयनिरासार्थं तत्त्वमाह— आदेशेति । आदेशपक्ष एव यथार्थो न विकारपक्ष इत्यर्थः । विकारपक्षं प्रत्याचष्टे— विकारेति, विकारोपदेशे= विकारपक्षे ह्यन्वयः= पूर्वपदार्थस्योत्तरोत्तरमनुवृत्तिर्दृश्यते यथा सुवर्णस्य कटकादिषु. 'दध्यत्र' इत्यादिवर्णस्थले तु अन्वयस्याऽग्रहणात्= पूर्ववर्णस्य इकारादेरुत्तरवर्णेषु यकारादिषु अनुवृत्तेरदर्शनाद् विकारस्यानुमानं न संभवति न हि यकारादिषु इकारादीनां गन्धोप्यस्तीत्यर्थः । अत्र "विकारोपदेशे" इति पदं व्यर्थमेव किं वा 'अन्वयस्य ग्रहणात्' इति वक्तव्यमासीत् । स्ववाक्यं स्वयमेव व्याचष्टे— सतीति, अन्वये= अनुवृत्तौ, यथा सुवर्णस्य कटकादिष्वनुवृत्त्या सुवर्णकटकयोः प्रकृतिविकृतिभावः, सुवर्णस्य किंचित्= कुण्डलाकृतिर्निवर्तते तत्र किंचित् कटकाकृतिरुपजायते सुवर्णं तूभयत्रापि सममनुवर्तते इति तत्र प्रकृतिविकारभावः स्वीक्रियते, प्रकृते च न पूर्ववर्णस्वरूपस्योत्तरवर्णेष्वनुवृत्तिर्गृह्यते इति न वर्णानां विकारोस्तीति ज्ञायते इत्याह— न चेति ॥

अविकारपक्षे उपपत्त्यन्तरमाह— भिन्नेति, करणम्= प्रयत्नः, तत्र विवृतप्रयत्न इकारः ईषत्स्पृष्टप्रयत्नो यकार इति व्याकरणे प्रसिद्धम्, भिन्नकरणयोः= भिन्नप्रयत्नोच्चार्ययोर्वर्णयोर्मध्ये एकस्याऽप्रयोगेऽन्यस्य प्रयोग उपपद्यते यथेकारस्याऽप्रयोगे यकारस्य प्रयोग इति पूर्ववर्णस्याऽप्रयोगेन निवृत्तिरापद्यते न च निवृत्तस्य प्रकृतित्वमुपपद्यते तस्मान्न वर्णानां परस्परं प्रकृतिविकृतिभाव उपपद्यते, यदि प्रकृतिविकृतिभावः स्यात्तदा पूर्ववर्णस्य निवृत्तिर्न स्याद् यथा सुवर्णस्य कटककुण्डलादिषु निवृत्तिर्न भवति. भवति च पूर्ववर्णस्याऽप्रयोगेन निवृत्तिरिति न प्रकृतिविकारभाव उपपद्यते. किं च प्रकृतिविकृतिभावे उच्चारणानुकूलप्रयत्नस्य भेदो न स्यादित्यर्थः । किं चेकारादीनामप्रयोगे एव हि यकारादीनां प्रयोगसंभवात् विरुद्धत्वं प्राप्तं तेन प्रकृतिविकारभावस्याभावः सिद्धः— विरुद्धयोः प्रकृतिविकारभावाऽसंभवादित्यर्थः । स्वयं व्याचष्टे— विवृतेति । तौ= इकारयकारौ । तयोः= इकारयकारयोर्मध्ये एकस्य=

## अविकारे चाविशेषः ।

यत्रेमौ इकारयकारौ न विकारभूतौ– 'यततं. यच्छति. प्रायंस्त' इति. 'इकारः इदम्' इति च, यत्र च विकारभूतौ– 'इष्ट्वा' 'दध्याहर' इति उभयत्र प्रयोक्तुरविशेषो यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः ॥

## प्रयुज्यमानाऽग्रहणाच्च ।

न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते, किं तर्हि?. इकारस्य प्रयोगे यकारः प्रयुज्यते. तस्मादविकार इति ॥

## अविकारे च न शब्दान्वाख्यानलोपः ।

इकारस्य. अन्यस्य= यकारस्य । उपपन्नः= उपपद्यते इत्यन्वयः, स्पष्टं सर्वम् । इकारयकारयोः प्रयत्नभेदात् साहित्यं नोपपद्यते तेन प्रकृतिविकारभावो नोपपद्यते– प्रकृतिविकृतिभूतयोः सुवर्णकटकयो साहित्यदर्शनादित्याशयः ॥

आदेशपक्षे उपपत्त्यन्तरमाह– अविकारेति, विकृताऽविकृतयोर्वर्णयोरविकारे= आदेशपक्षे अविशेषः= साम्यमुपपद्यते न तु विकारपक्षे इत्यन्वयः । स्वयं व्याचष्टे– यत्रेति, न विकारभूतौ= अविकृतौ यथा– यतते इत्यादिस्थले यत्यादिधातुरेव यकारादिरित्ययं यकारो न विकारभूतः, इकार इत्यादिस्थले इकारोपि न विकारभूतः, विकारभूतावुदाहरति– यत्र चेति, 'इष्ट्वा' इत्यत्र यजधातुयकारस्य संप्रसारणेन इकारादेशो जात इत्ययमिकारो विकारभूतः, 'दध्याहर' इत्यत्र च "इको यणचि" इत्यनेन दधिशब्देकारस्य यकारादेशो जात इत्ययं यकारो विकारभूतः, स्ववक्तव्यमाह– उभयत्रेति, उभयत्र= विकृताविकृतयोः, यथा 'इकारः' इत्यत्राविकृतस्येकारस्योच्चारणे वक्तुः प्रयत्नो भवति श्रोतुश्च श्रवणं भवति तथैव 'इष्ट्वा' इत्यत्र विकृतस्येकारस्योच्चारणे वक्तुः प्रयत्नः श्रोतुश्च श्रवणं भवति, एवमेव 'दध्याहर' 'यतते' इत्यादिस्थलेषु विकृताविकृतयोर्यकारयोः यत्नस्य श्रवणस्य च साम्यं विज्ञेयम्, एतत्साम्यं च विकारपक्षे नोपपद्यते– विकृताविकृतयोर्विशेषस्यावश्यकत्वात् लोकेपि दुग्धादिषु तथा दर्शनाद् अन्यथा विकृताविकृतत्वमेव न स्यात्, विशेषश्च वक्तुः प्रयत्ने श्रोतुश्च श्रवणे एव स्याद् न च प्रयत्नश्रवणयोर्विशेष उपलभ्यते इति न विकारपक्ष उपपद्यते । आदेशपक्षे तु 'इष्ट्वा' इत्यत्रेकारो न विकारभूत इति 'इकारः' 'इष्ट्वा' इत्युभयत्रेकारस्याविकृतत्वेन साम्यात् तत्प्रयत्नश्रवणयोरपि साम्यमुपपद्यते इत्यादेशपक्ष एवोपपद्यते न विकारपक्ष इत्याह– इत्यादेशोपपत्तिरिति ॥

अविकारपक्षे उपपत्त्यन्तरमाह– प्रयुज्यमानेति, प्रयुज्यमानस्य= पूर्वप्रयोगविषयस्येकारादेर्यकारादिवर्णप्रयोगकाले ग्रहणाभावादपि विकारपक्षो नोपपद्यते– प्रकृतिविकृतिभावस्थले च प्रकृतेर्विकारावस्थायामपि ग्रहणं भवति यथा सुवर्णस्य कटकाद्यवस्थायां नैवं प्रकृतेस्तीति न विकारपक्षः किं तु आदेशपक्ष एव, आदेशपक्षे च पूर्ववर्णस्य निवृत्तिस्वीकारादुत्तरवर्णप्रयोगकाले ग्रहणापत्तिर्नास्तीत्यर्थः । स्वयं व्याचष्टे– नेति । पूर्वपक्षी तत्त्वं जिज्ञासते– किमिति । उत्तरमाह– इकारस्येति, 'दध्यत्र' इत्यत्र इकारस्य प्रयोगे प्राप्ते इकारस्थाने यकारः प्रयुज्यते इत्यादेशपक्षः सिद्ध इत्यर्थः । उपसंहरति– तस्मादिति । स्पष्टं सर्वम् । अत्र– "यथा हि क्षीरं कालविपाकापेक्षं दधि भवद् दृश्यते न तथेकारो यकारो भवन् (दृश्यते) इत्यर्थः" इति तात्पर्यटीका ॥

ननु वर्णानां विकाराभावपक्षे व्याकरणशास्त्रस्य वैयर्थ्यं स्यात्? इत्याशङ्क्याह– अविकारेति, अविकारे= विकाराभावपक्षे= आदेशपक्षे शब्दान्वाख्यानस्य= व्याकरणशास्त्रस्य लोपः= वैयर्थ्यं नास्ति–

न विक्रियन्ते वर्णा इति। न चैतस्मिन् पक्षे शब्दान्वाख्यानस्याऽसंभवो येन वर्णविकारं प्रतिपद्येमहीति। न खलु वर्णस्य वर्णान्तरं कार्यम्– न हि इकाराद् यकार उत्पद्यते यकाराद्वा इकारः, पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णास्तेषामन्योऽन्यस्य स्थाने प्रयुज्यते इति युक्तम् । एतावच्चैतत् परिणामो विकारः स्यात् कार्यकारणभावो वा, उभयं च नास्ति तस्मान्न सन्ति वर्णविकाराः ॥

वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः ।

"अस्तेर्भूः" "ब्रुवो वचिः" इति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य वर्णान्तरमिति ॥ ४० ॥

---

आदेशविधायकत्वेन साफल्यादित्यर्थः। एवं व्याचक्षाणः सिद्धान्तमाह– नेति । यदि वर्णानां विकाराभावपक्षे व्याकरणस्य वैयर्थ्यं स्यात् तदा तत्सार्थक्यार्थं वर्णविकारः स्वीक्रियेतापि न चैवमस्तीत्याह– न चेति, एतस्मिन् पक्षे= वर्णविकाराभावपक्षे । वर्णान्तरस्य वर्णान्तरकार्यत्वं प्रत्याचष्टे– न खल्विति, विकारपक्षे वर्णान्तरं वर्णान्तरकार्यं स्यात् न चैतदुपपद्यते इत्यर्थः । कार्यकारणभावाऽभावे हेतुमाह– न हीति । स्वमतमाह– पृथगिति, पृथक्पृथक्स्थानप्रयत्नाभ्यामुत्पाद्या वर्णास्तत्र इकारयकारयोः स्थानभेदाभावेपि प्रयत्नभेदोस्त्येव यथा विवृतप्रयत्न इकार ईषत्स्पृष्टप्रयत्नश्च यकार इति. तदेतद् व्याकरणे प्रसिद्धम्, तथा च पृथक्स्थानप्रयत्नोत्पाद्यानां वर्णानां परस्परं कार्यकारणभावो नोपपद्यते– कार्यस्य कारणापेक्षया सर्वथा वैलक्षण्यस्यासंभवादिति तेषां वर्णानां मध्येऽन्यो वर्णः अन्यस्य वर्णस्य स्थाने प्रयुज्यते इत्येव युक्तमित्यादेशपक्षः सिद्धः– अत्र पक्षे पूर्वोत्तरवर्णयोः साम्यापेक्षाया अभावादित्यन्वयः । अन्यत् पूर्वपक्षिमतं निराकरोति– एतावदिति, वर्णानां वर्णान्तररूपेण परिणामपक्षेपि परिणामोयं विकारो वा स्यात् कार्यकारणभावः= कार्यकारणभावेन कार्यं वा स्यात् एतदुभयं नोपपद्यते इति प्रतिपादितमेवेति न विकारपक्षो वा कार्यकारणभावपक्षो वा संभवति किं त्वादेशपक्ष एव संभवति तत्र च वर्णानामनित्यत्वं स्पष्टमेवेत्युपसंहरति– तस्मादिति । अत्र– "ननु मा भूद्विकारः परिणामोऽर्थान्तरं तु भविष्यति ततो नित्या वर्णा भविष्यन्तीत्याह– एतावच्चैदिति" इति तात्पर्यटीका, परिणामपक्षे परिणममानपदार्थस्य स्वरूपनाशाऽस्वीकारान्नित्यत्वमित्यर्थः । अत्र "एतावच्चैतत्" इत्यत्र 'स चायम्' इति वक्तव्यमासीत् । विकारश्च प्रकृतिविकृतिभावमूलक इतिविशेषो विज्ञेयः ॥

वर्णविकारानुपपत्तौ दृष्टान्तमाह– वर्णेति, वर्णसमुदायः= पदं तच्चानित्यमेवेति पूर्वपक्षिणापि स्वीकृतम् अनित्यस्य च पदस्य विकारस्वीकारावश्यकताया अभावात्– अनित्यत्वनिवृत्त्यर्थमेव वर्णानां विकारस्वीकारात् विकारस्थले प्रकृतिस्वरूपस्य विकृतिष्वनुवृत्तिस्वीकारेण नित्यत्वस्वीकारादिति पदानामनित्यानां विकारानुपपत्तिरिति यथा "अस्तेर्भूः" इत्यत्र अस्धातुस्थाने भूरित्यादेश एव स्वीक्रियते न तु विकारस्तथा 'दध्यत्र' इत्यादिस्थले पूर्ववर्णस्थानेप्युत्तरवर्णस्य आदेश एव स्वीकार्यो न विकार इति वर्णविकारानुपपत्तिरित्यर्थः । अत्र–"वर्णस्यैकस्य वास्तवत्वात् कदाचिद्विकार उपपद्यते. बुद्धिसमाहारमात्रस्य तु तत्समुदायस्य न विकारसंभवस्तस्मात तत्राकामेनाप्यादेशोपदेशो वक्तव्यः स वरं क्लृप्तत्वादेकस्मिन्नप्यस्तु वर्णे इति" इति तात्पर्यटीका । स्वयं व्याचष्टे– अस्तेरिति, एतद् व्याकरणे प्रसिद्धम्, वर्णसमुदायस्य= अस् इत्यादेः, क्वचिद्विषये= आर्धधातुकप्रत्यये परे सति प्राप्तो वर्णान्तरसमुदायः= भूरितिपदं न परिणामः संभवति. न वा कार्यम्– पूर्ववर्णसमुदायस्यानुवृत्तेरभावात्. कार्यपक्षे परिणामपक्षे च कारणानुवृत्तेः प्रत्यक्षत्वात्. किं तु अस् इति शब्दान्तरस्य स्थाने भूरिति शब्दान्तरं प्रयुज्यते तथा च तद्वदेव 'दध्यत्र' इत्यादौ वर्णान्तरस्य स्थानेपि वर्णान्तरं प्रयुज्यते इत्येव स्वीकार्यम्– क्लृप्तेनैव कार्यसंभवे वर्णानां विकारकल्पनायां गौरवादित्यर्थः । क्लृप्तश्चायमादेशपक्ष एव ॥ ४० ॥

इतश्च न सन्ति विकाराः—

प्रकृतिविवृद्धौ विकारवृद्धेः ॥ ४१ ॥

प्रकृत्यनुविधानं विकारेषु दृष्टं यकारे ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयत इति ॥ ४१ ॥

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४२ ॥

द्रव्यविकारा न्यूनाः समा अधिकाश्च गृह्यन्ते. तद्वदयं विकारो न्यूनः स्यादिति । द्विविधस्यापि हेतोरभावादऽसाधनं दृष्टान्तः– अत्र नोदाहरणसाधर्म्याद् हेतुरस्ति न वैधर्म्यात्. अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति ॥

प्रतिदृष्टान्ते चानियमः प्रसज्येतैतं ।

---

विकारपक्षेऽनुपपत्त्यन्तरमाह– प्रकृतीति, प्रकृतेर्वृद्धौ सत्यामेव विकारस्यापि वृद्धिर्भवतीति प्रकृतिविकारभावस्थले प्रसिद्धं यथा तन्तुवृद्धया पटवृद्धिरिति, 'ग्रामण्यः' इत्यादिस्थले तु प्रकृतिभूतस्येकारस्य दीर्घत्वेन वृद्धौ सत्यामपि यकारस्य वृद्धिर्न दृश्यते तस्मान्न विकारपक्षः संभवतीत्यर्थः । व्याचष्टे– प्रकृतीति, प्रकृत्यनुविधानम्= प्रकृतेरनुकरणम्= सादृश्यं विकारेषु दृश्यते यकारे तु प्रकृतिभूतेकारस्य यो धर्मो ह्रस्वत्वं दीर्घत्वं वा तदनुविधानम् 'दध्यत्र' इत्यादिस्थले नास्तीति न विकारपक्षः संभवतीत्यर्थः । येन= प्रकृत्यनुविधानेन । अत्र– "महद्भिः खलु तूलपिण्डैरारब्धः स्थूलः पिण्डः अल्पैश्चारब्धो महानल्प इति दृष्टं तद्वदिहापि दीर्घेकारविकारस्य यकारस्य इकारविकाराद् भवितव्यं विशेषेण. न चास्ति विशेषस्तस्मान्न प्रकृतिविकारभाव इत्यर्थः" इति तात्पर्यटीका ॥ ४१ ॥

उक्तस्य पूर्वपक्ष्युत्तरमाह– न्यूनेति, प्रकृत्यपेक्षया विकाराणां कचिन् न्यूनत्वं भवति यथा तूलापेक्षया तन्तोः. कचित् समत्वं भवति यथा सुवर्णतत्कार्ययोः. कचिचाधिक्यं भवति यथा बीजापेक्षया वृक्षस्येति न प्रकृतिवृद्धौ विकारवृद्धिनियम इति पूर्वसूत्रेण यो वर्णविकारप्रत्याख्यानहेतुरुक्तः सोऽहेतुरेवेति न वर्णविकाराभावसाधक इत्यर्थः । व्याचष्टे– द्रव्येति, विकाराणां न्यूनत्वादिकमुदाहृतमेव । प्रकृतमाह– तद्वदिति, यथा तूलविकारस्तन्तुः तूलापेक्षया न्यून एव भवति तद्वत् अयं विकारः= वर्णलक्षणो विकारोपि प्रकृत्यपेक्षया न्यूनो भवति यथा एकमात्रिकेकारापेक्षया यकारस्यार्धमात्रिकत्वेन न्यूनत्वं तथा च प्रकृत्यपेक्षया विकारस्य न्यूनाधिकभावसंभवात् इकारादिवर्णानां यकारादिवर्णा विकारभूता एवेति स्वीकार्यमिति विकारपक्ष उपपन्न इत्यर्थः । सूत्रं व्याख्याय तन्निराचष्टे– द्विविधस्येति, हेतोः= व्याप्तेः, उक्तो द्रव्यविकारलक्षणो दृष्टान्तो वर्णविकाराणामसाधनम्= असाधक इत्यन्वयः । व्याप्तिद्वैविध्याभावमाह– अत्रेति, उदाहरणसाधर्म्याद् हेतुः= अन्वयव्याप्तिः, उदाहरणवैधर्म्याद् हेतुः= व्यतिरेकव्याप्तिः । उपसंहरति– अनुपसंहृत इति, हेतुना= व्याप्त्या, दृष्टान्तोपसंहारो हि व्याप्त्या भवतीत्यत्र हेतुशब्दो व्याप्तिपरो विज्ञेयः । यत्र यत्र विकारत्वं तत्र तत्र न्यूनत्वं वाधिकत्वं वेति नियमो नास्ति– परस्परं व्यभिचारादित्यन्वयव्याप्तेरभावः, यत्र विकारत्वं नास्ति तत्र न्यूनत्वादिकं नास्तीति व्यतिरेकव्याप्तिरपि नास्ति– अश्वगजयोर्व्यभिचारात्. यत्र न्यूनत्वादिकं नास्ति तत्र विकारत्वं नास्तीत्यपि व्यतिरेकव्याप्तिर्नास्ति– समाधिकविकारेषु व्यभिचारादित्यर्थः ॥

प्रत्युदाहरणमाह– प्रतिदृष्टान्ते इति, प्रतिदृष्टान्ते विद्यमाने त्वदुक्तस्यानियमः प्रसज्यते इत्यन्वयः, पूर्वस्थाने प्राप्तः परः पूर्वस्य विकार एव भवतीति नियमो नास्ति– वृषभस्थाने नियुक्तस्याश्वस्य वृषभविकारत्वासंभवात्. तद्वदेव इकारस्थाने प्रयुक्तस्य यकारस्य इकारविकारत्वं नोपपद्यते इति प्रतिदृष्टान्तसत्त्वात्

यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति. एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति । न चात्र नियमहेतुरस्ति– दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥४२॥

द्रव्यविकारोदाहरणं च—

## न– अतुल्यप्रकृतीनां विकारविकल्पात् ॥ ४३ ॥

अतुल्यानां द्रव्याणां प्रकृतिभावो विकल्पते विकारश्च प्रकृतीरनुविधीयते, न त्विवर्णमनुविधीयते यकारः तस्मादनुदाहरणम्– ‘ द्रव्यविकारः ’ इति ॥ ४३ ॥

## द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः ॥ ४४ ॥

यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम् एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति ॥ ४४ ॥

त्वदुक्तं नोपपद्यते इत्यर्थः । स्वयं व्याचष्टे– यथेति, अनडुहः= वृषभस्य, वोढुम्= शकटादिवहनार्थम् । तद्विकारः= वृषभविकारो न भवतीति प्रसिद्धमेव । प्रकृतमाह– एवमिति । विकारः= इकारविकारो न भवति । स्वोक्तप्रतिदृष्टान्तस्यास्य विकाराभावसाधकत्वाभावे बाधकमाह– न चेति, ‘दृष्टान्तः साधको भवति न प्रतिदृष्टान्तः’ इत्यत्र नियमहेतोरभावादुक्तप्रतिदृष्टान्तेन वर्णानां विकाराभावः सिद्ध इत्यर्थः ॥ ४२ ॥

अग्रिमसूत्रमवतारयति– द्रव्येति, पूर्वपक्षिणा वर्णविकारसाधनार्थं यद् द्रव्यविकारोदाहरणं पूर्वसूत्रे प्रदर्शितं तन्न युक्तमित्येवं सूत्रघटकनकारेणान्वयः । पूर्वसूत्रोक्तं प्रत्याचष्टे– नेति, न्यूनसमाधिकेत्यादिना यदुक्तं तन्न संभवतीत्यर्थः, अत्र हेतुमाह– अतुल्येति, अतुल्यप्रकृतीनाम्= भिन्नप्रकृतीनां विकाराणां विकल्पात्= भेददर्शनाद् भेद आवश्यको यथा वटबीजाद् वटवृक्षो विकारो वटबीजविलक्षणादश्वत्थबीजादश्वत्थवृक्षो विकारो जायते एतादृक्षस्थलेषु प्रकृतिविकारभावः स्वीक्रियते किं वा प्रकृतिविकारभावस्थले प्रकृतिभेदेन विकारवैलक्षण्यं दृश्यते यथाम्रादिबीजानां वैलक्षण्येन तद्विकाराणां वृक्षफलादीनां वैलक्षण्यं प्रत्यक्षमेव प्रकृते च ह्रस्वदीर्घाभ्यामिकाराभ्यां जायमानस्य यकारस्य वैषम्यं न दृश्यते इति न प्रकृतिविकारभाव उपपद्यते इति द्रव्यविकारदृष्टान्तेन वर्णविकारसिद्धिर्न संभवतीति सूत्रार्थः । अत्र “विकारविकल्पात्” इत्यत्र ‘विकाराणां विकल्पात्’ इतिवक्तव्यमासीत् । व्याचष्टे– अतुल्यानामिति, अतुल्यानां द्रव्याणां वटादिबीजानां प्रकृतिभावः= प्रकृतित्वं विकल्पते= विविधो विलक्षणो भवति तेन विकाराणामपि वैलक्षण्यं भवति, विकारश्च प्रकृतीः= स्वस्वप्रकृतिमनुविधीयते= प्रकृतिसदृशो भवतीति प्रकृतिविकारभावस्य मर्यादा, “प्रकृतिभावः” इत्यत्र ‘ विकृतिभावः ’ इतिवक्तव्यमासीत् । प्रकृतमाह– नेति, यकारस्तु इकारस्य ह्रस्वत्वे ह्रस्वो वा दीर्घत्वे दीर्घो वा न भवतीति इकारानुविधानाभावात्र यकार इकारविकार इत्युपसंहरति– तस्मादिति । अत्र– “ अतुल्यायाः प्रकृतेर्विकारा विकल्पन्ते= प्रकृतिभेदमनुविधीयन्ते ” इति तात्पर्यटीका ॥ ४३ ॥

अत्र पूर्वपक्ष्याह– द्रव्येति, वृक्षबीजयोर्यथा द्रव्यत्वेन तुल्यत्वेपि स्वरूपभेदो भवतीति द्रव्यविकारेषु वैषम्यम्= प्रकृत्यपेक्षया वैलक्षण्यं दृश्यते इति विकाराणां न प्रकृत्यनुविधाननियमस्तथा प्रकृते इकारयकारयोर्वर्णत्वेन तुल्यत्वेपि स्वरूपभेदो दृश्यते इति वर्णविकारस्यापि विकल्पः= प्रकृत्यपेक्षया वैलक्षण्यमुपपन्नमिति न ह्रस्वदीर्घत्वादिरूपेण प्रकृत्यनुविधानाभावाद् वर्णविकारस्यानुपपत्तिरिति सूत्रार्थः । अत्र– “ न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः ” इति तात्पर्यटीका । व्याचष्टे– यथेति, यथा द्रव्यभावेन= द्रव्यत्वेन विकारतुल्याया अपि प्रकृतेर्विकारवैषम्यम्= विकारस्य वृक्षादेः प्रकृत्यपेक्षया वैलक्षण्यं भवति तथा वर्णभावेन= वर्णत्वेन विकारतुल्याया अपि प्रकृतेरिकारस्य विकारे यकारे विकल्पः= वैलक्षण्यमुपपद्यते इति नेकारसादृश्याभावाद यकारस्येकारविकारत्वानुपपत्तिरित्यर्थः ॥ ४४ ॥

## न- विकारधर्मानुपपत्तेः ॥ ४५ ॥

अयं विकारधर्मः- द्रव्यसामान्ये यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते व्यूहान्तरं चोपजायते तं विकारमाचक्षते, न वर्णसामान्ये कश्चित् शब्दात्माऽन्वयी य इत्वं जहाति यत्वं चापद्यते, तत्र यथा सति द्रव्यभावे विकारवैषम्ये नाऽनडुहोऽश्वो विकारः- विकारधर्मानुपपत्तेः, एवमिवर्णस्य न यकारो विकारः- विकारधर्मानुपपत्तेरिति॥४५॥

इतश्च न सन्ति वर्णविकाराः—

## विकारप्राप्तानामऽपुनरापत्तेः ॥ ४६ ॥

अनुपपन्ना पुनरापत्तिः । कथम् ?. पुनरापत्तेरननुमानादिति । इकारो यकारत्वमापन्नः पुनरिकारो भवति । न पुनरिकारस्य स्थाने यकारस्य प्रयोग इत्यत्रानुमानं नास्ति ? ॥ ४६ ॥

उक्तं निराकरोति- नेति, विकारधर्मस्य= प्रकृत्यनुविधानस्य वर्णेषु अनुपपत्तेः= अदर्शनाद् वर्णविकारो नोपपद्यते, विकारभूतेषु च कटकादिषु प्रकृतिभूतसुवर्णसादृश्यस्य दर्शनात्. वृक्षेष्वपि बीजसादृश्यमस्त्येव तच्च न प्रत्यक्षं सूक्ष्मत्वादित्यन्यदेतत् किं वा बीजरससमानरसवत्त्वं वृक्षफलादिषु बीजसादृश्यं प्रत्यक्षमेव. अन्यथा बीजापेक्षया विलक्षणस्य वृक्षस्य संभवे वटबीजादश्वत्थवृक्षोपि जायेत न चैवमस्तीति विकारेषु प्रकृत्यनुविधानस्य नियमः सिद्ध इति उत्तरवर्णेषु पूर्ववर्णानुविधानस्याभावाद् विकारत्वाभावः सिद्ध इति सूत्रार्थः । व्याचष्टे- अयमिति । विकारधर्ममुपपादयति- द्रव्येति, प्रकृतिविकारयोर्द्रव्यसामान्ये= द्रव्यत्वेन साम्येपि किं वैकद्रव्यत्वे सति द्रव्यम्= प्रकृतिर्यदात्मकं मृत्= मृदात्मकं सुवर्णम्= सुवर्णात्मकं च भवति तस्य= मृदात्मकस्य सुवर्णात्मकस्य वा आत्मनः= स्वरूपस्य= सुवर्णत्वादेरन्वये= अनुवृत्तौ सत्यामेव पूर्वो व्यूहः= कटकाद्याकारो निवर्तते तन्निवृत्त्या व्यूहान्तरम्= कुण्डलाद्याकारो जायते तम्= एतादृशम्= प्रकृतिसरूपं प्रकृत्यनुविधानविशिष्टं कार्यं विकारमाचक्षते तथा च विकारेषु प्रकृत्यनुविधाननियमः सिद्ध इत्यर्थः । वर्णानां विकारत्वानुपपत्तिमाह- नेति, इकारयकारयोर्वर्णसामान्ये= वर्णत्वेन साम्येपि न कश्चित् शब्दात्मा कटकादिविकारेषु सुवर्णवद् अन्वयी= अनुवर्तमानो दृश्यते य इकारत्वं हित्वा यत्वस्य ग्रहणेन यकारस्य प्रकृतिः स्याद् यकारश्च तस्य विकृतिः स्यादिति न वर्णेषु प्रकृतिविकारभाव उपपद्यते किं त्वादेशपक्ष एवेत्यर्थः । वर्णविकाराभावपक्षे दृष्टान्तमाह- तत्रेति, तत्र= अनुवृत्त्यभावे सिद्धे, यथा वृषभाश्वयोर्द्रव्यभावे= द्रव्यत्वसामान्येपि विकारवैषम्ये= विकारवैषम्यात्= स्वरूपवैषम्यात् प्रकृतिविकारभावो न भवति तत्कस्य हेतोः ? विकारधर्मानुपपत्तेः=प्रकृत्यनुविधानादर्शनादेव अर्थाद् वृषभाश्वयोः प्रकृति विकृतिभावयोग्यसादृश्यस्यादर्शनादित्येव वक्तव्यं. प्रकृत्यनुविधाने च प्रकृतिविकृतिभावो भवति यथा वृषभतद्वत्सयोः, एवं यकारादिवर्णेष्वपि इकारादिवर्णानुविधानाभावादेव प्रकृतिविकृतिभावो नोपपद्यते इति न यकार इकारविकार इत्यर्थः ॥ ४५ ॥

अग्रिमसूत्रमवतारयति- इतश्चेति । वर्णविकारासंभवे हेत्वन्तरमाह- विकारेति, विकारप्राप्तानाम्= विकृतानाम्= विकारभूतानाम् अपुनरापत्तेः= पुनः प्रकृतिरूपता नोपपद्यते यथा दुग्धविकारस्य दध्नो दुग्धरूपता न संभवति. प्रकृते तु इकारस्थाने उत्पन्नस्यापि यकारस्येकारभावः संभवति- 'दध्यत्र' इति वचनानन्तरम् 'दधि अत्र' इत्यस्यापि वक्तुं शक्यत्वादिति वर्णानां पुनः प्रकृतिरूपत्वसंभवाद् विकारत्वं नोपपद्यते इति सूत्रार्थः । वस्तुतस्तु वर्णानामपि पुनः प्रकृत्यापत्तिर्नोपपद्यते क्षणिकत्वस्वीकारादिति विभावनीयम् । व्याचष्टे- अनुपपन्नेति, विकाराणां पुनरापत्तिः= पुनः प्रकृतिरूपताऽनुपपन्ना= न दृश्यते यथा दध्नो दुग्धरूपता न संभवतीत्यर्थः । विकाराणां पुनरापत्तेरनुपपत्तौ हेतुं जिज्ञासते- कथमिति । उत्तरमाह- पुनरापत्तेरिति, अननुमानात्= प्रमाणाभावात्= अदर्शनाद विकारेषु पुनरा-

## सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४७ ॥

अननुमानादिति न- इदं ह्यनुमानम्- सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते, एवमिकारो यणि यकारत्वमापन्नः पुनरिकारो भवतीति ॥४७॥

व्यभिचारादननुमानम्- यथा पयो दधिभावमापन्नं पुनः पयो न भवति- किमेवं वर्णानां न पुनरापत्तिः ?. अथ सुवर्णवत् पुनरापत्तिरिति ? ।

सुवर्णोदाहरणोपपत्तिश्च—

## न- तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४८ ॥

पत्तिर्नोपपद्यते इत्यर्थः । अत्र- " अननुमानादिति प्रमाणाभावमुपलक्षयति " इति तात्पर्यटीका । वर्णेषु पुनरापत्तिमाह- इकार इति, विकारत्वविरुद्धा पुनरापत्तिर्वर्णेपूपलभ्यमाना विकारत्वं निवारयतीत्यर्थः । विपक्षे बाधकमाह- नेति, इकारस्य स्थाने यकारस्य प्रयोगः= आदेशो भवतीत्यत्रानुमानम्= प्रमाणं नास्तीति न किं त्वस्ति प्रमाणं विकारधर्मस्य= प्रकृत्यनुविधानस्यानुपलब्धिः विकारत्वविरुद्धा पुनरापत्तिश्चेति न वर्णविकारपक्ष उपपद्यते इत्यर्थः ॥ ४६ ॥

पूर्वपक्षी विकाराणामपि पुनरापत्तिमुदाहरति- सुवर्णेति, सुवर्णादिविकारेषु पुनरापत्तेर्दर्शनात् " अपुनरापत्तेः " इति यो हेतुरुक्तः सोऽहेतुः= वर्णविकाराभावसाधको न संभवतीति सूत्रान्वयः । व्याचष्टे- अननुमानादिति, पूर्वसूत्रभाष्ये " पुनरापत्तेरननुमानात् " इति यदुक्तं तन्न युक्तमित्यर्थः । विकाराणां पुनरापत्तौ प्रमाणमाह- इदमिति । अनुमानम्= प्रमाणम् । प्रत्यक्षप्रमाणमुदाहरति- सुवर्णमिति, रुचकादिविकाराणां कुण्डलत्वाद्यापत्तिरूपा पुनरापत्तिरनेन प्रदर्शिता । प्रकृतमाह- एवमिति, यणि= यणादेशेन, तथा च पुनरापत्तेर्विकारत्वविरुद्धत्वाभावाद् वर्णानां पुनरापत्त्या विकारत्वबाधो न संभवतीति वर्णविकारपक्षः सिद्ध इत्यर्थः ॥ ४७ ॥

भाष्यकारः स्वोक्तं विकाराणां पुनरापत्तौ प्रमाणाभावमुपपादयति- व्यभिचारादिति, तदेतद् भाष्यमुक्तपूर्वपक्षखण्डनपरम् । पुनरापत्तेर्व्यभिचारादननुमानम्= प्रमाणाभाव इत्यन्वयः, यत्र यत्र विकारत्वं तत्र तत्र पुनरापत्तिरिति व्याप्तिर्नास्ति दुग्धविकारेषु पुनरापत्तेरसंभवादिति न विकारत्वव्यभिचारिण्या पुनरापत्त्या वर्णानां विकारः सिध्यतीत्यर्थः । व्यभिचारमुदाहरति- यथेति, तथा च विकारभूतेषु दध्यादिषु पुनरापत्तिर्न दृश्यते सुवर्णादिविकारेषु च दृश्यते इति व्यभिचारस्तदत्र वर्णविकारपक्षे दध्यादिष्विव वर्णेषु पुनरापत्त्यभावो वा वक्तव्यः किं वा सुवर्णादिविकारेष्विव पुनरापत्तिर्वक्तव्येति संदेहः, दृश्यते च वर्णेषु पुनरापत्तिः सा च विकारत्वव्यभिचारिणीति नोक्तसुवर्णविकारदृष्टान्तेन वर्णविकार उपपद्यते इत्यर्थः । वस्तुतस्तु वर्णेषु पुनरापत्तेः प्रदर्शितत्वात्तत्संदेहोयं प्रामादिक एवेत्यनुसंधेयम् ॥

स्ववक्तव्यमाह- सुवर्णेति, सुवर्णोदाहरणोपपत्तिश्च न संभवतीति सूत्रघटकनकारेणान्वयः । नेति- तद्विकाराणाम्= सुवर्णविकाराणां कुण्डलादीनां सुवर्णभावस्य= सुवर्णत्वस्य अव्यतिरेकात्= अलोपादित्यन्वयः, यत्र हि प्राकृतरूपत्यागानन्तरं प्राकृतरूपस्य पुनर्ग्रहणं भवति तत्र पुनरापत्तिरित्युच्यते कटकादीनां च प्रकृतिः सुवर्णमेव न तु कुण्डलादिकं कटकादिभिश्च सुवर्णरूपता न परित्यज्यते यदि परित्यज्येत तदा पुनः सुवर्णरूपतापत्त्या पुनरापत्तिरुपपद्येतापि न चैवमस्तीति न सुवर्णविकारेषु पुनरापत्तिरस्ति येन सुवर्णविकारदृष्टान्तात पुनरापत्तियुक्तानां वर्णानां विकारत्वं सिध्येतेति सूत्रार्थः । व्याचष्टे-अवस्थितमिति, हीयमानेन कुण्डलत्वादिना धर्मेण. उपजायमानेन रुचकत्वादिना धर्मेण, सुवर्णस्यावस्थितत्वेनाऽनुवर्तमानत्वं प्राप्तं तेन सुवर्णरूपताया अनिवृत्तिः प्राप्ता. तया च पुनरापत्त्यभावः

अवस्थितं सुवर्णं हीयमानेनोपजायमानेन च धर्मेण धर्मि भवति नैवं कश्चित् शब्दात्मा हीयमानेन इत्वेन उपजायमानेन यत्वेन च धर्मी गृह्यते तस्मात् सुवर्णोदाहरणं नोपपद्यते इति ॥ ४८ ॥

## वर्णत्वाव्यतिरेकाद् वर्णविकाराणामप्रतिषेधः ॥ ४९ ॥

वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति यथा सुवर्णविकारः सुवर्णत्वमिति ॥ ४९ ॥

## सामान्यवतो धर्मयोगो न सामान्यस्य ॥ ५० ॥

कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य. एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ ? वर्णत्वं सामान्यं न तस्येमौ धर्मौ भवितुमर्हतः, न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिः= तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ५० ॥

इतश्च वर्णविकारानुपपत्तिः---

## नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥ ५१ ॥

---

प्राप्तः-- पूर्वरूपनिवृत्त्यनन्तरमेव पुनरापत्तेः संभवादित्यर्थः । प्रकृते सुवर्णोदाहरणानुपपत्तिमाह-- नैवमिति, शब्दात्मा= शब्दस्वरूपम् । यदि सुवर्णवत् कस्यचित् शब्दस्यानुवृत्तिः स्यात्तदा सुवर्णदृष्टान्तो घटेतापि न चैवमस्तीति न विकारेषु पुनरापत्तिः संभवतीति वर्णेषु दृश्यमानया पुनरापत्त्या विकारत्वं निवर्तते इत्यादेशपक्षः सिद्ध इत्यर्थः । उपसंहरति-- तस्मादिति ॥ ४८ ॥

अत्र पूर्वपक्ष्याह-- वर्णत्वेति, यथा सुवर्णविकारेषु सुवर्णत्वमनुवर्तते तथा वर्णविकारेष्वपि यकारादिषु वर्णत्वमनुवर्तते एवेति वर्णत्वस्याऽव्यतिरेकात्= अव्यभिचारात्= अनुवर्तमानत्वाद् वर्णविकाराणां प्रतिषेधो नोपपद्यते किं तु सुवर्णविकारवद् वर्णविकारोऽपि सिद्ध इति सूत्रार्थः । व्याचष्टे-- वर्णविकारा इति, सूत्रव्याख्यानेन भाष्यमपि व्याख्यातं विज्ञेयम् ॥ ४९ ॥

उक्तपूर्वपक्षं प्रत्याचष्टे-- सामान्येति, दृष्टान्तपक्षे सामान्यवतः= सुवर्णत्वसामान्ययुक्तस्य सुवर्णस्य धर्मयोगः= कुण्डलत्वादिधर्मयोगो भवति न तु सुवर्णत्वसामान्यस्य. सुवर्णे चावस्थितत्वादनुवर्तमानत्वमिति संभवति तस्य धर्मयोग इति सुवर्णकुण्डलादिषु प्रकृतिविकारभाव उपपद्यते. प्रकृते च इकारयकारयोरनुवर्तमानस्य वर्णत्वसामान्यस्य तु इत्वयत्वादिधर्मयोगो नैव संभवति-- असंभवात्= सामान्ये सामान्यानङ्गीकारात् . वर्णत्वसामान्यवांश्च न कोपि इकारयकारादावनुवर्तते येन यकारादिवर्णानां विकारत्वं स्यादिति न वर्णविकार उपपद्यते इति सूत्रार्थः । व्याचष्टे-- कुण्डलेति, सुवर्णादिद्रव्यस्य कुण्डलत्वादिधर्मः संभवति-- तत्र जायमानत्वात्. न तु सुवर्णत्वस्य-- द्रव्यत्वाभावात् । प्रकृतमाह-- एवमिति, प्रकृते सुवर्णवद् यकारादिष्वनुवर्तमानो वर्णः कोपि नोपलभ्यते यकारादयो यस्य विकाराः स्युः । वर्णत्वं च सामान्यं स्वयमेव धर्मभूतमिति न तस्य इमौ= इकारयकारौ= इत्वयत्वे वा धर्मौ संभवत इत्याह-- वर्णत्वमिति । ननु इकारयकारयोरेव प्रकृतिविकारभावः किं न स्यादित्याशङ्क्याह-- न चेति, अत्र "धर्मः" इत्यत्र 'धर्मी' इतिवक्तव्यमासीत्, निवर्तमानो धर्मी जायमानस्य प्रकृतिर्न भवति-- अनुवर्तमानस्यैव प्रकृतित्वसंभवाद् इकारश्च यकारादेशेन निवर्तते एव नानुवर्तते इति न इकारो यकारस्य प्रकृतिः संभवतीत्यन्वयः । सामान्येनोक्तं विशेषरूपेण प्रकृते समन्वयति-- तत्रेति । स्पष्टमन्यत् । तस्मान्न वर्णविकारपक्ष उपपद्यते इत्यर्थः ॥ ५० ॥

अग्रिमसूत्रमवतारयति-- इतश्चेति, इतः= सूत्रोक्तहेतोः । नित्यत्वे इति-- वर्णानां नित्यत्वे अविकारात्= अविकारत्वादेव विकारत्वं नोपपद्यते येन वर्णविकार उपपद्येत-- अनित्यस्यैव विकारत्वसंभवात्, नित्यानामात्मादीनां विकारत्वास्वीकारात्, वर्णानामनित्यत्वे चाऽनवस्थानात्= प्रतिक्षणं विना-

'नित्या वर्णाः' इत्येतस्मिन् पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद् विकारानुपपत्तिः, नित्यत्वेऽविनाशित्वात् कः कस्य विकार इति ? । अथ 'अनित्या वर्णाः' इतिपक्षः ? एवमप्यनवस्थानं वर्णानाम् । किमिदमनवस्थानं वर्णानाम् ?, उत्पद्य निरोधः, उत्पद्य निरुद्धे इकारे यकार उत्पद्यते. यकारे चोत्पद्य निरुद्धे इकार उत्पद्यते, कः कस्य विकारः ? । तदेतद् अवगृह्य संधाने. संधाय चाऽवग्रहे वेदितव्यमिति ॥ ५१ ॥

नित्यपक्षे तु तावत्समाधिः—

## नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५२ ॥

'नित्या वर्णा न विक्रियन्ते' इति विप्रतिषेधः, यथा नित्यत्वे सति किंचिदतीन्द्रियं किंचिदिन्द्रियग्राह्यम् इन्द्रियग्राह्याश्च वर्णाः. एवं नित्यत्वे सति किंचिन्न विक्रियते वर्णास्तु विक्रियन्ते इति ॥ विरोधादहेतुः— तद्धर्मविकल्पः, नित्यं नोपजायते नाऽपैति= अनुपजनापाय-

शित्वेनानुवर्तमानत्वाभावात् प्रकृतित्वं नोपपद्यते तथा च पूर्ववर्णस्याऽनवस्थानात् प्रकृतित्वाभावे उत्तरवर्णस्य विकृतित्वमपि न संभवति— विकारत्वस्य प्रकृतित्वनिरूपितत्वादिति न वर्णविकारः पक्षद्वयेपि संभवतीति सूत्रार्थः । व्याचष्टे— नित्या इति, उभयोः= इकारयकारयोर्वर्णत्वेन नित्यत्वं तेन च विकारत्वानुपपत्तिरित्यर्थः । उक्तमेव काकाप्याह— नित्यत्वे इति, को वर्णः कस्य वर्णस्य विकारः स्यात् ? सर्वेषामपि वर्णानां नित्यत्वस्वीकारादित्यर्थः । वर्णानित्यत्वपक्षे विकारानुपपत्तिमाह— अथेति, एवमपि= एवं हि= अनित्यत्वे ह्यनवस्थानम्= अननुवर्तमानत्वं विनाशित्वं वा वर्णानां प्राप्तम्— अनित्यत्वात्. अनवस्थितस्य च प्रकृतित्वं नोपपद्यते प्रकृतित्वाभावे च तद्विकारोपि नोपपद्यते इति वर्णानामनित्यत्वपक्षेपि प्रकृतिविकारभावो नोपपद्यते इत्यर्थः । अनवस्थानस्वरूपं जिज्ञासते— किमिदमिति । उत्तरमाह— उत्पद्येति, उत्पद्य= उत्पत्त्यनन्तरं यो निरोधः= विनाशः स एवाऽनवस्थानम् । अनवस्थानं वर्णेषु समन्वयति— उत्पद्येति, निरुद्धे= विनष्टे, इकारस्य क्षणविनाशित्वेनानुवर्तमानत्वाभावात् प्रकृतित्वं नोपपद्यते. इकारस्य प्रकृतित्वाभावे च यकारस्य विकृतित्वमपि नोपपद्यते इत्यर्थः । विपरीतक्रममाह— यकारेति । आक्षिपति— क इति, को वर्णः कस्य वर्णस्य विकारः स्यात् ?— अनुवर्तमानस्य कस्यापि वर्णस्याभावात् । इकारयकारयोरुत्पत्तिनिरोधस्थलमाह— तदेतदिति, अवगृह्य= विगृह्य= 'दधि अत्र' इति विग्रहानन्तरं संधाने= 'दध्यत्र' इति संधिकार्ये कृते 'इकारे निरुद्धे यकार उत्पद्यते' इति वेदितव्यम्, संधाय= 'दध्यत्र' इति संधिकार्यानन्तरम् अवग्रहे= 'दधि अत्र' इति पुनर्विग्रहे कृते 'यकारे निरुद्धे इकार उत्पद्यते' इति वेदितव्यमित्यन्वयः ॥ ५१ ॥

अग्रिमसूत्रमवतारयति— नित्येति, वर्णानां नित्यत्वपक्षे विकारत्वस्य समाधिः= उपपादनमनेन सूत्रेण क्रियते इत्यर्थः । नित्यानामिति— नित्यानामपि पदार्थानां धर्मविकल्पात्= धर्मस्य नानाविधत्वात् तत्राकाशादीनां नित्यानामतीन्द्रियत्वं चकाराद् गोत्वादीनां नित्यानामिन्द्रियग्राह्यत्वमिति यथा धर्मभेदस्तथा केषां चिन्नित्यानां विकारत्वानुपपत्तावपि वर्णानां नित्यानामपि इन्द्रियग्राह्यत्वाद् विकारत्वं संभवतीति वर्णविकाराणाम् अप्रतिषेधः= प्रतिषेधो नोपपद्यते इति वर्णनित्यत्वपक्षेपि वर्णविकार उपपन्न इति सूत्रार्थः । व्याचष्टे— नित्या इति, 'नित्या वर्णा न विक्रियन्ते' इति यो वर्णविकारप्रतिषेधः स विप्रतिषेधः= विरुद्धः= अयुक्तः प्रतिषेधः— नित्यत्वेपि विकारसंभवादित्यर्थः । उदाहरति— यथेति, नित्यं सदतीन्द्रियमाकाशादि. नित्यं सदिन्द्रियग्राह्यं गोत्वादि, तत्र नित्या अपि वर्णा इन्द्रियग्राह्या इति यथाऽऽकाशादिनित्यापेक्षया वैधर्म्यं तथा विकारलक्षणं वैधर्म्यमपि संभवतीति प्रकृतमाह— एवमिति, किंचित्=

धर्मकं नित्यम्. अनित्यं पुनरुपजनापाययुक्तम्. न चान्तरेणोपजनापायौ विकारः संभवति. तद् यदि वर्णा विक्रियन्ते ? नित्यत्वमेषां निवर्तते, अथ नित्याः ? विकारधर्मत्वमेषां निवर्तते, सोयं विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥ ५२ ॥

अनित्यपक्षे समाधिः—

## अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपलब्धिः ॥ ५३ ॥

यथाऽनवस्थायिनां वर्णानां श्रवणं भवत्येवमेषां विकारो भवतीति ॥ असंबन्धादसमर्था । अर्थप्रतिपादिका वर्णोपलब्धिर्न विकारेण संबन्धादसमर्था या गृह्यमाणा वर्णविकारमनुमापयेदिति, तत्र यादृगिदम्— यथा गन्धगुणा पृथिवी एवं शब्दसुखादिगुणापीति. तादृगेतद् भव-

---

गोत्वादि ॥ एवं वर्णानां नित्यत्वपक्षेपि विकारत्वं सूत्रानुसारेण व्याख्याय तस्य प्रत्याख्यानमारभते— विरोधादिति, "तद्धर्मविकल्पात्" इति यः सूत्रे वर्णविकारसाधनार्थं हेतुरुक्तः स विरोधादहेतुरित्यन्वयः । नित्यस्वरूपमाह— नित्यमिति, नापैति= न विनश्यति, अनुपजनापायधर्मकम्= उत्पत्तिविनाशहीनमेव नित्यमित्युच्यते । अनित्यस्वरूपमाह— अनित्यमिति, उपजनापाययुक्तम्= उत्पत्तिविनाशयुक्तं चानित्यमित्युच्यते । पर्यवसितमाह— न चेति, उपजनापायौ= उत्पत्तिविनाशौ अन्तरेण= विना, पूर्वस्य विनाशं विना उत्तरस्य चोत्पत्तिं विना प्रकृतिविकारभावो नोपपद्यते यथा दुग्धदध्नोः । प्रकृतमाह— तदिति, वर्णविकारपक्षे वर्णानां नित्यत्वं नोपपद्यते— विकारत्वेनाऽनित्यत्वप्रसङ्गात् । एषाम्= वर्णानाम् । नित्यत्वपक्षे च विकारो नोपपद्यते इत्याह— अथेति । उपसंहरति— सोयमिति, धर्मविकल्पः= धर्मविकल्पादिति हेतुर्विरुद्धत्वाद् हेत्वाभास एवेति न वर्णविकारसाधकः संभवति. विरुद्धत्वं च नित्यानां विकारत्वासंभवात् विकारत्वसाधकस्य नित्येष्वसंभवात् अनित्यत्वव्याप्यत्वाच्च नित्यत्वविकारत्वादिविरुद्धधर्माणामेकत्रासंभवाच्च विज्ञेयमिति न नित्यत्वपक्षे वर्णविकारः संभवतीत्यर्थः ॥ ५२ ॥

अग्रिमसूत्रमवतारयति— अनित्येति, वर्णानामनित्यत्वपक्षे समाधिः= विकारोपपादनमनेन सूत्रेण क्रियते इत्यर्थः । अनवस्थितत्वे इति— वर्णानामनवस्थायित्वे= अनित्यत्वे यथोपलब्धिः= प्रत्यक्षं भवति तथा तत्= तेषां वर्णानां विकारोपलब्धिः= विकारोपि संभवति, क्षणिकानामिकारादिवर्णानां यथा प्रत्यक्षविषयत्वमुपपद्यते तथा यकारादिवर्णोत्पादकत्वमपि संभवतीत्यनित्यत्वपक्षेपि वर्णविकार उपपन्न इति सूत्रार्थः । व्याचष्टे— यथेति । एषाम्= वर्णानाम् । अन्यथाऽनवस्थायित्वे प्रत्यक्षविषयत्वमपि न स्यात् अवस्थितस्यैव प्रत्यक्षविषयत्वदर्शनादित्याशयः । एवमनित्यत्वपक्षेपि वर्णविकारं सूत्रानुसारेण व्याख्याय तस्य प्रत्याख्यानमारभते— असंबन्धादिति, वर्णविकारसाधकत्वेन या वर्णोपलब्धिर्निर्दिष्टा सा वर्णविकारेण सहाऽसंबन्धात्= असंबद्धत्वादेव असमर्था= वर्णविकारसाधनसमर्था नास्ति— संबद्धस्यैव साधकत्वाद् धूमादेरिवेत्यर्थः । अत्र— "तस्मादसंबन्धादसमर्था वर्णोपलब्धिर्वर्णविकारप्रतिपादने इत्यर्थः" इति तात्पर्यटीका । नन्वसमर्थापि वर्णोपलब्धिः कथं न वर्णविकारमनुमापयेत् ? इत्याशङ्क्याह— अर्थेति, अर्थप्रतिपादिका= वर्णविकारप्रतिपादकत्वेनाभिमता वर्णोपलब्धिर्वर्णविकारेण सह संबन्धादसमर्था नास्ति या गृह्यमाणा वर्णविकारमनुमापयेदित्यन्वयः; यदि वर्णोपलब्धिर्वर्णविकारसंबन्धादसमर्था स्यात्तदाऽसामर्थ्यात् वर्णविकारसंबन्धस्य तेन वर्णविकारस्यानुमापिका स्यादपि न चैवमस्तीत्यर्थः । अत्र "मा भूद्वर्णोपलब्धिर्वर्णविकारेण साक्षात्संबद्धा. आदेशविरोधितया तु तन्निवृत्त्या पारिशेष्याद्विकारं साधयिष्यतीत्यत आह— न च वर्णोपलब्धिरिति" इति तात्पर्यटीका । वर्णोपलब्धेर्वर्णविकारानुमापकत्वे दृष्टान्तमाह— तत्रेति, 'पृथिवी शब्दसुखादिगुणा गन्धगुणात्वात्' किं वा 'यथा पृथिवी गन्धगुणा तथा शब्दसुखादिगुणापि' इत्युक्ते यादृगिदं वाक्यं नाम यथा गन्धवत्त्वेन शब्दसुखादिमत्त्वं न प्राप्नोति.

तीति । न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णान्तरप्रयोगस्य निर्वर्तिका, योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगः यद्ययमिवर्णोपलब्ध्या निर्वर्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यते इति गृह्येत ?, तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ॥ ५३ ॥

## विकारधर्मित्वे नित्यत्वाभावात् कालान्तरेऽविकारोपपत्तेश्चाऽप्रतिषेधः ॥ ५४ ॥

" तद्धर्मविकल्पात् " इति न युक्तः प्रतिषेधः– न खलु विकारधर्मकं किंचिद् नित्यमुपलभ्यते इति । " वर्णोपलब्धिवत् " इति ( च ) न युक्तः प्रतिषेधः– अवग्रहे हि ' दधि अत्र ' इति प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते– ' दध्यत्र ' इति. चिरनिवृत्ते

---

तादृगेतत्= ' वर्णोपलब्धिवद् वर्णविकारोपलब्धिः ' इदं वाक्यं भवति नाम तथा वर्णोपलब्ध्या वर्णविकारो न सिध्यति– वर्णोपलब्धेर्वर्णविकारसंबद्धत्वाभावादित्यर्थः । विपक्षे बाधकमाह– न चेति, वर्णनिवृत्तौ= पूर्ववर्णनिवृत्तौ जातायाम् उत्तरवर्णप्रयोगस्य निर्वर्तिका= निष्पादिका नेत्यन्वयः । सामान्येनोक्तं प्रकृते विशेषरूपेण समन्वयति– योयमिति, निर्वर्तते= निष्पद्येत, तत्र= इकारस्थाने ' दध्यत्र ' इत्यत्र, उपलभ्यमानो यकारप्रयोग इत्यन्वयः किं वा तत्र= यकारप्रयोगे उपलभ्यमानः सन् इवर्ण इत्यन्वयः । गृह्येत= विज्ञायेत, यथा सुवर्णोपलब्ध्या कुण्डलोपलब्धिर्भवतीति सुवर्ण कुण्डलत्वमापद्यते इति सिध्यति तथैवर्णोपलब्ध्या यदि यकारप्रयोगः= यकारो निर्वर्तेत तदोपलभ्यमानेपि यकारप्रयोगे उपलभ्यमानेन इवर्णेन ' इवर्णो यत्वमापद्यते ' इति सिध्येतापि. न चैवमस्ति– इवर्णोपलब्धौ सत्यां यकारप्रयोगासंभवादित्यन्वयः, यथा कुण्डलावस्थायामुपलभ्यमानत्वेन सुवर्णं कुण्डलत्वमापन्नमिति गृह्यते तथा यदि यकारावस्थायामिकार उपलभ्येत तदा इकारो यत्वमापन्न इति गृह्येतापि न चैवमस्ति यकारावस्थायाम् ' दध्यत्र ' इत्यादावविकारस्योपलम्भाभावादित्यर्थः । उपसंहरति– तस्मादिति, वर्णोपलब्धिर्वर्णविकारस्याऽहेतुः= अनुमापिका न भवतीत्यन्वयः ॥ ५३ ॥

" नित्यानाम् " " अनवस्थायित्वे " इत्युक्तसूत्रद्वयमपि प्रत्याचष्टे– विकारेति, वर्णानां विकारधर्मित्वे= विकारित्वे नित्यत्वाभावात्= नित्यत्वं न संभवतीति यः " नित्यानाम् " इत्यादिसूत्रेण न्यायसिद्धान्तस्य प्रतिषेध उक्त सोऽप्रतिषेधः= प्रतिषेधो नोपपद्यते, तथा " अनवस्थायित्वे " इत्यादिसूत्रेण वर्णानित्यत्वपक्षे वर्णविकारोपादनेन न्यायसिद्धान्तस्य यः प्रतिषेध उक्तः सोऽप्रतिषेधः= प्रतिषेधो नोपपद्यते– कालान्तरे= पूर्ववर्णनिवृत्त्यनन्तरकालेऽविकारोपपत्तेः= विकारोपपत्तेरसंभवात्. विकारो हि प्रकृतिविनाशानन्तरकाले न भवति न हि दुग्धविनाशानन्तरं दधि जायते प्रकृते च इकारनाशानन्तरमेव यकारो जायते इति न विकारो भवतीति न वर्णविकार उपपद्यते इतिसूत्रार्थः । अनेनैकेनैव सूत्रेण पूर्वोक्तसूत्रद्वयं प्रत्याख्यातम् । अत्र सूत्रे– " अविकारोपपत्तेः " इत्यस्य स्थाने ' विकारानुपपत्तेः ' इति वक्तव्यमासीत् । अत्र– " प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते विकारस्तु कालान्तरीयः ( कालान्तरे ) न युज्यते " इति विश्वनाथभट्टाः । सूत्रस्य पूर्वभागं व्याचष्टे– तद्धर्मेति, " नित्यानाम् " इतिसूत्रोक्तो यः " तद्धर्मविकल्पात् " इति न्यायसिद्धान्तप्रतिषेधः स न युक्त इत्यर्थः । उक्ते हेतुत्वेन विकारधर्मित्वे नित्यत्वासंभवमाह– नेति, वर्णनित्यत्वपक्षे वर्णविकारो नोपपद्यते विरोधात्= नित्यानां विकारधर्मित्वासंभवादित्यर्थः । उत्तरभागं व्याचष्टे– वर्णेति, " अनवस्थायित्वे " इतिसूत्रोक्तो यः " वर्णोपलब्धिवत् " इति न्यायसिद्धान्तप्रतिषेधः स न युक्त इत्यन्वयः । सूत्रोक्तहेतुभागं व्याचष्टे– अवग्रहे इति, अवग्रहे= विग्रहावस्थायाम्= ' दधि अत्र ' इति विग्रहप्रयोगं कृत्वा चिरं स्थित्वा= चिरकालानन्तरम्= चिरेण इकारविनाशानन्तरं संहितावस्थायाम् ' दध्यत्र ' इति प्रयुङ्क्ते, तत्रेकारनाशानन्तरं जायमानस्य यकारस्य

चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते ? । कारणाभावात् कार्याभाव इत्यनुयोगः प्रसज्यते इति ॥ ५४ ॥

इतश्च वर्णविकारानुपपत्तिः—

प्रकृत्यनियमाद् वर्णविकाराणाम् ॥ ५५ ॥

इकारस्थाने यकारः श्रूयते. यकारस्थाने खल्विकारो विधीयते– विध्यति ( इति ), तद् यदि स्यात् प्रकृतिविकारभावो वर्णानाम् ? तस्य प्रकृतिनियमः स्यात्– दृष्टो विकारधर्मित्वे प्रकृतिनियम इति ॥ ५५ ॥

अनियमे नियमाद् नाऽनियमः ॥ ५६ ॥

योऽयं प्रकृतेरनियम उक्तः स नियतः= यथाविषयं व्यवस्थितः– नियतत्वान्नियम इति भवति, एवं सत्यनियमो नास्ति. तत्र यदुक्तम्– "प्रकृत्यनियमात्" इति एतदयुक्तमिति॥५६॥

---

इकारविकारत्वं नोपपद्यते इत्यर्थः । एवं क्रमं निरूप्य पर्यवसितमाह– चिरेति, चिरनिवृत्ते इवर्णे अयं प्रयुज्यमानो यकारः कस्य विकारः प्रतीयते= कथमिकारविकारः प्रतीयेत– प्रकृतिविनाशानन्तरं जायमानस्य तद्विकारत्वासंभवादित्यर्थः । "कस्य प्रतीयते" इत्यत्र 'न प्रतीयते' इति वक्तव्यमासीत् । विकारपक्षे प्रतिकूलतर्कमाह– कारणेति, कारणाभावे कार्यं न संभवतीति नियमाद् इकारे नष्टे उत्पद्यमानो यकारः कथमिकारकार्यं स्यादित्यनुयोगः= आक्षेपः प्रसज्यते इति न वर्णविकार उपपद्यते इत्यर्थः ॥५४॥

अग्रिमसूत्रमवतारयति इतश्चेति, इतः= एतत्सूत्रोक्तहेतोः । प्रकृतीति– प्रकृतिविकारेषु प्रकृतिविकृत्योर्नियमो भवति यथा दुग्धं दधिप्रकृतिरेव भवति न तु दधिविकृतिरपि दधि च दुग्धविकृतिरेव भवति न तु दुग्धप्रकृतिरपि, वर्णविकारत्वेन चाभिमतानां तु वर्णानामयं प्रकृतिनियमो नास्ति– 'दध्यत्र' इत्यत्रेकारस्य प्रकृतित्वेपि 'विध्यति' इत्यादिसंप्रसारणस्थले इकारस्यैव विकृतित्वात्, 'दध्यत्र' इत्यत्र यकारस्य विकृतित्वम् 'विध्यति' इत्यत्र च यकारस्य प्रकृतित्वम्, प्रकृतिविकारभावस्थले चैतादृशः प्रकृत्यनियमो विकृत्यनियमश्च न दृष्टः किं तु प्रकृतिः प्रकृतिरेव भवति न विकृतिः, विकृतिश्च विकृतिरेव भवति न प्रकृतिरिति वर्णेषु प्रकृतिविकृत्योर्नियमाभावान्न वर्णविकारा उपपद्यन्ते इति सूत्रार्थः । व्याचष्टे– इकारेति, 'दध्यत्र' इत्यत्र इतिशेषः, यणादेशस्थले इत्यर्थः । तदनेनेकारस्य प्रकृतित्वमुक्तम्, इकारस्य विकृतित्वमुदाहरति– यकारेति, 'विध्यति' इत्यत्र "ग्रहिज्याव्यधि" इतिसूत्रेण व्यधधातोर्यकारस्थाने इकारो भवतीति इकारस्य विकृतित्वमपि प्राप्तम् । स्वाभिप्रायमाह– तदिति तस्य= वर्णविकारस्य, तथा चेकारस्य प्रकृतित्वे विकृतित्वं न स्याद् न चैवमस्तीति न वर्णेषु प्रकृतिविकारभाव उपपद्यते इत्यर्थः । प्रकृतिविकारभावस्थले प्रकृतिनियमे प्रत्यक्षं प्रमाणयति– दृष्ट इति, यथा दुग्धादीनां दधिप्रकृतित्वमेव दृष्टं न दधिविकृतित्वं दध्यादीनां च विकृतित्वमेव दृष्टं न प्रकृतित्वमित्यर्थः ॥ ५५ ॥

अस्य च्छलेन पूर्वपक्ष्युत्तरमाह– अनियमेति, नाऽनियमः= योऽयं प्रकृत्यनियम उक्तः स न युक्तः– प्रकृतिनियमाभावेपि अनियमे= प्रकृत्यनियमस्य नियमात्, प्रकृत्यनियमस्तु निश्चितत्वाद नियत एवेति नियमोपलब्ध्या प्रकृत्यनियमो न हानिकरस्तथा च यत्र प्रकृतित्वं तत्र न विकृतित्वं यत्र च विकृतित्वं तत्र तु न प्रकृतित्वमिति न प्रत्यक्षविरोध इति सूत्रार्थः । व्याचष्टे– योयमिति । प्रकृत्यनियमस्य नियतत्वमाह– यथेति, यथाविषयम्= विषयभेदेन यथा 'दध्यत्र' इत्यादाविकारस्य प्रकृतित्वमेव. 'विध्यति' इत्यादाविकारस्य विकृतित्वमेवेत्यर्थः । उक्ते हेतुमाह– नियतत्वादिति । उपसंहरति– एवमिति, एवम्= प्रकृत्यनियमस्य नियतत्वे सति । उक्तसिद्धान्तं प्रत्याचष्टे– तत्रेति, तत्र= प्रकृत्यनियमस्य नियतत्वे ॥ ५६ ॥

## नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५७ ॥

नियम इत्यत्राऽर्थाभ्यनुज्ञा. अनियम इति तस्य प्रतिषेधः. अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति. अनियमश्च नियतत्वाद् नियमो न भवतीति । नाऽत्रार्थस्य तथाभावः प्रतिषिध्यते, किं तर्हि ?. तथाभूतस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वाद् नियमशब्द एवोपपद्यते, सोयं नियमादनियमे प्रतिषेधो न भवतीति ॥ ५७ ॥

न चेयं वर्णविकारोपपत्तिः परिणामात् कार्यकारणभावाद्वा, किं तर्हि ?—

## गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥ ५८ ॥

---

उक्तपूर्वपक्षं प्रत्याचष्टे– नियमादिति, पूर्वपक्षिणाऽनियमे= प्रकृत्यनियमस्य नियमात्= नियममुपपाद्य यः सिद्धान्तप्रतिषेध उक्तः स न युक्तः– नियमानियमविरोधात्= नियमानियमयोः परस्परं विरोधादित्यन्वयः, वर्णेषु प्रकृत्यनियमस्य नियतत्वेपि प्रकृतिनियमो न संभवति, प्रकृतिविकारस्थले च प्रकृतिनियम उपपादितस्तदभावात् वर्णेषु प्रकृतिविकारभावो नोपपद्यते वह्न्यभावे धूमवद्. वर्णेषु प्रकृतिनियमाभावश्चोपपादित एवेति सूत्रार्थः । व्याचक्षाणो नियमपदार्थमाह– नियम इति, अभ्यनुज्ञा= स्वीकारः= निश्चय इतियावत्, नियमो भावपदार्थं इत्यर्थः । अनियमपदार्थमाह– अनियम इति, तस्य= नियमस्य । नियमानियमयोः परस्परं विरोधमाह– अनुज्ञातेति, अनुज्ञातस्य= नियमपदार्थस्य= नियमप्राप्तस्य, निषिद्धस्य= अनियमपदार्थस्य= नियमप्रतिषेधप्राप्तस्य चाऽनर्थान्तरत्वम्= एकपदार्थत्वं न संभवति– व्याघातात्= परस्परं विरोधात् तथा च प्रकृत्यनियमोपि प्रकृतिनियमरूपो न संभवतीत्यर्थः । अनियमस्य नियमत्वानुपपत्तिमाह– अनियमश्चेति, अनियमः= उक्तः प्रकृत्यनियमो नियतत्वात्= नियतत्वेपि नियमस्वरूपो न भवति यथा घटाभावो घटस्वरूपो न भवति तथेत्यर्थः । स्वाभिप्रायमाह– नात्रेति, अर्थस्य= प्रकृत्यनियमस्य तथाभावः= नियतत्वं न प्रतिषिध्यते किं तु स्वीक्रियते एव तथा च प्रकृत्यनियमस्य नियतत्वादेव प्रकृतिनियमो वर्णेषु न प्राप्नोति. प्रकृत्यनियमस्य च नियतत्वेन प्रकृतिविकारभावोपि वर्णेषु न प्राप्नोतीत्यर्थः । पूर्वपक्षी प्रतिषेध्यं जिज्ञासते– किमिति । उत्तरमाह– तथाभूतस्येति, नियमशब्देनाभिधीयमानस्य= नियमशब्दप्रतिपाद्यस्य तथाभूतस्य= निश्चितस्य= अव्यभिचरितस्य पदार्थस्य= प्रकृतिविकारस्थले प्रकृतिनियमस्य नियतत्वान् तत्र नियमशब्द एवोपपद्यते न त्वनियमशब्दोपीत्यन्वयः, वर्णेषु प्रकृतिविकारभावस्योपपादनार्थं प्रकृतिनियम एव प्रदर्शनीय आसीत् न तु प्रकृत्यनियमस्य नियम इति भावः, प्रकृत्यनियमस्य नियतत्वेपि वर्णेषु प्रकृतिनियमो नोपपद्यते इति प्रतिषिध्यते इत्याशयस्तथा च प्रकृतिनियमाभावाद् वर्णेषु प्रकृतिविकृतिभावो नोपपद्यते इत्यर्थः । उपसंहरति– सोयमिति, अनियमे= प्रकृत्यनियमस्य नियमात्= नियमप्रदर्शनाद् यः सिद्धान्तप्रतिषेधः पूर्वसूत्रेणोक्तः स न संभवति किं तु मिथ्यैवेत्यन्वयः ॥ ५७ ॥

ननु यदि वर्णविकारो नास्ति तदा वर्णविकारशब्दः कथं प्रवृत्तः ? कश्च तस्यार्थः ? इत्याशङ्क्याह– न चेति, वर्णविकारोपपत्तिः= वर्णविकारशब्दप्रयोगो न परिणामवादमाश्रित्य वा कार्यकारणभावमाश्रित्य वा वर्णेषु प्रवृत्तो येन पूर्ववर्णाऽविलोपप्राप्त्या वर्णानां नित्यत्वमापद्येतेत्यर्थः । पूर्वपक्षी वर्णविकारशब्दप्रयोगप्रवृत्तेः कारणं जिज्ञासते– किमिति । अस्योत्तरं च सूत्रेण विज्ञेयम् । अत्र– "तदेवं प्रकृतिविकारभावं निराकृत्य विकारवचनव्यक्तिं शब्दानामादेशपक्षे समर्थयति– न चेयं वर्णविकारोपपत्तिरिति" इति तात्पर्यटीका । गुणान्तरेति– गुणान्तरापत्त्यादिभ्यो यः खलु वर्णेषु विकारः= विशेषो जायते तदुपपत्तेः= तत्स्वीकाराद् वर्णविकाराः= वर्णविकारस्य व्यवहारो प्रवर्तते न तु वर्णानां कार्यकारणभावात

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः स भिद्यते– गुणान्तरापत्तिः= उदात्तस्यानुदात्त इत्येवमादिः, उपमर्दो नाम एकरूपनिवृत्तौ रूपान्तरोपजनः, ह्रासः= दीर्घस्य ह्रस्वः, वृद्धिः= ह्रस्वस्य दीर्घः तयोर्वा प्लुतः, लेशः= लाघवम् 'स्तः' इत्यस्तेर्विकारः, श्लेषः= आगमः प्रकृतेः प्रत्ययस्य वा, एते एव विशेषाः विकारा इति एते एवादेशाः. एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५८ ॥

## ते विभक्त्यन्ताः पदम् ॥ ५९ ॥

यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी– नामिकी आख्यातिकी च 'ब्राह्मणः' 'पचति' इत्युदाहरणम्। उपसर्गनिपातास्तर्हि न पदसंज्ञाः लक्ष-

---

परिणामात्= पूर्ववर्णस्योत्तरवर्णरूपत्वेन परिणामाद्वेति सूत्रान्वयः, शेषं भाष्ये स्पष्टमेव। अत्र– "तु शब्दः पुनरर्थे. एतेभ्यः पुनर्वर्णविकारोपपत्तेः= वर्णविकारस्य= एकवर्णप्रयोगे वर्णान्तरप्रयोगस्योपपत्तेर्वर्णविकार इति व्यवह्रियते" इति विश्वनाथभट्टाः। व्याचष्टे– स्थान्यादेशेति, स्थान्यादेशभावात् स्थानिभूतस्य पूर्ववर्णस्याऽप्रयोगे= अप्रयोगावस्थायामुत्तरवर्णस्य यः प्रयोगः स एव विकारशब्दार्थो न तु परिणामो वा कार्यकारणभावो वा. तथा च स्थान्यादेशभावेन पूर्ववर्णस्य विनाशादुत्तरवर्णस्य च तत्रोत्पत्तेर्वर्णानामनित्यत्वमेव प्राप्तं न नित्यत्वमित्यर्थः। सः= उक्तरूपो विकारः। भिद्यते= गुणान्तरापत्त्यादिभ्यो विविध इत्यर्थः। गुणान्तरापत्तिमुदाहरति– गुणेति, यथा 'देवीं वाचम्' इत्यत्र "अनुदात्तस्य च" इत्यनेनाऽनुदात्तस्योदात्तः, "अनुदात्तौ सुप्पितौ" इत्यनेनोदात्तत्वप्राप्तौ चानुदात्तत्वं विधीयते एवमन्यत्रापि बोध्यम्, स्वरस्य गुणभूतत्वात् स्वरान्तरापत्तिर्गुणान्तरापत्तिरेव। उपमर्दमाह– उपमर्द इति, यथा 'दध्यत्र' इत्यत्र "इको यणचि" इत्यनेन इकारे निवृत्ते यकारोत्पत्तिः। ह्रासमाह– ह्रास इति, यथा 'चित्रगुः' इत्यत्र "गोस्त्रियोः" इत्यनेन ह्रस्वादेशः। वृद्धिमाह– वृद्धिरिति, यथा 'गार्गिः' इत्यत्र "तद्धितेषु" इत्यनेनादिह्रस्वस्य दीर्घः, तयोः= ह्रस्वदीर्घयोः यथा 'देवदत्त ३' इत्यत्र "दूराद्धूते च" इत्यनेनान्त्यह्रस्वस्य प्लुतः, 'हे ३ राम' इत्यत्र च "हैहेप्रयोगे" इत्यनेन दीर्घस्य हेशब्दैकारस्य प्लुतः, लेशमाह– लेश इति, यथाऽस्धातोः "श्नसोरल्लोपः" इत्यनेनाऽकारलोपे जाते 'स्तः' इति भवति तदेतल्लाघवमपि विकार एव, श्लेषमाह– श्लेष इति, यथा– 'स्कुन्दते' इत्यत्र "इदितो नुम् धातोः" इत्यनेन प्रकृतेर्नुमागमः, 'रामाणाम्' इत्यत्र "ह्रस्वनद्यापो नुट्" इत्यनेन प्रत्ययस्य नुडागमः। उपसंहरति– एते एवेति, ये एते उदाहृता विशेषा एते एव विकारा इति आदेशा इति चोच्यन्ते. एते चेद्विकारास्तदा वर्णविकारा अपि सिध्यन्ति न चैते परिणामरूपा वा कार्यरूपा वा विकाराः किं त्वादेशरूपा एव– प्रत्यक्षमेव वर्णानामुत्पत्तिविनाशयोर्दर्शनादित्यनित्या एव वर्णा इत्यर्थः ॥ ५८ ॥

॥ इति वर्णानामनित्यत्वप्रतिपादनं समाप्तम् ॥

---

पदार्थोपस्थापकत्वं पदानामेवास्ति न वर्णानामिति संप्रति पदलक्षणमाह– ते इति, ते= वर्णा एवाभिमतानुपूर्वीविशिष्टा विभक्त्यन्ताः पदमित्युच्यते यथा– 'रामः' इति 'पचति' इति चेति सूत्रार्थः। व्याचष्टे– यथेति, यथादर्शनम्= व्याकरणशास्त्रानुसारेण विकृताः= पूर्वसूत्रोक्तविकारविशिष्टा विभक्त्यन्ता वर्णाः पदसंज्ञाः= पदसंज्ञका भवन्ति तदुक्तम् "सुप्तिङन्तं पदम्" इति, विकृता इत्युपलक्षणम्– विकारस्य सर्वत्रासंभवात्। विभक्तेर्द्वैविध्यमाह– विभक्तिरिति, नामिकी= नाम्नो जायमाना सुब्विभक्तिर्यथा 'ब्राह्मणः' इत्यत्र. अत्र सुबन्तत्वात् पदत्वम्, आख्यातिकी= धातोर्जायमाना तिङ्विभक्तिर्यथा 'पचति' इत्यत्र. अत्र तिङन्तत्वात् पदत्वम्। उपसर्गाणां प्रादीनां निपातानां च चादीनां विभक्त्यन्तत्वादर्शनात् तेषां पदसंज्ञा न स्यादिति तेषां पदत्वस्य लक्षणान्तरं वक्तव्यमित्याशङ्क्ते– उप

णान्तरं वाच्यमिति, शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपस्तयोः पदसंज्ञार्थमिति। पदेनार्थसंप्रत्यय इति प्रयोजनम् ॥ ५९ ॥

नामपदं चाधिकृत्य परीक्षा- गौरिति ( नाम ) पदं खलु, इदमुदाहरणम्—

**तदर्थे व्यक्त्याकृतिजातिसंनिधावुपचारात् संशयः ॥ ६० ॥**

अविनाभाववृत्तिः संनिधिः, अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते तत्र न ज्ञायते- किमन्यतमः पदार्थः ? उत सर्वः? इति ॥ ६० ॥

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणं तस्मात्—

**यांशब्दसंमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासाऽनुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ॥ ६१ ॥**

व्यक्तिः पदार्थः, कस्मात् ?. याशब्दप्रभृतीनां व्यक्तावुपचारात्। उपचारः= प्रयोगः, 'या गौस्तिष्ठति या गौर्निषण्णा' इति. नेदं वाक्यं जातेरभिधायकम्- अभेदात्. भेदात्तु

सर्गेति। उत्तरमाह- शिष्यते इति, उपसर्गनिपाता ह्यव्ययान्तर्गता एव अव्ययशब्देभ्यश्च प्राप्ताया विभक्तेः "अव्ययादाप्सुपः" इत्यनेन लुक्= लोपो भवति तथा च लुप्तविभक्त्यन्तत्वादुपसर्गादीनामप्यनेनैव सूत्रेण पदत्वं प्राप्तमित्यर्थः, तयोः= उपसर्गनिपातयोः। पदसंज्ञाविधानस्य प्रयोजनमाह- पदेनेति, 'ब्राह्मणः' 'पचति' इत्यादिविभक्त्यन्तवर्णसमुदायेनैवार्थप्रत्ययो भवतीत्यर्थप्रत्यायकस्य वर्णवृन्दस्य काचित्संज्ञाऽऽवश्यकीति पदसंज्ञा कृता व्याकरणानुरोधेनेत्यर्थः ॥ ५९ ॥

पदं निरूप्य तदर्थनिरूपणमारभते- नामपदमिति, अधिकृत्य= समाश्रित्य, गौरिति नामपदम् इदमेवोदाहरणं व्यक्त्यादिष्वस्य कोऽर्थ इति विचार्यते इत्यर्थः। अत्र "पदम्" इत्यत्र 'नामपदम्' इतिवक्तव्यमासीत्। विचारो हि संशयपूर्वको भवतीति पदार्थे सूत्रेण संशयकारणमाह- तदर्थे इति, तदर्थे= पदस्यार्थे संशयः- पदस्य व्यक्त्याकृतिजातीनां संनिधौ= समुदाये उपचारात्= प्रयोगात्, व्यक्तिः= पिण्डः जातिः= गोत्वादिसामान्यम् आकृतिः= अवयवसंयोगविशेषः एतेषां समुदायमुद्दिश्यैव पदं प्रयुज्यते तत्र न ज्ञायते व्यक्त्यादिषु कः पदस्यार्थ इतिहेतोः पदार्थनिरूपणमारभ्यते इति सूत्रार्थः। व्याचष्टे- अविनेति, अविनाभावेन= व्याप्त्या= अव्यभिचारेण= साहित्येन या वृत्तिः= वर्तमानता सा संनिधिरित्युच्यते सूत्रे, जात्याकृतिव्यक्तयश्च पृथग् पृथग् न भवन्तीति अविनाभावेन वर्तमानत्वं विज्ञेयम्। उपचारमाह- अविनाभावेनेति। गौरिति= गौरितिपदम्। संशयमाह- तत्रेति, अन्यतमः= व्यक्तिर्वाऽऽकृतिर्वा जातिर्वा पदार्थः किं वा सर्वः= व्यक्त्याकृतिजातय इति त्रितयमेव पदार्थ इति न ज्ञायते इतिहेतोः पदार्थे संशय इत्यन्वयः ॥ ६० ॥

अग्रिमसूत्रमवतारयति- शब्दस्येति, शब्दस्य प्रयोगसामर्थ्यात्= प्रयोगानुसारेण शब्दार्थस्य निश्चयः संभवति तस्मात् यस्मिन् प्रयोगो भवति= यं पदार्थमुद्दिश्य शब्दः प्रयुज्यते स एव पदार्थस्तस्य शब्दस्याऽर्थ इति शब्दानां व्यक्तौ प्रयोगाद् व्यक्तिरेव शब्दार्थ इत्यर्थस्तदेतद् बौद्धमतं बौद्धमते "स्वलक्षणं स्वलक्षणम्" इत्युक्त्या जातेः प्रतिपिद्धत्वादर्थाद् व्यक्तेर्वाच्यत्वं प्राप्तम्। व्यक्तिवाच्यत्ववादिनो मतेन सूत्रमाह- येति, याशब्दादीनां व्यक्तौ उपचारात्= प्रयोगाद् व्यक्तिरेव शब्दवाच्येति सूत्रान्वयः। समूहादिशब्दैः समूहादिवाचकाः शब्दा ग्राह्याः किं वा समूहादीनामुपचारः संबन्धो विज्ञेयः, अन्यत् सर्वं भाष्ये स्पष्टमेव। व्याचष्टे- व्यक्तिरिति, पदस्यार्थः पदार्थः। व्यक्तेर्वाच्यत्वकारणं जिज्ञासते- कस्मादिति। उत्तरमाह- याशब्देति। उपचारपदार्थमाह- उपचार इति। याशब्दप्रयोगमुदाहरति- या गौरिति,

द्रव्याभिधायकम्, 'गवां समूहः' इति भेदाद् द्रव्याभिधानं. न जातेः– अभेदात्, 'वैद्याय गां ददाति' इति द्रव्यस्य त्यागो. न जातेः– अमूर्तत्वात् प्रतिक्रमानुक्रमानुपपत्तेश्च, परिग्रहः= स्वत्वेनाभिसंबन्धः 'कौण्डिन्यस्य गौः' 'ब्राह्मणस्य गौः' इति द्रव्याभिधाने द्रव्यभेदात् संबन्धभेद इत्युपपन्नम्. अभिन्ना तु जातिरिति, संख्या– 'दश गावो विंशतिर्गावः' इति भिन्नं द्रव्यं संख्यायते. न जातिः– अभेदादिति, वृद्धिः= कारणवतो द्रव्यस्याऽवयवोपचयः– 'अवर्धत गौः' इति. निरवयवा तु जातिरिति, एतेनाऽपचयो व्याख्यातः, वर्णः– 'शुक्ला गौः कपिला गौः' इति द्रव्यस्य गुणयोगो न सामान्यस्य, समासः– 'गोहितं गोसुखम्' इति द्रव्यस्य सुखादियोगो न जातेरिति, अनुबन्धः– सरूपप्रजननसन्तानः– 'गौर्गां जनयति' इति तद् उत्पत्तिधर्मत्वाद् द्रव्ये युक्तं. न जातौ– विपर्ययादिति । द्रव्यं व्यक्तिरिति हि नार्थान्तरम् ॥ ६१ ॥

अत्र गोशब्दस्य व्यक्तिवाचकत्वे हेतुमाह– नेदमिति, पदार्थस्य भेदे सत्येव तत्र यच्छब्दप्रयोगः संभवति जातेश्च न भेदः= अभेदात्= ऐक्यादिति न यच्छब्दघटितवाक्येन जातेरभिधानं संभवति, द्रव्यस्य= व्यक्तेस्तु भेदः प्रत्यक्षसिद्ध एवेति व्यक्तेरेवाभिधायकमिति व्यक्तिरेव शब्दवाच्येत्यर्थः । समूहप्रयोगमुदाहरति– गवामिति, व्यक्तीनामनेकत्वेन समूहः संभवति न तु जातेरपि– एकत्वादिति व्यक्तिरेव शब्दवाच्येत्यर्थः । भेदात्= द्रव्यस्य= व्यक्तेर्भेदात्= अनेकत्वादित्यन्वयः । त्यागप्रयोगमुदाहरति– वैद्यायेति, ददातिपदवाच्यस्त्यागो व्यक्तेरेव संभवति– मूर्तत्वात् न तु जातेः– अमूर्तत्वादिति व्यक्तिरेव शब्दार्थ इत्यर्थः, जातेः शब्दाऽवाच्यत्वे हेत्वन्तरमाह– प्रतिक्रमेति, दानाङ्गभूतयोः प्रतिक्रमानुक्रमयोर्जातावसंभवाद् व्यक्तौ च संभवान्न जातिः शब्दवाच्येत्यर्थः । प्रतिक्रमः= प्रदक्षिणीकरणम् अनुक्रमः= अनुगमनम् इत्यर्थः प्रतिभाति । परिग्रहमुदाहरति– परिग्रह इति, स्वत्वेनाभिसंबन्धः= स्वस्वत्वोत्पादनम्, दानानन्तरं कौण्डिन्यकर्तृकपरिग्रहेण गौः कौण्डिन्यस्य जातेति 'कौण्डिन्यस्य गौः' इत्युच्यते. द्रव्याभिधाने= शब्दस्य व्यक्तिवाचकत्वे व्यक्तीनां भेदात् काचिद् गौः कौण्डिन्यस्य काचिद् ब्राह्मणस्येति संबन्धभेद उपपद्यते. न तु जातौ संबन्धभेद उपपद्यते– जातेरेकत्वादित्यर्थः । संख्यामुदाहरति– संख्येति, व्यक्तीनामनेकत्वात् तत्र दशत्वादिसंख्याया अन्वयः संभवति न तु जातावपि– जातेरेकत्वादित्यर्थः । वृद्धिमाह– वृद्धिरिति, कारणवतः= सावयवस्य पदार्थस्य अवयवोपचय एव वृद्धिपदार्थः स च व्यक्तौ संभवति– व्यक्तेः सावयवत्वाद् न तु जातावपि– जातेर्निरवयवत्वादिति 'अवर्धत गौः' इत्यादौ व्यक्तिरेव वाच्येत्यर्थः । उक्तमपचये= क्षयेऽतिदिशति– एतेनेति, 'क्षीणा गौः' इत्युक्ते व्यक्तेः क्षयः संभवति– सावयवत्वादनित्यत्वाच्च न तु जातेरिति व्यक्तिरेव वाच्येत्यर्थः । वर्णमुदाहरति– वर्ण इति, द्रव्यस्य= व्यक्तेः शुक्लत्वादिगुणयोगः संभवति न सामान्यस्य= जातेः– अरूपत्वादिति व्यक्तिरेव वाच्येत्यर्थः । समासमुदाहरति– समास इति, गोर्हितं गोहितं गोः सुखं गोसुखम्. अत्रोच्यमानः सुखादियोगो द्रव्यस्य= व्यक्तौ संभवति न जाताविति व्यक्तिरेव वाच्येत्यर्थः । अनुबन्धमाह– अनुबन्ध इति, सरूपस्य= स्वसदृशस्य प्रजननस्य संतानः= परम्परा. स्वसदृशसंतानोत्पादकत्वमित्यर्थः, उत्पादकत्वम् उत्पाद्यत्वं च द्रव्ये= व्यक्तावेव संभवति– उत्पत्तिधर्मविशिष्टत्वाद् न जातौ– विपर्ययात्= उत्पत्तिरहितत्वात् नित्यत्वादिति व्यक्तिरेव वाच्येत्यर्थः । तदेवं याशब्दप्रयोगादिवशाद् व्यक्तेरेव शब्दवाच्यत्वमुपपद्यते न जातेरिति प्रघट्टकार्थः । द्रव्यपदार्थमाह– द्रव्यमिति, नार्थान्तरम्= द्रव्यव्यक्तिशब्दयोरर्थभेदो नास्तीति प्रयुक्तं द्रव्यपदं व्यक्तिपरमेवेत्यर्थः ॥ ६१ ॥

अस्य प्रतिषेधः—

न– तदनवस्थानात् ॥ ६२ ॥

न व्यक्तिः पदार्थः, कस्मात् ?. अनवस्थानात्, याशब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दार्थः– 'या गौस्तिष्ठति या गौर्निषण्णा' इति न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयते। किं तर्हि ?. जातिविशिष्टं. तस्मान्न व्यक्तिः पदार्थः! एवं समूहादिषु द्रष्टव्यम् ॥ ६२ ॥

यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति ?. निमित्तादऽतद्भावेपि तदुपचारो दृश्यते खलु—

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाऽऽधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाकटाऽन्नपुरुषेष्वऽतद्भावेपि तदुपचारः ॥ ६३ ॥

अग्रिमसूत्रमवतारयति– अस्येति, तस्य= उक्तस्य केवलव्यक्तेर्वाच्यत्वस्य अनेन सूत्रेण प्रतिषेधो बोध्य इत्यर्थः। नेति– केवलव्यक्तेर्वाच्यत्वं न संभवति– तत्= तस्याः व्यक्तेरनवस्थानात्= व्यभिचारादित्यन्वयः, शक्तिग्रहं विना पदात् पदार्थबोधो न संभवति अनन्तासु च व्यक्तिषु शक्तिग्रहो न संभवति एकत्र व्यक्तौ शक्तिग्रहेण तदन्यव्यक्तेर्बोधस्वीकारे शक्तिग्रहशाब्दबोधयोर्व्यभिचारः स्यादिति न केवलव्यक्तेर्वाच्यत्वं संभवतीति सूत्रार्थः, यस्मिन् शक्तिग्रहस्तद्विषयक एव शाब्दबोधो जायते इति नियमोस्ति तस्य केवलव्यक्तेर्वाच्यत्वपक्षे यो भङ्गः स एवात्र व्यभिचारो बोध्यः, किं वा जातिं विना व्यक्तीनां शक्तिग्रहार्थम् अनवस्थानात्= व्यवस्थाया असंभवात्= उपसंहारासंभवादित्यर्थः। व्याचष्टे– नेति। व्यक्तेः पदार्थत्वाभावे= वाच्यत्वाभावे कारणं जिज्ञासते– कस्मादिति। उत्तरमाह– अनवस्थानादिति। पूर्वसूत्रोक्तमनुवदति– याशब्देति। स्वाभिप्रायमाह– नेति, 'या गौस्तिष्ठति' इत्यादिवाक्येन द्रव्यमात्रम्= व्यक्तिमात्रम्. अविशिष्टम्= विशेषणरहितम्= शुद्धं जात्या विना= जातिमक्रोडीकृत्य नाभिधीयते इति न केवलव्यक्तेर्वाच्यत्वं संभवति– अभिधीयमानस्यैव पदार्थस्य वाच्यत्वसंभवादित्यन्वयः। वाच्यं जिज्ञासते– किमिति। उत्तरमाह– जातीति, गोत्वादिजातिविशिष्टमेव द्रव्यं शब्दवाच्यमस्ति– जातिविशिष्टस्यैवाभिधानादिति न व्यक्तिमात्रं पदार्थ इत्यन्वयः। उक्तं समूहादिप्रयोगेष्वतिदिशति– एवमिति, पूर्वोदाहृतेषु 'गवां समूहः' इत्यादिप्रयोगेष्वपि जातिविशिष्टस्यैवाभिधानात्तदेव शब्दवाच्यं विज्ञेयं न तु केवला व्यक्तिः शब्दवाच्येत्यर्थः। विशेष्यते= विशेषरूपेण बोध्यते ॥ ६२ ॥

व्यक्तेरवाच्यत्वपक्षे व्यक्तौ शब्दप्रयोगहेतुं जिज्ञासते– यदीति, उपचारः शब्दप्रयोगः। उत्तरमाह– निमित्तादिति, अतद्भावेपि= तच्छब्दाऽवाच्यत्वेपि तस्मिन् तदुपचारः= तच्छब्दप्रयोगः सहचरणादिनिमित्ताद् दृश्यते यथा– 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दावाच्येपि तीरे गङ्गाशब्दस्य प्रयोगो भवति एवं केवलव्यक्तावपि शब्दप्रयोगो लाक्षणिक एवेति न केवलव्यक्तेर्वाच्यत्वमुपपद्यते इत्यर्थः। अतद्भावेपि तदुपचारस्य निमित्तानि सूत्रेणाह– सहेति, सूत्रे ब्राह्मणेत्यादिसप्तम्यन्तं पदमसंगतमेव तथा ह्यऽस्य पदस्य लाक्षणिकशब्दसंग्रहपरत्वेऽस्य स्थाने 'यष्टिमञ्चकटयमाढकतुलागङ्गाकृष्णान्नपुरुषाणाम्' इति वक्तव्यमासीत्, लक्ष्यार्थसंग्रहपरत्वे चात्र 'ब्राह्मणमञ्चस्थवीरणराजसक्तुचन्दनतीरशाकटप्राणकुलेषु' इतिवक्तव्यमासीदिति विभावनीयम्, अतद्भावेपि= तच्छब्दावाच्यत्वेपि तदुपचारः= तस्मिन् तच्छब्दप्रयोगः सहचरणादिनिमित्ताद् भवतीति व्यक्तेरप्यवाच्यत्वेपि व्यक्तौ तत्तच्छब्दप्रयोगः सहचरणादिनिमित्तात् लक्षणिकोस्तीति न केवलव्यक्तेर्वाच्यत्वापत्तिरिति सूत्रार्थः। सूत्रे सहचरणादीनां ब्राह्मणादिभिर्यथासंख्यमन्वयः, सहचरणाद यष्टिशब्दस्य ब्राह्मणे यष्टिशब्दाऽवाच्येपि प्रयोगो भवति एवमुत्तरत्राप्यन्वयो

अतद्भावेपि तदुपचार इति= अतच्छब्दस्य तेन शब्देनाभिधानमिति, सहचरणात्– 'यष्टिकां भोजय' इति यष्टिकासहचरितो ब्राह्मणोऽभिधीयते इति, स्थानात्– 'मञ्चाः क्रोशन्ति' इति मञ्चस्थाः पुरुषा अभिधीयन्ते, तादर्थ्यात्– कटार्थेषु वीरणेषु व्यूह्यमानेषु 'कटं करोति' इति भवति, वृत्तात्– 'यमो राजा' 'कुबेरो राजा' इति तद्वद्वर्तते इति, मानात्– आढकेन मिताः सक्तवः 'आढकं सक्तवः' इति, धारणात्– तुलया धृतं चन्दनम् 'तुला चन्दनम्' इति, सामीप्यात्– 'गङ्गायां गावश्चरन्ति' इति देशोऽभिधीयते संनिकृष्टः, योगात्– कृष्णेन रागेण युक्तः शाकटः 'कृष्णः' इत्यभिधीयते, साधनात्– 'अन्नं प्राणाः' इति, आधिपत्यात्– 'अयं पुरुषः कुलम्' 'अयं गोत्रम्' इति। तत्रायं सहचरणाद् योगाद् वा जातिशब्दो व्यक्तौ प्रयुज्यते इति ॥ ६३ ॥

यदि 'गौः' इत्यस्य पदस्य न व्यक्तिरर्थः? अस्तु तर्हि—

## आकृतिः– तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६४ ॥

विज्ञेयः, अन्यत्सर्वं भाष्ये स्पष्टमेव। व्याचष्टे– अतदिति। उक्तं व्याचष्टे– अतच्छब्दस्येति, तच्छब्दावाच्यस्येत्यर्थः, यथा गङ्गाशब्दावाच्यस्य तीरस्य गङ्गाशब्देनाभिधानं सहचरणादिषु सामीप्यसंबन्धादेवेति लाक्षणिकमेव तथा केवलाया व्यक्तेरप्यभिधानं सहचरणादिनिमित्ताल्लाक्षणिकमेवेत्यन्वयः। सहचरणमुदाहरति– सहेति, यष्टिकासहचरणनिमित्ताद् यष्टिकाशब्दाऽवाच्येपि ब्राह्मणे यष्टिकाशब्दस्य प्रयोगो भवति 'यष्टिकां भोजय' इति, यष्टिकायां भोजनकर्तृत्वस्य बाधाद् यष्टिधरे ब्राह्मणे लक्षणा सहचरणं चात्र साहित्यम्। स्थाननिमित्तमुदाहरति– स्थानादिति, स्थानात्= मञ्चे स्थित्या मञ्चशब्दस्य मञ्चस्थपुरुषेत्र प्रयोगः। तादर्थ्यनिमित्तमुदाहरति– तादर्थ्यादिति, वीरणेषु= तृणविशेषेषु व्यूह्यमानेषु= एकत्रीक्रियमाणेषु. वीरणानां कटार्थत्वादत्र कटशब्दस्य वीरणेषु प्रयोगः। वृत्तनिमित्तमुदाहरति– वृत्तादिति, वृत्तम्= चरित्रम्, क्रूरचरित्रनिमित्ताद् यमशब्दस्य उदारचरित्रनिमित्ताच्च कुबेरशब्दस्यात्र राजनि प्रयोगः। तद्वत्= यमवद् वर्तते= आचरति, एवं कुबेरवदाचरतीत्यर्थः। किं वात्र राजशब्दस्य यमादौ प्रयोगो विज्ञेयः। माननिमित्तमुदाहरति– मानादिति, आढकपरिमाणनिमित्तादत्राढकशब्दस्य सक्तुषु प्रयोगः। धारणनिमित्तमुदाहरति– धारणादिति, तुलया धारणनिमित्तादत्र तुलाशब्दस्य चन्दने प्रयोगः। सामीप्यनिमित्तमुदाहरति– सामीप्यादिति, सामीप्यनिमित्तादत्र गङ्गाशब्दस्य तीरे प्रयोगः, संनिकृष्टः= समीपस्थः। योगनिमित्तमुदाहरति– योगादिति, योगलक्षणनिमित्तादत्र कृष्णशब्दस्य शाकटे= वस्त्रविशेषे प्रयोगः। साधननिमित्तमुदाहरति– साधनादिति, अन्नस्य प्राणसाधनत्वादत्रान्नशब्दस्य प्राणेषु प्रयोगः। आधिपत्यनिमित्तमुदाहरति– आधिपत्यादिदि, आधिपत्यनिमित्तादत्र कुलशब्दस्य गोत्रशब्दस्य च पुरुषे प्रयोगः। एवं तच्छब्दावाच्येपि तच्छब्दप्रयोगानुदाहृत्य प्रकृतमाह– तत्रायमिति, तत्र= तथा च 'या गौः' इत्यादिस्थलेष्वयं जातिशब्दः= जातिवाचकोपि गोशब्दः सहचरणाद्वा योगाद्वा गोव्यक्तौ प्रयुज्यते इति न व्यक्तिः शब्दवाच्या– केवलव्यक्तौ लक्षणया प्रयोगात्. जातिव्यक्त्योश्च सहचरणम्= साहित्यं योगः= आधाराधेयसंबन्धश्च प्रसिद्ध एवेत्यर्थः ॥ ६३ ॥

अग्रिमसूत्रमवतारयति– यदीति, 'अस्तु तर्हि आकृतिरेवार्थः' इत्येवमन्वयः। आकृतिरिति— आकृतिः शब्दवाच्या– सत्त्वव्यवस्थानसिद्धेः= 'अयं गौः' 'अयमश्वः' इत्यादिरूपाया द्रव्यव्यवस्थायाः सिद्धेः तत्तद्विषयकव्यवहारस्य च तदपेक्षत्वात्= आकृत्यधीनत्वात्. 'अयं गौर्नाश्वः' इत्यादिव्यवस्था चाकृत्यधीनेति स्पष्टमेव तथा च व्यवहारव्यवस्थादिप्रयोजकीभूताऽऽकृतिरेव गवादिशब्दवाच्येति युक्त-

आकृतिः पदार्थः, कस्मात् ?. तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः= सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति– 'अयं गौः' 'अयमश्वः' इति. नाऽगृह्यमाणायाम्. यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति= सोऽस्यार्थ इति ॥ नैतदुपपद्यते– यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते– 'गौः' इति. न चावयवव्यूहस्य जात्या योगः। कस्य तर्हि ?. नियतावयवव्यूहस्य द्रव्यस्य, तस्माद् नाऽऽकृतिः पदार्थः ॥ ६४ ॥

अस्तु तर्हि जातिः पदार्थः—

## व्यक्त्याकृतियुक्तेऽप्यप्रसंगात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६५ ॥

जातिः पदार्थः, कस्मात् ?. व्यक्त्याकृतियुक्तेपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति= 'गां प्रोक्षय' 'गामानय' 'गां देहि' इति नैतानि मृद्गवके प्रयुज्यन्ते, कस्मात् ?. जातेरभावात्, अस्ति हि तत्र व्यक्तिरस्ति आकृतिः, यदभावात् तत्राऽसंप्रत्ययः स पदार्थ इति॥६५॥

---

मिति सूत्रार्थः। आकृतिश्चावयवसंयोग एव तदेतद् भट्टमतम्। व्याचष्टे– आकृतिरिति। आकृतेः शब्दवाच्यत्वे हेतुं जिज्ञासते– कस्मादिति। उत्तरमाह– तदपेक्षत्वादिति। उक्तमपि व्याचष्टे– सत्त्वावयवानामिति, सत्त्वावयवानाम्= व्यक्त्यवयवानां तदवयवानाम्= अवयवावयवानां च नियतो व्यूहः= संयोगः संनिवेशो वा आकृतिपदार्थः, तस्याम्= आकृतौ गृह्यमाणायाम्= ज्ञातायामेव 'अयं गौः, 'अयमश्वः' इत्यादिरूपा सत्त्वव्यवस्था सिध्यति न चाकृतावगृह्यमाणायामपीत्यन्वयः, पर्यवसितमाह– यस्येति, यस्य= आकृतिपदार्थस्य, तम्= आकृतिपदार्थम्, उक्तं व्याचष्टे– स इति, सः= आकृतिपदार्थः, अस्य= शब्दस्येत्यन्वयः, तथा च सर्वेषु शाब्दव्यवहारेषु प्रतीयमानत्वादाकृतिरेव शब्दवाच्या न व्यक्तिर्वा जातिर्वेत्यर्थः। तदेवमाकृतेर्वाच्यत्वं पूर्वपक्षिमतेनोपपाद्य तत् प्रत्याचष्टे– नैतदिति, आकृतेर्वाच्यत्वं नोपपद्यते इत्यर्थः। वाच्यपदार्थमाह– यस्येति, यस्य= व्यक्तिपदार्थस्य, तत्= जातिविशिष्टमित्यन्वयः। जातिरहितपदार्थस्य वाच्यत्वस्वीकारेऽनुगमकाभावेन व्यभिचारादिदोषादित्यर्थः। आकृतेर्जातियोगाभावमाह– न चेति, अवयवव्यूहस्य= आकृतेः। जातियुक्तं जिज्ञासते– कस्येति। उत्तरमाह– नियतेति, नियतोऽवयवानां व्यूहः= संयोगो यस्य तस्य द्रव्यस्य= व्यक्तिपदार्थस्यैव जात्या योग इति सैव= जातिविशिष्टा व्यक्तिरेव शब्दवाच्येत्यर्थः। उपसंहरति– तस्मादिति ॥ ६४ ॥

अग्रिमसूत्रमवतारयति– अस्त्विति, यथाकृतेरपि वाच्यत्वं नोपपद्यते तदेत्यर्थः। जातेर्वाच्यत्वे हेतुमाह– व्यक्त्येति, व्यक्त्याकृतिभ्यां युक्तेपि मृद्गवके= मृन्निर्मितगवि 'गां प्रोक्षय' इत्यादिवाक्योक्तानां प्रोक्षणादीनामप्रसङ्गात् जातिरेव शब्दवाच्येति सिध्यति– मृद्गवके गोत्वजातेरभावादेव प्रोक्षणादीनामप्रसंगात्. यदि व्यक्तिर्वाऽऽकृतिर्वा शब्दवाच्या स्यात्तदा मृद्गवकेपि व्यक्त्याकृत्योः सत्त्वात् तस्यापि गोशब्देनोपस्थितिः स्यादिति मृद्गवकेपि प्रोक्षणादीनां प्रसङ्गः स्याद् न चैवं भवतीति यस्या जातेरभावाद् मृद्गवके प्रोक्षणादीनामप्रसङ्गः सा जातिरेव शब्दवाच्येति सूत्रार्थः, तदेतद् वेदान्तिमतम्। व्याचष्टे– जातिरिति। जातेर्वाच्यत्वे हेतुं जिज्ञासते– कस्मादिति। हेतुमाह– व्यक्त्याकृतीति। हेतुवाक्यं व्याचष्टे– गामिति। एतानि= 'गां प्रोक्षय' इत्यादिवाक्यानि किं वैतद्वाक्योक्तप्रोक्षणादीनि मृद्गवके न प्रयुज्यन्ते इत्यन्वयः। मृद्गवके प्रयोगाभावकारणं जिज्ञासते– कस्मादिति, कस्मान्न प्रयुज्यन्ते इत्यन्वयः। उत्तरमाह– जातेरिति, जातेरभावादेव मृद्गवके प्रोक्षणादीनि प्रोक्षणादिवाक्यानि वा न प्रयुज्यन्ते इत्यन्वयः। मृद्गवके व्यक्त्याकृत्योः सत्त्वमाह– अस्तीति, तत्र= मृद्गवके। स्वाभिप्रायमाह– यदिति, यत्= यस्या जातेर-

## न— आकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६६ ॥

जातेरभिव्यक्तिः आकृतिव्यक्ती अपेक्षते= नाऽगृह्यमाणायामाकृतौ व्यक्तौ (च) जातिमात्रं शुद्धं गृह्यते तस्मान्न जातिः पदार्थ इति ॥ ६६ ॥

न वै पदार्थेन न भवितुं शक्यम् । कः खल्विदानीं पदार्थ इति ?—

## व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६७ ॥

तुशब्दो विशेषणार्थः, किं विशिष्यते ?. प्रधानाङ्गभावस्याऽनियमेन पदार्थत्वमिति. यदा हि भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः प्रधानमऽङ्गं तु जात्याकृती. यदा तु भेदोऽविवक्षितः सामान्यगतिश्च तदा जातिः प्रधानमङ्गं तु व्यक्त्याकृती, तदेतद् बहुलं प्रयोगेषु । आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः ॥ ६७ ॥

कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति ?. लक्षणभेदात् , तत्र तावत्—

## व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६८ ॥

भावात् गोशब्देन तत्र= मृद्गवकविषयकः संप्रत्ययः= बोधो न जायते तस्मात् सः= जातिपदार्थ एव पदार्थः= शब्दवाच्यः अन्यथा मृद्गवकस्यापि गोशब्देन बोधः स्यादित्यर्थः ॥ ६५ ॥

केवलजातेर्वाच्यत्वं निराकरोति— नेति, न केवला जातिरपि वाच्या— आकृतिं व्यक्तिं च विना जातिमात्रस्य भानासंभवात्, उक्ते हेतुमाह— आकृतीति, जात्यभिव्यक्तेः= जातिप्रतीतेराकृतिव्यक्त्यपेक्षत्वात्= आकृतिव्यक्तिप्रतीतिसापेक्षत्वात्= आकृतिव्यक्त्योः प्रतीतिं विना जातिप्रतीतिरेव न संभवति येन जातिमात्रस्य वाच्यत्वं स्यादिति सूत्रार्थः । जात्याकृतिव्यक्तीनां सह भासमानत्वेन त्रितयस्यैव शब्दवाच्यत्वं युक्तमित्याशयः । व्याचष्टे— जातेरिति, अभिव्यक्तिः= प्रतीतिः, 'आकृतिव्यक्ती' इति औटो रूपम्, आकृतिव्यक्तिप्रतीतिमपेक्षते इत्यर्थः । उक्तं व्याचष्टे— नेति । उपसंहरति— तस्मादिति॥६६॥

पदार्थाभावं निराकरोति— नेति, उक्तरूपेण केवलानां जात्याकृतिव्यक्तीनां वाच्यत्वाभावेऽपि पदानामर्थो नास्तीति न संभवति किं त्वस्तीत्यर्थः । केवलानां जात्याकृतिव्यक्तीनां पदार्थत्वस्य निराकृतत्वात् पदार्थं जिज्ञासते— क इति । सूत्रेण पदार्थमाह— व्यक्तीति, व्यक्त्याकृतिजातीनां मिलितानामेव पदार्थत्वमस्ति न तु केवलानां तत्र दोषाणां प्रदर्शितत्वादेवेति सूत्रार्थः, किं वा जात्याकृतिविशिष्टाया व्यक्तेर्वाच्यत्वमित्यर्थः । व्याचष्टे— तुशब्द इति, विशेषणार्थः= विशेषबोधनार्थः । अभिप्रेतविशेषं जिज्ञासते— किमिति । उत्तरमाह— प्रधानेति, व्यक्त्याकृतिजातिषु शब्दवाच्यत्वे प्रधानाङ्गभावस्य= विशेष्यविशेषणभावस्य नियमो नास्तीति तुशब्देन सूत्रघटकेन बोध्यते इत्यर्थः, तथा च कचिद् व्यक्तेः कचिज्जातेः कचिचाकृतेः प्राधान्यं भवति । व्यक्तेः प्राधान्यस्थलमाह— यदेति, भेदविवक्षायां विशेषावगतौ च व्यक्त्याकृतिजातीनां तुल्येपि वाच्यत्वे व्यक्तेः प्राधान्यं भवति जात्याकृत्योस्त्वङ्गत्वं यथा 'इयं गौः कृष्णा इयं गौः शुक्ला' इति, विशेषस्य भेदस्य च व्यक्तिमात्रनिरूपितत्वादित्यर्थः । जातेः प्राधान्यस्थलमाह— यदा त्विति, सामान्यगतिः= सामान्यज्ञानम्, यथा 'गोदर्शनं शुभम्' इत्यत्र सामान्यरूपेण गोमात्रस्याभिधानात् जातेरेव सामान्यरूपत्वादभिन्नत्वाच्च जातेरेव प्राधान्यं व्यक्त्याकृत्योश्चाङ्गत्वमित्यर्थः । उपसंहरति— तदेतदिति, एतत्= व्यक्तेर्वा जातेर्वा प्राधान्यं बहुत्र प्रयोगेषूपलभ्यते इत्यर्थः । आकृतेरिति— आकृतेः प्रधानभावः= प्राधान्यम 'पिष्टकमयी गौः' इत्यत्र विज्ञेयम्— आकृतिमात्रमाश्रित्य तत्र गोशब्दप्रयोगादित्यलम् ॥ ६७ ॥

व्यक्त्याकृतिजातीनां भेदकारणं जिज्ञासते— कथमिति, नाना= परस्परं भिन्नाः । उत्तरमाह— लक्षणेति । व्यक्तिलक्षणसूत्रमवतारयति— तत्रेति । व्यक्तिरिति— गुणविशेषाश्रयः= रूपादिविशेषगुणा-

व्यज्यते इति व्यक्तिः= इन्द्रियग्राह्येति. न सर्वं द्रव्यं व्यक्तिः, यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणाम् अव्यापिनः परिमाणस्याश्रयो यथासंभवं तद्द्रव्यं मूर्तिः– मूर्च्छितावयवत्वादिति ॥ ६८ ॥

## आकृतिर्जातिलिङ्गाख्या ॥ ६९ ॥

यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्. सा च नाऽन्या सत्त्वावयवानां तदवयवानां च नियताद् व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्– शिरसा पादेन गामनुमिन्वन्ति= नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते इति । अनाकृतिव्यङ्ग्यायां जातौ 'मृत्' 'सुवर्णम्' 'रजतम्' इत्येवमादिष्वाकृतिर्निवर्तते= जहाति पदार्थत्वमिति ॥ ६९ ॥

---

श्रयभूता मूर्तिः= मूर्तं द्रव्यं व्यक्तिरित्युच्यते इति सूत्रार्थः । व्याचष्टे– व्यज्यते इति, व्यज्यते इति व्यक्तिरिति निर्वचनम्. इन्द्रियग्राह्येति तस्यार्थ इत्यन्वयः, अस्य फलमाह– नेति, तथा चाकाशादिकं द्रव्यमपि व्यक्तिर्न भवति– इन्द्रियग्राह्यत्वाभावादित्यर्थः । व्यक्तिलक्षणमाह– य इति, स्पर्शान्तानाम्= रूपरसगन्धस्पर्शानां गुरुत्वादीनां चाऽव्यापिनः परिमाणस्य च यथासंभवमाश्रयो यस्तादृशं द्रव्यं मूर्तिरित्युच्यते सैव व्यक्तिरित्यर्थः । मूर्तिशब्दस्य व्युत्पत्तिमाह– मूर्च्छितेति, मूर्च्छितावयवत्वात्= उपचितावयवत्वाद् मूर्तिरित्युच्यत इत्यर्थः । संस्कारपदेनात्र स्थितिस्थापकसंस्कारो ग्राह्यः । अव्यापिनः परिमाणस्येत्याकाशादिव्यावृत्त्यर्थम् । स्पष्टमन्यत् ॥ ६८ ॥

आकृतिलक्षणमाह– आकृतिरिति, जातिलिङ्गमित्याख्या= नाम यस्याः सा जातिलिङ्गाख्या आकृतिः, लिङ्ग्यते= ज्ञायतेऽनेनेति लिङ्गम्, आकृतिश्च जातिज्ञापिकेति प्रसिद्धमेव– गवादीनां संस्थानविशेषरूपाकृत्यैव गोत्वादिजातेर्ज्ञायमानत्वादिति सूत्रार्थः । व्याचष्टे– ययेति, यया अवयवसंस्थित्या गोत्वादिजातिः जातिलिङ्गानि= शिरःकराद्यवयवाश्च प्रख्यायन्ते= विज्ञायन्ते तामाकृतिं विद्यात्= जानीयात्, जातेर्जातिलिङ्गानां च या ज्ञापिका साऽऽकृतिरित्यर्थः । आकृतेः स्वरूपमाह– सेति, सा चाकृतिः सत्त्वावयवानाम्= व्यक्त्यवयवानां शिरःकरादीनां तदवयवानाम्= शिरःकराद्यवयवानां च नियताद् व्यूहात्= संयोगाद् नाऽन्या किं त्ववयवसंयोगरूपैवेत्यर्थः । जातिलिङ्गपदार्थमाह– नियतेति, नियतोऽवयवानां व्यूहः= संयोगो येषां ते नियतावयवव्यूहाः शिरःकरादिरूपाः सत्त्वस्य= व्यक्तेः प्रधाना अवयवा एव जातिलिङ्गमित्यर्थः, अत्र हेतुमाह– शिरसेति, शिर आरभ्य पादपर्यन्तावयवैः प्रधानैर्गाम्= गोत्वजातिम्= इयं गौरित्यनुमिन्वन्तीति गोत्वानुमापकत्वात् शिरःप्रभृत्यवयवानां जातिलिङ्गत्वं प्राप्तम्. उक्तमेव विशदयति– नियते इति, सत्त्वावयवानां व्यूहे नियते सति गोत्वादिकं प्रख्यायते न तु सत्त्वावयवव्यूहस्य नियतत्वाभावेपीत्यर्थः, तथा चाऽवयवसंयोगस्य नियतत्वे एवावयवानां जातिख्यापकत्वे प्राप्ते प्राप्ताप्राप्तविवेकन्यायेनाकृतेरेव जातिख्यापकत्वं प्राप्तम्– नियतावयवसंयोगस्यैवाकृतिपदार्थत्वादित्यवधेयम्, तथा जातिलिङ्गानां शिरःप्रभृतीनामपि ज्ञानं तत्तदाकृत्यैव संभवतीति जातिलिङ्गप्रख्यापकत्वमप्याकृतेः सिद्धम् । अत्र– "शिरोनासिकाललाटचिबुकादीनां शिरोवयवानां व्यूहा मनुष्यत्वजातिलिङ्गं शिर आचष्टे" इति तात्पर्यटीका । आकृत्याऽव्यङ्ग्या यत्र जातिस्तत्राकृतेः पदार्थत्वं न भवतीत्याह– अनाकृतीति, आकृतिव्यङ्ग्या न भवतीति अनाकृतिव्यङ्ग्या तस्यां मृत्त्वसुवर्णत्वादिरूपायां जातौ, मृत्त्वादिजातिश्च नाकृतिव्यङ्ग्या– मृदाद्यवयवव्यूहस्य नियतत्वाभावात् अवयवव्यूहस्य नियतत्वे एव जातेराकृतिव्यङ्ग्यत्वसंभवादिति 'इयं मृत्' 'इदं सुवर्णम्' इत्यादिप्रयोगस्थलेषु आकृतिर्निवर्तते= पदार्थत्वं जहाति= आकृतेस्तत्र शब्दवाच्यत्वं न भवति किं तु जातिव्यक्त्योरेव शब्दवाच्यत्वं भवतीत्यर्थः । वस्तुतस्तु मृदादीनामाकृतिर्नास्त्येव– नियतावयवव्यूहस्याभावात्– नियतावयवव्यूहस्यैवाकृतिपदार्थत्वात् ।

## समानप्रसवात्मिका जातिः ॥ ७० ॥

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु. यया बहूनि इतरेतरतो न व्यावर्तन्ते. योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत् सामान्यम्, यच्च केषां चिदभेदं केषांचिद् भेदं करोति तत् सामान्यविशेषो जातिरिति ॥ ७० ॥

॥ इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकं समाप्तम् ॥

॥ द्वितीयाध्यायश्च समाप्तः ॥

अत्र "न पुनः सर्वा जातिराकृत्या लिङ्ग्यते इति, मृत्सुवर्णरजतादिका हि रूपविशेषव्यङ्ग्या जातिर्नाकृतिव्यङ्ग्या. ब्राह्मणत्वादिजातिस्तु योनिव्यङ्ग्या. आज्यतैलादीनां जातिस्तु गन्धेन वा रसेन वा व्यज्यते" इति तात्पर्यटीका । तथा– "आकृतौ नियमो न जातौ– सर्वाऽऽकृतिर्जातिलिङ्गमिति= न पुनः सर्वा जातिराकृत्या लिङ्ग्यते" इति वार्तिकम् ॥ ६९ ॥

संप्रति जातिं लक्षयति– समानेति, समानप्रसवात्मिका= गवादिव्यक्तिषु 'गौर्गौः' इत्याद्याकारकसमानज्ञानोत्पादिका या सा गोत्वादिलक्षणा जातिरित्यन्वयः, परस्परं भिन्नास्वपि गवादिव्यक्तिषु यत्प्रभावात् 'इयमपि गौरियमपि गौः' इत्याद्याकारकं समानं ज्ञानं जायते सा जातिरेव– गोत्वादिजातेः सर्वास्वपि गवादिव्यक्तिष्वनुवर्तमानत्वेन गोत्वादिप्रकारकसमानज्ञानजनकत्वसंभवादिति सूत्रार्थः । अत्र 'समानज्ञानजननी जातिः' इत्येवं सूत्रं पठनीयमासीत् । अत्र– "समानप्रत्ययोत्पत्तिकारणं जातिरिति जातौ नियमो न समानप्रत्ययोत्पत्तौ– जातिमन्तरेणापि दृष्टत्वात्= जातिमन्तरेणापि समानप्रत्ययो दृष्टो यथा पाचकादिषु" इति वार्तिकम्, सर्वेषु पाचकेषु पाचकत्वज्ञानं जातिं विनैव पाकक्रियापुरस्कारेण भवतीति जातिमन्तरेणापि समानप्रत्ययो जायते. जातिस्तु समानप्रत्ययजनिकैवेति नियम इति वार्तिकार्थः । व्याचष्टे– येति, भिन्नेष्वधिकरणेषु= परस्परं भिन्नास्वपि गवादिव्यक्तिषु या समानाम्= 'गौर्गौः' इत्याकारां बुद्धिं प्रसूते सा जातिरित्यर्थः । लक्षणान्तरमाह– ययेति, यया बहूनि शरीराणि= व्यक्तय इतरेतरतः= परस्परं न व्यावर्तन्ते= न भिद्यन्ते सा जातिः– परस्परं भिन्नानामपि गवादिव्यक्तीनां गोत्वादिजात्यैवैक्यसंभवादित्यर्थः । प्रथमलक्षणमनुवदति– योर्थ इति, यः पदार्थः अनेकत्र= अनेकासु व्यक्तिषु प्रत्ययस्य= द्रव्यत्वादिप्रकारकज्ञानस्य 'इदमपि द्रव्यमिदमपि द्रव्यम्' इत्याद्याकारकस्य अनुवृत्तेर्निमित्तं तदेव सामान्यम्= परा जातिर्यथा द्रव्यत्वादि, द्रव्यत्वसामान्येन सर्वेषु द्रव्येषु द्रव्यमिति ज्ञानं जायते इत्यर्थः । एवमन्यत्रापि बोध्यम् । अपरसामान्यस्य लक्षणमाह– यच्चेति, यथा गोत्वं गोव्यक्तीनां परस्परमभेदं करोति अश्वादीनां च गोव्यक्तिभ्यो भेदं करोतीति गोत्वादिकं सामान्यविशेषः जातिरित्युच्यते इत्यन्वयः, तदुक्तं "सामान्यं द्विविधं प्रोक्तं परं चापरमेव च" इति, द्रव्यत्वादिसामान्येन तु गवाश्वादीनां भेदो न भवति– द्रव्यत्वस्य द्रव्यमात्रवृत्तित्वादित्यलम् ॥ ७० ॥

अत्र वार्तिकम्—

"संशयस्य प्रमाणानां विचारस्तद्व्यवस्थितिः ।
शब्दस्य तत्त्वं प्रामाण्यं पदार्थश्चेह कीर्तिताः ॥" इति ॥

॥ इति शब्दार्थनिरूपणं समाप्तम् ॥

॥ इति न्यायभाष्यद्वितीयाध्यायस्य प्रसन्नपदा व्याख्या समाप्ता ॥

---

अथ

सटीके

## ॥ न्यायभाष्ये तृतीयाध्यायस्य प्रथममाह्निकम् ॥



परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यते– तच्चाऽऽत्मादीति आत्मा विविच्यते– किं देहेन्द्रियमनोबुद्धिवेदनासंघातमात्रमात्मा? आहो स्वित् तद्व्यतिरिक्तः? इति। कुतः संशयः?, व्यपदेशस्योभयथा सिद्धेः, क्रियाकरणयोः कर्त्रा संबन्धस्याभिधानं व्यपदेशः स द्विविधः– अवयवेन समुदायस्य– 'मूलैर्वृक्षस्तिष्ठति' 'स्तम्भैः प्रासादो ध्रियते' इति, अन्येनान्यस्य व्यपदेशः– 'परशुना वृश्चति' 'प्रदीपेन पश्यति' (इति), अस्ति चायं व्यपदेशः– 'चक्षुषा

अथ

## तृतीयाध्यायप्रसन्नपदा



वाजिवक्त्रं हरिं नत्वा भक्ताभीष्टफलप्रदम्।
तृतीयाध्यायटीकेयं न्यायभाष्यस्य तन्यते ॥

उद्दिष्टानां लक्षितानां च प्रमेयाणां परीक्षणार्थं तृतीयाध्यायमारभते– परीक्षितानीति, पूर्वत्र द्वितीयाध्याये इतिशेषः। सांप्रतं कर्तव्यमाह– प्रमेयमिति, इदानीम्= इत आरभ्य। प्रमेयव्यक्तिमाह– तच्चेति, तत्= प्रमेयम्। आत्मादीति– "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखाप-वर्गास्तु प्रमेयम् १–१–९" इति प्रमेयोद्देशसूत्रे प्रथममात्मैवोद्दिष्ट इति प्रथममात्मा विविच्यते= परीक्ष्यते इत्यन्वयः। अत्र– "अत्र सकलवादिप्रतिवादिप्रत्यक्षसिद्धस्यात्मनो देहादिभेदाभेदविषयैव विप्रतिपत्तिर्न तु धर्मिणि, असति धर्मिणि वक्ष्यमाणहेतूनां साध्यस्य नास्तित्वस्य चाश्रयाऽसिद्धेरभावकोट्युपस्थाना-ऽसंभवात्" इति श्रीगुरुचरणाः। आत्मस्वरूपं द्विधा विकल्पयति– किमिति, तत्र देहेत्यादि पूर्वपक्षिम-तेन. तद्व्यतिरिक्तः= देहादिसंघातव्यतिरिक्त आत्मेति सिद्धान्तेन विकल्पः। अत्र देहेन्द्रियमनोबुद्धयः प्रसिद्धा एव वेदना हि सुखदुःखादिप्रत्ययप्रवाहः, एतेषां संघातः= समुदायः, कल्पोयं चार्वाकमतेनेति विज्ञेयम्– तत्र शरीरस्यैव जीवत आत्मत्वस्वीकारात् शरीरस्य चेन्द्रियादिविशिष्टस्यैवात्मत्वसंभवे देहादि-संघातस्यात्मत्वोपपत्तेः, न तु बौद्धादिमतेन– तैः शरीरातिरिक्तस्यैव ज्ञानादेरात्मत्वस्वीकारादित्यनुसंधे-यम्। संशये जाते हि परीक्षा संभवतीति परीक्षामूलस्य संशयस्य प्राश्निकरणं जिज्ञासते– कुत इति। उत्तरमाह– व्यपदेशस्येति। उभयथेति– प्रकृते 'चक्षुषा पश्यति' इत्यादिरेव व्यपदेश आत्मसत्तासाधकः स च उभयथा= आत्मनो देहादिसंघातरूपत्वेपि संभवति देहादिसंघातव्यतिरिक्तत्वेपि संभवतीत्यर्थः। अभिप्रेतव्यपदेशस्य स्वरूपमाह– क्रियेति, यथा 'चक्षुषा पश्यति' इत्यत्र दर्शनक्रियायाश्चक्षुर्लक्षणकरणस्य चात्मलक्षणेन कर्त्रा सह संबन्धोऽभिधीयते इत्ययं व्यपदेशः। व्यपदेशद्वैविध्यमाह– स इति, सः= व्यप-देशः। प्रथमं व्यपदेशमाह– अवयवेनेति, अवयवेन समुदायस्य= अवयविनो व्यपदेश इत्यन्वयः, एत-मुदाहरति– मूलैरिति, अत्रावयवभूतानां मूलानां करणत्वेन स्थितिक्रियायाश्च वृक्षेण कर्त्रा संबन्धोभिधी-यते, स्तम्भैरित्यत्राऽवयवभूतानां स्तम्भानां धारणक्रियायाश्च प्रासादेन संबन्धोभिधीयते इत्यन्वयः। द्वितीयं व्यपदेशमाह– अन्येनेति, एतमुदाहरति– परशुनेति, अत्र परशुलक्षणकरणस्य छेदनरूपक्रियायाश्च चैत्रादिना कर्त्रा संबन्धोभिधीयते. प्रदीपलक्षणकरणस्य दर्शनक्रियायाश्च कर्त्रा संबन्धोभिधीयते प्रदी-पादिकं च चैत्रादेः कर्तुर्नावयवभूतं किं त्वन्यदेवेत्यऽन्येनान्यस्य व्यपदेशः= संबन्धाभिधानमित्यन्वयः।

पश्यति' 'मनसा विजानाति' 'बुद्ध्या विचारयति' 'शरीरेण सुखदुःखमनुभवति' इति, तत्र नावधार्यते– किमवयवेन समुदायस्य= देहादिसंघातस्य? अथाऽन्येनाऽन्यस्य= तद्व्यतिरिक्तस्य? इति ॥

अन्येनायमन्यस्य व्यपदेशः, कस्मात्?—

## दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

दर्शनेन यावदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते– 'यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामि, इति. 'यं चाऽस्पार्क्षं स्पर्शनेन तं चक्षुषा पश्यामि' इति, एकविषयौ चेमौ प्रत्ययौ एककर्तृकौ प्रतिसंधीयेते. न च संघातकर्तृकौ. न (वा) इन्द्रियेणैककर्तृकौ, तद्

---

प्रकृतमात्मपक्षीयं व्यपदेशमाह– अस्तीति, अत्र 'चक्षुषा पश्यति' इत्याद्याश्चत्वारो व्यपदेशा उदाहृताः, अत्र चक्षुरादिकरणानां दर्शनादिक्रियाणां चात्मलक्षणेन कर्त्रा संबन्धोऽभिधीयते इति स्पष्टमेव। अत्र– "दर्शनं क्रिया करणं चक्षुः करणस्य क्रियायाः कर्त्रा संबन्धः– चक्षुषा पश्यतीति। परशुः करणं वृश्चतिः क्रिया ताभ्यां कर्तुरभिसंबन्धः– परशुना वृश्चतीति" इति वार्तिकम्। द्विविधमपि व्यपदेशमुदाहृत्य प्रकृतसंशयमवतारयति– तत्रेति, योयम् 'चक्षुषा पश्यति' इत्यादिर्व्यपदेशः स किं 'मूलैर्वृक्षस्तिष्ठति' इत्यादिवद् अवयवेन चक्षुषा समुदायस्य देहादिसंघातस्य व्यपदेशः किं वा 'प्रदीपेन पश्यति' इत्यादिवद् अन्येनाऽन्यस्यात्मनोव्यपदेश इति प्रमाणान्तरं विना नावधार्यते इत्यन्वयः, तद्व्यतिरिक्तस्य= देहादिसंघातव्यतिरिक्तस्य व्यपदेश इत्यर्थः। तत्र 'चक्षुषा पश्यति' इत्यत्र यद्यवयवेन समुदायस्य व्यपदेशस्तदा यथा मूलाद्यवयवानां समुदाय एव वृक्षो न तु तदतिरिक्तः पदार्थस्तथात्मापि चक्षुराद्यवयवसमुदायरूप एव स्यादिति देहादिसंघात एवात्मेति प्राप्नुयात्. यदि चान्येनान्यस्य व्यपदेशः स्यात्तदा यथा प्रदीपाद्यतिरिक्त एव दर्शनादिकर्ता चैत्रादिस्तथात्मापि चक्षुराद्यवयवसमुदायादतिरिक्त एव स्यादित्यर्थः। इत्युपोद्घातभाष्यार्थः ॥

अत्र स्वसिद्धान्तमाह– अन्येनेति, यथा 'प्रदीपेन पश्यति' इत्यन्येनान्यस्य व्यपदेशस्तथा 'चक्षुषा पश्यति' इत्ययमप्यन्येनान्यस्य व्यपदेश इति देहादिसंघातातिरिक्त एवात्मेत्यर्थः। उक्ते हेतुं जिज्ञासते– कस्मादिति। सूत्रेणोत्तरमाह– दर्शनेति, दर्शनेन= चक्षुषा स्पर्शनेन= त्वचा चैकार्थग्रहणादित्यन्वयः, 'चक्षुषा यमहमद्राक्षं तं त्वचा स्पृशामि' इत्यादिप्रत्यभिज्ञास्थले चक्षुरादिना दृष्टस्य वत्सादिपदार्थस्य त्वचा ग्रहणं भवति तदेतद् ग्रहणं देहाद्यतिरिक्तात्मपक्षे उपपद्यते तत्रात्मनो नित्यत्वेन पूर्वदृष्टस्य कालान्तरेपि करणान्तरेण ग्रहणसंभवात् परशुना छेदनानन्तरं क्रकचेन कर्तनवत्. यदि च देहादिसंघात एवात्मा स्यात्तदा चक्षुषा दृष्टस्य त्वचः प्रत्यभिज्ञानं न स्यात्– अन्यदृष्टस्यान्येन प्रत्यभिज्ञानाऽसंभवादन्यथा चैत्रदृष्टं मैत्रेणापि प्रत्यभिज्ञातं स्यात् न चैवमस्तीति देहादिसंघातातिरिक्त एव नित्य आत्मा संभवतीति 'चक्षुषा पश्यति' इत्यादिव्यपदेशोऽन्येनान्यस्यैव व्यपदेश इति सूत्रार्थः। व्याचष्टे– दर्शनेनेति, दर्शनेन= चक्षुषा, यावत्= यावान्= यः स्पर्शनेन= त्वचा, उदाहरति– यमिति, यम्= दौहित्रादिकम्, वृद्धावस्थायां चक्षुषोर्विनाशात् त्वचात्र प्रत्यभिज्ञा विज्ञेया। विपरीतक्रमेणोदाहरति– यं चेति, भार्यागर्भस्थबालस्य स्पर्शनानन्तरं चक्षुषा प्रत्यभिज्ञात्र विज्ञेया। अत्र वक्तव्यमाह– एकेति, इमौ= उक्तौ दार्शनस्पार्शनौ प्रत्ययौ, उभयोरपि प्रत्यययोरेकस्यैव चैत्रादेः कर्तृत्वेनैककर्तृकौ प्रतिसंधीयेते= विज्ञायेते। पूर्वपक्षप्रतिषेधमाह– न चेति, देहादिसंघातस्य प्रतिक्षणं परिणामित्वेन विनाशित्वात् द्वितीयज्ञानपर्यन्तं स्थितिरेव न संभवति येनेदं प्रत्यभिज्ञानं देहादिसंघातकर्तृकं स्यादिति नोक्तौ प्रत्ययौ देहादिसंघातकर्तृकावित्यर्थः। नाप्यत्रैकस्येन्द्रियस्य कर्तृत्वमुपपद्यते चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञानाऽसंभवात् चैत्रदृष्टस्य मैत्रेण प्रत्यभिज्ञानासंभववदित्याह– न वेति, इन्द्रियाणामेकत्वाभावादित्याशयः, इन्द्रियेणेति तृतीयार्थो

योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य ग्रहीता भिन्ननिमित्तौ अनन्यकर्तृकौ प्रत्ययौ समानविषयौ प्रतिसंदधाति सोऽर्थान्तरभूत आत्मा । कथं पुनर्नेन्द्रियेणैककर्तृकौ ?. इन्द्रियं खलु स्वं स्वं विषयग्रहणमऽनन्यकर्तृकं प्रतिसंधातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति । कथं न संघातकर्तृकौ ?. एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते न संघातः, कस्मात् ?. अनिवृत्तं हि संघाते प्रत्येकं विषयान्तरग्रहणस्याऽप्रतिसंधानम् इन्द्रियान्तरेणेवेति ॥१॥

## न- विषयव्यवस्थानात् ॥ २ ॥

न देहादिसंघातादन्यश्चेतनः, कस्मात् ?. विषयव्यवस्थानात्= व्यवस्थितविषयाणीन्द्रि-

निरूपितत्वं इन्द्रियनिरूपितैकत्वविशिष्टकर्तृकौ इत्यर्थः, किं वा इन्द्रियेणैककर्तृकौ= एकेन्द्रियकर्तृकौ इत्यर्थः, तृतीयार्थस्तु चिन्त्य एव । निगमयति- तदिति, एकार्थस्य= दौहित्रादेः, भिन्ननिमित्तौ= चक्षुस्त्वक् च भिन्ने निमित्ते= करणे ययोः प्रत्ययोस्तौ भिन्ननिमित्तौ अनन्यकर्तृकौ= एककर्तृकौ समानविषयौ= एकविषयकौ, प्रतिसंदधाति= स्मरति, अत्रोक्तप्रत्यययोरुत्पत्त्यनन्तरं स्मरणं नानुपपन्नम्, प्रतिसंदधाति= अनुभवतीत्यर्थो वा तथा चैतादृशविशिष्टप्रत्ययद्वयस्य य आधार स आत्मा. न चैतादृशप्रत्ययाधारत्वं देहादिसंघाते संभवतीति तदतिरिक्त एवात्मा नित्य इत्यर्थः । उक्तप्रत्यययोरिन्द्रियस्य कर्तृत्वाभावहेतुं जिज्ञासते- कथमिति । उत्तरमाह- इन्द्रियमिति, स्वदृष्टस्यैव स्मरणं संभवति नान्यदृष्टस्येति नियमात् इन्द्रियमपि स्वकर्तृकमेव विषयज्ञानं स्वदृष्टमेव च विषयं स्मर्तुमर्हति न त्विन्द्रियान्तरकर्तृकं विषयान्तरग्रहणमिति चक्षुःकर्तृकस्य प्रत्ययस्य चक्षुर्दृष्टस्य च विषयस्य त्वचा स्मरणं न संभवतीति नोक्तप्रत्ययौ इन्द्रियेणैककर्तृकावित्यर्थः " विषयान्तरग्रहणम् " इत्यत्र प्रकृतानुरोधात् 'विषयग्रहणम्' इति वक्तव्यमासीत । उक्तप्रत्यययोर्देहादिसंघातस्य कर्तृत्वाभावहेतुं जिज्ञासते- कथं नेति । संघातस्यैकत्वाद्युक्तानुपपत्तिर्नास्तीत्याशयः । प्रथमं वस्तुस्थितिमाह- एक इति, प्रतिसंहितौ= स्मृतिविषयौ इत्यर्थः स्मर्यमाणविषयकाविति यावत्, अत्रोक्ते चाक्षुषप्रत्यभिज्ञाकाले स्पार्शनप्रत्यक्षस्य स्पार्शनप्रत्यभिज्ञाकाले च चाक्षुषप्रत्यक्षस्य स्मृतिविषयत्वात् 'प्रतिसंहितौ' इतिद्विवचनोपपत्तिः, एतादृशप्रत्ययद्वयवेत्तृत्वं संघातस्य नोपपद्यतं एतादृशप्रत्ययवेत्तुश्चैकत्वं स्पष्टमेव तदपि संघाते नोपपद्यते- देहादिसंघातस्य परिणामित्वेन विनाशात् तेन च पूर्वोत्तरकालयोर्भेदेनैकत्वासंभवादित्यर्थः । उक्ते हेतुं जिज्ञासते- कस्मादिति । उत्तरमाह- अनिवृत्तमिति, यथेन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसंधानम्= स्मरणं न संभवति- परस्परं भेदात् तथा संघातस्याप्यवयवसमूहरूपत्वादवयवैरेव स्मरणं वक्तव्यम् अवयवाश्चेन्द्रियादिलक्षणा एव तत्र संघाते प्रत्येकम्= एकैनैकेनावयवेन= नैस्तैरवयवैर्विषयान्तरग्रहणस्य अप्रतिसंधानम्= अस्मरणम्= अनिवृत्तम्= न निवर्तते इति स्मरणं नोपपद्यते- परस्परं भेदात् अन्यदृष्टस्य चान्येन स्मरणासंभवादिति संघातावयवेन चक्षुरादिना दृष्टस्य त्वगादिना स्मरणं नोपपद्यते अवयवसमुदायातिरिक्तश्च न कोपि संघातपदार्थ इति नोक्तप्रत्ययौ संघातकर्तृकौ किं तु संघातातिरिक्तनित्यात्मकर्तृकावेवेत्यर्थः ॥ १ ॥

पूर्वपक्षी पूर्वोक्तमात्मनः संघातातिरिक्तत्वं निराकरोति- नेति, आत्मा देहादिसंघातादन्यो न किं तु देहादिसंघात एवात्मा- विषयव्यवस्थानात्= रूपं चक्षुष एव विषयो गन्धो घ्राणस्यैव विषयो नान्यस्येति विषयव्यवस्थादर्शनात्, यदि देहादिसंघातातिरिक्त आत्मा स्यात् तदा स स्वतन्त्र एव सर्वविषयवेत्तेति गन्धादिकं चक्षुरादिनापि वेदयेत न चैवमस्तीति न संघातातिरिक्त आत्मेति सूत्रार्थः, किं वा चक्षू रूपमेव गृह्णातीत्यादिरूपा विषयव्यवस्था दृश्यते तेन रूपादिग्राहकाणां चक्षुरादीनामेवात्मत्वं प्राप्तमिति संघात एवात्मेति प्राप्तं यदि संघातारिक्त आत्मा स्यात्तदा तेन प्रेरितं चक्षुरादिकं गन्धादिकमपि गृह्णीयात् स च चक्षुरादिकं विनापि रूपादिकं गृह्णीयात् न चैवमस्तीति न देहादिसं-

याणि– चक्षुष्यऽसति रूपं न गृह्यते सति च गृह्यते. यच्च यस्मिन्नऽसति न भवति सति (च) भवति तस्य तदिति विज्ञायते, तस्माद् रूपग्रहणं चक्षुषः चक्षू रूपं पश्यति, एवं घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्वविषयग्रहणात् चेतनानि– इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात्, एवं सति किमन्येन चेतनेन ॥.

संदिग्धत्वादहेतुः ।

योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः स किं चेतनत्वात्? आहोस्वित् चेतनोपकरणानां ग्रहणनिमित्तत्वात्? इति संदिह्यते, चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद् भवितुमर्हति ॥ २ ॥

यच्चोक्तम्– "विषयव्यवस्थानात्" इति—

## तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः ॥ ३ ॥

घातातिरिक्त आत्मेति सूत्रार्थः । व्याचष्टे– नेति । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– विषयेति, एतद्व्याचष्टे– व्यवस्थितेति, व्यवस्थितविषयाणि= स्वग्राह्यरूपादिमात्रग्राहकाणि चक्षुरादीनीत्यर्थः, एतद्विशदयति– चक्षुषीति । व्याप्तिमाह– यच्चेति, यत्= रूपादिग्रहणम्, यस्मिन्= चक्षुरादौ । उपसंहरति– तस्मादिति । एवम्= गन्धग्रहणं घ्राणस्य शब्दग्रहणं श्रोत्रस्येत्येवं योज्यम् । पर्यवसितमाह– तानीति, तानीमानीन्द्रियाणीत्यन्वयः । इन्द्रियाणां चैतन्ये हेतुमाह– इन्द्रियाणामिति, तथाभावात्= भावाभावसत्त्वात्. इन्द्रियाणां भावे= सत्त्वे विषयग्रहणस्य भावः अभावे चाऽभाव इत्यन्वयव्यतिरेकौ प्रसिद्धौ तत्र विषयग्राहकस्यैव चैतन्यं युक्तम् अन्यथा मृतशरीरस्यापि चैतन्यं स्यात् त्वयापि विषयग्राहकस्यैवात्मत्वमुच्यते विषयग्राहकत्वं चेन्द्रियाणां प्रत्यक्षमेवेतीन्द्रियाणां चेतनत्वं प्राप्तं तेन तत्समुदायस्य देहादिसंघातस्यात्मत्वं प्राप्तमित्यर्थः, सिद्धान्तं प्रत्याचष्टे– एवमिति, एवम्= इन्द्रियाणां चैतन्ये सिद्धे सति । अन्येन= देहादिसंघातातिरिक्तेन, स्पष्टमन्यत् ॥

उक्तपूर्वपक्षं भाष्यकारो निराकरोति– संदिग्धेति "विषयव्यवस्थानात्" इति यो हेतुरुक्तः स अहेतुः= इन्द्रियाणां चैतन्यसाधको न संभवति– संदिग्धत्वात्= उक्तविषयव्यवस्थानस्येन्द्रियाणां करणत्वपक्षेपि संभवाद् संदिग्धत्वं तेनाऽसाधकत्वं प्राप्तम्, यथा दण्डादिकरणं विना घटाद्युत्पादनक्रिया न संभवति अथापि दण्डादेर्न कर्तृत्वं तथेन्द्रियादिकरणं विनाप्यात्मनो विषयग्रहणक्रिया न संभवति अथापि न विषयग्रहणकर्तृत्वमिन्द्रियाणां किं तु करणत्वमेवेत्यर्थः । स्वयं व्याचष्टे– योयमिति, अयम्= पूर्वसूत्रभाष्ये प्रदर्शितः । तथाभावः= भावाभावौ । संदेहमाविष्करोति– स इति, इन्द्रियाणां चेतनत्वादित्यन्वयः, द्वितीयदलमाह– आहो इति, निमित्तत्वात्= करणत्वात्, इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य भावाभावावित्ययं नियम इन्द्रियाणां चेतनत्वेपि संभवति संघातातिरिक्तात्मानं प्रति विषयग्रहणकरणत्वेपि संभवति– करणं विनापि कार्यासंभवादित्येवं संदेहः । स्वपक्षमाह– चेतनोपकरणत्वेपीति, इन्द्रियाणां चेतनोपकरणत्वेन विषयग्रहणकरणत्वादप्युक्तनियमो भवितुमर्हति= संभवति तत्र पक्षे तु पूर्वोदाहृता प्रत्यभिज्ञा नोपपद्यते इति संघातातिरिक्त एवात्मेत्यर्थः ॥ २ ॥

अग्रिमसूत्रमवतारयति– यच्चोक्तमि । उक्तपूर्वपक्षं सूत्रकारो निराकरोति– तदिति, तद्व्यवस्थानात्= उक्तविषयव्यवस्थानादेव आत्मसद्भावात्= संघातातिरिक्तात्मनः सिद्धिरस्तीति अप्रतिषेधः= संघातातिरिक्तात्मनः प्रतिषेधो नोपपद्यते इत्यन्वयः, यदीन्द्रियमेवात्मा स्यात्तदा तत् शब्दस्पर्शादिसर्वविषयग्राहकं स्यात् तथा चोक्ता शब्दादिष्वेकैकविषयग्रहणलक्षणा विषयव्यवस्था न स्यात् न चैवमस्ति किं तु चक्षू रूपस्यैव ग्राहकमित्यादिरूपा विषयव्यवस्था दृश्यते तेन ज्ञायते चक्षुरादिद्वारा सर्वविषय-

यदि खल्वेकमिन्द्रियमऽव्यवस्थितविषयं सर्वज्ञम्= सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्, यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात् तेभ्योऽन्यश्चेतनः सर्वज्ञः= सर्वविषयग्राही विषयव्यवस्थितिमऽतीतोऽनुमीयते, तत्रेदं प्रत्यभिज्ञानमऽप्रत्याख्येयं चेतनवृत्तमुदाह्रियते– रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति. गन्धप्रतिवेदी च रूपरसावऽनुमिनोति. एवं विषयशेषेऽपि वाच्यम् । रूपं दृष्ट्वा गन्धं जिघ्रति. घ्रात्वा च गन्धं रूपं पश्यति. तदेवमनियतपर्यायं सर्वविषयग्रहणम् एकचेतनाधिकरणमऽनन्यकर्तृकं प्रतिसंधत्ते, प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान् स्वात्मकर्तृकान् प्रतिसंदधाति प्रतिसंधाय

ग्राहक आत्मा संघातातिरिक्त एव, तव पक्षे च प्रत्यभिज्ञा पूर्वोदाहृता नोपपद्यते इति सूत्रार्थः ।

व्याचष्टे– यदीति, आत्मन एकत्वमावश्यकम् आत्मानेकत्वे हि तेषां परस्परं विरुद्धाया अपीच्छायाः संभवात् शरीरमुन्मथितं स्यादिति नाऽनेकेषामिन्द्रियाणामात्मत्वं संभवतीत्यभिप्रायेणोक्तम्– एकमिति, व्यवस्थितविषयत्वं पूर्वमुक्तं तदभावोऽव्यवस्थितविषयत्वं तदेवाह– सर्वज्ञमिति, सर्वज्ञत्वमाह– सर्वविषयेति, शब्दस्पर्शादिसर्वविषयग्राहकमित्यर्थः नत्वीश्वरस्येव सर्वज्ञत्वम्, पर्यवसितमाह– क इति, अन्यम्= इन्द्रियादन्यम्, यदीन्द्रियमेकं शब्दादिसर्वविषयग्राहकं च स्यात्तदा स्यादप्यात्मा न चैवमस्तीति नेन्द्रियाणामात्मत्वं संभवतीत्यर्थः । व्यतिरेकमाह– यस्मादिति, इन्द्रियाणां व्यवस्थितविषयत्वादेव सर्वविषयग्राहकत्वं न संभवतीति हेतोरेव सर्वविषयग्राहक आत्मा इन्द्रियाद्यतिरिक्त एवेत्यनुमीयते इत्यन्वयः, यथैक एव चैत्रः भिन्नैः करणैर्भिन्नानि कार्याणि करोति तथैक एवात्मा संघातातिरिक्तश्चक्षुरादिकरणै रूपादिकं गृह्णातीति युक्तमित्यर्थः । विषयव्यवस्थितिमतीतः= उक्तविषयव्यवस्थारहितः= सर्वविषयग्राहकोऽनुमीयते इत्यन्वयः । आत्मनः संघातातिरिक्तत्वसाधकं प्रत्यभिज्ञाख्यं प्रबलं साधनमवतारयति– तत्रेति, तत्र= आत्मनः संघातातिरिक्तत्वे, चेतनवृत्तम्= चेतनचरित्रभूतम् किं वा चेतने वृत्तम्= वर्तमानं प्रत्यभिज्ञानमित्यर्थः । प्रत्यभिज्ञानस्य प्रत्याख्यानं तु न संभवति– प्रत्यक्षत्वात् तच्च संघातात्मपक्षे नोपपद्यते इति पूर्वमुपपादितमेव । प्रत्यभिज्ञानमत्राप्युदाहरति– रूपेति, अयं चेतन आम्रादीनां रूपदर्शी= रूपं दृष्ट्वा तस्याम्रादेः पूर्वगृहीतं रसं वा गन्धं वाऽनुमिनोतीति स्पष्टमेव तत्रानुमानमपि ज्ञानमेव न चैकस्य कस्यचिदपीन्द्रियस्य रूपरसादीनामनेकेषां ज्ञानं संभवति नापि घ्राणादिगृहीतस्य गन्धादेः प्रत्यभिज्ञा चक्षुरादीनां संभवति. तथा विषयसंयोगे सत्येवेन्द्रियाणां ज्ञानं संभवति न चेदानीं गन्धादीनां घ्राणादिभिः संयोगोऽस्ति येनात्र घ्राणादीनां गन्धादिज्ञानं स्यात्, संघातश्च प्रतिक्षणं भिन्न एवेति न तस्य गृहीतग्रहणरूपा प्रत्यभिज्ञा संभवतीति तदतिरिक्त एव नित्य आत्मेति सिद्धमित्यर्थः । प्रत्यभिज्ञाया उदाहरणान्तरमाह– गन्धप्रतिवेदीति । प्रत्यभिज्ञोदाहरणमुपसंहरति– एवमिति, विषयशेषे= शेषविषयेष्वपि वाच्यम्= उदाहर्तव्यम्– यथा रसप्रतिवेदी रूपादिकमनुमिनोतीति । आत्मनो रूपादिज्ञानानां क्रमाभावमुदाहरति– रूपमिति, किं वा ननूक्तस्थले रूपदर्शनं चक्षुषो गन्धज्ञानं च घ्राणस्येति व्यवस्था किं न स्यात् तथा च न संघातातिरिक्त आत्मा सिध्यतीत्याशङ्क्याह– रूपमिति, रूपादिज्ञानेषु क्रमो नास्ति– आत्मना रूपादीनां यथेच्छं गृह्यमाणत्वादित्यर्थः, उपसंहरति– तदेवमिति, अनियतपर्यायम्= अनियतक्रमम्, प्रतिसंधत्ते= आत्मा स्मरति किं वा सर्वोऽपि जनो जानातीत्यर्थः, सर्वेषां विषयाणां ज्ञानमेकचेतनसमवेतं ज्ञायते न चेन्द्रियाणामेकत्वं येन सर्वविषयज्ञानाश्रयत्वं स्यात् तथा च नेन्द्रियाणां चेतनत्वमुपपद्यते इत्यर्थः । यदीन्द्रियाणामेव चेतनत्वं स्यात्तदा तेषां समप्राधान्याद् चक्षुषा रूपग्रहणानन्तरं गन्धग्रहणार्थं घ्राणप्रवृत्तिर्न स्यात् घ्राणप्रवृत्त्यनन्तरं च चक्षुःप्रवृत्तिर्न स्यात् आत्मभूतानामिन्द्रियाणां समप्राधान्याभावे च प्रधानस्यैवेन्द्रियस्य प्रथमं प्रवृत्तिः स्यादिति रूपादिज्ञानानामक्रमो न स्यात्. आत्मनस्तदतिरिक्तत्वे त्वात्मप्रेरितानां पूर्वापरभावेनापि प्रवृत्तिरुपपद्यते इत्याशयः । उक्तमेव विशदयति– प्रत्यक्षेति, नानाविषयान् प्रत्यक्षादीन् प्रत्ययान् स्वात्मकर्तृकान् प्रतिसंदधाति=

वेदयते, सर्वार्थविषयं च शास्त्रं प्रतिपद्यते. अर्थमविषयभूतं श्रोत्रस्य, क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावं प्रतिसंधाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति, सेयं सर्वज्ञस्य ज्ञेयाऽव्यवस्थाऽनुपदं न शक्या परिक्रमितुम्। आकृतिमात्रं तूदाहृतम्, तत्र यदुक्तम्-'इन्द्रियचैतन्ये सति किमन्येन चेतनेन' ( इति ) तदयुक्तं भवति ॥ ३ ॥

इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रम्—

## शरीरदाहे पातकाभावात् ॥ ४ ॥

स्मरतीत्यन्वयः, तादृशप्रत्ययान् प्रतिसंधाय तद्विषयीभूतान् पदार्थान् वेदयते=स्मरति तत्तद्विषयकज्ञानस्मरणपूर्वकं च तत्तद्विषयस्मरणं विदुषां स्पष्टमेव, नानाविषयाणां ज्ञानानां च स्मरणं कस्यापीन्द्रियस्य न संभवति–इन्द्रियाणां शब्दादिमात्रग्राहकत्वेन ज्ञानग्राहकत्वाभावात् तथा नानाविषयग्राहकत्वाभावादित्यर्थः, आत्मा सर्वविषयकं शास्त्रमपि प्रतिपद्यते तत्र सर्वविषयकशास्त्रस्य प्रतिपत्तिरपीन्द्रियाणां न संभवति– सर्वविषयग्रहणसामर्थ्याभावादित्याह–सर्वेति, वाक्यस्य श्रोत्रग्राह्यत्वेपि वाक्यार्थस्य श्रोत्रग्राह्यत्वं नोपपद्यते नाप्यन्येषामिन्द्रियाणां वाक्यार्थग्राहकत्वमिति वाक्यार्थग्रहीता इन्द्रियातिरिक्त एवात्मेत्यर्थः। वाक्यार्थग्रहणस्यात्मकर्तृकत्वमाह– क्रमेति, घकारटकारादीनां वर्णानां क्रमभावेन श्रूयमाणानां घटादिपदत्वं भवति पदानां क्रमभावेन च वाक्यत्वं भवति तत्सर्वं प्रतिसंधाय शब्दार्थव्यवस्थाम् 'इदं पदमस्य वाचकम्' इत्यादिरूपं वाच्यवाचकभावं बुध्यमानः= जानानः अनेकविषयम्= अनेकेषामिन्द्रियाणां विषयभूतम् अर्थजातम्= पदार्थवृन्दं शब्दस्पर्शरसादिकम् एकैकेनेन्द्रियेणाऽग्रहणीयम्= ग्रहीतुमशक्यमप्यात्मा गृह्णातीत्यन्वयः, चक्षुरादिना रसादिग्रहणं न संभवतीत्याशयेनोक्तम्– एकैकेनेति। तथा चैतादृशसकलपदार्थग्राहकत्वमिन्द्रियाणां नोपपद्यते– रसादितत्तद्विषयमात्रग्राहकत्वनियमादित्यात्मा सकलपदार्थग्राही इन्द्रियातिरिक्त एवेत्यर्थः। स्वपक्षे दार्ढ्यमाह– सेयमिति, सेयम्= उपपादितेयं सर्वज्ञस्य= सर्वपदार्थग्राहकस्यात्मनो ज्ञेयाऽव्यवस्था=सर्वपदार्थग्राहकता अनुपदम्= इदानीम्= कथमपि परिक्रमितुम्= परावर्तयितुम्= प्रत्याख्यातुं शक्या नास्ति तस्मादिन्द्रियातिरिक्त एवात्मेति सिद्धमित्यर्थः, घ्राणं गन्धस्यैव ग्राहकं नान्यस्येति व्यवस्था ज्ञेयव्यवस्था तदभावश्चेन्द्रियेषु नोपपद्यते– प्रत्यक्षविरोधादेव। उपपादनमुपसंहरति– आकृतीति, आकृतिमात्रम्= निदर्शनमात्रम्= अल्पमेवोदाहृतं विस्तरभयादित्यर्थः। उपसंहरति– तत्रेति, तत्र= एवमिन्द्रियाणां सर्वग्राहकत्वाभावे आत्मनश्च सर्वग्राहकत्वे सिद्धे द्वितीयसूत्रभाष्यान्ते यदुक्तम्– "किमन्येन चेतनेन" इति तदयुक्तमेव– चेतनस्यात्मन इन्द्रियातिरिक्तत्वाभावे कस्यापीन्द्रियस्य सर्वविषयग्राहकत्वं प्रत्यक्षसिद्धं नोपपद्येतेत्यर्थः ॥ ३ ॥

अग्रिमसूत्रमवतारयति– इतश्चेति, इतः= सूत्रोक्तहेतोः। विपक्षे बाधकमाह– शरीरेति, देहादिसंघातस्यात्मत्वे शरीरदाहे पातकाभावात्= पातकाभावः प्रसज्येतेत्यन्वयः, अत्र– "पातकाभावात्= पातकाभावप्रसङ्गात्" इति वृत्तिः, यदि देहादिसंघात एवात्मा स्यात्तदा संघातस्य प्रतिक्षणं भिन्नत्वेन येन संघातेन जीवच्छरीरदाहः कृतस्तस्योत्तरकाले सत्त्वासंभवात् पातकं न स्यादिति पातकाभावः प्रसज्येत न चैवमस्तीति तादृशपातकस्योपपत्त्यर्थं संघातातिरिक्तो नित्य आत्मा स्वीकार्य इति सूत्रार्थः, संघातात्मवादिना च जीवच्छरीरदाहेपि पापलक्षणं पातकं न स्वीक्रियते इत्यत्र पातकपदेन राजदण्डो ग्राह्यः स च जीवच्छरीरदाहे नास्तिकस्यापि नानुपपन्नः, स च राजदण्डः संघातात्मपक्षे नोपपद्यते– संघातस्य प्रतिक्षणं भेदेनापराधकर्तुः संघातस्य दण्डकाले स्थित्यसंभवादिति दण्डोपपत्त्यर्थमपि संघातातिरिक्त आत्मा नित्यः स्वीकार्यः। सूत्रमिदं संघातात्मपक्षे दोषमात्रप्रदर्शनार्थं तदुक्तं वार्तिककृता– "तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति दोषप्रतिपादनार्थं न साधनार्थमिति" इति। वस्तुवस्तु 'यदि शरीरमेवात्मा स्यात्तदा मृतशरीरस्यापि दाहे पातकं स्यात् न चैवमस्तीति पातकाभावादपि ज्ञायते–

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणिभूतो गृह्यते, प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतपापं पातकमित्युच्यते. तस्याभावः— तत्फलेन कर्तुरसंबन्धात् अकर्तुश्च संबन्धात्= शरीरेन्द्रियबुद्धिवेदनाप्रबन्धे खल्वन्यः संघात उत्पद्यतेऽन्यो निरुध्यते. उत्पादनिरोधसंततिभूतः प्रबन्धो नाऽन्यत्वं बाधते— देहादिसंघातस्याऽन्यत्वाऽधिष्ठानत्वात्. अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायते इति, एवं सति यो देहादिसंघातः प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन संबध्यते. यश्च संबध्यते न तेन हिंसा कृता, तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते, सति च सत्त्वोत्पादे सत्त्वनिरोधे चाऽकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात्। तद् यदि देहादिसंघातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेत्. अनिष्टं चैतत्. तस्माद् देहादिसंघातव्यतिरिक्त आत्मा नित्य इति ॥ ४ ॥

---

शरीरातिरिक्त एवात्मेति' इतिसूत्रकाराशयो भाति। व्याचष्टे— शरीरेति, शरीरग्रहणेन= शरीरशब्देनेति यावत्। प्राणिभूतः= प्राणविशिष्टः— मृतशरीरस्य दाहे पातकाभावादत्र शरीरदाहशब्देन जीवच्छरीरदाहो ग्राह्य इत्यर्थः। पातकपदार्थमाह— प्राणिभूतमिति, प्राणिभूतम्= प्राणविशिष्टम्। प्राणिहिंसाकृतं पापं पातकमित्यन्वयः। पातकाभावपदार्थमाह— तस्येति, तत्फलेन= हिंसादिफलेन पापेन सह हिंसादिकर्तुरसंबन्धात्= यः संबन्धाभावः= भोगाभावः तस्मादेव तस्य= पातकस्याभावः। अत्र कृतहानिमुक्त्वाऽकृताभ्यागममाह— अकर्तुरिति, यदि तत्र पातकफलं भवति तदा तत्फलं पातकाऽकर्तुरेव स्यात् यतः संघातस्य प्रतिक्षणं भेदेन पातककर्त्रपेक्षया तत्फलभोक्ता संघातोऽन्य एव संभवतीत्यर्थः। संघातस्य प्रतिक्षणं भेदमुपपादयति— शरीरेन्द्रियेति, प्रबन्धे= संताने= प्रवाहे= समुदाये प्रतिक्षणमन्यः संघात उत्पद्यते अन्यः= पूर्वश्च संघातः प्रतिक्षणं निरुध्यते= विनश्यति दीपज्वालेव, संघातो हि अन्नादिकार्य एवेति कारणीभूतान्नादिरसपरमाणूनामुत्तरोत्तरं भेदात् तत्कार्यभूतसंघातस्यापि प्रतिक्षणं भेद आवश्यकस्तत्रानेकसंघातदर्शनाभावात् पूर्वः पूर्वः संघातो विनश्यति उत्तरोत्तरश्चोत्पद्यते इति स्वीकार्यमेव तथा च हिंसादिकर्तुस्तत्फलभोगकाले सत्त्वासंभवेन फलभोगासंभवात् पातकाभावः प्रसक्तः, येन च पातकफलं भुज्यते तेन तु पातकं न कृतं तस्य पातकोत्पत्तिकाले सत्त्वासंभवादित्यर्थः। ननु संतानैकत्वं संघातनानात्वस्य बाधकं भविष्यतीत्याशङ्क्याह— उत्पादेति, संघातप्रतियोगिकयोरुत्पादनिरोधयोः= उत्पत्तिविनाशयोः संततिभूतः= नैरन्तर्येणाश्रयीभूतः प्रबन्धः= देहेन्द्रियादिसमुदायः संतानः संघातनानात्वं न बाधते— अन्यत्वस्य= नानात्वस्य देहादिसंघातनिष्ठत्वात्. नहि नद्येकत्वं प्रवाहनानात्वबाधकं भवति तथैवात्रापि विज्ञेयम्। अत्र प्रत्यक्षं प्रमाणयति— अन्यत्वेति, असौ= संघातो बाल्याद्यवस्थाभेदेन नाना प्रख्यायते= प्रत्यक्षमीक्ष्यते स च भेदः प्रतिक्षणं भेदं विना न संभवतीति सिद्धं संघातनानात्वम्। वस्तुतस्त्वत्र "नान्यत्वं बाधते" इत्यत्र 'अन्यत्वमापादयति' इति वक्तव्यमासीत्। कृतहान्यकृताभ्यागमदोषेणोपसंहरति— एवं सतीति, एवम्= उक्तरीत्या संघातनानात्वे सिद्धे सति हिंसकस्य संघातस्य हिंसोत्तरक्षणे एव विनाशाद् हिंसाफलप्राप्तिर्न संभवति, यस्य च संघातस्य हिंसाफलप्राप्तिर्भवति तेन तु हिंसा न कृता— तस्य हिंसाकाले उत्पत्तेरेवाभावादिति तदेवं सत्त्वभेदे= संघातलक्षणात्मनो भेदे सिद्धे संघातात्मपक्षे कृतस्य= पातकस्य हानिः= फलभोगाभावो हिंसकस्य, अकृतस्य च पातकस्य अभ्यागमः= फलभोगो हिंसकान्यसंघातस्य प्रसज्यते एतच्च न युक्तमिति संघातातिरिक्तो नित्य आत्मा स्वीकार्य इत्यर्थः। संघातात्मपक्षे दोषान्तरमाह— सति चेति, एवं सत्त्वस्य= संघातलक्षणात्मनो नानात्वे सिद्धे कृतहान्यकृताभ्यागमदोषेण तादृशसत्त्वस्य सर्गः अकर्मनिमित्तः प्राप्नोति= कर्मनिमित्तो न संभवति— कर्मकर्तुस्तदुत्तरक्षणे विनाशेन फलभोगकाले सत्त्वस्यैवासंभवात् तथा च संघातात्मवादिनो मोक्षार्थो ब्रह्मचर्यवासो निष्फल एव स्यात्— तत्फलप्राप्तेरसंभवात् मोक्षश्च स्वयमेव स्यात् तथा च वार्तिकम्—

## तदभावः सात्मकप्रदाहेपि- तन्नित्यत्वात् ॥ ५ ॥

यस्यापि नित्येनात्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेद् दग्धुः, कस्मात् ?. नित्यत्वादात्मनः, न जातु कश्चित् नित्यं हिंसितुमर्हति, अथ हिंस्यते ?. नित्यत्वमस्य न भवति, सेयमेकस्मिन् पक्षे हिंसा निष्फला. अन्यस्मिंस्त्वऽनुपपन्नेति ॥ ५ ॥

## न- कार्याश्रयकर्तृवधात् ॥ ६ ॥

न ब्रूमः- नित्यस्य सत्त्वस्य वधो हिंसा अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः= पीडा वैकल्यलक्षणः प्रबन्धो-

" मोक्षार्थश्च प्रयासो नोपपद्यते- अयत्नसिद्धत्वात्. जातमात्र एवायं मुच्यते इति मुक्त्यर्थं ब्रह्मचर्यवासोऽनर्थः " इति । वस्तुतस्त्विदमप्ययुक्तम्- संघात्मवादिना ब्रह्मचर्यमोक्षादेरस्वीकारात् । उपसंहरति- तदिति, सत्त्वम्= आत्मा, संघातात्मपक्षे जीवच्छरीरदाहे पातकं न भवेत्- शरीरदाहकस्य तदुत्तरक्षणे विनाशेन फलभोगासंभवात् पातकाभावश्च. तत्फलभोगाभाव एवेत्यर्थः, एतद्दोषपरिहारार्थं संघातातिरिक्तो नित्य आत्मा स्वीकार्यस्तस्य नित्यत्वेनोक्तदोषाणामापत्तिर्नास्तीत्याह- तस्मादिति ॥ ४ ॥

पूर्वपक्षी नित्यात्मपक्षेपि पातकाभावदोषस्यापत्तिमाह- तदभाव इति, नित्यात्मपक्षेपि सात्मकप्रदाहे= जीवच्छरीरदाहे तदभावः= पातकाभावः प्रसज्यते- तन्नित्यत्वात्= आत्मनो नित्यत्वात् नित्यस्य च हिंसाया एवाऽसंभवात् हिंसां विना च पातकस्याप्यसंभवादिति सूत्रार्थः, पूर्वत्र पातकाभावो हि पातकफलभोगाभावः अत्र तु पातकस्य स्वरूपेणैवाभावः- नित्यस्यात्मनो हिंसाया एवासंभवादिति विवेकः । व्याचष्टे- यस्येति, यस्य= नैयायिकादेर्मते नित्य आत्मा तस्यापि मते जीवच्छरीरदाहे दग्धुः= दाहकस्य पातकं न संभवति । नित्येनात्मना सात्मकम्= नित्यात्मविशिष्टं शरीरं दह्यते= दह्येतेत्यर्थः । स्वमते पातकाभावे हेतुं जिज्ञासते- कस्मादिति । उत्तरमाह- नित्यत्वादिति, उक्तं विशदयति- न जात्विति, नित्यस्यात्मनो हिंसैव न संभवतीति कथं जीवच्छरीरदाहेपि तव मतेपि पातकं स्यादित्यर्थः । विपक्षे बाधकमाह- अथेति, यद्यात्मा हिंस्यते तदा विनाशित्वादेवास्य= आत्मनो नित्यत्वं न संभवतीत्यर्थः । उपसंहरति- सेयमिति, सेयं हिंसा एकस्मिन् पक्षे= संघातात्मपक्षे स्वरूपसत्यपि निष्फला- हिंसकस्योक्तरीत्या हिंसाफलप्राप्तेरसंभवात्, अन्यस्मिन्= नित्यात्मपक्षे तु हिंसाऽनुपपन्ना- आत्मनो नित्यत्वेन हिंसाया असंभवादिति. तथा च पातकाभावस्तव मतेपि समान एवेत्यर्थः । अत्र- " यस्यात्मा नित्यस्तस्यापि हिंसाफले न प्राप्नुतः- हिंसा तावन्न प्राप्नोति नित्यत्वात. फलमपि नात्मनो युक्तम्- अनुपकार्यत्वात् " इति वार्तिकम् ॥ ५ ॥

उक्तपूर्वपक्षम्= नित्यात्मपक्षे पातकाभावं प्रतिक्षिपति- नेति, कार्यं सुखदुःखभोगस्तस्याश्रयः शरीरम्- शरीरावच्छेदेनैवात्मनः सुखादिभोगसंभवात कर्तॄणि= विषयोपलब्धिकारणानीन्द्रियाणि तयोः कार्याश्रयकर्त्रोर्यो वधः= उपघातः सा हिंसा एतादृशी च हिंसा नित्यात्मपक्षेपि नानुपपन्ना येन पातकाभावः प्रसज्येत, किं वा कार्याश्रयकर्तृपदं शरीरपरमेव शरीरस्य सुखादिभोगाश्रयत्वात् कर्तृत्वाच्च तस्य वधो हिंसेति सूत्रार्थः । अत्र- " तत्र कार्याश्रयशब्देन शरीरमुच्यते- तन्निमित्तत्वादुपभोगस्येति. कर्तॄणीन्द्रियाणि तत्साधनत्वात्, अथ वा समानाधिकरणसमासाच्छरीरमेव. कार्याश्रयकर्तृशब्दाभ्यामुच्यते " इति वार्तिकम् । व्याचष्टे- नेति, यद्यात्मवधो हिंसेत्युच्येत तदा नित्यस्यात्मनो हिंसाया असंभवाद् नित्यात्मपक्षे पातकाभावापत्तिः स्यादपि न चैवमुच्यते इत्यर्थः । स्वमतेन हिंसास्वरूपमाह- अपीति, अनुच्छित्तिधर्मकस्य= अविनाशिनः सत्त्वस्य= आत्मनो यः कार्याश्रयः= भोगाश्रयः शरीरं तस्य स्वस्वविषयोपलब्धेः कर्तॄणाम्= साधनानां चेन्द्रियाणां च उपघातपीडादिशब्दवाच्यः किं वा

च्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति, कार्यं तु सुखदुःखसंवेदनं तस्याऽऽयतनम्= अधिष्ठानम्= आश्रयः शारीरम्. कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तृणामिन्द्रियाणां वधो हिंसा न नित्यस्यात्मनः, तत्र यदुक्तम्— "तदभावः सात्मकप्रदाहेपि तन्नित्यत्वात् ५" इति एतदयुक्तम् । यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः । एतावच्चैतत् स्यात्– सत्त्वोच्छेदो वा हिंसा अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा. न कल्पान्तरमस्ति. सत्त्वोच्छेदश्च प्रतिषिद्धः, तत्र किमन्यच्छेषम् ? यथाभूतमिति ।

अथ वा "कार्याश्रयकर्तृवधात्" इति कार्याश्रयः= देहेन्द्रियबुद्धिसंघातो नित्यस्यात्मनः तत्र सुखदुःखप्रतिसंवेदनं तस्याऽधिष्ठानम्= आश्रयः= तदायतनं तद् भवति न ततोऽन्यदिति स एव कर्ता– तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिर्न तमन्तरेणेति. तस्य वधः= उपघातः= पीडा प्रमापणं वा हिंसा न नित्यत्वेनात्मोच्छेदः, तत्र यदुक्तम्– "तदभावः सात्मकप्रदाहेपि तन्नित्यत्वात्" ( इति ) एतन्नेति ॥ ६ ॥

---

वैकल्यलक्षणः प्रबन्धोच्छेदः= प्रवाहोच्छेदो यथा काणत्वादिः किं वा प्रमापणलक्षणः= विनाशलक्षणो वधः स एव हिंसेत्युच्यते एतादृशी च हिंसा नित्यात्मपक्षेपि नानुपपन्ना– आत्मनो नित्यत्वेपि शरीरादीनामुपघातसंभवादित्यर्थः, अत्राल्पोपघातेन पीडा ततोधिकेनोपघातेन विकृतिलक्षणं वैकल्यं ततोप्यधिकेन विनाशस्तदेतत् प्रत्यक्षमेव । कार्यपदार्थमाह– कार्यमिति, संवेदनम्= भोगः । तस्य= संवेदनस्य, आश्रयपदार्थमाह– आयतनमिति । संकलितमाह– कार्याश्रयस्येति । कर्तृपदार्थमाह– स्वेति । व्यवच्छेद्यमाह– नेति, नित्यस्यात्मनस्तु हिंसा नोच्यते येन नित्यात्मपक्षे हिंसाया असंभवात्पातकाभावापत्तिः स्यादित्यर्थः । उपसंहरति– तत्रेति, तथा च "तदभावः" इत्यादिपूर्वसूत्रं यदुक्तं तन्न युक्तमित्यन्वयः, पूर्वसूत्रेण नित्यात्मपक्षे यः पातकाभाव उक्तः स नोपपद्यते– आत्मनो नित्यत्वेपि शरीराद्युपघातेन पातकसंभवादित्यर्थः । ननु सत्त्वोच्छेदः= आत्मविनाश एव हिंसा किं न स्यात् ? इत्याशङ्क्यात्मविनाशपक्षे कृतहान्यकृताभ्यागमदोषमाह– यस्येति, यस्य मते इत्यर्थः । हिंसाया द्वैविध्यमेव संभवतीत्याह– एतावदिति, एतत्= हिंसास्वरूपं एतावत्= विवक्षितद्विप्रकारमेव स्यात्= संभवतीत्यर्थः । द्वैविध्यमाह– सत्त्वेति, सत्त्वोच्छेदः= आत्मविनाशो हिंसेति एकः कल्पः, अनुच्छित्तिधर्मकस्य= अविनाशिनः सत्त्वस्य= आत्मनः कार्याश्रयकर्तृवधः= देहेन्द्रियोपघातो हिंसेति द्वितीयः कल्पः. एतत्कल्पद्वयादन्यत्कल्पान्तरं हिंसाया नास्तीत्यन्वयः । एतादृशकल्पद्वये आत्मोच्छेदकल्पस्तु प्रतिषिद्ध एव– असंभवात्, आत्मोच्छेदपक्षे कृतहान्यकृताभ्यागमदोषप्रसङ्गादित्याह– सत्त्वोच्छेदश्चेति । शेषकल्पं जिज्ञासते– तत्रेति, तत्र= आत्मोच्छेदकल्पे प्रतिषिद्धे सतीत्यर्थः । शेषकल्पमाह– यथेति, हिंसाया यथाभूतम्= वास्तविकं यत्स्वरूपं शरीराद्युपघातलक्षणं तदेव शिष्टं तदेव च संभवतीति न नित्यात्मपक्षे पातकाभावापत्तिः, उक्तलक्षणाया हिंसायाः संभवात्, आत्मविनाशस्तु न संभवतीत्यर्थः ।

कर्मधारयसमासमाश्रित्य सूत्रस्य वर्णकान्तरमाह– अथ वेति, नित्यस्यात्मनो देहेन्द्रियबुद्धिसंघात एव कार्याश्रयः यतः सुखदुःखसंवेदनलक्षणं कार्यं तत्र= देहादिसंघाते भवति तत्= उक्तसंघात एव तस्य= सुखादिसंवेदनस्याधिष्ठानम्= आश्रयः= तदायतनम्= सुखादिभोगस्थानं भवति– शरीरं विना सुखादिभोगाऽसंभवादिति ततः= संघातादन्यत् सुखादिभोगाश्रयो न भवतीति सः कार्याश्रयः= संघात एव कर्तेति सूत्रे कर्मधारयसमास इत्यन्वयः । उक्ते हेतुमाह– तन्निमित्तेति, कर्तृपदं च साधनपरमिति तन्निमित्ता= देहादिसंघातनिमित्तैव सुखादिभोगस्य निर्वृत्तिः= सिद्धिर्भवति न तम्= संघातं विनेति संघात एव कर्तेति सिद्धं, तस्य= सुखादिभोगसाधनीभूतस्य संघातस्य यो वधः= उपघातः= पीडा किं वा प्रमापणम्= विनाशः स एव हिंसापदार्थो न त्वात्मोच्छेदो हिंसा– आत्मनो नित्यत्वेनोच्छेदासंभवा-

इतश्च देहादिव्यतिरिक्त आत्मा—

## सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसंधिज्ञानं प्रत्यभिज्ञानम्– 'तमेवैतर्हि पश्यामि यमज्ञासिषम्' 'स एवायमर्थः' इति, सव्येन चक्षुषा दृष्टस्येतरेणापि चक्षुषा प्रत्यभिज्ञानात्– 'यमद्राक्षं तमेवैतर्हि पश्यामि' इति। इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानानुपपत्तिः, अस्ति त्विदं प्रत्यभिज्ञानं तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ॥ ७ ॥

## न– एकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥

एकमिदं चक्षुः मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतः मध्यव्यवहितस्य दीर्घस्येव ॥ ८ ॥

---

दित्यन्वयः, तथा च नित्यात्मपक्षेपि शरीरादीनामुक्तलक्षणहिंसायाः संभवात् तत्फलभोगस्य च नित्यात्मनः संभवात् पातकाभावापत्तिर्नास्तीत्याशयेनोपसंहरति– तत्रेति, तत्र= नित्यात्मपक्षे हिंसास्वरूपे हिंसाफलभोगे पातके च सिद्धे पातकभावप्रसञ्जनार्थं यत् "तदभावः" इत्यादिपूर्वसूत्रमुक्तम् एतत्= तन्न युक्तमित्यन्वयः ॥ ६ ॥

॥ इत्यात्मनः संघातातिरिक्तत्वव्यवस्थापनं समाप्तम् ॥

---

अग्रिमसूत्रमवतारयति– इतश्चेति, इतः= सूत्रोक्तहेतोः। आत्मन इन्द्रियातिरिक्तत्वव्यवस्थापनमारभते– सव्येति, "वामं शरीरं सव्यं स्यात्" इत्यमरः, सव्येन= वामेन चक्षुषा दृष्टस्य इतरेण= दक्षिणेन चक्षुषा प्रत्यभिज्ञानाद् ज्ञायते– आत्मा इन्द्रियातिरिक्त एवेति. यदि इन्द्रियमेवात्मा स्यात्तदा वामेन दृष्टस्य दक्षिणेन प्रत्यभिज्ञा न स्यात्– अन्येन दृष्टस्यान्येन प्रत्यभिज्ञानासंभवादित्यात्मा इन्द्रियातिरिक्त एव नित्यस्तस्य च वामेन दृष्टस्यापि दक्षिणेन प्रत्यभिज्ञा नानुपपन्नेति सूत्रार्थः। व्याचष्टे– पूर्वेति, पूर्वापरयोः= पूर्वोत्तरयोर्ज्ञानयोरेकविषये= विषयैक्ये सति एकविषयविषयकं यद् बाह्येन्द्रियजन्यं प्रतिसंधिज्ञानम्= उभयसंबद्धं ज्ञानम्= तत्तेदन्ताविषयकं ज्ञानं तत् प्रत्यभिज्ञानमित्युच्यते यथा– 'सोयं देवदत्तः' इति. इत्यन्वयः, उदाहरति– तमिति। उदाहरणान्तरमाह– स इति, अर्थः= चैत्रादिः। सूत्रार्थमाह– सव्येनेति, इतरेण= दक्षिणेन। पुनरुदाहरति– यमिति, भवतीतिशेषः। इन्द्रियात्मपक्षे बाधकमाह– इन्द्रियेति, इन्द्रियात्मपक्षे सर्वेषामेवेन्द्रियाणां पृथक् पृथगेव चैतन्यम्= आत्मत्वं स्यात्तथा च वामचक्षुर्लक्षणेनात्मना दृष्टस्य चैत्रादेर्दक्षिणचक्षुर्लक्षणात्मनः प्रत्यभिज्ञा नोपपद्यते यतोऽन्यदृष्टमन्यो न प्रत्यभिजानाति. अस्ति चेदम्= वामेन दृष्टस्यापि दक्षिणेन प्रत्यभिज्ञानमिति तदुपपत्त्यर्थमिन्द्रियव्यतिरिक्त एव नित्य आत्मा स्वीकार्य इत्याह– तस्मादिति ॥ ७ ॥

पूर्वपक्षी नेत्रद्वित्वं निराकरोति– नेति, न द्वे नेत्रे किं त्वेकमेव नेत्रं तस्मिन्नेकस्मिन्नेव नेत्रे नासास्थिव्यवहिते= नासास्थिव्यवधानेन द्वित्वाभिमानात्= द्वे नेत्रे इति द्वित्वभ्रमो भवति यथैकस्मिन्नेव तडागे मध्ये सेतुव्यवधानेन द्वित्वभ्रमो भवति तथा तथा च सव्यगोलकनिष्ठनेत्रदृष्टस्य दक्षिणगोलकनिष्ठनेत्रेण प्रत्यभिज्ञा नानुपपन्ना– गोलकद्वित्वेप्यात्मभूतस्य चक्षुरिन्द्रियस्यैक्याद् अन्यथा ज्ञानेन्द्रियाणां पञ्चत्वं बाधितं स्यादिति नेन्द्रियातिरिक्तात्मनः स्वीकारापेक्षेति सूत्रार्थः। व्याचष्टे– एकमिदमिति, नासास्थिना मध्ये व्यवहितम्, तस्य= चक्षुषः अन्तौ= गोलकलक्षणौ भागौ किं वा व्यवच्छेदौ गृह्यमाणौ चक्षुषि द्वित्वाभिमानस्य= द्वित्वभ्रमस्य प्रयोजकौ भवतः यथा दीर्घस्य= लम्बायमानस्य वंशादेर्मध्ये व्यवधानेन द्वित्वभ्रमो भवति तथा तथा चैकमेव चक्षुरिति न तस्य प्रत्यभिज्ञानुपपत्तिरिति नेन्द्रियातिरिक्त आत्मा स्वीकार्य इत्यर्थः ॥ ८ ॥

## एकविनाशे द्वितीयाऽविनाशाद् नैकत्वम् ॥ ९ ॥

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गं तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ९ ॥

## अवयवनाशेप्यऽवयव्युपलब्धेरहेतुः ॥ १० ॥

"एकविनाशे द्वितीयाविनाशात्" इत्यहेतुः, कस्मात् ?. वृक्षस्य हि कासु चिच्छाखासु च्छिन्नासूपलभ्यते एव वृक्षः ॥ १० ॥

## दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

न कारणद्रव्यविभागे कार्यद्रव्यमवतिष्ठते- नित्यत्वप्रसङ्गात्, बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः येषां कारणान्यऽविभक्तानि तान्यऽवतिष्ठन्ते ।

सिद्धान्ती नेत्रद्वित्वं समाचष्टे- एकेति, एकस्य चक्षुषो विनाशेऽपि द्वितीयस्याऽविनाशात्= सत्त्वदर्शनाद् चक्षुष एकत्वं नोपपद्यते, यद्येकमेव चक्षुः स्यात् तदा तस्य विनाशे जाते द्वितीयं चक्षुर्नोपलभ्येत, यदा च द्वे चक्षुषी तदैकस्य विनाशेपि द्वितीयसत्त्वमुपपद्यते तथा च सिद्धं नेत्रद्वित्वं तत्र सव्यदृष्टस्य दक्षिणेन प्रत्यभिज्ञानादुक्तरीत्याऽऽत्मा इन्द्रियातिरिक्त एव. इन्द्रियाणां पञ्चत्वं च जात्यभिप्रायेण विज्ञेयमिति सूत्रार्थः । व्याचष्टे- एकस्मिन्निति, द्वितीयं चक्षुः, विषयग्रहणमेव लिङ्गम्= साधकं यस्य तद् विषयग्रहणलिङ्गं चक्षुः, एकस्मिन्नष्टेपि नेत्रे रूपज्ञानं जायते तेन ज्ञानेन ज्ञायते- अस्ति द्वितीयं नेत्रमिति. यद्येकमेव नेत्रं स्यात्तदा काणस्य रूपज्ञानं न स्यात् न चैवमस्तीति नेत्रद्वित्वं सिद्धं तथा चैकस्य नेत्रस्य नासाव्यवधानेन यो द्वित्वभ्रम उक्तः स नोपपद्यते- नेत्रद्वित्वस्य वास्तविकत्वादित्याह- तस्मादिति, एकस्य नेत्रस्येत्यर्थः । पर्यवसितं चोक्तमेव ॥ ९ ॥

उक्तं पूर्वपक्षी प्रत्याचष्टे- अवयवेति, शाखादिलक्षणावयवस्य नाशेपि यथाऽवयवी वृक्ष उपलभ्यते तथाऽवयवभूतस्यैकगोलकनिष्ठस्य नेत्रावयवस्य नाशेप्यवयविनो नेत्रस्य सत्त्वसंभवाद् रूपज्ञानं काणस्य नानुपपन्नमिति पूर्वसूत्रे नेत्रद्वित्वसाधनार्थं यो हेतुरुक्तः सोऽहेतुः= नेत्रद्वित्वसाधको न भवतीति नेत्रैक्यं प्राप्तं तथा चोक्ता प्रत्यभिज्ञा नेत्रस्य नानुपपन्नेति नेन्द्रियातिरिक्त आत्मा स्वीकार्य इति सूत्रार्थः । व्याचष्टे- एकेति, अयं हि पूर्वोक्तसूत्रस्यानुवादः । उक्तहेतोरहेतुत्वं जिज्ञासते- कस्मादिति । उत्तरमाह- वृक्षस्येति, दृष्टान्तभागोयम् । तथा चैकस्यावयवस्य विनाशेपि अवयविनो नेत्रस्य सत्त्वं नानुपपन्नमिति नैकगोलकनिष्ठभागविनाशेपि काणस्य रूपज्ञानानुपपत्तिरिति नेत्रैक्यं सिद्धं तेन प्रत्यभिज्ञानं सिद्धं तेनेन्द्रियस्यात्मत्वमपि सिद्धमित्यर्थः ॥ १० ॥

उक्तं सिद्धान्ती प्रत्याचष्टे- दृष्टान्तेति, अवयवनाशेनाऽवयविनाशस्यावश्यकत्वेन दृष्टान्ते शाखानाशेन वृक्षनाशः स्वीक्रियते इति दृष्टान्तविरोधस्तस्माद् नेत्रावयवनाशेपि नेत्रनाश आवश्यक एवेति यो नेत्रद्वित्वस्य प्रतिषेध उक्तः स प्रतिषेधो न युक्तः, किं वा वृक्षस्य बहवः खल्ववयवास्तेषु केषांचिदवयवानां नाशेपि वृक्षसत्त्वं नानुपपन्नं प्रकृते च यथा घटस्य कपाललक्षणौ द्वावेवावयवावित्येककपालनाशे घटनाश आवश्यकस्तथा नेत्रस्यापि गोलकानुसारेण द्वावेवावयवाविति वक्तव्यं तत्रैकस्यावयवस्य नाशेऽवयविनो नेत्रस्य सत्त्वं नोपपद्यते इति दृष्टान्तविरोध इत्युक्तप्रतिषेधेन नेत्रैक्यं न सिध्यति तथा चोक्तप्रत्यभिज्ञाया उपपत्त्यर्थमिन्द्रियातिरिक्तो नित्य आत्मा स्वीकार्य इति सूत्रार्थः। व्याचष्टे- नेति, कारणद्रव्याणाम्= अवयवानां विभागे= विनाशे कार्यद्रव्यं नावतिष्ठते यद्यवतिष्ठेत तदा नित्यमेवस्यात्- विनाशस्य कारणान्तरासंभवादित्यन्वयः, अन्यथा नित्यत्वप्रसङ्गादितियोजना । उपपादयति-

अथ वा दृश्यमानार्थविरोधो दृष्टान्तविरोधः– मृतस्य हि शिरःकपाले द्वावऽवटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतद् एकस्मिन् नासास्थिव्यवहिते संभवति, अथ चैकविनाशस्याऽनियमाद् द्वाविमावऽर्थौ. तौ च पृथगावरणोपघातौ अनुमीयेते– विभिन्नाविति। अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसंनिकर्षस्य भेदाद् दृश्यभेद इव गृह्यते तच्चैकत्वे विरुध्यते, अवपीडननिवृत्तौ चाभिन्नप्रतिसंधानमिति, तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ११ ॥

अनुमीयते चायं देहादिसंघातव्यतिरिक्तश्चेतन इति—

## इन्द्रियान्तरविकारात् ॥ १२ ॥

---

बहुष्विति, बहुष्ववयविषु मध्ये इत्यन्वयः, यस्य अवयविनः। येषामवयविनाम्! तथा चावयवनाशेऽवयविनाश आवश्यक इत्यवयवनाशेऽवयविनो नेत्रस्यापि नाश आवश्यकस्तथा च काणस्य रूपज्ञानं न स्यादेव न चैवमस्तीति नेत्रद्वित्वं स्वीकार्यं तथा च काणस्यैकचक्षुर्नाशेपि द्वितीयेन चक्षुषा रूपग्रहणं नानुपपन्नं. तत्रैकदृष्टस्य द्वितीयेन प्रत्यभिज्ञानुपपत्त्या इन्द्रियातिरिक्त एवात्मा स्वीकार्य इत्यर्थः।

सूत्रस्य वर्णकान्तरमाह– अथ वेति; अत्र पक्षे दृष्टान्तशब्दः प्रत्यक्षपदार्थपरस्तदाह– दृश्येति। उक्तमुपपादयति– मृतस्येति, शिरःकपाले= मस्तकास्थिनि, अवटौ= गर्तौ, स्थाने= स्थानभूतौ, भेदेन= भिन्नौ, प्रत्यक्षेण गृह्येते इत्यन्वयः, तथा च मस्तकस्थनेत्रस्थानद्वित्वान्नेत्रद्वित्वं सिद्धमित्यर्थः। व्यवच्छेद्यमाह– न चेति, एतत्= स्थानद्वित्वम्, यद्येकमेव चक्षुः स्यात्तस्य च नासास्थिव्यवधानेन द्वित्वं भ्रान्त्या प्रतीयेत तदा तस्यैकस्य स्थानद्वित्वं न स्यादित्यर्थः। नेत्रद्वित्वे उपपत्त्यन्तरमाह– अथेति, एकविनाशस्य= सव्यस्यैव वा दक्षिणस्यैव वा विनाशो भवतीति नियमो नास्ति किं वा एकविनाशस्य नाम सर्वथा नेत्रविनाशस्य नियमो नास्ति– काणस्यैकमात्रनेत्रदर्शनादित्यर्थः तस्मादनियमादनुमीयते– इमावर्थौ= नेत्रपदार्थौ पृथगावरणोपघातौ परस्परं भिन्नौ द्वावेवेति, पृथग् आवरणौ उपघातौ ययोस्तौ पृथगावरणोपघातौ, आवरणौ= नेत्रपटलौ। अत्र– "एकत्वे चक्षुषो विनाशनियमो न स्यात्– सव्यस्यैव चक्षुषो न दक्षिणस्येति, एकत्वात् सव्यविनाशे दक्षिणस्यापि नाशप्रसङ्गात्, दृश्यते चायं नियमस्तस्माद् द्वावर्थौ पृथगावरणौ पृथगुपघातौ चेति" इति तात्पर्यटीका। एकस्य नेत्रस्यावरणोपघाताभ्यां द्वितीयस्यावरणोपघातौ न भवतस्तदेतदेकत्वे नोपपद्यते इति नेत्रद्वित्वं सिद्धमित्यर्थः। "एकविनाशस्य" इत्यत्र 'द्वितीयविनाशस्य' इति वक्तव्यमासीत्। नेत्रद्वित्वे उपपत्त्यन्तरमाह– अवपीडनेति, नेत्रस्याङ्गुल्यग्रेणावपीडने कृते नेत्ररश्मेः चन्द्रादिविषयस्य च यः संनिकर्षस्तस्य भेदात्= द्वित्वात् दृश्यभेद इव= चन्द्रादिद्वित्वं गृह्यते तदेतद् नेत्रैकत्वे विरुध्यते= नेत्रैकत्वे हि रश्म्येकत्वं तेन संयोगैकत्वं स्यात् तेन विषयस्यैकस्यैकत्वमेव गृह्येत न चैवमस्तीति चक्षुर्भेदाद्रश्मिभेदस्तेन संयोगभेदस्तेन ज्ञानभेद इति 'द्वौ चन्द्रौ' इत्यादिज्ञानं नेत्रद्वित्वे संभवति तत्रावपीडनाद् नेत्रयो रश्मिद्वयं पृथक् पृथगेव विषयं गृह्णातीति। अवपीडननिवृत्तौ च रश्मिद्वयस्यापि परस्परं संयोगादभिन्नप्रतिसंधानम्= एकत्वज्ञानं जायते। न च नेत्रद्वित्वे पदार्थमात्रस्य द्विधा भानं स्यात्– द्वाभ्यामपि नेत्राभ्यां पृथक् पृथगेव पदार्थग्रहणादिति वाच्यम्– द्वयोरपि नेत्रयो रश्मीनामसति प्रतिबन्धके संभूय एव पदार्थेन संयुज्यमानत्वात्। किं च नेत्रैकत्वे काणत्वं न स्यात्– एकनेत्रविनाशे सत्यऽपरनेत्रवत्त्वं हि काणत्वमिति प्रत्यक्षमेव। उपसंहरति– तस्मादिति, तथा च नेत्रद्वित्वे सिद्धे यत्पूर्वमेकस्यैव नेत्रस्य नासास्थिव्यवधानेन द्वित्वभ्रम उक्तः स नोपपद्यते– नेत्रद्वित्वस्य वास्तविकत्वादित्यर्थः। एकस्य नेत्रस्य ॥ ११ ॥

अग्रिमसूत्रमवतारयति– अनुमीयते इति, अयं चेतनो देहादिसंघातव्यतिरिक्तः– इन्द्रियान्तरविकारादित्यनुमीयते इत्यन्वयः। इन्द्रियान्तरेति– आम्रादौ फले दृष्टे तद्रसस्मृत्या इन्द्रियान्तरस्य– रसनेन्द्रियस्य मुखे जलवृद्धिलक्षणो विकारो जायते तस्मादपि विकाराद्विज्ञायते इन्द्रियातिरिक्त एवा-

कस्य चिदम्लफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केन चिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारो रसानुस्मृतौ रसगर्धिप्रवर्तितो दन्तोदकसंप्लवभूतो गृह्यते तस्येन्द्रियचैतन्येऽनुपपत्तिः– नान्यदृष्टमन्यः स्मरति ॥ १२ ॥

न– स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥

स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते, तस्याः स्मर्तव्यो विषयः तत्कृत इन्द्रियान्तरविकारो नात्मकृत इति ॥ १३ ॥

तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

---

ऽऽत्मेति. तत्र संघातातिरिक्तात्मपक्षे फलज्ञानवत आत्मनः फलज्ञानेन तद्रसस्मृतेः संभवात् तद्रसस्मृत्या च रसनेन्द्रियविकारसंभवात्, यदि चेन्द्रियमेवात्मा स्यात्तदा येन चक्षुषा फलं दृष्टं तेन तु तद्रसो नानुभूत इति न चक्षुषो रसस्मृतिः संभवति. यस्य च रसनेन्द्रियस्य रसस्मृतिर्वक्तव्या तेन फलं न दृष्टमिति कथं तस्य रसस्मृतिः स्यात्. भवति च रसस्मृतिरिति ज्ञायते इन्द्रियादिव्यतिरिक्त एवात्मा– कार्यकारणभूतयोः स्मृत्यनुभवयोः सामानाधिकरण्यनियमादिति सूत्रार्थः। अत्र– "इन्द्रियान्तरविकारेण तत्कारणीभूताऽनुमीयमाना स्मृतिरात्मानमनुमापयतीति विकारस्यात्माऽवृत्तित्वेऽपि नानुपपत्तिरिति बोध्यम्" इति श्रीगुरुचरणाः। व्याचष्टे– कस्येति, गृहीतं तद्रसेन साहचर्यं यस्य तस्मिन् गृहीततद्रससाहचर्ये रूपे गन्धे वा चक्षुरादिना गृह्यमाणे सति रसानुस्मृतौ= तत्फलस्य रसस्मृतौ जातायां इन्द्रियान्तरस्य रसनस्य रसगर्धिप्रवर्तितः= रसाभिलाषिणा चेतनेन प्रवर्तितो दन्तोदकसंप्लवभूतः= दन्तेषूदकसंचारलक्षणो विकारो गृह्यते तस्य विकारस्येन्द्रियचैतन्येऽनुपपत्तिः– यतोऽन्यदृष्टमन्यो न स्मरतीति नियमोऽस्ति, अत्र च चक्षुषा फले दृष्टे रसनेन्द्रियस्य तद्रसस्मृतिर्न संभवति येन तस्य विकारः स्यात् चक्षुषश्च न रसस्मृतिः संभवति– रसाऽग्राहकत्वादित्यनुपपत्तिः। इन्द्रियातिरिक्तात्मपक्षे तु स आत्मा रूपरसादिसर्वग्राहक इति तस्य रूपदर्शनेन तत्सहचरितरसादीनां स्मृतिः संभवति स्मृत्या चेच्छा जायते इच्छया चोक्तविकार उत्पद्यते इत्युपपद्यते इत्यन्वयः स्पष्टमन्यत्। अम्लरसस्मृत्या चायं विकारो विशेष उत्पद्यते इत्यभिप्रायेणोक्तम्– अम्लफलस्येति ॥ १२ ॥

उक्तं पूर्वपक्षी निराकरोति– नेति, स्मृतिः स्मर्तव्यविषया भवतीति रसस्मृतिरपि रसविषया संभवति नात्मविषयेति कथं रसस्मृत्या इन्द्रियातिरिक्त आत्मा सिध्येदिति सूत्रार्थः, पूर्वं रसनेन्द्रियेण तद्रसस्यानुभूतत्वादेतादृशकाले रसनेन्द्रियस्य रसस्मृतिर्नानुपपन्ना– गगननिष्ठेनापि चन्द्रेण नायकनिष्ठस्य प्रियावदनविषयकसंस्कारस्योद्बोधवत् चक्षुरादीन्द्रियान्तरनिष्ठेनाप्युद्बोधकेन रूपादिदर्शनेन रसनादीन्द्रियान्तरनिष्ठसंस्कारस्योद्बोधसंभवादित्याशयः। व्याचष्टे– स्मृतिरिति, निमित्तात्= संस्कारात्, तस्याः= स्मृतेर्थः स्मृतिविषयीभूतो रसः स एव विषयो न त्वात्मापि, तत्कृतः= स्मर्यमाणरसकृत एवोक्तो रसनेन्द्रियविकारो न त्वात्मकृतो येन तद्विकारादात्मा सिध्येदित्यन्वयः ॥ १३ ॥

उक्तं सिद्धान्ती प्रत्याचष्टे– तदात्मेति, तत्= तस्याः= रसादिस्मृतेरात्मगुणत्वे सति आत्मगुणत्वेन वा सद्भावात्= सत्त्वसंभवाद् य इन्द्रियातिरिक्तात्मप्रतिषेध उक्तः स नोपपद्यते इत्यन्वयः, 'अहं स्मरामि' 'रसादिविषयकस्मृतिमानहम्' इत्यादिज्ञानेन स्मृतेरात्मधर्मत्वं सिद्धमेवेति रसस्मृतिरप्यात्मधर्म एवेति रसस्मृत्या तदाधार आत्मा सिद्ध एव तत्रापि चक्षुषा फलस्य दर्शनेन रसनेन्द्रियस्य रसस्मृतिर्नोपपद्यते भवति च फलस्य रूपदर्शनेनापि रसस्मृतिरुक्तविकारगम्येति· इन्द्रियातिरिक्त आत्मा स्वीकार्यः तस्य च रूपरसादिसर्वग्राहकत्वाद्रूपदर्शनेनापि रसस्मृतिर्नानुपपन्नेति, आत्मा इन्द्रियाद्यतिरिक्त एव नित्यः स्वीकार्य इति सूत्रार्थः। अत्र 'तस्या आत्मगुणभावादप्रतिषेधः' इत्येवं सूत्रं पठनीयमासीत्, तस्याः= स्मृतेरात्म-

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः= यदि स्मृतिरात्मगुणः एवं सति स्मृतिरुपपद्यते- नान्यदृष्टमन्यः स्मरतीति। इन्द्रियचैतन्ये तु नानाकर्तृकाणां विषयग्रहणानामप्रतिसंधानम्. प्रतिसंधाने वा विषयव्यवस्थानुपपत्तिः। एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति। एकस्याऽनेकार्थदर्शिनो दर्शनप्रतिसंधानात् स्मृतेरात्मगुणत्वे सति सद्भावः, विपर्यये चानुपपत्तिः, स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहाराः। आत्मलिङ्गमुदाहरणमात्रमिन्द्रियान्तरविकार इति ॥ १४ ॥

## अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥

गुणत्वात् तदाश्रयस्यात्मनः प्रतिषेधोऽनुपपन्न इत्यर्थः। व्याचष्टे- तस्या इति, तस्याः= स्मृतेः। तादृशस्मृतेराधारत्वेनात्मा स्वीकार्य इति नात्मप्रतिषेध उपपद्यते इत्यर्थः। उक्तं विशदयति- यदीति, एवम्= आत्मगुणत्वे सति। उक्ते हेतुमाह- नान्येति, यदीन्द्रियातिरिक्त आत्मा न स्यात्तदा रसनानुभूतस्य रसस्य चक्षुषः स्मृतिर्न संभवतीति फलदर्शनसमये रसस्मृतिर्न स्यादेव भवति च स्मृतिरिति ज्ञायते- इन्द्रियातिरिक्त एवात्मेति- तेन रसस्यानुभूतत्वाद्रूपदर्शनेन रससंस्कारे उद्बुद्धे रसस्मृतिर्जायते इत्युपपद्यते। इन्द्रियात्मपक्षे बाधकमाह- इन्द्रियेति, रसग्रहणं रसनकर्तृकमेव रूपग्रहणं चक्षुःकर्तृकमेवेत्येवं रसादिग्रहणं भिन्नभिन्नकर्तृकमेवेति प्रसिद्धमेव तत्र यदीन्द्रियाणामेवात्मत्वं स्यात्तदोक्तरीत्या फलस्य रूपदर्शनेन रसस्मृतिर्न स्यात्- चक्षुषा पूर्वं रसस्यागृहीतत्वात्न रसनस्य च स्मृतिकारणीभूतफलरूपज्ञानाभावादित्यर्थः। विपक्षे बाधकमाह- प्रतिसंधाने वेति, अन्यदृष्टमन्यो न स्मरतीति नियमोऽस्ति यद्युक्तस्थले चक्षुषो रसस्मृतिः स्वीक्रियते तदा चक्षुषा पूर्वं रसग्रहणमपि स्वीकार्यं तथा च रसो रसनग्राह्य एव न चक्षुर्ग्राह्य इत्यादिरूपा या विषयस्य व्यवस्था= नियमस्तदनुपपत्तिः प्राप्नेत्यर्थः। इन्द्रियातिरिक्तात्मपक्षे उपपत्तिमाह- एक इति, अस्मन्मते चेतनः= आत्मा एको नित्यश्च स चाऽनेकार्थदर्शी= रूपरसादिसर्वपदार्थग्राही भिन्ननिमित्तः= तस्यात्मनश्चक्षुरादीनीन्द्रियाणि परस्परं भिन्नान्येव निमित्तानि= रूपादिग्रहणकरणानि स चात्मा पूर्वदृष्टं पदार्थं स्मर्तुमर्हति नात्र काप्यनुपपत्तिः- यतः तस्य रूपदर्शनेनापि रसस्मृतिः संभवति तेन पूर्वं रसस्यानुभूतत्वादित्यन्वयः। स्मृतेरात्मगुणत्वमाह- एकस्येति, इन्द्रियातिरिक्तस्यैकस्यानेकार्थदर्शिन आत्मनो दर्शनं च प्रतिसंधानं चेति दर्शनप्रतिसंधानं तस्मात् विषयग्रहणस्य तेन विषयस्मरणस्य च संभवात्. एकस्यात्मनो दृष्टविषयकं स्मरणमुपपद्यते इत्यर्थः किं वा दर्शनप्रतिसंधानम्= ज्ञानविषयकं स्मरणमुपपद्यते इत्यर्थः- ज्ञानस्यापि स्मरणसंभवात् तत्र यदि स्मृतिरात्मगुणस्तदा स्मृतिसद्भाव उपपद्यते- आत्मना स्वदृष्टस्य स्मर्तुं शक्यत्वात्. विपर्यये= यदि च स्मृतिर्नात्मगुणस्तदा स्मृतिसद्भावो नोपपद्यते- एवं हि स्मृतेरिन्द्रियगुणत्वं वक्तव्यं तत्र फलस्य रूपदर्शनकाले रसस्मृतिर्न संभवति- अन्यदृष्टस्यान्येन स्मर्तुमशक्यत्वादित्युक्तमेवेत्यर्थः। ननु मा भवतु स्मृतिसद्भावः का हानिरित्याशङ्क्याह- स्मृत्याश्रया इति, यत्करोति जनस्तत् स्मृत्वैव करोति यथा पाकप्रकारं स्मृत्वा पाकं प्रवृद्धश्च पूर्वविचारितमित्यादि स्पष्टमेव, तत्र तत्र व्यवहारे स्मृतेः परामर्शाभावेपि सत्त्वं तु स्पष्टमेव। उपसंहरति- आत्मेति, इन्द्रियान्तरविकारलक्षणं यदात्मलिङ्गमुदाहृतं तद् उदाहरणमात्रम्= निदर्शनमात्रमेव- विस्तरभिया सर्वेषामात्मलिङ्गानां वक्तुमशक्यत्वादित्यर्थः ॥ १४ ॥

" न स्मृतेः " इति पूर्वपक्षे दोषान्तरमुद्भावयति- अपरीति, स्मृतिविषयस्य= स्मृतिविषयाणाम् अपरिसंख्यानात्= परिगणनामकृत्वैवोक्तम्- " न स्मृतेः स्मर्तव्यविषयत्वात् " इति. इत्यन्वयः, स्मृतेः स्मर्यमाणरसादिविषयकत्वं स्वीक्रियते न तु तन्मात्रविषयकत्वं यतो रसादिवद् रसाद्यनुभवस्य रसादिग्राहकस्यात्मनश्चापि स्मृतिविषयत्वं स्पष्टमेवास्ति तथा च स्मृतिविषयत्वादपि सिद्ध आत्मा, तत्रेन्द्रियाणां स्मृतेरसंभवस्योपपादितत्वादिन्द्रियातिरिक्त एवात्मा सिध्यति तथा चात्मादिलक्षणस्य स्मृतिविषयस्य परिसंख्यानमकृत्वैवोक्तम्- "न स्मृतेः" इतीति न तेनात्मप्रतिषेध उपपद्यते इति सूत्रार्थः। अनियमपरो

अपरिसंख्याय च स्मृतिविषयमिदमुच्यते– "न स्मृतेः स्मर्तव्यविषयत्वात्१३" इति, येयं स्मृतिरगृह्यमाणेऽर्थे– 'अज्ञासिषमहममुमर्थम् १' इति एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्. 'ज्ञातवानहममुमर्थम् २'.'असावर्थो मया ज्ञातः ३' 'अस्मिन्नर्थे मम ज्ञानमभूत् ४' इति. चतुर्विधमेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम्= सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयं च गृह्यते ।

अथ प्रत्यक्षेऽर्थे या स्मृतिस्तया त्रीणि ज्ञानानि एकस्मिन्नर्थे प्रतिसंधीयन्ते समानकर्तृकाणि न नानाकर्तृकाणि नाऽकर्तृकाणि, किं तर्हि ?. एककर्तृकाणि । 'अद्राक्षममुमर्थं यमेवैतर्हि पश्यामि' अद्राक्षमिति दर्शनं दर्शनसंविच्च– न खल्वसंविदिते स्वे दर्शने स्यादेतत्– अद्राक्षमिति. ते खल्वेते द्वे ज्ञाने. 'यमेवैतर्हि पश्यामि' इति तृतीयं ज्ञानम्. एवमेकोऽर्थस्त्रिभिर्ज्ञानै-

---

वाऽपरिसंख्यानशब्दो विज्ञेयः।व्याचष्टे– अपरिसंख्यायेति । स्वाभिप्रायमाह– येयमिति, अगृह्यमाणेऽर्थे= अप्रत्यक्षपदार्थविषया स्मृतिः।स्मृतिमुदाहरति– अज्ञासिषमिति, अज्ञासिषमहम्= पूर्वं ज्ञातवानहमित्यर्थः। स्मृतिविषयमाह– एतस्या इति, एतस्याः स्मृतेः स्वविषयकस्मृतिविषयत्वसंबन्धेन समानज्ञानविषयत्वसंबन्धेन वा ज्ञातृज्ञानाभ्यां विशिष्ट एव पूर्वज्ञातो रसादिपदार्थो विषयोऽस्ति न तु रसादिपदार्थमात्रं येन स्मृतेः स्मर्तव्यरसादिमात्रविषयकत्वं स्यादित्याक्षेपः, तत्राहमित्यनेनात्मनः अज्ञासिषमित्यनेन च धात्वर्थस्य ज्ञानस्य स्मृतिविषयत्वं प्राप्तं तथा चैतादृशस्मृतिविषयत्वेनाप्यात्मा सिद्ध इत्यर्थः, तदेतत्प्रतिपादनं प्रभाकरमुखेन विज्ञेयम्– तेनैव प्रत्येकं ज्ञानेष्वात्मनो विषयत्वस्वीकारात् । ज्ञातृप्रधानां स्मृतिमुदाहरति– ज्ञातवानिति, प्रथमान्तपदार्थस्य प्राधान्यादत्र ज्ञाता प्रधानः । विषयप्रधानां स्मृतिमुदाहरति– असाविति । ज्ञानप्रधानां स्मृतिमुदाहरति– अस्मिन्निति, अत्र ज्ञानमेव प्रथमान्तपदार्थः । संकलयति– चतुर्विधमिति, समानार्थम्= ज्ञातृज्ञानज्ञेयानां समानमेव प्रकाशकमित्यर्थः, उक्तपदं स्वयं व्याचष्टे– सर्वत्रेति, सर्वत्र= सर्वासु स्मृतिषु । गृह्यते= विषयो भवति । अत्र– "मानसानुव्यवसायजनितसंस्कारकारणासु चतसृष्वपि स्मृतिषु नार्थमात्रं विषयः अपि तु ज्ञानज्ञातृज्ञेयानि सर्वे एव विषयाः । चतुर्षु वाक्येषु एकत्र ज्ञानं क्रिया कारकाद् निष्कृष्टा यथा– 'अमुष्मिन् मम ज्ञानमभूत्' इति. अगृह्यमाणोऽप्यर्थः स्मृतिसंनिधापनात् 'अमुष्मिन्' इत्युच्यते । कारकादनिष्कृष्टाप्येकत्र पूर्वापरीभूतभावनाप्रधाना ज्ञानक्रिया गम्यते– 'अज्ञासिषमहममुमर्थम्' इति । अन्यत्र ज्ञानभावने कारकादनिष्कृष्टे कर्तृप्रधाने यथा– 'ज्ञातवानहममुमर्थम्' इति । अन्यत्र ज्ञानभावने कारकादनिष्कृष्टे कर्मप्रधाने यथा– 'असावर्थो मया ज्ञातः' इति । समानार्थमिति– ज्ञानज्ञेयज्ञातृप्रकाशनं समानमित्यर्थः ।" इति तात्पर्यटीका । कारकादनिष्कृष्टत्वं चात्र कारकविशेषणत्वं विज्ञेयम् ।

आत्मसत्त्वं प्रकारान्तरेणोपपादयति– अथेति, अथ= किं च प्रत्यक्षे= पूर्वमनुभूते पदार्थे या स्मृतिः= प्रत्यभिज्ञा जायते तया एकार्थविषयकाणि त्रीणि ज्ञानानि प्रतिसंधीयन्ते= विज्ञायन्ते= प्रकाश्यन्ते तानि च ज्ञानानि समानकर्तृकाणि= एकात्मकर्तृकाणि भवन्ति न तु नानाकर्तृकाणि येनेन्द्रियाणामात्मत्वं स्याद् न चाऽकर्तृकाणि वा येनात्मसिद्धिर्न स्यादित्यन्वयः । ज्ञानकर्तृसंख्यां जिज्ञासते– किमिति । उत्तरमाह– एकेति । उक्तानां त्रयाणामपि ज्ञानानां स्वरूपमाह– अद्राक्षमिति, अद्राक्षमित्यनेन भूतकालिकं रसादिपदार्थविषयकं यद् दर्शनं तदेकं ज्ञानम् दर्शनसंवित्= पदार्थदर्शनविषयकं यद् ज्ञानं भूतकालिकं तद् द्वितीयं ज्ञानम्, ननु पदार्थ एव भासते न तु पदार्थज्ञानमपीत्याशंक्य दर्शनसंवित्सन्नायां हेतुमाह– नेति, स्वे= स्मर्यमाणरसादिपदार्थविषयके दर्शने असंविदिते= अननुभूते 'अद्राक्षम्' इति प्रयोग एव नोपपद्यते– अनेन पदार्थविषयकदर्शनस्यापि विषयीकरणात्, सूक्ष्मदृष्ट्या हि दर्शनज्ञानमनुसंधेयम् । उक्तज्ञानद्वयं संकलयति– ते इति, एते= प्रदर्शिते । तृतीयं ज्ञानमाह– यमिति ।

युज्यमानो नाऽकर्तृको न नानाकर्तृकः, किं तर्हि ?. एककर्तृक इति, सोऽयं स्मृतिविषयोऽपरिसंख्यायमानो विद्यमानः प्रज्ञातोऽर्थः प्रतिषिध्यते– ' नास्त्यात्मा– स्मृतेः स्मर्तव्यविषयत्वात् ' इति । न चेदं स्मृतिमात्रं स्मर्तव्यमात्रविषयं वा, इदं खलु ज्ञानप्रतिसंधानवत् स्मृतिप्रतिसंधानम्। एकस्य सर्वविषयत्वात्= एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसंधत्ते– ' अमुमर्थं ज्ञास्यामि ' अमुमर्थं विजानामि ' ' अमुमर्थमज्ञासिषम् ' अमुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यति–' अज्ञासिषम् ' इति, एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसंधत्ते ।

संस्कारसंततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति, स नास्त्येकोपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत्. न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसंधानम्

ज्ञानत्रयं संकलयति– एवमिति, एकोर्थः= स्मर्यमाणोऽर्थः, प्रत्यभिज्ञायमानोऽर्थो वा, युज्यमानः= विषयीक्रियमाणः, तत्र प्रत्यभिज्ञायमानस्य पदार्थस्य पूर्वकालिकप्रत्यक्षविषयत्वम् एतत्कालिकप्रत्यक्षविषयत्वं च स्पष्टमेव. पूर्वकालिकप्रत्यक्षविशेषणत्वाच्च तादृशप्रत्यक्षविषयकज्ञानविषयत्वमपि विज्ञेयम्, किं वा तृतीयं ज्ञानमत्र स्मृतिरूपं विज्ञेयं तद्विषयत्वमपि पदार्थस्य स्पष्टमेवेत्यर्थः । एतेषां त्रयाणामपि ज्ञानानां कर्ता एक आत्मैवेति एतादृशज्ञानकर्तृत्वेनाप्यात्मा सिद्ध इत्याशयः, न चैतानि ज्ञानानि नानाकर्तृकाणि संभवन्ति– अन्येन दृष्टस्य अन्येन प्रत्यभिज्ञातुमशक्यत्वात् । ज्ञानक्रियाद्वारा च विषयस्यापि सकर्तृकत्वं विज्ञेयम् । सूत्रार्थमुपसंहरति– सोयमिति, स्मर्यमाणपदार्थ एव स्मृतिविषय इति परिसंख्या यस्य नास्ति सोऽपरिसंख्यायमानस्तदनेन ज्ञातृज्ञानयोरपि स्मृतिविषयत्वमुक्तम्, विद्यमानः= सन्नेव, प्रज्ञातः अर्थः= विषयः स्मृतिविषयः अर्थाद् आत्मा ' नास्त्यात्मा ' इत्यादिना प्रतिषिध्यते. सोयं प्रतिषेधः प्रत्यक्षविरुद्ध इत्यर्थः । तथा चोक्तरीत्या स्मृतिविषयत्वेनापि सिद्ध आत्मा. तस्येन्द्रियानतिरिक्तत्वे उक्त इन्द्रियान्तरविकारो नोपपद्यते इत्यात्मा इन्द्रियातिरिक्त एवेति सिद्धमित्याशयः । किं वा ' अपरिसंख्यायमानः ' इति सामान्यतः स्मृतिविषयस्य विशेषणं न त्वात्मविशेषणम्, किं वा ' अपरिसंख्यायमान इति ' इत्येवं व्याख्येयम् । ननु स्मृतेरप्रमाणत्वात् कथं स्मृत्याऽऽत्मा सिध्येत् पदार्थसिद्धेः प्रमाणाधीनत्वादित्याशङ्क्याह– न चेति, इदम्= ' अद्राक्षम् ' इत्याद्युदाहृतं ज्ञानं स्मृतिमात्रं न किं तु प्रत्यभिज्ञात्मकं न चापि स्मर्तव्यरसादिमात्रविषयकं येनात्मविषयकं न स्यात्. प्रत्यभिज्ञा च प्रमाणमेवेति तया सिद्ध आत्मेत्यर्थः । अत्र– " स्मृतिरिति प्रत्यभिज्ञानमाह– स्मृतिच्छायावाहित्वात् " इति तात्पर्यटीका । स्वाभिप्रायमाह– इदं, खल्विति, यथा ज्ञानस्य प्रतिसंधानम्= परामर्शो भवति तथैव स्मृतिप्रतिसंधानमपि भवतीति ' अद्राक्षम् ' इत्यादि उदाहृतं ज्ञानं स्मृतिप्रतिसंधानम्= प्रत्यभिज्ञानात्मकमेव न तु स्मृतिमात्रमित्यर्थः । ज्ञानप्रतिसंधानमाह– एकस्येति, एकोयमात्मा ज्ञाता सर्वविषयः= सर्वपदार्थग्राही स्वानि= स्वकर्तृकाणि ज्ञानानि प्रतिसंधत्ते– तस्यैकस्यात्मनः सर्वविषयत्वात्= सर्वपदार्थग्राहकत्वादित्यन्वयः, सर्वग्राहकत्वेन ज्ञानग्राहकत्वमपि सिद्धमित्यर्थः । ज्ञानप्रतिसंधानमुदाहरति– अमुमिति, अत्र ज्ञानपरामर्शः स्पष्ट एव, तदनेन वाक्यत्रयेण त्रैकालिकं ज्ञानप्रतिसंधानमुदाहृतम् । विलम्बेन जायमानं ज्ञानप्रतिसंधानमुदाहरति– अमुमर्थमिति, कंचिदर्थमित्यर्थः । उक्तं स्मृतिप्रतिसंधानेऽतिदिशति– एवमिति, त्रिकालविशिष्टाम्= त्रैकालिकाम्, सुस्मूर्षाविशिष्टाम्= स्मरणेच्छाविषयाम्, स्मरणेच्छां विना स्मृतिप्रतिसंधानानुपपत्तेरित्याशयः, अत्र 'स्मरामि ' 'स्मरिष्यामि ' ' अस्मार्षम् ' इत्युदाहरणानि विज्ञेयानि, ' अद्राक्षम् ' इत्यादिकं च प्रत्यभिज्ञोदाहरणं तत्रापि स्मृतिप्रतिसंधानं स्पष्टमेव तादृशप्रत्यभिज्ञायाः कर्तृत्वाद्विषयत्वाच्चात्मा पूर्वोक्तरीत्या सिद्ध इति प्रघट्टकार्थः । किं वा ' जानामि ' इत्यस्य ' ज्ञानवानहम् ' ' स्मरामि ' इत्यस्य च ' स्मृतिमानहम् ' इत्यर्थस्तथा च ज्ञानस्मृत्योराश्रयत्वेनात्मा सिद्ध इति भावः ।

बौद्धमते बाधकमाह– संस्कारेति, संस्कारशब्दोत्र क्षणिकविज्ञानपरः– पूर्वपूर्वसंस्काराणामुत्तरोत्तरं ज्ञानेषु संक्रमस्वीकारात् नीलादिधर्मवाचकशब्दानामपि धर्मिणि प्रयोगदर्शनादित्यनुसंधेयम् । यदि

अहं मम इति चोत्पद्यते देहान्तरवत्, अतोऽनुमीयते— अस्त्येकः सर्वविषयः ( यः ) प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसंधत्ते इति. यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसंधानं भवतीति ॥ १५ ॥

## न— आत्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥ १६ ॥

न देहादिसंघातव्यतिरिक्त आत्मा, कस्मात् ?. आत्मप्रतिपत्तिहेतूनां मनसि संभवात्= "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्[1]" इत्येवमादीनामाऽऽत्मप्रतिपादकानां हेतूनां मनसि संभवः— यतो मनो हि सर्वविषयमिति, तस्मान्न शरीरेन्द्रियमनोबुद्धिसंघातव्यतिरिक्त आत्मेति ॥१६॥

## ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥

---

ज्ञानसंतान एव सत्त्वम्= आत्मा तदा संतानावयवभूताः संस्काराः= ज्ञानानि क्षणिकत्वादेव ते मते उत्पद्योत्पद्य तिरोभवन्ति= विनश्यन्तीति सः= तादृशः एकोपि संस्कारः= ज्ञानं नास्ति य उदाहृतं त्रिकालविशिष्टं ज्ञानं स्मरणं चानुभवेत्= प्रतिसंदधीत, त्रिकालविशिष्टज्ञानादीनां प्रतिसंधानं हि स्थिरस्यात्मनः संभवति न तु क्षणिकानां ज्ञानानामित्यर्थः। उक्तानुभवासंभवे उपपत्तिमाह— न चेति, अहमिति= 'अज्ञासिषमहम्' इति, ममेति= 'मम ज्ञानमभूत्' इति, एतादृशं ज्ञानस्मृत्योः प्रतिसंधानमऽनुभवं विना नोत्पद्यते— प्रतिसंधानं प्रत्यनुभवस्य कारणत्वात्, यथा देहान्तरेणानुभूतस्य देहान्तरेण प्रतिसंधानं नोपपद्यते इति स्पष्टमेव तथा क्षणिकेषु विज्ञानेषु अन्येन ज्ञानेन दृष्टमन्येन ज्ञानेन स्मर्तुं न शक्यते. भवति च स्मृतिरिति ज्ञायते क्षणिकविज्ञानसंतानादन्य एव नित्य आत्मा, तदाह— अत इति, प्रतिदेहम्= स्वस्वदेहावच्छेदेन, प्रबन्धम्= संतानम्, तथा च नित्यस्यात्मनस्त्रैकालिकज्ञानादीनां प्रतिसंधानं नानुपपन्नमिति देहेन्द्रियज्ञानसंतानादिव्यतिरिक्तो नित्य एक आत्मा स्वीकार्यः सिद्धश्चेत्यर्थः। यस्यात्मनः देहान्तरेषु सत्त्वेपि स्वामित्वेन वृत्तेरभावादेव तत्रानुभूतपदार्थानां प्रतिसंधानं न भवतीत्याह— यस्येति, चैत्रेणानुभूतं मैत्रः स्मर्तुं न शक्नोति. तत्कस्य हेतोः ?. मैत्रात्मनः चैत्रदेहे स्वामित्वेन वृत्तेरभावादेवेत्येतादृशः स आत्मेति न तस्य प्रतिषेधो युक्त इत्यर्थः। यस्येत्यत्र तस्येतिवक्तव्यमासीत् ॥१५॥

॥ इत्याऽऽत्मन इन्द्रियादिव्यतिरिक्तत्वप्रतिपादनं समाप्तम् ॥

---

उक्तं पूर्वपक्षी निराकरोति— नेति, आत्मप्रतिपत्तिहेतूनाम्= आत्मसाधकानां प्रत्यभिज्ञादीनां हेतूनां मनस एकत्वेन तत्र संभवात् मन एवात्मा न तु मनोव्यतिरिक्तः कश्चिदात्मा, मनस्तु चक्षुरादीन्द्रियद्वारा रूपादिविषयाननुभवतीति कालान्तरे मनसः स्मृतिप्रत्यभिज्ञयोर्नानुपपत्तिः— मनसः स्थिरत्वादेकत्वाच्च, इन्द्रियान्तरविकारस्याप्यत्र पक्षे नानुपपत्तिः— मनसाऽनुभूतस्य फलरसस्य फलदर्शनेन संस्कारोद्बोधद्वारा स्मृतिसंभवात् स्मृत्या च रसभोगेच्छा तया च दन्तोदकसंप्लवभूतस्येन्द्रियान्तरविकारस्यापि संभवादिति मन एवात्मेति सूत्रार्थः। व्याचष्टे— नेति, देहेन्द्रियमनोबुद्धिवेदनासंघात एव देहादिसंघातस्तत्र च मनोप्यस्त्येवेत्युक्तम्— देहादीति । उक्ते हेतुं जिज्ञासते— कस्मादिति। उत्तरमाह— आत्मेति। उक्तं विशदयति— दर्शनेति, प्रथमसूत्रमिदम्, दर्शनेन= चक्षुषा स्पर्शनेन= त्वचा एकार्थग्रहणात्= 'यमद्राक्षं तं स्पृशामि' इत्यादिप्रत्यभिज्ञानादेव देहाद्यतिरिक्त आत्मा साधितस्तेषां हेतूनां मनसि संभवोस्ति— मनस एकत्वादित्यन्वयः। उक्ते हेतुमाह— यत इति, मनः सर्वविषयम्= सर्वार्थग्राहकमस्तीति पूर्वदृष्टस्य कालान्तरे स्मृत्यादिकं मनसो नानुपपन्नमिति मन एवात्मेत्यर्थः। उपसंहरति— तस्मादिति, मनस आत्मत्वे संघातस्यात्मत्वं प्राप्तमेव— मनसः संघातानतिरिक्तत्वादित्याशयः ॥ १६ ॥

पूर्वोक्तं सिद्धान्ती प्रत्याचष्टे— ज्ञातुरिति, आत्मनः सर्वार्थज्ञातुर्ज्ञानकरणान्यपेक्ष्यन्ते— ज्ञानकरणं विना ज्ञानक्रियाया असंभवात्तत्र यथा रूपादिज्ञानकरणं चक्षुरादि तथा मननसुखादिज्ञानकरणमप्य-

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते– 'चक्षुषा पश्यति' 'घ्राणेन जिघ्रति, 'स्पर्शनेन स्पृशति' एवं मन्तुः सर्वविषयस्य मतिसाधनमऽन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यते इति, एवं सति ज्ञातर्याऽऽत्मसंज्ञा न मृष्यते मनस्संज्ञाऽभ्यनुज्ञायते. मनसि च मनस्संज्ञा न मृष्यते मतिसाधनसंज्ञा मृष्यते, तदिदं संज्ञाभेदमात्रं नाऽर्थे विवाद इति। प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः= अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते– नास्तीति ? एवं रूपादिग्रहणसाधनान्यपि न सन्तीति सर्वेन्द्रियविलोपः प्रसज्यते इति ॥ १७ ॥

## नियमश्च निरनुमानः ॥ १८ ॥

योऽयं नियम इष्यते– रूपादिग्रहणसाधनान्यऽस्य सन्ति मतिसाधनं सर्वविषयं नास्तीति. अयं नियमो निरनुमानः– नात्रानुमानमस्ति येन नियमं प्रतिपद्यामहे इति। रूपा-

---

ऽपेक्ष्यते यदेव तत्करणं तदेव मया मन इत्युच्यते त्वया चात्मेति ज्ञातारं प्रति मनसो ज्ञानसाधनोपपत्तेः= मननादिज्ञानकरणत्वोपपत्तेः= मननाद्यान्तरज्ञानकरणत्वमावश्यकमेव तत्र त्वया मनसो यदात्मेति नाम कृतं तत् संज्ञाभेदमात्रं न तु पदार्थभेदः– मया स्वीकृतस्यैव मनसस्त्वयापि स्वीकृतत्वात्, मनोव्यतिरिक्तात्मनो यः प्रतिषेधः स तु विषयान्तरम्। किं वा मत्स्वीकृतस्यात्मनस्त्वया मन इति संज्ञा कृतेति संज्ञाभेदमात्रम्, आत्ममनसोरैक्यं तु नोपपद्यते– आत्मनो ज्ञातुश्चक्षुरादिवत् आन्तरज्ञानसाधनस्य मनसोऽवश्यापेक्षितत्वादिति सूत्रार्थः। सूत्रं स्वरूपेण तु कुटिलमेवेत्यनुसंधेयम्। व्याचष्टे– ज्ञातुरिति, स्पर्शनेन= त्वचा, चक्षुरादिनैवात्मनो रूपादिज्ञानं जायते इति रूपादिज्ञानेषु चक्षुरादीनां साधनत्वम्= करणत्वमुपपन्नम्– चक्षुरादिकं विनाऽन्धादे रूपादिज्ञानादर्शनादित्यन्वयः। प्रकृतमाह– एवमिति, यथा रूपादिज्ञानेषु चक्षुरादिकं करणं तथा मन्तुः= मननकर्तुः सर्वविषयस्य= सर्वविषयग्राहकस्यात्मनो मतिसाधनम्= मननकरणं सुखादिज्ञानकरणं च सर्वविषयम्= सर्वविषयग्राहकम् अन्तःकरणभूतं किमपि वस्तु विद्यते= अस्त्येव येनान्तःकरणभूतेनायमात्मा मन्यते= मननं करोति, तदभावे मननक्रिया न स्यादिति यदेवान्तःकरणभूतं वस्तु मया मन इत्युच्यते तदेव त्वयाऽऽत्मेत्युच्यते इति संज्ञाभेदमात्रमेवेत्यर्थः। पर्यवसितमाह– एवं सतीति, ज्ञातरि= आत्मनः आत्मेतिसंज्ञा न मृष्यते= न स्वीक्रियते मन इति संज्ञा चाभ्यनुज्ञायते= स्वीक्रियते. मनसश्च मन इति संज्ञा न मृष्यते मतिसाधनमितिसंज्ञा स्वीक्रियते इति संज्ञाभेदमात्रमेव न तु पदार्थस्यात्मनो मनसश्च स्वरूपे सत्तायां च विवाद इत्यन्वयः। विपक्षे बाधकमाह– प्रत्याख्याने इति, यदि मनः स्वरूपेणैव न स्वीक्रियते तथा च न संज्ञाभेदमात्रं तदा मनोवत् सर्वेषामपीन्द्रियाणां विलोपः= अभावः प्रसज्यते। उक्तं विशदयति– अथेति, यदि मननकर्तुः सर्वविषयग्राहकस्यात्मनो मननसाधनं सर्वविषयग्राहकमन्तःकरणं नास्तीत्येवं प्रत्याख्यायते तदा तथैव रूपादिग्रहणसाधनानि चक्षुरादीन्यपि न सन्तु= न स्वीकार्याणि– यथा मननादिज्ञानं विनैव करणं भविष्यति तथा रूपादिज्ञानमपि चक्षुरादिकरणं विनैव भविष्यतीति सर्वेन्द्रियविलोपः प्रसज्यते. न च चक्षुरादिकं विना रूपादिज्ञानं भवतीति यथा रूपादिज्ञानकरणं चक्षुरादिकं स्वीक्रियते तथाऽऽन्तरमननादिकरणमन्तःकरणमपि स्वीकार्यमेव तदेव मन इत्युच्यते, कर्तृकरणयोश्च भेदस्य स्पष्टत्वान्नात्ममनसोरैक्यं संभवतीति मनोव्यतिरिक्त एवात्मेत्यर्थः ॥ १७ ॥

विपक्षे बाधकमाह– नियम इति, रूपादिज्ञानकरणं चक्षुरादिकमस्ति आन्तरमननादिकरणमऽन्तःकरणं नास्तीति यो नियमः स निरनुमानः= निर्हेतुक एव– एतादृशनियमस्योपपादयितुमशक्यत्वादिति सूत्रार्थः। व्याचष्टे– योयमिति। नियमस्वरूपमाह– रूपादीति, अस्य= आत्मनः, मतिसाधनम्= मननादिसाधनमन्तःकरणम्। स्ववक्तव्यमाह– अयमिति। पर्यवसितमाह– नात्रेति, अत्र= उक्तनियमे, अनुमानम्= हेतुः। अन्तःकरणावश्यकतामुपपादयति– रूपादिभ्य इति, तदुपलब्धौ= सुखा-

दिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः, यथा चक्षुषा गन्धो न गृह्यते इति करणान्तरं घ्राणम् एवं चक्षुर्घ्राणाभ्यां रसो न गृह्यते इति करणान्तरं रसनम् एवं शेषेष्वपि. तथा चक्षुरादिभिः सुखादयो न गृह्यन्ते इति करणान्तरेण भवितव्यं तच्च ज्ञानाऽयौगपद्यलिङ्गम्, यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गम्= तस्येन्द्रियमिन्द्रियं प्रति संनिधेरसंनिधेर्न युगपत् ज्ञानान्युत्पद्यन्ते इति, तत्र यदुक्तम्– "आत्मप्रतिपत्तिहेतूनां मनसि संभवात् १६" इति तदयुक्तम् ॥ १८ ॥

किं पुनरयं देहादिसंघातादन्यो नित्यः ? उताऽनित्यः ? । कुतः संशयः ?, उभयथा दृष्टत्वात् संशयः– विद्यमानमुभयथा भवति नित्यमनित्यं च, प्रतिपादिते चात्मसद्भावे संशयाऽनिवृत्तेरिति । आत्मसद्भावहेतुभिरेवास्य प्राग्देहभेदादवस्थानं सिद्धम् ऊर्ध्वमपि देहभेदादवतिष्ठते । कुतः ?—

---

द्युपलब्धौ चक्षुराद्यपेक्षया करणान्तरस्याऽन्तःकरणस्य सद्भाव आवश्यक एवेत्यर्थः । उक्ते दृष्टान्तमाह– यथेति, गन्धग्रहणकरणं घ्राणं चक्षुरतिरिक्तं यथास्ति. यथा च रसज्ञानकरणं रसनमस्ति, शेषेषु रूपादिष्वप्येवमेव योज्यं यथा घ्राणादिना रूपग्रहणं न संभवतीति रूपज्ञानकरणं चक्षुः शब्दज्ञानकरणं श्रोत्रं स्पर्शज्ञानकरणं त्वगस्ति । प्रकृतमाह– तथेति, चक्षुरादीनां बाह्यानामान्तरसुखादिज्ञानेषु करणत्वाऽसंभवात् करणान्तरं चक्षुराद्यतिरिक्तं सुखादिज्ञानकरणमन्तःकरणं मनस्संज्ञकं स्वीकार्यमेवेत्यर्थः । तच्च मनो ज्ञानायौगपद्यं लिङ्गं यस्य तत् ज्ञानायौगपद्यलिङ्गम्, न केवलं सुखादिज्ञानानुपपत्त्यैव मनः स्वीक्रियते किं तु बाह्यरूपादिज्ञानानामयौगपद्यादपि स्वीक्रियते अन्यथा तदयौगपद्यानुपपत्तेरित्यर्थः । उक्तमेव विस्तरेणाह– यच्चेति । उक्तं व्याचष्टे– तस्येति, यदि सूक्ष्ममन्तःकरणं न स्यात्तदा विभोरात्मनः सर्वैरपीन्द्रियैः संयोगस्य सत्त्वादेव इन्द्रियाणामपि सर्वेषां स्वस्वविषयैरेकस्मिन् काले संयोगसंभवादेकस्मिन् काले रूपादीनां सर्वेषामपि ज्ञानं स्यात् न च भवतीति सूक्ष्ममन्तःकरणमनुमीयते तथा च तस्य= अन्तःकरणस्य मनसः सूक्ष्मत्वात् इन्द्रियमिन्द्रियं प्रति= एकस्मिन् क्षणे सर्वैरिन्द्रियैः सह संनिधेरसंनिधेः= संयोगसंबन्धाभावाद् युगपद् ज्ञानानि नोत्पद्यन्ते– आत्मनो मनोद्वारैव विषयग्राहकत्वकल्पनात्, इत्येव ज्ञानायौगपद्यं मनसो लिङ्गम्= अनुमापकमित्यर्थः । उपसंहरति– तत्रेति, तदेवं मनसोऽन्तःकरणत्वेन ज्ञानकर्तृत्वलक्षणमात्मत्वं नोपपद्यते इति आत्मप्रतिपत्तिहेतूनां प्रत्यभिज्ञानादीनां मनसि संभवाभावाद् यदुक्तम्– "आत्मप्रतिपत्तिहेतूनां मनसि संभवात्" इति तदयुक्तमेवेत्यन्वयः॥१८॥

॥ इत्याऽऽत्मनो मनोव्यतिरिक्तत्वव्यवस्थापनं समाप्तम् ॥

---

एवमात्मनो देहादिसंघातव्यतिरिक्तत्वमुपपाद्य नित्यत्वोपपादनमारभते– किमिति, अयम्= आत्मा । आत्मनि नित्यत्वानित्यत्वयोः संशयकारणं जिज्ञासते– कुत इति । उत्तरमाह– उभयथेति, किंचिन्नित्यमपि भवति किंचिदनित्यमपि भवतीति हेतोरेवात्मनि नित्यत्वानित्यत्वयोः संशयस्तदेवाह– विद्यमानमिति । स्वाभिप्रायमाह– प्रतिपादिते इति, आत्मसद्भावे प्रतिपादितेपि आत्मनित्यत्वानित्यत्वयोः संशयस्य निवृत्तेरसंभवात्. प्रत्युत सद्भावे सिद्धे नित्यत्वानित्यत्वयोः संशय उपतिष्ठते एवेत्यर्थः । सिद्धान्ती स्वसिद्धान्तमाह– आत्मेति, अस्य= आत्मनः, देहभेदात्= तत्तद्देहविशेषात्, ऊर्ध्वम्= अनन्तरमप्ययमात्माऽवतिष्ठते तथा च देहेभ्यः पूर्वोत्तरकालेषु सत्त्वेन नित्यत्वं सिद्धमित्याशयः, संघातारिक्तात्मनः सद्भावहेतुः पूर्वानुभूतस्य स्मरणादिकमेव तच्च स्मरणं पूर्वजन्मानुभूतस्यापि स्तन्यपानादिकस्य वक्ष्यमाणस्य भवत्येवेति तेनात्मनः पूर्वजन्मनि सिद्धे तद्वदेवोत्तरं जन्मापि संभवतीत्यनेकजन्मसंबन्धित्वे प्राप्ते अनेकजन्मानन्तरं विनाशे च कारणासंभवात् अनादिभावस्य नित्यत्वनियमाच्च

## पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥ १९ ॥

जातः खल्वयं कुमारोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्. ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा. स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति. पूर्वाभ्यासश्च पूर्वजन्मनि सति नान्यथा इति सिध्यत्येतत्- अवतिष्ठतेऽयमूर्ध्वम् ( प्राक् च ) शरीरभेदादिति ॥ १९ ॥

## पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः ॥ २० ॥

यथा पद्मादिष्वऽनित्येषु प्रबोधः संमीलनं ( च ) विकारो भवति. एवमनित्यस्यात्मनो हर्षभयशोकसंप्रतिपत्तिर्विकारः स्यात् ॥

हेत्वभावादयुक्तम्= अनेन हेतुना पद्मादिषु प्रबोधसंमीलनविकारवद् अनित्यस्यात्मनो हर्षादिसंप्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात् साध्यसाधनं हेतुर्न वैधर्म्यादस्ति, हेत्वभावात्- असंबद्धार्थकमपार्थकमुच्यते इति । दृष्टान्ताच्च हर्षादिनिमित्तस्याऽनिवृत्तिः= या चेयमासेवितेषु

---

नित्यत्वमात्मन आत्मसद्भावहेतुभिरेव सिद्धमित्यर्थः । आत्मनित्यत्वे विशेषरूपेण हेतुं जिज्ञासते- कुत इति । सूत्रेणोत्तरमाह- पूर्वेति, पूर्वाभ्यस्तानाम्= पूर्वजन्मन्यनुभूतानां हर्षादिहेतूनां स्तन्यपानादीनां स्मृत्यनुबन्धात्= स्मृत्यनुवृत्त्यैव जातस्य= जातमात्रस्य बालस्यात्र जन्मनि हर्षादिहेतुप्राप्तौ हर्षादीनां संप्रतिपत्तिः= उत्पत्तिः संभवति तादृशोत्पत्तेरेवात्मनो नित्यत्वं सिध्यति, जातमात्रबालेन स्तन्यलाभादेर्हर्षादिहेतुत्वमत्र तु नानुभूतं स्तन्यलाभादिना हर्षादिकं तु जातमात्रस्यापि भवत्येव तेन जातस्य पूर्वानुभूतस्मृतिरनुमीयते स्मृत्या च पूर्वजन्मनि स्तन्याद्यनुभवः प्राप्तस्तेन पूर्वजन्म सिद्धम् एवमेव पूर्वजन्मापेक्ष्यापि पूर्वपूर्वं जन्म सिद्धं तेनात्मनोऽनादित्वं सिद्धम् अनादिभावस्य नित्यत्वनियमाच्चाऽऽत्मनो नित्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे- जात इति, येषां पदार्थानां हर्षादिहेतुत्वमस्मिन् जन्मनि न गृहीतं तेष्वपि दृष्टेषु लिङ्गानुमेयान् हर्षादीन् प्रतिपद्यते= प्राप्नोतीत्यन्वयः, लिङ्गानुमेयं च पदार्थानां हर्षादिहेतुत्वमेव. किं वा बालस्य ये हर्षादयस्ते परेण चेष्टालक्षणलिङ्गेनानुमेयास्तानित्यर्थः । हर्षादिकारणमाह- ते चेति, ते= हर्षादयः । स्मृत्यनुबन्धकारणमाह- स्मृत्यनुबन्ध इति । पूर्वाभ्यासकारणमाह- पूर्वाभ्यास इति, पूर्वाभ्यासः= पूर्वानुभवः स च जातस्यात्र जन्मनि न संभवतीति पूर्वजन्म सिद्धम् । पर्यवसितमाह- सिध्यत्येतदिति । सिद्धमाह- अवतिष्ठते इति, अयम्= आत्मा, स्पष्टमन्यत् ॥ १९ ॥

आत्मनो नित्यत्वाभावेपि पूर्वपक्षी हर्षादिकं जातस्योपपादयति- पद्मादिष्विति, हर्षादयो हि विकारा एव तत्रानित्येष्वपि पद्मादिषु सामग्रीवशाद् यथा प्रबोधादयो विकारा भवन्ति तथैवानित्यस्यापि तत्= तस्यात्मनो हर्षादयो विकारा उपपद्यन्ते विकारविशिष्टस्य चानित्यत्वनियम इति नात्मा नित्य इति सूत्रार्थः । अत्र- " पद्मपत्रावयवविभागो विनश्यत्कार्यः प्रबोधः, पद्मपत्रावयवानामारब्धकार्याणां यत्पुनः परस्परेण प्राप्तयस्तत् संमीलनम् " इति वार्तिकम् । प्रफुल्लत्वं प्रबोधः, मुकलीभावश्च संमीलनमिति यावत् । व्याचष्टे- यथेति, संप्रतिपत्तिः= हर्षाद्युत्पत्तिः सा च विकार एवेति, स विकारोऽनित्यस्याप्यात्मन उपपद्यते इति न नित्य आत्मेत्यन्वयः ॥

उक्तपूर्वपक्षं प्रत्याचष्टे- हेत्वभावादिति, उक्तदृष्टान्तेनात्मनो यदनित्यत्वमुक्तं तदयुक्तम्- हेत्वभावात् । उक्तं विशदयति- अनेनेति, इति नात्रेति= इत्यत्र नेत्यन्वयः, हेतुः= कोपि हेतुरुदाहरणसाधर्म्यात्= अन्वयव्याप्त्या साध्यस्य= आत्मानित्यत्वस्य साधनम्= साधको नास्ति, वैधर्म्यात्= व्यतिरेकव्याप्त्यापि च साध्यसाधको हेतुर्नास्तीत्यन्वयः, हर्षादीनां विकारत्वे आत्मनश्चानित्यत्वे हेतुर्नास्तीत्याशयः । पर्यवसितमाह- हेत्वभावादिति, आत्मानित्यत्वे हेतोरभावात् " पद्मादिषु " इत्युक्तमसंब-

विषयेषु हर्षादिसंप्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसंमीलनदृष्टान्तेन न निवर्तते. यथा चेयं न निवर्तते तथा जातमात्रस्यापीति । क्रियाजातश्च पर्णविभागसंयोगः प्रबोधसंमीलने. क्रियाहेतुश्च क्रियानुमेयः, एवं च सति किं दृष्टान्तेन प्रतिषिध्यते ? ॥ २० ॥

अथ निर्निमित्तः पद्मादिषु प्रबोधसंमीलनविकार इति मतम् एवमात्मनोपि हर्षादिसंप्रतिपत्तिरिति ? तच्च—

## न– उष्णशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥

उष्णादिषु सत्सु भावाद् असत्स्वऽभावाद् तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसंमीलनविकारा इति न निर्निमित्ताः, एवं हर्षादयोपि विकारा निमित्ताद् भवितुमर्हन्ति न निमित्तमन्तरेण. न चान्यत् पूर्वाभ्यस्तस्मृत्यनुबन्धाद् निमित्तमस्तीति । न चोत्पत्तिनिरोधकारणानुमानमाऽऽत्मनः– अदृष्टान्तात् । न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः । नोष्णादिवद् निमित्तान्तरोपादानं हर्षादीनाम्, तस्मादयुक्तमेतत् ॥ २१ ॥

---

दृष्टार्थकमेव अत एवाऽपार्थकम्= मिथ्यार्थबोधकम् । स्वाभिप्रायमाह– दृष्टान्तादिति, यथा पद्मादिषु प्रबोधादेर्निमित्तमस्त्येव तथात्मनो हर्षादेरपि निमित्तं सिद्धमित्यर्थः, उक्तं व्याचष्टे– येति; या चेयमासेवितेषु= अनुभूतेषु विषयेषु तदनन्तरं तद्दर्शनेन हर्षादिसंप्रतिपत्तिः सा स्मृत्यनुबन्धकृतैवेति तस्याः कारणं सिद्धं हर्षादिसंप्रतिपत्तेरभावोपि न संभवति प्रत्यक्षत्वादित्यर्थः । पर्यवसितमाह– यथेति, यथा चेयं हर्षादिसंप्रतिपत्तिरस्मदादीनां स्मृत्यनुबन्धकृतैवेति न निवर्तते उक्तदृष्टान्तेन तथा जातमात्रस्यापि हर्षादिसंप्रतिपत्तिः स्मृत्यनुबन्धकृतैवेति न निवर्तते तत्र स्मृत्यनुबन्धेन पूर्वानुभवः प्राप्तस्तेन पूर्वजन्म प्राप्तं तेन चात्मनोऽनादित्वं तेन च नित्यत्वं सिद्धम्– अस्मिन् जन्मनि जातमात्रकर्तृकानुभवस्यासंभवादित्यर्थः । दृष्टान्ते प्रबोधादेर्निमित्तमाह– क्रियेति, क्रियाजातः= क्रियाजन्यः पर्णविभाग एव प्रबोधः पर्णसंयोगश्च संमीलनं तत्र प्रबोधादिकारणीभूतायाः क्रियायाश्च जलादिसंयोगो हेतुस्तादृशक्रिययैवानुमेयः– हेतुं विना क्रियाया असंभवात्, तथा च यथा प्रबोधादिकारणं सिद्धं तथा हर्षादिकारणमपि सिद्धं तच्च स्मृत्यनुबन्ध एवेत्युक्तरीत्या पूर्वजन्म सिद्धं तेनात्मनो नित्यत्वमपि सिद्धमिति नात्मनित्यत्वस्योक्तदृष्टान्तेन प्रतिषेध उपपद्यते इत्याक्षिपति– एवमिति, एवम्= हर्षादिकारणसिद्धयात्मनित्यत्वे सिद्धे सतीत्यर्थः ॥ २० ॥

अग्रिमसूत्रावतारार्थं निष्कारणकत्वपक्षमुत्थापयति– अथेति । प्रकृतमाह– एवमिति, पद्मादिषु प्रबोधादिवदात्मनोपि हर्षाद्युत्पत्तिर्निर्निमित्तेति यदि मतं तच्च न संभवतीति सूत्रघटकनकारेणान्वयः । हर्षादीनां निर्निमित्तत्वे आत्मनो नित्यत्वापत्तिर्नास्तीत्याशयः । नेति– पञ्चात्मकविकाराणाम्= पाञ्चभौतिकपदार्थविकाराणां प्रबोधादीनाम् उष्णकालादिनिमित्तत्वात्= केचिद्विकारा उष्णकालनिमित्ताः केचित् शीतकालनिमित्ताः केचिद्वर्षाकालनिमित्ता इति पद्मादिषु प्रबोधादीनामुष्णकालादिकं निमित्तं सिद्धमेव तथैव हर्षादीनामपि स्मृत्यनुबन्धादिकं निमित्तं सिध्यति तत्र पूर्वानुभवस्तेन पूर्वजन्म सिध्यतीति सिद्धमात्मनो नित्यत्वम्, विकाराणां निर्निमित्तत्वं च न सिध्यति येनानित्यत्वमात्मन आपद्येतेति सूत्रार्थः । व्याचष्टे– उष्णादिष्विति, पञ्चभूतानुग्रहेण निर्वृत्तानाम्= जातानाम्= पाञ्चभौतिकानां पद्मादीनां प्रबोधसंमीलनविकाराः तन्निमित्ताः= उष्णादिनिमित्ताः– उष्णादिषु सत्सु प्रबोधादीनां भावात् उष्णादिष्वऽसत्सु चाऽभावादिति न निर्निमित्ता इत्यन्वयः । प्रकृतमाह– एवमिति । हर्षादीनां पूर्वानुभूतस्मृतिरेव कारणमित्याह– न चेति, हर्षादीनामिति शेषः । स्मृतेश्च पूर्वानुभवः कारणं स च जातस्य पूर्वजन्मनीति सिद्धमात्मनो नित्यत्वमित्यर्थः । आत्मन उत्पत्तिविनाशकारणस्याप्यनुमानं न संभवति– अनादिभावस्योत्पत्तिविनाशप्रसाधकस्य दृष्टान्तस्याभावादित्याह– न चेति, तथा चात्मनो नाऽनित्य-

इतश्च नित्य आत्मा—

प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते स च नान्तरेणाऽऽहाराभ्यासम् । कया युक्त्या ?, दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात् स्मरणानुबन्धादाहाराभिलाषः, न च पूर्वशरीराभ्यासमन्तरेणासौ जातमात्रस्योपपद्यते, तेनानुमीयते— भूतपूर्वं शरीरम् यत्राऽनेनाहारोऽभ्यस्त इति, स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति, तस्मान्न देहभेदादात्मा भिद्यते= भवत्येवोर्ध्वं देहभेदादिति ॥ २२ ॥

अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥

---

त्वमाप्नोतीत्यर्थः । हर्षादीनामपि निमित्तं विनोत्पत्तिर्न संभवति येनानित्यत्वमात्मन आपद्येतेत्याह— नेत। यथा पद्मप्रबोधादीनामुष्णादिकं दृष्टं कारणं तथा हर्षादीनां निमित्तान्तरस्य= स्मृत्यनुबन्धातिरिक्तनिमित्तस्य ग्रहणं नोपपद्यते येन दृष्टनिमित्तकत्वेनात्मनित्यत्वसाधकत्वं न स्यादित्याह— नोष्णादीति । उपसंहरति— तस्मादिति, एवमात्मनो नित्यत्वे सिद्धे यदात्माऽनित्यत्वमुक्तं तन्न युक्तमित्यर्थः ॥ २१ ॥

अग्रिमसूत्रमवतारयति— इतश्चेति, इतः= सूत्रोक्तहेतुतः । प्रेत्येति— प्रेत्य= मृत्वा= पूर्वशरीरत्यागानन्तरं शरीरान्तरग्रहणे कृते जातमात्रस्य बालस्य यः स्तन्याभिलापः स आहाराभ्यासकृतः= आहारानुभवजन्य एव. जातमात्रस्याहारानुभवश्च नास्मिन् जन्मनि संभवतीति पूर्वजन्मन्येव वक्तव्य इति पूर्वजन्म सिद्धम् एवं ततोपि पूर्वं जन्मानि सिद्धानि तथा चानादित्वमात्मनः प्राप्तम् अनादिभावस्य च नित्यत्वनियमादात्मन आहाराभ्यासकृतात् स्तन्याभिलापादपि नित्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे— जातमात्रस्येति, प्रवृत्तिर्लिङ्गं यस्य स प्रवृत्तिलिङ्गः= प्रवृत्त्यनुमेय एव स्तन्याभिलापः— प्रत्यक्षायोग्यत्वात्, स्तन्यपाने प्रवृत्त्या स्तन्याभिलापोऽनुमीयते स्तन्याभिलापं विना स्तन्यपानप्रवृत्तेरनुपपत्तेः । सः= स्तन्याभिलाषः, आहाराभ्यासम्= पूर्वजन्मकृताहारानुभवं विना नोपपद्यते इत्यन्वयः । आहाराभ्यासस्य कारणत्वे हेतुं जिज्ञासते— कयेति । उत्तरमाह— दृश्यते इति, क्षुधेति तृतीयान्तम्, तदनेन दृष्टान्तेनाहारानुभवजन्यसंस्कारजन्यस्मरणेनाहाराभिलापो भवति नान्यथेति प्रतिपादितम्, एवं बालस्यापि स्तन्याभिलाष आहारानुभवजन्यसंस्कारजन्यस्मरणेनैव वक्तव्यस्तत्र जातमात्रस्याहारानुभवः पूर्वजन्मन्येव वक्तव्य इति पूर्वजन्मपरम्परा प्राप्तेत्याह— न चेति, पूर्वशरीरे य आहाराभ्यासः स पूर्वशरीराभ्यासस्तं विना जातमात्रस्याऽसौ= स्तन्याभिलाषो नोपपद्यते तेन भूतपूर्वं शरीरमनुमीयते इत्यन्वयः, यत्र= पूर्वशरीरे= पूर्वजन्मनि, अनेन= जातमात्रेण । संकलयति— स इति, प्रेत्य= निर्गत्य, तथा च पूर्वजन्मानुभूतस्याऽऽहारस्यानुस्मरणेन स्तन्याभिलापो भवतीति पूर्वपूर्वजन्मपरम्परा सिद्धा तया चानादित्वं प्राप्तं तेनात्मनो नित्यत्वं सिद्धमित्यर्थः । उपसंहरति— तस्मादिति, तस्मात्= आत्मनो नित्यत्वादात्मा देहभेदान्न भिद्यते, एकस्मिन् काले चैत्रमैत्रादीनां देहभेदेनात्मभेदे सत्यपि एकस्यैव चैत्रस्य पूर्वोत्तरदेहेषु देहभेदादात्मभेदो न भवति किं तु तादृशपूर्वोत्तरदेहेषु सर्वेषु मोक्षपर्यन्तमेक एवात्मानुवर्तते= एक एवात्मा जन्मभेदेनोत्तरोत्तरं देहं गृह्णातीति आत्मनो नित्यत्वं सिद्धमित्यर्थः । उक्तस्याभिप्रायमाह— भवतीति, देहभेदात्= देहविशेषात् किं वा देहविनाशाद् ऊर्ध्वम्= अनतरमप्यात्मा भवतीति नित्य एवेत्यर्थः ॥ २२ ॥

उक्तं पूर्वपक्षी प्रत्याचष्टे— अयस इति, अयसः= लोहस्य यथा पूर्वाभ्यासं विनैवाऽयस्कान्ताभिगमनम्= चुम्बकपाषाणोपसर्पणं भवति तथैव तत्= तस्य बालस्यापि पूर्वाभ्यासं विनैव उपसर्पणम्= स्तनोपसर्पणम्= स्तन्यपानप्रवृत्तिर्भवतीति न पूर्वजन्मनि आहारानुभवापेक्षा ततश्च न पूर्वजन्मापेक्षा येनात्मनो-

यथा खल्वयोऽभ्यासमन्तरेणाऽयस्कान्तमुपसर्पति एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति ॥ २३ ॥

किमिदमयसोऽयस्कान्ताभिगमनं निर्निमित्तम्? अथ निमित्तात्? इति, निर्निमित्तं तावत्-

## न- अन्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

यदि निर्निमित्तम्? लोष्टादयोप्ययस्कान्तमुपसर्पेयुः- न जातु नियमे कारणमस्तीति। अथ निमित्तात्?. तत् केनोपलभ्यते? इति, क्रियालिङ्गः क्रियाहेतुः क्रियानियमलिङ्गश्च क्रियानियमहेतुः तेनान्यत्र प्रवृत्त्यभावः। बालस्यापि नियतमुपसर्पणं क्रियोपलभ्यते. न च स्तन्याभिलापलिङ्गम् अन्यदाहाराभ्यासकृतात् स्मरणानुबन्धात्, निमित्तं दृष्टान्तेनोपपाद्यते. न चाऽसति निमित्ते कस्य चिदुत्पत्तिः, न च दृष्टान्तो दृष्टमभिलापहेतुं बाधते, तस्मादयसोऽस्कान्ताभिगमनमऽदृष्टान्त इति ।

---

नित्यत्वं प्राप्नुयादित्यऽनित्य एवात्मा. अयसश्च पूर्वजन्म नैव संभवति- विनाशित्वात्तथापि प्रवृत्तिर्दृश्यते तथैवात्मपक्षेपि योज्यमिति सूत्रार्थः । व्याचष्टे- यथेति । प्रकृतमाह- एवमिति, स्तन्यमभिलषति= स्तन्यपानार्थं प्रवर्तते, स्पष्टं सर्वम् । तदनेनात्मनो नित्यत्वानुपपत्तिः प्रदर्शितेत्याशयः ॥ २३ ॥

अग्रिमसूत्रावताराायाऽयसोऽयस्कान्ताभिगमनं सकारणं वा निष्कारणं वेति विकल्पयति- किमिदमिति, निमित्तात्= सनिमित्तमित्यर्थः । प्रथमकल्पं निराकरोति- निर्निमित्तमिति, अयसोऽयस्कान्ताभिगमनं निर्निमित्तं न भवति- असंभवाद्रित्येवं सूत्रघटकनकारेणान्वयः । नेति- अयसोऽयस्कान्ताभिगमनमपि न निर्निमित्तम्= अकारणकम्- अन्यत्र= लोष्टादौ प्रवृत्त्यभावात्= प्रवृत्त्यदर्शनात्, यदीदमभिगमनं निर्निमित्तं स्यात्तदा लोष्टादीनामपि अस्कान्तोपसर्पणाय प्रवृत्तिः स्यात् न चैवं दृश्यते किं वा लोहस्याऽन्यत्र लोष्टादौ प्रवृत्तिः स्यात्- अयस्कान्तोपसर्पणनियमे निमित्ताभावात् न चैवमपि दृश्यते= लोहस्याप्यन्योपसर्पणं न दृश्यते किं त्वयोऽयस्कान्तमेवोपसर्पतीति नियमात् तादृशोपसर्पणस्य निमित्तं स्वीकार्यमेव तच्च निमित्तमयस्कान्ते लोहाकर्षणशक्तिरेव एवं बालस्यापि स्तनोपसर्पणं स्तन्याभिलापश्च सनिमित्त एवेति सिद्धम् अभिलापनिमित्तं च पूर्वानुभूतस्मरणमेव संभवति. जातमात्रस्य पूर्वानुभवश्च पूर्वजन्मन्येव संभवतीति पूर्वजन्मपरम्परयात्मनो नित्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे- यदीति, तदनेन निर्निमित्तकल्पः प्रत्याख्यातः, यद्यऽयस्कान्ताभिगमनं निर्निमित्तमित्यन्वयः । उक्ते हेतुमाह- नेति, निर्निमित्तपक्षे अय एवोपसर्पेदिति नियमे कारणं न संभवतीत्यन्वयः । सनिमित्तपक्षमुपस्थापयति- अथेति । अत्र वक्तव्यमाह- तदिति, तत्= निमित्तं केन= कथमुपलभ्यते= ज्ञायते इति वक्तव्यमित्यर्थः । उत्तरमाह- क्रियेति, क्रियाहेतुस्तादृशक्रियैवानुमेयः, क्रियानियमहेतुश्च तादृशक्रियानियमेनानुमेयः- क्रियादीनां हेतुं विनानुपपत्तेर्हेत्वनुमानमावश्यकमित्यन्वयः । पर्यवसितमाह- तेनेति, तेन= क्रियानियमहेतुना, यथा क्रियाहेतुर्भवति तथा क्रियानियमहेतुरपि भवत्येवेति अयस्येवाऽयस्कान्तोपसर्पणप्रवृत्तिर्भवति नान्यत्रेत्युपपद्यते इत्यर्थः । एवं पूर्वपक्षिणा निर्वचने कृते सिद्धान्ती स्वपक्षमुपपादयति- बालस्यापीति, यथोक्तोपसर्पणनियमस्तथा बालस्यापि स्तनोपसर्पणलक्षणा क्रिया नियतोपलभ्यते इति तादृशक्रियानियमस्यापि निमित्तं स्वीकार्यमेव । स्तनोपसर्पणस्य निमित्तमाह- न चेति, आहारानुभवजन्यात् स्मरणानुबन्धादन्यत् स्तन्याभिलापस्य लिङ्गम्= निमित्तं नोपपद्यते इति बालस्य स्मरणकारणीभूतः पूर्वजन्मनि स्तन्यपानानुभवः स्वीकार्य इति सिद्धमात्मनो नित्यत्वमित्यर्थः । ननु स्तन्याभिलाषोपि सनिमित्त इति कथं प्राप्तमित्याशङ्क्याह- निमित्तमिति, उक्तेन "अयस्कान्ताभिगमनवत्" इति दृष्टान्तेन निमित्तम्= क्रियायाः सनिमित्तकत्वं प्रतिपाद्यते तेन स्तनोपसर्पणक्रियाया अपि सनिमित्तकत्वं लब्धमित्यर्थः । उक्ते विनिगमनामाह- न चेति, जायमानस्य निमित्तमवश्यं

अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति= न जात्वऽयो लोष्टमुपसर्पति । किंकृतोस्य निग्रमः ? इति, यदि कारणनियमात् स च क्रियानियमलिङ्गः, एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद् भवितुमर्हति, तच्च कारणमभ्यस्तस्मरणम् अन्यद्वेति दृष्टेन विशिष्यते= दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति ॥ २४ ॥

इतश्च नित्य आत्मा, कस्मात् ?—

## वीतरागजन्मादर्शनात् ॥ २५ ॥

सरागो जायते इत्यर्थादापद्यते, अयं जायमानो रागानुविद्धो जायते. रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः. पूर्वानुभवश्च विषयाणां पूर्वस्मिन् जन्मनि शरीरमन्तरेण नोप-

---

भवतीति जायमानस्य स्तन्याभिलाषस्यापि निमित्तेनावश्यं भवितव्यमित्यर्थः । विपक्षे बाधकमाह- न चेति, दृष्टान्तेनोक्तेन दृष्टस्याभिलाषहेतोर्बाधो नोपपद्यते इत्यन्वयः, अभिलाषस्य पूर्वानुभूतार्थविषयकं स्मरणं कारणं दृष्टमेवेति स्पष्टमेव तथा च बालस्यापि पूर्वानुभूतविषयकं स्मरणं तेन पूर्वानुभवस्तेन पूर्वजन्म तेनानादित्वं तेनात्मनो नित्यत्वं स्वीकार्यमेवेत्यर्थः । उपसंहरति- तस्मादिति, अदृष्टान्तः= आत्माऽनित्यत्वसाधने किं वा स्तन्याभिलाषस्यानिमित्तकत्वसाधने दृष्टान्तो न भवति- अयस्कान्ताभिगमनवत् स्तन्याभिलाषस्यापि सनिमित्तकत्वप्राप्त्या उक्तरीत्यात्मनो नित्यत्वस्यैव सिद्धेरित्यर्थः ।

द्वितीयप्रकारेण व्याचष्टे- अयस इति, यथाऽयस्कान्तोपसर्पणं लोष्टादिषु नास्ति तथा लोहस्यापि अन्यत्र= अयस्कान्तातिरिक्ते लोष्टादावुपसर्पणं न भवति । उक्तमेवाह- न जात्विति, अय इति प्रथमान्तम् । अस्य= अयसः किं वाऽयस्कान्तोपसर्पणस्य लोहनिष्ठस्य यो नियमः स किंकृतः= किंनिमित्तक इति जिज्ञासते- किमिति । अत्राप्ययं नियमो निर्निमित्तो न संभवतीति सनिमित्तपक्षमनुवदति- यदीति, स च= कारणनियमः क्रियानियम एव लिङ्गमस्येति क्रियानियमलिङ्गः= क्रियानियमानुमेयः- क्रियाया नियमेन तत्कारणनियमोऽनुमीयते, क्रियानियमश्चाऽयसोऽयस्कान्तमात्रोपसर्पणं तस्य कारणनियमे प्राप्ते बालस्यापि यो नियमेन स्तन्याभिलाषस्तस्यापि कारणनियम आवश्यक एवेति प्रकृतमाह- एवमिति । कारणस्वरूपमाह- तच्चेति, सामान्यतः प्राप्तमप्यभिलाषकारणमनुभूतस्मरणं वाऽन्यद्वेति दृष्टेन= लोकदृष्टमार्गेण विशिष्यते= विशेषरूपेण ज्ञातुं शक्यते. तत्र शरीरिणाम्= जीवानामनुभूतस्याहारस्य स्मरणादेवाहाराभिलाषो दृश्यते इति बालस्यापि स्तन्याभिलाषः पूर्वानुभूतस्तन्यस्मरणादेव वक्तव्यः जातमात्रस्यानुभवश्चास्मिन् जन्मनि न संभवतीति तदनुभवार्थं पूर्वजन्म स्वीकार्यं तेनानादित्वं तेन च नित्यत्वमात्मनः सिद्धमित्यर्थः ॥ २४ ॥

अग्रिमसूत्रमवतारयति- इतश्चेति, इतः= सूत्रप्रतिपाद्यहेतोः । पूर्वपक्षिमतेनैवात्मनो नित्यत्वमुपपादयति- वीतेति- वीतरागस्य= रागादिदोषरहितस्य जन्म न भवतीति सरागस्य जन्म भवतीत्यर्थादेव प्राप्तं रागश्च पूर्वानुभवं विना न सिध्यति जातमात्रस्य पूर्वानुभवश्च पूर्वजन्म विना न संभवतीति पूर्वजन्म सिद्धं तेनाऽनादित्वं तेन चात्मानो नित्यत्वं सिद्धम्- अनादिभावस्य नित्यत्वनियमात्, वीतरागस्य जन्माभावस्तु बौद्धैरपि स्वीकृतस्तदुक्तम्—

" रागादिज्ञानसंतानवासनोच्छेदसंभवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता " इति,

तथा च सिद्धमात्मनो नित्यत्वमिति सूत्रार्थः । व्याचष्टे- सराग इति, यदि वीतरागो न जायते तदा सरागो जायते इत्यर्थादेव सिद्धमित्यर्थः । पर्यवसितमाह- अयमिति, रागानुविद्धः= सरागः । रागकारणमाह- रागस्येति, योनिः= कारणम् । पूर्वानुभवस्थलमाह- पूर्वानुभव इति, विषयाणां पूर्वानुभव

पद्यते. सोयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते. तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः, एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरशरीरस्य पूर्वतमेन इत्यादिनाऽनादिश्चेतनस्य शरीरयोगः अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २५ ॥

कथं पुनर्ज्ञायते— पूर्वविषयानुचिन्तनजनितो जातस्य रागः न पुनः—

## सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ? ॥ २६ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते । अत्रायमुदितानुवादो निदर्शनार्थः ॥ २६ ॥

## न— संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥

---

इत्यन्वयः, वृद्धादीनां पूर्वानुभवस्यास्मिन् जन्मन्यपि संभवे जातमात्रस्य तु पूर्वानुभवोऽस्मिन् जन्मनि न संभवतीति तदर्थं पूर्वजन्म पूर्वशरीरं च स्वीकार्यमेवेत्यर्थः । पर्यवसितमाह— सोयमिति, तेषु तेषु विषयेषु रज्यते= रागवान् भवति । तथा चायमात्मा द्वयोः= पूर्वोत्तरयोर्जन्मनोः प्रतिसन्धिः= सबंन्धकर्ता अर्गलादिवत् शृङ्खलावद्वा— उभयसंबन्धित्वात्, किं वा प्रतिसन्धिः= प्रतिसंबन्धिः= संबन्धवानित्यर्थः, एवं पूर्वशरीरस्य पूर्वतरेण शरीरेण पूर्वतरशरीरस्य पूर्वतमेन शरीरेण प्रतिसन्धिः, किं वा पूर्वशरीरस्यात्मन पूर्वतरशरीरेण सह पूर्वतरशरीरस्य चात्मनः पूर्वतमशरीरेण संबन्धः सिद्ध इत्यात्मनः शरीरसंबन्धो रागसंबन्धश्चानादिरेव सिद्धस्तेनात्मनोप्यनादित्वं तेन च नित्यत्वं सिद्धमिति नाऽनित्यविज्ञानादेरात्मत्वं संभवतीत्यर्थः ॥ २५ ॥

अग्रिमसूत्रमवतारयति— कथमिति, जातस्यात्मनो यो रागः स पूर्वानुभूतविषयस्मरणजन्यो भवतीति कथं ज्ञायते ? सगुणद्रव्योत्पत्तिवत् सरागस्योत्पत्तिर्न भवतीति च कथं ज्ञायते इत्येवं सूत्रेण सहान्वयः । पूर्वपक्षी स्वाभिप्रायमाह— सगुणेति, यथा द्रव्यस्य घटादेः सगुणस्य= रूपादिविशिष्टस्यैवोत्पत्तिर्भवति तथा तत्= तस्य= आत्मनोपि सरागस्यैवोत्पत्तिः संभवति तथा च रागसिद्ध्यर्थं पूर्वजन्मनि विषयानुभवापेक्षा नास्ति तेन पूर्वजन्मापेक्षापि नास्तीति न सरागत्वेनात्मनो नित्यत्वापत्तिरित्यऽनित्य आत्मेति सिद्धमिति सूत्रार्थः । आत्मनोऽनित्यत्वपक्षेप्यात्मोत्पत्तिकारणादेवात्मनि रागोत्पत्तिः संभवति— कारणगुणानां कार्यगुणोत्पादकत्वदर्शनादित्याशयः । व्याचष्टे— यथेति, उत्पत्तिधर्मकस्य= जायमानस्य, कारणत इति— "कारणगुणाः कार्यगुणानारभन्ते" इतिस्मर्तव्यम् । प्रकृतमाह— तथेति, कुतश्चिदिति— आत्मनोऽनित्यत्वे कारणादुत्पत्तिः प्राप्ता तथा चात्मकारणेभ्य एवात्मनि रागो जायते= संभवतीति न रागस्य पूर्वानुभूतविषयस्मरणजन्यत्वं स्वीकार्यमित्यर्थः । किं वा कुतश्चित्= स्वभावादेव जायते यथा बीजाज्जायमानोङ्कुरः स्वभावादेव हरितरूपवान् जायते— कारणीभूते बीजादौ तादृशरूपाभावादिति नात्मनो रागोपपत्त्यर्थं नित्यत्वस्वीकारप्रसङ्ग इत्यनित्य एवात्मेत्यर्थः । सूत्रनिर्माणकारणमाह— अत्रेति, "अयसः" "पद्मादिषु" इत्यादिसूत्रैरात्मनो यदनित्यत्वमुक्तं तदेवानेन सूत्रेणोच्यते इत्ययमुदितस्य= उक्तस्यानुवाद एव स च निदर्शनार्थः= "सगुणद्रव्योत्पत्तिवत्" इति दृष्टान्तान्तरप्रदर्शनार्थ इत्यर्थः, अत्र— "उदितमिदं चोद्यमयस्कान्तदृष्टान्तचोद्येन तथापि तस्यानुवादो निदर्शनार्थः= पूर्वमयस्कान्तो निदर्शनम् इदानीं घटादीनामुत्पद्यमानानां रूपदयोनिदर्शनमिति तदर्थः" इति तात्पर्यटीका ॥ २६ ॥

उक्तं सिद्धान्ती परिहरति— नेति, न सगुणद्रव्यवत् सरागस्यात्मन उत्पत्तिः संभवति— रागादीनां संकल्पनिमित्तत्वात्= इष्टसाधनताज्ञानजन्यत्वात्. यस्मिन् दुग्धादाविष्टसाधनताज्ञानं भवति तस्मिन्नेव रागोपि संभवतीति रागस्येष्टसाधनताज्ञानजन्यत्वं प्राप्तम् इष्टसाधनताज्ञानं च पूर्वानुभवं विना न संभवति पूर्वानुभवश्च जातमात्रस्य पूर्वजन्म विना न संभवतीत्युक्तरीत्यात्मनो नित्यत्वं प्राप्तम्, सरागस्योत्पत्तिस्वीकारे रागस्येष्टसाधनताज्ञानजन्यत्वाभावादनिष्टपदार्थेष्वपि रागः स्याद् न चैवमस्तीति न

न खलु सगुणद्रव्योत्पत्तिवद् उत्पत्तिरात्मनो रागस्य च । कस्मात् ?. संकल्पनिमित्तत्वाद्रागादीनाम्= अयं खलु प्राणिनां विषयानाऽऽसेवमानानां संकल्पजनितो रागो गृह्यते. संकल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः तेनानुमीयते– जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति । आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती संकल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्, न चात्मोत्पादः सिद्धः नापि संकल्पादन्यद् रागकारणमस्ति, तस्मादयुक्तम्– 'सगुणद्रव्योत्पत्तिवत्तयोरुत्पत्तिः' इति । अथापि संकल्पादन्यद् रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते तथापि पूर्वशरीरयोगोऽप्रत्याख्येयः– तत्र हि तस्य निर्वृत्तिर्नाऽस्मिन् जन्मनि ॥

तन्मयत्वाद्राग इति ।

विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यते इति ॥

---

सरागस्योत्पत्तिः संभवतीति सूत्रार्थः । व्याचष्टे– नेति, संभवतीविशेषः । सरागस्योत्पत्तिस्वीकारेपि तादृशरागस्य कारणं जातमात्रस्य पूर्वजन्मगतविषयानुभव एव स्यादित्यपि विज्ञेयम् । उक्ते कारणं जिज्ञासते– कस्मादिति । उत्तरमाह– संकल्पेति । उक्तमुपपादयति– अयमिति, अयं रागः, प्राणिनाम्= जीवानाम् इत्यन्वयः । रागकारणीभूतसंकल्पस्य कारणमाह– संकल्पश्चेति, पूर्वानुभूतविषयानुचिन्तनं योनिः= कारणं यस्य स पूर्वानुभूतविषयानुचिन्तनयोनिः । तेन= रागस्य संकल्पजन्यत्वेन संकल्पस्य च पूर्वानुभूतविषयस्मरणजन्यत्वेन । अपीति– यदा ह्यस्माकं रागः संकल्पद्वारा पूर्वानुभूतार्थचिन्तनजन्यस्तदा जातमात्रस्यापि रागः संकल्पद्वारा पूर्वानुभूतार्थचिन्तनजन्य एवेत्यनुमीयते इत्यन्वयः । पूर्वपक्षिमते दोषमाह– आत्मेति, आत्मोत्पादाधिकरणात्= आत्मोत्पत्तिकारणात्= आत्मसमवायिकारणाद् यदि रागोत्पत्तिरात्मनि स्यात्तदा संकल्पादन्यस्मिन् रागकारणे सति वाच्या= संकल्पादन्येनैव कारणेन रागोत्पत्तिर्वक्तव्या कार्यद्रव्यगुणवत्= यथा कार्यद्रव्यगुणस्योत्पत्तिर्न संकल्पात् किं तु कारणगुणादेव तथा तथा च यद्यात्मोत्पादः= आत्मोत्पत्तिः सिद्धा स्यात्तदाऽऽत्मोत्पत्तिकारणेभ्यो रागोत्पत्तिः सिद्धा स्यादपि न चात्मोत्पत्तिः सिद्धास्ति येनैवं स्यादित्याह– न चेति । रागस्यापि संकल्पादन्यत् स्वभावादिकं कारणं न संभवति येन संकल्पं विना रागः सिध्येदित्याह– नापीति, तथा च रागस्य संकल्पेन संकल्पस्य पूर्वानुभूतार्थस्मरणेन तत्स्मरणस्य पूर्वानुभवेन तस्य पूर्वजन्मना पूर्वजन्मनश्चाऽऽत्मनित्यत्वेन सिद्धिः संभवतीति सिद्धमात्मनो नित्यत्वमित्यर्थः । उपसंहरति– तस्मादिति । तयोः= रागात्मनोः । स्वसिद्धान्तमाह– अथेति, अथापि= यद्यपि अदृष्टस्य साधारणकारणत्वात् संकल्पादन्यद् अदृष्टमपि रागकारणमस्ति तथापि= अदृष्टस्य रागकारणत्वेप्यात्मनः पूर्वजन्मीयशरीरसंबन्धः प्रत्याख्यातुं न शक्यते– तत्र= पूर्वजन्मीयशरीरे एव तस्य= अदृष्टस्य= वर्तमानजन्मनि रागादिकारणीभूतस्यादृष्टस्य निर्वृत्तिः= सिद्धिः संभवति नास्मिन् वर्तमाने जन्मनि– पूर्वजन्मकृतकर्मणामेव विशेषतो भोगस्वीकारात् तथा च यथा जातमात्रस्य पूर्वानुभवार्थं पूर्वजन्मापेक्षास्ति तथा रागकारणीभूतस्यादृष्टस्यापि सिद्ध्यर्थं पूर्वजन्मापेक्षास्त्येवेत्यनेकजन्मसंबन्धित्वादात्मनो नित्यत्वं सिद्धमेवेत्यर्थः ॥

रागस्याऽदृष्टलक्षणं साधारणकारणमुक्त्वा संप्रति सिंहावलोकितन्यायेन पुनरसाधारणं कारणमाह– तन्मयत्वादिति, तन्मयत्वम्= विषयपरायणत्वम्= विषयाभ्यास इतियावत् तथा च तन्मयत्वात्= विषयाभ्यासादेवाऽभ्यस्ते विषये रागो जायते नान्यथा. विषयाभ्यासश्च जातमात्रस्य पूर्वजन्मन्येव वक्तव्य इत्युक्तरीत्या पूर्वजन्मसिद्ध्याऽनादित्वेनात्मनो नित्यत्वं सिद्धमित्यर्थः । स्वयं व्याचष्टे– विषयाभ्यास इति, भावनाहेतुः= वासनाहेतुः= संस्कारकारणीभूतः= संस्कारोत्पादको विषयाभ्यासः= विषयभोग एव तन्मयत्वमित्युच्यते तथा च तन्मयत्वात्= विषयाभ्यासादेव रागो जायते इत्यर्थः ॥

जातिविशेषाच्च रागविशेष इति।

कर्म खल्विदं जातिविशेषनिर्वर्तकं तादात्म्यात् ताच्छब्द्यं विज्ञायते, तस्मादनुपपन्नम्-संकल्पादन्यद् रागकारणमिति ॥ २७ ॥

अनादिश्चेतनस्य शरीरयोग इत्युक्तम्. स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठान तत् परीक्ष्यते- किं घ्राणादिवदेकप्रकृतिकम् ? उत नानाप्रकृतिकम् ? इति। कुतः संशयः ?, विप्रतिपत्तेः संशयः- पृथिव्यादीनि भूतानि संख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानते इति। किं तत्र तत्त्वम् ?—

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

---

सामान्यरागस्याऽसाधारणं कारणमुक्त्वा संप्रति रागविशेषस्य कारणमाह- जातीति, जातिविशेषात्= गवादिजातिविशेषसंपादकाददृष्टाद् रागविशेषो जायते यथा मनुष्यदेहप्राप्तौ तत्कारणीभूतादृष्टादन्ने रागो जायते गवादिदेहप्राप्तौ तत्कारणीभूतादृष्टात् तृणादौ रागो जायते. अयमेव रागविशेष इत्यर्थः। व्याचष्टे- कर्मेति, जातिविशेषनिर्वर्तकम्= गवादिजातिसंपादकं कर्मात्र जातिविशेषशब्देन ग्राह्यमित्यर्थः, उक्ते हेतुमाह- तादात्म्यादिति, कार्यकारणयोरभेदस्वीकारेण कारणस्य कर्मणः कार्यस्य जातेश्च तादात्म्यात्= अभेदात् ताच्छब्द्यम्= कर्मणो जातिशब्देन प्रतिपादनम्= जातिशब्दवाच्यत्वं विज्ञायते= विज्ञेयमिति अदृष्टविशेषादेव रागविशेषो जायते इत्यर्थः। तथा च योगसूत्रम्- "सति मूले तद्विपाको जात्यायुर्भोगाः" इति। उपसंहरति- तस्मादिति। तथा च कर्मणामदृष्टस्य च साधारणकारणत्वादसाधारणकारणान्वेषणायामनुभूतार्थस्मरणजन्यसंकल्पादेव रागो जायते नान्यथेति सिद्धम्, अर्थानुभवश्च जातमात्रस्य पूर्वजन्मन्येव संभवतीति सिद्धमुक्तरीत्याऽऽत्मनो नित्यत्वमित्यर्थः। अत्र- "कर्मणः संस्कारोद्बोधकत्वात् करभजात्यर्थेन कर्मणा जन्मसहस्रव्यवहितापि करभभावनोद्बोध्यते नाऽनन्तरापि मनुष्यभावना प्रायणाभिभूतेतिभावः" इति तात्पर्यटीका ॥ २७ ॥

॥ इत्याऽऽत्मनित्यत्वप्रतिपादनम् आत्मविवेचनं च समाप्तम् ॥

---

आत्मविवेचनं समाप्य शरीरविवेचनमारभते- अनादिरित्यादिना। शरीरयोगः= शरीरसंबन्धः। आत्मनः सुखादिकं शरीरावच्छेदेनैव भवतीति शरीरं सुखाद्यधिष्ठानम्, तत्= शरीरम्। अत्र संशयमाह- किमिति, घ्राणं पृथिवीजन्यमेव चक्षुस्तेजोमात्रजन्यमिति घ्राणादिकमिन्द्रियमेकप्रकृतिकम्= एकभूतकारणकं तथैव शरीरमपि किमेकभूतकारणकं किं वा नानाभूतकारणकमिति संशयः। संशयकारणं जिज्ञासते- कुत इति। संशयकारणमाह- विप्रतिपत्तेरिति। विप्रतिपत्तिं प्रदर्शयति- पृथिव्यादीनीति, संख्याविकल्पेनेति- एका पृथिव्येव शरीरकारणमिति केचित् शास्त्रकाराः प्रतिजानते= प्रतिज्ञां कुर्वन्ति. केचित् पृथिवीजलेतिभूतद्वयं केचित् भूतत्रयं केचिद् भूतचतुष्टयं केचिद् भूतपञ्चकं शरीरकारणमिति संख्याविकल्पेन प्रतिजानते. एतादृशविप्रतिपत्त्यैव संशय इत्यन्वयः। एषु परस्परविरुद्धपक्षेषु यथार्थपक्षं जिज्ञासते- किमिति।

सूत्रेण तत्त्वमाह- पार्थिवमिति, भूलोके शरीरं पार्थिवम्= पृथिवाकारणकम्- गुणान्तरोपलब्धेः= पृथिव्यतिरिक्तजलादिगुणानां शरीरेपूपलब्धेः, यदि शरीरमनेकभूतप्रकृतिकं स्यात्तदा वक्ष्यमाणरीत्या गुणान्तरोपलब्धिर्न स्यादित्यग्रे स्पष्टम्, भूलोकीयशरीराणां प्रधानं कारणं पृथिव्येव जलादिकं भूतचतुष्टयमप्रधानं कारणमस्त्येव- केवलपृथिव्याः कार्योत्पत्तेरसंभवादिति सूत्रार्थः।

तत्र मानुषं शरीरं पार्थिवम्, कस्मात् ?. गुणान्तरोपलब्धेः= गन्धवती पृथिवी गन्धवच्च शरीरम्, अबादीनामऽगन्धत्वात् तत्प्रकृति अगन्धं स्यात्। न त्विदमबादिभिरसंपृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पते इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति, भूतसंयोगो हि मिथः पञ्चानां न निषिद्ध इति। आप्यतैजसवायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि निस्संशयः- नाऽबादिसंयोगमन्तरेण निष्पत्तिरिति।

'पार्थिवाप्यतैजसम्- तद्गुणोपलब्धेः' 'निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्' 'गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्' ते इमे संदिग्धा हेतव इत्युपेक्षितवान् सूत्रकारः। कथं संदिग्धाः ?, सति च प्रकृतिभावे भूतानां धर्मोपलब्धिः असति च संयोगाप्रतिषेधात्

---

व्याचष्टे- तत्रेति, तत्र= विविधशरीरेषु मध्ये मानुषम्= मनुष्यलोकीयं शरीरं पार्थिवम्- वरुणादिलोकेषु जलीयादिशरीरस्वीकारादित्यर्थः। उक्ते हेतुं जिज्ञासते- कस्मादिति। हेतुमाह- गुणेति। उक्तं व्याचष्टे- गन्धेति, गन्धवत्त्वात् पार्थिवमित्यर्थः। विपक्षे बाधकमाह- अबादीनामिति, यदि मनुष्यादिशरीरं तत्प्रकृति= जलादिप्रकृतिकं स्यात्तदा गन्धरहितं स्यात्- जलादीनां गन्धरहितत्वात्, कारणगुणानामेव कार्यगुणारम्भकत्वात्, न च शरीरं गन्धरहितमिति पार्थिवमेवेत्यर्थः। स्वाभिप्रायमाह- नेति, इदं शरीरं जलादिभिरसंपृक्तया= असंयुक्तया पृथिव्याऽऽरब्धम्= उत्पादितं न चेष्टादीनामाश्रयभावेन= आश्रयत्वेन= आश्रयः कल्पते= संभवतीति पञ्चानामपि भूतानां संयोगेन शरीरं भवति= उत्पद्यते तत्र पृथिव्याः प्राधान्यादेव पार्थिवमित्युच्यते- "प्राधान्येन व्यपदेशा भवन्ति" इतिन्यायात् तथा च वेदान्तसूत्रम्- "वैशेष्यात्तु तद्वादः" इति, चेष्टा= क्रिया इन्द्रियं चक्षुरादि, अर्थः= सुखादिभोगस्तेषामाश्रयः। ननु पञ्चानां भूतानां संयोगः कथमित्याशङ्क्याह- भूतसंयोग इति, पञ्चानां भूतानां संयोगो नात्र निषिद्ध इति शरीरे पञ्चभूतसंयोग उपपद्यते इत्यन्वयः। शरीरान्तराण्याह- आप्येति, आप्यानि=जलीयानि शरीराणि वरुणलोके. तैजसानि शरीराणि सूर्यलोके. वायव्यानि शरीराणि वायुलोके सन्तीत्यन्वयः, तत्राप्येकभूतारब्धेन शरीरेण भोगो न संभवतीति तेष्वपि शरीरेषु भूतसंयोगः= भूतचतुष्टयसंयोगः पुरुषार्थतन्त्रः= भोगाधीनोस्त्येव तथापि जलादीनां प्राधान्यादेव जलीयत्वादिव्यपदेश इत्यर्थः। अत्र दृष्टान्तमाह- स्थाल्येति, घटादिपदार्थोत्पत्तावपि भूतसंयोगो निस्संशयः अपेक्ष्यते- जलादिसंयोगं विना केवलया मृदा घटाद्युत्पत्तेरसंभवात् तथैव शरीरेष्वपि भूतान्तरसंयोगः स्वीक्रियते इत्यर्थः। निष्पत्तिः= घटाद्युत्पत्तिः।

त्रिभूतप्रकृतिकमतमाह- पार्थिवेति, पार्थिवाप्यतैजसम्= पृथिवीजलतेजःप्रकृतिकं शरीरम्- पृथिव्यादित्रयाणामपि गुणोपलब्धेः, तत्र गन्धादिकं पृथिवीगुणः प्रस्वेदादिकं जलविकारः रसो जलगुणः उष्णत्वं च तेजोगुणः। भूतचतुष्टयप्रकृतिकमतमाह- निःश्वासेति, पृथिव्यादिभूतत्रयस्य गुणोपलब्धिः प्रकृतैव तत्रापि वायुस्वरूपयोर्निःश्वासोच्छ्वासयोरप्युपलब्ध्या चातुर्भौतिकत्वं शरीरस्य प्राप्तमित्यर्थः। पञ्चभूतात्मकत्वमतमाह- गन्धेति, गन्धः पृथिव्याः. क्लेदः= आर्द्रता जलस्य. अन्नपाकस्तेजसः. व्यूहः= निश्श्वादिः किं वा श्वासेन बाह्यपदार्थाकर्षणं वायोः. अवकाशदानम्= भक्षितस्य स्थानदानं चाकाशस्य गुण इति पञ्चानामपि भूतानां शरीरे गुणोपलब्ध्या शरीरं पाञ्चभौतिकमित्यर्थः, पार्थिवाप्येत्यादिवाक्यत्रयस्य सूत्रत्वनिर्देशस्तु ते इमे इत्याद्यग्रिमभाष्यविरुद्ध एवेति विभाव्यम्। सूत्रकारेणैतत्पक्षानुक्तौ हेतुमाह- ते इमे इति। तद्गुणोपलब्धेरित्यादिहेतवः। उक्तहेतूनां संदिग्धत्वे हेतुं जिज्ञासते- कथमिति। उत्तरमाह- सतीति, पृथिव्यतिरिक्तानां जलादिभूतानां शरीरप्रकृतित्वे सत्यपि शरीरे तेषां भूतानां गुणोपलब्धिः संभवति. असत्यपि च शरीरप्रकृतित्वे जलादीनां पृथिव्याः संयोगस्वीकारात्

संनिहितानामिति. यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृति (सत्) शरीरम् अगन्धमऽरसमऽरूपमऽस्पर्शं च प्रकृत्यनुविधानात् स्यात्. न त्विदमित्थम्भूतं तस्मात् पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

## श्रुतिप्रामाण्याच्च ॥ २९ ॥

"सूर्यं ते चक्षुर्गच्छताम्" इत्यत्र मन्त्रे "पृथिवीं ते शरीरम्" इति श्रूयते तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति। "सूर्यं ते चक्षुः स्पृणोमि" इत्यत्र मन्त्रान्तरे "पृथिवीं ते शरीरं स्पृणोमि" इति श्रूयते सेयं कारणाद् विकारस्य स्पृत्तिरभिधीयते इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद् भिन्नजातीयानामेककार्यारम्भानुपपत्तिः ॥ २९ ॥

---

शरीरे संनिहितानामपि भूतानां जलादीनां गुणोपलब्धिः संभवतीति "तद्गुणोपलब्धेः" इत्यादिहेतवो जलादिभूतानां मनुष्यादिशरीरप्रकृतित्वसाधने संदिग्धा एवेति न तादृशसाध्यसाधकाः संभवन्तीत्यर्थः। अत्र दृष्टान्तमाह– यथेति, यथा घटादावुदकतेजोवाय्वाकाशानां पृथिव्या संयोगादेव तत्तद्गुणोपलब्धिर्भवति घटादीनामुत्पत्तिश्च भवति न तु भूतपञ्चकप्रकृतिकत्वेन– पृथिव्या एव घटादिप्रकृतित्वस्य प्रसिद्धत्वात् तथैव शरीरेपि जलादिभूतानां गुणोपलब्धावपि न शरीरं पञ्चभूतप्रकृतिकं किं तु पृथिवीमात्रप्रकृतिकमेव भूतान्तराणां तु संयोगमात्रमेव तादृशसंयोगेनापि भूतान्तरगुणोपलब्धिसंभवाद-ऽनेकभूतप्रकृतिकत्वस्वीकारे गौरवादित्यर्थः। विपक्षे बाधकमाह– तदिदमिति, अनेकभूतप्रकृति सदित्यन्वयः, यदीदं शरीरमनेकभूतप्रकृतिकं स्यात् तदाऽगन्धम्= गन्धादिगुणरहितमेव स्यात्– भूतानां परस्परं विरोधेन परकीयगुणोपमर्दकत्वात्, यथा तेजसा जलनाशे जलगुणोपलब्धिर्न स्यात् जलेन च तेजोनाशे तेजोगुणोपलब्धिर्न स्यात्। प्रकृत्यनुविधानात्= प्रकृतिभूतभूतानुरोधात् गन्धादिरहितं स्यादित्यन्वयः, अत्र– "पृथिव्युदकाभ्यामारभ्यमाणमगन्धम्– कारणगन्धस्यैकस्याऽनारम्भकत्वात्. पृथिव्यनलाभ्यामारभ्यमाणमगन्धमरसं च– कारणगन्धरसयोः केवलयोरनारम्भकत्वात्" इत्यादिवार्तिकम्, अस्य– "अयमभिसंधिः– पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः– तयो रूपरसस्पर्शवत्त्वेन तदारम्भसंभवेपि गन्धवत्त्वाभावप्रसङ्गात्" इति तात्पर्यटीका च। किं वा प्रकृत्यनुविधानं हि स्वसमवायिकारणसादृश्यं तच्च कार्यमात्रे नियतमस्ति. तत्र गन्धादयो गुणाः पृथिव्यादिमात्रगुणा एव न तु भूतपञ्चकगुणा इति शरीरस्यानेकभूतप्रकृतिकत्वे गन्धादिशून्यत्वं स्यादेव– प्रकृत्यनुविधानात्. अनेकभूतसमुदायस्य गन्धादिसमवायिकारणत्वाभावादित्यर्थः। पर्यवसितमाह– नेति, यदि शरीरमनेकभूतप्रकृतिकं स्यात्तदा इत्थम्भूतम्= दृष्टस्वरूपम्= भूतपञ्चकगुणविशिष्टं न स्यादुक्तहेतोरित्यन्वयः। उपसंहरति– तस्मादिति, गुणान्तरोपलब्धेः= जलादिगुणानामुपलब्धेः, शरीरस्यैकभूतप्रकृतिकत्वे तु शरीरे संनिहितानां भूतानामप्राधान्यात् परकीयगुणोपमर्दकत्वं नापद्यते. वार्तिकोक्तरीत्यापि च गन्धादिराहित्यं नापद्यते इति सर्वभूतगुणानामुपलब्धिः संभवति ॥ २८ ॥

उक्ते श्रुतिं प्रमाणयति– श्रुतीति, "पृथिवीं ते शरीरम्" इत्यादिश्रुतिप्रतिपाद्यत्वादपि भूलोकीयशरीराणां पृथिवीप्रकृतिकत्वं सिद्धमिति सूत्रार्थः। व्याचष्टे– सूर्यमिति, अनया श्रुत्या चक्षुषः सूर्यप्रकृतिकत्वं सिद्धम्। प्रकृतोपयुक्तां श्रुतिमाह– पृथिवीमिति, गच्छतामित्यनुवर्तनीयम्, श्रुतिरियं यज्ञपशुमुद्दिश्य प्रवृत्तास्ति। श्रुतिप्रतिपाद्यमाह– तदिदमिति, अनया श्रुत्या प्रकृतौ विकारस्य लयाभिधानात् पृथिवीशरीरयोः प्रकृतिविकारभावः प्राप्त इति शरीरस्य पृथिवीप्रकृतिकत्वं सिद्धमित्यर्थः। उत्पत्तिवाक्यमुदाहरति– सूर्यमिति, स्पृणोमि= करोमि। प्रकृतोपयुक्तां श्रुतिमाह– पृथिवीमिति, श्रुतिप्रतिपाद्यमाह– सेयमिति, कारणात्= पृथिव्याः विकारस्य= शरीरस्य स्पृत्तिः= उत्पत्तिरभिधीयते. तदनेनोक्तशरीराणां पृथिवीप्रकृतिकत्वं स्पष्टमेव सिद्धम्– अनेकभूतप्रकृतिकत्वे शरीरस्य श्रुत्या पृथिव्यां

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते- किमाऽऽव्यक्तिकानि ? आहोस्विद् भौतिकानि ? इति । कुतः संशयः ?—

कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात्संशयः ॥ ३० ॥

कृष्णसारं भौतिकं तस्मिन्नऽनुपहते रूपोपलब्धिः उपहते चानुपलब्धिरिति, व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपलम्भो न कृष्णसारप्राप्तस्य, न चाऽप्राप्यकारित्वमिन्द्रियाणाम्, तदिदमभौतिकत्वे विभुत्वात् संभवति, एवमुभयधर्मोपलब्धेः संशयः ॥ ३० ॥

---

त्वाभिधानं पृथिव्याश्चोत्पत्त्यभिधानं मिथ्या स्यात् । विपक्षे बाधकमाह- स्थाल्यादिष्विति, घटादिषु तुल्यजातीयानाम्= एकजातीयानामेव परमाणूनामेकस्य घटादिकार्यस्यारम्भकत्वं दृश्यते इति भिन्नजातीनां परमाणूनामेककार्यारम्भकत्वं नोपपद्यते इति अनेकभूतपरमाणूनामुक्तशरीरारम्भकत्वं नोपपद्यते इतिहेतोरपि शरीराणामेकभूतप्रकृतिकत्वं स्वीकार्यमिति भूलोकीयं शरीरं पार्थिवम्= पृथिवीमात्रप्रकृतिकमिति सिद्धमित्यर्थः ॥ २९ ॥

॥ इति शरीरविवेचनम् समाप्तम् ॥

क्रमप्राप्तमिन्द्रियविवेचनमारभते- अथेति, प्रमेयक्रमश्च "आत्मशरीरेन्द्रिय" इति प्रमेयोद्देशसूत्रे द्रष्टव्यः । विकल्पयति- किमिति, आव्यक्तिकानि= आहङ्कारिकाणि= अहङ्कारोत्पन्नानि, सांख्यमतेऽव्यक्तस्यैव मूलकारणत्वादाव्यक्तिकानीन्द्रियाणि, भौतिकानि= पृथिव्यादिभूतजन्यानि वेति संशयः । संशयकारणं जिज्ञासते- कुत इति । सूत्रेणोत्तरमाह- कृष्णेति, कृष्णसारे= कनीनिकाख्ये नेत्रगोलके सति उपलम्भात्= रूपोपलब्धिर्भवति असति च न भवतीति अन्वयव्यतिरेकाभ्यां कृष्णसारस्य चक्षुरिन्द्रियत्वं प्राप्तम्- रूपग्राहकस्यैव चक्षुरिन्द्रियत्वस्वीकारात्. कृष्णसारश्च भौतिक एव- रूपादिलक्षणभूतगुणविशिष्टत्वात् तथा च भौतिकश्चतुर्गोलक एव चक्षुरिन्द्रियं न तदतिरिक्तम् एवं घ्राणादिष्वपि योज्यमिति बौद्धपक्षः, अत्र "कृष्णसारमेव चक्षुरिति बौद्धाः" इतितात्पर्यटीका । व्यतिरिच्य= पृथग्भूय= कृष्णसारात् पृथग्भूतस्योपलम्भो भवति न तु कृष्णसारसंलग्नस्य कज्जलादेः. इन्द्रियं च संयुक्तग्राहकम् अन्यथा व्यवहितस्यापि ग्रहणं स्यात् तत्र यदि कृष्णसार इन्द्रियं स्यात्तदा स्वसंयुक्तं गृह्णीयादेव न च कृष्णसारसंयुक्तस्य ग्रहणं भवतीति न कृष्णसार इन्द्रियं किं तु तदतिरिक्तमेवेन्द्रियं, तदतिरिक्तमपि किं भौतिकं वाऽऽहङ्कारिकं वेति संशय इतिसूत्राशयः, सूत्राक्षरैस्तु कृष्णसारे इन्द्रियत्वसंशयः प्रतिपाद्यते, किं वा सूत्रस्य प्रथमदलेन भौतिकत्वं प्राप्तम्- भूतगुणविशिष्टत्वात् द्वितीयदलेन च दूरस्थग्रहणाद् विभुत्वं तेन चाहङ्कारिकत्वमिन्द्रियाणां प्राप्तम्- भौतिकानां विभुत्वासंभवादित्याशयः ।

व्याचष्टे- कृष्णसारमिति, रूपादिभूतगुणयुक्तत्वाद् भौतिकम्, तस्मिन्= कृष्णसारे, अनुपहते= विद्यमाने इत्यन्वयव्यतिरेकाभ्यां चक्षुर्गोलकस्य भौतिकस्येन्द्रियत्वं प्राप्तम् । द्वितीयपक्षमाह- व्यतिरिच्येति, कृष्णसारं व्यतिरिच्य= पृथग्भूय= कृष्णसारापेक्षया पृथगवस्थितस्य, कृष्णसारप्राप्तस्य= कृष्णसारसंलग्नस्य कज्जलादेः । स्वाभिप्रायमाह- न चेति, अप्राप्यकारित्वम्= असंयुज्य ग्राहकत्वं= असंयुक्तग्राहकत्वं चेन्द्रियाणां नास्त्येव- व्यवहितग्रहणाभावात् । पर्यवसितमाह- तदिदमिति, इदम्= कृष्णसारं व्यतिरिच्य स्थितस्य ग्रहणम्, अभौतिकत्वे= आहङ्कारिकत्वे, यदीन्द्रियं भौतिकं स्यात्तदा दूरस्थस्य ग्रहणं न स्यात्- भौतिकस्य विभुत्वाभावेन दूरस्थेन सह संयोगासंभवात्. यदा चाहङ्कारिकं तदा तु विभुत्वाद् दूरस्थेनापि संयोगसंभवाद् दूरस्थग्रहणं संभवति, संयुक्तग्राहकत्वं चेन्द्रियाणां नियतमेवेत्यर्थः । उपसंहरति- एवमिति, कृष्णसारे रूपादीनां भूतधर्माणामुपलब्धिः, विभुत्वस्य चाहङ्कारधर्मस्योत्करीत्योपलब्धिरिति हेतोरिन्द्रियेषु भौतिकत्वाऽऽहङ्कारिकत्वयोः संशय इत्यर्थः ॥३०॥

अभौतिकानीत्याह, कस्मात् ?—

महदणुग्रहणात् ॥ ३१ ॥

महदिति— महत्तरं महत्तमं चोपलभ्यते यथा न्यग्रोधपर्वतादि; अण्विति— अणुतरमणुतमं च गृह्यते यथा न्यग्रोधधानादि, तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते— भौतिकं हि यावत् तावदेव व्याप्नोति अभौतिकं तु विभुत्वात् सर्वव्यापकमिति ॥ ३१ ॥

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम्. इदं खलु—

रश्म्यर्थसंनिकर्षविशेषात् तद्ग्रहणम् ॥ ३२ ॥

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च संनिकर्षविशेषाद् भवति यथा प्रदीपरश्मेरर्थस्य चेति, रश्म्यर्थसंनिकर्षश्च आवरणलिङ्गः— चक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति ॥ ३२ ॥

---

अत्र सांख्यमतेन पूर्वपक्षमाह— अभौतिकानीति, आहङ्कारकाणीन्द्रियाणीत्यर्थः । अभौतिकत्वे हेतुं जिज्ञासते— कस्मादिति । सूत्रेण हेतुमाह— महदिति, महतोऽणोश्च विषयस्य ग्रहणादभौतिकानीत्यन्वयः, संयुक्तग्राहकत्वमिन्द्रियाणां नियतं तत्र भौतिकत्वपक्षे इन्द्रियापेक्षया महतो विषयस्येन्द्रियेण व्यापनं न संभवतीति महद्ग्राहकत्वं न स्यादेवं सूक्ष्मत्वाभावात् सूक्ष्मग्राहकत्वमपि न स्यात्, आहङ्कारिकत्वपक्षे त्विन्द्रियाणां विभुत्वेन महदणुविषयव्यापनसंभवादयं दोषो नास्तीति महदण्वोर्ग्रहणमुपपद्यते इत्यभौतिकानीन्द्रिणीति सूत्रार्थः । वस्तुतस्तु कृष्णसारं व्यतिरिच्यावस्थितस्य ग्रहणादभौतिकत्वं वक्तव्यमासीत् । व्याचष्टे— महदिति, किंचित् महद् यथा घटादि किंचिन्महत्तरं यथा वटवृक्षादि किंचिन्महत्तमं यथा पर्वतादि. तत्सर्वमिन्द्रियेणोपलभ्यते, किंचिदणु यथाऽऽम्रबीजादि किंचिदणुतरं यथा गोधूमादि किंचिदणुतमं यथा न्यग्रोधधानादि= वटबीजादि तदपि सर्वमिन्द्रियेणोपलभ्यते इत्यन्वयः । उपसंहरति— तदिति, तदुभयम्= महच्चाणु चोपलभ्यमानं चक्षुषो भौतिकत्वं बाधते । अत्र हेतुमाह— भौतिकमिति, भौतिकं हि वस्तु यावत्= यत्परिमाणविशिष्टं भवति तावत्= तत्परिमाणविशिष्टमेव पदार्थं व्याप्नोति यथा वितस्तिपरिमितः पटो वितस्तिपरिमितमेव भूभागादिकं व्याप्नोति न न्यूनमधिकं वा तथा चक्षुरपि भौतिकं सत् स्वपरिमाणविशिष्टमेव पदार्थं व्याप्नुयात् तेन तादृशमेव गृह्णीयात् न न्यूनाधिकं न चैवमस्ति, अभौतिकम्= आहङ्कारिकं तु विभुत्वात् सर्वव्यापकं सत् सर्वग्राहकं संभवतीत्यभौतिकमेवेत्यर्थः, एवमन्येषामपीन्द्रियाणामाहङ्कारिकत्वं विज्ञेयम्— विषयदेशप्राप्तेरिन्द्रियत्वसामान्याच्चेतिभावः ॥ ३१ ॥

उक्तं निराकरोति— नेति, महदणुग्रहणमात्रादिन्द्रियाणामभौतिकत्वं विभुत्वं च नोपपद्यते इत्यन्वयः । इदम्= महदणुग्रहणं हि चक्षूरश्मेः पदार्थस्य च संयोगादेव भवति न त्वभौतिकत्वाद् विभुत्वाच्चेत्येवं सूत्रेणान्वयः । सूत्रेण पूर्वपक्षं परिहरति— रश्मीति, चक्षूरश्मेः पदार्थेन सह संनिकर्षविशेषात्= संयोगविशेषात् तद्ग्रहणम्= महदणुग्रहणं भवति. रश्म्यर्थसंयोगश्चेन्द्रियाणां भौतिकत्वेपि संभवति यथा भौतिकस्य प्रदीपस्य रश्मेः पदार्थेन संयोगो भवत्येव, रश्म्यर्थसंयोगं विना प्रकाशकत्वे व्यवहितस्यापि प्रकाशकत्वं स्याद् न चैवमस्ति, रश्मेश्च संकोचविकासशालित्वाद् महदणुव्यापकत्वं नानुपपन्नमिति भौतिकानीन्द्रियाणीति सूत्रार्थः । महता सह संयोगापेक्षयाऽणुना संयोगस्य विलक्षणत्वादेव सूत्रे संनिकर्षविशेषादित्युक्तम् । व्याचष्टे— तयोरिति, न विभुत्वादितिशेषः । दृष्टान्तमाह— यथेति, यथा प्रदीपरश्मेरर्थस्य च संनिकर्षविशेषात् संनिकृष्टस्य ग्रहणं भवतीत्यन्वयः । रश्म्यर्थसंनिकर्षस्यानुमापकमाह— रश्म्यर्थेति, आवरणमेव लिङ्गमस्येत्यावरणलिङ्गः रश्म्यर्थसंनिकर्षः, उपपादयति— चक्षुष इति, यथा प्रदीप-

आवरणानुमेयत्वे सतीदमाह—

**तदनुपलब्धेरहेतुः ॥ ३३ ॥**

रूपस्पर्शवद्धि तेजः महत्त्वादनेकद्रव्यवत्त्वाद् रूपवत्त्वाच्चोपलब्धिरिति प्रदीपवत् प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति ॥ ३३ ॥

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३४ ॥**

संनिकर्षप्रतिषेधार्थेनाऽऽवरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नाऽसावऽभावं प्रतिपादयति यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य ॥ ३४ ॥

---

रश्मिरावृतं न प्रकाशयति तथा चक्षूरश्मिरप्यावृतं न प्रकाशयति तेन ज्ञायते चक्षूरश्मेः पदार्थेन संयोगे सत्येव पदार्थप्रकाशो भवतीति रश्म्यर्थसंनिकर्षः सिद्धः, आवरणं च प्रतिबन्धकत्वादेव रश्म्यर्थसंनिकर्षस्यानुमापकं भवतीत्यर्थः । वस्तुतस्तु 'अनावरणलिङ्गः' इतिवक्तव्यमासीत् अनावृतस्य प्रकाशो भवति आवृतस्य च न भवतीति अनावरणं रश्म्यर्थसंनिकर्षस्यानुमापकमिति स्यात् । यद्यप्यभौतिकत्वपक्षेपि रश्म्यर्थसंनिकर्ष उपपद्यते तथाप्यभौतिकत्वेन विभुत्वं प्राप्नोति तेन चावृतेनापि पदार्थेन संयोग उपपद्यते इत्यावृतस्यापि प्रकाशः स्यादेव विभोश्च रश्मिरपि विभुरेव स्यादिति रश्मेरपि व्यवहितेन संयोगः स्यादेष न चावृतप्रकाशो भवतीति विभुत्वं निवर्तते ततश्चाभौतिकत्वमपि निवर्तते इत्याशयस्तथा च वार्तिकम्- "व्यापकत्वादिन्द्रियस्य न कुड्यादेरावरणसामर्थ्यमस्तीति" इति ॥ ३२ ॥

अग्रिमसूत्रमवतारयति- आवरणेति, रश्म्यर्थसंनिकर्षस्यावरणानुमेयत्वे पूर्वपक्षी सूत्रेण दोषमाहेत्यर्थः । तदिति- तत्= तस्य= चक्षूरश्मेः प्रत्यक्षेणानुपलब्धेः "रश्म्यर्थ" इतिपूर्वोक्तो हेतुरहेतुः= साध्यसाधको न भवतीत्यन्वयः, यदि चक्षूरश्मिः स्यात्तदा प्रदीपरश्मिवत् प्रत्यक्षेणोपलभ्येत न चोपलभ्यते ततश्च चक्षूरश्मेरभावः प्राप्तस्तेन च रश्म्यर्थसंनिकर्षस्याप्यभावः प्राप्तस्तथा चेन्द्रियस्यैव पदार्थेन संयोगो वक्तव्यः स च विभुत्वमन्तरेण नोपपद्यते दूरस्थेनाविभोः संयोगासंभवाद् इति विभुत्वं प्राप्तं तेनेन्द्रियाणामभौतिकत्वं प्राप्तमिति सूत्रार्थः । व्याचष्टे- रूपेति, तेजः= चक्षूरश्मिस्तैजसत्वादेव रूपस्पर्शवान् संभवति तेजोमात्रस्य रूपस्पर्शवत्त्वनियमात् तथा च चक्षूरश्मिलक्षणतेजसः महत्त्वादिकारणेभ्य उपलब्धिः स्यादेवेत्यन्वयः, चक्षुषो महत्त्वात्तद्रश्मेरपि महत्त्वं कारणबहुत्वादेवानेकद्रव्यत्वं रूपवत्त्वं च स्पष्टमेव, प्रत्यक्षकारणान्याह- महत्त्वादिति, महत्त्वादिकं च संमिलितं प्रत्यक्षकारणमिति यदि चक्षूरश्मिः स्यात्तदा तेजस्त्वेन रूपवत्त्वात् महत्त्वाच्च प्रदीपरश्मिवत् प्रत्यक्षत उपलभ्येत न चोपलभ्यते इति विज्ञायते नास्ति चक्षूरश्मिरिति विषयप्रकाशकत्वमिन्द्रियस्यैव प्राप्तमित्युक्तरीत्या ह्यभौतिकत्वं प्राप्तमित्यर्थः । अत्र- "महत्त्वं तावत् कारणमहत्त्वबहुत्वप्रचयेभ्यः, अनेकद्रव्यत्वमपि कारणबहुत्वादेव, रूपस्पर्शवद्धि तेज इति नाऽरूपं तत्, एवमशेषोपलब्धिकारणसंनिधाने सति येन नोपलभ्यते तेन गम्यते नास्तीति" इति वार्तिकम् ॥ ३३ ॥

उक्तं निराकरोति- नेति, अनुमीयमानस्य पदार्थस्य या प्रत्यक्षतोऽनुपलब्धिः साऽभावहेतुः= अभावसाधिका न भवति यथा 'वह्निमान् धूमात्' इत्यत्र वन्हेः, तथा चावरणेन रश्म्यर्थसंनिकर्षस्य तेन चक्षूरश्मेरनुमानं भवति चक्षूरश्मि विना तत्संनिकर्षासंभवादिति सिद्धश्चक्षूरश्मिरिति तत्संनिकर्षेण पदार्थप्रकाशे सिद्धे पूर्वोक्तरीत्या भौतिकत्वमिन्द्रियाणां सिद्धमिति सूत्रार्थः । व्याचष्टे- संनिकर्षेति, संनिकर्षप्रतिषेधार्थेन= संनिकर्षप्रतिबन्धकेनावरणाख्यलिङ्गेन रश्म्यर्थसंनिकर्ष उक्तरीत्यानुमीयते तेन चक्षूरश्मिरनुमीयते इत्यनुमानसिद्धस्य चक्षूरश्मेः प्रत्यक्षानुपलब्ध्या नाऽभावः संभवतीत्यन्वयः । अत्र दृष्टान्तमाह- यथेति, यथा चन्द्रोपरिभागस्य पृथिव्यधोभागस्य चानुमानसिद्धस्य प्रत्यक्षानुपलब्ध्यापि नाऽभावः संभवति तथानुमानसिद्धस्य चक्षूरश्मेरपि नाऽभावः संभवति ततश्चोक्तरीत्येन्द्रियाणां भौतिकत्वं सिद्धमित्यर्थः ॥३४॥

## द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च, महदनेकद्रव्यवच्च विपक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते स्पर्शस्तु शीतो गृह्यते, तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्पेते, तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते स्पर्शस्त्वस्योष्ण उपलभ्यते तस्य द्रव्यस्यानुबन्धाद् ग्रीष्मवसन्तौ कल्पेते ॥ ३५ ॥

यत्र त्वेषा भवति—

## अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥ ३६ ॥

यत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते, रूपविशेषस्तु यद्भावात् क्वचिद्रूपो-

---

ननु यद्यस्ति चक्षूरश्मिस्तदा किं न प्रत्यक्षेणोपलभ्यते ? इत्याशङ्क्य चक्षूरश्मेरुपलब्ध्यभावोपपादनार्थमुपलब्धिप्रयोजकमाह— द्रव्येति, द्रव्यगुणयोर्धर्मभेदात्= धर्मविशेषादुपलब्धिनियमः= प्रत्यक्षेणोपलब्धिर्भवतीत्यन्वयः, द्रव्यधर्मो महत्त्वादिः गुणधर्म उद्भूतत्वादिस्तादृशधर्मविशेषात्. तथा च यत्र द्रव्ये महत्त्वादिकमुद्भूतरूपादिकं च भवति तस्य प्रत्यक्षं संभवति. यत्र च गुणे उद्भूतत्वं भवति तस्य गुणस्य प्रत्यक्षं संभवति नान्यस्य यथा परमाणुतद्रूपयोस्तथा च चक्षूरश्मौ उद्भूतरूपादिकं प्रत्यक्षप्रयोजकं नास्तीति हेतोरेव सतोपि चक्षूरश्मेः प्रत्यक्षोपलब्धिर्न भवतीति सूत्रार्थः । व्याचष्टे— भिन्न इति, द्रव्यधर्मो महत्त्वादिः, गुणधर्मश्च उद्भूतत्वादिः स च परस्परं भिन्न एवेति सूत्रे द्रव्यगुणधर्मभेदादित्युक्तम्. द्रव्यगुणयोर्धर्माणां भेदात् तत्तद्गुणपुरस्कारेणैवोपलब्धिनियमो भवतीत्यर्थः । सतोपि द्रव्यस्यानुपलब्धिमुदाहरति— महदिति, आप्यं द्रव्यम्= जलद्रव्यं महदेव अनेकद्रव्यवत्= अनेकद्रव्यकारणकम्= अनेकपरमाणुकारणकं च भवति तत्र महत्त्वमनेकद्रव्यत्वं च प्रत्यक्षप्रयोजकमस्ति अथापि तदेवाप्यं द्रव्यं विपक्तावयवम्= विश्लथावयवम्= विभक्तावयवं सत् शीतकाले व्याप्तं प्रत्यक्षतो नोपलभ्यते तस्य स्पर्शस्तु शीतो गृह्यते तेन गृहीतेन स्पर्शेनैव तादृशाप्यद्रव्यस्यानुमानं भवति तस्यैवानुबन्धात्= व्यापनाद् हेमन्तशिशिरौ ऋतू कल्पेते= प्रवर्तेते= शीतकालः संपद्यते, तथा च यथा तादृशाप्यद्रव्यस्य प्रत्यक्षेणानुपलब्धावपि सत्त्वं स्वीक्रियते तथा प्रत्यक्षेणानुपलब्धस्यापि चक्षूरश्मेः सत्त्वं स्वीक्रियते इत्यर्थः । उदाहरणान्तरमाह— तथेति, तथाविधम्= महद् अनेकद्रव्यवच्च तैजसं द्रव्यम्= तेजोद्रव्यं प्रत्यक्षयोग्यमपि अनुद्भूतरूपं सत् ग्रीष्मकाले व्याप्तं सह रूपेण नोपलभ्यते= न तत् तेजोद्रव्यमुपलभ्यते न च तस्य रूपमप्युपलभ्यते तस्य तेजोद्रव्यस्य स्पर्शस्तूष्ण उपलभ्यते तेन स्पर्शेनैव तस्यानुमानं भवति. तस्यैव तेजोद्रव्यस्यानुबन्धात्= व्यापनाद् ग्रीष्मवसन्तौ ऋतू कल्पेते= प्रवर्तेते न चोपलब्ध्यभावादसत्त्वं तस्य भवति. तथा च यथा तादृशतेजोद्रव्यस्य प्रत्यक्षेणानुपलब्धावपि सत्त्वं स्वीक्रियते तथा प्रत्यक्षेणानुपलब्धावपि चक्षूरश्मेः सत्त्वं स्वीक्रियते, प्रत्यक्षाभवश्च प्रत्यक्षप्रयोजकानां महत्त्वादीनामभावेदेवेति न प्रत्यक्षाभावाच्चक्षूरश्मेरभावः संभवतीत्यर्थः ॥ ३५ ॥

अग्रिमसूत्रमवतारयति— यत्रेति, एषा= चाक्षुषप्रत्यक्षेणोपलब्धिर्यत्र भवति तत्रानेकद्रव्यसमवायाद् रूपविशेषाच्च भवतीति सूत्रेण सहान्वयः । रूपोपलब्धिप्रयोजकमाह— अनेकेति, अनेकद्रव्यसमवायात्= अनेकपरमाणुकारणकद्रव्यसमवायात्= महद्द्रव्यसमवायात् रूपविशेषात्= उद्भूतत्वाच्च रूपस्योपलब्धिर्भवतीत्यन्वयः, महद्द्रव्यसमवेतस्योद्भूतस्य च रूपस्य प्रत्यक्षं भवति यथा घटादिरूपस्येत्यर्थः, द्रव्यस्य च चाक्षुषप्रत्यक्षं रूपप्रत्यक्षद्वारैव भवतीति यत्र द्रव्ये महत्त्वम् उद्भूतरूपं च भवति तस्य प्रत्यक्षं चाक्षुषं भवति नान्यस्य. चक्षूरश्मौ चोद्भूतं रूपं नास्तीतिहेतोरेव सतोपि चक्षूरश्मेः प्रत्यक्षं न जायते तद्रूपस्य चानुद्भूतत्वात् प्रत्यक्षं न जायते इतिसूत्रार्थः । अत्र— "अत्र रूपविशेषग्रहणेन रूपधर्म उद्भवसमाख्योऽभिधीयते" इति वार्तिकम् । व्याचष्टे— यत्रेति, यत्र घटादौ रूपम्= उद्भूतरूपं द्रव्यम्= द्रव्यत्वम्=

पलब्धिः यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः स रूपधर्मोयमुद्भवसमाख्यात इति, अनुद्भूतरूपश्चायं नायनो रश्मिः तस्मात् प्रत्यक्षतो नोपलभ्यते इति । दृष्टश्च तेजसो धर्मभेदः- उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथाऽऽदित्यरश्मयः, उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षम् ( तेजः ) यथा प्रदीपरश्मयः, उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽबादिसंयुक्तं तेजः, अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति ॥ ३६ ॥

## कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३७ ॥

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्पते तथेन्द्रियाणि व्यूढानि, विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः, रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था,

महत्त्वं च भवति तत्= तादृशः आश्रयः किं वा महत्त्वोद्भूतरूपयोराश्रयः चाक्षुपप्रत्यक्षत उपलभ्यते, किं वा यत्र रूपम्= उद्भूतरूपं भवति तदाश्रयो द्रव्यं प्रत्यक्षत उपलभ्यते इत्यन्वयः, अत्र 'उद्भूतरूपाश्रयो द्रव्यं प्रत्यक्षत उपलभ्यते' इति वक्तव्यमासीत्, वस्तुतस्तु रूपप्रत्यक्षप्रयोजकनिरूपणप्रकरणे वाक्यमिदमसंगतमेव । रूपविशेषपदार्थमाह- रूपेति, रूपविशेषः= रूपधर्मं उद्भूतत्वं यत्= यस्योद्भूतत्वस्य भावात्= सत्त्वात् क्वचिद् घटादौ रूपोपलब्धिर्भवति- घटादिरूपस्योद्भूतत्वात् तेन घटादेरप्युपलब्धिर्भवति, यत्= यस्योद्भूतत्वस्याभावात् क्वचित् कस्यचिद् द्रव्यस्य= उदाहृततैजसादिद्रव्यस्यानुपलब्धिर्भवति- तत्रानुद्भूतत्वाद्रूपस्यानुपलब्धिस्तत एव द्रव्यस्यानुपलब्धिः- रूपप्रत्यक्षे सत्येव द्रव्यस्य चाक्षुपप्रत्यक्षसंभवात्, उपसंहरति- स इति, य उद्भवसमाख्यातः= उद्भूतत्वनामको रूपधर्मः स एवात्र सूत्रे रूपविशेषपदार्थः= रूपविशेषशब्देन ग्राह्य इत्यन्वयः । प्रकृतमाह- अनुद्भूतेति, उक्तरीत्योद्भूतरूपविशिष्टस्य चाक्षुपप्रत्यक्षं भवतीति सिद्धं चक्षूरश्मिश्च नोद्भूतरूपविशिष्ट इतिहेतोरेव सन्नपि न प्रत्यक्षेणोपलभ्यते इत्यन्वयः, तस्मात्= अनुद्भूतरूपत्वात् । तैजसश्चक्षूरश्मिः कथमनुद्भूतरूपः स्यादित्याशङ्क्य तेजसः प्रकारविशेषानाह- दृष्ट इति, अत्र- "चतुर्विधं च तेजो भवति" इतिवार्तिकम्, उदाहरति- उद्भूतेति, १ तेजोद्रव्याणामादित्यरश्मीनां रूपस्पर्शयोरुद्भूतत्वाच्चाक्षुषं स्पार्शनं च प्रत्यक्षं भवति, २ तेजोद्रव्याणां प्रदीपरश्मीनां रूपस्योद्भूतत्वात् चाक्षुपं प्रत्यक्षं भवति स्पर्शस्य चानुभूतत्वात् स्पार्शनं प्रत्यक्षं न भवति, ३ अबादिसंयुक्तम्= तप्तजलादिप्रविष्टं तेज उद्भूतस्पर्शं भवतीति तस्य स्पार्शनं प्रत्यक्षं भवति. अनुद्भूतरूपं च भवतीति तस्य चाक्षुपं प्रत्यक्षं न भवति- चाक्षुपप्रत्यक्षं प्रत्युद्भूतरूपस्य कारणत्वात्, तथा च कस्यांचिदवस्थायां जाठराग्नेरिव ४ चक्षूरश्मेरपि रूपस्पर्शयोरनुद्भूतत्वादेव प्रत्यक्षं न जायते न त्वऽसत्त्वादिति प्रत्यक्षेणानुपलभ्यमानोपि चक्षूरश्मिः सिद्ध इत्याह- अनुद्भूत इति, अनुद्भूतौ रूपस्पर्शौ यस्य स इत्यन्वयः ॥ ३६ ॥

ननु चक्षूरश्मेरनुद्भूतस्पर्शरूपत्वे किं कारणमित्याशङ्क्य तत्कारणमाह- कर्मेति, इन्द्रियाणां व्यूहः= उत्पादः पुरुषार्थतन्त्रः= भोगाधीनः= भोगार्थः कर्मकारितः= कर्मकृतश्चास्ति तत्र यदि चक्षूरश्मे रूपस्पर्शौ उद्भूतौ स्यातां तदा तैजसस्पर्शस्योष्णत्वनियमात्तादृशोष्णस्पर्शस्य सदा संसर्गात् चक्षुर्गोलकं दह्येत तथा च सर्वान्धत्वप्रसङ्गः स च प्रत्यक्षविरुद्धः, उद्भूतरूपस्य च चक्षुर्गोलकेन सदा संसर्गापत्त्या निद्रा न स्यादितिहेतोरेव भोगसिद्ध्यर्थमेव च चक्षूरश्मे रूपस्पर्शावनुद्भूतौ स्त इतिसूत्राशयः । अत्र- "रूपस्पर्शानभिव्यक्तिश्च व्यवहारक्लृप्त्यर्था- यदि नायनो रश्मिरुद्भूतस्पर्शो भवेत् तेन दृश्यविशेषेऽनेकरश्मिसंनिपाते सति द्रव्यं दह्येत" इत्यादि वार्तिकम् । अत्र "व्यूहः= रचनाविशेषः" इतिवृत्तिः । व्याचष्टे- यथेति, चेतनस्य विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्चाऽर्थः= भोगः यथा= येन प्रकारेण कल्पते= संपद्यते= संभवति तथा= तेन प्रकारेणेन्द्रियाणि व्यूढानि= उत्पन्नानि प्राप्तानि वा सन्ति तथा चेन्द्रियाणां स्वरूपं तथैव वक्तव्यं यथा भोगस्य व्याघातो विरोधो वा न स्यादित्यर्थः । चक्षूरश्मिप्रयोजनमाह- विषयेति, चाक्षुपस्य रश्मेश्च व्यूहः= उत्पादः प्राप्तिर्वा विषयप्राप्त्यर्थः= विषयोपलब्ध्यर्थ एव- प्रयोजनान्तरासंभ-

द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्था, सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारितः पुरुषार्थतन्त्रः । कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति ॥ ३७ ॥

## अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः ॥ ३८ ॥

यश्चावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मः– न भूतानि व्यभिचरति. नाऽभौतिकं प्रतिघातधर्मकं दृष्टमिति । अप्रतिघातस्तु व्यभिचारी– भौतिकाभौतिकयोः समानत्वादिति । यदपि मन्यते– प्रतिघाताद् भौतिकानीन्द्रियाणि अप्रतिघाताद्ऽभौतिकानीति प्राप्तम्. दृष्टश्चाऽप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः, तन्न युक्तम्, कस्मात् ?. यस्माद् भौतिकमपि न प्रतिहन्यते– काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्, स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः ॥ ३८ ॥

---

वात् तथा च चक्षूरश्मौ रूपस्पर्शयोरनभिव्यक्तिः= अनुद्भूतता व्यवहारस्य क्लृप्त्यर्था= सिद्ध्यर्थास्ति, चक्षूरश्मे रूपस्पर्शयोरुद्भूतत्वे व्यवहारसिद्धिर्न संभवति, चक्षूरश्मे रूपस्योद्भूतत्वेऽन्धकारेपि प्रकाशं विनैव घटादिकमुपलभ्येत वस्तुतोन्धकाराभाव एव स्यात्. स्पर्शस्य चोद्भूतत्वे तत्संबन्धेन पटादिकं नेत्रगोलकं च दह्येत दाहाभावेपि तप्तं स्यादेव सर्वं चैतद् प्रत्यक्षविरुद्धमिति चक्षूरश्मे रूपस्पर्शावनुद्भूताविति स्वीक्रियते इत्यर्थः । आवरणोपपत्तिमाह– द्रव्येति, द्रव्यविशेषे= कुड्यादौ किं वाऽऽवृतघटादौ चक्षूरश्मेः प्रतीघातात्= निरोधात् आवरणोपपत्तिः= कुड्यादीनामावरणत्वोपपत्तिरपि व्यवहारार्था= प्रत्यक्षसिद्धव्यवस्थार्था, अन्यथाऽऽवृतस्यापि घटादेः प्रत्यक्षं स्यादित्यर्थः । उक्तप्रयोजकं सर्वत्रातिदिशति– सर्वेति, इन्द्रियवत् सर्वेषामपि द्रव्याणाम्= पदार्थानां यो विश्वरूपः= विविधरूपो व्यूहः= उत्पादः स कर्मकृतो भोगाधीनश्चेति भोगाविरोधेनैव तत्तत्पदार्थस्वरूपं निरूपणीयमित्याशयः । कर्मस्वरूपमाह– कर्मेति । भोगार्थम्= सुखदुःखादिभोगसाधनम् ॥ ३७ ॥

इन्द्रियाणां भौतिकत्वमाह– अव्यभिचारादिति, प्रतिघातः= केनचित् पदार्थेन निरोधः भौतिकधर्मः= भौतिकपदार्थधर्मः– अव्यभिचा[त्]. अव्यभिचरितस्य तद्धर्मत्वं च स्पष्टमेव यथा गन्धस्य पृथिवीधर्मत्वम्, इन्द्रियाणां च चक्षुरादीनां कुड्यादिभिः प्रतिघातः= निरोधः स्पष्ट एव– कुड्यादिभिर्व्यवहितस्य घटादेर्ग्रहणासंभवादिति प्रतिघातधर्मवत्त्वादिन्द्रियाणां भौतिकत्वम्= भूतकार्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे– यश्चेति, कुड्यादिलक्षणावरणस्योपलम्भात्= प्राप्त्या= व्यवधानेन द्रव्यविशेषे= तादृशावरणेनावृते घटादौ इन्द्रियाणां यः प्रतिघातः= निरोधः स भौतिकधर्म इत्यन्वयः, अत्र हेतुमाह– नेति, भूताऽव्यभिचारित्वादित्यर्थः, भौतिकपदार्थमात्रस्य निरोधवत्त्वदर्शनात्. तथा च प्रतिघातधर्मवत्त्वादिन्द्रियाणामपि भौतिकत्वं सिद्धम् । विपक्षे बाधकमाह– नेति, अभौतिकं प्रतिघातधर्मकं न दृष्टमितीन्द्रियाणामपि प्रतिघातवत्त्वादभौतिकत्वं न संभवतीत्यर्थः । नन्विन्द्रियाणामप्रतिघातेन भौतिकत्वं किं न स्यादित्याशङ्क्याऽप्रतिघातस्य व्यभिचारित्वमाह– अप्रतिघात इति, अप्रतिघातः= अनिरोधस्तु भौतिकेपि भवति यथा प्रदीपरश्मेः काचादिनाऽप्रतिघातः, अभौतिकेपि भवति यथा वाय्वाकाशादौ– सर्वत्र प्रवेशादिति भौतिकाभौतिकयोस्तुल्यत्वादप्रतिघातो व्यभिचारीति न तेनेन्द्रियाणां भौतिकत्वं वाऽभौतिकत्वं वा संभवतीत्यर्थः । किं वा ननु काचाद्यन्तरितस्यापीन्द्रियैः प्रकाशदर्शनादप्रतिघातः प्राप्त इति तादृशाप्रतिघातेनेन्द्रियाणामभौतिकत्वमेव किं न स्यादित्याशङ्क्याह– अप्रतिघातस्त्विति । ननु यथेन्द्रियाणां प्रतिघातात् भौतिकत्वं प्राप्नोति तथैवाऽप्रतिघातादभौतिकत्वमपि प्राप्नोति अप्रतिघातश्चेन्द्रियधर्मः प्रत्यक्ष एव– काचाद्यन्तरितस्य= काचादिव्यवहितस्योपलब्धेः, यदि तत्र प्रतिघातः स्यात्तदा काचाद्यन्तरितं नोपलभ्येत उपलभ्यते तु अतोऽप्रतिघातधर्मवत्त्वमिन्द्रियाणां सिद्धं तेनाऽभौतिकत्वं प्राप्तमिति मतमनुवदति– यदपीति । परिहरति– तन्नेति । उक्तस्यायुक्तत्वे हेतुं जिज्ञासते– कस्मादिति ।

उपपद्यते चानुपलब्धिः कारणभेदात्—

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥

यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाऽभिभूतः, एवं महदनेकद्रव्यवत्त्वाद् रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः, तच्च व्याख्यातम्- अनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति, अत्यन्तानुपलब्धिश्चाभावकारणम् ॥३९॥

यो हि ब्रवीति- लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यते इति, तस्यैतस्स्यात्—

न- रात्रावप्यनुपलब्धेः ॥ ४० ॥

---

उत्तरमाह- यस्मादिति, भौतिकानामपि प्रदीपादिरश्मीनामप्रतिघातो दृश्यते- काचाद्यन्तरितस्य प्रकाशनात्, भौतिकस्यापि पाचकस्य तेजसोऽप्रतिघातो दृश्यते- स्थाल्याद्यन्तरितस्य पाकात्. तथा चेन्द्रियाणामप्रतिघातेनाऽभौतिकत्वं न संभवति- अप्रतिघातस्य भौतिकेष्वपि दर्शनादित्यऽप्रतिघातेनापीन्द्रियाणां भौतिकत्वस्य बाधो न संभवतीत्यर्थः। "प्रदीपरश्मीनाम्" इति संबन्धसामान्ये षष्ठी वस्तुतस्तु 'प्रदीपरश्मिभिः' इति वक्तव्यमासीत् ॥ ३८ ॥

"तदनुपलब्धेरहेतुः३३" इत्यनेन सतो नेत्ररश्मेरनुपलब्ध्यनुपपत्तिः प्रतिपादिता तत्खण्डनमारभते- उपपद्यते इति, उपलब्धियोग्यस्यापि सतोप्यनुपलब्धिः कारणभेदात्= कारणविशेषादुपपद्यते यथा दिने सूर्यप्रकाशाभिभवेन तारकाणामनुपलब्धिर्भवतीत्यन्वयः। मध्येति- यथोल्काप्रकाशस्योपलब्धियोग्यस्यापि मध्यन्दिने= मध्याह्नकाले सूर्यप्रकाशकृताभिभवादनुपलब्धिरुपपद्यते तथा सतोपि तत्= तस्य= चक्षूरश्मेरनुद्भूतरूपत्वादनुपलब्धिरुपपद्यते- उद्भूतरूपस्पर्शानामेव द्रव्याणां प्रत्यक्षदर्शनादिति नाऽनुपलब्ध्या चक्षूरश्मेरभावः संभवतीति सूत्रार्थः। व्याचष्टे- यथेति, अनेकद्रव्येण समवायात्= अनेकावयववत्त्वात्= महत्त्वात् रूपविशेषात्= उद्भूतरूपवत्त्वाच्चोपलब्धिः= चाक्षुषं प्रत्यक्षं भवति तत्रोल्काप्रकाशे महत्त्वादिलक्षणे प्रत्यक्षकारणे सत्यपि मध्यन्दिने सूर्यप्रकाशेनाभिभवादुल्काप्रकाशो यथा नोपलभ्यते इत्यन्वयः, प्रकृतमाह- एवमिति, प्रत्यक्षप्रयोजकं पुनर्वक्ति- महदिति, महदनेकद्रव्यवत्त्वात्= महदनेकावयववत्त्वात्= महत्त्वादिति यावद् रूपविशेषाच्चोपलब्धिर्भवतीति नियमस्तत्र चक्षूरश्मौ महत्त्वस्य रूपस्य च प्रत्यक्षकारणस्य सत्त्वेपि निमित्तान्तरतः= उद्भूतरूपरहितत्वात् चक्षूरश्मिर्नोपलभ्यते नैतावता तदभावः संभवतीत्यर्थः। उक्तं निमित्तान्तरमाह- तदिति, तत्= अनुपलब्धिकारणं निमित्तान्तरमनुद्भूतरूपत्वमनुद्भूतस्पर्शत्वं च "द्रव्यगुणधर्मभेदात् ३५" इतिसूत्रे व्याख्यातमित्यन्वयः, व्याख्यातामिप्रायमाह- अनुद्भूतेति, अनुद्भूतरूपस्य द्रव्यस्य चाक्षुषेण अनुद्भूतस्पर्शस्य च स्पार्शनेन प्रत्यक्षेणानुपलब्धिर्भवतीत्यन्वयः। अभावकारणीभूतामनुपलब्धिमाह- अत्यन्तेति, अत्यन्तानुपलब्धिः= सर्वैः प्रमाणैर्याऽनुपलब्धिः सैवाऽभावसाधिका भवति चक्षूरश्मेश्चात्यन्तानुपलब्धिर्नास्ति- उक्तानुमानेन लभ्यमानत्वात्, तथा हि प्रतिघातेन चक्षुषो भौतिकत्वं सिद्धं भौतिकस्य च स्वरश्मिं विना महदणुव्यापकत्वं न संभवति तेन महदणुग्राहकत्वं न संभवति. चक्षुषो महदणुग्राहकत्वं च प्रत्यक्षमेव तेन महदणुव्यापकत्वं प्राप्तं तच्च रश्मिं विना न संभवतीत्यनुमानेन चक्षूरश्मिः सिद्ध इति न तस्यात्यन्तानुपलब्धिरुपपद्यते येनाभाव आपद्येतेत्यर्थः ॥३९॥

पूर्वपक्षिकृतां प्रतिवन्दीमुपस्थापयति- यो हीति, ननु चक्षूरश्मिवत् लोष्टप्रकाशोपि स्वीकार्यस्तस्यानुपलब्धिश्च सूर्यप्रकाशकृताभिभवादुपपद्यते. तत्र त्वया यथानुपलब्धिकारणे सत्यपि न लोष्टप्रकाशः स्वीक्रियते तथा मयापि चक्षूरश्मिर्न स्वीक्रियते इति पूर्वपक्षाशयः। अत्राह- तस्येति, तस्य= उक्त-

अपि= अनुमानतोऽनुपलब्धेरिति, एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति. न त्वेवं चाक्षुषो रश्मिरिति ॥ ४० ॥

उपपन्नरूपा चेयम्—

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥**

बाह्येन प्रकाशेनाऽनुगृहीतं चक्षुर्विषयग्राहकम्. तदभावेऽनुपलब्धिः, सति च प्रकाशानुग्रहे रूपस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषा ग्रहणम्, रूपस्याऽनुद्भूतत्वात् सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा, तत्र यदुक्तम्— "तदनुपलब्धेरहेतुः३३" इति. एतदयुक्तम् ॥ ४१ ॥

कस्मात् पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यते ? इति.

**अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥**

---

पूर्वपक्षिणः एतत्= उच्यमानं सूत्रमेवोत्तरमस्तीत्यन्वयः। उक्तं परिहरति— नेति, लोष्टप्रकाशो नोपपद्यते— रात्रावप्यनुपलब्धेः, यदि लोष्टप्रकाशः सन्नेव दिने सूर्यप्रकाशकृताभिभवान्नोपलभ्येत तदा रात्रौ सूर्यप्रकाशकृताभिभवस्याभावादुपलभ्येतैव न च रात्रावप्युपलभ्यतेऽतो ज्ञायते लोष्टप्रकाशो नास्त्येव चक्षूरश्मिस्त्वनुमानेन रात्रौ च प्रत्यक्षेणाप्युपलभ्यते इति न तस्य लोष्टप्रकाशवदऽभाव उपपद्यते इति सूत्रार्थः। व्याचष्टे— अपीति, सूत्रघटकापिशब्देन लोष्टप्रकाशस्यानुमानतोप्यनुपलब्धिर्ग्राह्या. चक्षूरश्मेस्त्वनुमानत उपलब्धिरेवेति व्यतिरेक इत्यर्थः। उपसंहरति— एवमिति, एवम्= उक्तप्रकारेणानुमानादिना। चक्षूरश्मिस्त्वेवम्= अत्यन्तानुपलब्धिविषयो नास्ति— उक्तानुमानेन लभ्यमानत्वादिति सिद्ध एवेत्यर्थः ॥४०॥

अग्रिमसूत्रमवतारयति, उपपन्नेति, उपपन्नरूपा चेयम्= चक्षूरश्मेरनुपलब्धिरनभिव्यक्तिः= अभिव्यञ्जकासंभवादित्यन्वयः। अनुपलब्धिमुपपादयति— बाह्येति, घटादिविषयाणामुद्भूतरूपवतां बाह्यप्रकाशेन= सूर्यादिप्रकाशेन चक्षुषोऽनुग्रहादुपलब्धिर्भवति— बाह्यप्रकाशेनाऽभिव्यक्तिसंभवात्. चक्षूरश्मेश्चानुद्भूतरूपत्वेन बाह्यप्रकाशेनाप्यभिव्यक्तिर्न संभवतीति हेतोरेव सतोपि चक्षूरश्मेरनुपलब्धिरुपपन्नेति न तदभावः संभवतीति सूत्रार्थः। व्याचष्टे— बाह्येनेति, बाह्यप्रकाशेन= सूर्यादिप्रकाशेन, अनुगृहीतम्= सहकृतम्, भवतीतिशेषः। तदभावे= बाह्यप्रकाशकृतानुग्रहाभावे घटादीनामप्युपलब्धिर्न भवति। उपलब्धिप्रयोजकमाह— सतीति, रूपस्पर्शयोः पुरस्कारेणैव द्रव्यप्रत्यक्षं भवतीति तयोरुपलब्धौ सत्यामेव द्रव्यप्रत्यक्षं संभवतीत्यर्थः, तदाश्रयस्य= उद्भूतरूपस्पर्शयोराश्रयस्य। अनुपलब्धिप्रयोजकमाह— रूपस्येति, रूपाश्रयस्यापि द्रव्यस्य सा चेयमनुपलब्धिः रूपस्याऽनुद्भूतत्वे रूपानभिव्यक्तितो दृष्टा= सिद्धास्तीति चक्षूरश्मे रूपस्याप्यनुद्भूतत्वेनाऽभिव्यक्तेरभावादेव चक्षूरश्मेः सतोपि रूपविशिष्टस्यापि चानुपलब्धिरुपपद्यते इति नाभावः प्रसज्यते इत्यर्थः। उपसंहरति— तत्रेति, तथा च तदनुपलब्धेरित्यादिकथनमयुक्तमेव— उक्तरीत्या चक्षूरश्मेः सत्त्वस्यानुपलब्धेश्चोपपादितत्वादित्यर्थः ॥ ४१ ॥

ननु चक्षूरश्मेरनुपलब्धिकारणमनुद्भूतरूपत्वमुक्तं तत्राभिभव एवानुपलब्धिकारणं किं नोच्यते इति जिज्ञासते— कस्मादिति, अभिभवस्यानुपलब्धिकारणत्वे रात्रावुपलब्धिः स्यादेव— अभिभावकस्य सूर्यप्रकाशादेरभावादित्याशयः। सूत्रेणोत्तरमाह— अभिव्यक्ताविति, अभिव्यक्तौ= उद्भूतरूपवत्त्वे सिद्धे सति किं वा बाह्यप्रकाशाभावकाले प्रत्यक्षे सिद्धे सति बाह्यप्रकाशकाले प्रत्यक्षाभावेनाऽभिभवात्= अभिभवः कल्प्यते मध्यन्दिनोल्काप्रकाशस्येव. चक्षूरश्मिश्च नान्धकारेपि प्रत्यक्षो भवति येन बाह्यप्रकाशेन तस्याभिभवः कल्प्येत, उल्का तु रात्रौ प्रकाशते इति दिने तस्या अभिभवः कल्प्यते. प्रत्यक्षाभावेन चक्षूरश्मेरभावस्तु न संभवति— चक्षुषः स्वरश्मिद्वारैवोक्तरीत्या महदणुग्राहकत्वसंभवात्, प्रा

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः, यद् रूपमभिव्यक्तम्= उद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवः- विपर्यये ऽभिभवाभावात्= अनुद्भूतरूपत्वाच्चाऽनुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाऽभिभूयते इति, एवमुपपन्नम्- अस्ति चाक्षुषो रश्मिरिति ॥ ४२ ॥

## नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

दृश्यते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनां तेन शेषस्यानुमानमिति। जातिभेदवदिन्द्रियभेद इति चेत् ?, धर्मभेदमात्रं चानुपपन्नम्- आवरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥ ४३ ॥

च चक्षूरश्मेरनुपलब्धिकारणमनुद्भूतरूपत्वमेव न त्वभिभव इति सूत्रार्थः। अभिव्यक्तौ= पदार्थस्याभिव्यक्तिसंभवे एवाऽभिभवात्= अभिभवसंभवात् यथोल्काया इति च सूत्रान्वयः। व्याचष्टे- बाह्येति, चार्थः= सूत्रघटकचकारस्यार्थः, सूत्रघटकचकारेण बाह्यप्रकाशानुग्रहनिरपेक्षता ग्राह्येत्यर्थः, यस्योल्कादिप्रकाशस्य स्वयंप्रकाशत्वेन बाह्यप्रकाशानुग्रहापेक्षा स्वाभिव्यक्तौ न भवति तस्य मध्यन्दिने प्रत्यक्षाभावोऽभिभवादुपपद्यते नान्यस्य बाह्यप्रकाशसापेक्षस्येत्यर्थः। निगमयति- यदिति, अभिव्यक्तपदार्थमाह- उद्भूतमिति, तद्विषयः= एतादृशोल्कादिप्रकाशविषयोऽभिभवः संभवतीत्यन्वयः। विपर्यये बाधकमाह- विपर्ययेति, उद्भूतमपि घटादिरूपं बाह्यप्रकाशसापेक्षत्वादेवाभिभवविषयो न भवति- न हि यद् यस्य प्रकाशकं भवति तदेव तस्याभिभावकं भवति, प्रकाशरूपत्वात्स्वाभिव्यक्तौ बाह्यप्रकाशनिरपेक्षोपि चक्षूरश्मिरनुद्भूतरूपत्वादेवाभिभवविषयो न भवति- उद्भूतरूपपदार्थस्यैवाभिभवसंभवादित्यर्थः। अभिभवाऽविषयमाह- अनुद्भूतेति, अनुद्भूतरूपत्वादनुपलभ्यमानं चक्षूरश्म्यादिकं नाभिभूयते. बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं घटादिकमपि नाभिभूयते इत्यन्वयः। उपसंहरति- एवमिति, एवम्= उक्तप्रकारेण चक्षूरश्मिरस्तीतिसिद्धम्- अन्यथा चक्षुषः स्वरूपेण महदणुव्यापनासंभवाद् महदणुग्राहकत्वं न स्यात्, चक्षूरश्मिश्च रात्रावपि नोपलभ्यते इति न तस्याभिभवः संभवतीति तदनुपलब्धिकारणमनुद्भूतरूपत्वमेव न त्वभिभव इत्यर्थः। वस्तुतस्तु नैतद्युक्तं रात्रौ प्रकारविशेषेण स्वचक्षूरश्मेः प्रत्यक्षसंभवादित्यनुसधेयम् ॥४२॥

चक्षूरश्मेः प्रत्यक्षमुदाहरति- नक्तमिति, नक्तञ्चरणाम्= रात्रौ संचारकुशलानां मार्जारादीनामन्धकारे स्थितानां चक्षूरश्मिर्दृश्यते प्रत्यक्षेण तेन तदन्येषामपि चक्षुषो रश्मिरनुमीयते- अस्मदादिचक्षुः रश्मिविशिष्टं चक्षुष्ट्वात् मार्जारचक्षुर्वदिति सिद्धः चक्षूरश्मिरिति सूत्रार्थः। व्याचष्टे- दृश्यन्ते इति, नक्तम्= रात्रौ, नक्तञ्चराणाम्= रात्रौ संचारचतुराणां वृषदंशप्रभृतीनाम्= मार्जारप्रभृतीनामित्यन्वयः। पर्यवसितमाह- तेनेति, तेन= मार्जारादिचक्षूरश्मिदर्शनेन शेषस्य= मनुष्यादिचक्षूरश्मेरनुमानं भवति चक्षुष्ट्वसामान्यादित्यर्थः। ननु यथा मनुष्यत्वादिजात्यपेक्षया मार्जारत्वादिजातिभेदः स्पष्टस्तथा मनुष्यादिचक्षुरपेक्षया मार्जारादिचक्षुरपि विलक्षणमेवेति मार्जारादिचक्षुषो रश्मिविशिष्टत्वसंभवेपि मनुष्यादिचक्षुषो रश्मिविशिष्टत्वं नापद्यते इत्याशङ्कते- जातीति। उत्तरमाह- धर्मेति, धर्मिणः साम्ये धर्मभेदो नोपपद्यते, जातिधर्मिभूतस्य शरीरस्य भेदेन मार्जारत्वादिमनुष्यत्वादिजातिभेद उपपद्यते, यदा हि मनुष्यादीनां मार्जारादीनां च धर्मिभूतं चक्षुर्न विलक्षणम्- सर्वधर्मसाम्यात्तदा मार्जारादीनां चक्षुः रश्मिविशिष्टं मनुष्यादीनां चक्षुश्च रश्मिरहितमिति धर्ममात्रभेदो नोपपद्यते, धर्मभेदस्य धर्मिभेदाधीनत्वात् चक्षुर्लक्षणधर्मिणश्च भेदोऽनुपपन्न एवेत्यर्थः। उक्ते हेतुमाह- आवरणस्येति, प्राप्तिप्रतिषेधार्थस्य= इन्द्रियार्थसंनिकर्षनिरोधकस्यावरणस्योभयत्र दर्शनादित्यन्वयः, यथाऽऽवरणे सति मार्जारस्यापि तदावृतप्रत्यक्षं न भवति तथा मनुष्यादीनामप्यावृतप्रत्यक्षं न भवतीति सर्वत्र साम्यात् रश्मावपि साम्यं प्राप्तं तेन मार्जारादिचक्षुष इव मनुष्यादिचक्षुषामपि रश्मिविशिष्टत्वं प्राप्तमिति न चक्षूरश्मेरभावः संभवतीत्यर्थः।

इन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वानुपपत्तिः, कस्मात् ?—

**अप्राप्य ग्रहणम्— काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥**

तृणादि सर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्टम्, अव्यवहितेन संनिकृष्यते. व्याहन्यते वै प्राप्तिर्व्यवधानेनेति, यदि च रश्म्यर्थसंनिकर्षो ग्रहणहेतुः स्यात् ? न व्यवहितस्य संनिकर्ष इत्यग्रहणं स्यात्, अस्ति चेयं काचाऽभ्रपटलस्फटिकान्तरितोपलब्धिः सा ज्ञापयति— अप्राप्यकारीणीन्द्रियाणि ( इति ). अत एवाऽभौतिकानि— प्राप्यकारित्वं हि भौतिकधर्म इति ॥ ४४ ॥

न—

**कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥**

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥ ४५ ॥

---

अत्र— "यथा वृषदंशप्रभृतीनां कुड्यादिभी रश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेवेति" इतिवार्तिकम् ॥ ४३ ॥

काचादिना व्यवहितस्यापि प्रत्यक्षं भवति तेन चक्षुरर्थसंनिकर्षस्य प्रत्यक्षकारणत्वं नोपपद्यते अन्यथा काचादिना व्यवहितस्य प्रत्यक्षं न स्यात्— व्यवधानेन चक्षुरर्थसंनिकर्षस्यासंभवात् तथा च न चक्षूरश्मेरपेक्षा— संनिकर्षार्थमेव चक्षूरश्मेः कल्पनादिति पूर्वपक्षमुत्थापयति— इन्द्रियेति । उक्ते हेतुं जिज्ञासते— कस्मादिति । पूर्वपक्षी सूत्रेणोत्तरमाह— अप्राप्येति, अभ्रपटलम्= अभ्रकखण्डः, काचाद्यन्तरितस्य= काचाद्यभ्यन्तःस्थितस्य= काचादिव्यवहितस्यापि चक्षुषोपलब्धिर्भवति तेन चक्षुषः अप्राप्य= असंयुज्य पदार्थग्रहणमनुमीयते यदि चक्षुः स्वसंयुक्तस्यैव ग्राहकं स्यात्तदा काचाद्यन्तरितस्य ग्रहणं न स्यात्— संयोगासंभवात्, यदा चासंयुक्तस्यापि ग्रहणं संभवति तदा चक्षूरश्मिर्न स्वीकार्यः— संयोगार्थमेव तत्स्वीकारस्यावश्यकत्वादिति सूत्रार्थः । व्याचष्टे— तृणादीति, तृणादि सर्पत्= जङ्गमम्= काचाद्यधोभागे निक्षेप्तुं योग्यं द्रव्यं काचे= काचाधोभागे अभ्रपटले= अभ्रकखण्डाधोभागे वा प्रतिहतम्= निक्षिप्तं दृष्टम्= चक्षुषा दृश्यते एव, संनिकर्षश्चाऽव्यवहितेन संभवति. व्यवधानेन तु प्राप्तिः= संनिकर्षो व्याहन्यते तथा च काचाद्यन्तर्निक्षिप्तेन चक्षुस्संनिकर्षो न संभवति चक्षुषा ग्रहणं तु तस्य भवतीति ज्ञायतेऽसंनिकृष्टस्यापि चक्षुषा ग्रहणं भवतीति नेन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वमुपपद्यते इत्यर्थः । विपक्षे बाधकमाह— यदीति, चक्षूरश्मेरर्थस्य च यः संनिकर्षस्तस्य प्रत्यक्षकारणत्वे काचाद्यन्तरितस्य व्यवहितत्वेन संनिकर्षाभावाद् ग्रहणं न स्यात् चक्षुषेत्यन्वयः, भवति च काचाद्यन्तरितस्यापि उपलब्धिः= चक्षुषा ग्रहणमिति सा= उपलब्धिः 'अप्राप्यकारीणि= असंयुक्तग्राहकाणीन्द्रियाणि' इति ज्ञापयति, असंयुक्तग्राहकत्वे च सिद्धे चक्षूरश्मेरपेक्षा नास्ति— विषयसंयोगार्थमेव तत्स्वीकारस्यावश्यकत्वादिति चक्षूरश्मेरसंभवः प्राप्त इत्यर्थः । उक्तन्यायमन्यत्रातिदिशति— अत इति, अतः= अप्राप्यकारित्वात्= असंयुक्तग्राहकत्वादेवाऽभौतिकानीन्द्रियाणीत्यपि प्राप्तमित्यन्वयः । उक्ते हेतुमाह— प्राप्येति, प्राप्यकारित्वं भौतिकपदार्थधर्मोऽस्ति, इन्द्रियेषु च प्राप्यकारित्वनिवृत्त्या भौतिकत्वमपि निवृत्तमित्यर्थः ॥ ४४ ॥

इन्द्रियाणामुक्तमप्राप्यकारित्वं निराकरोति— नेति । अत्र सूत्रमाह— कुड्येति, इन्द्रियाणां प्राप्यकारित्वस्य= संयुक्तग्राहकत्वस्य किं वेन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वे यः प्रतिषेध उक्तः स नोपपद्यते इत्यप्रतिषेध एव— कुड्यान्तरितानुपलब्धेः= कुड्यादिना व्यवहितस्य चक्षुरादिना प्रत्यक्षं न जायते तेन ज्ञायते स्वसंयुक्तग्राहकाणीन्द्रियाणि तेनेन्द्रियार्थसंनिकर्षस्य प्रत्यक्षकारणत्वमपि सिद्धम् अन्यथा कुड्यादिना व्यवहितस्यापि प्रत्यक्षं स्यादिति सूत्रार्थः । व्याचष्टे— अप्राप्येति, इन्द्रियाणामप्राप्यकारित्वे=

प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात् ?—

**अप्रतीघातात् संनिकर्षोपपत्तिः ॥ ४६ ॥**

न च काचोऽभ्रपटलं वा नायनरश्मिं विष्टभ्नाति सोऽप्रतिहन्यमानः संनिकृष्यते इति ॥४६॥

यश्च मन्यते— न भौतिकस्याऽप्रतिघात इति, तन्न—

**आदित्यरश्मेः स्फटिकान्तरितेपि दाह्येऽविघातात् ॥ ४७ ॥**

'आदित्यरश्मेरविघातात्' 'स्फटिकान्तरितेप्यविघातात्' 'दाह्येऽविघातात्' अविघातादिति च पदाभिसंबन्धाद् वाक्यभेद इति. यथावाक्यं चार्थभेद इति, आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते— अविघातात् कुम्भस्थमुदकं तपति, प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति १। स्फटिकान्तरितेपि प्रकाशनीये प्रदीपरश्मी-

---

स्वाऽसंयुक्तग्राहकत्वे कुडयान्तरितस्याऽनुपलब्धिर्न स्यात् किं तूपलब्धिरेव स्यात् न चैवमस्ति, तथा च कुडयान्तरितस्यानुपलब्ध्या प्राप्यकारित्वमिन्द्रियाणां सिद्धं तेन भौतिकत्वमपि सिद्धम्— प्राप्यकारित्व नियमस्य भौतिकधर्मत्वात्तथेन्द्रियार्थसंनिकर्षस्य प्रत्यक्षकारणत्वमपि सिद्धमित्यर्थः ॥ ४५ ॥

पूर्वपक्षी प्रतिबन्द्या प्रत्यवतिष्ठते— प्राप्येति, यदीन्द्रियाणां नियमेन प्राप्यकारित्वं स्यात्तदा काचाद्यन्तरितस्योपलब्धिर्न स्यात्— काचाद्यन्तरितेनेन्द्रियसंयोगासंभवादित्यन्वयः। अस्योत्तरं सूत्रेणाह— अप्रतीघातादिति, काचादिस्वच्छद्रव्येण चक्षूरश्मेः प्रतिघातः= प्रतिबन्धः= व्यवधानम्= निरोधो न भवतीति काचाद्यन्तरितेनापि सह चक्षूरश्मेः संनिकर्ष उपपद्यते इति न काचाद्यन्तरितोपलब्ध्या इन्द्रियाणामऽप्राप्यकारित्वं प्राप्नोतीति प्राप्यकारित्वं सिद्धमिति सूत्रार्थः। व्याचष्टे— न चेति, विष्टभ्नाति= प्रतिबध्नाति= निरुणद्धि, सः= चक्षूरश्मिः काचादिना चाऽप्रतिहन्यमानः= अनिरुद्धः काचाद्यन्तरितेन संनिकृष्यते= संयुक्तो भवति तेन संयोगेन तस्य ग्रहणं भवतीति इन्द्रियाणां प्राप्यकारित्वं सिद्धं तेन भौतिकत्वम् इन्द्रियार्थसंनिकर्षस्य प्रत्यक्षकारणत्वं च सिद्धम् ॥ ४६ ॥

परिहर्तुं पूर्वपक्षमनुवदति— यश्चेति, भौतिकस्याऽप्रतिघातो न भवतीति इन्द्रियाणां चक्षूरश्मेर्वा यः काचादिभिरप्रतिघात उक्तः स भौतिकत्वपक्षे नोपपद्यते. अप्रतिघातपक्षे च भौतिकत्वं नोपपद्यते— भौतिकस्य प्रतिघातदर्शनादित्यर्थः। एतत्परिहरति— तन्नेति, भौतिकस्य प्रतिघातनियमो नोपपद्यते— भौतिकस्यापि सूर्यरश्मेरप्रतिघातदर्शनादित्यर्थः। उक्तपरिहारे सूत्रेण दृष्टान्तमाह— आदित्येति, काचाद्यन्तरितेपि दाह्ये पदार्थे सूर्यरश्मेरविघातात्= अप्रतिघातात्, सूर्यरश्मेर्भौतिकत्वं स्पष्टमेवेति भौतिकेनापि सूर्यरश्मिना काचाद्यन्तरितस्य दाहः= तापो भवत्येवेति तेन भौतिकस्याप्यऽप्रतिघातः सिद्धस्तथा च चक्षुषो भौतिकत्वेपि चक्षूरश्मेः काचादिभिरप्रतिघात उपपन्नस्तेन प्राप्यकारित्वमिन्द्रियाणां सिद्धं तेन च भौतिकत्वमपि सिद्धमिति सूत्रार्थः। व्याचष्टे— आदित्येति, सूत्रघटकस्य "अविघातात्" इतिपदस्य सूत्रघटकपदत्रयेण प्रत्येकमन्वयात् त्रिधा वाक्यं विभक्तं तदेवाह— अविघातादिति, सूत्रघटकस्य "अविघातात्" इतिपदस्य "आदित्यरश्मेः" इत्यादिपदत्रयेण प्रत्येकमभिसंबन्धात्= अन्वयादित्यर्थः, यथावाक्यम्= प्रतिवाक्यम्। "आदित्यरश्मेरविघातात्" इति प्रथमवाक्यं व्याचष्टे— आदित्येति, कुम्भादिषु= कुम्भादिना, न प्रतिहन्यते= न निरुध्यते, पर्यवसितमाह— अविघातादिति, पिहितमुखेपि कुम्भे स्थितमुदकमादित्यरश्मिस्तापयतीति स्पष्टमेव, उक्ते विनिगमनामाह— प्राप्ताविति, प्राप्तौ= संयोगे= जलरश्मिसंयोगे सत्येव द्रव्यान्तरगुणस्य= सूर्यरश्मिगुणभूतस्योष्णस्पर्शस्य जलेन ग्रहणं भवति तेन गृहीतोष्णस्पर्शेन च शीतस्पर्शस्याभिभवो भवति तदनेन भौतिकस्य सूर्यरश्मेः कुम्भादिना प्रतिघाताभावः सिद्ध इत्यर्थः। द्वितीयवाक्यं व्याचष्टे— स्फटिकान्तरितेपीति, प्रकाशनीये चित्रादौ स्फटिकान्तरितेपि सति प्रदीपरश्मीनां प्रतिघातो न भवति

नामप्रतिघातः अप्रतिघातात् प्राप्तस्य ग्रहणमिति २। भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते तत्राऽविघातात् प्राप्तिः प्राप्तौ तु दाहः— नाऽप्राप्यकारि तेज इति ३। "अविघातात्" इति च केवलं पदमुपादीयते, कोयमविघातो नाम ?, अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याऽविष्टम्भः= क्रियाहेतोरप्रतिबन्धः= प्राप्तेरप्रतिषेध इति, दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्शग्रहणम्. न चेन्द्रियेणासंनिकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः, दृष्टौ च प्रस्पन्दपरिस्रवौ, तत्र काचाभ्रपटलादिभिर्नायनरश्मेरप्रतिघाताद् विभिद्याऽर्थेन सह संनिकर्षादुपपन्नं ग्रहणमिति ॥ ४७ ॥

## न— इतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

---

किं तु स्फटिकान्तरितस्यापि प्रकाशो भवत्येव. तत्राऽप्रतिघातात् प्राप्तस्य= प्रदीपरश्मिसंयुक्तस्य ग्रहणम्= प्रत्यक्षं जायते तदनेन भौतिकस्य प्रदीपरश्मेः स्फटिकादिना प्रतिघाताभावः सिद्ध इत्यर्थः। तृतीयवाक्यं व्याचष्टे— भर्जनेति, आग्नेयेन तेजसा= अग्नितेजसा, स्पष्टमिदमुदाहरणम्। स्वाभिप्रायमाह— तत्रेति, अविघातात्= अग्नितेजसो भर्जनकपालेनाऽप्रतिघातात् दाह्येन प्राप्तिः= संयोगो भवति. प्राप्तौ= तादृशसंयोगे च सति दाह्यस्य दाहो भवतीत्यन्वयः, उक्ते हेतुमाह— नेति, अप्राप्यकारि= स्वासंयुक्तदाहकं तेजो न भवतीति भर्जनकपालस्थस्य दाह्येन तेन दाह्येन सह तेजस्संयोगः सिद्धस्तदनेन भौतिकस्यापि तेजसोऽप्रतिघातः सिद्धः एवं चक्षूरश्मेरपि भौतिकत्वेपि काचादिभिरप्रतिघातस्तेन काचाद्यन्तरितेन संयोगः सिद्ध इत्यर्थः। अविघातपदार्थनिरूपणमारभते— अविघातादिति, यदि सूत्रकारेणाविघातस्य विशेषणान्तरमुक्तं स्यात्तदा तत्साहाय्येनाविघातपदार्थनिर्णयः स्यादपि न चैवं कृतमित्यविघातपदार्थनिरूपणापेक्षा प्राप्तेत्यर्थः। अविघातपदार्थमाह— अव्यूह्येति, अव्यूह्यमानावयवेन= अविनश्यत्सान्तरावयवेन व्यवधायकेन भर्जनकपालादिद्रव्येण द्रव्यस्य= तेजःप्रभृतेः सर्वतः= सर्वात्मनाऽविष्टम्भः अनिरोध एवाऽविघातपदार्थ इत्यर्थः, अविष्टम्भपदार्थमाह— क्रियेति, दाहादिक्रियाहेतोर्दाह्येन संयोगस्याप्रतिबन्ध एवाविष्टम्भपदार्थः। अप्रतिबन्धपदार्थमाह— प्राप्तेरिति, संयोगस्यानिरोध इत्यर्थः। उदाहरति— दृष्टमिति, बहिः= जलकलशोपरि हस्तसंयोगेन शीतस्पर्शग्रहणं स्पष्टमेव। स्वाभिप्रायमाह— न चेति, द्रव्यसंयोगाभावे तद्गुणस्य स्पर्शस्योपलब्धिर्न संभवतीति शीतस्पर्शोपलब्ध्या त्वचो जलेन संयोगः सिद्धस्ततः कलशेनेन्द्रियस्य भौतिकस्याप्यऽप्रतिघातः सिद्ध इत्यर्थः। कलशादीनां यथान्तःप्रवेशे प्रतिबन्धकत्वं न भवति तथान्तस्स्थद्रव्यस्य बहिर्निस्सरणेपि प्रतिबन्धकत्वं न भवतीत्याह— दृष्टाविति, प्रस्पन्दः= जलस्य कलशाद्बहिर्निर्गमनम्, अधिकः प्रस्पन्द एव परिस्रवः। उपसंहरति— तत्रेति, प्रदर्शितदृष्टान्तवत् चक्षूरश्मेरपि काचादिभिरप्रतिघातात् विभिद्य= काचाद्यन्तः प्रविश्य प्रकाश्येन संयोगो जायते तेन तस्य ग्रहणं भवतीति इन्द्रियाणां प्राप्यकारित्वं तेन च भौतिकत्वं सिद्धमित्यर्थः। "ग्रहणम्" इत्यत्र 'प्राप्यकारित्वम्' इति वक्तव्यमासीत्। अत्र— "यस्य द्रव्यस्य= भर्जनकपालादेरवयवा न व्यूहन्ते= पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्यान्तरजनकसंयोगोत्पादनं व्यूहनं तन्न क्रियते तस्य द्रव्यस्य भर्जनकपालादेरव्यूह्यमानस्यावयवव्यूहनमवयविनोपीति अव्यूह्यमानस्येत्युक्तम्, तस्य भर्जनकपालादेरन्तरावयवैर्योऽभिसंबन्धो वह्नेः सोऽप्रतिघातः, एतदुक्तं भवति— सान्तरत्वादवयविद्रव्याणां तदविनाशेनाग्नेर्योऽनुप्रवेशः सोऽप्रतिघात इति, प्रवेशेऽप्रतिघातमुक्त्वा निस्सरणेप्यविघातमाह (दृष्टाविति)" इति तात्पर्यटीका ॥४७॥

पूर्वपक्षी परिहरति— नेति, इन्द्रियाणां काचादिभिरप्रतिघातो न युक्तः— अन्यथा काचादिभिरप्रतिघातेनेन्द्रियाणामभौतिकत्वं स्यात् कुड्यादिभिः प्रतिघातेन भौतिकत्वं च स्यादिति इतरेतरधर्मयोः= भौतिकत्वाभौतिकत्वधर्मयोः प्रसङ्गः प्राप्तः स च न युक्तः— भौतिकत्वाभौतिकत्वयोः परस्परं विरोधादिति तादृशप्रसङ्गनिवृत्त्यर्थमिन्द्रियाणां कुड्यादिभिरिव काचादिभिरपि प्रतिघातः स्वीकार्यस्तथा च काचा-

काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः, कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतीघात इति प्रसज्यते, नियमे कारणं वाच्यमिति ॥ ४८ ॥

## आदर्शोदकयोः प्रसादस्वाभाव्याद् रूपोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥

आदर्शोदकयोः प्रसादः= रूपविशेषः स्वो धर्मः- नियमदर्शनात्, प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम्, यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन संनिकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यम् आदर्शरूपानुग्रहात् तन्निमित्तं भवति- आदर्शरूपोपघाते तदभावात्. कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति, एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातः- द्रव्यस्वभावनियमादिति ॥ ४९ ॥

## दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥

---

द्यन्तरितस्य संयोगाभावेपि ग्रहणादप्राप्यकारित्वमिन्द्रियाणां प्राप्तं तेन चाभौतिकत्वं प्राप्तं भौतिकानां प्राप्यकारित्वनियमादिति सूत्रार्थः । व्याचष्टे- काचेति, इन्द्रियाणामप्रतिघातेनाऽभौतिकत्वं प्रतिघातेन च भौतिकत्वं प्रसज्यते इत्याशयः। नियमे= उक्तप्रतिघाताप्रतिघातयोरेकतरपक्षग्रहणे, कारणम्= नियामकं वक्तव्यम्। स्पष्टमन्यत् ॥ ४८ ॥

उक्तस्योत्तरमाह- आदर्शेति, आदर्शोदकयोः प्रसादस्वाभाव्यात्= स्वच्छत्वाद् आदर्शे उदकादौ च रूपस्य= स्वरूपस्य= प्रतिबिम्बस्योपलब्धिर्यथा भवति तथा तत्= तस्य= काचाद्यन्तरितस्योपलब्धिर्भवतीति काचादिभिश्चक्षूरश्मेः प्रतिघातो न भवति कुड्यादिभिश्च भवतीत्यत्र वस्तुस्वरूपमेव नियामकं तथा च भौतिकस्यापि प्रतिघाताप्रतिघातयोर्व्यवधायकवस्तुस्वभावेनोपपन्नत्वात् चक्षूरश्मेर्भौतिकत्वे न काचादिना प्रतिघातापत्तिरिति न चोक्तेतरेतरधर्मप्रसङ्गश्च, चक्षूरश्मेर्भौतिकत्वे चक्षुषोपि भौतिकत्वं स्पष्टमेव प्राप्तमिति सूत्रार्थः । व्याचष्टे- आदर्शेति, प्रसादः= स्वच्छता, प्रसादपदार्थमाह- रूपेति, स्वो धर्मः= आदर्शादिधर्मः । प्रसादस्यादर्शादिधर्मत्वे हेतुमाह- नियमेति, आदर्शादिषु नियमेन प्रसाददर्शनात् प्रसादस्याऽऽदर्शादिधर्मत्वं सिद्धम् । प्रसादधर्ममाह- प्रसादस्येति, वा= च, रूपोपलम्भनम्= प्रतिबिम्बग्रहणम् । उदाहरति- यथेति, आदर्शोपरि प्रतिघातेन परावृत्तो नयनरश्मिर्ग्रीवास्थमेव स्वमुखं गृह्णाति तदेव प्रतिबिम्बग्रहणमित्युच्यते इति शास्त्रेषु प्रसिद्धमेव, न तु दर्पणे स्वमुखग्रहणं भवति- दर्पणे स्वमुखस्यासंभवात्, तच्च प्रतिबिम्बग्रहणम् आदर्शरूपस्यानुग्रहादाऽऽदर्शरूपसत्त्वे एव भवतीति तन्निमित्तम्= आदर्शरूपनिमित्तकं भवतीत्यन्वयः, उक्ते हेतुमाह किं वा व्यतिरेकव्याप्तिमाह- आदर्शेति, तदभावात्= प्रतिबिम्बग्रहणाभावात् । कुड्यादिस्वभावमाह- कुड्यादिष्विति, उक्तप्रसादस्याभावादितिशेषः । पर्यवसितमाह- एवमिति, उक्ते हेतुमाह- द्रव्येति, द्रव्यस्य= व्यवधायकपदार्थस्याऽस्वच्छत्वे प्रतिघातः स्वच्छत्वेचाऽप्रतिघात इति, चक्षूरश्मेर्भौतिकत्वेपि व्यवधायकपदार्थस्य स्वच्छत्वाऽस्वच्छत्वाभ्यां प्रतिघाताप्रतिघातावुपपन्नाविति नोक्तेतरेतरधर्मापत्तिप्रसङ्ग इत्यर्थः ॥ ४९ ॥

वस्तुस्वभावभूतस्य प्रसादाऽप्रसादादेरन्यथाभावो न संभवतीत्याह- दृष्टेति, दृष्टानामनुमितानां च पदार्थानां पदार्थधर्माणां च 'एवं भवत' इति नियोगः= शासनम् 'एवं मा भवत' इति प्रतिषेधश्च नोपपद्यते. न हि वह्नेः 'शीतो भव' इति नियोगेन शीतत्वम् 'उष्णो मा भव' इति प्रतिषेधेन चोष्णत्वनिवृत्तिः संभवति. तथा च काचादीनामप्रतिघातकत्वधर्मस्य कुड्यादीनां च प्रतिघातकत्वधर्मस्य नियोगप्रतिषेधाभ्यां निवृत्तिर्नोपपद्यते इति भौतिकस्यापि चक्षूरश्मेः काचादिभिरप्रतिघातः कुड्यादिभिश्च प्रतिघातोप्युपपन्न इति प्रतिघाताप्रतिघाताभ्यामपि न भौतिकत्वानुपपत्तिर्न चेतरेतरधर्मापत्तिप्रसङ्ग इति

प्रमाणस्य तत्त्वविषयत्वात्, न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुम्– 'एवं भवत' इति. नापि प्रतिषेद्धुम्– 'एवं न भवत' इति, न हीदमुपपद्यते– 'रूपवद् गन्धोपि चाक्षुषो भवतु' इति. 'गन्धवद्वा रूपं चाक्षुषं मा भूत्' इति, 'अग्निप्रतिपत्तिवद् धूमेनोदकप्रतिपत्तिरपि भवतु' इति, 'उदकाऽप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूत्' इति । किं कारणम् ?, यथा खल्वर्था भवन्ति= य एषां स्वो भावः= स्वो धर्म इति तथाभूताः प्रमाणेन प्रतिपद्यन्ते इति– तथाभूतविषयकं हि प्रमाणमिति । इमौ खलु नियोगप्रतिषेधौ भवता देशितौ– काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु. कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूत्. इति, न– दृष्टानुमिताः खल्विमे द्रव्यधर्माः= प्रतिघाताप्रतिघातयोर्हि उपलब्ध्यऽनुपलब्धी व्यवस्थापिके– व्यवहितानुपलब्ध्याऽनुमीयते– कुड्यादिभिः प्रतिघातः, व्यवहितोपलब्ध्याऽनुमीयते– काचाभ्रपटलादिभिरप्रतिघात इति ॥ ५० ॥

---

सूत्रार्थः । व्याचष्टे– प्रमाणस्येति, सूत्रोक्तार्थे हेतुवाक्यमिदम्, प्रमाणस्य तत्त्वविषयत्वात्= अबाधितार्थविषयकत्वात् काचादीनां वास्तवं यत्स्वरूपं तदेव प्रमाणेन सिध्यति न तु तर्कमात्रेण दृष्टान्ताभासमात्रेण वा तद्विपर्ययः संभवति येन काचादिवत् कुड्यादीनामप्रतिघातकत्वं कुड्यादिवत् काचादीनां प्रतिघातकत्वं वा सिध्येदित्यर्थः । दृष्टानुमितेषु नियोगासंभवमाह– नेति, एवम्= प्रतिघातका अप्रतिघातका वा, अत्र 'हे अर्थाः' इतिशेषः । प्रतिषेधासंभवमाह– नापीति । नियोगासंभवमुदाहरति– नहीति, 'गन्धः चाक्षुषः= चक्षुर्ग्राह्यो भवतु' इति नियोगो नोपपद्यते । प्रतिषेधासंभवमुदाहरति– गन्धवदिति, 'रूपं चाक्षुषं मा भवतु' इति प्रतिषेधोपि नोपपद्यते, किं तु गन्धः स्वभावेन घ्राणग्राह्य एव रूपं च चक्षुर्ग्राह्यमेवेति तादृशस्वभावस्याऽन्यथाभावो न संभवतीत्यर्थः । पुनर्नियोगासंभवमुदाहरति– अग्नीति, 'अग्निप्रतिपत्तिवत्= अग्निज्ञानवाद् धूमेन जलज्ञानम्= जलसिद्धिर्भवतु' इति नियोगो नोपपद्यते, पुनर्निषेधासंभवमुदाहरति– उदकेति, 'धूमेन यथा जलसिद्धिर्न भवति तथाग्निसिद्धिरपि मा भवतु' इति प्रतिषेधोपि नोपपद्यते, किं तु धूमस्यायं स्वभाव एव यत्स्वसत्तयाग्निसत्तां गमयति जलसत्तां च न गमयतीति. तादृशस्वभावस्य चान्यथाभावो नियोगप्रतिषेधाभ्यां न संभवतीत्यर्थः । नियोगप्रतिषेधयोरनुपपत्तौ कारणं जिज्ञासते– किमिति । कारणमाह– यथेति, पदार्थो यादृशा यादृशधर्मविशिष्टाश्च भवन्ति तादृशा एव प्रमाणेन विज्ञायन्ते नान्यथाभूता इत्यर्थः । उक्ते हेतुमाह– तथाभूतेति, तथाभूतविषयकम्= यथार्थग्राहकमेव ज्ञानं प्रमाणमित्युच्यते विपरीतग्राहकत्वे तस्य प्रामाण्यमेव न स्यादित्यर्थः । पूर्वपक्षिणा नेतरेतिसूत्रभाष्ये निर्दिष्टौ नियोगप्रतिषेधावनुवदति– इमौ इति, देशितौ= निर्दिष्टौ, काचाभ्रेतिनियोगः, कुड्यादिवदिति प्रतिषेधः, अप्रतिघातो मा भूत्= प्रतिघातो भवत्वित्यर्थः । उक्तनियोगप्रतिषेधौ परिहरति– नेति, नेदमुपपद्यते इत्यर्थः । नेत्यत्र तन्नेतिवक्तव्यमासीत् । परिहारहेतुमाह– दृष्टेति, इमे= प्रतिघातकत्वादयः, द्रव्यधर्माः= कुड्यादिधर्माः । प्रतिघाताप्रतिघातयोरनुमानमाह– प्रतिघातेति, कुड्यादिभिर्व्यवहितस्यानुपलब्ध्या कुड्यादिभिश्चक्षूरश्मेः प्रतिघातोऽनुमीयते इत्यनुपलब्धिः प्रतिघातस्य व्यवस्थापिका तथा चानुपलब्ध्या व्यवस्थितस्यानुमितस्य च कुड्यादीनां प्रतिघातकत्वधर्मस्य काचादिदृष्टान्तमात्रेण परिलोपो न संभवति, काचादिभिश्च व्यवहितस्योपलब्ध्या काचादिभिश्चक्षूरश्मेरप्रतिघातोनुमीयते इत्युपलब्धिरप्रतिघातस्य व्यवस्थापिका तथा चोपलब्ध्या व्यवस्थितस्यानुमितस्य च काचादीनामप्रतिघातकत्वधर्मस्य कुड्यादिदृष्टान्तमात्रेण परिलोपो न संभवतीति भौतिकस्यापि चक्षूरश्मेः कुड्यादिभिः स्वाभाव्यात् प्रतिघातः काचादिभिश्च स्वाभाव्यादप्रतिघातः संभवतीति न भौतिकत्वानुपपत्तिर्न वा इतरेतरधर्मापत्तिप्रसङ्ग इत्यर्थः । काचकुड्यादिपदार्थधर्मेण चक्षुरादीन्द्रियाणां भौतिकत्वव्याहतिरनुपपन्नेत्याशयः ॥५०॥

॥ इत्येवमिन्द्रियाणां भौतिकत्वमुपपादितम् ॥

---

अथापि खल्वेकमिन्द्रियम् ? बहूनीन्द्रियाणि वा ? । कुतः संशयः ?—

## स्थानान्यत्वे नानात्वाद् अवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते. नानास्थानश्च सन्नेकोऽवयवी चेति. तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५१ ॥

एकमिन्द्रियम्—

## त्वगव्यतिरेकात् ॥ ५२ ॥

'त्वगेकमिन्द्रियम्' इत्याह । कस्मात् ?. अव्यतिरेकात्= न त्वचा किंचिदिन्द्रियाधिष्ठानं न प्राप्तम्— न चाऽसत्यां त्वचि किंचिद्विषयग्रहणं भवति. यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति ॥ ५२ ॥

## न— इन्द्रियान्तरार्थानुपलब्धेः ।

स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे ( च ) त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था

---

इन्द्रियाणामेकत्वानेकत्वविचारमारभते— अथापीति । संशयकारणं जिज्ञासते— कुत इति, चक्षुर्गोलकादिस्थानभेदादनेकत्वमिन्द्रियाणां स्पष्टमेवेति हेतोः संशयकारणजिज्ञासा । एकेन्द्रियपक्षे त्वगेव तत्र तत्र स्थिता रूपादिग्राहिका विज्ञेया । सूत्रेण संशयकारणमाह— स्थानेति, स्थानाऽन्यत्वे= स्थानाऽनेकत्वे तादृशनानास्थानेषु स्थितानां घटपटादीनां नानात्वात् चक्षुर्गोलकादिनानास्थानस्थत्वेनेन्द्रियाणामपि नानात्वमपि प्राप्तम्, अवयविन एकस्यापि नानास्थानत्वात्= नानास्थानस्थत्वात्= यथैकस्य घटस्यानेककपालवृत्तित्वं दृश्यते तथैकस्यापीन्द्रियस्य चक्षुर्गोलकादिनानास्थानस्थत्वं संभवतीत्येकत्वमपि प्राप्तमितिहेतोरेवेन्द्रियेषु एकत्वानेकत्वयोः संशय इति सूत्रार्थः । व्याचष्टे— बहूनीति, बहूनि= नाना= अनेकानि, यथा घटपटादयः अनेके घटा एव वापि । तदनेन चक्षुर्गोलकादिस्थानभेदेनेन्द्रियाणामनेकत्वं प्राप्तम्, अवयवी च नाना= अनेकानि स्थानानि= अधिकरणानि यस्य स नानास्थानः= स्वावयवलक्षणानेकस्थानस्थोऽप्येक एव भवतीति चक्षुर्गोलकाद्यनेकस्थानस्थेष्वपीन्द्रियेषु एकत्वं प्राप्तम्— एकस्यापीन्द्रियस्य चक्षुर्गोलकाद्यनेकस्थानेषु स्थितिसंभवादित्यर्थः । उपसंहरति— तेनेति, चक्षुर्गोलकादिस्थानानां भेद एवैतादृशसंशयस्य प्रयोजक इत्याशयः ॥ ५१ ॥

अग्रिमपूर्वपक्षसूत्रमवतारयति— एकमिति, सर्वेषामिन्द्रियाणां त्वगभिन्नत्वाद् एकमेवेन्द्रियं त्वग्लक्षणमित्यन्वयः। त्वगिति—त्वगव्यतिरेकात्= त्वगभिन्नत्वात्= त्वचः सर्वत्र व्यापकत्वात् त्वगेकमेवेन्द्रियं सा च त्वक् चक्षुर्गोलकस्था रूपं नासाग्रस्था च गन्धादिकं गृह्णातीति सूत्रान्वयः । व्याचष्टे— त्वगिति, इत्याह पूर्वपक्षीत्यन्वयः । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— अव्यतिरेकादिति, उक्तं व्याचष्टे— नेति, इन्द्रियाधिष्ठानम्= चक्षुर्गोलकादि, न प्राप्तम्= न व्याप्तमिति न किं तु व्याप्तमेव— त्वचः सर्वशरीरव्यापकत्वादित्यर्थः । त्वचो विषयग्रहणस्य च व्यतिरेकव्याप्तिमाह— न चेति । उपसंहरति— ययेति, यया= त्वचा, यस्याम्= त्वचि, सा त्वगेवैकमिन्द्रियम्— तदतिरिक्तेन्द्रियस्वीकारस्य व्यर्थत्वात्. चक्षुर्गोलकादिस्थानस्थया त्वचैव रूपादिप्रत्यक्षसंभवादित्यर्थः ॥ ५२ ॥

एकेन्द्रियवादं भाष्यकारः परिहरति— नेति, 'त्वगेकमेवेन्द्रियम्' इति यदुक्तं तन्नोपपद्यते— त्वक्सत्त्वेप्यन्धादिभिरिन्द्रियान्तराणां चक्षुरादीनां ये अर्थाः= विषया रूपादयस्तेषामनुपलब्धेः, यदि त्वगेकमेवेन्द्रियं स्यात्तदाऽन्धादेरपि त्वक्सत्त्वेन रूपादिप्रत्यक्षं स्यात् न च भवतीति विज्ञायते न त्वगेकमेवेन्द्रियमित्यर्थः । उक्तं स्वयं व्याचष्टे— स्पर्शेति, स्पर्शोपलब्धिरेव लक्षणम्= अनुमापकं यस्यास्तस्यां

रूपादयो न गृह्यन्ते अन्धादिभिः, न स्पर्शग्राहकादिन्द्रियाद् इन्द्रियान्तरमस्तीति स्पर्शवद् अन्धादिभिर्गृह्येरन् रूपादयः न च गृह्यन्ते तस्मान्नैकमिन्द्रियं त्वगिति ॥

त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः ।

यथा त्वचोऽवयवविशेषः कश्चित् चक्षुषि संनिकृष्टो धूमस्पर्शं गृह्णाति नान्य एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ॥

व्याहतत्वादहेतुः ।

'त्वगव्यतिरेकादेकमिन्द्रियम्' इत्युक्त्वा 'त्वगवयवविशेषेण धूमोपलब्धिवद् रूपाद्युपलब्धिः' इत्युच्यते, एवं च सति नानाभूतानि विषयग्राहकाणि— विषयव्यवस्थानात्= तद्भावे विषयग्रहणस्य भावात् तदुपघाते चाऽभावात्, तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यते इति ॥

---

त्वचि सत्यामपि तादृशेन त्वगिन्द्रियेण स्पर्शे गृह्यमाणेपि चाऽन्धादिभिश्चक्षुराद्यर्था रूपादयो न गृह्यन्ते, तव मते च त्वगतिरिक्तमिन्द्रियमेव नास्ति तथा चान्धादिभिरपि त्वचा स्पर्शवद् रूपादयोपि गृह्येरन्— त्वचः सत्त्वात् तदतिरिक्तेन्द्रियाऽस्वीकारात् रूपादीनामपि त्वग्ग्राह्यत्वस्वीकाराच, न चान्धादिभिर्गृह्यन्ते रूपादयस्तस्माद् विज्ञायते न त्वगेकमेवेन्द्रियं किं तु चक्षुरादीन्यपीन्द्रियाणीति, तथा च चक्षुरादीनामभावादेवान्धादिभी रूपादयो न गृह्यन्ते इत्यन्वयः ॥

भाष्यकारः पूर्वपक्षिवाक्यमाह— त्वगिति, यथा चक्षुर्गोलकस्थेन त्वचोऽवयवविशेषेण धूमोपलब्धिवत्= धूमस्पर्शोपलब्धिर्भवति नान्यदेशस्थेन त्वगवयवेन तथा चक्षुर्गोलकस्थेनैव त्वगवयवविशेषेण तत्= तस्य= रूपस्योपलब्धिर्भवति नान्यदेशस्थेन त्वगवयवेन, अन्धस्य च चक्षुर्गोलकाभावेन तन्निष्ठत्वगवयवस्याप्यभावाद् रूपोपलब्धिर्न भवति एवं कर्णशष्कुल्यवयवविशेषाभावेन तन्निष्ठत्वगवयवविशेषाभावादेव बधिरेण शब्दो न गृह्यते इत्युपपन्नम्— त्वगेकमेवेन्द्रियमितीत्यर्थः । व्याचष्टे— यथेति, चक्षुषि= चक्षुर्गोलके, संनिकृष्टः= स्थितः, नान्यः= नान्यदेशस्थः त्वगवयवविशेषः, अवयवविशेषाः= चक्षुर्गोलकादिनिष्ठा त्वगवयवाः रूपादिग्राहका भवन्ति नान्यदेशस्थाः, तेषाम्= चक्षुर्गोलकादिनिष्ठानां त्वगवयवानामुपघातात्= विनाशादेवान्धादिभिर्न गृह्यन्ते रूपादय इत्युपपन्नम्— त्वगेकमेवेन्द्रियमितीत्यन्वयः ॥

उक्तं भाष्यकारो दूषयति— व्याहतत्वादिति, 'त्वगेकमेवेन्द्रियम्' इत्यत्र पूर्ववाक्येन यो हेतुरुक्तः सोऽहेतुः= इन्द्रियैक्याऽसाधकः— व्याहतत्वात्= पूर्वापरविरोधात्= पूर्वमिन्द्रियैक्यमुक्तं तदनन्तरं चक्षुर्गोलकादिस्थानां त्वगवयवानां रूपादिग्राहकत्वमुक्तं तेन च तादृशानां त्वगवयवानां परस्परं भेदादनेकत्वाचेन्द्रियानेकत्वं प्राप्तमिति पूर्वापरविरोधः प्राप्तस्तत्रोत्तरपक्षस्य प्रबलत्वेन पूर्वस्य इन्द्रियैकत्वपक्षस्य बाधो जात इतीन्द्रियानेकत्वं सिद्धमित्यर्थः । स्वयं व्याचष्टे— त्वगिति, त्वगव्यतिरेकात्= चक्षुरादीनां सर्वेषामिन्द्रियाणां त्वग्भिन्नत्वाभावात् । उक्तमुत्तरपक्षमाह— त्वगवयवेति । स्वाभिप्रायमुद्घाटयति— एवं चेति, एवं च सति= त्वगवयवविशेषाणां रूपादिग्राहकत्वस्वीकारे विषयग्राहकाणि= इन्द्रियाणि नानाभूतानि= अनेकानि सिद्धानि— विषयव्यवस्थानात्= विषयाणामनेकत्वात् किं वा चक्षुर्गोलकादिस्थेन त्वगवयवेन रूपादिमात्रग्रहणादिति विषयव्यवस्थानं तस्मात्, तथा च शब्दस्पर्शादीनां ग्राह्याणामनेकत्वात् तद्ग्राहकाणामनेकत्वं प्राप्तमेवेत्यर्थः । अत्रान्वयव्यतिरेकावाह— तद्भावे इति, तद्भावे= चक्षुर्गोलकादिनिष्ठत्वगवयवसत्त्वे रूपादिग्रहणस्य भावात् तदुपघाते= चक्षुर्गोलकादिनिष्ठत्वगवयवविनाशे चाऽभावात्= रूपादिग्रहणस्याभावात् चक्षुर्गोलकादिनिष्ठानां त्वगवयवानामेव रूपादिग्राहकत्वं सिद्धं तेषां चानेकत्वादेकेन्द्रियपक्षः पराहतो जात इत्यन्वयः, पूर्वो वादः= एकेन्द्रियपक्षः । उत्तरेण वादेन= त्वगवयवानां भिन्नग्राहकत्ववादेन ॥

संदिग्धश्चाऽव्यतिरेकः ।

पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि. न च तेष्वसत्सु विषयग्रहणं भवतीति. तस्मान्न त्वग् अन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५२ ॥

न- युगपदर्थानुपलब्धेः ॥ ५३ ॥

आत्मा मनसा संबध्यते मन इन्द्रियेण इन्द्रियं सर्वार्थैः संनिकृष्टमिति आत्मेन्द्रियमनोऽर्थसंनिकर्षेभ्यो युगपद् ग्रहणानि स्युः न च युगपद् रूपादयो गृह्यन्ते तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति= असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम्, साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ॥ ५३ ॥

---

एकेन्द्रियवादे दोषान्तरमाह- संदिग्ध इति, अव्यतिरेकः= सर्वेषामिन्द्रियाणां त्वगभिन्नत्वं संदिग्धमेव संदिग्धत्वादेवायं हेतुर्नेन्द्रियैकत्वसाधक इत्यर्थः, अभेदस्य संदिग्धत्वं च व्याप्यव्यापकयोरभेदनियमासंभवादेव विज्ञेयं यथा यत्र गोत्वं तत्र द्रव्यत्वं भवत्येव अथापि गोत्वद्रव्यत्वयोर्नाभेदस्तथा त्वचः सर्वेन्द्रियाधिष्ठानव्यापकत्वेपि न सर्वेषामिन्द्रियाणां त्वगभिन्नत्वं संभवतीतिभावः । स्वयं व्याचष्टे- पृथिव्यादीति, भूतानामिन्द्रियाधिष्ठानव्यापकत्वेपि विषयग्रहणकाले सत्त्वेपि च यथा न विषयग्राहकत्वं तथा त्वचोपि न सर्वविषयग्राहकत्वं संभवतीत्यर्थः, पृथिव्यादिभूतानां विषयग्रहणस्यान्वयव्यतिरेकावुक्तौ- न चेति, तेषु= पृथिव्यादिभूतेषु । शरीरस्य पाञ्चभौतिकत्वादेव पृथिव्यादिभूतानामिन्द्रियाधिष्ठानव्यापकत्वं स्पष्टमेव, यदि त्वचः सर्वेन्द्रियाधिष्ठानव्यापकत्वेन सर्वविषयग्रहणैश्चान्वयव्यतिरेकाभ्यां सर्वविषयग्राहकत्वं स्यात्तदा पृथिव्यादिभूतानामपि सर्वविषयग्राहकत्वं स्यादेव- सर्वेन्द्रियाधिष्ठानव्यापकत्वादुक्तान्वयव्यतिरेकयोरपि सत्त्वाच्च न च भूतानां ग्राहकत्वमिति न त्वचोपि सर्वविषयग्राहकत्वमुपपद्यते इत्युपसंहरति- तस्मादिति, अन्यत्= त्वगतिरिक्तम्, सर्वविषयम्= सर्वविषयग्राहकम् । व्याख्याने मूलानुकूल्यं नास्तीति स्पष्टमेव । उक्तं चैतदसंगतमेव- भूतानां सर्वथैव ग्राहकत्वाभावात् त्वचश्च स्पर्शग्राहकत्वस्वीकारादिति त्वचो भूतानां च व्यतिरेकादिति विभाव्यम् ॥ ५२ ॥

उक्तमेकेन्द्रियवादं सूत्रकारो निराकरोति- नेति, 'त्वगेकमेवेन्द्रियम्, इति नोपपद्यते- युगपद् अर्थानाम्= शब्दस्पर्शरूपादीनामनुपलब्धेः= यदि त्वगेकमेवेन्द्रियं स्यात् तदा तस्याः सर्वेन्द्रियाधिष्ठानव्यापकत्वात् मनसा संयुक्तत्वाच्च मनसश्चाप्यात्मना संयुक्तत्वात् युगपत्= एकस्मिन्नेव क्षणे शब्दस्पर्शरूपादीनां सर्वेषामेव विषयाणां प्रत्यक्षं स्यात्. न चैकस्मिन् क्षणे सर्वेषां रूपादीनां प्रत्यक्षं भवति तेन ज्ञायते- नैकमिन्द्रियमिति, त्वगवयवविशेषाणामपि रूपादिग्राहकत्वपक्षेऽयं दोषोस्त्येव- त्वच एकत्वात् । इन्द्रियनानात्वपक्षे तु सूक्ष्मस्य मनस एकस्मिन् क्षणे सर्वैरिन्द्रियैः संयोगो न संभवतीति रूपादीनां सर्वेषां युगपदनुपलब्धिरुपपद्यते इत्यनेकानीन्द्रियाणि न त्वेकमेवेन्द्रियमिति सिद्धमिति सूत्रार्थः । व्याचष्टे- आत्मेति, अनेनैकेन्द्रियवादे युगपत् सर्वार्थप्रत्यक्षापत्तिरुपपादिता, तव मते त्वगेकमेवेन्द्रियमिति तया मनसः संयोगो जात एव त्वक् चैका सर्वशरीरव्यापिकेति त्वचोपि रूपादिभिः सर्वैर्विषयैः संयोग एकस्मिन् क्षणे उपपद्यते एवेति विषयग्रहणप्रयोजकीभूता आत्मेन्द्रियमनोऽर्थसंयोगा एकस्मिन् क्षणे संजाता इति युगपदेव सर्वेषां रूपादीनां प्रत्यक्षाणि स्युरित्यन्वयः । सर्वार्थैः= सर्वैः रूपादिपदार्थैरिन्द्रियम्= त्वगिन्द्रियं संनिकृष्टम्= संयुक्तम्- शरीरव्यापकत्वात् । उक्ते प्रत्यक्षबाधमाह- न चेति । उपसंहरति- तस्मादिति । सर्वविषयम्= सर्वविषयग्राहकम् । उक्तमेव विशदयति- असाहचर्येति, विषयग्रहणानाम्= रूपादिसर्वविषयकप्रत्यक्षाणाम् असाहचर्यात्= युगपदभावात्, रूपादिप्रत्यक्षाणां कालभेदेन दर्शनाद्विज्ञायते- रूपादिग्राहकाणीन्द्रियाणि चक्षुरादीनि परस्परं भिन्नान्येव=अनेकान्येवेत्यर्थः । विपक्षे बाधकमाह-

## विप्रतिषेधाच्च न त्वगेका ॥ ५४ ॥

न खलु त्वगेकमिन्द्रियम्– व्याघातात्, त्वचा रूपाण्यऽप्राप्तानि गृह्यन्ते इति अप्राप्य-कारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः, स्पर्शादीनां च प्राप्तानां ग्रहणाद् रूपादीनाम् ( अपि ) प्राप्तानां ग्रहणमिति प्राप्तम् । प्राप्याऽप्राप्यकारित्वमितिचेत् ?. आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्= अथापि मन्येत– प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वऽप्राप्तानीति, एवं सति नास्त्यावरणम्. आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यहितस्य चेति । दूरा-न्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात्= अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्या-ऽग्रहणमन्तिके च ग्रहणमित्येतद् न स्यादिति ॥ ५४ ॥

---

साहचर्ये इति, यदि रूपादिसर्वविषयकप्रत्यक्षाणां साहचर्यं स्यात्तदाऽन्धस्य स्पर्शप्रत्यक्षकाले रूपप्रत्यक्ष-मपि स्यादेव– साहचर्यनियमात्= रूपादिप्रत्यक्षाणां युगपद्भावनियमात्, युगपद्भावनियमश्च त्वच एव सर्वग्राहकत्वस्वीकारात् प्राप्तः तथा चान्धाद्यनुपपत्तिः= अन्धाद्यभाव एव स्यात्– रूपादिप्रत्यक्षवता-मन्धत्वाद्यसंभवात्– रूपादिप्रत्यक्षरहितानामेवान्धत्वादिनिर्देशात्, न चान्धाद्यभावस्तेन रूपादिप्रत्यक्षा-णामसाहचर्यं सिद्धम् असाहचर्याच्च ग्राह्याणां रूपादीनां भेदेनेन्द्रियभेदः सिद्ध इति नैकेन्द्रियवाद उपपद्यते इत्यर्थः ॥ ५३ ॥

एकेन्द्रियवादे दोषान्तरमाह– विप्रतिषेधादिति, त्वगेकैवेन्द्रियमिति नोपपद्यते– विप्रतिषेधात्= व्याघातात्= परस्परविरोधात्, विरोधश्चायमेकेन्द्रियवादे यथा रूपादयोऽप्राप्ता गृह्यन्ते स्पर्शादयश्च प्राप्ता गृह्यन्ते इति रूपादीनां त्वचः दूरस्थानामपि ग्राह्यत्वं स्पर्शादीनां च त्वक्संयुक्तानामेव ग्राह्यत्वं प्राप्तं तदेतदेकस्मिन्निन्द्रिये विरुद्धमेव– प्राप्तग्राहकत्वाऽप्राप्तग्राहकत्वयोर्मध्ये एकतरधर्मस्यैवैकत्र संभवादिति सूत्रार्थः । व्याचष्टे– नेति, उक्ते हेतुमाह– व्याघातादिति । व्याघातमेवोद्घाटयति– त्वचेति, अप्रा-प्तानि= स्वासंयुक्तानि= दूरस्थानि । अप्राप्यकारित्वे= त्वचः स्वासंयुक्तग्राहकत्वे, एवंप्रसङ्गः= अप्राप्य-कारित्वप्रसङ्गः स्यात्, रूपवत् स्पर्शादीनामपि स्वासंयुक्तानां त्वचा ग्रहणं स्यात् न चैवमस्तीत्यर्थः, स्पर्शादीनामिति– किं वा स्पर्शादीनां प्राप्तानाम्= स्वसंयुक्तानां ग्रहणाद् रूपादीनामपि प्राप्तानामेव ग्रहणं स्यात् न चैवमप्यस्ति– गृह्यमाणै रूपादिभिस्त्वचः संयोगासंभवात्= नेत्रस्येव त्वचः किरणाभा-वादित्यर्थः, तथा च रूपस्याऽप्राप्तस्य स्पर्शादीनां च प्राप्तानां त्वचा ग्रहणमित्येकेन्द्रियवादे विरोध एव व्याघातपदार्थ इत्याशयः । ननु दृष्टानुरोधात् त्वचः स्पर्शादिषु प्राप्यकारित्वम्= स्वसंयुक्तग्राहकत्वं रूपादिषु चाऽप्राप्यकारित्वमाश्रीयते इत्याशङ्कते– प्राप्येति । अत्र दोषमाह– आवरणेति, त्वचोऽप्राप्यकारित्वे हि आवृतस्यापि ग्रहणं स्यादेव तथा चावरणवैयर्थ्यं स्यात् तेनावरणानुपपत्तिर्जाता तथा च विषयमात्रस्य दूरस्थस्यापि ग्रहणं स्यात्– प्रतिबन्धकाभावादित्यन्वयः । उक्तमेव विशेषरूपेण व्याचष्टे– अथापीति । उक्ते दोषमाह– एवमिति, अप्राप्तस्यापि रूपस्य ग्राह्यत्वे नास्त्यावरणम्= आवरणसार्थक्यं न स्यात्= आवरणवैयर्थ्यमेव स्यात् आवरणवैयर्थ्ये च व्यवहितस्याव्यवहितस्य च रूपमात्रस्य ग्रहणं स्यादेव– व्यवहिताव्यवहितयोरप्राप्तेः समानत्वात्, न चैवमस्तीत्यन्वयः । अप्राप्यकारित्वपक्षे दोषान्तरमाह– दूरेति, दूरान्तिकयोः= दूरसमीपयोः, रूपोपलब्धौ सामीप्यानुविधानम्= सामीप्यस्य प्रयोजकत्वम् रूपानुपलब्धौ च दूरत्वस्य प्रयोजकत्वं न स्यात्– अप्राप्यकारित्वस्य दूरसमीपयोः समानत्वादित्यर्थः । उक्तमेव व्याचष्टे– अप्राप्तमिति, इति= इतिपक्षे । अप्राप्तस्य रूपस्य त्वचा ग्रहणाद् दूरस्थरूपस्यापि त्वचा ग्रहणं स्यादेवेतिशेषः । दूरस्थग्राह्यरूपेण त्वचः संयोगश्च नोपपद्यते– किरणाभावात् तथा च रूपादिष्वप्रा-प्यकारित्वं स्पर्शादिषु च प्राप्यकारित्वं वक्तव्यं तच्च परस्परं व्याहतमेवेति न त्वगेकैवेन्द्रियमित्यर्थः ॥५४॥

एकत्वप्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते—

इन्द्रियार्थपञ्चत्वात् ॥ ५५ ॥

अर्थः= प्रयोजनं तत् पञ्चविधमिन्द्रियाणाम्= स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यते इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते, स्पर्शरूपग्रहणे च ताभ्यामेव न गन्धो गृह्यते इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते, त्रयाणां ग्रहणे न तैरेव रसो गृह्यते इति रसग्रहण-प्रयोजनं रसनमनुमीयते, न चतुर्णां ग्रहणे तैरेव शब्दः श्रूयत इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते, एवमिन्द्रियप्रयोजनस्याऽनितरेतरसाधनसाध्यत्वात् पञ्चैवेन्द्रियाणि ॥ ५५ ॥

न- तदर्थबहुत्वात् ॥ ५६ ॥

न खलु 'इन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि' इति सिध्यति, कस्मात् ?. तेषामर्थानां बहुत्वात्= बहवः खल्विमे इन्द्रियार्थाः= स्पर्शास्तावत् शीतोष्णानुष्णाशीता इति. रूपाणि शुक्लहरितादीनि. गन्धा इष्टानिष्टोपेक्षणीयाः. रसाः कटुकादयः, शब्दा वर्णात्मनो ध्वनिमात्राश्च

अग्रिमसूत्रमवतारयति- एकत्वेति, उक्तेनेन्द्रियाणामेकत्वस्य प्रतिषेधेनार्थादऽनेकत्वे सिद्धेऽपि अनेन सूत्रेणेन्द्रियाणामनेकत्वस्य स्थापनाहेतुः= स्थापको हेतुरुच्यते इत्यन्वयः । इन्द्रियेति- इन्द्रियाणां येऽर्थाः= ग्राह्या विषयाः= शब्दस्पर्शरूपरसगन्धास्तेषां पञ्चत्वात् एकैकेन्द्रियग्राह्यत्वाच्चेन्द्रियाणां पञ्चत्वम्= पञ्चत्व-संख्याविशिष्टत्वं सिद्धं तथा च श्रोत्रत्वक्चक्षूरसनाघ्राणानीति पञ्चेन्द्रियाणीतिसिद्धमिति सूत्रार्थः । व्याचष्टे- अर्थ इति, प्रयोजनम्= विषयग्रहणम्= विषयज्ञानम्, प्रयोजनानामिन्द्रियाणां च पञ्चत्वमुप-पादयति- स्पर्शेति, स्पर्शनेन= त्वचा, स्पर्शग्रहणं हि स्पष्टमेव तेन स्पर्शग्रहणेन त्वगिन्द्रियमनुमीयते, तेन= त्वगिन्द्रियेण सिद्धेनापि रूपं न गृह्यते रूपग्रहणं च प्रत्यक्षमेवेति रूपग्रहणं प्रयोजनं यस्य तादृशं रूपग्राहकं चक्षुरिन्द्रियमनुमीयते इत्यन्वयः । स्पर्शरूपेति- त्वक्चक्षुर्भ्यां स्पर्शरूपयोर्ग्रहणे सिद्धेऽपि ताभ्याम्= त्वक्चक्षुर्भ्यामेव गन्धो न गृह्यते- अन्यथा घ्राणव्यापारं विनापि गन्धग्रहणं स्यादिति गन्ध-ग्रहणप्रयोजनं घ्राणेन्द्रियमनुमीयते इत्यन्वयः । त्रयाणाम्= स्पर्शरूपगन्धानां त्वक्चक्षुर्घ्राणैर्ग्रहणे सिद्धेऽपि तैः= त्वक्चक्षुर्घ्राणैरेव रसो न गृह्यते रसग्रहणं च प्रत्यक्षमेवेति रसग्रहणप्रयोजनं रसनेन्द्रियमनुमीयते इत्यन्वयः । चतुर्णाम्= स्पर्शरूपगन्धरसानां ग्रहणे सिद्धेऽपि तैः= त्वक्चक्षुर्घ्राणरसनैः शब्दो न श्रूयते शब्दग्रहणं च प्रत्यक्षमेवेति शब्दग्रहणप्रयोजनं श्रोत्रेन्द्रियमनुमीयते इत्यन्वयः । चक्षुरादीनां व्यापारं विना रूपादीनां ग्रहणादर्शनादेव रूपादीनां पञ्चानां ग्रहणार्थं चक्षुरादीनि पञ्चेन्द्रियाणि सिद्धानि, अन्यथा चक्षुरादेर्व्यापारं विनापि रूपादीनां ग्रहणं स्यादित्याशयः । उपसंहरति- एवमिति, इन्द्रिय-प्रयोजनस्य= रूपादिग्रहणस्य अनितरेतरसाधनसाध्यत्वात्= इतरेतरसाधनसाध्यत्वाभावात्= इतरेतरं यत् साधनम्= त्वगादीन्द्रियं तेन साध्यत्वाभावात्, रूपग्रहणं त्वगादिसाध्यं नास्ति स्पर्शग्रहणं चक्षुरादिसाध्यं नास्ति रसग्रहणं च रसनातिरिक्तसाध्यं नास्तीत्युक्तरीत्या शब्दस्पर्शरूपरसगन्धानां ग्रहणार्थं श्रोत्रत्वक्-चक्षूरसनाघ्राणानीति पञ्चैवेन्द्रियाणि सिद्धानीत्यर्थः ॥ ५५ ॥

इन्द्रियपञ्चत्वं पूर्वपक्षी पराकरोति- नेति, उक्तरीत्यापीन्द्रियाणां पञ्चत्वं नोपपद्यते- तत्= तेषामिन्द्रियाणां येऽर्थाः= विषयास्तेषां बहुत्वात्= पञ्चत्वसंख्याधिकसंख्याविशिष्टत्वादिन्द्रियाणामप्या-धिक्यम्= विषयसंख्याविशिष्टत्वं स्यादेव, विषयाणां च बहुत्वं रूपादीनामनेकप्रकारत्वात् स्पष्टमेवेति सूत्रार्थः, अन्यद् भाष्ये स्पष्टमेव । व्याचष्टे- नेति, शब्दस्पर्शरूपरसगन्धानां पञ्चत्वादिन्द्रियाणां पञ्चत्वं न सिध्यति- शब्दादीनामनेकप्रकारत्वादित्यर्थः । उक्तप्रतिषेधे हेतुं जिज्ञासते- कस्मादिति । उत्तरमाह- तेषामिति । अर्थबहुत्वमुपपादयति- बहव इति । स्पर्शस्य त्रैविध्यमाह- शीतेति । रूपाणां बहुत्वमाह- शुक्लेति । गन्धानां त्रैविध्यमाह- गन्धा इति, इष्टाः= प्रियाः, अनिष्टाः= अप्रियाः । रसानां बहुत्वमाह-

भिन्नाः, तद् यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद् बहूनीन्द्रियाणि प्रसज्यन्ते इति ॥ ५६ ॥

## गन्धत्वाद्यऽव्यतिरेकाद् गन्धादीनामप्रतिषेधः ॥ ५७ ॥

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि गन्धादिग्रहणानि तान्यऽसमानसाधनसाध्यत्वाद् ग्राहकान्तराणि न प्रयोजयन्ति. अर्थसमूहोऽनुमानमुक्तो नाऽर्थैकदेशः, अर्थैकदेशं चाश्रित्य विषयपञ्चत्वमात्रं भवान् प्रतिषेधति. तस्माद्युक्तोयं प्रतिषेध इति। कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादयः ? इति, स्पर्शः खल्वयं त्रिविधः– शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन संगृहीतः, गृह्यमाणे च शीतस्पर्शे नोष्णस्याऽनुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति– स्पर्शभेदानामेकसाधनसाध्यत्वात्= येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानाम्. रूपत्वेन रूपाणाम्.

---

रसा इति, रसाः मधुरादयः षट्। शब्दानां द्वैविध्यमाह– शब्दा इति। उपसंहरति– तदिति, यस्य मते शब्दादीनां प्रत्येकं ग्रहणार्थं पृथक् पृथगिन्द्रियकल्पनया इन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीत्युच्यते तस्यैव मते बहूनि= पञ्चाधिकानीन्द्रियाणि प्रसज्यन्ते– इन्द्रियार्थानामुक्तरीत्या बहुत्वात्= पञ्चाधिकत्वात्, तथा च त्रयः स्पर्शा गन्धाश्च. षट् रसा रूपाणि च द्विविधाः शब्दा इति विषयाणां विंशतिप्रकारत्वादिन्द्रियाणामपि विंशतिसंख्याकत्वं स्यात्, यदि च स्पर्शत्वादिना स्पर्शादीनां संग्रहात् विषयाणां पञ्चत्वमुच्यते तदा विषयत्वेन सर्वेषां संग्रहादेकत्वमेव स्यादित्येकमेवेन्द्रियं स्वीकार्यमित्यर्थः ॥ ५६ ॥

उक्तमर्थबहुत्वं सिद्धान्ती प्रतिषेधति– गन्धत्वेति, सर्वविधानां गन्धादीनां गन्धत्वादिना= गन्धत्वादिरूपेणाऽव्यतिरेकात्= अभेदात्= ऐक्याद् विषयाणां पञ्चत्वस्य प्रतिषेधो नोपपद्यते तथा च गन्धत्वावच्छिन्नस्य ग्राहकं घ्राणं रूपत्वावच्छिन्नग्राहकं चक्षुरिति व्यवस्था क्रियते गन्धत्वादिसामान्यं च पञ्चविधमेवेति गन्धत्वाद्यवच्छिन्नानां शब्दस्पर्शरूपरसगन्धानां पञ्चविधत्वाद् गन्धादीनां च घ्राणाद्यतिरिक्तैश्चक्षुरादिभिरग्राह्यत्वात् घ्राणादिभिर्ग्राह्यत्वाच्च पञ्चैवेन्द्रियाणीतिसिद्धमिति सूत्रार्थः। व्याचष्टे– गन्धत्वादिभिरिति, स्वसामान्यैः= गन्धादीनां सामान्यैः, कृतव्यवस्थानाम्= संगृहीतानाम्= अभिन्नानाम्, "गन्धादिग्रहणानि" इत्यत्र 'ग्रहणानि' इत्येव वक्तव्यमासीत्, असमानसाधनसाध्यत्वात्= घ्राणाद्येकग्राह्यत्वात् ग्राहकान्तराणि= इन्द्रियान्तराणि न प्रयोजयन्ति, सर्वेषामपि गन्धानामेकेनैव घ्राणेन ग्राह्यत्वाद् गन्धभेदेन तद्ग्राहकेन्द्रियभेदस्यापेक्षा नास्तीत्यर्थः, अत्र "असमानम्= असाधारणं यत्साधनं घ्राणादि तत्साध्यत्वादेकेन घ्राणेनैव सर्वविधगन्धग्रहणसंभवादितियावत्" इति श्रीगुरुचरणाः, वस्तुतस्तु "असमानसाधनसाध्यत्वात्" इत्यत्र 'समानसाधनसाध्यत्वात्' इतिवक्तव्यमासीत्। घ्राणस्य सर्वविधगन्धग्राहकत्वमाह– अर्थेति, अर्थस्य= गन्धादेर्यः समूह स एवानुमानम्= घ्राणाद्यनुमापकमुक्तं न त्वर्थैकदेशः= तत्तद्गन्धादिर्येन गन्धादीनामवान्तरभेदेनापीन्द्रियाणां भेदः स्यादित्यन्वयः, तथा च गन्धत्वावच्छिन्नस्य गन्धसमूहस्य= यावद्गन्धानामेकघ्राणानुमापकत्वेन यावद्गन्धग्राहकमेकमेव घ्राणं सिध्यति एवं यावद्रूपादीनां ग्राहकमेकमेव चक्षुरादिकं सिध्यतीति पञ्चैवेन्द्रियाणि सिध्यन्ति न तु न्यूनाधिकानीत्यर्थः। पूर्वपक्षमनुवदति– अर्थैकदेशमिति, अर्थैकदेशम्= पूर्वोक्तरीत्या गन्धादीनामवान्तरभेदमाश्रित्य। पूर्वपक्षं परिहरति– तस्मादिति, तस्मात्= उक्तरीत्या सर्वविधगन्धादीनां गन्धत्वादिसामान्यैरभेदात् पञ्चत्वसिद्धेर्विषयाणां पञ्चत्वप्रतिषेधोयमऽयुक्त एवेत्यर्थः। गन्धत्वादिसामान्यैर्गन्धादीनां संग्रहे हेतुं जिज्ञासते– कथमिति। उक्तसंग्रहहेतुमाह– स्पर्श इत्यादिना, स्पर्शत्वजात्या सर्वेषामपि स्पर्शानां संग्रहः संभवतीत्यर्थः, त्वचा शीते स्पर्शे गृह्यमाणे सति उष्णादिस्पर्शस्य यद् ग्रहणं तत् त्वगतिरिक्तं ग्राहकान्तरम्= स्पर्शग्राहकेन्द्रियान्तरं न प्रयोजयतीत्यन्वयः, अत्र हेतुमाह– स्पर्शेति, स्पर्शभेदा-

रसत्वेन रसानाम्, शब्दत्वेन शब्दानामिति। गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वात् ग्राहकान्तराणां प्रयोजकानि, तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति ॥ ५७ ॥

यदि सामान्यं संग्राहकम् ? प्राप्तमिन्द्रियाणाम्—

विषयत्वाव्यतिरेकादेकत्वम् ॥ ५८ ॥

विषयत्वेन हि सामान्येन गन्धादयः संगृहीता इति ॥ ५८ ॥

न- बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५९ ॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षाः= एकसाधनग्राह्या

---

नाम्= शीतादिसर्वविधस्पर्शानाम् एकसाधनसाध्यत्वात्= एकनैव त्वगिन्द्रियेण ग्राह्यत्वात् सर्वविधस्पर्शग्राहकमेकमेव त्वगिन्द्रियमित्यर्थः, उक्तं विशदयति- येनेति, येन त्वगिन्द्रियेण शीतस्पर्शो गृह्यते तेनैव त्वगिन्द्रियेण इतरौ= उष्णानुष्णाशीतौ स्पर्शौ गृह्येते इति यावत्स्पर्शग्रहणार्थमेकमेव त्वगिन्द्रियं सिद्धमित्यर्थः। उक्तन्यायमन्यत्रातिदिशति- एवमिति, एवं सर्वेषां गन्धानां गन्धत्वेन संग्रहः सर्वेषां रूपाणां रूपत्वेन संग्रहः सर्वेषां रसानां रसत्वेन संग्रहः सर्वेषां शब्दानां च शब्दत्वेन संग्रहो वेदितव्यः। तत्र यावद्गन्धानां ग्रहणार्थमेकमेव घ्राणेन्द्रियं. यावद्रूपाणां ग्रहणार्थमेकमेव चक्षुरिन्द्रियं. यावद्रसानां ग्रहणार्थमेकमेव रसनेन्द्रियं. यावच्छब्दानां च ग्रहणार्थमेकमेव श्रोत्रेन्द्रियं स्वीक्रियते इत्याह- गन्धादीति, गन्धादिज्ञानानि असमानसाधनसाध्यत्वात्= घ्राणाद्येकैकेन्द्रियमात्रग्राह्यत्वात् ग्राहकान्तराणाम्= इन्द्रियान्तराणां प्रयोजकानि न भवन्तीति पञ्चैवेन्द्रियाणि संभवन्तीत्यर्थः। उपसंहरति- तस्मादिति, इन्द्रियार्थानाम्= शब्दस्पर्शरूपरसगन्धानां शब्दत्वादिभिः संगृहीतानां पञ्चत्वात् तेषां ग्राहकाणीन्द्रियाण्यपि पञ्चैव संभवन्ति न तु न्यूनाधिकानीत्यर्थः ॥ ५७ ॥

पूर्वपक्षमाश्रित्याग्रिमसूत्रमवतारयति- यदीति, यदि गन्धत्वादिसामान्यं सर्वविधगन्धानां संग्राहकं तदा विषयत्वसामान्यं शब्दस्पर्शरूपरसगन्धानां सर्वेषां संग्राहकमेवेति विषयत्वेन सर्वविधविषयग्राहकमेकमेवेन्द्रियं स्वीकार्यमितीन्द्रियाणामेकत्वं प्राप्तमिति सूत्रभागेनान्वयः। उक्तं पूर्वपक्षी परिहरति- विषयेति, शब्दस्पर्शरूपरसगन्धानां सर्वेषामपि विषयत्वेन सामान्येन= जात्या अव्यतिरेकात्= अभेदात् तथा च विषयत्वेन रूपेण सर्वविषयग्राहकमेकमेवेन्द्रियं स्वीकार्यमिति एकत्वम्= इन्द्रियैकत्वं सिद्धमिति न पञ्चेन्द्रियाणि स्वीकार्याणीति सूत्रार्थः। व्याचष्टे- विषयत्वेनेति, विषयत्वेन सामान्येन गन्धादयः= शब्दस्पर्शरूपरसगन्धाः संगृहीतास्तथा च विषयत्वेन सर्वविषयग्राहकमेकमेवेन्द्रियं स्वीकार्यम्, विषयत्वेन सर्वेषां संग्रहासंभवे च गन्धत्वादिना सर्वविधगन्धादीनामपि संग्रहो न स्यादित्युक्तरीत्या विंशतिसंख्याकानीन्द्रियाणि स्वीकार्याणि स्युरित्यर्थः ॥ ५८ ॥

उक्तमिन्द्रियैकत्वं सिद्धान्ती निराकरोति- नेति, विषयत्वेन सर्वविषयाणामैक्यमुपपाद्य तेन यदिन्द्रियैक्यमुक्तं तन्नोपपद्यते इत्यर्थः, उक्ते हेतुमाह- बुद्धीति, बुद्धयः= रूपादिज्ञानानि रूपादीनां पञ्चत्वात् पञ्च सन्ति तान्येवेन्द्रियाणामनुमापकानि सन्ति- रूपादिज्ञानैरेव जायमानैः रूपादिग्राहकाणां चक्षुरादीनामिन्द्रियाणामनुमानात् तथा च बुद्ध्यात्मकानि यानि लक्षणानि= इन्द्रियानुमापकानि तेषां पञ्चत्वादिन्द्रियाणां पञ्चत्वं सिद्धम्- रूपज्ञानेन चक्षुषो गन्धज्ञानेन घ्राणस्येत्येवमेवानुमानात्। इन्द्रियाणां यान्यधिष्ठानानि= स्थानानि चक्षुर्गोलकादीनि तेषां पञ्चत्वादपीन्द्रियाणां पञ्चत्वं सिद्धम्- इन्द्रियैक्ये तत्स्थानस्याप्यैक्यं स्यादिति। गतिः= गमनम्= विषयग्रहणं तस्याप्यनेकविधत्वादनेकत्वमिन्द्रियाणां सिद्धम् अन्यथा गत्यनेकत्वं न स्यादिति न चैवमस्ति। आकृतिः= परिमाणं संस्थानं वा तदनेकत्वादपीन्द्रियाणामनेकत्वं सिद्धम्। जायतेऽस्मादिति जातिः= प्रकृतिः= कारणम् इन्द्रियकारणीभूतपृथिव्यादिभूतानामपि पञ्चत्वात् तत्कार्यभूतानामिन्द्रियाणामपि पञ्चत्वं सिद्धमिति सूत्रान्वयः। व्याचष्टे-

अनुमीयन्ते. अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्याः. तस्मादसंवद्धमेतत्, अयमेव चार्थोऽनूद्यते– ' बुद्धिलक्षणपञ्चत्वात् ' इति= बुद्धय एव लक्षणानि– विषयग्रहणलिङ्गत्वादिन्द्रियाणाम्, तदेतत् " इन्द्रियार्थपञ्चत्वात् ५५" इत्येतस्मिन् सूत्रे कृतभाष्यमिति, तस्माद् बुद्धिलक्षणपञ्चत्वात् पञ्चेन्द्रियाणि ।

अधिष्ठानान्यपि खलु पञ्च इन्द्रियाणाम्– सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम्, कृष्णताराधिष्ठानं चक्षुः बहिर्निस्सृतं रूपग्रहणलिङ्गम्, नासाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, कर्णच्छिद्राधिष्ठानं श्रोत्रम्, गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति ।

गतिभेदादपीन्द्रियभेदः– कृष्णसारोपनिबद्धं चक्षुर्बहिर्निस्सृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति, स्पर्शनादीनि त्विन्द्रियाणि विषया एवाऽऽश्रयोपसर्पणात् प्रत्यासीदन्ति, सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति ।

---

नेति, कृतव्यवस्थाः= संगृहीताः, विषयाः= गन्धादयः, ग्राहकान्तरनिरपेक्षाः= इन्द्रियान्तरनिरपेक्षाः एकसाधनग्राह्याः= एकेन्द्रियग्राह्या नानुमीयन्ते= नानुमातुं शक्यन्ते इत्यन्वयः, शब्दस्पर्शादीनां सर्वेषां विषयाणामेकेन्द्रियग्राह्यत्वं नानुमीयते– अनुमापकहेतोरभावाद् येनेन्द्रियैक्यं सिध्येदित्यर्थः । यदि सर्वेषां शब्दस्पर्शादीनामेकेन्द्रियग्राह्यत्वं स्यात्तदा ग्राहकान्तरनिरपेक्षत्वं स्यादपि न चैवमस्ति किं तु ग्राहकान्तरसापेक्षत्वमेव– रूपादिग्राहकेण चक्षुरादिना गन्धादीनां ग्रहणासंभवादित्याशयः । अभीष्टानुमानप्रकारमाह– अनुमीयन्ते चेति, इन्द्रियान्तरग्राह्याः= पृथक्पृथगिन्द्रियग्राह्याः, तथा हि रूपाणां चक्षुर्ग्राह्यत्वं रूपविलक्षणानां गन्धानां घ्राणग्राह्यत्वं रूपगन्धविलक्षणानां रसानां रसनाग्राह्यत्वमित्येवं विज्ञेयम्– विलक्षणग्राहकत्वे सर्वग्राहकत्वं प्रसज्येत तच्च प्रत्यक्षविरुद्धम्– आकाशादीनामग्रहणादित्यर्थः । उपसंहरति– तस्मादिति । एतत्= पूर्वसूत्रोक्तम् असंबद्धम्= अयुक्तमेव । उक्तार्थे सूत्रं प्रमाणयति– अयमिति, अयमर्थः= इन्द्रियपञ्चत्वम् । अनूद्यते= उच्यते । सूत्रोक्तहेतुमाह– बुद्धीति, इन्द्रियपञ्चत्वमितिशेषः । उक्तवाक्यं व्याचष्टे– बुद्धय इति, लक्षणानि= अनुमापकानि इन्द्रियाणाम् । बुद्धीनामिन्द्रियलक्षणत्वे हेतुमाह– विषयेति, इन्द्रियाणां विषयग्रहणमेव लिङ्गं यत स्तत इन्द्रियाणि बुद्धिलक्षणानि इत्यर्थः । तदेतत्= विषयज्ञानानां= बुद्धीनां पञ्चत्वेनेन्द्रियाणां पञ्चत्वमिति, कृतभाष्यम्= व्युत्पादितमेव– तत्रार्थशब्देन विषयग्रहणानामेव गृहीतत्वादित्यर्थः, अन्यत्तत्रैव द्रष्टव्यम् । उपसंहरति– तस्मादिति, बुद्ध्यात्मकानाम्= रूपादिविषयकज्ञानात्मकानां लक्षणानाम्= ज्ञापकानां पञ्चत्वेनेन्द्रियाणामपि तज्ज्ञाप्यानां पञ्चत्वं सिद्धमित्यन्वयः ।

इन्द्रियाणां स्थानपञ्चत्वेन पञ्चत्वमाह– अधिष्ठानान्यपीति, सर्वं शरीरमधिष्ठानं यस्य तत् सर्वशरीराधिष्ठानम्, त्वचः सर्वं शरीरं स्थानमित्यर्थः, स्पर्शग्रहणमेव लिङ्गम्= अनुमापकं यस्य तत् स्पर्शग्रहणलिङ्गम्, एवमुत्तरत्रापि व्याख्येयम् । चक्षुस्स्थानमाह– कृष्णेति, बहिर्निस्सृतम्= स्वस्थानात्= चक्षुर्गोलकाद्बहिर्गतमेव रूपेण संयुज्य रूपग्राहकमित्यर्थः, बहिर्गमनं च स्वरश्मिद्वारा । घ्राणाधिष्ठानमाह– नासेति । रसनाधिष्ठानमाह– जिह्वेति । श्रोत्रस्थानमाह– कर्णेति । हेतुवाक्यं तत्रेणाह– गन्धेति, गन्धादिग्रहणमेव घ्राणादीनामनुमापकं तानि च गन्धादिग्रहणानि पञ्च सन्तीति तैरनुमेयानामिन्द्रियाणामपि पञ्चत्वं सिद्धं यथा गन्धग्रहणेन घ्राणमनुमीयते रूपग्रहणेन चक्षुः शब्दग्रहणेन श्रोत्रमित्येवं पञ्चेन्द्रियाणि सिद्धानीत्यर्थः ।

गतिभेदेनेन्द्रियाणामनेकत्वमाह– गतीति, कृष्णसारोपनिबद्धम्= चक्षुर्गोलकस्थितम्, रूपाधिकरणानि= रूपविशिष्टानि, प्राप्नोति= गच्छति, रूपसमीपे गच्छतीत्यर्थः । द्रव्याणीति कर्मपदम् । त्वगादीनां गतिमाह– स्पर्शनेति, इन्द्रियाणीति शसो रूपम्, त्वगादीनीन्द्रियाणि विषयसमीपे न गच्छन्ति

आकृतिः खलु परिमाणम्= इयत्ता सा पञ्चधा- स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि, चक्षुः कृष्णसाराश्रयं वहिर्निःसृतं विषयव्यापि, श्रोत्रं नान्यदाकाशात् तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकमिति ।

जातिरिति योनिं प्रचक्षते- पञ्च खल्विन्द्रिययोनयः पृथिव्यादीनि भूतानि तस्मात् प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥ ५९ ॥

कथं पुनर्ज्ञायते- भूतप्रकृतीनीन्द्रियाणि नाऽव्यक्तप्रकृतीनीति ?,—

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६० ॥

---

किं तु विषयाः स्पर्शादय एव त्वगादीनां समीपे गच्छन्ति, तत्र स्पर्शादीनां स्वरूपेण गमनासंभवादुक्तम्- " आश्रयोपसर्पणात् " इति, स्पर्शादीनामाश्रयीभूतं द्रव्यं त्वगादिसमीपे गच्छति तद्द्वारा स्पर्शादीनामपि गमनं संभवति, प्रत्यासीदन्ति= संयुजन्ति । शब्दस्य श्रोत्रसंबन्धमाह- सन्तानेति, सन्तानः= उत्तरोत्तरशब्दपरम्परा तद्वृत्त्या= तद्द्वारा, श्रोत्रप्रत्यासत्तिः= श्रोत्रेण संबन्धः । तथा चात्र गतिशब्देन विषयेन्द्रिययोः संबन्धो ग्राह्यस्तस्यानेकविधत्वादिन्द्रियाणामप्यनेकत्वं सिद्धमित्यर्थः ।

आकृत्यनेकत्वेनेन्द्रियाणामनेकत्वमाह- आकृतिरिति, स्वस्थानमात्राणि= स्वस्थानपरिमितानि, स्थानानि चोक्तान्येव । गन्धादिग्रहणेन हि घ्राणादिकमनुमीयते इत्याह- विषयेति, तदेतद्बहुत्र व्याख्यातम् । चक्षुश्च चक्षुर्गोलकपरिमितम्, तथा च चक्षुर्गोलकादीनां स्थानानां परिमाणभेदादिन्द्रियाणामपि परिमाणभेदः सिद्ध इति परिमाणपञ्चत्वादपीन्द्रियाणां पञ्चत्वं सिद्धमित्यर्थः । विषयव्यापि= विषयग्राहकम् किं वा विषयपरिमितं भवतीत्यर्थः । विषयव्यापनं च रश्मिद्वारा । श्रोत्रपरिमाणमाह- श्रोत्रमिति, तत्= आकाशं श्रोत्रं वा, शब्दमात्रानुभवानुमेयम्= शब्दग्रहणानुमेयम्, आकाशस्य व्यापकत्वेपि सर्वेषां सर्वशब्दाश्रवणप्रयोजकमाह- पुरुषेति, पुरुषः श्रोता शब्दोत्पादकवाय्वादिभिः सामीप्यादिभिर्वा संस्क्रियते तादृशसंस्कारोपग्रहात्= तादृशसंस्कारस्य नियमात्= तच्छब्दग्राहकमात्रपुरुषवृत्तित्वाद् अधिष्ठाननियमेन= समीपस्थस्यैव श्रोत्रशष्कुल्यवच्छेदेनगगनं शब्दस्य व्यञ्जकं= ग्राहकं भवतीति न सर्वेषां सर्वशब्दश्रवणापत्तिः- पुरुषसंस्कारस्य नियामकत्वादित्यर्थः, किं वा संस्कारशब्देनात्राऽदृष्टं ग्राह्यं तस्यापि नियामकत्वात् । अत्र- " श्रोत्रं त्वाकाशं तदधिष्ठाननियमेन प्रवर्तते. धर्माधर्मसंहितया इष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या य आकाशस्य संबन्धस्तत्संबन्धानुविधाय्याऽऽकाशं न विवरान्तरेणाऽऽस्यादिना शब्दमुपलम्भयति नान्यत्रेति तदुपकारप्रतीकारभेदाद्वोपक्रियते प्रतिक्रियते चेति. न च पुनराकाशं नित्यत्वादुपक्रियते प्रतिक्रियते इति " इति वार्तिकम् ।

इन्द्रियाणां कारणपञ्चत्वात् पञ्चत्वमाह- जातिरिति, योनिम्= उत्पादकं कारणम्, जातिशब्देनात्र कारणं ग्राह्यमित्यर्थः, कारणीभूतानां पृथिव्यादिभूतानां पञ्चत्वादपीन्द्रियाणां पञ्चत्वं सिद्धमित्यन्वयः । इन्द्रियैक्ये हि उक्तानां बुद्धिलक्षणादीनामनेकत्वं नोपलभ्येत उपलभ्यते चेतीन्द्रियाणामप्यनेकत्वम्= पञ्चत्वं सिद्धमित्यर्थः ॥ ५९ ॥

इन्द्रियाणां पञ्चत्वे सिद्धेपि उक्तभौतिकत्वस्य कारणं जिज्ञासते- कथमिति, अव्यक्तप्रकृतीनि= अहङ्कारकारणिकानि । सूत्रेणोत्तरमाह- भूतेति, इन्द्रियैर्भूतगुणविशेषाणां गन्धादीनामुपलब्धेः= इन्द्रियाणां गन्धादिव्यञ्जकत्वात् तादात्म्यम्= भौतिकत्वं स्वीक्रियते- भूतकार्याणामेव भूतगुणव्यञ्जकत्वदर्शनाद् यथा गोघृतं कुङ्कुमगन्धव्यञ्जकं दृश्यते इतीन्द्रियाणां भौतिकत्वं सिद्धम्, आहङ्कारिकत्वे हि अहङ्कारस्य गन्धादिसर्वगुणाश्रयत्वाद् अहङ्कारोत्पन्नानामिन्द्रियाणां गन्धादिसर्वगुणव्यञ्जकत्वं स्यान्न तु गन्धाद्येकैकगुणव्यञ्जकत्वमिति भौतिकत्वं स्वीक्रियते तत्र पृथिव्यादीनां विशेषगुणो गन्धाद्येकैक एव गुण इति पृथिव्यादिभ्य उत्पन्नानां घ्राणादीनां गन्धाद्येकैकगुणव्यञ्जकत्वमुपपद्यते इतिसूत्रार्थः । व्याचष्टे-

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः= वायुः स्पर्शव्यञ्जकः आपो रसव्यञ्जिकाः. तेजो रूपव्यञ्जकम्. पार्थिवं किंचिद् द्रव्यं कस्यचिद् द्रव्यस्य गन्धव्यञ्जकम्, अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः तेन भूतगुणविशेषोपलब्धेर्मन्यामहे- भूतप्रकृतीनीन्द्रियाणि नाऽव्यक्तप्रकृतीनीति ॥ ६० ॥

( अथाऽर्थविवेचनम् )

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम् उद्देशश्च पृथिव्यादीनामेकगुणत्वे चाऽनेकगुणत्वे समान इत्यत आह—

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ ६१ ॥**

**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥ ६२ ॥**

स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः, आकाशस्योत्तरः= शब्दः स्पर्शपर्यन्तेभ्य इति ।

---

दृष्ट इति, गुणविशेषाभिव्यक्तिनियमः= गुणविशेषाभिव्यञ्जकत्वनियमः । सामान्येनोक्तं विशेषरूपेणाह- वायुरिति, स्पष्टमिदम्, किंचिद्द्रव्यम्= गोघृतादिकम्, कस्यचिद् द्रव्यस्य= कुङ्कुमादेर्गन्धस्य व्यञ्जकम् । कर्णशष्कुल्यवच्छिन्नं चाकाशं शब्दव्यञ्जकम् । प्रकृतमाह- अस्तीति, भूतगुणविशेषाणां गन्धादीनाम् उपलब्धिनियमः= उपलम्भकत्वनियमः= व्यञ्जकत्वनियमः- घ्राणादीनां गन्धादिमात्रव्यञ्जकत्वात् । उपसंहरति- तेनेति, इन्द्रियाणि भौतिकानि भूतगुणविशेषव्यञ्जकत्वाद् कुङ्कुमगन्धव्यञ्जकगोघृतवदित्यर्थः, तेनेति शब्द उपसंहारमात्रपरः ॥ ६० ॥

॥ इतीन्द्रियविवेचनं समाप्तम् ॥

अग्रिमसूत्रद्वयमवतारयति- गन्धादय इति, इति= प्रथमाध्यायप्रथमाह्निकचतुर्दशसूत्रे उद्दिष्टम्, उद्देशः= तादृशोपदेशः, तत्र हि- "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणाः" इत्युक्तं तच्च पृथिव्यादीनामेकैकगुणत्वेपि संभवति अनेकगुणत्वेपि संभवति, तत्र भूतानामनेकगुणत्वे तादृशभूतोत्पन्नेन्द्रियाणामनेकगुणग्राहकत्वं प्रसज्येत तथा चैकमेवेन्द्रियं स्वीकार्यम्- तेनैव सर्वगुणग्रहणसंभवात् किं चैवं तादृशमिन्द्रियमाहङ्कारिकं स्वीकार्यं न भौतिकम्- अनेकगुणग्रहणस्याहङ्कारिकत्वपक्षेपि संभवादित्याशयः प्रतिभाति । उक्तं सूत्रद्वयेन व्यवस्थापयति- गन्धेति, गन्धरसरूपस्पर्शशब्दानां मध्ये स्पर्शपर्यन्ताः= गन्धरसरूपस्पर्शाश्चत्वारो गुणाः पृथिव्याः- पृथिव्यामुपलभ्यमानत्वादिति सूत्रार्थः । तत्र च गन्धस्यैव प्राधान्यात् पृथिव्युत्पन्नघ्राणस्य गन्धमात्रग्राहकत्वमुपपद्यते एवमग्रेपि तत्तद्गुणप्राधान्यादेवेन्द्रियाणां तत्तन्मात्रगुणग्राहकत्वं विज्ञेयम् । अत्र भाष्यं नास्ति ॥ ६१ ॥

अप्तेज इति- गन्धरसरूपस्पर्शानां च मध्ये पूर्वं पूर्वं गन्धादिकमपोह्य= परित्यज्य परिशिष्टा अप्तेजोवायूनां गुणा ज्ञेयास्तथाहि- गन्धं परित्यज्य रसरूपस्पर्शा जलस्य गुणाः, रसरूपस्पर्शेष्वपि रसं परित्यज्य रूपस्पर्शौ तेजसो गुणौ, रूपस्पर्शयोरपि रूपं परित्यज्य स्पर्श एवैको वायोर्गुणः, उत्तरः= पूर्वसूत्रोक्तगुणेष्वन्तिमः शब्द आकशस्य गुण इत्येवं भूतानां गुणव्यवस्था विज्ञेया तथा च पृथिवीजलतेजसामनेकगुणत्वं वाय्वाकाशयोश्चैकगुणत्वं सिद्धमित्येवैव व्यवस्था प्रथमाध्यायप्रथमाह्निकचतुर्दशसूत्रे विज्ञेयेति सूत्रार्थः । व्याचष्टे- स्पर्शेति, "पूर्वं पूर्वम्" इत्यत्रान्वयार्थम् "स्पर्शपर्यन्ताः" इतिपदस्य "स्पर्शपर्यन्तानाम्" इत्येवं विभक्तिविपरिणामः कर्तव्यस्तथा च स्पर्शपर्यन्तानां मध्ये पूर्वं पूर्वमपोह्येत्यन्वयः, सूत्रार्थेस्तूक्त एव । "आकाशस्योत्तरः" इत्यत्रान्वयार्थम् "स्पर्शपर्यन्ताः" इत्यस्य "स्पर्शपर्यन्तेभ्यः" इत्येवं विभक्तिविपरिणामः कर्तव्यस्तथा च स्पर्शपर्यन्तेभ्यः उत्तरः= अग्रिमः शब्द आकाशस्य गुण इत्यन्वयः-

कथं तर्हि तरप्निर्देशः ?. स्वतन्त्रविनियोगसामर्थ्यात् तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते– उद्देशसूत्रे हि स्पर्शपयन्तेभ्यः परः शब्द इति, तन्त्रं वा– स्पर्शस्य विवक्षितत्वात्= स्पर्शपर्यन्तेषु नियुक्तेषु योऽन्यस्तदुत्तरः शब्द इति ॥ ६२ ॥

## न– सर्वगुणानुपलब्धेः ॥ ६३ ॥

नायं गुणनियोगः साधुः, कस्मात् ?. यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते= पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते गन्ध एवैको गृह्यते, एवं शेषेष्वपीति॥६३॥

---

उत्तरशब्दयोगे "अन्यारादितर" इत्यादिसूत्रेण पञ्चमीप्राप्तेः। उत्तरशब्दघटकस्य तरप्प्रत्ययस्यार्थं जिज्ञासते– कथमिति, किमर्थमित्यर्थः, अत्र– "उत्तर इत्ययं तरब्निर्देशो न युक्तः– द्वयोर्दृष्टत्वात्, इह पुनः प्रकृष्टवाचित्वे सति उत्तम इति स्यात्" इतिवार्तिकम्, द्वयोरकस्य बोधने तरप्निर्देशो भवति यथा 'अन्यतरः' इति न त्वेतादृशस्थले इत्यर्थः। उत्तरमाह– स्वतन्त्रेति, स्वतन्त्रो यो विनियोगः= प्रयोगस्तत्सामर्थ्यादुत्तरशब्दप्रयोगोस्ति, अन्तिमार्थेऽत्रोत्तरशब्दस्य प्रयोगोस्ति स च स्वतन्त्र एव न त्वत्रानेकेष्वेकार्थबोधनार्थं तरप्निर्देश इत्यर्थः, अत्र "नायं तरप्निर्देशः अपि तु पराभिधानमेतत् यदुक्तं भवति पर इति तदुक्तं भवति उत्तर इति" इतिवार्तिकम्, "अव्युत्पन्नोयमुत्तरशब्दोऽनन्तरवचनस्तेन बहूनां निर्धारणेप्युपपन्नार्थः" इतितात्पर्यटीका, "स्वतन्त्रस्य= अवधारणीयानपेक्षस्य विनियोगः= बोधार्थं व्युत्पन्नैः प्रयोगस्तत्सामर्थ्यात्= शक्तेरितियावत्" इति श्रीगुरुचरणाः। पर्यवसितमाह– तेनेति, परार्थाभिधानम्= परशब्दपर्यायत्वम्= परशब्दार्थबोधकत्वम्। उक्ते हेतुमाह– उद्देशेति, उद्देशसूत्रे= पूर्वसूत्रे उक्तचतुर्दशसूत्रे वा स्पर्शपयन्तेभ्यः परः शब्द एवोक्त इत्यत्रोत्तरशब्दः शब्दगुणग्रहणार्थं प्रयुक्तः परशब्दार्थक एव विज्ञायते इत्यर्थः। पक्षान्तरमाह– तन्त्रमिति, तन्त्रम्= युक्तस्तरप्निर्देशः– स्पर्शस्य विवक्षितत्वात् स्पर्शशब्दयोरुत्तरः शब्दः आकाशस्य गुण इत्यर्थः, स्पर्शपर्यन्तेषु गुणेषु पृथिव्यादिषु विनियुक्तेषु योऽन्यः= तदुत्तरः= स्पर्शोत्तरः=स्पर्शाग्रिमः शब्दः स आकाशस्य गुण इत्यन्वयादित्यर्थः, अत्र "तदुत्तरः" इत्यत्र 'स उत्तरः' इति वक्तव्यमासीत्। अत्र– "तन्त्रं वा स्पर्शस्य विवक्षितत्वात्= भवतु वा तरब्निर्देशः (इत्यर्थः) ननूक्तमुत्तम इति प्राप्नोति? न स्पर्शस्य विवक्षितत्वात्=गन्धादिभ्यः परः स्पर्शः. स्पर्शादयं पर इति यावदुक्तं भवति तावदुक्तं भवति उत्तर इति" इतिवार्तिकम्। किं वा तन्त्रं नाम स्पर्शस्य तन्त्रम्= उभयत्रान्वयस्तथा च 'स्पर्शपर्यन्तेभ्यः पूर्वं पूर्वमपोह्य परिशिष्टा गुणा जलादीनां गुणाः स्पर्शशब्दयोश्चोत्तरः= अन्यतरः= द्वितीयः शब्द आकाशस्य गुणः' इत्येवं सूत्रान्वयस्तथा चात्र स्पर्शस्योभयत्रान्वयात् तन्त्रं सिद्धं तेन च तन्त्रेणोत्तरशब्दस्य द्वितीयार्थबोधकत्वेन तरप्निर्देशोपि युक्त इत्यर्थः॥ ६२ ॥

उक्तां गुणव्यवस्थां निराकरोति– नेति, उक्ता भूतानां गुणव्यवस्था नोपपद्यते– सर्वगुणानुपलब्धेः= पृथिव्याद्युत्पन्नैर्घ्राणादिभिर्गन्धादिस्पर्शपर्यन्तादीनां सर्वेषां गुणानामनुपलब्धेरित्यन्वयः, यदि पृथिव्याः गन्धरसरूपस्पर्शाश्चत्वारो गुणाः स्युस्तदा पृथिव्युत्पन्नेन घ्राणेन चत्वार एव गृहीताः स्युः न च गृह्यन्ते इति न चत्वारः पृथिवीगुणाः, जलोत्पन्नरसनया च रसरूपस्पर्शा न त्रयो गृह्यन्ते इति न त्रयो जलगुणाः, तेजोजातेन चक्षुषा च न रूपस्पर्शौ गृह्येते इति न रूपस्पर्शौ द्वौ तेजोगुणौ किं त्वेकैक एव गुणो भूतानां यो घ्राणादिभिर्गृह्यते इतिसूत्रार्थः। व्याचष्टे– नायमिति, नियोगः= व्यवस्था। अयम्= पूर्वोक्तः। नियोगासाधुत्वे हेतुं जिज्ञासते– कस्मादिति। उत्तरमाह– यस्येति, ते सर्वे इत्यन्वयः, तदात्मकेन= तादृशभूतोत्पन्नेन, तत्= भूतम् आत्मा कारणं यस्य तत् तदात्मकमित्यर्थः। सामान्यत उक्तं विशेषरूपेण व्याचष्टे– पार्थिवेनेति, इति न स्पर्शपर्यान्ताश्चत्वारो गुणाः पृथिव्याः संभवन्तीति शेषः। उक्तमन्यत्रातिदिशति– एवमिति, एवमेव शेषेष्वपि भूतेष्वनेकगुणासंभवो विज्ञेय इत्यर्थः, जले रसरूपस्पर्शास्त्रयो न संभवन्ति– रसनेन्द्रियाग्राह्यत्वात्, तेजसि रूपस्पर्शौ न संभवतः– चक्षुरग्राह्यत्वात् किं तु जले रस एवैकः–

कथं तर्हीमे गुणा विनियोक्तव्याः ? इति—

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः ॥ ६४ ॥**

गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः अतस्तदनुपलब्धिः=तेषां तयोः तस्य चानुपलब्धिः= घ्राणेन रसरूपस्पर्शानां. रसनेन रूपस्पर्शयोः. चक्षुषा स्पर्शस्येति ॥६४॥

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्ते ? इति,

**संसर्गाच्चानेकगुणग्रहणम् ॥ ६५ ॥**

अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते एवं शेषेष्वपीति ॥ ६५ ॥

नियमस्तर्हि न प्राप्नोति– संसर्गस्यानियमात् 'चतुर्गुणा पृथिवी' 'त्रिगुणा आपः' 'द्विगुणं तेजः' 'एकगुणो वायुः' इति, नियमश्चोपपद्यते, कथम् ?—

**विष्टं ह्यपरं परेण ॥ ६६ ॥**

---

रसनग्राह्यत्वात्, तेजसि च रूपमेवैकं चक्षुर्ग्राह्यत्वादित्यर्थः । वाय्वाकाशयोस्तु सिद्धान्तिनाप्येकैक एव गुणोत्र स्वीकृत इति न तत्र किंचिद्बोध्यमस्तीत्यनुसंधेयम् ॥ ६३ ॥

उक्ता गुणव्यवस्था यदि न युक्ता तदा कथं गुणव्यवस्था भूतेषु कार्येति जिज्ञासते– कथमिति, इमे= गन्धरसरूपस्पर्शशब्दाः । सूत्रेण पूर्वपक्षी व्यवस्थामाह– एकैकेति, गन्धादिषु उत्तरोत्तरगुणानां मध्ये भूतेषु एकैकश्येन= एकैकशः= एकैकस्यैव सद्भावादुत्तराणाम्= रसादीनां गुणानां तत्= तैः= घ्राणादिभिरनुपलब्धिरुपपन्नेत्यन्वयः, पृथिव्यां गन्ध एवैकः जले रस एवैकः तेजसि रूपमेवैकं वायौ स्पर्श एवैकः गगने च शब्द एवैको गुणो न तु पृथिव्यादिषु रसादय इतिव्यवस्था युक्ता तथा च पृथिव्यादिषु रसादीनामभावादेव घ्राणादिभिरनुपलब्धिरुपपद्यते– घ्राणादीनां स्वप्रकृतिभूतपृथिव्यादिवृत्तिमात्रगुणग्राहकत्वात् पृथिव्यादौ च गन्धादीनामेकैकशो वृत्तित्वस्वीकारादिति सूत्रार्थः । व्याचष्टे– गन्धादीनामिति, पृथिव्यादीनां मध्ये एकैकस्य पृथिव्यादिभूतस्य गन्धरसरूपस्पर्शशब्दानां मध्ये एकैको गुणः, यथाक्रमम्= पृथिव्याः गन्ध एवैको गुण इत्येवं व्यवस्था । अतः= पृथिव्यादौ रसादीनामभावादेव घ्राणादिभिस्तदनुपलब्धिः= रसादीनामनुपलब्धिः, उक्तं व्याचष्टे– तेषामिति, रसादिगुणानामित्यर्थः । तेषाम्= रसरूपस्पर्शानाम्. तयोः=रूपस्पर्शयोः. तस्य= स्पर्शस्य घ्राणरसनाचक्षुर्भिरनुपलब्धिरित्येवं यथाक्रममन्वयः । सामान्येनोक्तं विशेषरूपेणाह– घ्राणेनेति, अनुपलब्धिरिति त्रिष्वपि वाक्येषु योज्यम् । पृथिव्यादौ रसादीनामभावादित्यर्थः ॥ ६४ ॥

ननु यदि पृथिव्यादिषु गन्धादिगुणेष्वेकैक एव गुणस्तदा कथं पृथिव्यादिषु रसादयोप्यनेके गुणा उपलभ्यन्ते ? इत्याशङ्कते–कथमिति । सूत्रेण समाधत्ते– संसर्गादिति, पृथिव्यादिषु जलादीनां संसर्गोस्ति तादृशसंसर्गादेवाऽनेकेषां जलादिगुणभूतानां रसादीनां पृथिव्यादिषु ग्रहणं भवति न तु पृथिव्यादिगुणत्वेनेति सूत्रार्थः । व्याचष्टे– अबादीति, जलतेजोवायूनां संसर्गात् पृथिव्यां रसरूपस्पर्शा उपलभ्यन्ते, शेषेष्विति– शेषयोरिति वक्तव्यमासीत्, तेजोवायुसंसर्गात् जले रूपस्पर्शौ उपलभ्येते, वायुसंसर्गाच्च तेजसि स्पर्श उपलभ्यते इत्यर्थः, तथा च पृथिव्यादिषु भूतान्तरसंसर्गादनेकगुणोपलब्धिरप्युपपन्ना. पृथिव्यादिषु वस्तुतो रसादीनामभावाद् घ्राणादिभिरनुपलब्धिरप्युपपन्नेत्याशयः ॥ ६५ ॥

उक्तव्यवस्थायामाशङ्कते– नियम इति, नियमश्चोभयत्रापि– "चतुर्गुणा पृथिवी" इत्यादिरूपो विज्ञेयः । न प्राप्नोति= न सिध्यति– संसर्गस्यानियमादिति– यथा पृथिव्यां जलादीनां संसर्गस्तथा जलादिषु पृथिव्यादीनामपि संसर्गः स्यादेव तथा च जलादिष्वपि गन्धादिग्रहणं स्यादेवेति चतुर्ष्वपि भूतेषु गन्धादयश्चत्वारो गुणाः प्राप्ता इत्युक्तनियमानुपपत्तिरिति शङ्कार्थः। नियमस्वरूपमाह– चतुर्गुणेति । अत्र पूर्व-

पृथिव्यादीनां पूर्वपूर्वमुत्तरेणोत्तरेण विष्टम् अतो न संसर्गानियम इति. तच्चैतद् भूतसृष्टौ वेदितव्यं नैतर्हीति ॥ ६६ ॥

## न- पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥

नेति त्रिसूत्रीं प्रत्याचष्टे, कस्मात् ?, पार्थिवस्य द्रव्यस्याऽऽप्यस्य च प्रत्यक्षत्वात् । महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा- रूपाभावात् । तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वाद् न संसर्गादनेकगुणग्रहणं भूतानामिति । भूता-

---

पक्षी नियमोपपत्तिं प्रतिजानीते- नियमश्चेति । नियमोपपत्तिप्रकारं जिज्ञासते- कथमिति । सूत्रेण प्रकारमाह- विष्टमिति, न संसर्गस्यानियमोऽस्ति येन 'चतुर्गुणा पृथिवी' इत्यादिनियमस्यानुपपत्तिः स्यात् किंतु पृथिवीजलतेजोवायूनां भूतानां मध्ये अपरम्= पूर्वं पूर्वं भूतं परेण= उत्तरेणोत्तरेण भूतेन विष्टम्= संसृष्टम्= सयुक्तमस्ति न तूत्तरोत्तरं पूर्वपूर्वेणेति न संसर्गस्यानियमस्तथा च पृथिव्यादिषु जलादीनां संसर्गाद् रसादय उपलभ्यन्ते, पृथिव्यादीनां च न जलादिषु संसर्ग इति न जलादौ गन्धादय उपलभ्यन्ते इत्युक्तनियम उपपन्न इतिसूत्रार्थः । परिशिष्टं पूर्वमेव प्रतिपादितम् । व्याचष्टे- पृथिवीति, पृथिव्यादीनां मध्ये पूर्वं पूर्वम्= पृथिव्यादिकम् , उत्तरेणोत्तरेण= जलादिना, एवमग्रेप्यन्वयः । उपसंहरति- अत इति । ननु पूर्वं पूर्वम् उत्तरेणोत्तरेण भूतेन संयुक्तं न तूत्तरोत्तरं पूर्वपूर्वेणेत्यत्र किं मानमित्याशङ्कयाह- तदिति, एतत्= सूत्रोक्तसंसर्गनियमः, भूतसृष्टौ= भूतसृष्टिप्रतिपादकपुराणेषु द्रष्टव्यं एतर्हि= इदानीमेतत् प्रत्यक्षेण ज्ञातुं न शक्यते प्रत्यक्षायोग्यत्वादित्यर्थः । तदुक्तम्—

"आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत् ।
रूपं तथैवाऽऽविशतः शब्दस्पर्शगुणावुभौ । (रूपमितिकर्मपदम्)
शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् ॥" इत्यादि ।

अत्र शब्दस्पर्शादिशब्दा आकाशवाय्वादिभूतपरा व्याख्येयास्तदनेन पूर्वपूर्वस्य भूतस्योत्तरोत्तरभूतेन संयुक्तत्वं सिद्धमित्यलम् ॥ ६६ ॥

पूर्वोक्तमेकैकगुणवादं निराकरोति- नेति, पृथिव्यादीनामुक्ता एकैकमात्रगुणवत्त्वव्यवस्था न युक्ता- पार्थिवाप्ययोरपि पदार्थयोर्घटादिहिमाद्योः प्रत्यक्षत्वात्= चाक्षुषप्रत्यक्षविषयत्वात् , उक्तव्यवस्थया पृथिवीजलयो रूपं न प्राप्नोति- एकैकगुणस्वीकारेण तेजस्येव रूपसंभवात् रूपं विना च चाक्षुषप्रत्यक्षासंभवादिति पृथिवीजलयोरपि चाक्षुषप्रत्यक्षं न स्यात् भवति तु तस्माज्ज्ञायते पृथिवीजलयोरपि रूपमस्तीति तस्मात् पूर्वोक्ता त्वदीया एकैकगुणव्यवस्था नोपपद्यते इतिसूत्रार्थः । व्याचष्टे- नेति, त्रिसूत्रीम्= "एकैकश्येन" इत्यारभ्य सूत्रत्रयं नकारेण प्रत्याचष्टे इत्यर्थः, तत्रैकैकगुणस्वीकारपक्षे तेजस्येव रूपनियमात् पार्थिवाप्ययोः चाक्षुषप्रत्यक्षं न स्यात् न चैवमस्तीत्येवं पूर्वसूत्रद्वयस्य प्रत्याख्यानम् , तृतीयसूत्रेण च जलस्य तेजस्संयोगेन चाक्षुषप्रत्यक्षसंभवेपि पार्थिवद्रव्यस्य चाक्षुषप्रत्यक्षं न संभवति- परेण जलमात्रेण संयोगस्वीकारात् भवति च पार्थिवस्यापि चाक्षुषप्रत्यक्षमित्येवं तृतीयसूत्रस्य प्रत्याख्यानं वेदितव्यं स्थूलदृष्ट्या । भाष्ये चात्रान्ते उक्ततृतीयसूत्रस्य प्रत्याख्यानं द्रष्टव्यमितिविवेकः । एतत्प्रत्याख्याने हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- पार्थिवस्येति, आप्यस्य= जलीयस्य करकादेः पार्थिवस्य घटादेश्च चाक्षुषप्रत्यक्षविषयत्वाद्रूपवत्त्वं प्राप्नोति तेनोक्तत्रिसूत्र्युक्ता व्यवस्था न युक्तेत्यर्थः । स्वाभिप्रायमुद्घाटयति- महत्त्वेति, चाक्षुषप्रत्यक्षं प्रति महत्त्वम् अनेकद्रव्यत्वम्= अनेकावयवसमवेतत्वं रूपवत्त्वं च कारणमस्ति तत्र पूर्वोक्तमतेन रूपस्य तेजस्येव सत्त्वात् पृथिवीजलयोश्चाऽसत्त्वात् तैजसमेव द्रव्यं चाक्षुषप्रत्यक्षविषयो भवेन्न तु पार्थिवमाप्यं च, भवति च तैजसद्रव्यवत् पार्थिवाप्ययोरपि द्रव्ययोः प्रत्यक्षमिति पृथिवीजलयोरपि रूपवत्त्वं प्राप्तमिति नोक्तनीत्या भूतानां भूतान्तरसंसर्गादनेकगुणग्रहणमुपपद्यते इत्याह-

न्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते, नियमे वा कारणमुच्यतामिति ।

रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्, पार्थिवो रसः षड्विधः आप्यो मधुर एव न चैतत् संसर्गाद् भवितुमर्हति । रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्, तैजसरूपानुगृहीतयोः संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति । एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः= पार्थिवं हरितलोहितपीताद्यनेकविधं रूपम् आप्यं तु शुक्लमप्रकाशकं न चैतदेकगुणानां संसर्गे सत्युपलभ्यते इति । उदाहरणमात्रं चैतत् ।

अतः परं प्रपञ्चः– स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात्, पार्थिवोऽनुष्णाशीतः स्पर्शः उष्णस्तैजसः प्रत्यक्षः, न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यते इति ।

तैजसवदिति । उक्तमते बाधकमाह– भूतान्तरेति, यदि तेजोरूपेण पार्थिवाप्ययोर्द्रव्ययोः प्रत्यक्षत्वम्= प्रत्यक्षविषयत्वं स्यात्तदा विशेषासंभवात् तैजसरूपेण वायोरपि संसर्गात् चाक्षुषप्रत्यक्षं स्यात् न चैवमस्ति, किं वा नियमे= तेजोरूपेण पार्थिवाप्ययोरेव चाक्षुषं संभवति न वायोरिति नियमे कारणं वक्तव्यं न च वक्तुं शक्यते इति नोक्ता व्यवस्था युक्तेत्यर्थः । अत्र "यस्यैकैकगुणानि भूतानि तस्य तैजसमेव द्रव्यं रूपवत्त्वात् प्रत्यक्षं प्राप्नोति न पार्थिवमाप्यं वा– अरूपत्वात्" इतिवार्तिकम्, "त्रिविधं हि द्रव्यं चाक्षुषमिष्यते– पार्थिवमाप्यं तैजसं च तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्याद् नेतरत्– अरूपवत्त्वात्, न च रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोरिति वाच्यम्– नभोनभस्वतोरपि चाक्षुषत्व-प्रसङ्गात्– अस्ति हि रूपवता तेजसा तयोः संयोगः" इति च तात्पर्यटीका ।

सूत्रे "पार्थिवाप्ययोः" इति सामान्येनोक्तं तदनेन पदेन पृथिवीजलसंबन्धिपदार्थमात्रस्य प्रकृतो-पयोगिनो ग्रहणसंभवाद् वर्णकान्तरमाह– रसयोरिति, पार्थिवाप्यौ रसौ रासनप्रत्यक्षविषयावेव तत्र पृथिव्यां षड्विधस्य रसस्य जले चैकस्य मधुरस्यैव प्रत्यक्षं भवति एतद्वैषम्यं च पूर्वोक्तसंसर्गमतेन नोप-पद्यते– तादृशमतेन पृथिवीजलयोः रसानां साम्यमेव स्यात् किं वोक्तमतेन रसो जलस्यैव गुण इति जले एव षड्विधरसस्य प्रत्यक्षं स्यात् न पृथिव्यामित्यर्थः । वर्णकान्तरमाह– रूपयोरिति, पार्थिवाप्ययो रूपयोः प्रत्यक्षत्वात् पृथिवीजलयोरपि रूपसत्त्वं प्राप्तमिति तेन तेजस्येव रूपमितिपूर्वोक्ता व्यवस्था न युक्तेत्यन्वयः । उक्तमते बाधकमाह– तैजसेति, संसर्गे= उक्तभूतान्तरसंसर्गपक्षे तैजसरूपानुगृहीतयोः= तैजसरूपयुक्तयोः पार्थिवाप्ययोः रूपस्य प्रत्यक्षं न संभवति हि= यतः– रूपम्= तैजसरूपं घटादीनां व्यञ्जकम्= प्रकाशकमेव भवति न तु व्यङ्ग्यम्= ग्राह्यमपि गृह्यते च पार्थिवाप्ययोरपि रूपमिति नोक्तसं-सर्गमतं युक्तमित्यर्थः । पार्थिवाप्ययोस्तैजसरूपेणानुग्रहपक्षे तद्रूपं परप्रकाशकमपि स्यात्– तेजोरूपस्य पर-प्रकाशकत्वात् न च पार्थिवादिरूपं परप्रकाशमिति नोक्तमतं युक्तमित्याशयः । अत्र "संसर्गे" इत्यस्य स्थाने 'प्रत्यक्षे' इति वक्तव्यमासीत् । वस्तुतस्तु चिन्त्यमेतत्– दीपादिरूपस्यापि प्रत्यक्षत्वात् वाक्यमपीदम-संबद्धमेव, अत एव बाधकान्तरमाह– एकेति, विषयत्वं सप्तम्यर्थः– पार्थिवाप्ययोः रूपयोः एकानेक-विधत्वविषयकप्रत्यक्षस्य स्पष्टत्वादुक्तसंसर्गमतं नोपपद्यते इत्यर्थः, उक्तं व्याचष्टे– पार्थिवमिति, पार्थिवं रूपं हरितादिप्रकारेणानेकविधं जलरूपं त्वेकविधमेव शुक्लम् अप्रकाशकम्= अभास्वरम् एतद्वैषम्यं चैकैक-गुणानां भूतानां संसर्गे सति भूतान्तरगुणग्रहणमते नोपपद्यते– तन्मते रूपं तेजस एव गुण इति तेज-स्संसर्गात् पृथिवीजलयोः प्राप्नुवद्रूपमेकविधयैव प्राप्नुयात् किं वा जलतेजसोरव्यवधानाज्जले एवानेकविधं स्यात् न पृथिव्यामित्यर्थः । किंचिदुपसंहरति– उदाहरणेति, एतत्= यदत्रोक्तम् ।

संक्षेपेणोक्तं भूतानां प्रस्तारेण प्रपञ्चयति– अतः परमिति, उक्तमते पार्थिवाप्ययोः समुच्चयेन दोषाः प्रदर्शिताः संप्रति पार्थिवतैजसादिसमुच्चयेन दोषानाह– स्पर्शयोरिति, पार्थिवतैजसस्पर्शयोः प्रत्यक्षत्वात्

अथ वा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात्= चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षं तेन तत्कारणमनुमीयते– तथाभूतमिति. तस्य कार्यं लिङ्गम्– कारणभावाद्धि कार्यभाव इति । एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थानुमानमिति ।

दृष्टश्च विवेकः– पार्थिवाप्ययोः प्रत्यक्षत्वात्= पार्थिवं द्रव्यमऽबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते आप्यं च पराभ्यां तैजसं च वायुना, न चैकैकगुणं गृह्यते इति । निरनुमानं तु "विष्टं ह्यपरं परेण ६६" इत्येतदिति= नात्र लिङ्गमनुमापकं गृह्यते इति येनैतदेवं प्रतिपद्येमहि । यच्चोक्तम्– 'विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न सांप्रतम्' इति नियमकारणाभावादयुक्तम्, दृष्टं च सांप्रतम्– 'अपरं परेण विष्टम्' इति= वायुना च विष्टं तेज इति । विष्टत्वम्=

पृथिवीतेजसोः स्पर्शवत्त्वं स्वीकार्यमित्यर्थः । उक्तमते दोषमाह– पार्थिव इति, एकगुणानाम्= एकैकगुणवतां भूतानाम्, एतत्= एतादृशवैषम्यं नोपपद्यते यत् पृथिव्यामनुष्णाशीतस्तेजसि चोष्णः स्पर्श इति, पूर्वोक्तमते स्पर्शो वायोरेव गुणः स चाप्यनुष्णाशीत एव तथा चानुष्णाशीतस्पर्शविशिष्टवायुसंसर्गेण जलादौ प्राप्नुवन् स्पर्शोऽनुष्णाशीत एव प्राप्नुयात् न तु जले शीतस्तेजसि चोष्णः पृथिव्यां चानुष्णाशीत इति वैषम्यमुपपद्यते इत्यर्थः । वर्णकान्तरमाह– अथ वेति, व्यवस्थितगुणत्वमाह– चतुर्गुणमिति, गन्धरसरूपस्पर्शविशिष्टम्, त्रिगुणम्= रसरूपस्पर्शविशिष्टम्. इत्येवं व्यवस्थितगुणयोरेव पार्थिवाप्यद्रव्ययोः प्रत्यक्षं भवतीति पृथिव्यामुक्तगुणचतुष्टयं जले चोक्तगुणत्रितयं स्वीकार्यमिति नैकैकमात्रगुणवत्त्वमुपपद्यते इत्यर्थः, तेन= प्रत्यक्षेणानुमीयते– तत्कारणम्= पार्थिवद्रव्यकारणं पृथिवीभूतं तथाभूतम्= गुणचतुष्टयविशिष्टम् आप्यद्रव्यकारणं च जलभूतं गुणत्रितयविशिष्टमिति । तस्य= उक्तानुमानस्य कार्यम्= पार्थिवाप्यद्रव्यं किं वा तद्गतगुणवृन्दं लिङ्गम्= साधकम्, कार्यस्य लिङ्गत्वे हेतुमाह– कारणेति, कारणानुरूपमेव कार्यं भवतीति कारणीभूतभूतेषूक्तगुणवृन्दस्य सत्त्वे एव तत्कार्येष्वपि सत्त्वं संभवतीत्यर्थः, किं वा गुणानां कारणेषु पृथिव्यादिभूतेषु भावात्= सत्त्वादेव कार्ये द्रव्ये भावः= सत्त्वं संभवतीति भूतेषूक्तरीत्या गुणवृन्दं सिद्धमिति न संसर्गेण गुणवत्त्वमित्यर्थः । उक्तमते दोषान्तरमाह– एवमिति, गुणव्यवस्थाया इति पञ्चम्यन्तं षष्ठ्यन्तं वा, व्यवस्थितगुणयोस्तैजसवायव्यद्रव्ययोः प्रत्यक्षमस्ति तत्र तैजसद्रव्ये रूपस्पर्शयोः वायव्यद्रव्ये च स्पर्शस्य प्रत्यक्षं भवतीति गुणव्यवस्थया तत्कारणीभूते द्रव्ये तेजसि रूपस्पर्शयोर्वायौ च स्पर्शस्य व्यवस्थाया अनुमानं भवति– कार्यगुणानां कारणगुणपूर्वकत्वनियमादिति पृथिवीजलतेजसामनेकगुणत्वं सिद्धमिति एकैकगुणवत्त्वव्यवस्था प्रदर्शिता नोपपद्यते इत्यर्थः । किं वा 'गुणव्यवस्थायाः प्रत्यक्षत्वात्' इत्यन्वयः

संसर्गेणानेकगुणत्वं तदा सिध्येत् यदि संसर्गाभावेऽनेकगुणत्वं न गृह्येत न चैवमस्तीत्याह– दृष्टश्चेति, विवेकः= भेदः= संसर्गाभावः, विवेकग्रहणमुदाहरति– पार्थिवेति, अबादिभिः= जलादिभिः, वियुक्तम्= असंसृष्टम्, आप्यम्= जलीयं द्रव्यं पराभ्याम्= तेजोवायुभ्यां वियुक्तं प्रत्यक्षतो गृह्यते, तैजसं च द्रव्यं दीपादि वायुना वियुक्तं प्रत्यक्षतो गृह्यते, वियुक्तत्वेन तादृशप्रत्यक्षकालेपि पार्थिवादिकं द्रव्यम् एकैकगुणम्= गन्धाद्येकैकगुणमात्रयुक्तं न गृह्यते किं तु पार्थिवं गन्धादिचतुर्गुणम् आप्यं रसादित्रिगुणं तैजसं च रूपादिद्विगुणं गृह्यते तेन भूतानामनेकगुणवत्त्वं सिद्धं तेन भूतानामेकैकगुणवत्त्वव्यवस्था नोपपद्यते इत्यर्थः । यदुक्तम्– "विष्टं ह्यपरम्" इति तदपि निरनुमानम्= निर्हेतुकमेवेति न त्वदुक्ता गुणव्यवस्थोपपद्यते इत्याह–निरनुमानमिति, उक्तं व्याचष्टे– नात्रेति, अत्र– "विष्टम्" इति सूत्रोक्तार्थे, एतत्= उक्तसूत्रोक्तम्. एवम्= तथैव= युक्तमेवेति प्रतिपद्येमहि= स्वीकुर्मः इत्यन्वयः । परिहर्तुमन्यदनुवदति– यच्चेति, तदाह– विष्टमिति । परिहरति– नियमेति, इदानीं भूतानां परस्पर संसर्गो द्रष्टुं न शक्यते इत्युक्तनियमे कारणाभावात्तदुक्तमयुक्तम् । भूतानां संसर्गस्य संप्रत्यपि दृश्यत्वमाह– दृष्टमिति, सांप्रतम्= इदानीम्,

संयोगः स च द्वयोः समानः, वायुना च विष्टत्वात् स्पर्शवत् तेजः न तु तेजसा विष्टत्वाद् रूपवान् वायुरिति नियमकारणं नास्तीति। दृष्टं च तैजसेन स्पर्शेन वायव्यस्य स्पर्शस्याऽभिभवादग्रहणमिति न च तेनैव तस्याऽभिभव इति ॥ ६७ ॥

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य "न सर्वगुणानुपलब्धेः ६३" इति चोदितं समाधीयते—

## पूर्वपूर्वगुणोत्कर्षात् तत्तत्प्रधानम् ॥ ६८ ॥

तस्मान्न सर्वगुणोपलब्धिर्घ्राणादीनाम्. पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्तत्प्रधानम्। का प्रधानता ?, विषयग्राहकत्वम्। को गुणोत्कर्षः ?, अभिव्यक्तौ समर्थत्वम्। यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वं गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम् एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुण-

---

अपरम्= पृथिव्यादिभूतं परेण= जलादिभूतेन विष्टम्= संयुक्तं संप्रत्यपि प्रत्यक्षेण दृश्यते, उदाहरति— वायुनेति, पृथिव्यादेर्जलादिना संयोगस्तु अत्यन्तप्रसिद्ध एवेत्यन्वयः। विष्टत्वपदार्थमाह— विष्टत्वमिति, सः= संयोगः, द्वयोः= द्वयोः संयुक्तयोर्भूतयोः समानः— संयोगस्योभयवृत्तित्वात् तथा च यथा वायुसंयोगेन तेजसि स्पर्शः प्राप्नोति तथा तेजस्संयोगेन वायौ रूपं प्राप्नुयादेव न चैवमस्ति तत्र वायुना विष्टत्वात्= संयुक्तत्वात् तेजः स्पर्शवद् भवति तेजसा विष्टत्वाद् वायू रूपवान् न भवतीति त्वदुक्तनियमे कारणं नास्तीति न स नियमः स्वीकर्तुं शक्यते इत्यर्थः। पूर्वपक्षे दोषान्तरमाह— दृष्टं चेति, तैजसेनोष्णेन स्पर्शेन वायुस्पर्शस्यानुष्णाशीतस्याभिभवो भवति तेनाग्रहणं भवति ग्रीष्मादौ तत्र त्वन्मते वायोरेव स्पर्शो गुणः स एव वायुसंसर्गात् तेजसि गृह्यते तस्य च तेनैवाभिभवो न संभवतीति वायुस्पर्शस्याभिभवो न स्यात् तथा च ग्रीष्मादावपि वायोरनुष्णाशीतः स्पर्शो गृह्येत न च गृह्यते गृह्यते चोष्णः स्पर्शः तेन वायुस्पर्शस्य तेजस्स्पर्शेनाभिभवः सिद्धः अभिभवश्चान्येनैवान्यस्य संभवतीति वायुस्पर्शातिरिक्त एव स्पर्शस्तेजसि स्वीकार्य इति न त्वदुक्तरीत्या भूतान्तरेषु भूतान्तरसंसर्गेण भूतान्तरगुणानां ग्रहणव्यवस्थोपपद्यते किं तु मदुक्तरीत्यैव गुणव्यवस्थोपपद्यते इत्यर्थः ॥ ६७ ॥

अग्रिमसूत्रमवतारयति— तदेवमिति, एवम्= उक्तरीत्या, प्रवादम्= भूतेष्वेकैकगुणव्यवस्थावादम्, चोदितम्= पूर्वपक्षः। न सर्वगुणेतिपूर्वपक्षसूत्रस्योत्तरमाह— पूर्वेति, घ्राणादिकमिन्द्रियं गन्धरसरूपस्पर्शशब्दानां गुणानां मध्ये पूर्वपूर्वगुणस्य उत्कर्षात्= विशिष्टत्वात् किं वा घ्राणादिग्राह्यत्वात् तत्तत्प्रधाम्= गन्धादिमात्रग्राहकमिति न घ्राणादिभिः रसादिग्रहणापत्तिस्तथा च पृथिव्यां गन्धरसरूपस्पर्शानां सत्त्वेपि घ्राणं गन्धस्यैव ग्राहकं जले च रसरूपस्पर्शानां सत्त्वेपि रसनं रसस्यैव ग्राहकं तेजसि रूपस्पर्शयोः सत्त्वेपि चक्षू रूपस्यैव ग्राहकं त्वक् च स्पर्शस्यैवेति सूत्रार्थः। व्याचक्षाणः सूत्रशेषमाह— तस्मादिति, तस्मात्= पूर्वपूर्वगुणस्योत्कर्षात्, घ्राणादीनामिति कर्तरि षष्ठी घ्राणादिभिरित्यर्थः। सूत्रान्वयमाह— पूर्वमिति, पूर्वपूर्वस्येत्यर्थः। घ्राणादिकं तत्तत्प्रधानम्= गन्धादिग्राहकम्। प्रधानशब्दप्रतिपाद्यं जिज्ञासते— केति, उत्तरमाह— विषयेति, अत्र ग्राहकत्वमित्येव वक्तव्यमासीत् तथा च "तत्तत्प्रधानम्" इत्यस्य 'गन्धादिमात्रग्राहकम्' इत्यर्थः सिद्धः। उत्कर्षशब्दप्रतिपाद्यं जिज्ञासते— क इति, उत्तरमाह— अभिव्यक्ताविति, घ्राणादिभिर्ग्राह्यत्वमितियावत्। उक्ते दृष्टान्तमाह— यथेति, यथा बाह्यं पार्थिवं गोघृतं गन्धरसरूपस्पर्शैः चतुर्गुणमपि कुङ्कुमगन्धस्यैवाभिव्यञ्जकं तथा घ्राणं पार्थिवत्वात् चतुर्गुणमपि स्वस्मिन् पृथिव्यां च गन्धमात्रस्योत्कर्षात् गन्धमात्रस्य ग्राहकं न रसादेः, यथा च बाह्यमाप्यं द्रव्यं मुखजलं त्रिगुणमपि मोदकादिरसस्यैवाभिव्यञ्जकं तथा रसनं जलीयत्वात् त्रिगुणमपि स्वस्मिन् जले च रसमात्रस्योत्कर्षात्

ग्राहकत्वं गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपग्राहकत्वं तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिरिति । यस्तु प्रतिजानीते– गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकम् एवं रसनादिष्वपीति, तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यते इति ॥ ६८ ॥

किंकृतं पुनर्व्यवस्थानं किंचित् पार्थिवमिन्द्रियं न सर्वाणि?, कानिचित् आप्यतैजसवायव्यानि इन्द्रियाणि न सर्वाणि? इति—

## तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्, दृष्टो हि प्रकर्षे भूयस्त्वशब्दः– प्रकृष्टो यथा विषयः ‘ भूयान् ’ इत्युच्यते, यथा पृथगर्थक्रियासमर्थानि

---

रसमात्रस्य ग्राहकं न रूपादेः, यथा च बाह्यं तैजसं द्रव्यं दीपादि द्विगुणमपि घटादिरूपस्यैवाभिव्यञ्जकं तथा चक्षुस्तैजसत्वात् रूपस्पर्शाभ्यां द्विगुणमपि स्वस्मिन् तेजसि च रूपमात्रस्योत्कर्षाद् रूपमात्रस्य ग्राहकं न स्पर्शस्येति न घ्राणादिभी रसादीनां सर्वेषां गुणानां पृथिव्यादिवृत्तीनामुपलब्ध्यापत्तिरित्येवं घ्राणादिभिर्गन्धादिमात्रोपलब्धिव्यवस्थोपपद्यते इत्यन्वयः । “ रसनमिन्द्रियमाप्यम्– गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वात् दन्तान्तरस्यन्दमानोदकबिन्दुवत्. न खलु विशुष्यदास्यो मोदकादिरसमनुभवति ” इति वाचस्पतिमिश्राः । निराकर्तुं पूर्वपक्षिमतमनुवदति– यस्त्विति, घ्राणे गन्ध एवैको गुणोस्तीति घ्राणं गन्धमात्रस्य ग्राहकं न तु गन्धस्योत्कर्षात्. एवं रसने रस एवैकः चक्षुषि च रूपमेवैकमस्तीति रसनं रसमात्रग्राहकं चक्षुश्च रूपमात्रग्राहकं न तु रसरूपयोरुत्कर्षादित्यर्थः, अत्र “गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं न तु गन्धस्योत्कर्षादित्यर्थः” इतितात्पर्यटीका । उक्तं निराकरोति– तस्येति, उक्तपूर्वपक्षिमते यथागुणयोगम्= पृथिव्यां गन्धरसरूपस्पर्शाः सन्तीति घ्राणेन तेषां चतुर्णामपि ग्रहणं स्यात् गन्धवद् रसादीनामपि पृथिवीवृत्तित्वात्. न हि घ्राणेन स्ववृत्तिर्गन्धो ग्राह्योस्ति येन घ्राणे गन्धमात्रसत्त्वात् गन्धमात्रग्रहणनियम उपपद्येत, एवं रसनेन जलवृत्तिरूपस्पर्शयोरपि ग्रहणमापद्येत– रसवत् जलवृत्तित्वाविशेषात्, एवं चक्षुषा तेजोवृत्तिस्पर्शस्यापि ग्रहणमापद्येत– रूपवत् तेजोवृत्तित्वाविशेषात्, न हि रसनादिभिरपि स्ववृत्तिरसादिकं ग्राह्यमस्ति येन रसादिमात्रवत्त्वेन रसादिमात्रग्रहणनियम उपपद्येतेत्यर्थः । किं च घ्राणादीनां पृथिव्यादिकार्यत्वात् पृथिव्यादौ च रसादीनां प्रत्यक्षत्वाद् घ्राणादावपि रसादीनां सत्त्वं प्राप्तमिति स्ववृत्तिगुणग्राहकत्वेपि घ्राणादिभी रसादीनां ग्रहणमापद्यते, तथा स्ववृत्तिगन्धादिग्राहकत्वे सर्वदैव गन्धादिग्रहणं गन्धादेरभिव्यक्तिश्चापद्येतेति पूर्वपक्षिमते दोषः । मदुक्तरीत्या तूत्कर्षस्य ग्रहणकारणत्वे पृथिव्यादिषु घ्राणादिषु च गन्धादीनामेवोत्कर्षाद् रसादीनां चोत्कर्षाभावाद् घ्राणादिभिर्गन्धादिमात्रग्रहणनियम उपपद्यते इति ॥ ६८ ॥

सर्वाणीन्द्रियाण्येकभूतोत्पन्नानि किं न स्वीक्रियन्ते इत्याशङ्कते– किंकृतमिति, किंचित्= घ्राणं पार्थिवं कानिचित्= रसनमाप्यं चक्षुस्तैजसं स्पर्शनं वायव्यमितिव्यवस्थानियामकं किमित्यर्थः । सर्वाण्येवेन्द्रियाणि पार्थिवानि वा आप्यानि वा तैजसानि वा वायव्यानि वा किं न स्युरित्याक्षेपः । सूत्रेणोत्तरमाह– तदिति, घ्राणं पार्थिवमित्यादिव्यवस्था भूयस्त्वात्= घ्राणादौ गन्धादीनां भूयस्त्वादुपपद्यते भूयस्त्वं चात्र प्रधानत्वम्, तथा हि पृथिव्यां गन्धस्य भूयस्त्वं स्पष्टमेव घ्राणेन च गन्धमात्रं गृह्यते तेन घ्राणेपि गन्धभूयस्त्वमनुमीयते इतिगन्धभूयस्त्वविशिष्टस्य घ्राणस्य गन्धभूयस्त्वविशिष्टपृथिवीकार्यत्वं विज्ञायते एवं जलरसनयोः रसभूयस्त्वात् कारणकार्यभावः तेजश्चक्षुषोश्च रूपभूयस्त्वात् वायुस्पर्शनयोश्च स्पर्शभूयस्त्वात् कारणकार्यभावो विज्ञायते इति घ्राणं पार्थिवं रसनमाप्यं चक्षुस्तैजसं स्पर्शनं वायव्यमिति व्यवस्थोपपद्यते इतिसूत्रार्थः । व्याचष्टे– अर्थेति, अत्र– “ अर्थः= पुरुषार्थः, प्रविभक्तस्येति– इतरेभ्यो विशिष्टस्य संस्कारकारित इति– अदृष्टकारितः ” इतितात्पर्यटीका । अर्थनिर्वृत्तिसमर्थस्य= सुखादिभोगसंपत्तिसमर्थस्य प्रविभक्तस्य= इतरेभ्यः= अभुज्यमानेभ्यो विशिष्टस्य वैशिष्ट्यं चात्र भुज्यमानत्वं द्रव्यस्य= पदा-

पुरुषसंस्कारवशाद् विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते न सर्वं सर्वार्थम् एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्वर्त्यन्ते न सर्वविषयग्रहणसमर्थानीति ॥ ६९ ॥

स्वगुणान् नोपलभन्ते इन्द्रियाणि, कस्मादितिचेत् ?—

## सगुणानामिन्द्रियभावात् ॥ ७० ॥

स्वान् गन्धादीन् नोपलभन्ते घ्राणादीनि । केन कारणेनेतिचेत् ?, स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्= घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति. एवं शेषाणामपि ॥ ७० ॥

---

र्थस्य गन्धादेः पुरुषसंस्कारकारितः= जीवादृष्टकृतो यो घ्राणादौ संसर्गः= संबन्धः किं वा प्रकर्षः स एव भूयस्त्वमत्र विज्ञेयं तथा च तादृशभूयस्त्वात्= संबन्धादेव वा प्रकर्षादेव वा घ्राणादीनां पृथिव्यादिभिः सह कार्यकारणभावो विज्ञेयः, अस्ति च घ्राणे गन्धप्रकर्षः— गन्धमात्रग्राहकत्वात् अस्ति च पृथिव्यामपि गन्धप्रकर्षः— गन्धप्राधान्यादिति घ्राणपृथिव्योर्गन्धभूयस्त्वादेव कार्यकारणभावः सिद्धः, एवं रसनादीनां जलादिभिरुक्तरीत्यैव रसादिभूयस्त्वादेव कार्यकारणभवः सिद्ध इति न कार्यकारणभावस्याऽव्यवस्था न वा सर्वेषामिन्द्रियाणां सर्वभूतकार्यत्वापत्तिर्नाप्येकभूतकार्यत्वापत्तिर्वाऽऽपद्यते इत्यर्थः । घ्राणादिजन्यप्रत्यक्षकाले घ्राणादिभिर्गन्धादीनां भुज्यमानत्वं रसादीनां चाभुज्यमानत्वमदृष्टकृतं स्पष्टमेव । अत्र प्रकर्षार्थे संसर्गशब्दप्रयोगस्तु भाष्यकारस्य नैसर्गिकप्रमादकृत एवेत्यलम् । प्रकर्षभूयस्त्वयोरैक्यमुदाहरति— दृष्ट इति, 'यथा प्रकृष्टो विषयः' इत्येवमन्वयः । प्रकर्षे= प्रकर्षबोधनार्थम्. भूयस्त्वशब्दः= भूयस्त्वबोधको भूयश्शब्दः प्रयुज्यमानो दृष्टः— भूयान् गन्ध इति= प्रकृष्टो गन्ध इत्यर्थ इत्यन्वयः । स्ववक्तव्ये दृष्टान्तमाह— यथेति, यथा जीवादृष्टवशात् विषादिद्रव्याणि पृथगर्थक्रियासमर्थानि निर्वर्त्यन्ते= जायन्ते न सर्वं सर्वार्थम्= सर्वक्रियासमर्थं जायते अर्थक्रिया च यथा विषयस्य मारणम्. तथा घ्राणादीनीन्द्रियाण्यपि जीवादृष्टवशात् पृथग्विषयग्रहणसमर्थान्येव जायन्ते, न तु सर्वविषयग्रहणसमर्थानीति तेन घ्राणादिभिर्गन्धादिमात्रस्यैव ग्रहणं भवति न रसादेस्तेन घ्राणादौ गन्धादीनां भूयस्त्वमनुमीयते गन्धादीनां भूयस्त्वेन च घ्राणादेर्गन्धादिभूयस्त्वविशिष्टपृथिव्यादिकार्यत्वमनुमीयते इति न सर्वेषामिन्द्रियाणामेकभूतकार्यत्वमित्यर्थः । यदि च सर्वाणीन्द्रियाणि सर्वेषां गन्धादीनां ग्राहकाणि स्युस्तदोक्ता कार्यकारणभावव्यवस्था न स्यादपि न चैवमस्तीति कार्यकारणव्यवस्थोक्ता सिद्धेति शङ्कासमाधानं विज्ञेयम् ॥ ६९ ॥

यदि घ्राणादीनां स्वनिष्ठगन्धादिग्राहकत्वं स्यात्तदा गन्धाद्येकैकगुणवत्त्वेन गन्धाद्येकैकगुणग्राहकत्वं पूर्वपक्षोक्तमुपपद्येतापि न चैवमस्ति किं तु घ्राणादिकं पृथिव्यादिविषयनिष्ठमेव गन्धादिकं गृह्णाति न स्वनिष्ठमपीत्याह— स्वगुणानिति, स्वगुणान्= स्वनिष्ठान् गन्धादीन्, इन्द्रियाणि= घ्राणादीनि । अत्र हेतुं जिज्ञासते— कस्मादिति । सूत्रेणोत्तरमाह— सगुणानामिति, सगुणानाम्= गन्धादिविशिष्टानामेव घ्राणादीनामिन्द्रियभावात्= इन्द्रियत्वं स्वीक्रियते इति घ्राणादीनां स्वनिष्ठगन्धादिग्राहकत्वं नोपपद्यते— स्वात्मनि वृत्तिविरोधात्, स्वनिष्ठगन्धादिग्राहकत्वेऽशतः स्वग्राहकत्वमेव स्यात्— गन्धादिविशिष्टस्यैव घ्राणादेरिन्द्रियत्वात् न चेन्द्रियाणामिन्द्रियग्राह्यत्वमुपपद्यते— अप्रत्यक्षत्वादिति सूत्रार्थः । व्याचष्टे— स्वानिति, स्वनिष्ठानित्यर्थः । उक्ते हेतुं जिज्ञासते— केनेति । हेतुमाह— स्वगुणैरिति, सूत्रोक्त एव हेतुः स च व्याख्यातः । इन्द्रियाणामुक्तं स्वगुणाऽग्राहकत्वमुपपादयति— घ्राणमिति, स्वेन= स्वसमवेतेन, समानार्थकारिणा= सहकारिणा, सहकारिणश्च समानार्थकारित्वम्= एकार्थक्रियाकारित्वं स्पष्टमेव तथा च घ्राणादेर्बाह्यगन्धादिग्रहणे स्वगन्धादिकं सहकारि भवति. तस्य= घ्राणादेः स्वगन्धादिग्रहणे गन्धाद्यन्तरं सहकारि नास्तीति सहकारिवैकल्यादेव स्वगन्धादिग्रहणं न संभवति, सहकारिणं च विना कार्यं न संभवति, न च बाह्यं गन्धादिकं सहकारि संभवति— तस्य ग्राह्यत्वादित्यर्थः । उक्तं सर्वत्रातिदिशति—

यदि पुनर्गन्धः सहकारी च स्याद् घ्राणस्य ? ग्राह्यश्च ( स्यादेव ? ) इत्यत आह—

**तेनैव तस्याऽग्रहणाच्च ॥ ७१ ॥**

न गुणोपलब्धिरिन्द्रियाणाम् । यो ब्रूते- यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति तादृगिदम्- तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ७१ ॥

**न- शब्दगुणोपलब्धेः ॥ ७२ ॥**

'स्वगुणान् नोपलभन्ते इन्द्रियाणि' इत्येतन्न भवति- उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥ ७२ ॥

**तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥**

---

एवमिति, एवमेव शेषाणाम्= रसनचक्षुस्स्पर्शनानामपीन्द्रियाणां स्वनिष्ठरसाद्यग्राहकत्वं विज्ञेयम् । तथा च घ्राणादिकं पृथिव्यादीनामेव गन्धादिकं गृह्णातीति सिद्धं तत्र पृथिव्यादीनामनेकगुणेषु गन्धादिकमेव गृह्णातीत्यत्र गन्धादीनामुत्कर्ष एव हेतुर्न तु घ्राणादीनां गन्धादिमात्रविशिष्टत्वमिति भावः । अन्यत् पूर्वमुक्तमेव ॥ ७० ॥

ननु यथा चैत्रसहकारी चैत्रग्राह्यो भवति तथा यदि स्वगन्धादिर्घ्राणादिसहकारी स्यात्तदा घ्राणादिग्राह्योपि स्यादेव तथा च घ्राणादेः स्वनिष्ठगन्धादिमात्रग्राहकत्वेनैव रसाद्यग्राहकत्वं प्राप्तमिति मदुक्तमेव युक्तमित्याशङ्कते- यदीति । अस्य सूत्रेणोत्तरमाह- तेनैवेति, तेनैव तस्य ग्रहणं न भवतीति प्रसिद्धमेव यथा घटेन तद्घटस्य. तद्धस्तेन तद्धस्तस्य ग्रहणं न भवति, इन्द्रियाणां स्वगन्धादिविशिष्टानामेवेन्द्रियत्वमुक्तमेव तत्र घ्राणादिभिः स्वगन्धादिग्रहणे स्वेनैव स्वग्रहणं प्रसज्येत न चैतदुपपद्यते इति सहकारिभूतस्यापि स्वगन्धादेर्घ्राणादिभिर्ग्राह्यत्वं न संभवतीति सूत्रार्थः । व्याचक्षाणः सूत्रशेषमाह- नेति, गुणोपलब्धिः= स्वगुणोपलब्धिः, इन्द्रियाणामिति कर्तरि षष्ठी= इन्द्रियैरित्यर्थः । बाधकदृष्टान्तमाह- य इति, इदम्= इन्द्रियैः स्वगुणग्रहणम् तादृक्= उक्तदृष्टान्तसदृशमेव तथा च यथा तेनैव चक्षुषा तच्चक्षुर्ग्रहणमनुपपन्नं तथैवेन्द्रियैरपि स्वगुणग्रहणमनुपपन्नम्- अभेदात्= तेनैव तस्य ग्रहणासंभवात्, इन्द्रियगुणानां चेन्द्रियेष्वन्तर्भावस्योक्तत्वादित्यर्थः । चैत्रसहकारिणस्तु चैत्रेण ग्रहणं संभवति- परस्परं भेदात् । उक्ते साम्ये हेतुमाह- तुल्य इति, यथा तेन चक्षुषा तच्चक्षुर्ग्रहणस्य साधको हेतुर्नास्ति तथैवेन्द्रियैः स्वगुणग्रहणस्यापि साधको हेतुर्नास्तीत्यर्थः । तथा च घ्राणादिभिः पृथिव्यादिगन्धस्यैव ग्रहणं सिद्धं तत्र गन्धादिमात्रग्रहणे गन्धादीनां प्रकर्ष एव मदुक्तो हेतुः सिद्धो न त्वदुक्त इत्याशयः ॥ ७१ ॥

उक्तं पूर्वपक्षी व्यभिचारप्रदर्शनेन निराकरोति- नेति, इन्द्रियैः स्वगुणो न गृह्यते इति नोपपद्यते- श्रोत्रेण स्वगुणस्य शब्दस्य ग्रहणात्, श्रोत्रस्याकाशत्वं शब्दस्य चाकाशगुणत्वं प्रसिद्धमेव, तथा च श्रोत्रवद् घ्राणादीनामपि स्वगुणग्राहकत्वं प्राप्तम्, श्रोत्रं ह्याकाशमेवाकाशं च व्यापकमिति शब्दमात्रस्याकाशलक्षणश्रोत्रगुणत्वं प्राप्तमिति न श्रोत्रस्य स्वगुणीभूतशब्दातिरिक्तशब्दग्राहकत्वमुपपद्यते इति स्वगुणग्राहकत्वं स्वीकार्यमेवेति सूत्रार्थः । व्याचष्टे- स्वगुणानिति, अयं सिद्धान्तानुवादः । परिहरति- इत्येतदिति । उक्तसिद्धान्ते व्यभिचारं प्रदर्शयति- उपलभ्यते इति । तथा च श्रोत्रवद् घ्राणादीनां स्वगुणग्राहकत्वे प्राप्ते गन्धादिमात्रग्रहणे मदुक्त एव हेतुर्युक्तः- घ्राणादीनां गन्धादिमात्रवत्त्वमितीत्यर्थः ॥७२॥

श्रोत्रेण स्वगुणस्यापि शब्दस्योपलब्धिं सिद्धान्ती समाधत्ते- तदिति, श्रोत्रेण तदुपलब्धिः= स्वगुणस्य शब्दस्य योपलब्धिः सा शब्दस्य इतरेतरद्रव्यगुणेभ्यः= गन्धादिभ्यो वैधर्म्यात्= वैलक्षण्यादेव भवति वैलक्षण्यं च श्रोत्रानन्तर्भावः- शब्दगुणविशिष्टस्याकाशस्य श्रोत्रत्वानङ्गीकारात्, पृथिव्यादिभूतानि हि गन्धादिरहितानि नैव सन्तीति गन्धादिविशिष्टपृथिव्यादिभ्यो जायमानानि घ्राणादीनि गन्धादिविशिष्टान्येवेन्द्रियाणि भवन्ति तत्र घ्राणादिभिः स्वनिष्ठगन्धादिग्रहणे पूर्वं दोषाः प्रदर्शिता

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति. न शब्दः शब्दस्य व्यञ्जकः । न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षं नाप्यनुमीयते, अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं चाकाशस्येति, परिशेषश्चानुमानं वेदितव्यम्– आत्मा तावत् श्रोता न करणम्, मनसः श्रोत्रत्वे बधिरत्वाभावः, पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं श्रोत्रभावे चाऽसामर्थ्यम्, अस्ति चेदं श्रोत्रम् आकाशं च शिष्यते परिशेषादाकाशं श्रोत्रमिति ॥ ७३ ॥

॥ इति वात्स्यायनविरचिते न्यायभाष्ये तृतीयाध्यायस्य प्रथममाह्निकम् ॥

---

एव, आकाशस्य तु न शब्दविशिष्टत्वनियमः– आकाशस्याऽनादित्वेनाऽनित्यशब्दापेक्षया पूर्वभावित्वादिति शब्दगुणरहितमेवाकाशं श्रोत्रं भवति तथा च श्रोत्रेणापि न श्रोत्रान्तर्भूतः शब्दो गृह्यते इति नेन्द्रियाणां स्वगुणाऽग्राहकत्वे व्यभिचारः संभवति– घ्राणादीनामपि स्वान्तर्भूतगन्धादिग्राहकत्वस्यैव प्रतिषिद्धत्वादिति सूत्रार्थः । व्याचष्टे– नेति, गुणेन सगुणम्= गुणेन सहितम्, शब्दरहितस्याकाशस्य श्रोत्रत्वं च सूत्रव्याख्याने प्रतिपादितमेव । उक्ते उपपत्तिमाह– नेति, शब्दस्य शब्दव्यञ्जकत्वे व्यङ्ग्यत्वमपि स्यादेव तच्च द्वितीयाध्यायद्वितीयाह्निके शब्दनिरूपणावसरे प्रतिषिद्धमिति न शब्दस्य शब्दव्यञ्जकत्वं संभवति तथा च न शब्दसहितस्याकाशस्य श्रोत्रत्वमुपपद्यते इति न शब्दस्य श्रोत्रस्वरूपान्तर्भावः, शब्दस्य श्रोत्रस्वरूपान्तभावे तु व्यङ्ग्यव्यञ्जकभावः स्यादेव– शब्दस्य शब्दविशिष्टश्रोत्रव्यङ्ग्यत्वेनावश्यं शब्दव्यङ्ग्यत्वप्रसङ्गात् तत्र च पूर्वत्र दोषाः प्रदर्शिता एव, गन्धादीनां तु व्यङ्ग्यव्यञ्जकभावो न निराकृत इति गन्धादीनामभिव्यक्त्यर्थं गन्धादीनां घ्राणादिस्वरूपान्तर्भावः स्वीक्रियते तथा च श्रोत्रेणापि न स्वरूपान्तर्भूतस्य शब्दस्य ग्रहणं भवतीति नोक्तव्यभिचारः संभवतीत्यर्थः । घ्राणादिभिः स्वगुणभूतगन्धादीनां ग्रहणे प्रमाणाभावमाह– न चेति । श्रोत्रेण शब्दग्रहणे प्रमाणमाह– अनुमीयते इति, आकाशभूतेन श्रोत्रेण शब्दस्य ग्रहणम् आकाशस्य शब्दगुणवत्त्वं चानुमीयते इत्यन्वयस्तत्र शब्दग्रहणं तु प्रत्यक्षमेव श्रोत्रस्याकाशत्वमेवानुमेयं विज्ञेयम् । आकाशस्य श्रोत्रत्वे परिशेषानुमानमाह– परिशेषश्चेति, पूर्वोक्तः शेषवदेव परिशेषः स चानुमानलक्षणे व्याख्यातः । आत्मेति– कर्तृकरणयोर्भेदः स्पष्ट एव तत्र श्रोत्रं करणमेवेति श्रवणकर्ताऽऽत्मा न श्रोत्रं संभवति, नापि मनः श्रोत्रं संभवति– मनसः श्रोत्रत्वे बधिरत्वाभावः प्रसज्येत– मनसो नित्यत्वेन विनाशासंभवात्, पृथिव्यादीनामपि श्रोत्रत्वं न संभवति– घ्राणत्वादिभिर्विनियुक्तत्वात् तत्र गन्धग्राहकत्वाद् गन्धप्रधानपृथिव्या एव घ्राणत्वम् एवं रसादिप्रधानजलादीनामेव रसादिग्राहकरसनादिभावनियम इति पृथिव्यादीनां घ्राणादिभावे सामर्थ्यमस्ति श्रोत्रभावे च सामर्थ्यं नास्ति श्रोत्रस्य शब्दग्राहकत्वात् पृथिव्यादीनां चतुर्णां च शब्दगुणवत्त्वाभावादिति शब्दगुणकस्यैवाकाशस्य शब्दग्राहकत्वसंभवेन श्रोत्रत्वं संभवति नान्यस्येत्यर्थः । परिशेषानुमानमुपसंहरति– अस्तीति, इन्द्रियाणां भौतिकत्वमुपपादितमेव तत्र घ्राणादीनां पृथिव्यादिभिः सिद्धिर्जातेति इन्द्रियेषु शब्दग्राहकं श्रोत्रमवशिष्यते भूतेषु च शब्दगुणकमाकाशमवशिष्यते इति परिशेषादाकाशं श्रोत्रमिति सिद्धम् । आकाशस्य च न शब्दविशिष्टस्य श्रोत्रत्वं येन प्रदर्शितव्यभिचारः प्रसज्येत, तथा चेन्द्रियैर्न स्वगुणा गृह्यन्ते किं तु पृथिव्यादीनामेव गन्धादयो गुणा गृह्यन्ते इति सिद्धं तत्र पृथिव्यादिवृत्तिगन्धादिमात्रग्रहणे गन्धादीनां प्रकर्ष एव हेतुः संभवति न तु पूर्वपक्ष्युक्तो घ्राणादीनां गन्धादिमात्रवत्त्वमित्युपसंहारस्तथा च घ्राणादीना पृथिव्यादीनां च या कार्यकारणभावव्यवस्थोक्ता सा न व्याहन्यते इत्यलम् ॥ ७३ ॥

॥ इत्यर्थविवेचनं समाप्तम् ॥

॥ इति न्यायभाष्यप्रसन्नपदायां तृतीयाध्यायस्य प्रथममाह्निकम् समाप्तम् ॥

---

अथ

## ॥ न्यायभाष्यतृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

परीक्षितानीन्द्रियाणि अर्थाश्च, बुद्धेरिदानीं परीक्षाक्रमः– सा किमनित्या नित्या वा ? इति । कुतः संशयः ?–

### कर्माकाशसाधर्म्यात् संशयः ॥ १ ॥

अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते बुद्धौ. विशेषश्चोपजनाऽपायधर्मवत्त्वम्, विपर्ययश्च यथास्वमऽनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते तेन संशय इति ॥ अनुपपन्नः खल्वयं संशयः– सर्वशरीरिणां हि प्रत्यात्मवेदनीयाऽनित्या बुद्धिः सुखादिवत्. भवति च संवित्तिः– 'ज्ञास्यामि' 'जानामि' 'अज्ञासिषम्' इति, न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिस्ततश्च त्रैकाल्यव्यक्तेः 'अनित्या बुद्धिः' इत्येतत् सिद्धम्, प्रमाणसिद्धं चेदं शास्त्रेप्युक्तम्– "इन्द्रियार्थसंनिकर्षोत्पन्नम् १-१-४" "युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् १-१-१६"

---

प्रमेयेष्वात्मशरीरेन्द्रियार्थान् निरूप्य बुद्ध्यादीनां निरूपणार्थं द्वितीयमाह्निकमारभते– परीक्षितानीति, अर्थाः= इन्द्रियाणां विषयाश्च परीक्षिताः । सांप्रतं कर्तव्यमाह– बुद्धेरिति । सा= बुद्धिरनित्या वा नित्या वेति संशयः । संशयहेतुं जिज्ञासते– कुत इति । सूत्रेण संशयहेतुमाह– कर्मेति, कर्मणः= क्रियाया अनित्यायाः साधर्म्यात् नित्यस्याकाशस्य च साधर्म्याद् बुद्धौ नित्यत्वानित्यत्वसंशय इत्यन्वयः, साधर्म्यं च स्पर्शरहितत्वं तच्च कर्मणि आकाशे बुद्धौ च वर्तते तथा च किम् 'बुद्धिरनित्या स्पर्शरहितत्वात् कर्मवत्' किं वा 'बुद्धिर्नित्या स्पर्शरहितत्वादाकाशवत्' इत्येवं कर्माकाशयोः साधर्म्याद् बुद्धौ नित्यत्वानित्यत्वयोः संशय इतिसूत्रार्थः । व्याचष्टे– अस्पर्शवत्त्वमिति, ताभ्याम्= कर्माकाशाभ्याम् अस्पर्शवत्त्वं साधर्म्यं बुद्धौ उपलभ्यते तेन संशय इत्यन्वयः । समानधर्ममुक्त्वा विशेषधर्ममाह– विशेष इति, उपजनः= उत्पत्तिः, अपायः= विनाशः, बुद्धावुत्पत्तिविनाशवत्त्वमप्युपलभ्यते तेन चानित्यत्वं सिध्यतीत्यर्थः । बुद्धौ व्यतिरेकानुपलब्धिमाह– विपर्यय इति, अनित्यनित्ययोः यथास्वम्= प्रत्येकं यो विपर्ययो यथा– अनित्येषु घटादिषु अस्पर्शवत्त्वस्य विपर्ययः= स्पर्शवत्त्वमस्ति तद् बुद्धौ नोपलभ्यते तेनाऽनित्यत्वाभावः प्राप्नोति, नित्येष्वात्मादिषु उपजनापायधर्मस्य विपर्ययः= अभावोऽस्ति सोपि बुद्धौ नोपलभ्यते तेन नित्यत्वाभावः प्राप्नोति. तथा चाऽस्पर्शवत्त्वेनोपजनापायधर्मवत्त्वेन च बुद्धौ नित्यत्वानित्यत्वयोः संशयो जायते इत्यर्थः । एतादृशसंशयस्यानुपपत्तिमाह– अनुपपन्न इति, उपजनापायधर्मवत्त्वेनानित्यत्वं सिध्यति. अस्पर्शवत्त्वं च न नित्यत्वव्याप्यम्– अनित्ये कर्मण्यपि सत्त्वात् उपजनापायधर्मवत्त्वं च नानित्यत्वव्यभिचारीत्याशयः । उक्ते हेतुमाह– सर्वेति 'बुद्धिरनित्या सुखादिवत्' इति प्रत्यात्मवेदनीया= सर्वप्रसिद्धमस्तीत्यर्थः । बुद्धेरनित्यत्वज्ञानमुदाहरति– भवतीति, संवित्तिः= प्रतीतिः, 'ज्ञास्यामि' इत्यनेन बुद्धेः प्रागभाव उच्यते, 'जानामि' इत्यनेन स्थितिः, 'अज्ञासिषम्' इत्यनेन विनाश उक्तः– बुद्धेर्भूतकालिकत्वबोधनात्, स्वाभिप्रायमाह– न चेति, उपजनापायौ= उत्पत्तिविनाशौ विना त्रैकाल्यव्यक्तिः= 'आसीदस्ति भविष्यति' इत्येवं त्रैकालिकप्रयोगो न भवति– नित्येष्वेवं प्रयोगासंभवात्, ततश्च त्रैकाल्यव्यक्तितो बुद्धेरनित्यत्वं सिद्धमित्यन्वयः । इदम्= बुद्धेरनित्यत्वं प्रमाणसिद्धम्= उत्पत्तिविनाशाभ्यां प्रत्यक्षसिद्धमेवास्मिन् शास्त्रे "इन्द्रियार्थ" इत्यादिसूत्रैरुक्तं न त्वप्रामाणिकम्, इन्द्रियार्थसंनिकर्षेणोत्पन्नस्य ज्ञानस्य= बुद्धेरनित्यत्वं स्पष्टमेव, ज्ञानानुत्पत्तिशब्देनाप्यनित्यत्वं प्राप्तम्–

इत्येवमादि, तस्मात्संशयप्रक्रियानुपपत्तिरिति । दृष्टिप्रवादोपालम्भार्थं तु प्रकरणम्. एवं हि पश्यन्तः प्रवदन्ति सांख्याः– 'पुरुषस्यान्तःकरणभूता नित्या बुद्धिः' इति ॥ १ ॥

साधनं च प्रचक्षते—

## विषयप्रत्यभिज्ञानात् ॥ २ ॥

किं पुनरिदं प्रत्यभिज्ञानम् ? 'पूर्वमज्ञासिषमर्थं तमिमं जानामि' इतिज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम् एतच्चावस्थिताया बुद्धेरुपपन्नम्. नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः– नान्यज्ञातमन्यः प्रत्यभिजानातीति ॥ २ ॥

## साध्यसमत्वादहेतुः ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यम् एवं प्रत्यभिज्ञानमपीति । किं कारणम् ?. चेतन-

---

प्रागभावप्रतियोगित्वलाभादित्याह– प्रमाणेति । उपसंहरति– तस्मादिति, तस्मात्= उक्तरीत्या बुद्धेरनित्यत्वस्य सर्वप्रसिद्धत्वात् तत्र संशयप्रक्रियायाः= संशयप्राप्तेरनुपपत्तिः । ननु यदि बुद्ध्यनित्यत्वं सर्वप्रसिद्धमेव तर्हि किमर्थमिदं परीक्षाप्रकरणम्? इत्याशङ्क्याह– दृष्टीति, दृष्टिः= दर्शनम्= सांख्यदर्शनं तत्प्रवादस्य= तत्सिद्धान्तस्योपालम्भार्थम्= खण्डनार्थं प्रकरणमस्ति । सांख्यसिद्धान्तमाह– पुरुषस्येति । एवम्= बुद्धिनित्यत्वम्, पुरुषस्य= आत्मनः । वस्तुतस्तु चिंत्यमेतत् "हेतुमदनित्यमव्यापि" "प्रकृतेर्महान्" इत्यादिना सांख्यैर्बुद्धेरनित्यत्वस्यैवोक्तत्वात् । अत एव वाचस्पतिमिश्रैः– "सांख्यानां हि दर्शने प्रवादः– महदन्तःकरणं बुद्धिरिति तदुपालम्भार्थम्= दूषणार्थं प्रकरणमिति" इत्येवं व्याख्यातम् । किं वा सांख्यशब्दोत्र वेदान्तपरो विज्ञेयः– वेदान्तिभिरात्मलक्षणज्ञानस्य नित्यत्वस्वीकारात्. अन्तःकरणस्य तु तैरपि नित्यत्वं न स्वीक्रियते इतिविभाव्यम्, भाष्यकारोयं बहुत्र प्रमादं करोतीत्युक्तमेव ॥ १ ॥

अग्रिमसूत्रमवतारयति– साधनमिति, नित्यत्वहेतुमित्यर्थः, बुद्धिनित्यत्ववादिन इतिशेषः । विषयेति– विषयस्य प्रत्यभिज्ञानाद् बुद्धेर्नित्यत्वं सिद्धम्– 'सोयं देवदत्तः' इत्यादिज्ञानं प्रत्यभिज्ञानं तेन प्रत्यभिज्ञातुः पूर्वापरकालस्थायित्वेन नित्यत्वं सिध्यति प्रत्यभिज्ञात्री च बुद्धिरेवेति बुद्धेर्नित्यत्वं सिद्धम्, न च प्रत्यभिज्ञानमात्मधर्मः– आत्मनो धर्मित्वाभावाद् अक्रियत्वेन ज्ञानलक्षणक्रियारहितत्वाच्चेति सूत्रार्थः । व्याचष्टे– किमिति । प्रत्यभिज्ञानस्वरूपमाह– पूर्वमिति, यमितिशेषः, 'यमर्थं पूर्वमज्ञासिषम्' इत्येकं ज्ञानम् 'तमिममर्थं जानामि' इत्यपरं ज्ञानं तयोर्ज्ञानयोर्यः समानोऽर्थः= एक एव विषयस्तद्विषयकं यत् प्रतिसंधिज्ञानम्= उभयात्मकमेकम् 'यमज्ञासिषं तं पश्यामि' इत्यादिरूपं ज्ञानं तदेव प्रत्यभिज्ञानमित्युच्यते. एतत्= प्रत्यभिज्ञानम्= प्रत्यभिज्ञाकर्तृत्वमवस्थितायाः= नित्याया बुद्धेरुपपद्यते नाऽनित्याया इत्यन्वयः । विपक्षे बाधकमाह– नानात्वे इति, बुद्धेरनित्यत्वे नानात्वं स्यात् तेन बुद्धीनामुत्पन्नापवर्गित्वम्= उत्पादविनाशशालित्वं स्यात् तथा चोत्पन्नापवर्गिषु बुद्धिभेदेषु= बुद्धिव्यक्तिषु प्रत्यभिज्ञानानुपपत्तिः= प्रत्यभिज्ञानकर्तृत्वानुपपत्तिः । उक्ते हेतुमाह– नान्येति, बुद्धेर्नानात्वे हि अन्यया बुद्ध्या ज्ञातस्याऽन्यया बुद्ध्या प्रत्यभिज्ञानं न संभवतीति प्रत्यभिज्ञानसिद्ध्यर्थं बुद्धेर्नित्यत्वं स्वीकार्यमित्यर्थः ॥ २ ॥

बुद्धिनित्यत्वं निराकरोति– साध्येति, बुद्धेर्नित्यत्वसाधनाय प्रत्यभिज्ञानकर्तृत्वं हेतुरुक्तः स च बुद्धौ न सिद्धः– परैरात्मन एव प्रत्यभिज्ञानकर्तृत्वस्वीकारादित्यऽसिद्धत्वात् साध्यसमः= साध्यवत्साध्य एवेति साध्यसमत्वादहेतुः= साध्यासाधकः– पक्षे सिद्धस्यैव हेतुत्वसंभवादिति नाऽसिद्धेन प्रत्यभिज्ञानकर्तृत्वेन बुद्धेर्नित्यत्वमुपपद्यते इतिसूत्रार्थः । साध्यसमत्वं व्याचष्टे– यथेति, प्रत्यभिज्ञानम्= प्रत्यभिज्ञाकर्तृत्वम् । प्रत्यभिज्ञानस्य साध्यसमत्वे कारणं जिज्ञासते– किमिति । उत्तरमाह– चेतनेति, प्रत्यभिज्ञानकर्तृत्वं हि चेतनस्य कर्तुरेव धर्मो न तु तत्करणभूताया बुद्धेरिति बुद्धेः प्रत्यभिज्ञाकर्तृत्वं

धर्मस्य करणेऽनुपपत्तिः- पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति- चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति तस्यैतस्माद् हेतोर्नित्यत्वं युक्तमिति । करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयम्- नाऽनिर्दिष्टस्वरूपमाऽऽत्मान्तरं शक्यमस्तीति प्रतिपत्तुम् । ज्ञानं चेद् बुद्धेरन्तःकरणस्याभ्युपगम्यते चेतनस्येदानीं किं स्वरूपं को धर्मः किं तत्त्वम्, ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोरीति ॥

चेतयते इतिचेत्?. न ज्ञानादर्थान्तर वचनम् ।

पुरुषश्चेतयते बुद्धिर्जानातीति. नेदं ज्ञानादर्थान्तरमुच्यते- चेतयते जानीते पश्यति उपलभते इत्येकोयमर्थं इति । बुद्धिर्ज्ञापयतीति चेत्?. अद्धा जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत्. एवं चाभ्युपगमे 'ज्ञानं पुरुषस्य' इति सिद्धं भवति न बुद्धेरन्तःकरणस्येति ॥

प्रतिपुरुषं च शब्दान्तर व्यवस्थाप्रतिज्ञाने ? प्रतिषेधहेतुवचनम् ।

---

साध्यमेवेत्यर्थः, बुद्धेः करणत्वं च स्पष्टमेव । प्रत्यभिज्ञानं हि ज्ञानविशेष एव स च पुरुषधर्म इत्याह- पुरुषेति, ज्ञानादिशब्दाश्चैते एकार्थपरा एवेति स्पष्टमेव तथा च बुद्धेः प्रत्यभिज्ञानकर्तृत्वमसिद्धमेवेति न तेन नित्यत्वं संभवतीत्यर्थः । चेतनस्यात्मनः प्रत्यभिज्ञानकर्तृत्वमाह- चेतन इति, ज्ञातविषयकज्ञानमेव प्रत्यभिज्ञानम्, तस्य= चेतनस्य, एतस्माद् हेतोः= प्रत्यभिज्ञानकर्तृत्वात् नित्यत्वं युक्तम्= सिध्यति, पूर्वापरकालस्थायिन एव प्रत्यभिज्ञासंभवान्नित्यत्वं सिध्यतीत्यर्थः । विपक्षे बाधकमाह- करणेति, यदि प्रत्यभिज्ञाकर्तृत्वं बुद्धौ तदा बुद्धेरेव चेतनत्वं स्यात् तथा च करणभूताया बुद्धेश्चेतनत्वस्वीकारे चेतनस्वरूपम्= आत्मस्वरूपं वक्तव्यम्. चेतनत्वमेवात्मस्वरूपं संभवति तच्च यदि बुद्धौ स्वीकृतं तदाऽऽत्मस्वरूपस्याऽसिद्धिरेव स्यात् चेतनत्वातिरिक्तस्यात्मस्वरूपत्वासंभवादित्यर्थः, स्वरूपनिर्देशं विना च पदार्थस्वीकारो न संभवतीत्याह- नेति, अनिर्दिष्टस्वरूपम्= अनिरूपितस्वरूपं चेतनातिरिक्तं किंचिदात्मान्तरमस्तीति प्रतिपत्तुम्= स्वीकर्तुं न शक्यमित्यन्वयः, चेतनत्वमेवात्मस्वरूपं निरूपयितुं शक्यते तच्च बुद्धौ प्राप्तमित्यात्मस्वरूपनिरूपणाभावः प्राप्त इत्यर्थः । बाधकान्तरमाह- ज्ञानमिति, तत्त्वम्= लक्षणम्, बुद्धिसमवेतज्ञानेन चेतनस्यात्मनः क उपयोग इतिसर्वं वक्तव्यम् । किं वा ननु चेतनत्वमात्मधर्मो न बुद्धेः किं तु ज्ञानं बुद्धिधर्म इति नात्मस्वरूपनिरूपणानुपपत्तिरित्याशङ्क्याह- ज्ञानं चेदिति, चेतनत्वमेव ज्ञानं तथा च पूर्वदोषः स्थित एवेत्यर्थः । किं वा ज्ञाने बुद्धौ वर्तमाने सति चेतनोऽक्रिय एव स्यात् तथा च वैयर्थ्यमेव स्यात्- ज्ञानक्रियार्थमेव चेतनस्वीकारस्य संभवादित्यर्थः ॥

ननु बुद्धौ वर्तमानेन ज्ञानेन पुरुषश्चेतयते अर्थात् चेतनत्वं पुरुषधर्मो ज्ञानं च बुद्धिधर्म इत्याशङ्कते- चेतयते इति, उत्तरमाह- नेति, एवमपि ज्ञानादर्थान्तरं चेतनधर्मो नोक्तः- चेतनत्वस्य ज्ञानरूपत्वादेव तस्य पुरुषधर्मत्वे ज्ञानस्यैव पुरुषधर्मत्वमुक्तं भवति तथा च बुद्धेर्ज्ञानधर्मवत्त्वं न स्यादित्यर्थः । स्वयं व्याचष्टे- पुरुष इति, अनेन चेतनत्वस्य पुरुषधर्मत्वं ज्ञानस्य च बुद्धिधर्मत्वं प्रदर्शितम् । परिहरति- नेदमिति, इदम्= चेतनत्वं ज्ञानादर्थान्तरं नेत्यर्थः । चेतनत्वज्ञानादीनामभेदमाह- चेतयते इति, चेतयते इत्यादीनां शब्दानामेकार्थपरत्वात् चेतनत्वज्ञानयोरभेदः प्राप्त इत्यर्थः । ननु बुद्धेर्ज्ञापनं धर्मो न ज्ञानमित्याशङ्कते- बुद्धिरिति । उक्तं स्वीकरोति- अद्धेति, एवं हि ज्ञानस्य पुरुषधर्मत्वं ज्ञापनस्य च बुद्धिधर्मत्वं प्राप्तं तदेतद् युक्तमेवेत्यर्थः । अस्मिन् पक्षे स्वसिद्धान्तसिद्धिमाह- एवमिति । पूर्वपक्षिसिद्धान्तस्य हानिमाह- नेति, स्पष्टमन्यत् ॥

पूर्वपक्षिणः पक्षान्तरस्वीकारे दोषमाह- प्रतिपुरुषमिति, चेतनत्वादयो नैकस्य पुरुषस्य= आत्मनो धर्माः किं तु परस्परं भिन्नानामेव तथा च यस्य चेतनत्वं धर्मस्तस्य ज्ञानं न धर्मः किं तु ज्ञानं बुद्धिधर्म

यश्च प्रतिजानीते– कश्चित् पुरुषश्चेतयते कश्चिद् बुध्यते कश्चिदुपलभते कश्चित् पश्यति इति पुरुषान्तराणि खल्विमानि= चेतनो बोद्धा उपलब्धा द्रष्टेति नैकस्यैते धर्मा इति, अत्र कः प्रतिषेधहेतुरिति ॥

## अर्थस्याऽभेद इतिचेत्?. समानम्॥ ।

अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्तिरित्येवं चेत् मन्यसे?. समानं भवति= पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते, तत्रोभयोश्चेतनत्वादन्यतरलोप इति । यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिर्मन एवोच्यते तच्च नित्यम्? अस्त्वेतदेवं न तु मनसो विषयम-

---

एव इति यदि प्रतिज्ञायते तदा चेतनत्वज्ञानादीनामेकधर्मत्वप्रतिषेधस्य हेतुर्वक्तव्यः न च स संभवतीत्यन्वयः । स्वयमेव व्याचष्टे– यश्चेति, कश्चित् चेतयते कश्चिद् बुध्यते इत्येवैव प्रतिपुरुषं शब्दान्तरव्यवस्था तस्याः प्रतिज्ञाने, शब्दान्तरशब्देन चेतयते इत्यादिशब्दवाच्याः चेतनत्वादयः पदार्था ग्राह्यास्ते च प्रतिपुरुषं भिन्नाः= पुरुषभेदेनैव चेतनत्वादयो धर्मा भवन्ति नैकस्य पुरुषस्येत्याह– पुरुषान्तराणीति, इमानि= चेतनत्वादिविशिष्टानि पुरुषान्तराण्येव नैकः पुरुष इत्यन्वयः, चेतनत्वादिविशिष्टान् पुरुषानाह– चेतन इति, अन्यश्चेतनः अन्यो बोद्धा इत्येवमन्वयः । पर्यवसितमाह– नैकस्येति, एते= चेतनत्वादयः, तथा च चेतनत्वं ज्ञानं च नैकधर्म इति चेतनत्वं पुरुषधर्मो ज्ञानं च बुद्धिधर्म इति 'पुरुषश्चेतयते बुद्धिर्जानाति' इति पूर्वोक्तं सिद्धमित्यर्थः । अत्रानुपपत्तिमुद्धाटयति– अत्रेति, अत्र= "नैकस्यैते धर्माः" इत्यत्र, चेतनत्वादीनां यदेकधर्मत्वं प्रतिषिद्धं तादृशप्रतिषेधस्य को हेतुरितिवक्तव्यमित्यर्थः प्रतिभाति । वार्तिकमप्यत्रत्यं द्रष्टव्यम् । प्रतिषेधहेतुस्तेन पूर्वपक्षसिद्धिश्चाग्रे द्रष्टव्ये ॥

जिज्ञासितं प्रतिषेधहेतुमाह– अर्थस्याभेद इति । अत्र दोषमाह– समानमिति । अत्र "अत्र भवता किं वक्तव्यम्? अभिन्नार्था एते शब्दा इत्येतद्वक्तव्यम्" इति वार्तिकम् । स्वयं व्याचष्टे– अभिन्नार्था इति, एते= चेतयते पश्यति बुध्यते इत्याद्या उक्ताः शब्दाः, एतेषामभिन्नार्थत्वं च स्पष्टमेव, तत्र यथा 'कश्चिद् गौरः कश्चित् शुक्लः' इत्युक्ते गौरत्वशुक्लत्वयोर्नैकधर्मत्वं भवति– अभेदात् अन्यथा द्विधाप्रयोगस्य वैयर्थ्यं स्यात् तथा प्रकृतेपि 'कश्चित् चेतयते कश्चिद् बुध्यते' इत्यत्र चेतनत्वादिपदार्थानां नैकधर्मत्वं संभवति– अभेदात्. तत्रापि यश्चेतयते स एवात्मा यो बुध्यते स नात्मेति व्यवस्था नोपपद्यते इति चेतनत्वबोधादिविशिष्टानां सर्वेषामपि आत्मत्वं प्राप्नोतीति चेतनत्वादिविशिष्टानामात्मनां परस्परं भेदोपि सिद्धः– अन्यथा 'कश्चित् चेतयते कश्चिद् बुध्यते' इत्यादिप्रयोगस्य पुनरुक्तत्वं स्यात्, न चैवमस्ति, तत्रात्मनां भेदेपि चेतनत्वादिधर्माणां भेदो न संभवतीति चेतयते बुध्यते इत्याद्याः शब्दा अभिन्नार्था जातास्तत्र चेतनत्वादेरात्मधर्मत्वेपि ज्ञानस्य बुद्धिधर्मत्वमेव नात्मधर्मत्वम्– ज्ञानस्य चेतनत्वाद्यतिरिक्तत्वात् ज्ञानक्रियारूपत्वेनात्मन्यसंभवाच्च तथा च प्रत्यभिज्ञानमपि ज्ञानमेवेति तदपि बुद्धेरेव धर्मस्तेन च बुद्धेर्नित्यत्वं प्राप्तम्– प्रत्यभिज्ञातुर्नित्यत्वस्यावश्यकत्वादित्यर्थः प्रतिभाति । किं वा चेतनत्वादिधर्मविशिष्टानां भेदो ज्ञानविशिष्टस्य च न भेद इति व्यवस्था नोपपद्यते तेन चेतनत्वादिधर्मविशिष्टेभ्यो ज्ञानविशिष्टस्य भेदः सिद्ध इति आत्मातिरिक्ताया एव बुद्धेर्ज्ञानवत्त्वं प्राप्तं तेन प्रत्यभिज्ञावत्त्वं तेन च नित्यत्वं प्राप्तमित्येवं पूर्वपक्ष उपपादनीय इति प्रतिभाति । पूर्वपक्षोपपत्तिप्रकारस्त्वत्र किंचिदपि न स्पष्ट इति स्पष्टमेव । अत्र दोषमाह– समानमिति, उक्तं व्याचष्टे– पुरुष इति, 'पुरुषश्चेतयते बुद्धिर्जानीते' इत्यत्रापि 'चेतयते जानीते' इति शब्दयोरर्थो न भिद्यते– चेतनत्वज्ञानयोरेकपदार्थत्वात् तथा च यथा 'चैत्रश्चेतयते मैत्रो बुध्यते' इत्यत्र चैत्रमैत्रयोरुभयोरपि चेतनत्वं प्राप्तं तथा 'पुरुषश्चेतयते बुद्धिर्जानीते' इत्यत्रापि पुरुषबुद्ध्योरुभयोरपि चेतनत्वं प्राप्तं तत्रैकस्मिन् शरीरे चेतनद्वयासंभवादन्यतरस्य लोपः= अभावः स्यात्, किं वान्यतरस्य चेतनत्वलोपः स्यादेवेति न बुद्धेश्चेतनत्वं

त्यभिज्ञानाद् नित्यत्वम्. दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानम्- सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति चक्षुर्वत्. प्रदीपवच्च= प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति, तस्माद् ज्ञातुरयं नित्यत्वे हेतुरिति ॥ ३ ॥

यच्च मन्यते- बुद्धेरऽवस्थिताया यथाविषयं वृत्तयः= ज्ञानानि निश्चरन्ति वृत्तिश्च वृत्तिमतो नाऽन्येति. तच्च—

## न- युगपद्ग्रहणात् ॥ ४ ॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्ते इति युगपद् विषयाणां ग्रहणं प्रसज्यते इति ॥ ४ ॥

## अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

---

संभवति तेन च न ज्ञानवत्त्वं संभवति तेन प्रत्यभिज्ञाकर्तृत्वमपि न संभवति तथा च नित्यत्वमपि न संभवतीत्यर्थः। पक्षान्तरमाह- यदीति, बोधनम्= ज्ञानसाधनम्, तत्= मनः। एतत्पक्षं स्वीकरोति- अस्त्विति। अत्र विशेषमाह- न त्विति, यन्मनसो नित्यत्वं तद् विषयप्रत्यभिज्ञानान्नास्ति- मनसि प्रत्यभिज्ञानस्याभावात् तस्यात्मवृत्तित्वात् किं त्वणुत्वात् अणूनां नित्यत्वात्, ज्ञानानामयौगपद्याच्च मनसोऽणुत्वमित्यन्वयः। प्रत्यभिज्ञानस्यात्मवृत्तित्वमाह- दृष्टमिति, यथा 'यं चक्षुषाऽद्राक्षं तं त्वचा स्पृशामि' इति करणभेदेपि आत्मन एकत्वात् प्रत्यभिज्ञानं भवति. करणानां प्रत्यभिज्ञानपक्षे च करणानां भेदेन प्रत्यभिज्ञानं न स्याद् भवति च करणभेदेपि प्रत्यभिज्ञानमिति प्रत्यभिज्ञानमात्मधर्मो न करणधर्म इति सिद्धम्. अस्मिंश्च पक्षे ज्ञानसाधनत्वाद् बुद्धिशब्दवाच्यं मनः करणमेवेति न मनसि प्रत्यभिज्ञानं संभवति येन प्रत्यभिज्ञानान्मनसो नित्यत्वं स्यादित्यर्थः। करणभेदेपि ज्ञातुः प्रत्यभिज्ञानमुदाहरति- सव्येति, सव्यदृष्टस्य= वामचक्षुर्दृष्टस्य, इतरेण= दक्षिणचक्षुषा। उदाहरणान्तरमाह- प्रदीपवदिति। उपसंहरति- तस्मादिति, ज्ञातुर्नित्यत्वे अयम्= इदम्= प्रत्यभिज्ञानं हेतुर्न तु मनसो नित्यत्वे इत्यन्वयः ॥ ३ ॥

परिहर्तुं पक्षान्तरमुपस्थापयति- यच्चेति, अवस्थितायाः= नित्यायाः, यथाविषयम्= प्रतिविषयं किं वा विषयानुरूपा वृत्तय इत्यर्थः, यथा घटवृत्तिर्घटानुरूपा= घटाकारा भवति, वृत्तिरेव ज्ञानमित्युच्यते, निश्चरन्ति= विषयदेशं गच्छन्ति। कार्यकारणयोरभेदेन वृत्तिवृत्तिमतोरभेदमाह- वृत्तिश्चेति, तथा च प्रत्यभिज्ञानलक्षणा वृत्तिरपि बुद्धेरेवेति तया बुद्धेर्नित्यत्वं सिद्धमित्यर्थः। अत्राह- तच्चेति, अस्य सूत्रघटकनकारेणान्वयात् 'तच्च न संभवति' इत्यर्थः। उक्तं सूत्रेण निराकरोति- नेति, वृत्तिवृत्तिमतोरभेदो नोपपद्यते- युगपद्ग्रहणाद्विषयणामित्यन्वयः, वृत्तिवृत्तिमतोरभेदे हि वृत्तिमतो नित्यत्वेन वृत्तीनामपि नित्यत्वं स्याद् वृत्तिश्च ज्ञानस्य घटादिरूपेण परिणाम एव तथा च वृत्तीनां नित्यत्वेन स्थिरत्वात् तद्विषयभूतानां शब्दस्पर्शादीनां युगपद् भानं स्याद् न च युगपद् भानं भवतीति युगपदग्रहणान्न वृत्तीनां स्थायित्वं संभवति ततश्च न वृत्तिवृत्तिमतोरभेदः संभवति तथा च न वृत्तीनां बुद्धिकार्यत्वं संभवति येन प्रत्यभिज्ञानस्य बुद्धिकार्यत्वेन बुद्धेर्नित्यत्वं स्यात्. कार्यकारणयोरभेदस्य त्वदिष्टत्वादिति सूत्रार्थः। व्याचष्टे- वृत्तीति। अवस्थानमित्यत्र प्राप्तमितिशेषः। पर्यवसितमाह- यानीति। उपसंहरति- युगपदिति, वृत्तीनामवस्थानादितिशेषः, न च युगपद् विषयाणां ग्रहणं दृश्यते इति न वृत्तिवृत्तिमतोरभेदः ॥ ४ ॥

वृत्तिवृत्तिमतोरभेदे दोषान्तरमाह- अप्रत्यभिज्ञाने इति, प्रत्यभिज्ञानाभावे इत्यर्थः, यथा ह्यभेदपक्षे वृत्तिमतो नित्यत्वेन वृत्तीनां नित्यत्वं प्राप्नोति तथा वृत्तीनामनित्यत्वेन वृत्तिमतोप्यनित्यत्वं प्राप्नोतीति न बुद्धेर्नित्यत्वं संभवतीत्याशयः, प्रत्यभिज्ञानमपि त्वन्मते बुद्धिवृत्तिरेव तत्र प्रत्यभिज्ञान-

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते, विपर्यये च नानात्वमिति ॥ ५ ॥

अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यते इति—

क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानाम् । वृत्तिवृत्तिमतोर्नानात्वमिति. एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

अप्रत्यभिज्ञानम्= अनुपलब्धिः. अनुपलब्धिश्च कस्य चिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते— वृत्तिवृत्तिमतोर्नानात्वात्, एकत्वे हि अनर्थको व्यासङ्ग इति ॥ ७ ॥

---

लक्षणवृत्तेरभावकाले बुद्धेर्विनाशः= अभावः प्रसज्यते— वृत्तिवृत्तिमतोरभेदस्वीकारादिति न बुद्धेर्नित्यत्वं संभवतीति न वृत्तिवृत्तिमतोरभेदः संभवति तेन न कार्यकारणभावः संभवति तेन न प्रत्यभिज्ञानं बुद्धिधर्मः संभवति तेन न बुद्धेर्नित्यत्वं संभवतीति सूत्रार्थः । व्याचष्टे— अतीते इति, अतीते= विनष्टे । वृत्तिमान्= प्रत्यभिज्ञालक्षणवृत्तिमदन्तःकरणम् , अन्तःकरणस्य= बुद्धेः । विपक्षे बाधकमाह— विपर्यये इति, यदिबुद्धिवृत्तीनां प्रत्यभिज्ञानादीनां विनाशेपि बुद्धेर्न विनाश इति विपर्ययस्तदा नानात्वम्= वृत्तिवृत्तिमतोर्भेद एव स्यान्नाऽभेद इत्यर्थः, एवं पूर्वसूत्रेपि विपर्यये नानात्वं विज्ञेयम् ॥ ५ ॥

स्वसिद्धान्तेनाग्रिमसूत्रमवतारयति— अविभ्विति, मनः अविभु= अणु चैकं चेतीन्द्रियैः पर्यायेण संयुज्यते अत एव विषयाणामयुगपद् ग्रहणं भवतीत्यन्वयः । क्रमेति— इन्द्रियैः सह मनस्संयोगस्य क्रमवृत्तित्वात्= पर्यायेण= कालभेदेन जायमानत् विषयाणां शब्दस्पर्शादीनामयुगपद् ग्रहणं भवति तथा च वृत्तिवृत्तिमतोर्भेदः सिद्धः— वृत्तिमतो मनसः सदातनत्वाद् वृत्तीनां च सदातनत्वाभावादिति सूत्रार्थः । व्याचष्टे— इन्द्रियेति, "इन्द्रियार्थानाम्" इतिसूत्रशेषः, 'इन्द्रियार्थानामयुगपद् ग्रहणम्' इति सूत्रान्वय इत्यर्थः । तदनेन सिद्धमाह— वृत्तीति, नानात्वम्= भेदः सिद्ध इत्यर्थः, वृत्तिवृत्तिमतोरभेदे हि वृत्तिमतो नित्यत्वेन वृत्तीनामपि नित्यत्वं स्यादिति विषयाणां ग्रहणम्= भानं युगपदेव स्यात् न चैवमस्तीति नानात्वं सिद्धम् । विपक्षे बाधकमाह— एकत्वे इति, वृत्तिवृत्तिमतोरेकत्वे वृत्तिमतो नित्यत्वेन वृत्तीनामपि विषयग्रहणाख्यानां नित्यत्वं स्यादिति प्रादुर्भावतिरोभावयोरभावः स्यात् स्तश्च प्रादुर्भावतिरोभावाविति नित्याद् वृत्तिमतो वृत्तीनामनित्यानां भेदः सिद्ध इत्यन्वयः ॥ ६ ॥

वृत्तिवृत्तिमतोर्नानात्वे हेत्वन्तरमाह किं वेन्द्रियेण मनस्संयोगस्य प्रत्यक्षकारणत्वे हेतुमाह— अप्रत्यभिज्ञानमिति, मनसो विषयान्तरव्यासङ्गात्= विषयान्तरासक्तत्वाद् विषयान्तरस्याऽप्रत्यभिज्ञानम्= अग्रहणमुपपद्यते, यदा हि मनो रूपादिग्रहणासक्तं भवति तदा गन्धादिग्रहणं गन्धादीनामिन्द्रियेण संयोगे सत्यपि न भवति तत्र यदीन्द्रियैः मनस्संयोगस्य प्रत्यक्षकारणत्वं न स्यात्तदा रूपादिवद् गन्धादीनामपीन्द्रियेण संयुक्तत्वाद् ग्रहणमेव स्यात् ग्रहणाभावश्च न स्याद् भवति च ग्रहणाभाव इतीन्द्रियैः मनस्संयोगस्य प्रत्यक्षकारणत्वं मनसश्चैकत्वमणुत्वं च कल्प्यते तथा चाणुभूतस्य मनसो विषयान्तरव्यासङ्गे सति विषयान्तराग्रहणमुपपद्यते— अणोरेकस्मिन् कालेऽनेकैरिन्द्रियैः संयोगासंभवादिति सूत्रार्थः। व्याचष्टे— अप्रत्यभिज्ञानमिति, अत्राऽप्रत्यभिज्ञानशब्दः प्रत्यक्षाभावपर इत्याह— अनुपलब्धिरिति, यथा रूपादौ= रूपादिग्रहणे व्यासक्ते मनसि कस्य चिदर्थस्य= गन्धादेरनुपलब्धिरुपपद्यते— वृत्तिवृत्तिमतोर्नानात्वात्= भेदात् । विपक्षे बाधकमाह— एकत्वे इति, वृत्तिवृत्तिमतोरेकत्वे हि रूपेण चक्षुस्संनिकर्षकाले किं वा रूपज्ञानकाले घ्राणस्य गन्धेन संयोगः संभवत्येवेति तादृशसंयोगेन गन्धविषयकवृत्तौ जातायां गन्धग्रहणमपि स्यादेव— वृत्त्या

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः—

न— गत्यभावात् ॥ ८ ॥

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः तत्र क्रमवृत्तित्वाभावादयुगपद्ग्रहणानुपपत्तिरिति, गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्याऽयुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयते इति, यथा चक्षुषो गतिः प्रतिषिद्धा— संनिकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात्. पाणिचन्द्रमसोर्व्यवधानेन प्रतीघाते साऽनुमीयते इति। सोऽयं नान्तःकरणे विवादो न (च) तस्य नित्यत्वे— सिद्धं हि मनोऽन्तःकरणं नित्यं चेति। क्व तर्हि विवादः ?, तस्य विभुत्वे. तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धमिति। एकं चान्तःकरणं नाना चैता ज्ञानात्मिका वृत्तयः— चक्षुर्विज्ञानं घ्राणविज्ञानम्= रूपविज्ञानं गन्धविज्ञानम्. एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति।

---

गृहीतस्य गन्धस्य वृत्त्यभिन्नमनसापि गृहीतत्वसंभवाद् तत्र विषयान्तरव्यासङ्गस्य वैयर्थ्यं प्रसज्यते किं वा वृत्तिवृत्तिमतोरभेदपक्षे वृत्तिमतो मनसो नित्यत्वेन सदैव सत्त्वाद् वृत्तीनामपि सदा सत्त्वं स्यादिति विषयान्तरव्यासङ्गस्यापि विषयान्तरग्रहणप्रतिबन्धकत्वं न स्यादिति पूर्वोक्तवत् सर्वदा सर्वविषयभानं स्यादेवेत्याशयः न चैवं दृश्यते इति न वृत्तिवृत्तिमतोरैक्यमुपपद्यते इत्यर्थः। वस्तुतस्तु चिन्त्यमिदं भाष्यं सूत्रं च ॥७॥

अग्रिमसूत्रमवतारयति— विभुत्वे इति, अन्तःकरणस्य= मनसो विभुत्वे चेन्द्रियैः सह पर्यायेण संयोगो नोपपद्यते किं तु विभुत्वेन युगपदेव सर्वैरपीन्द्रियैः संयोगः स्यात्तथा च युगपदेवाऽनेकार्थग्रहणं स्यात् न चैवं दृश्यते इति न मनसो विभुत्वमुपपद्यते किं त्वणुत्वमेवेत्यर्थः, अत्र सूत्रघटकनकारेण 'संयोगो न' इत्येवमन्वयः। नेति— मनसो विभुत्वं नोपपद्यते— विभुनो गत्यसंभवात् सर्वदैव सर्वैरपीन्द्रियैः संयोगः स्यादिति युगपदनेकार्थग्रहणं स्यात् न चैवं दृश्यते इति न मनो विभु किं तु अणु अणुत्वे च गतिसंभवेन पर्यायेणेन्द्रियैः संयोगः संभवतीति पर्यायेण विषयग्रहणं दृश्यमानमुपपद्यते इतिसूत्रार्थः। सूत्रकृतात्र यन्मनसो विभुत्वं प्रत्याख्यायते तदत्र न केनापि सूत्रशब्देन प्राप्तमिति सूत्रकृतो विभावनीयं पाण्डित्यम्। व्याचष्टे— प्राप्तानीति, मनसो विभुत्वपक्षे सर्वाण्यपीन्द्रियाणि सर्वदैव मनसा प्राप्तानि= संयुक्तानि स्युस्तथा च मनसः प्राप्त्यर्थस्य= इन्द्रियैः संयोगार्थस्य गमनस्य= इन्द्रियसमीपगमनस्याभावः प्राप्तस्तत्र= तथा चेन्द्रियैः मनस्संयोगस्य क्रमवृत्तित्वासंभवाद् युगपदेवाऽनेकार्थग्रहणं स्यादिति दृश्यमानस्याऽयुगपद्ग्रहणस्यानुपपत्तिः प्राप्तेत्यन्वयः। ननु मनसो विभुत्वेप्ययुगपद्ग्रहणं लिङ्गान्तरेण सेत्स्यतीत्याशङ्क्याह— गत्यभावादिति, विभुनो मनसो गत्यभावात् प्रतिषिद्धम्= अनुपपन्नमऽयुगपद्विषयग्रहणं लिङ्गान्तरेणापि नानुमातुं शक्यते— विभुत्वविरोधादित्यन्वयः। लिङ्गान्तरेणानुमाने दृष्टान्तमाह— यथेति, संनिकृष्टविप्रकृष्टयोः= समीपदूरस्थयोः पदार्थयोस्तुल्यकालग्रहणात्= समानकालग्रहणात् चक्षुषो गतिः प्रतिषिध्यते— चक्षुषो गतिसत्त्वे समीपस्थस्य प्रथमं दूरस्थस्य च तदनन्तरं ग्रहणं स्यात् न चैवमस्तीति तुल्यकालग्रहणात् प्रतिषिद्धापि चक्षुर्गतिः सा पाणिना चन्द्रमसो व्यवधानेन प्रतीघाते= चन्द्राग्रहणे जातेऽनुमीयते— यदि चक्षुर्गतिर्न स्यात्तदा पाणिना चन्द्रमसो व्यवधानेपि चन्द्रग्रहणं स्यादेवेत्यर्थस्तथा च यथैवं प्रतिषिद्धापि चक्षुर्गतिरनुमीयते— अनुमापकसत्त्वान्न तथा विभुनो मनसो गतिः प्रतिषिद्धानुमातुं शक्यते— अनुमापकासंभवादित्याशयः। उपसंहरति— सोयमिति। सिद्धमाह— सिद्धमिति। विवादविषयं जिज्ञासते— क्वेति। उत्तरमाह— तस्येति, तस्य= मनसः। तत्= मनसो विभुत्वं प्रमाणेनानुपलभ्यमानत्वादेवात्र प्रतिषिद्धम्= निराकृतम्— प्रमाणसिद्धस्यैव स्वीकर्तुं शक्यत्वादित्यर्थः। संकलयति— एकं चेति, वृत्तीनां स्वरूपमाह— चक्षुरिति, उक्तं व्याचष्टे— रूपेति, चक्षुर्विज्ञानम्= चाक्षुषं विज्ञानं वच रूपज्ञानमेव. घ्राणविज्ञानं नाम गन्धविज्ञानम्। पर्यवसितमाह— एतदिति, मनस एकत्वं वृत्तीनां च नानात्वमिति वैषम्यं वृत्तिवृत्तिमतोरेकत्वे नोपपद्यते— एकत्वे= अभेदे उभयोरपि

पुरुषो जानीते नान्तःकरणमिति, एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः= विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य नान्तःकरणस्येति । केन चिदिन्द्रियेण संनिधिः केन चिदऽसंनिधिरित्ययं तु व्यासङ्गोऽनुज्ञायते मनस इति ॥ ८ ॥

एकमन्तःकरणं नाना वृत्तय इति, सत्यऽभेदे वृत्तेरिदमुच्यते—

**स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः ॥ ९ ॥**

तस्यां वृत्तौ नानात्वाभिमानो यथा द्रव्यान्तरोपहिते स्फटिकेऽन्यत्वाभिमानो 'नीलः' 'लोहितः' इति, एवं विषयान्तरोपधानादिति ॥

---

नानात्वं वैकत्वं वा स्यादित्यर्थः । स्वसिद्धान्तेनोक्तं विषयान्तरमाह किं वा ज्ञानमनसोरेकत्वानुपपत्तौ हेतुमाह— पुरुष इति, ज्ञानं पुरुषधर्मो न तु मनोधर्म इत्यर्थः । अस्य फलमाह— एतेनेति, प्रत्युक्तः= मनसः प्रतिषिद्धः । उक्तं व्याचष्टे— विषयान्तरेति, यदा हि ज्ञानं पुरुषधर्मस्तदा विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गोपि पुरुषे एव संभवति न तु मनसि— एतादृशव्यासङ्गस्य ज्ञानरूपत्वात् ज्ञानस्य च पुरुषधर्मत्वात् तथा चैतादृशविषयान्तरव्यासङ्गस्यापि मनसाऽभेदो नोपपद्यते— मनोधर्मत्वाभावादित्यर्थः । मनोवृत्तिव्यासङ्गस्य स्वरूपमाह— केनेति, केनचिदिन्द्रियेण संनिधिः= संयोगः केन चिदेन्द्रियेणाऽसंनिधिः= असंयोग एतादृशो यो व्यासङ्गः= इन्द्रियव्यासंगः स तु मनसि अनुज्ञायते= स्वीक्रियते— मनसोऽणुत्वेन एकस्मिन् काले सर्वैरिन्द्रियैः संयोगासंभवादित्यर्थः । अत्र— "यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनश्चक्षुरादिसाधनश्चात्मा अर्थानुपलभते इति युक्तम्, एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः— पुरुषो जानीते नान्तःकरणमिति । कः पुनरयं व्यासङ्गः ?. अभीष्टविषयोऽनेकविज्ञानोत्पादः स च पुरुषस्य नान्तःकरणस्य, यः पुनरयं संनिधानासंनिधानलक्षणोऽन्तःकरणस्य व्यासङ्गः सोऽनुज्ञायते (मनसि) इति" इति वार्तिकम् । "पुरुषो जानीते नान्तःकरणमिति स्वमतसाधनपरं भाष्यम् । यदपि सांख्या आचख्युः—विषयान्तरव्यासक्तेऽन्तःकरणे चक्षुरादिसंबन्धस्याप्यज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम्— एतेन विषयान्तरव्यासङ्ग इति । पुरुषो जानीते नान्तःकरणमिति हेतुना विषयान्तरव्यासङ्गोन्तःकरणस्य प्रत्युक्तः— व्यासक्तो हि स भवति यो जानीते न चान्तःकरणं जानीते किं तु पुरुष इति तस्येदृशव्यासङ्गो नान्तःकरणस्य, अन्यादृशस्त्वन्तःकरणस्य व्यासङ्गो न निषिध्यते इत्यर्थः" इति च तात्पर्यटीका । यदि ज्ञानमात्मधर्मः स्यात्तदा मनसो विषयान्तरव्यासङ्गेनात्मनो विषयान्तरभानासंभवेपि यो हि चक्षुरादिभिरात्मनो व्यापकत्वात् वर्तमानः संबन्धस्तस्य तु भानं स्यादेव ज्ञानस्यात्मधर्मत्वस्वीकारात्. न च तद्भानमपि भवतीति ज्ञायते ज्ञानं नात्मधर्मः किं तु मनोधर्मस्तथा च मनसो विषयान्तरव्यासक्तिकाले आत्मेन्द्रियसंयोगस्याभानमुपपद्यते— मनस एकस्मिन् काले एकमात्रविषयभासकत्वात् किं वा मनसो विषयान्तरव्यासक्तत्वेन आत्मेन्द्रियसंयोगव्यासक्तत्वाभावात्, तत्र धर्मधर्मिणोरभेदस्वीकारात् वृत्तिरूपस्य ज्ञानस्य वृत्तिमतश्च मनसोऽभेदः सिद्ध इति सांख्याभिप्रायः स एव तात्पर्यटीकायाम्— "यदपि सांख्याः" इत्यनेनोक्त इति विज्ञेयम् ॥ ८ ॥

अग्रिमसूत्रस्यावतारार्थं पूर्वसिद्धं स्मारयति— एकमिति । प्रकृतमाह— सतीति, वृत्तेरभेदे= एकत्वे सत्यपि प्रतीयमानस्य वृत्तिनानात्वस्योपपादनार्थमिदं सूत्रमुच्यते इत्यर्थः । स्फटिकेति— यथा स्फटिकस्यैकरूपत्वेपि जपाकुसुमाद्युपाधिभेदवशात् 'रक्तः स्फटिकः' 'नीलः स्फटिकः' इत्येवमन्यत्वाभिमानः= नानात्वप्रतीतिर्भवति किं वा यथा स्फटिकस्य शुक्लत्वेपि जपाकुसमाद्युपाधिवशात् रक्तत्वादिविविधधर्मवत्त्वाभिमानो भवति तथैव वृत्तेरकत्वेपि तद्विषयाणां घटपटादीनां नानात्वादेव तत्= तस्याः= वृत्तेरन्यत्वाभिमानः= नानात्वप्रतीतिर्भवति न तु वस्तुतः तथा च वृत्तिवृत्तिमतोरेकत्वादभेदं उपपद्यते तथा च कार्यकारणभावेन वृत्तेर्मनोधर्मत्वं प्राप्तं नात्मधर्मत्वमिति सूत्रार्थः । व्याचष्टे— तस्यामिति, एकस्यामित्यर्थः । स्फटिके-

न- हेत्वभावात् ।

स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणः न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति हेत्वभावादनुपपन्न इति । समानो हेत्वभावः इति चेत्?. न- ज्ञानानां क्रमेणोपजनापायदर्शनात्= क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चाऽपयन्ति चेति दृश्यते तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ ९ ॥

" स्फटिकान्यत्वाभिमानवत् " इत्येतदमृष्यमाणः क्षणिकवाद्याह—

स्फटिकेप्यऽपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः ॥ १० ॥

' स्फटिकस्याऽभेदेनाऽवस्थितस्योपधानभेदान्नानात्वाभिमानः ' इत्ययमविद्यमानहेतुकः पक्षः, कस्मात्?. स्फटिकेप्यपरापरोत्पत्तेः= स्फटिकेप्यऽन्या व्यक्तय उत्पद्यन्ते अन्या निरुध्यन्ते इति, कथम्? क्षणिकत्वाद् व्यक्तीनाम्, क्षणश्चाल्पीयान् कालः क्षणस्थितिकाः

---

ऽन्यत्वाभिमानमुदाहरति- नील इति । प्रकृतमाह- एवमिति, विषयान्तराणाम्= नानाविषयाणां घटपटादीनामुपधानात्= संबन्धाद् वृत्तौ नानात्वं प्रतीयते वस्तुतस्त्वेकत्वमेवेत्यर्थः ॥

एतद् भाष्यकारः परिहरति- नेति, स्फटिके इव वृत्तौ मिथ्याभूतं नानात्वं प्रतीयते इत्यत्र हेतोरभावादेवोक्तं नोपपद्यते, वस्तुतस्तु न स्फटिके नानात्वं प्रतीयते किं तु नाना रूपाण्युपाधिभेदात् प्रतीयन्ते इति न स्फटिकदृष्टान्तो घटते इत्यर्थः । स्वयं व्याचष्टे- स्फटिकेति, ज्ञानेषु= वृत्तिषु, न पुनर्गन्धाद्यन्यत्वाभिमानवन्मुख्यः इति= इत्यत्र हेतुर्नास्तीति हेत्वभावाद् वृत्तिषु नानात्वाभिमानस्य गौणत्वमनुपपन्नमित्यन्वयः । गन्धरूपरसादिषु चान्यत्वाभिमानो मुख्य एव न गौण इति स्पष्टमेव । ननु वृत्तिषु नानात्वाभिमानस्य मुख्यत्वेपि हेतुर्नास्तीति गौणत्वमुख्यत्वयोर्हेत्वभावः समान एवेत्याशङ्कते- समान इति । परिहरति- नेति । परिहारहेतुमाह- ज्ञानानामिति, उक्तं व्याचष्टे- क्रमेणेति, इन्द्रियार्थेषु= गन्धादिविषयकाणि ज्ञानानि क्रमेणोपजायन्ते अपयन्ति= विनश्यन्तीति च प्रत्यक्षमेव तेन वृत्तीनां नानात्वं मुख्यमेव सिद्धम् एकत्वे क्रमेण उत्पत्तिविनाशौ न स्याताम्- नानात्वे एव क्रमसंभवादित्यर्थः । उपसंहरति- तस्मादिति, मुख्य इतिशेषः । तथा चैकत्वनानात्ववैधर्म्यादुक्ताद् वृत्तिवृत्तिमतोर्भेदः सिद्धस्तथा च न ज्ञानं मनोधर्मः किं त्वात्मधर्म एवेति युक्तमित्याशयः ॥ ९ ॥

अग्रिमसूत्रमवतारयति- स्फटिकेति, क्षणिकवादे पदार्थस्य स्थायित्वमेव नास्तीति कथं मिथ्यान्यत्वाभिमानविषयत्वं स्यादित्यमर्शः । स्फटिकेपीति- व्यक्तीनाम्= पदार्थमात्रस्य क्षणिकत्वात् स्फटिकस्यापि क्षणिकत्वं प्राप्तं तथा च स्फटिके= स्फटिकस्यापि प्रतिक्षणम् अपरापरा= अन्याऽन्या व्यक्तिरुत्पद्यते इति नैकस्मिन् स्फटिके उपाधिभूतजपाकुसमादिभेदादन्यत्वाभिमानो गौणः संभवति येन तद्दृष्टान्तेन वृत्तावन्यत्वाभिमानो गौण उपपद्येत तस्मात् पूर्वसूत्रेण वृत्तौ नानात्वाभिमानस्य गौणत्वे यो हेतुरुक्तः सोऽहेतुरेवेति सूत्रार्थः । यदि स्फटिकः स्थायी स्यात् तदैकस्मिन् स्फटिके उपाधिभेदात् 'नीलः स्फटिकः' 'लोहितः स्फटिकः' इति नानात्वाभिमानः स्यादपि न चैवमस्ति तथा च क्षणिकत्वात् नीलत्वादिज्ञानविषयाणां स्फटिकव्यक्तीनां परस्परं भेदात् नैकस्मिन् नानात्वाभिमानः संभवतीत्याशयः । व्याचक्षाणः पूर्वोक्तमनुवदति- स्फटिकस्येति, इदं पूर्वत्र व्याख्यातम् । क्षणिकवादी स्ववक्तव्यमाह- इत्ययमिति, अविद्यमानहेतुकः= निर्हेतुकः- स्फटिकादेरवस्थितत्वासंभवेन एकस्मिन् नानात्वाभिमानविषयत्वासंभवादित्यर्थः । निर्हेतुकत्वे हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- स्फटिकेपीति । उक्तं व्याचष्टे- स्फटिकेपीति, उत्तरोत्तरक्षणे अन्या अन्या व्यक्तय उत्पद्यन्ते अन्याः= पूर्वाः पूर्वा व्यक्तय निरुध्यन्ते= विनश्यन्ति- क्षणिकत्वात्. तथा च नीलत्वादिधर्मेण भासमाना व्यक्तयो भिन्ना एवेति

क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तयः ? इति, उपचयापचयप्रबन्धदर्शनात् शरीरादिषु= पक्तिनिर्वृत्तस्याऽऽहाररसस्य शरीरे रुधिरादिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्तते उपचयाद् व्यक्तीनामुत्पादः अपचयाद् व्यक्तिनिरोधः एवं च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यते इति सोयं व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति ॥ १० ॥

## नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा ॥ ११ ॥

सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः, कस्मात्?, हेत्वभावात्= नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति, तस्माद् यथादर्शनमभ्यनुज्ञा= यत्र यत्रोपचयापचयप्रबन्धो दृश्यते तत्र तत्र व्यक्तीनाम् अपरापरोत्पत्तिरुपचयाऽपचयप्रबन्धदर्शनेनाभ्यनुज्ञायते यथा शरीरादिषु. यत्र यत्र न दृश्यते तत्र तत्र प्रत्याख्यायते यथा ग्रावप्रभृतिषु,

नैकस्मिन् नानात्वाभिमानः संभवतीत्यर्थः । उक्ते हेतुं जिज्ञासते– कथमिति । हेतुमाह– क्षणिकत्वादिति । क्षणिकशब्दव्युत्पत्तिमाह– क्षणश्चेति, "अष्टादश निमेषास्तु काष्ठा. त्रिंशत्तु ताः कला, तास्तु त्रिंशत् क्षणः" इत्यमरः । क्षणिकत्वे हेतुं जिज्ञासते– कथं पुनरिति । हेतुमाह– उपचयेति, शरीरादिषु उपचयापचययोः प्रबन्धस्य= नैरन्तर्यस्य दर्शनात् क्षणिकत्वमित्यन्वयः । आदिशब्देन वृक्षादिकं ग्राह्यम् । उक्तं व्याचष्टे– पक्तीति, पक्तिनिर्वृत्तस्य= भक्षितान्नपाकसंपन्नस्याऽऽहाररसस्य शरीरे रुधिरादिरूपपरिणामेन ह्रासेन च शरीरस्योपचयापचयौ नैरन्तर्येण प्रवर्तेते. अत एव शरीरस्याहारे सति वृद्धिर्लङ्घनादौ च क्षीणता निरीक्ष्यते तथा चोपचिताऽपचितव्यक्त्योर्भेदस्यावश्यकत्वादुपचयादन्या शरीरव्यक्तिरुत्पद्यते अपचयाच्च पूर्वा शरीरव्यक्तिर्विनश्यतीति प्राप्तम् उपचयाऽपचययोश्च क्षणभेदेन भेदात् शरीरव्यक्तेरपि क्षणभेदेन भेदः प्राप्त इति क्षणिकत्वं सिद्धमित्यर्थः । अत्र प्रत्यक्षं प्रमाणमाह– एवमिति, एवम्= उपचयापचयाभ्यामुत्पादविनाशयोः संभवे सति अवयवानाम्= रुधिरादीनां परिणामविशेषेण शरीरस्य वृद्धिः कालान्तरे प्रत्यक्षेण गृह्यते, यदि शरीरस्य क्षणिकत्वं न स्यात्कि . त्वेकत्वं स्यात् तदा जन्मारभ्य मरणपर्यन्तं समानरूपत्वमेव स्यादिति कुमारत्वयुवत्वादिकं न स्यादित्यर्थः । उपसंहरति– सोयमिति, सोयम्= क्षणिकत्वम्, व्यक्तिविशेषस्य= शरीरस्य, तथा च यथा शरीरे क्षणिकत्वं तथा स्फटिकादिपदार्थमात्रे क्षणिकत्वं वेदितव्यम्. क्षणिकत्वाच्च नैकस्मिन् नानात्वाभिमानः संभवति येन स्फटिकदृष्टान्तेनोक्तेन वृत्तौ गौणो नानात्वाभिमान उपपद्येत तस्माद् वृत्तीनां स्वरूपेण मुख्यमेव नानात्वं प्राप्तं न तु गौणमित्यर्थः ॥ १० ॥

उक्तं निराकरोति– नियमेति, पदार्थमात्रस्य क्षणिकत्वनियमे हेतुर्नास्तीति यथादर्शनम्= प्रत्यक्षानुसारेण प्रमाणानुरोधेन वा अभ्यनुज्ञा= क्षणिकत्वस्थिरत्वादिकं स्वीक्रियते तथा च शरीरस्य रुधिराद्यवयवभेदेनोपचयापचयाभ्यां क्षणिकत्वेपि स्फटिकादिव्यक्तीनां क्षणिकत्वं नोपपद्यते– क्षणिकत्वप्रयोजकीभूतयोरुपचयापचययोरभावादिति सूत्रार्थः । व्याचष्टे– सर्वास्विति, नायं नियमः= न दृश्यते येन क्षणिकत्वं स्यादित्यर्थः । उक्तनियमाभावे हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– हेत्वभावादिति । उक्तं व्याचष्टे– नात्रेति, अत्र= पदार्थमात्रक्षणिकत्वे, प्रतिपादकम्= प्रमाणम् । स्वाभिप्रायमाह– तस्मादिति, यथादर्शनम्= प्रमाणानुसारेण । उक्तं व्याचष्टे– यत्रेति, यत्र यत्र= शरीरादौ, व्यक्तीनाम्= शरीरादिव्यक्तीनाम् उपचयापचययोः प्रबन्धदर्शनेनापरापरोत्पत्तिरभ्यनुज्ञायते इत्यन्वयः, दृष्टान्तमाह– यथेति । तदेतत् पूर्वसूत्रे प्रतिपादितमेव । व्यतिरेकमाह– यत्र यत्र नेति, यत्र यत्र ग्रावप्रभृतिषु= पाषाणादिषु उपचयापचयप्रबन्धो न दृश्यते तत्र तत्र पाषाणादिषु अपरापरोत्पत्तिः प्रत्याख्यायते इत्यन्वयः । तथा चापरापरोत्पत्तेः= क्षणिकत्वस्य उपचयापचयप्रबन्ध एव प्रयोजक इति सिद्धं तथा च

स्फटिकेप्युपचयापचयप्रबन्धो न दृश्यते तस्मादऽयुक्तम्- ' स्फटिकेप्यऽपरापरोत्पत्तिः ' इति, यथा चाऽर्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापदयेत् तादृगेतदिति ॥ ११ ॥

यश्चाशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसंताने क्षणिकतां मन्यते तस्यैतत्—

## न- उत्पत्तिविनाशकारणोपलब्धेः ॥ १२ ॥

उत्पत्तिकारणं तावदुपलभ्यते- अवयवोपचयो वल्मीकादीनाम्. विनाशकारणं चोपलभ्यते- घटादीनामवयवविभागः। यस्य त्वऽनपचितावयवं निरुध्यते अनुपचितावयवं चोत्पद्यते तस्याशेषनिरोधे निरन्वये वाऽपूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यते इति ॥ १२ ॥

---

स्फटिकेप्युपचयापचययोरभावेन क्षणिकत्वं न संभवतीत्याह- स्फटिकेपीति, तथा च पूर्वसूत्रेण " स्फटिकेप्यपरापरोत्पत्तेः " इति यदुक्तं तदयुक्तमेवेत्यन्वयः। अयुक्तत्वमुपपादयति- यथेति, अर्कस्य= कटुवृक्षविशेषस्य, कटुकिम्ना= कटुत्वेन, कटुकिमानम्= कटुत्वम् , मोदकं कटु पदार्थत्वादर्कवदित्येवम् आपादयेत्= प्रतिपादयेत् तद् यथा न युक्तं भवति एवं एतत्= शरीरक्षणिकत्वदृष्टान्तेन पदार्थमात्रस्य क्षणिकत्वप्रतिपादनमपि तादृक्= तादृशमेव= अयुक्तमेवेत्यर्थः, तथा च स्थिरत्वसंभवाद् वृत्तेर्नानात्वं गौणं संभवतीतिभावः ॥ ११ ॥

अग्रिमसूत्रमवतारयति- यश्चेति, यः= क्षणिकवादी बौद्धः, पूर्वक्षणवृत्तिपदार्थस्याऽशेषविनाशेन निरन्वयमपूर्वोत्पादं द्रव्यसंतानस्य क्षणिकतालक्षणं मन्यते तस्यैतत्= एतत्सूत्रमुत्तरमित्यन्वयः, बौद्धातिरिक्तैर्योऽपूर्वोत्पादः स्वीक्रियते स सान्वयः= पूर्वसंबद्ध एव स्वीक्रियते- अपूर्वेपि घटे उत्पन्ने पूर्वस्य मृत्स्वरूपस्यानुवर्तमानत्वात् घटध्वंसकालेपि च घटखण्डानां पूर्वाणामुपलभ्यमानत्वात् तथा च द्रव्यस्य सर्वात्मना विनाशो न भवतीत्ययं सान्वयो विनाश उत्पादश्च। क्षणिकवादिना च पूर्वद्रव्यस्योत्तरोत्तरक्षणे सत्त्वम् अपूर्वकार्येषु संबन्धश्च न स्वीक्रियते- एकस्यानेकविरुद्धधर्मासंभवादित्ययमेवाशेषनिरोधः= निरन्वयो विनाश उत्पादश्च इयमेव क्षणिकता स्वीक्रियते, पुराणत्वपरिणामित्वादिलक्षणायाः क्षणिकताया अन्यैरपि स्वीकृतत्वेन तत्स्वीकारे विशेषाभावादित्यर्थः। उक्तं च बौद्धैः- " यत् सत् तत् क्षणिकम् " " न सतः कारणापेक्षा " " निस्स्वभावाश्च दर्शिताः " इत्यादि। उक्तबौद्धमतं परिहरति- नेति, उत्पत्तिकारणमुपचयो विनाशकारणं चाऽपचयः स च पदार्थेषूपलभ्यते क्षणिकानां च पदार्थानामुपचयापचयवत्त्वं नोपपद्यते स्थायिपदार्थस्यैव किंचित्कालेनोपचयापचययोः संभवात् तथा च पदार्थेषु उत्पत्तिविनाशकारणयोरुपचयापचययोरुपलब्ध्या स्थायित्वं प्राप्तमिति न क्षणिकत्वं संभवति क्षणिकत्वाभावे च निरन्वयोऽशेषनिरोधोऽपूर्वोत्पादश्चापि न संभवति तथा च न स्फटिकेप्यपरापरोत्पत्तिः संभवति येन नानात्वाभिमानो मुख्यः स्यादिति सूत्रार्थः। व्याचष्टे- उत्पत्तीति, वल्मीकादीनामवयवोपचय उत्पत्तिकारणमुपलभ्यते, घटादीनामवयवविभागः= अवयवापचयो विनाशकारणमुपलभ्यते तादृशोपचयापचयविशिष्टत्वेन च घटादीनां स्थायित्वं सिद्धमिति न क्षणिकत्वमुपपद्यते इत्यर्थः। बौद्धमते बाधकमाह- यस्येति, यस्य बौद्धस्य मते अनपचितावयवम्= अवयवापचयं विना निरुध्यते= विनश्यति वस्तु. अनुपचितावयवम्= अवयवोपचयं विना चोत्पद्यते तस्य मते उभयत्रापि= अशेषनिरोधे निरन्वये चापूर्वोत्पादे कारणं नोपलभ्यते- लोकेऽवयवोपचयस्यैवोत्पादकारणत्वम् अवयवापचयस्यैव च विनाशकारणत्वं क्लृप्तमस्ति उक्तबौद्धमते च क्षणिकेषु उपचयापचयौ न संभवतः, न च निष्कारणक उत्पादो विनाशश्च स्वीकर्तुं शक्यते- अतिप्रसङ्गात् , उपचयापचयस्वीकारे च स्थायित्वमेव स्यान्न क्षणिकत्वमित्यर्थः। अत्र- " उपचय इति वृद्धिः उपचितो गौरिति, अपचय इति ह्रासः अपचितो गौरिति, उभयं चैतदवस्थितवस्तुविषयम् " " तदुभयं क्षणिकत्वे न स्यात् " इति वार्तिकम् ॥ १२ ॥

## क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिः ॥१३॥

यथाऽनुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिके पराऽपरासु व्यक्तिषु विनाशकारणमुत्पत्तिकारणं चाभ्यनुज्ञेयमिति ॥ १३ ॥

## लिङ्गतो ग्रहणाद् नानुपलब्धिः ॥ १४ ॥

क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणं च गृह्यते अतो नाऽनुपलब्धिः । विपर्ययस्तु स्फटिकादिषु द्रव्येषु अपरापरोत्पत्तीनां न लिङ्गमस्तीत्यनुवृत्तिरेवेति ॥ १४ ॥

अत्र कश्चित् परिहारमाह—

## न— पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥

---

स्फटिकादिषु निराकृतामपरापरोत्पत्तिं समाधत्ते— क्षीरेति, क्षीरस्य दधिरूपेण परिणामे जाते क्षीरविनाशे= क्षीरविनाशस्य कारणानुपलब्धिवत्= कारणानुपलब्धावपि यथा किंचित् क्षीरविनाशकारणं स्वीक्रियते दध्युत्पत्तिवत्= दध्युत्पत्तिकारणानुपब्धिवत्= यथा च तत्र दध्युत्पत्तिकारणस्यानुपलब्धावपि किंचिद् दध्युत्पत्तिकारणं स्वीक्रियते तथा स्फटिकेपि पूर्वपूर्वस्फटिकव्यक्तीनां विनाशकारणस्यानुपलब्धावपि तद्विनाशकारणस्वीकारेण तदुपपत्तिः= पूर्वपूर्वस्फटिकव्यक्तीनां विनाशस्योपपत्तिः संभवति. तथा स्फटिके उत्तरोत्तरव्यक्तीनामुत्पत्तिकारणस्यानुपलब्धावपि तदुत्पत्तिकारणस्वीकारेण तदुपपत्तिः= उत्तरोत्तरस्फटिकव्यक्तीनामुत्पत्तेरुपपत्तिः संभवतीति स्फटिके यथा नानात्वं मुख्यमेव तथा वृत्तिष्वपि नानात्वं मुख्यमेवेति पर्यवसितमिति सूत्रार्थः, अत्र सूत्राक्षराणां वाक्यार्थानुकूल्यमनुसंधेयम् । वस्तुवस्तु 'क्षीरविनाशे दध्युत्पत्तौ च कारणानुपलब्धिवत् तदनुपब्धिः' इत्येवं सूत्रं वक्तव्यमासीत् । व्याचष्टे— यथेति । क्षीरस्य दधिभावस्थले इतिशेषः । प्रकृतमाह— तथेति, परासु= पूर्वपूर्वस्फटिकव्यक्तीनां विनाशकारणम् अपरासु= उत्तरोत्तरस्फटिकव्यक्तीनामुत्पत्तिकारणं च स्वीकार्यं तेन स्फटिके परापरव्यक्तीनां विनाशोत्पादौ नाऽनुपपन्नावित्यर्थः ॥ १३ ॥

उक्तं परिहरति— लिङ्गत इति, क्षीरविनाशकारणस्य दध्युत्पत्तिकारणस्य चानुपलब्धिर्नास्ति— लिङ्गतः= क्षीरविनाशेन दध्युत्पत्त्या च तादृशकारणस्य ग्रहणात्= उपलभ्यमानत्वात्, कारणं विना विनाशादिकार्याणामसंभवात्, नैवं स्फटिके परापरव्यक्तीनां विनाशोत्पादयोः कारणं लिङ्गेनाप्युपलभ्यते येन स्वीक्रियेतेति न स्फटिकादौ परापरव्यक्तीनां विनाशोत्पादौ संभवत इति स्फटिकादौ वृत्तौ च गौणमेव नानात्वमिति सूत्रार्थः । व्याचष्टे— क्षीरेति, कार्यस्य कारणलिङ्गत्वात् क्षीरविनाश एव लिङ्गं यस्य तत् क्षीरविनाशलिङ्गम्= क्षीरविनाशानुमेयं क्षीरविनाशकारणम्. एवं दध्युत्पत्तिलिङ्गम्= दध्युत्पत्त्यनुमेयं दध्युत्पत्तिकारणं चानुमानेन गृह्यते= उपलभ्यते इति नैतादृशकारणयोरनुपब्धिरस्ति या दृष्टान्तो भवेदित्यर्थः । पूर्वपक्षिमते बाधकमाह— विपर्यय इति, विपर्ययः= कारणानुपलब्धिः, स्फटिकादिषु अपरापरव्यक्तीनामुत्पत्तेर्न लिङ्गमस्तीति नापरापरोत्पत्तिः पूर्वपूर्वविनाशश्च स्वीकर्तुं शक्यते इति स्फटिकादीनामनुवृत्तिः= स्थिरत्वं सिद्धमित्यर्थः ॥ १४ ॥

अग्रिमसूत्रमवतारयति— अत्रेति, कश्चित्= सांख्यवादी, यदुक्तम्— क्षीरविनाशस्य दध्युत्पत्तेश्चानुमानेन कारणमुपलभ्यते तस्य परिहारमाहेत्यर्थः । नेति— क्षीरविनाशस्य दध्युत्पत्तेश्च कारणमेव न संभवति येनोपलभ्येत— तत्र सद्वादस्वीकारेण क्षीरविनाशस्य दुध्युत्पत्तेश्चाभावात् किं तु तत्र पयसः= क्षीरस्य परिणामेन= विकारविशेषेण गुणान्तरस्य= रसरूपाकृत्याद्यन्तरस्य दधित्वानुकूलस्य प्रादुर्भावो भवति तेनैव

'पयसः परिणामो न विनाशः' इत्येक आह. परिणामश्चाऽवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति। 'गुणान्तरप्रादुर्भावः' इत्यपर आह= सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यते इति. स खल्वेकपक्षीभाव इव ॥ १५ ॥

अत्र तु प्रतिषेधः—

## व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १६ ॥

संमूर्छनलक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्नि उत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यम् अवयवविभागेभ्यो निवृत्तमित्यनुमीयते. यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तते इति, मृद्वचाऽवयवान्वयः पयोदध्नोः, नाऽशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटते इति ॥ १६ ॥

---

दधित्वव्यवहार उपपद्यते इति न क्षीरविनाशो न वा दध्युत्पत्तिश्च स्वीक्रियते येन तत्कारणं सिध्येतोपलभ्येत चेति सूत्रार्थः। व्याचष्टे— पयस इति, विनाशाभावे विनाशकारणाभावः प्राप्तस्तेन तदुपलम्भाभावः प्राप्त इति पूर्वोक्तनिरासो जातः। एकः= सांख्यवादी। परिणामलक्षणमाह— परिणामश्चेति, यथाऽवस्थितस्य सुवर्णस्य कटकत्वधर्मनिवृत्तौ कुण्डलत्वधर्मोत्पत्तिर्भवतीति सुवर्णस्य कुण्डलत्वेन रूपेण परिणाम उच्यते एवं प्रकृतेपि क्षीरस्य क्षीरत्वानुकूलतरलत्वादिधर्मनिवृत्तिर्घनत्वादिधर्मस्य दधित्वानुकूलस्योत्पत्तिर्भवति न तु द्रव्यस्योत्पादविनाशावित्यर्थः। मतान्तरमाह— गुणान्तरेति, अत्र पक्षे गुणादेरपि नोत्पादविनाशौ किं तु प्रादुर्भावतिरोभावावित्याशयः, अत्र "द्रव्यं तावत्सदेव गुणोपि सन् केवलमनुद्भूत आसीत् एकश्चोद्भूतो गुणः" इति तात्पर्यटीका। उक्तमतं व्याचष्टे— सत इति, सतः= स्थायिनः, पूर्वगुणस्य= मधुरत्वादिरसादेर्निवृत्तौ= तिरोभावे सति गुणान्तरम्= अम्लत्वादिरसादिकमुत्पद्यते= प्रादुर्भवति। एतयोरुभयोरपि पक्षयोः पर्यवसाने ऐक्यमाह— स इति, पूर्वधर्मस्य पूर्वगुणस्य च निवृत्तिरेक एव पदार्थस्तथा धर्मान्तरस्य गुणान्तरस्य चोत्पत्तिरेक एव पदार्थ इति न पक्षद्वयेपि कश्चिद्विशेष इत्यर्थः, तथा च क्षीरविनाशस्य दध्युत्पत्तेश्चाभावादेव न तत्कारणं संभवति येनोपलभ्येतेत्यर्थः। एतन्मतस्योपपत्तिस्तु सांख्यादिदर्शनेषु द्रष्टव्या नेह विस्तरभयादुपपाद्यते। किं वात्र प्रथममते धर्मशब्देनाकृतिर्ग्राह्या द्वितीयमते गुणशब्देन मधुरत्वादिर्गुणो ग्राह्य इतिविवेकः॥ १५ ॥

अग्रिमसूत्रमवतारयति— अत्रेति, अत्र= अस्य= उक्तस्योत्पत्तिविनाशयोरभावस्य प्रतिषेधः= निरासोऽनेन सूत्रेण क्रियते इत्यर्थः। व्यूहान्तरादिति— व्यूहान्तरात्= पूर्वावयवसमुदायात्= पूर्वावयविनः क्षीरादेर्द्रव्यान्तरस्य= दध्यादेरुत्पत्तिदर्शनमेव पूर्वद्रव्यनिवृत्तेः= पूर्वद्रव्यविनाशस्याऽनुमानम्= अनुमापकं लिङ्गमित्यन्वयः, दध्नः क्षीरावस्थायामदर्शनात् तदनन्तरं च दर्शनात् कारणविशेषेणोत्पत्तिरवसीयते इति दध्युत्पत्तिः सिद्धा तया च तत्कारणमपि सिद्धम्— कारणं विना कार्यासंभवात्. क्षीरविनाशं विना च दध्युत्पत्तिर्न संभवतीति दध्युत्पत्त्या क्षीरविनाशोऽवसीयते इति द्रव्याणामपि विनाशोत्पादौ सिद्धौ तेन तत्कारणमपि सिद्धम्, स्फटिकादिषु तु न द्रव्यान्तरोत्पत्तिरनुभूयते इति न तत्कारणं पूर्वविनाशकारणं च संभवतीति स्थिरत्वं सिद्धं तेन नानात्वस्य गौणत्वं सिद्धं तथा वृत्तेरपि गौणमेव नानात्वमिति प्राप्तमिति सूत्रार्थः। व्याचष्टे— संमूर्च्छनेति, व्यूहान्तरम्= अवयवव्यूहः स चावयवानां संमूर्च्छनम्= कार्यानुकूलव्यापनं कुर्वद्रूपतेतियावत् तस्माद् द्रव्यान्तरं दध्यादि उत्पद्यते उत्पन्नं च गृह्यते तादृशग्रहणेन क्षीरादेः पूर्वद्रव्यस्य स्वावयवविभागेभ्यो निवृत्तिः= विनाशोऽनुमीयते अन्यथा दध्यवस्थायामपि क्षीरमुपलभ्येत कारणं विना च कार्यासंभवादवयवविभागलक्षणं विनाशकारणं सिद्धं भवति. दध्युत्पत्तेश्चावयवसंमूर्च्छनं कारणं सिद्धं भवतीत्यर्थः। उदाहरति— यथेति, व्यूहान्तरात्= संमूर्च्छनात्= व्यापनात्, मृदोऽनुवर्तमानत्वेपि मृत्पिण्डो विनश्यत्येवेति पूर्वद्रव्यविनाशः सिद्धः। विशेषमाह— मृद्वदिति, यथा घटादिकार्येषु

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध उच्यते इति—

क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनामिति नायमेकान्त इति। कस्मात् ?, हेत्वभावात्= नात्र हेतुरस्ति— अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत् न पुनर्यथा विनाशकारणभावात् कुम्भस्य विनाश उत्पत्तिकारणभावाच्चोत्पत्तिरेवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति ॥

निरधिष्ठानं च दृष्टान्तवचनम् ।

---

मृदनुवर्तमाना भवति तथा पयोदध्नोरपि अवयवान्वयः= अवयवानुवृत्तिर्भवत्येव अत एव सादृश्यं भवति। पर्यवसितमाह— नेति, बौद्धोक्तरीत्या पूर्वद्रव्यस्याशेषविनाशो द्रव्यान्तरस्य च निरन्वय उत्पादो न घटते= न संभवति— अवयवानुवृत्तिदर्शनात्, अन्यथा अवयवानुवृत्तिर्न स्यात् तेन कार्यकारणयोः सादृश्यमपि न स्यादित्यर्थः। पूर्वद्रव्यस्याऽशेषनिरोधे जाते निरन्वयो द्रव्यान्तरोत्पादो न घटते— द्रव्यान्तरोत्पत्तेरधिकरणासंभवादित्यन्वयः ॥ १६ ॥

अग्रिमसूत्रमवतारयति— अभ्यनुज्ञायेति, स्वीकृत्येत्यर्थः, प्रतिषेधः= स्फटिकादौ परापरोत्पत्तेर्बौद्धोक्तायाः प्रतिषेधोनेन सूत्रेणोच्यते इत्यन्वयः, विनाशोत्पादयोर्निष्कारणकत्वे व्यभिचारः प्रदर्श्यते इत्यर्थः। क्वचिदिति— क्वचित्= क्षीरादौ यदि विनाशकारणं नोपलभ्यते तथापि क्वचित्= घटादौ विनाशकारणमुपलभ्यते एवेति सर्वत्र विनाशोत्पादौ निष्कारणावेव भवत इति अनेकान्तः= नियमाभावः= व्यभिचारः प्राप्तः— घटादौ विनाशोत्पादयोः सकारणकत्वस्य प्रत्यक्षसिद्धत्वादिति न क्षीरदध्यादिदृष्टान्तेन स्फटिकादौ निष्कारणौ विनाशोत्पादौ संभवतः— प्रत्यक्षविरोधात् तेन स्फटिकादीनां स्थिरत्वं सिद्धमिति सूत्रार्थः। व्याचष्टे— क्षीरेति, क्षीरविनाशवत् दध्युत्पादवच्च स्फटिकादीनामुत्पादविनाशौ निष्कारणाविति एकान्तः= नियमः= व्याप्तिर्नोपपद्यते— घटादिषु व्यभिचारादित्यन्वयः। उक्तनियमाभावे हेतुं जिज्ञासते— कस्मादिति। हेतुमाह— हेत्वभावादिति। उक्तं व्याचष्टे— नात्रेति, अत्र= उक्तनियमे= पदार्थमात्रस्य विनाशोत्पादयोर्निष्कारणकत्वे। व्यभिचारं प्रदर्शयति— अकारणाविति, क्षीरदधिवत्= क्षीरदध्नोर्विनाशोत्पदयोरिव स्फटिकादिव्यक्तीनां विनाशोत्पदौ निष्कारणकौ न तु कुम्भस्य विनाशोत्पादयोरिव सकारणकौ इत्यत्र नियामकाभावान्न पदार्थमात्रस्य विनाशोत्पादयोर्निष्कारणकत्वं संभवतीत्यर्थः। तथा च क्षीरदध्नोर्विनाशोत्पादयोः "तुष्यतु दुर्जनः" इति न्यायेन निष्कारणकत्वाभ्युपगमेपि स्फटिकादिव्यक्तीनां निष्कारणकौ विनाशोत्पादौ न संभवतः किं तु यथा कुम्भस्य विनाशकारणभावात्= विनाशकारणसत्त्वात्= विनाशकारणादवयवविभागाद्विनाश उत्पत्तिकारणाच्चावयवसंमूर्छनादुत्पत्तिस्तथा स्फटिकादिव्यक्तीनामपि विनाशकारणभावाद्विनाश उत्पत्तिकारणभावाच्चोत्पत्तिः संभवति न च स्फटिकादिष्ववयवविभागादिलक्षणं विनाशादिकारणमुपलभ्यते इति न विनाशोत्पादौ संभवत इति स्थिरत्वं सिद्धं तेन नानात्वस्य गौणत्वं प्राप्तमित्यन्वयः। क्षीरादिषु दध्यादिवत् स्फटिकादिषु पदार्थान्तरोत्पत्तेरदर्शनादपि निष्कारणकौ विनाशोत्पादौ न स्वीकर्तुं शक्येते, 'स एवायं स्फटिकः' इतिप्रत्यभिज्ञापि तयोर्बाधिका। न च सदृशपरिणामात् प्रत्यभिज्ञा संभवतीतिवाच्यम्— मुख्यप्रत्यभिज्ञायां बाधकाभावादिति विभावनीयम् ॥

स्फटिकादीनां विनाशोत्पादयोर्निष्कारणकत्वसाधने पक्षासिद्धिं दोषमाह— निरधिष्ठानमिति, यथा— 'गगनारविन्दं सौरभविशिष्टं जलारविन्दवत्' इत्युक्ते पक्षभूतं गगनारविन्दमेव नास्ति यत्र जलारविन्दसादृश्येन सौरभवत्त्वं सिद्धं स्यादिति पक्षासिद्धिरिति 'जलारविन्दवत्' इति दृष्टान्तवाक्यं

गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः– क्षीरविनाशकारणानुपलब्धिवद् दध्युत्पत्तिकारणानुपलब्धिवच्चेति. तौ तु न गृह्येते तस्मान्निरधिष्ठानोयं दृष्टान्त इति ॥

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योत्र
साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः ॥

कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनाम् इत्यभ्यनुज्ञेयोऽयं दृष्टान्तः– प्रतिषेद्धुमशक्यत्वात् । क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योयं प्रतिषेद्धुम्– कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयम्– कार्यलिङ्गं हि कारणम्, इत्युपपन्नम्– अनित्या बुद्धिरिति ॥ १७ ॥

---

निरधिष्ठानम्= पक्षहीनं तथा प्रकृतेपि 'स्फटिकादीनां विनाशोत्पादौ निष्कारणकौ क्षीरदधिविनाशोत्पादाविव' इत्यत्र पक्षभूतौ स्फटिकादिविनाशोत्पादावेव प्रसिद्धौ न स्तो यत्र निष्कारणकत्वं सिद्धं स्यादिति 'क्षीरदधिविनाशोत्पादाविव' इति दृष्टान्तवचनं पक्षहीनमस्तीति पक्षासिद्धिर्दोष इत्यर्थः । व्याचष्टे– गृह्यमाणयोरिति, यदि स्फटिकादीनां प्रतिक्षणं विनाशोत्पादौ गृहीतौ स्यातां तदा 'क्षीरविनाशकारणानुपलब्धिवत्' 'दध्युत्पत्तिकारणानुपलब्धिवत्' इति च दृष्टान्त आश्रयवान्= पक्षसहितः स्यादपि न चैवमस्ति यतस्तौ= स्फटिकादिषु विनाशोत्पादौ न गृह्येते तस्मादयं दृष्टान्तो निरधिष्ठानः= पक्षहीन इति पक्षासिद्धिर्दोष इत्यन्वयः । अत्र पूर्वपक्षिमतेन 'क्षीरविनाशकारणानुपलब्धिवत् स्फटिकादिविनाशकारणानुपलब्धिस्तेन कारणानुपलब्धादपि स्फटिकादिषु निष्कारणो विनाशः क्षीरविनाशवत् सिद्धः' इत्येवं व्याख्येयम् एवम् "दध्युत्पत्तिकारणानुपलब्धिवत्" इत्यपि व्याख्येयम् ॥

स्फटिकादीनां विनाशोत्पादयोः सकारणकत्वं समाधत्ते– अभ्यनुज्ञायेति, स्फटिकस्योत्पादविनाशौ अभ्यनुज्ञाय= संभाव्य= यदि संभवतस्तदा योऽत्र= स्फटिकोत्पादविनाशयोः साधकः= कारणं तस्याऽभ्यनुज्ञानात्= अवश्यम्भावात् कार्यस्य सकारणकत्वनियमात् अप्रतिषेधः= स्फटिकोत्पादविनाशयोः सति संभवे सकारणकत्वस्य प्रतिषेधो नोपपद्यते न च स्फटिकोत्पादविनाशौ संभवत इति स्फटिकादीनां स्थिरत्वं सिद्धमित्यर्थः । स्वयं व्याचष्टे– कुम्भवदिति, स्फटिकादीनामपि विनाशोत्पादौ घटस्य विनाशोत्पादाविव सकारणकौ कार्यत्वादित्यन्वयः । कुम्भवदिति दृष्टान्तः । अभ्यनुज्ञेयत्वे हेतुमाह– प्रतिषेद्धुमिति । कार्यमात्रस्य सकारणकत्वनियमाद् विनाशोत्पादयोरपि सकारणकत्वस्य प्रतिषेधो न संभवतीति कुम्भवदिति दृष्टान्तः स्वीकार्य एवेत्यर्थः । विपक्षे बाधकमाह– क्षीरेति, क्षीरदध्नोर्विनाशोत्पादाविव स्फटिकादीनां विनाशोत्पादौ निष्कारणकौ इतिदृष्टान्तः प्रतिषेद्धुं शक्यते इत्यन्वयः। एतद्दृष्टान्तस्य प्रतिषेद्धुं शक्यत्वे हेतुमाह– कारणत इति । ननु सर्वत्र विनाशोत्पादयोः सकारणकत्वनियमे क्षीरदध्नोर्विनाशोत्पादौ कथं निष्कारणकावित्याशङ्क्य तयोरपि सकारणकत्वमुपपादयति– क्षीरदध्नोरिति, तत्कारणम्= क्षीरदध्नोर्विनाशोत्पादकारणमनुमेयमस्ति– अप्रत्यक्षत्वादित्यन्वयः । अनुमेयत्वे हेतुमाह– कार्येति, कार्यमेव लिङ्गमस्येति कार्यलिङ्गम्= कार्यानुमेयं कारणं भवति प्रत्यक्षासंभवे. तथा च क्षीरदध्नोर्विनाशोत्पादकारणमपि सिद्धमनुमानेनेति विनाशोत्पादमात्रस्य सकारणकत्वं सिद्धम् । एवं प्रसङ्गप्राप्तं क्षणभङ्गवादं निराकृत्य उपसंहरति– इत्युपपन्नमिति, स्फटिकदृष्टान्तेन बुद्धेर्गौणं नानात्वं न संभवति किं तु मुख्यमेवेति बुद्धेरनित्यत्वं सिद्धमिति बुद्धेर्नानात्वेन मनसाऽभेदो न संभवति तेन मनोधर्मत्वं न संभवतीत्यात्मधर्मत्वमपि सिद्धमित्यलम् ॥ १७ ॥

॥ इति क्षणभङ्गवादनिराकरणं बुद्धेरनित्यत्वप्रतिपादनं च समाप्तम् ॥

---

इदं तु चिन्त्यते— कस्येयं बुद्धिः आत्मेन्द्रियमनोऽर्थानां गुण इति, प्रसिद्धोपि खल्वयमर्थः 'परीक्षाशेषं प्रवर्तयामि' इति प्रक्रियते, सोयं बुद्धौ संनिकर्षोत्पत्तेः संशयः— विशेषस्याऽग्रहणादिति। तत्रायं विशेषः—

## नेन्द्रियार्थयोः— तद्विनाशेपि ज्ञानाऽवस्थानात् ॥ १८ ॥

नेन्द्रियाणामर्थानां वा गुणो ज्ञानम्— तेषां विनाशे (अपि) ज्ञानस्य भावात्, भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानम् 'अद्राक्षम्' इति. न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति, अन्यत् खलु वै तद् इन्द्रियार्थसंनिकर्षजं ज्ञानं यद् इन्द्रियार्थविनाशे न भवति, इदमन्यदात्ममनस्संनिकर्षजं तस्य युक्तो भाव इति= स्मृतिः खल्वियम् 'अद्राक्षम्' इति पूर्वदृष्टविषया न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तम्— न चान्यदृष्टमन्यः स्मरति, न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १८ ॥

अस्तु तर्हि मनोगुणो ज्ञानम्,

## युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ १९ ॥

---

बुद्धेरात्मगुणत्वविचारमुपक्रमते— इदमिति। चिन्त्यमाह— कस्येति, इयं बुद्धिरात्मेन्द्रियमनोऽर्थानां मध्ये कस्य गुण इति विचार्यते इत्यन्वयः, अर्थः= घटादिः। अयमर्थः= 'बुद्धिरात्मगुणः— ज्ञानविशिष्टस्यैवात्मत्वात्' इतिविषयः प्रसिद्धोपि परीक्षाशेषस्य= बुद्धेरिन्द्रियादिगुणत्वप्रतिषेधस्योपपादनार्थं प्रक्रियते= उपक्रम्यते। संशयकारणमाह— सोयमिति, आत्मेन्द्रियमनोऽर्थानां संनिकर्षे सति बुद्धिरुत्पद्यते तादृशसंनिकर्षवत्त्वं चात्मादीनां सर्वेषां समानमितिहेतोः विशेषस्य चात्मगुण एव बुद्धिरित्यादिरूपस्य किं वात्मादिगुणत्वे विशेषहेतोरग्रहणाद् बुद्धावुक्तसंशयो जायतं इत्यन्वयः। अग्रिमसूत्रमवतारयति— तत्रेति। सूत्रेण विशेषमाह— नेति, बुद्धिरिन्द्रियार्थयोर्न गुणः— तद्विनाशेपि= इन्द्रियार्थयोर्विनाशेपि ज्ञानस्य= बुद्धेरवस्थानात्, यदि बुद्धिरिन्द्रियाणामर्थानां वा गुणः स्यात्तदा तद्विनाशे नोपलभ्येत— गुणिनाशे गुणनाशस्यावश्यम्भावादिति सूत्रार्थः। व्याचष्टे— नेति। उक्त हेतुमाह— तेषामिति, तेषाम्= इन्द्रियार्थानाम् विनाशेपि ज्ञानस्य भावात्= सत्त्वात्= उपलभ्यमानत्वात्। उक्तमुदाहरति— भवतीति, अद्राक्षमितिस्मृत्यात्मकं ज्ञानं तयेन्द्रियार्थयोरभावेपि संभवतीति विज्ञेयम्। विपक्षे बाधकमाह— न चेति, ज्ञातरि= ज्ञानविशिष्टे, यदि ज्ञानगुणकत्वमिन्द्रियाणामर्थानां वा स्यात्तदा तेषां विनाशे तद्गुणभूतं ज्ञानं कथमुपलभ्येत ?। नन्विन्द्रियं विनाऽर्थं च विना प्रत्यक्षात्मकं ज्ञानं न भवत्येवेति ज्ञानस्येन्द्रियार्थगुणत्वं प्राप्तमित्याशङ्क्याह— अन्यदिति, ज्ञानम्= प्रत्यक्षात्मकं ज्ञानम्। इदम्= अद्राक्षमिति स्मृत्यात्मकं ज्ञानं तस्य= अद्राक्षमित्यस्य ज्ञानस्य भावः= सत्ता, अद्राक्षमिति पूर्वदृष्टविषया स्मृतिरेव न प्रत्यक्षम्। विपक्षे बाधकमाह— न चेति, विज्ञातरि= ज्ञानविशिष्टे, पूर्वोपलब्धेः= पूर्वदर्शनस्य, अद्राक्षमिति पूर्वदर्शनस्मरणमेव, यदि ज्ञानमिन्द्रियार्थयोर्गुणः स्यात्तदा तयोर्विनाशे अद्राक्षमिति ज्ञानं न स्यादित्यर्थः। उक्ते हेतुमाह— न चेति, इन्द्रियार्थयोर्ज्ञानगुणकत्वे तैरेव दृष्टं स्यादिति तेषां विनाशेऽन्येन 'अद्राक्षम्' इति स्मरणं नोपपद्येत भवति चेन्द्रियार्थयोर्विनाशेप्येतादृशं स्मरणमिति न ज्ञानमिन्द्रियार्थयोर्गुण इत्यर्थः। पूर्वपक्षिमतेन ज्ञानस्येन्द्रियार्थगुणत्वाभावमाह— न चेति, यदा हि त्वया मनसो ज्ञानगुणकत्वमङ्गीकृतं तदा इन्द्रियार्थयोर्ज्ञातृत्वम्= ज्ञानगुणकत्वं नोपपादयितुं शक्यमित्यन्वयः ॥ १८ ॥

अग्रिमसूत्रावतारार्थमाशङ्कते— अस्त्विति। ज्ञानस्य मनोगुणत्वं प्रत्याचष्टे— युगपदिति, इन्द्रियाणां स्वस्वग्राह्यैरिन्द्रियैश्च विभुत्वादात्मनो युगपत्संयोगसंभवेपि युगपत्सर्वज्ञेयोपलब्धिर्न भवतीति तदुपपत्त्यर्थं मनः कल्प्यते तस्य च मनसो य इन्द्रियैः संयोगस्तस्यापि प्रत्यक्षकारणत्वं कल्प्यते ततश्चाणुभूतस्य मनसः

युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गं तत्र युगपद्ज्ञेयानुपलब्ध्या यदनुमीयतेऽन्तकरणं न तस्य गुणो ज्ञानम् । कस्य तर्हि ?, ज्ञस्य- वशित्वात्= वशी ज्ञाता वश्यं करणम्, ज्ञानगुणत्वे वा करणभावनिवृत्तिः । घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयते- अन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति, तत्र यत् ज्ञानगुणं मनः स आत्मा. यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तदिति संज्ञाभेदमात्रं नार्थभेद इति ।

युगपज्ज्ञेयानुपलब्धेश्चाऽयोगिन इति चार्थः, योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज् ज्ञेयान्युपलभते तच्चैतद् विभौ ज्ञातर्यु-

सर्वैरिन्द्रियैर्युगपत्संयोगो न संभवतीति युगपत्सर्वज्ञेयानुपलब्धिरुपपद्यते तत्र युगपज्ज्ञेयानुपलब्धेः सिद्धस्य मनसोपि ज्ञानगुणकत्वं न संभवति- मनसो ज्ञानकरणत्वेनैव कल्पितत्वात् ज्ञानक्रियाकर्तृत्वेन= ज्ञातृत्वेन कल्पितत्वाभावाच्चेति न ज्ञानं मनोगुण इतिसूत्रार्थः, अत्र- "यत्करणत्वेनानुमितं तत् करणत्वमपोह्य न कर्तृ भवितुमर्हतीत्यर्थः" इति तात्पर्यटीका । किं वा यदि ज्ञानं मनोगुणः स्यात्तदा सर्वशरीरवृत्तिसुखादिप्रतिभासार्थं मनसो विभुत्वमवश्यं स्वीकार्यं स्यात् तथा च तादृशविभोर्मनसः सर्वैरपीन्द्रियैर्युगपत्संयोगसंभवात् शब्दस्पर्शादीनां ज्ञेयानां युगपदुपलब्धिः स्यात् न च भवतीति युगपज्ज्ञेयानुपलब्ध्या न ज्ञानं मनोगुणः, यदि च युगपज्ज्ञेयानुपलब्ध्युपपत्त्यर्थं सूक्ष्मं साधनान्तरं कल्प्यते तदा संज्ञाभेदमात्रं स्यात्= य एव मयात्मेत्युच्यते स एव त्वया मन इति नार्थभेद इति नात्मातिरिक्तस्य मनसो ज्ञानं गुणः किं त्वात्मगुण एवेतिसूत्रार्थः । व्याचष्टे- युगपदिति, तदेतद्बहुधा व्याख्यातम् । प्रकृतमाह- तत्रेति, अन्तःकरणम्= मनः, तस्य= मनसः, युगपज्ज्ञेयानुपलब्ध्या ज्ञानकरणत्वेनैव मनोऽनुमानेन कल्प्यते इति न मनोगुणो ज्ञानम्- ज्ञानस्य ज्ञातृगुणत्वात् मनसश्च ज्ञातृत्वाभावादित्यर्थः । ज्ञानगुणिनं जिज्ञासते- कस्येति, यदि ज्ञानं न मनोगुणस्तर्हि कस्य गुण इत्यन्वयः । उत्तरमाह- ज्ञस्येति, ज्ञानं ज्ञातुर्गुण इत्यर्थः । उक्ते हेतुमाह- वशित्वादिति, एतद्व्याचष्टे- वशीति, करणं कर्तुर्वश्यं भवति- कर्तुः स्वतन्त्रत्वादिति प्रसिद्धमेव तथा च यथा घटोत्पादनादिक्रिया कर्तुरेव न दण्डादिकरणस्य तथा ज्ञानक्रियापि ज्ञातुरात्मन एव न करणस्य मनस इति ज्ञानस्यात्मगुणत्वं सिद्धमित्यर्थः । विपक्षे बाधकमाह- ज्ञानगुणत्वे इति, यदि ज्ञानं मनोगुणः स्यात्तदा मनसो करणभावः= ज्ञानकरणत्वं न भविष्यति- तत्क्रियाविशिष्टस्य तत्क्रियाकरणत्वासंभवाद् न चैतद्युक्तमित्यर्थः । ननु निवर्ततां मनसो ज्ञानकरणत्वमित्याशङ्क्य मनसो ज्ञानकरणत्वमुपपादयति- घ्राणादीति, ज्ञातुरात्मनो यथा घ्राणादिलक्षणेन साधनेन= करणेनैव गन्धादिज्ञानभावात्= गन्धादिज्ञानं जायते तथा सुखादिज्ञानं स्मृतिरूपं च ज्ञानं मनोलक्षणेन करणेनैव जायते इत्यनुमीयते अन्यथा घ्राणादीनामप्यपेक्षा न स्यादिति मनसो ज्ञानकरणत्वमावश्यकमेव- क्रियामात्रस्य करणसापेक्षत्वादित्यर्थः । उपसंहरति- तत्रेति, यदि त्वया ज्ञानस्य मनोगुणत्वमुच्यते तदा यत् ज्ञानगुणकं तत्त्वया मन इति मया चात्मेत्युच्यते यत्तु सुखाद्युपलब्धिसाधनम्= सुखादिज्ञानकरणं तत्त्वयाऽन्तःकरणमिति मया च मन इत्युच्यते इति संज्ञाभेदमात्रं नार्थभेदः- ज्ञानगुणकस्य सुखाद्युपलब्धिसाधनस्य च त्वयापि मयापि च स्वीकृतत्वादेवेत्यर्थः ॥

सूत्रघटकचकारस्य बोध्यमाह- युगपदिति, चकारेण 'अयोगिनः' इतिग्राह्यम्- अयोगिन एव युगपज्ज्ञेयानुपलब्धेर्दर्शनात् योगिनश्च युगपदपि ज्ञेयोपलब्धेर्योगशास्त्रे प्रतिपादनात् तथा च योगसूत्रम्- "तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्" इति, अत्र- "अक्रममित्येकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः" इतियोगभाष्यम् । वस्तुतस्त्वत्र- 'युगपज्ज्ञेयोपलब्धेश्च योगिन इति चार्थः' इति वक्तव्यमासीत्- अग्रिमभाष्यानुकूल्यात् । उक्तस्याभिप्रायं विशदयति- योगीति, ऋद्धौ= अणिमादिसिद्धौ, विकरणधर्मा= इन्द्रियेषु स्वतन्त्रः किं वा इन्द्रियाणां विशिष्टसामर्थ्यवान्, तेषु तेषु= निर्मित-

पपद्यते नाणौ मनसीति । विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्वप्रतिषेधः— विभु च मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगात् युगपज् ज्ञानान्युत्पद्येरन्निति ॥ १९ ॥

## तदात्मगुणत्वेपि तुल्यम् ॥ २० ॥

विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति ॥ २० ॥

## इन्द्रियैर्मनसः संनिकर्षाभावात् तदनुत्पत्तिः ॥ २१ ॥

गन्धाद्युपलब्धेरिन्द्रियार्थसंनिकर्षवद् इन्द्रियमनस्संनिकर्षोपि कारणं तस्य चायौगपद्यम्— अणुत्वान्मनसः अयौगपद्यादनुत्पत्तिर्युगपज्ज्ञानानामात्मगुणत्वेपीति ॥ २१ ॥

यदि पुनरात्मेन्द्रियार्थसंनिकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते ?—

## न— उत्पत्तिकारणानपदेशात् ॥ २२ ॥

---

शरीरेषु । पर्यवसितमाह— तदिति, योगिनोऽनेकेषु निर्मितशरीरेषु युगपज्ज्ञेयोपलब्धिर्ज्ञातुर्विभुत्वे एवोपपद्यते यदि चाणुभूतं मन एव ज्ञानगुणकम्= ज्ञातृ स्यात्तदा तस्याणुत्वादेव सर्वशरीरेषु युगपत्संबन्धाभावाद् युगपज्ज्ञेयोपलब्धिर्न स्यादिति न ज्ञानं मनोगुण इत्यर्थः । अत्र— " विकरणधर्मेतिभाष्यं विशिष्टं करणं धर्मो यस्य सविकरणधर्मा= अस्मदादिकरणविलक्षणकरणो येन व्यवहितविप्रकृष्टसूक्ष्मादिवेदी भवतीत्यर्थः " इति तात्पर्यटीका । विभुत्वे इति— यदि च मनो विभु ज्ञानगुणकं च तदा तदेवात्मेति सिद्धमिति ज्ञानस्यात्मगुणत्वं सिद्धमेवेति नात्मगुणत्वप्रतिषेधः संभवतीत्यर्थः । ननु नैवमुच्यते किं तु आत्मातिरिक्तस्यान्तःकरणभूतस्य मनसो ज्ञानगुणकत्वं विभुत्वं चोच्यते तथा च न योगिनो युगपज्ज्ञेयोपलब्ध्यनुपपत्तिर्न वा ज्ञानस्यात्मगुणत्वप्रतिषेधानुपपत्तिश्चेत्याशङ्कयाह— विभु चेति, एवं हि तस्य= विभुभूतस्य मनसः सर्वैरिन्द्रियैर्युगपत्संयोगसंभवाद्योगिनोपि युगपत्सर्वज्ञेयोपलब्धिः स्यात् न चैवमस्तीति न मनसो विभुत्वं संभवति तथा च ज्ञानस्यात्मगुणत्वमेव युक्तमुक्तरीत्येत्यर्थः ॥ १९ ॥

ज्ञानस्यात्मगुणत्वेप्युक्तदोषमतिदिशति— तदेति, ज्ञानस्यात्मगुणत्वेपि तत्= युगपज्ज्ञेयोपलब्धिलक्षणं दूषणं तुल्यमेव— आत्मनो विभुत्वेन सर्वैरपीन्द्रियैर्युगपत्संयोगसंभवात् तेन च युगपज्ज्ञेयोपलब्धिप्रसङ्गः— ज्ञानस्यात्मगुणत्वादिति सूत्रार्थः । व्याचष्टे— विभुरिति, संयुक्तः= युगपत्संयुक्तः । अन्यत्स्पष्टमुपपादितं च ॥ २० ॥

ज्ञानस्यात्मगुणत्वे उक्तदोषं निराकरोति— इन्द्रियैरिति, यद्यात्मन एव सर्वेन्द्रियैः संयोगेन ज्ञानमुत्पद्येत तदा ज्ञानस्यात्मगुणत्वे युगपत्सर्वज्ञेयोपलब्धिः प्रसङ्गः स्यादपि न चैवमस्ति किं त्विन्द्रियैर्मनस्संनिकर्षस्यापि ज्ञानोत्पत्तिकारणत्वमस्ति तत्रेन्द्रियैः सर्वैर्मनसोऽणुत्वेन युगपत्संनिकर्षासंभवात् तदनुत्पत्तिः= युगपत्सर्वज्ञेयोपलब्धेरुत्पत्त्यापत्तिर्नास्तीति सूत्रार्थः । व्याचष्टे— गन्धादीति । पर्यवसितमाह— तस्येति, तस्य= इन्द्रियैर्मनस्संनिकर्षस्य, अयौगपद्ये हेतुमाह— अणुत्वादिति, अणुपदार्थस्यानेकैः संयोगो युगपन्न संभवतीति स्पष्टमेव । उपसंहरति— अयौगपद्यादिति, ज्ञानस्यात्मगुणत्वेपि इन्द्रियमनस्संनिकर्षस्य ज्ञानोत्पत्तिकारणस्याऽयौगपद्यादेव युगपदनेकज्ञानानामुत्पत्तेरापत्तिर्नास्तीति ज्ञानस्यात्मगुणत्वे दोषाभावाद् ज्ञानमात्मगुण एवेति सिद्धमित्यर्थः ॥ २१ ॥

ननु यदि ज्ञानमात्मगुणस्तदा मनस्संयोगस्य ज्ञानकारणत्वं न स्वीकार्यम्— मनसो विषयत्वाभावात् विषयग्राहकेन्द्रियत्वाभावात् ज्ञानाश्रयत्वाभावाच. किं तु आत्मेन्द्रियार्थानां संयोगमात्रादेव ज्ञानोत्पत्तिः स्वीकार्या तत्रात्मनो ज्ञानाश्रयत्वात् अर्थस्य विषयत्वादिन्द्रियाणां चार्थग्राहकत्वादित्येषामेव त्रयाणां संयोगस्य ज्ञानकारणत्वयुक्तत्वात् तत्र च युगपत्सर्वज्ञेयोपलब्धिप्रसङ्गः— आत्मनो विभुत्वेन सर्वैरपीन्द्रियैर्युगपत् संयोगसंभवात् इन्द्रियाणामपि स्वस्वविषयैर्युगपत्संयोगसंभवाच. न च युगपत्सर्वज्ञेयोपलब्धिरस्तीति न ज्ञानमात्मगुणः किं तु मनोगुणः तत्र च न युगपत्सर्वज्ञेयोपलब्धिप्रसङ्गः— मनसोऽणुत्वादित्या-

आत्मेन्द्रियसंनिकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते इति नात्रोत्पत्तिकारणमपदिश्यते येनैतत् प्रतिपद्येमहीति ॥ २२ ॥

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २३ ॥

" तदात्मगुणत्वेपि तुल्यम् २० " इत्येतदनेन समुचीयते, द्विविधो हि गुणनाशहेतुः- गुणानामाश्रयाभावो विरोधी च गुणः, नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च बुद्धेर्गुणो न गृह्यते. तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ॥ २३ ॥

## अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २४ ॥

अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत्. गृह्यते च बुद्धिसंतानस्तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते यथा शब्दसंताने शब्दः शब्दान्तरविरोधीति ॥२४॥

---

शङ्कते- यदीति, इत्युच्यते इतिशेषः । उक्तं परिहरति- नेति, मनस्संनिकर्षरहिताद् आत्मेन्द्रियार्थसंनिकर्षमात्राद् गन्धादिज्ञानं नोत्पद्यते- आत्मेन्द्रियार्थसंनिकर्षमात्रस्य उत्पत्तिकारणानपदेशात्= ज्ञानोत्पत्तिकारणत्वस्यानिर्देशात् नात्मेन्द्रियार्थसंनिकर्षमात्रस्य ज्ञानोत्पत्तिकारणत्वं संभवति येन ज्ञानस्यात्मगुणत्वे युगपदनेकज्ञेयोपलब्धिप्रसङ्गः स्यात् किं त्विन्द्रियमनस्संनिकर्षस्यापि ज्ञानकारणत्वमस्तीत्युक्तरीत्या न युगपदनेकज्ञेयोपलब्धिप्रसङ्ग इतिसूत्रार्थः । विश्वनाथभट्टैस्तु सूत्रमिदमाक्षेपपरत्वेन व्याख्यातं तत्तु न युक्तं प्रतिभाति- एतदाक्षेपपरिहारस्यादर्शनादग्रे ।व्याचष्टे- आत्मेति, अत्र शास्त्रे आत्मेन्द्रियार्थसंनिकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते इति ज्ञानोत्पत्तिकारणं नापदिश्यते= नोपदिश्यते येन एतत्= आत्मेन्द्रियार्थसंनिकर्षमात्रस्य गन्धादिज्ञानोत्पत्तिकारणत्वं प्रतिपद्येमहि= स्वीक्रियेत तेन च मत्पक्षे युगपदनेकज्ञेयोपलब्धिप्रसङ्गः स्यादित्यन्वयः, तथा चोक्तरीत्येन्द्रियमनस्संनिकर्षस्यापि ज्ञानकारणत्वाद् ज्ञानस्यात्मगुणत्वेपि युगपदनेकज्ञेयोपलब्धिप्रसङ्गो नास्ति- मनसोऽणुत्वेन युगपदनेकैरिन्द्रियैः संनिकर्षासंभवादित्यर्थः ॥२२॥

ज्ञानस्यात्मगुणत्वे पुनर्दोषमाह- विनाशेति, यदि ज्ञानमात्मगुणस्तदात्मनो नित्यत्वेन तद्गुणभूतस्य ज्ञानस्य विनाशकारणानुपलब्धेः= विनाशकारणासंभवादवस्थाने प्राप्ते तत्= तस्य= ज्ञानस्य नित्यत्वं प्रसज्येत- नित्यपदार्थगुणानां नित्यत्वसंभवात्. नित्यत्वं च ज्ञानस्य त्वया न स्वीक्रियते इत्ययं ज्ञानस्यात्मगुणत्वे दोष इतिसूत्रार्थः । व्याचष्टे- तदात्मेति, सूत्रघटकचकारेण " तदात्मगुणत्वेपि तुल्यम् २० " इतिसूत्रेण ज्ञानस्यात्मगुणत्वे युगपदनेकज्ञेयोपलब्धिप्रसङ्गलक्षणो यो दोषः प्रदर्शितः स समुचीयते तथा च ज्ञानस्यात्मगुणत्वे दोषद्वयं प्राप्तमित्यर्थः । वस्तुतस्त्वेतद्दोषसमुच्चयो न युक्तः- तस्य दोषस्य पूर्वत्र प्रत्याख्यातत्वादितिविभाव्यम् । गुणनाशकस्य द्वैविध्यमाह- द्विविध इति, गुणानामाश्रयनाशेनापि नाशो भवति यथा घटनाशेन घटगुणभूतगुरुत्वादीनां. विरुद्धगुणोत्पत्त्यापि नाशो भवति यथा रक्तरूपोत्पत्त्या नीलरूपस्य । प्रकृतमाह- नित्यत्वादिति, आत्मगुणस्य ज्ञानस्याश्रयनाशान्नाशो न संभवति- आत्मनो ज्ञानाश्रयस्य नित्यत्वेन नाशासंभवात् । द्वितीयाभावमाह- विरोधीति, यद्यात्मगुणस्य ज्ञानस्य कोप्यात्मगुणो विरोधी भवेत्तदा तदुत्पत्त्या ज्ञानविनाशः स्यादपि न चैवमस्ति- सर्वेषामप्यात्मगुणानां ज्ञानविषयत्वसंभवेन ज्ञानविरुद्धत्वासंभवादित्यर्थः । उपसंहरति- तस्मादिति । तथा च ज्ञानस्यानित्यत्वोपपत्त्यर्थमनित्यपदार्थगुणत्वं स्वीकार्यं नात्मगुणत्वमित्यर्थः ॥ २३ ॥

उक्तदोषं निराकरोति- अनित्येति, बुद्धेः= ज्ञानस्यानित्यत्वं स्पष्टमेवेति शब्दवत्= यथोत्तरशब्देन पूर्वशब्दस्य विनाशो भवति तथोत्तरज्ञानेन पूर्वज्ञानस्य विनाशः संभवतीति ज्ञानस्यात्मगुणत्वेपि नित्यत्वापत्तिर्नास्तीति सूत्रार्थः । व्याचष्टे- अनित्येति, अनेन ज्ञानस्यानित्यत्वं प्रत्यक्षसिद्धमित्युक्तम्, प्रत्यात्मम्= स्वस्वात्मसाक्षितया. वेदनीयम्= विदितमेव इत्येतत् इत्यन्वयः । ज्ञानानामनेकत्वमाह-

असंख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेषु आत्ममनसोश्च संनिकर्षे समाने स्मृतिहेतौ सति न कारणस्याऽयौगपद्यमस्तीति युगपत्स्मृतयः प्रादुर्भवेयुर्यदि बुद्धिरात्मगुणः स्यादिति, तत्र कश्चित् संनिकर्षस्याऽयौगपद्यमुपपादयिष्यन्नाह—

**ज्ञानसमवेतात्मप्रदेशसंनिकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥२५॥**

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते ज्ञानसंस्कृतैरात्मप्रदेशैः पर्यायेण मनः संनिकृष्यते. आत्ममनस्संनिकर्षात् स्मृतयोपि पर्यायेण भवन्तीति ॥ २५ ॥

**न– अन्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥**

---

गृह्यते इति, बुद्धिसंतानः= उत्तरोत्तरं ज्ञानपरम्परा, तत्र= ज्ञानपरम्परायाम्. बुद्धेः= पूर्वपूर्वज्ञानानाम् बुद्ध्यन्तरम्= उत्तरोत्तरं ज्ञानं विरोधी गुण इत्यनुमीयते अन्यथा पूर्वपूर्वज्ञानस्य नाशो न स्यात् न चैवमस्ति तथा च विरोधिना उत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानस्य विनाशो भवतीति ज्ञानस्यात्मगुणत्वेपि नित्यत्वापत्तिर्नास्तीत्यर्थः । अत्र दृष्टान्तमाह– यथेति, यथोत्तरशब्दः पूर्वशब्दविरोधी तथेत्यन्वयः । "तदात्मगुणत्वेपि" इति पूर्वसूत्रे समुचितदोषस्य तु पूर्वत्रैकविंशतिसूत्रेण प्रत्याख्यानमुक्तमेव ॥ २४ ॥

ज्ञानस्यात्मगुणत्वे स्मृतीनां यौगपद्यदोषापत्तिमाह– असंख्येयेष्विति, ज्ञानस्यात्मगुणत्वे गन्धादिज्ञानं प्रति इन्द्रियमनस्संनिकर्षस्य कारणत्वस्वीकारेणैकविंशतिसूत्रोक्तरीत्या गन्धादिज्ञानानां यौगपद्ये पराकृतेपि स्मृतीनां यौगपद्यमापद्येतैव यत आत्ममनस्संनिकर्षः संस्कारश्चेति द्वयमेव स्मृतिकारणं तत्र ज्ञानकारिताः= ज्ञानजन्याः स्मृतिहेतुभूताः संस्कारा असंख्येया आत्मसमवेताः सन्त्येव आत्मनो विभुत्वेनात्ममनस्संनिकर्षोप्यस्त्येव तदेतत् कारणद्वयं सर्वासां स्मृतीनां समानमेवास्तीति कारणस्य= स्मृतिकारणस्योक्तस्याऽयौगपद्यं नास्ति किं तु यौगपद्यमेव प्राप्तमिति तत्कार्यभूतानां स्मृतीनामपि यौगपद्यं प्राप्तं न च स्मृतीनां यौगपद्यमनुभूयते इति न ज्ञानस्यात्मगुणत्वं स्वीकार्यमित्यर्थः । आत्ममनसोः संनिकर्षे स्मृतिहेतौ समाने सतीत्यन्वयः, समानत्वम्= सर्वस्मृतिसाधारणत्वम् । अत्राग्रिमसूत्रमवतारयति– तत्रेति, संनिकर्षस्य= आत्ममनस्संनिकर्षस्य, अयौगपद्यमुपपादयिष्यन्= अयौगपद्योपपादनार्थमेतत्सूत्रमाहेत्यन्वयः । ज्ञानेति– ज्ञानम्= संस्कारः समवेतो यस्मिन् स ज्ञानसमवेतः= संस्कारसमवायी य आत्मप्रदेशस्तेन मनसः संनिकर्षात्स्मृतिरुत्पद्यते इति न स्मृतीनां युगपदुत्पत्त्यापत्तिरित्यन्वयः, यद्यप्यात्ममनस्संनिकर्षः संस्कारश्च सर्वस्मृतिहेतुभूतः सर्वदास्ति तथापि संस्काराणामात्मनो भिन्नभिन्नप्रदेशेषु समवायोस्ति न त्वेकस्मिन्नेव प्रदेशे. मनसश्चाणुत्वात् तादृशैरात्मनोऽनेकैः प्रदेशैर्युगपत्संनिकर्षो न संभवतीति न युगपत् सर्वस्मृतीनामुत्पत्त्यापत्तिः किं तु तादृशसंनिकर्षस्य क्रमेण जायमानत्वात् स्मृतीनामपि क्रमेण जायमानत्वेनाऽयौगपद्यं सिद्धमिति सूत्रार्थः । व्याचष्टे– ज्ञानेति, ज्ञानं साधनं यस्य स ज्ञानसाधनः= ज्ञानजन्यः संस्कारः सूत्रघटकज्ञानशब्देन ग्राह्य इत्यर्थः, ज्ञानसंस्कृतैः= ज्ञानजन्यसंस्कारविशिष्टैरात्मप्रदेशैः पर्यायेण= क्रमेणैव मनस्संनिकर्षो जायते– मनसोऽणुत्वाद् युगपदनेकत्र संयोगासंभवात्, क्रमेण जायमानाचात्ममनस्संनिकर्षात् तत्कार्यभूताः स्मृतयोपि क्रमेण भवन्तीति ज्ञानस्यात्मगुणत्वेपि सर्वस्मृतीनां यौगपद्यापत्तिर्नास्तीत्यर्थः । संस्काराणां च परस्परं भेदादात्मप्रदेशभेदेनैव वृत्तित्वं विज्ञेयं सर्वेषां सर्वदा च सत्त्वात् कालभेदेनाप्येकप्रदेशवृत्तित्वं नोपपद्यते यथान्तःकरणावच्छिन्नात्मप्रदेशे एकदा नाऽनेकज्ञानादीनां सत्त्वं संभवति तथात्र सदातनानां संस्काराणां प्रदेशभेदेन समवायो विज्ञेय इत्याशयः ॥ २५ ॥

उक्तं परिहरति– नेति, शरीराद् बहिरात्मनः संस्कारविशिष्टैः प्रदेशैर्मनसः संयोगो नोपपद्यते– मनसः शरीराभ्यन्तरे एव वर्तमानत्वात्. शरीरान्तर्गतैरात्मप्रदेशैश्च मनस्संनिकर्षस्य सत्त्वादेव शरीरान्तर्गतात्मप्रदेशानामेव विविधसंस्कारयुक्तत्वात् ज्ञानस्यात्मगुणत्वे उक्तरीत्या स्मृतीनां युगपदुत्पत्तिः स्यादे-

सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते तत्रास्य प्राक् प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद् बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यते इति ॥ २६ ॥

## साध्यत्वादहेतुः ॥ २७ ॥

विपच्यमानकर्माशयमात्रं जीवनम् एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति॥२७॥

## स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥

सुस्मूर्षया खल्वयं मनः प्रणिदधानः चिरादपि कं चिदर्थं स्मरति स्मरतश्च शरीरधारणं

---

वेति सूत्रार्थः । व्याचष्टे- सदेहस्येति, विच्यमानकर्मवासनासहितः सदेहस्यात्मनो मनस्संनिकर्ष एव जीवनमुच्यते तत्र= एवं प्राप्ते अस्य= जीवस्य किं वा मनसः प्रायणात्= मृत्योः पूर्वं शरीराभ्यन्तरे वर्तमानस्य शरीराद् बहिर्ज्ञानसंस्कृतैः= ज्ञानजन्यसंस्कारविशिष्टैरात्मप्रदेशैः संयोगो नोपपद्यते इति न पूर्वसूत्रोक्तरीत्या स्मृतीनां यौगपद्यनिवृत्तिरुपपद्यते, शरीरावच्छिन्नात्मना च शरीराभ्यन्तरे मनस्संनिकर्षोऽस्त्येवेति स्मृतीनां युगपदुत्पत्तिः स्यादेवेत्यर्थः । अत्र- "मनसः शरीरासमवेतत्वेपि संयोगमात्रस्यातिप्रसक्तत्वेपि चेन्द्रियार्थसंनिकर्षस्य मनःकार्यस्य शरीराद् बहिः सत्त्वेन शरीरान्तरेव कार्यकारित्वनियमाभावेपि च येनात्मना यच्छरीरं कर्मोपार्जितं तत्संयुक्तस्य मनसो वैशेषिकज्ञानादिलक्षणकार्यकारित्वं न तदसंयुक्तस्येति शरीराश्रितत्वं मनसो नान्यदित्यर्थः" इति श्रीगुरुचरणाः ॥ २६ ॥

उक्तं परिहरति- साध्यत्वादिति, सिद्ध एव हेतुर्भवति न तु साध्योपि मनसश्चान्तःशरीरवृत्तित्वं साध्यमेव न सिद्धमिति साध्यत्वादेवाहेतुः= शरीराद् बहिरात्मप्रदेशैर्मनस्संनिकर्षस्याऽभावसाधको न संभवति तदनेन "ज्ञानसमवेतात्म २५" इतिसूत्रोक्तं स्मृतीनामयौगपद्यं समाहितं भवतीति सूत्रार्थः । व्याचष्टे- विपच्यमानेति, यदि विपच्यमानकर्माशयसहितः सदेहस्यात्मनो मनसा संयोगो जीवनं स्यात्तदा आत्मनः शरीराभ्यन्तरे एव सदेहत्वसंभवादन्यथा बहिरपि घटाद्यवच्छेदेन सदेहत्वं स्यात् मनसश्चाणुत्वात् शरीरान्तर्वृत्तित्वे एव सदेहेनात्मना संयोग उपपद्यते इत्युक्तरीत्या समाधानमुपपद्येतापि न चैवमस्ति किं तु विपच्यमानकर्मणां वासनैव जीवनं न तु तादृशवासनासहितः सदेहस्यात्मनो मनसा संयोगो जीवनं येनैतादृशजीवनेन मनसः शरीरान्तर्वृत्तित्वं सिध्येत. तथा च मनसः शरीराद् बहिर्वृत्तित्वमपि संभवतीति मनसः शरीरान्तर्वृत्तित्वं साध्यमेव साध्यत्वादेव च शरीराद् बहिरात्मप्रदेशैर्मनस्संनिकर्षाभावस्य साधकं न संभवतीति ज्ञानस्यात्मगुणत्वेपि स्मृतीनामुक्तयौगपद्यस्य निवृत्तिरुपपद्यते- अणुभूतस्य मनसः संस्कारविशिष्टैरात्मप्रदेशैः स्मृतिकारणीभूतसंयोगस्य क्रमेणैव संभवादित्यर्थः ॥२७॥

मनसः शरीरान्तर्वृत्तित्वमुपपादयन् उक्तं परिहरति- स्मरत इति, शरीरधारणकाले किंचिदपि स्मरणं भवत्येवेति स्मरतः= स्मृतिविशिष्टस्यैव शरीरधारणमुपपद्यते= दृश्यते तथा च स्मरणं शरीरधारणं चैककालिकमिति सिद्धं. शरीरधारकप्रयत्नश्चात्ममनस्संनिकर्षजन्य एव स्वीकार्यः- आत्मसंयोगमात्रस्य शरीरधारणप्रयोजकत्वे आत्मनो विभुत्वेन नित्यत्वेन च सर्वदैव शरीरसंयोगसंभवात् कदाचिदपि शरीरपतनं न स्यात्, आत्ममनस्संनिकर्षोपि शरीराभ्यन्तरे वर्तमान एव शरीरधारकप्रयत्नजनकः संभवति न तु शरीराद्बहिर्वृत्तिरपि शरीराद् बहिर्वृत्तेरात्ममनस्संनिकर्षस्य मृत्योरनन्तरमपि संभवेन मृत्युनापि शरीरपतनं न स्यात्. तथा च मरणपर्यन्तं शरीराभ्यन्तरे अपेक्ष्यमाण आत्ममनस्संनिकर्षो मनसः शरीराभ्यन्तर्वृत्तित्वं विना न संभवतीति मनसः शरीराभ्यन्तर्वृत्तित्वं सिद्धं तथा च शरीराद् बहिरात्मप्रदेशैर्मनस्संनिकर्षो नोपपद्यते इति मनसः शरीरान्तर्वृत्तित्वस्य प्रतिषेधो न संभवति शरीरान्तश्चात्ममनस्संनिकर्षस्य सर्वस्मृतिकारणस्य सत्त्वादेव युगपत्सर्वस्मृत्युत्पत्तिप्रसङ्ग इतिसूत्रार्थः । व्याचष्टे- सुस्मूर्षयेति, सुस्मूर्षया=

दृश्यते, आत्ममनस्संनिकर्षजश्च प्रयत्नो द्विविधः– धारकः प्रेरकश्च, निस्सृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याऽभावाद् गुरुत्वात्पतनं स्यात् शरीरस्यात्मवत इति ॥ २८ ॥

## न तत्– आशुगतित्वान्मनसः ॥ २९ ॥

आशुगति मनस्तस्य बहिः शरीरादात्मप्रदेशेन ज्ञानसंस्कृतेन संनिकर्षः प्रत्यागतस्य च प्रयत्नोत्पादनम् उभयं युज्यते इति. उत्पाद्य वा धारकं प्रयत्नं शरीरान्निस्सरणं मनसोऽतस्तत्रोपपन्नं धारणमिति ॥ २९ ॥

## न– स्मरणकालानियमात् ॥ ३० ॥

किंचित् क्षिप्रं स्मर्यते किंचिच्चिरेण. यदा चिरेण तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति कस्य चिदर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं स्मृतिहेतुर्भवति तत्रैतत् चिरनिश्चरिते मनसि नोपपद्यते इति। शरीरसंयोगानपेक्षश्चाऽऽत्ममनस्संयोगो न स्मृतिहेतुः–

---

स्मरणेच्छया, अयम्= आत्मा, मन इतिकर्मपदम्, प्रणिदधानः= स्मरणव्यापारे नियुञ्जानः, चिरेण सिध्यत्स्मरणार्थं चिरपर्यन्तं मनसः शरीराभ्यन्तरे आत्मसंयोगः स्वीकार्य इत्यर्थः। स्मरतः शरीरधारणमित्यनेन स्मरणशरीरधारणयोरेककालिकत्वं सिद्धमित्याशयः। स्वाभिप्रायमुद्घाटयति– आत्मेति, धारकः= शरीरधारकः, प्रेरकः= मनःप्रेरकः। पर्यवसितमाह– निस्सृते इति, यदि मनसः शरीराद् बहिर्गमनं स्यात्तदा शरीराद् बहिर्निर्गते मनसि शरीरधारकप्रयत्नस्यासंभवाद् आत्मवतः= जीवत एव शरीरस्य गुरुत्वात्पतनं स्यात् न चैवमस्तीति शरीरधारणार्थं मनसः शरीरान्तर्वृत्तित्वं सिद्धं तथा चोक्तरीत्या युगपत्सर्वस्मृतीनामुत्पत्त्यापत्तिस्तदवस्थैवेत्यर्थः, शरीराभ्यन्तरे एवात्ममनस्संनिकर्षेण स्मरणं जायते न तु शरीराद्बहिरपि– स्मरणशरीरधारणयोरेककालिकत्वादित्याशयः ॥ २८ ॥

उक्तं परिहरति– नेति, तत्= एतदप्युक्तं नोपपद्यते– मनसः आशुगतित्वात्= शीघ्रगतित्वात्= शरीराभ्यन्तरे शरीराद्बहिश्च शीघ्रं शीघ्रमात्मना मनस्संनिकर्षः संभवति तेनोक्तरीत्या स्मृतीनामयौगपद्यं शरीरधारणं चेत्युभयमप्युपपद्यते इति सूत्रार्थः, तत्शब्दस्तु संदिग्धार्थ एव। व्याचष्टे– आश्विति, तस्य= मनसः, ज्ञानसंस्कृतेन= ज्ञानजन्यसंस्कारविशिष्टेन, प्रत्यागतस्य= शीघ्रमेव शरीराभ्यन्तरे पुनरागतस्य, प्रयत्नोत्पादनम्= शरीरधारकप्रयत्नोत्पादनम्, उभयम्= इत्युभयमपि, युज्यते= उपपद्यते। पक्षान्तरमाह– उत्पाद्येति, धारकम्= शरीरधारकम्। अतः= शरीरधारकप्रयत्नस्योत्पादितत्वादेव, तत्र= शरीराद्बहिर्गमनकाले, धारणम्= शरीरधारणम्, स्पष्टमन्यत्, तथा चैवं मनसः शरीराद्बहिरपि गमनं संभवतीति न मनसः शरीरान्तर्वृत्तित्वनियमः संभवतीति न त्वदुक्तं युक्तं किं तु मदुक्तमेवेति संस्कारविशिष्टैरात्मप्रदेशैर्मनसः क्रमेण संयोगसंभवात् स्मृतीनामपि क्रमेण संभवाद् यौगपद्यापत्तिर्नास्तीत्यर्थः। अन्यत् पूर्वमुक्तमेव ॥ २९ ॥

उक्तं निराकरोति– नेति, मनस आशुगतित्वेपि पूर्वसूत्रोक्तरीत्या शरीरधारण नोपपद्यते– स्मरणकालस्यानियमात्= शीघ्रमेव सर्वं स्मर्यते इति नियमो नास्ति किं तु किंचित् चिरेणापि स्मर्यते तत्र चिरेण स्मरणसिद्ध्यर्थं चिरपर्यन्तं शरीराद्बहिरात्मप्रदेशविशेषेण मनस्संनिकर्षाय चिरपर्यन्तं शरीराद्बहिर्मनसः स्थितौ शरीरधारकप्रयत्नस्यासंभवात् जीवत एव शरीरस्य पतनं स्यादिति न मनसः शरीराद्बहिर्गमनं स्वीकर्तुं शक्यते तथा चोक्तरीत्या युगपदनेकस्मृतिप्रसङ्ग इतिसूत्रार्थः। व्याचष्टे– किंचिदिति। प्रकृतमाह– यदेति, यदा चिरेण स्मर्यते तदा सुस्मूर्षया= स्मरणेच्छया मनसि= मनसा चिन्ताप्रबन्धे= निरन्तरचिन्तने धार्यमाणे= क्रियमाणे सति लिङ्गभूतस्य= स्मर्तव्यज्ञापकस्य कस्य चिदर्थस्य चिन्तनमाराधितम्= संपादितं.स्मर्तव्यस्मृतेर्हेतुर्भवति तथा चैवं चिरेण स्मरणकाले चिरपर्यन्तं शरीराद्बहिरात्म-

शरीरस्योपभोगायतनत्वात्= उपभोगायतनं पुरुषस्य ज्ञातुः शरीरं न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्पते, क्लृप्तौ वा शरीरवैयर्थ्यमिति ॥ ३० ॥

## आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३१ ॥

आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्याद् यदृच्छया वा= आकस्मिकतया ज्ञतया वा मनसः, सर्वथा चानुपपत्तिः । कथम् ?. स्मर्तव्यत्वाद्. इच्छातः स्मरणज्ञानासंभवाच= यदि तावदात्मा- 'अमुष्यार्थस्य स्मृतिहेतुः संस्कारोऽमुष्मिन्नात्मप्रदेशे समवेतस्तेन मनः संयुज्यताम्' इति मनः प्रेरयति तदा स्मृत एवाऽसावऽर्थो भवति न स्मर्तव्यः, न चात्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा तत्राऽनुपपन्नाऽऽत्मप्रत्यक्षेण संवित्तिरिति । सुस्मूर्षया

---

प्रदेशेन मनस्संनिकर्षार्थं चिरपर्यन्तमेव मनसः शरीराद्बहिः स्थितिः स्वीकार्या तत्र चिरनिश्चरिते= चिरपर्यन्तं शरीराद्बहिर्गते मनसि एतत्= पूर्वसूत्रोक्तम्= शीघ्रं प्रत्यागत्य शरीरधारकप्रयत्नोत्पादनं नोपपद्यते इति शरीरपतनमेव स्यादित्यन्वयः । पूर्वपक्षिमते बाधकान्तरमाह- शरीरेति, शरीराद्बहिर्य आत्ममनस्संनिकर्षः स एव शरीरसंयोगानपेक्षस्तेन शरीराद्बहिरेवात्मनः स्मरणं संभवति न चैतद् युक्तं शरीरस्य भोगायतनत्वात् स्मृतेरपि भोग्यत्वात् शरीराभ्यन्तरे एव स्मृतिस्वीकारसंभवादित्यर्थः । उक्ते हेतुमाह- शरीरस्येति । उक्तं व्याचष्टे- उपभोगेति, ततः= शरीरात्, निश्चरितस्य= बहिर्गतस्य, शरीराद्बहिर्य आत्मसंयोगः तत् आत्मसंयोगमात्रम्- शरीरेण मनसः संयोगाभावात् । विपक्षे बाधकमाह- क्लृप्ताविति, यदि शरीरसंयोगरहितोप्यात्ममनस्संयोगः स्मृत्यादिभोगहेतुः स्यात्तदा शरीरवैयर्थ्यं स्यादिति स्पष्टमेव न चैतद् युक्तमिति न मनसः शरीराद्बहिर्गमनं पूर्वोक्तं युक्तमित्यर्थः, तथा च स्मृतीनामयौगपद्यप्रयोजकस्य मनसो बहिर्गमनस्यासंभवात् स्मृतीनां यौगपद्यापत्तिस्तदवस्थैव न च स्मृतीनां यौगपद्यमुपलभ्यते इति तदुपपत्त्यर्थं ज्ञानस्य मनोगुणत्वं स्वीकार्यं नात्मगुणत्वमितिशेषः ॥ ३० ॥

शरीराद्बहिरात्मप्रदेशेन मनस्संनिकर्षेऽनुपपत्तिमाह- आत्मेति, संयोगविशेषः= शरीराद्बहिरात्मप्रदेशेन मनस्संयोगो नात्मप्रेरणया संभवति- तादृशसंयोगार्थमात्मना मनःप्रेरणं हि 'अस्यार्थस्य स्मृतिहेतुभूतः संस्कारोऽमुष्मिन् मदीयप्रदेशे समवेतस्तेन मदीयप्रदेशेन मनस्संयोगो भवतु' इति संकल्पेनैव संभवति एतादृशसंकल्पश्च तादृशस्मर्तव्यस्य स्मरणं विना न संभवति यदा हि संकल्पकाले एव स्मर्तव्यस्मरणं जातं तदा तत्स्मरणार्थं प्रेरणं मनसो नोपपद्यते- व्यर्थत्वादिति न शरीराद्बहिरात्मप्रदेशेन मनस्संयोग आत्मप्रेरणया संभवति, नापि यदृच्छया= आकस्मिकतया संभवति- कार्यमात्रस्य सकारणकत्वनियमेन निष्कारणकत्वलक्षणयादृच्छिकत्वासंभवात्, नापि मनसो ज्ञतया संभवति, ज्ञत्वं हि ज्ञानविशिष्टत्वं तच्च मनसः पूर्वमेव प्रतिषिद्धमिति शरीराद्बहिरात्मप्रदेशेन मनस्संनिकर्षो नोपपद्यते येनस्मृतीनामयौगपद्यं समाहितं स्यादिति सूत्रार्थः । व्याचष्टे- आत्मेति, एतेन संयोगविशेषस्य कारणं त्रिधा विकल्पितम्, संयोगविशेषमाह- मनस इति, यदृच्छापदार्थमाह- आकस्मिकेति, कल्पत्रयेपि सामान्यतोऽनुपपत्तिमाह- सर्वथेति, संयोगविशेषस्येतिशेषः । अनुपपत्तिहेतुं जिज्ञासते- कथमिति । हेतुमाह- स्मर्तव्यत्वादिति, यद्यात्मप्रेरणेन संयोगविशेषः स्यात्तदा तादृशप्रेरणविषया आत्मेच्छा स्वीकार्या तत्र स्मरणार्थप्रेरणार्थविषया चेच्छा स्मर्तव्यविषया स्यादेवेति स्मरणस्य जातत्वेन विषयस्य स्मर्तव्यत्वं न स्यादस्ति च स्मर्तव्यत्वमिति न संयोगविशेषार्थं मनसः प्रेरणं संभवतीत्यर्थः, हेत्वन्तरमाह- इच्छात इति, एवं हीच्छायाः स्मृतिहेतुत्वं स्यात् न चैवमस्तीति न प्रेरणं संभवतीत्यर्थः । उक्तं व्याचष्टे- यदीति, प्रेरणकारणीभूतामिच्छामाह- अमुष्येति, अमुष्य= अस्य, आत्मप्रदेशे= मदीयप्रदेशे, तेन= तादृशप्रदेशेन, इति= इतीच्छया= इतिसंकल्प्य । पर्यवसितमाह- तदेति, स्मर्तव्यस्मरणं विनोक्तेच्छाया असंभवात् स्मर्तव्यः स्मृत एवेति तत्स्मरणार्थं प्रेरणानुपपत्तिरित्यर्थः । अत्र पक्षे बाधकान्तरमाह- न चेति, आत्म-

चायं मनः प्रणिदधानश्चिरादपि कंचिदर्थं स्मरति नाऽकस्मात्। ज्ञत्वं च मनसो नास्ति-ज्ञानप्रतिषेधादिति ॥ ३१ ॥

एतच्च—

## व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥

यदा खल्वयं व्यासक्तमनाः क्वचिद् देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदाऽऽत्ममनस्संयोगविशेष एषितव्यः- दृष्टं हि दुःखं दुःखवेदनं चेति. तत्रायं समानः प्रतिषेधः, यदृच्छया तु न विशेषः- नाऽऽकस्मिकी क्रिया नाऽऽकस्मिकः संयोग इति ॥

---

संस्कारयोरयोग्यत्वेनाप्रत्यक्षत्वादित्यर्थः, तत्र= तथा च आत्मप्रदेशसंस्कारविषयाऽऽत्मप्रत्यक्षेण संवित्तिः= स्मृतिरनुपपन्ना- यद्यात्मप्रदेसंशस्कारयोः प्रत्यक्षं स्यात्तदा तत्स्मृतिरपि उत्कंच्छाकाले स्याद् न चैवमस्तीत्यर्थः। द्वितीयकल्पस्यानुपपत्तिमाह- सुस्मूर्षयेति, प्रणिदधानः= नियुञ्जानः, यदा हि मनःप्रणिधानादिना स्मरति तदा न यदृच्छिया= अकस्मात् स्मरणं वा संयोगविशेषो वा संभवतीत्यर्थः। तृतीयकल्पस्यानुपपत्तिमाह- ज्ञत्वमिति, मनसि ज्ञानसमवायस्य प्रतिषेधादित्यर्थः, तदेतत् "युगपज्ज्ञेयानुपलब्धेश्च १९" इत्यत्र द्रष्टव्यम्। तथा च शरीराद्बहिरात्मप्रदेशेन मनस्संनिकर्षो नोपपद्यते कारणाभावादित्यर्थः ॥ ३१ ॥

अग्रिमसूत्रमवतारयति- एतदिति, एतत्= आत्मप्रेरणेत्यादिसूत्रप्रतिपादितं मनस्संयोगविशेषस्य निराकरणं वक्ष्यमाणेन मनस्संयोगनिराकरणेन समानमेवेत्ययुक्तमेवेत्यर्थः, किं वा एतत्= पूर्वोक्तो मनस्संयोगो वक्ष्यमाणेन संयोगेन समान एवेत्यर्थः। व्यासक्तेति- व्यासक्तमनसः= नृत्यादिदर्शनसंलग्नमनसो जीवस्य पादव्यथनेन= पादादिव्यथाज्ञापकेन संयोगविशेषेण= मनस्संयोगेन पूर्वोक्तः संयोगविशेषः समानम्= तुल्य इत्यन्वयः, किं वा पूर्वोक्तं संयोगप्रत्याख्यानमेतत्संयोगप्रत्याख्यानेन समानम्- उभयोरप्यसंभवित्वादित्यन्वयः, यदा हि नृत्यादिकं पश्यतः कण्टकवेधो भवति तदा तादृशकण्टकवेधव्यथाया अनुभवो येन हेतुना जातेनात्ममनस्संयोगेन जायते तस्यावश्यकत्वात् तादृशव्यथानुभवस्य च सर्वप्रसिद्धत्वात् तनैव हेतुना शरिराद्बहिरप्यात्मप्रदेशैर्मनसः संयोगः संभवतीति पूर्वोक्तपरिहारो न युक्त इति किं वाऽकिंचित्कर इति सूत्रार्थः। अत्र- "एतच्च व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानं भवतीत्यऽपरिहारः। तस्मात् पूर्व एव परिहारः "नान्तः शरीरवृत्तित्वान्मसः २६" इति" इतिवार्तिकम्। व्याचष्टे- यदेति, अयम्= जीवः, शर्करया= मृत्खण्डेन, तदा= एतादृशपादव्यथानुभवकाले आत्ममनस्संयोगविशेषः= उक्तव्यथानुभवकारणीभूत आत्ममनस्संयोगः एषितव्यः= स्वीकार्य एव- मनःसंयोगं विनोक्तव्यथानुभवस्य निरूपयितुमशक्यत्वात्। उक्तपादव्यथायां प्रत्यक्षं प्रमाणयति- दृष्टमिति। उपसंहरति- तत्रेति, तत्र= अत्र, अयम्= पूर्वोक्तः प्रतिषेधः समानः, यथा पूर्वोक्तात्मप्रेरणादिभिः शरीराद्बहिर्मनस्संयोगस्यानुपपत्तिः प्रदर्शिता तथात्रोदाहृतव्यथानुभवकालेप्यात्ममनसंयोगस्यानुपपत्तिः स्यात् आत्मनोऽन्यत्र व्यासक्तत्वेन मनःप्रेरणाद्यसंभवात्. न चैवं संभवति- एतादृशपादव्यथायाः प्रत्यक्षत्वेन तदनुभवकारणीभूतस्य मनस्संयोगस्यावश्यकत्वात्, शर्करादिना पादसंयोगश्च शरीराद्बहिरेवेति मनस्संयोगोपि शरीराद्बहिरेव स्वीकार्यं एवं स्मृतिकारणीभूतेऽपि मनस्संयोगः शरीराद्बहिः संभवत्येवेति न तस्योक्तः प्रतिषेधः संभवतीत्यर्थः। उदाहृतमनस्संयोग आत्मप्रेरणेन तु न संभवति- अन्यत्र व्यासक्तत्वात् मनसो ज्ञत्वादपि न संभवति- तस्य प्रतिषिद्धत्वात्, पारिशेष्याद् यदृच्छया वक्तव्यस्तदपि न संभवति- यदृच्छाया आकस्मिकत्वरूपत्वाद् आकस्मिकत्वं च निष्कारणकत्वमेव न च जायामानं निष्कारणं संभवतीति न मनसः क्रिया संयोगश्चाकस्मिकः= यदृच्छया संभवतीति यथा शरीराद्बहिरात्ममनस्संयोगस्योक्तस्य स्मृतिकारणीभूतस्यानुपपत्तिस्तथोक्तव्यथानुभवकारणीभूतस्याप्यात्ममनस्संयोगस्यानुपपत्तिरिति

कर्मादृष्टमुपभोगार्थं क्रियाहेतुरितिचेत् ? समानम् ॥

कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुः एवं दुःखं दुःखसंवेदनं च सिध्यति चेत्येवं चेन्मन्यसे ?, समानं स्मृतिहेतावपि= संयोगविशेषो भवितुमर्हति. तत्र यदुक्तम्- "आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ३१" इत्ययमप्रतिषेध इति, पूर्वस्तु प्रतिषेधः- "नान्तःशरीरवृत्तित्वान्मनसः २६" इति ॥ ३२ ॥

कः खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति ?,

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥३३॥

यथा खल्वात्ममनसोः संनिकर्षः संस्कारश्च स्मृतिहेतुरेवं प्रणिधानं लिङ्गादिज्ञानानि. तानि च न युगपद् भवन्ति तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति ॥ ३३ ॥

प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः ॥ ३४ ॥

---

समानं यथा चास्योपपत्तिस्तथा तस्याप्युपपत्तिरित्यपि समानमित्याह- यदृच्छयेति, यदृच्छयापि विशेषः= कार्यं न संभवतीति यावत् । उक्ते हेतुमाह- नेति ।

ननु जीवकृतकर्मजन्यमदृष्टमात्मसमवेतम् उपभोगार्थम्= भोगसंपादकमस्तीति तादृशादृष्टेन मनसि क्रिया जायते ततश्चोदाहृतो मनस्संयोगो जायते इति न स संयोगोऽनुपपन्न इत्याशङ्कते- कर्मेति । उत्तरमाह- समानमिति, यथोदाहृतो मनस्संयोगोऽदृष्टेन संभवति तथा स्मृतिकारणभूतोपि मनस्संयोगोऽदृष्टेन संभवतीति न तदनुपपत्तिरित्यर्थः । स्वयं व्याचष्टे- कर्मेति, पुरुषस्थम्= आत्मसमवेतम् । पर्यवसितमाह- एवमिति, एवम्= उक्तादृष्टेन । शङ्कामुपसंहरति- इत्येवमिति । उत्तरमाह- समानमिति, स्मृतिहेतुरपि संयोगविशेषोऽदृष्टेन संभवतीति न तदनुपपत्तिरित्यर्थः । उपसंहरति- तत्रेति, यदा ह्यदृष्टेन संयोगविशेष उपपद्यते तदा तस्य पूर्वोक्तः आत्मप्रेरणेत्यादिप्रतिषेधो नोपपद्यते किं तु "नान्तः २६" इति पूर्वोक्त एव प्रतिषेध उपपद्यते मनसः शरीरान्तर्वृत्तित्वाददृष्टेनापि शरीराद्बहिर्गमनं जीवतो न संभवतीति न शरीराद्बहिरात्मप्रदेशैर्मनस्संयोग उपपद्यते इत्यर्थः ॥ ३२ ॥

अग्रिमसूत्रमवतारयति- क इति, सर्वस्मृतिकारणमात्ममनस्संयोग एव तस्य च यौगपद्यं स्पष्टमेव- शरीराद्बहिर्मनसो गमनस्याऽस्वीकारात् अथापि युगपत्सर्वस्मरणं न भवति तत्र युगपदस्मरणस्य को हेतुरिति जिज्ञासा । सूत्रेणोत्तरमाह- प्रणिधानेति, प्रणिधानम्= चित्तैकाग्रता किं वात्मना चित्तस्य तत्र नियोजनम्, लिङ्गादिज्ञानम्= संस्कारोद्बोधकज्ञानम्, यथा मनस्संयोगः स्मरणस्य कारणं तथा प्रणिधानादिकमपि कारणमस्ति तथा च सर्वस्मरणकारणीभूतसंस्कारविशिष्टात्मना सर्वस्मरणकारणीभूतस्य मनस्संयोगस्य युगपत्सत्त्वेपि प्रणिधानादीनां स्मरणकारणानामयुगपद्भावाद् यौगपद्यं न संभवतीति अयुगपत्स्मरणमुपपद्यते= युगपत्सर्वस्मरणापत्तिर्नास्ति किं तु प्रणिधानादिक्रमेणैव क्रमशः स्मरणं भवतीति सूत्रार्थः । व्याचष्टे- यथेति । प्रकृतमाह- एवमिति । प्रणिधानं लिङ्गादिज्ञानानि च स्मरणकारणानि सन्ति तानि= प्रणिधानादीनि युगपत् न संभवन्ति. तत्कृता= प्रणिधानादीनामयौगपद्यकृता= प्रणिधानादीनामयौगपद्येनैव स्मृतीनां युगपदनुत्पत्तिः= अयुगपदुत्पत्तिरुपपद्यते इति "ज्ञानसमवेतात्म २५" इतिसूत्रोक्तरीत्या स्मृतीनामयौगपद्योपपादनार्थं शरीराद्बहिरात्मप्रदेशैर्मनसः संयोगो न स्वीकार्यः- मनसः शरीराभ्यन्तर्वृत्तित्वादित्यर्थः, तथा च ज्ञानस्य विभ्वात्मगुणत्वेपि स्मृतीनां यौगपद्यापत्तिर्नास्तीति ज्ञानमात्मगुण एव न तु मनोगुण इति पर्यवसन्नम् ॥ ३३ ॥

सामान्यतः स्मृतीनां यौगपद्ये निराकृतेपि स्मृतिविशेषे यौगपद्यमाशङ्कते- प्रातिभवदिति, "श्वस्ते भ्राताऽऽगन्ता" इत्यादिकं सिद्धपुरुषज्ञानं प्रातिभमित्युच्यते तथा च वैशेषिकसूत्रम्- "आर्ष

यत् खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्तमुत्पद्यते कदाचित् तस्य युगपदुत्पत्तिप्रसङ्गः— हेत्वभावात् ॥ सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानः= बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित् स्मृतिहेतुः— तस्यानुचिन्तनात् तस्य स्मृतिर्भवति. न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयते= 'एवं मे स्मृतिरुत्पन्ना' इत्यसंवेदनात् प्रातिभमिव ज्ञानमिदं स्मार्तमित्यभिमन्यते, न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्तमिति ॥

प्रातिभे कथमितिचेत् ? पुरुषकर्मविशेषादुपभोगवन्नियमः ॥

प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यते ?. यथोपभोगार्थं कर्म युगपदुपभोगं न करोति एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति ॥

---

सिद्धदर्शनं च धर्मेभ्यः ९–२–१३" इति, तदेतत् प्रातिभं ज्ञानं स्मृत्यात्मकमपि प्रणिधानादिसापेक्षं न भवति तथा च प्रातिभवत् प्रणिधानाद्यनपेक्षाणां स्मार्तानाम्= स्मृतिज्ञानानां यौगपद्यं प्राप्तम्– प्रणिधानाद्यनपेक्षाणां सर्वस्मृतीनां कारणस्यात्ममनस्संयोगस्य यौगपद्यात् कारणयौगपद्ये कार्ययौगपद्यस्यावश्यम्भावात्. संस्काराणां च मनस्संयुक्तात्मनि समवेतत्वादिति सूत्रार्थः । पूर्वोक्तं च स्मर्तव्यम् । अत्र– "यदि प्रणिधानाद्यपेक्षात्ममनस्संयोगो न युगपत् स्मृतिकारणं (तदा) याः स्मृतयः प्रणिधानादिसंनिधानमन्तरेण भवन्ति तासां यौगपद्यं स्यात्" इतिवार्तिकम् । व्याचष्टे– यदिति, प्रातिभं ज्ञानमिव प्रणिधानाद्यनपेक्षं यत् स्मार्तम्= स्मरणज्ञानमुत्पद्यते तस्य= तेषाम्= प्रणिधानाद्यनपेक्षाणां स्मरणानां युगपदुत्पत्तिप्रसङ्गः– क्रमप्रयोजकस्य प्रणिधानलिङ्गादिज्ञानस्य कारणत्वाभावादित्यन्वयः । उक्ते हेतुमाह– हेत्वभावादिति, अयौगपद्यहेतोरुक्तस्य प्रणिधानलिङ्गादिज्ञानस्याऽभावात्= अनपेक्षणात्, किं वाऽयौगपद्यहेतोरभावादित्यर्थः । उक्तं भाष्यकारः परिहरति– सत इति, स्मार्तं किमपि ज्ञानं प्रणिधानाद्यनपेक्षं न भवतीति स्मृतिहेतोः प्रणिधानलिङ्गादिज्ञानस्य तदपेक्षत्वस्य च सत्त्वेति असंवेदनात्= तज्ज्ञानाभावादेव प्रातिभसाम्यं प्रतीयते इत्यन्वयः । उक्तं विशदयति– बह्वर्थेति, अनेकार्थविषयके चिन्ताप्रबन्धे= प्रणिधानसंताने जाते कश्चिदेव चिन्तितः पदार्थः कस्यचित्स्मृतिहेतुर्भवति तस्य= स्मृतिहेतोरनुचिन्तनात् तस्य= स्मर्तव्यस्य स्मृतिर्भवति तत्र स्मृतिहेतूनां सत्त्वेपि उत्पलशतपत्रवेधन्यायेन कदाचित् ज्ञानं न जायते इत्येतावन्मात्रेण तत्र स्मरणस्य प्रणिधानाद्यनपेक्षत्वमुच्यते तदाह– न चायमिति, 'एवम्= अनेन कारणेन मे स्मृतिरुत्पन्ना' इतिकारणज्ञानाभावादेव प्रातिभमिव स्मार्तं ज्ञानं प्रणिधानाद्यनपेक्षमित्यभिमन्यते वस्तुतस्तु स्मार्तं किमपि ज्ञानं प्रणिधानाद्यनपेक्षं नास्तीति अज्ञायमानानामपि प्रणिधानादीनामयौगपद्येनोक्तरीत्या स्मृतीनामयौगपद्यमुपपद्यते इति न कोपि दोष इत्यर्थः । अत्र "प्रणिधानाद्यपेक्षम्" इति पाठस्त्वसंगतो वार्तिकविरुद्धश्च तथा च वार्तिकम्– "नहि प्रणिधानाद्यनपेक्षं स्मार्तमस्ति" इति ॥

ननु स्मृतिज्ञानानां प्रणिधानादिसापेक्षत्वेनाऽयौगपद्ये संभवत्यपि प्रणिधानाद्यनपेक्षाणां प्रातिभानां कथं न यौगपद्यमित्याशङ्कते– प्रातिभे इति, प्रातिभे= प्रातिभज्ञानानामयौगपद्यं दृश्यमानं कथम्= केन हेतुनोपपाद्यमितिशङ्कार्थः । उत्तरमाह– पुरुषेति, यथा जीवस्य कर्मक्रमेण सुखदुःखादिभोगः क्रमेणैव भवति न तु युगपत् तथा प्रातिभज्ञानहेतुभूतानां जीवकर्मणां क्रमेण जातत्वात् फलजनकत्वाच्च तत्कार्यभूतानि प्रातिभज्ञानान्यपि प्रणिधानाद्यनपेक्षाण्यपि क्रमेणैव जायन्ते न युगपदित्यर्थः । स्वोक्तं स्वयमेव व्याचष्टे– प्रातिभमिति, प्रातिभं सर्वं ज्ञानम् इदानीम्= प्रणिधानाद्यनपेक्षत्वेन कस्मात् युगपन्नोत्पद्यते इत्याशङ्का । समाधत्ते– यथेति, उपभोगर्थम्= सुखादिभोगकारणीभूतम् । प्रकृतमाह– एवमिति, प्रतिभाहेतुः= प्रातिभज्ञानकारणीभूतो जीवकर्मविशेषः क्रमेण जातत्वात् क्रमेणैव प्रातिभज्ञानान्युत्पादयति न युगपदिति न प्रातिभानामपि यौगपद्यापत्तिरित्यर्थः ॥

हेत्वभावादयुक्तमितिचेत् ? न- करणस्य प्रत्ययपर्याये सामर्थ्यात् ॥

'उपभोगवन्नियमः' इत्यस्ति दृष्टान्तो हेतुर्नास्तीति चेन्मन्यसे ? न- करणस्य प्रत्ययपर्याये सामर्थ्याद् नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते न चाऽनेकस्मिन्, तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं करणसामर्थ्यमित्थम्भूतमिति. न ज्ञातुः- विकरणधर्मणो देहनानात्वे प्रत्यययौगपद्यादिति ।

अयं च द्वितीयः प्रतिषेधः- व्यवस्थितशरीरस्य चाऽनेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात्= क्वचिद् देशेऽवस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन ज्ञानमेकस्मिन्नात्मप्रदेशे समवैति तेन यदा मनः संयुज्यते तदा ज्ञातपूर्वस्याऽनेकस्य युगपत् स्मरणं प्रसज्यते-

---

ननु "उपभोगवत्" इति दृष्टान्तसत्त्वेपि प्रातिभज्ञानानां युगपदनुत्पत्तौ हेतुर्नास्ति न च हेतुं विना दृष्टान्तमात्रेण साध्यसिद्धिः संभवति येन प्रातिभानामयौगपद्यं सिध्येतेति प्रातिभानामुक्तमयौगपद्यं हेत्वभावादेवाऽयुक्तम्= न संभवतीत्याशङ्कते- हेत्वभावादिति, परिहरति- नेति, परिहारहेतुमाह- करणस्येति, करणस्य= ज्ञानकारणस्य प्रत्ययपर्याये= पर्यायेण= क्रमेणैव ज्ञानोत्पादने सामर्थ्यात् क्रमेण= अयुगपदेव ज्ञानानि संभवन्ति न युगपदिति ज्ञानानामयौगपद्ये तादृशं कारणसामर्थ्यमेव कारणं तथैव सर्वत्र कार्यकारणयोः क्रमदर्शनादित्यर्थः । स्वयं व्याचष्टे- उपभोगवदिति । परिहरति- नेति, परिहारहेतुमाह- करणस्येति, पर्यवसितमाह- नैकस्मिन्निति, ज्ञानकारणानां क्रमेणैव ज्ञानजननसामर्थ्यात् एकस्मिन् ज्ञेये= एकज्ञेयविषयकं युगपदनेकं ज्ञानं नोत्पद्यते किं तु क्रमेणैव, तथाऽनेकस्मिन्= अनेकज्ञेयविषयकमप्यनेकं ज्ञानं युगपन्नोत्पद्यते किं तु क्रमेणैवोत्पद्यते इत्यन्वयः । एतादृशकरणसामर्थ्ये प्रमाणमाह- तदिदमिति, इदं करणसामर्थ्यम् इत्थम्भूतम्= क्रमेण ज्ञानजननानुकूलमिति दृष्टेन ज्ञानक्रमेणानुमेयम्- क्रमेणैव ज्ञानानां दृष्टेन जायमानत्वेन ज्ञानकारणानां क्रमेणैव ज्ञानजननसामर्थ्यमस्ति न युगपदिति ज्ञातुं शक्यत्वादित्यर्थः । नन्वेवं ज्ञातुरप्यनेकज्ञानसामर्थ्यं न स्यादित्याशङ्क्याह- न ज्ञातुरिति, ज्ञातुरनेकज्ञानसामर्थ्याभावो नास्ति, अत्र हेतुमाह- विकरणेति, विकरणधर्मिणः= योगिनो नानादेहेष्वपि स्वनिर्मितेपु ज्ञानयौगपद्यस्य शास्त्रसिद्धत्वात्. तदेतत् एकोनविंशतिसूत्रभाष्यटीकायां द्रष्टव्यम् । अत्र- "तस्मात्करणमेकं न क्वचिदपि युगपत् कार्यायाऽलमिति. कर्ता पुनरेकोपि करणभेदे युगपद्बहूनि कार्याणि करोतीत्याह- न ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्यययौगपद्यादिति, विविधं करणं यस्य स तथोक्तः" इति तात्पर्यटीका ॥

पूर्वपक्षी स्मृतीनां यौगपद्यं प्रकारान्तरेण प्रतिपादयति- अयमिति, स्मृतीनामयौगपद्यस्य प्रतिषेध इत्यर्थः । उपपादयति- व्यवस्थितेति, व्यवस्थितशरीरस्य= एकदेशस्थितशरीरस्य जीवस्य तद्देशस्थितशरीरावच्छेदेन तस्मिन्नात्मप्रदेशेऽनेकेषां ज्ञानानां ज्ञानजन्यसंस्काराणां च समवायात् तादृशसंस्कारविशिष्टात्मप्रदेशेन मनसश्च संनिकर्षात् तादृशे आत्मन एकस्मिन् प्रदेशे युगपदनेकार्थविषयकं स्मरणं स्यादेव- अनेकसंस्कारविशिष्टेनात्मप्रदेशेन मनस्संनिकर्षस्य सर्वस्मरणसाधारणकारणस्य जातत्वादेवेत्यन्वयः । यदा हि व्यवस्थितशरीरो न भवति तदा तु विभोरात्मनस्तत्तत्प्रदेशैर्नानाभूतैर्मनसः नवनवसंनिकर्षसंभवादेकस्मिन्नात्मप्रदेशे ज्ञानसंस्कारयोः समवायो न संभवतीति न युगपदनेकार्थस्मरणप्रसङ्गः, यदा च व्यवस्थितशरीरो भवति तदा तु तद्देशस्थितशरीरावच्छिन्ने एकस्मिन्नेवात्मप्रदेशेऽनेकज्ञानसंस्काराणां समवायः संभवति तत्र तादृशेनाऽनेकसंस्कारविशिष्टेनात्मप्रदेशेन मनस्संयोगादनेकार्थस्मरणं युगपत्स्यादेव- निवारकाभावादित्यर्थः । अत्र- "यत्रात्मप्रदेशेऽस्य ज्ञानानि नानाविषयाणि जातानि तत्संस्काराश्च तत्रैवावस्थितशरीरस्य. तदनेन शरीरान्तर्गतस्य मनसस्तत्र प्रदेशे संयोग उपपादितः" इति तात्पर्यटीका । उक्तं विशदयति- क्वचिदिति, देशे= एकस्मिन् देशे, ज्ञातुः= जीवस्य, इन्द्रियार्थप्रबन्धेन=

प्रदेशसंयोगपर्यायाभावादिति । आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याऽविशेषे स्मृतियौगपद्यप्रतिषेधानुपपत्तिः । शब्दसंताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत् संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः । पूर्व एव तु प्रतिषेधः— नाऽनेकज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति ॥ ३४ ॥

यत् 'पुरुषधर्मो ज्ञानम्. अन्तःकरणस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्माः' इति कस्यचिद् दर्शनं तत् प्रतिषिध्यते—

## ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥

अयं खलु जानीते तावत्— 'इदं मे सुखसाधनम् इदं मे दुःखसाधनम्' इति. ज्ञातं स्वस्य

---

इन्द्रियाणामनेकैरर्थैः संयोगनैरन्तर्येण, एकस्मिन्= तद्देशस्थितदेहावच्छिन्ने आत्मप्रदेशे अनेकं ज्ञानं समवैति ततश्च तत्र संस्कारा उत्पद्यन्ते तेन= उक्तानेकसंस्कारविशिष्टात्मप्रदेशेन यदा मनस्संयोगो भवति तदा ज्ञातपूर्वस्य= पूर्वं ज्ञातस्याऽनेकस्य विषयस्य= अनेकविषयकं स्मरणं युगपत् प्रसज्यते इत्यन्वयः, उक्ते हेतुमाह— प्रदेशेति, प्रदेशसंयोगस्य= आत्मप्रदेशसंयोगस्य पर्यायाभावात्= क्रमाभावात्, यदि मनस्संयोगक्रमः स्यात्तदा स्मरणमपि क्रमेण स्यात् न चैवमस्ति किं त्वनेकसंस्कारविशिष्टेनात्मप्रदेशेन मनस्संयोगो जात एवेति युगपदनेकस्मरणापत्तिरित्यर्थः । स्मृतीनां यौगपद्ये कारणान्तरमाह— आत्मेति, सर्वेऽप्यात्मप्रदेशा एकमेव द्रव्यं न तु द्रव्यान्तरभूता इत्यात्मप्रदेशानामद्रव्यान्तरत्वात्= एकद्रव्यत्वात् स्मृतिकारणस्य मनस्संयोगस्य संस्काराणां च एकार्थसमवायः= एकात्मसमवेतत्वं किं वैकद्रव्यलक्षणात्मप्रदेशसमवेतत्वं समानमेवेति अविशेषः प्राप्तस्तेन स्मृतियौगपद्यस्य प्रतिषेधो नोपपद्यते इत्यन्वयः, सर्वेषामात्मप्रदेशानामेकद्रव्यत्वं तत्र च संस्काराः समवेदा मनस्संयोगश्च जातः एतदेवानेकस्मृतिकारणमिति स्मृतीनां यौगपद्यं स्यादेवेत्यर्थः, यद्यात्मप्रदेशानामेकद्रव्यत्वं न स्यात्तदा तैः संयोगस्य क्रमवृत्तित्वेन स्मृतीनामपि क्रमः स्यात् न चैवमस्तीत्याशयः । उक्तां स्मृतियौगपद्यापत्तिं भाष्यकारः परिहरति— शब्देति, अत्र "शब्दसंताने त्विति शङ्कानिराकरणभाष्यं तुशब्दः शङ्कां निराकरोति" इतितात्पर्यटीका । शब्दसंताने= शब्दसंतानमध्यवर्तिनां शब्दानां सर्वेषामप्याकाशाभिन्नश्रोत्रवृत्तित्वेपि यथा श्रोत्रलक्षणाधिष्ठानप्रत्यासत्त्या जायमानं श्रवणं न युगपद् भवति किं तु श्रोत्रप्रत्यासत्तिक्रमेणैव जायते तथा संस्काराणां मनस्संयोगस्य चात्मवृत्तित्वेपि स्मरणं संस्कारप्रत्यासत्त्या जायते संस्कारप्रत्यासत्तिश्च उद्बोधकानां क्रमेणैव घटते इति क्रमेणैव स्मरणानि जायन्ते इति स्मृतीनां न युगपदुत्पत्तिप्रसङ्ग इत्यर्थः । अत्र— "संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः, यथा शब्दाः संतानवर्तिनः सर्वत्रैवाकाशे समवयन्ति. समानदेशत्वेपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे तथा संस्कारेष्वपीति" इतिवार्तिकम् । तथा च यस्य संस्कारस्य सहकारिकारणम्= उद्बोधकज्ञानं जायते तेन तज्जन्यं स्मरणं जायते नाऽन्यार्थविषयकमिति न यौगपद्यापत्तिः, उद्बोधकज्ञानं च क्रमेणैव संभवतीतिस्पष्टमेव । सूत्रकृतं स्मृतियौगपद्यप्रतिषेधं सूचयति— पूर्व इति, पूर्वः= "प्रणिधानलिङ्गादिज्ञानानाम् ३३" इतिसूत्रेण स्मृतियौगपद्यस्य प्रतिषेधः कृत इतिहेतोः "अनेकज्ञानसमवायादेकप्रदेशे" इत्यादिपूर्वपक्षभाष्येण यो युगपत् स्मृतिप्रसङ्गः प्रदर्शितः स नोपपद्यते इत्यन्वयः ॥ ३४ ॥

अग्रिमसूत्रमवतारयति— यदिति, स्पष्टार्थमिदं भाष्यम्, तदेतत् सांख्यमतं सांख्यदर्शने द्रष्टव्यम् । ज्ञस्येति— ज्ञस्य= ज्ञानविशिष्टस्य यौ इच्छाद्वेषौ तन्निमित्तत्वादारम्भनिवृत्त्योरित्यन्वयः, आरम्भः= प्रवृत्तिरिच्छया भवति निवृत्तिश्च द्वेषेण भवति इच्छाद्वेषौ च ज्ञानं विना न संभवत इति ज्ञानेच्छाद्वेषप्रयत्नादीनां सामानाधिकरण्यं सिद्धं ज्ञानं चात्मधर्मं इति इच्छाद्वेषप्रयत्नादीनां तत्फलभूतसुखादीनां चात्मधर्मत्वं सिद्धमिति सूत्रार्थः, अत्र— 'इच्छादीनामात्मधर्मत्वम्— ज्ञानसामानाधिकरण्यात्' इत्येवं सूत्रं

सुखसाधनमाप्तुमिच्छति दुःखसाधनं हातुमिच्छति. प्राप्तुमिच्छायुक्तस्याऽस्य सुखसाधनाऽवाप्तये समीहाविशेष आरम्भः जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः एवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकेनाभिसंबन्धः= एककर्तृत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च. तस्मात् ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा नाऽचेतनस्येति, आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति ॥ ३५ ॥

अत्र भूतचैतनिक आह—

## तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वऽप्रतिषेधः ॥ ३६ ॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति. यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तम्- पार्थिवाप्यतैजसवायवीनां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ॥ ३६ ॥

## परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥

---

वक्तव्यमासीत् । व्याचष्टे- अयमिति, अयम्= आत्मा, आत्मसमवेतं ज्ञानमुदाहरति- इदमिति, जानाति इच्छति यतते इतिक्रमः स्मर्तव्यः, ज्ञानानन्तरं जायमानामात्मसमवेतामिच्छामुदाहरति- ज्ञातमिति, हातुमिच्छतीत्यनेन द्वेष उक्तः, इच्छानन्तरं जायमानमारम्भशब्दवाच्यं प्रवृत्तिलक्षणं प्रयत्नमुदाहरति- प्राप्तुमिति, अस्य= आत्मनः, समीहाविशेषः= चेष्टाविशेषः प्रयत्न एव आरम्भ इत्यर्थः, निवृत्तिलक्षणं प्रयत्नमुदाहरति- जिहासेति, जिहासाप्रयुक्तस्य= त्यागेच्छाप्रेरितस्यात्मनः, एवं ज्ञानेच्छाद्वेषप्रयत्नादीनामुदाहृतं सामानाधिकरण्यम्= आत्मसमवेतत्वमुपसंहरति- एवमिति, एवमुक्तप्रकारेण, एकेन= आत्मनाऽभिसंबन्धः= समवायसंबन्धः, एककर्तृत्वम्= एककर्तृकत्वम् , समानाश्रयत्वम्= सामानाधिकरण्यं च सिद्धमित्यन्वयः । उपसंहरति- तस्मादिति, तस्मात्= उक्तसामानाधिकरण्यात्, ज्ञानं चात्मधर्म इतिपूर्वपक्षिणापि स्वीकृतं तथा च ज्ञानसमानाधिकरणानामिच्छादीनामप्यात्मधर्मत्वं सिद्धमित्यर्थः । अचेतनस्य= अन्तःकरणस्य । सूत्राशयमुपसंहरति- आरम्भेति, आरम्भनिवृत्त्योः प्रत्यगात्मनि= जीवात्मनि दृष्टत्वात्= सिद्धत्वात् परत्र= तत्कारणीभूतेष्विच्छादिषु आत्मसमवेतत्वानुमानं वेदितव्यम्- कार्यकारणयोः सामानाधिकरण्यनियमात् परस्परं कारणकार्यभूतानां ज्ञानेच्छाप्रयत्नादीनामात्मसमवेतत्वं वेदितव्यम्- ज्ञानस्यात्मसमवेतत्वादित्यर्थः, इच्छादिकमात्मसमवेतं ज्ञानकार्यत्वाद् आरम्भवद् निवृत्तिवच्चेत्यनुमानप्रयोग इत्यलम् ॥ ३५ ॥

अग्रिमसूत्रमवतारयति- अत्रेति, भूतचैतनिकः= शरीरचैतन्यवादी चार्वाकः । तदिति- तल्लिङ्गत्वात्= प्रवृत्तिनिवृत्त्यनुमेयत्वादिच्छाद्वेषयोः पार्थिवाद्येषु शरीरेषु ज्ञानस्य= चैतन्यस्य प्रतिषेधो नोपपद्यते इत्यन्वयः, प्रवृत्तिनिवृत्तिभ्यामात्मनि इच्छाद्वेषावनुमेयौ इतिपूर्वसूत्रेणोक्तं तत्र प्रवृत्तिनिवृत्ती च पार्थिवादिशरीरेषु प्रत्यक्षसिद्धे इति इच्छाद्वेषयोरपि शरीरसमवेतत्वं प्राप्तं तेन ज्ञानस्यापि शरीरसमवेतत्वं प्राप्तम्- ज्ञानेच्छाद्वेषादीनां सामानाधिकरण्यनियमादिति शरीरचैतन्यस्य प्रतिषेधो नोपपद्यते इति सूत्रार्थः । व्याचष्टे- आरम्भेति, आरम्भनिवृत्ती लिङ्गे ययोस्तौ आरम्भनिवृत्तिलिङ्गौ यथासंख्यमिच्छाद्वेषौ । वक्तव्यमाह- यस्येति, ज्ञानेच्छाप्रयत्नादीनां सामानाधिकरण्यं स्पष्टमित्यर्थः । पर्यवसितमाह- पार्थिवेति, पार्थिवादिषु शरीरेषु प्रवृत्तिनिवृत्ती प्रत्यक्षेण दृश्येते तेन ताभ्यामिच्छाद्वेषौ शरीरेषु सिद्धौ ताभ्यां च ज्ञानमिति शरीराणां चैतन्यं सिद्धमित्यर्थः । पार्थिवादिचतुर्विधशरीरग्रहणं न्यायमतेनैव विज्ञेयम्- चार्वाकेन तथाऽनभ्युपगमात् शरीरमात्रस्य चातुर्भौतिकत्वस्वीकारादित्यनुसंधेयम् ॥ ३६ ॥

उक्तं शरीरचैतन्यं निराकरोति- परश्वादिष्विति, परश्वादिष्वारम्भनिवृत्ती दृश्येते न तु चैतन्यमिति व्यभिचारादारम्भनिवृत्तिभ्यां शरीरस्य चैतन्यं नोपपद्यते इति सूत्रार्थः, सूत्रारम्भे नेति वक्तव्यमासीत् ।

शरीरचैतन्यनिवृत्तिः । आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तम् परश्वादेः करणस्यारम्भनिवृत्तिदर्शनाच्चैतन्यमिति । अथ शरीरस्येच्छादिभिर्योगः परश्वादेस्तु करणस्याऽऽरम्भनिवृत्ती व्यभिचरतः ?, न तर्ह्ययं हेतुः– 'पार्थिवाप्यतैजसवायवीनां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योगः' इति ॥ ३७ ॥

अयं तर्ह्यन्योऽर्थः– "तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ३६" पृथिव्यादीनां भूतानामारम्भस्तावत् त्रसविशरारुस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः. लोष्टादिषु लिङ्गाभावात्. प्रवृत्तिविशेषाभावो निवृत्तिः. आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति पार्थिवाद्येष्वऽणुषु तद्दर्शनादिच्छाद्वेषयोस्तद्योगाद् ज्ञानयोग इति सिद्धं भूतचैतन्यमिति,

## कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३८ ॥

व्याचष्टे– शरीरेति, इदं सूत्रप्रतिपाद्यकथनम्, अनेन सूत्रेण शरीरचैतन्यस्य निवृत्तिः= प्रतिषेधः क्रियते इत्यर्थः । पूर्वपक्षिकथनमनुवदति– आरम्भेति, यदि प्रवृत्तिनिवृत्तिभ्यामिच्छाद्वेषज्ञानैर्योगः= चैतन्यं स्यात् शरीरस्य तदा परश्वादेरपि छेदनादिकरणस्य चैतन्यं स्यात्– प्रवृत्तिनिवृत्तियुक्तत्वात्. न च परश्वादेश्चैतन्यमुपलभ्यते इति न शरीरस्यापि प्रवृत्तिनिवृत्तिभ्यां चैतन्यं सिध्यतीत्यर्थः । ननु प्रवृत्तिनिवृत्तियुक्तत्वेपि शरीरे एव चैतन्यं स्वीक्रियते– प्रत्यक्षसिद्धत्वात्, परश्वादेस्तु ये प्रवृत्तिनिवृत्ती ते चैतन्यं व्यभिचरत इति न परश्वादेश्चैतन्यापत्तिरित्याशङ्कते– अथेति । अत्र परिहरन् स्वाभीष्टमाह– नेति, प्रवृत्तिनिवृत्तियुक्तत्वं शरीरचैतन्यसाधको हेतुरेवं न संभवति– परश्वादिषु चैतन्यव्यभिचारित्वादित्यर्थः । अयम्= पार्थिवाप्येत्याद्युक्तः। वस्तुतस्तु परश्वादिषु प्रवृत्तिनिवृत्तिरेव न स्त इत्यलम्। पूर्वपक्ष्युक्तं हेतुसाध्यादिवाक्यमनुवदति– पार्थिवाप्येति ॥ ३७ ॥

अग्रिमसूत्रावतारार्थं तल्लिङ्गत्वादिति पूर्वसूत्रं प्रकारान्तरेण व्याचष्टे– अयमिति, तल्लिङ्गत्वादिति सूत्रस्य पूर्वोक्तव्याख्यानेन यदि शरीरचैतन्यं न सिध्यति तदायमन्योऽर्थः प्रतिपाद्यते तेन शरीरचैतन्यं सेत्स्यति इत्यर्थः । नवीनार्थमाह– पृथिव्यादीनामिति, त्रसविशरारुस्थावरेषु शरीरेषु= शरीरवर्तिषु भूतानाम्= भूतेषु य आरम्भः स परश्वादिसाधारणो न गृह्यते येन परश्वादीनां चैतन्यापत्तिः स्यात् किंतु शरीरासाधारणः तदवयवव्यूहलिङ्गः= भूतावयवसंमूर्छनलिङ्गः= भूतावयवानां यः शरीररूपेण परिणामस्तदनुमेयः प्रवृत्तिविशेष एवारम्भः स च शरीरे एव संभवति न लोष्टादिषु परश्वादिषु च– तेषु लिङ्गस्य= उक्तप्रवृत्तिविशेषानुमापकस्य भूतावयवपरिणामविशेषस्योक्तस्याऽभावात्, निवृत्तिश्चोक्तप्रवृत्तिविशेषस्याभाव एव गृह्यते स चापि शरीरे एव संभवति न परश्वादिषु– तेषूक्तप्रवृत्तिविशेषस्याभावेन प्रवृत्तिविशेषाभावस्याप्यसंभवात्. अभावस्य स्वप्रतियोगिस्थले एव कालान्तरे संभवादित्यन्वयः, आरम्भनिवृत्तिशब्दाभ्यां शरीरमात्रवर्तिन्यौ प्रवृत्तिनिवृत्त्यौ गृह्येते न परश्वादिसाधारणे येन परश्वादीनां चैतन्यापत्तिः स्यादित्यर्थः । पर्यवसितमाह– आरम्भेति, आरम्भनिवृत्तिलिङ्गौ= आरम्भनिवृत्त्यनुमेयौ इच्छाद्वेषाविति शरीरवर्तिषु पार्थिवादिपरमाणुषु तद्दर्शनात्= उक्तविशेषप्रवृत्तिनिवृत्तिदर्शनादिच्छाद्वेषयोर्योगः प्राप्तस्तद्योगात्= इच्छाद्वेषयोगाच्च ज्ञानयोगः= चैतन्यं प्राप्तमिति भूतचैतन्यं सिद्धमित्यर्थः, अत्र–"शरीरेष्ववयवव्यूहभेददर्शनात् शरीरारम्भकाणामणूनां प्रवृत्तिभेदोऽनुमीयते ततश्चेच्छाद्वेषौ ताभ्यां चैतन्यमिति। त्रसम्= जङ्गमम्, विशरारु= अस्थिरं कृमिप्रभृतीनां शरीरम्, स्थावरम्= स्थिरं देवमनुष्यादीनां तद्धि चिरतरं वा ध्रियते" इतितात्पर्यटीका ।

उक्तं पराकरोति– कुम्भेति, कुम्भादिषु पार्थिवादिभूतावयवानां परिणामलक्षण आरम्भो दृश्यते सिकतादिषु च तदभावोपि दृश्यते चैतन्यं च नोपलभ्यते इति अहेतुः= उक्तरूपोप्यारम्भादिः शरीर-

कुम्भादिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः सिकतादिपु प्रवृत्तिविशेपाभावो निवृत्तिः. न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः, तस्मात् "तल्लिङ्गत्वादिच्छाद्वेषयोः ३६ " इत्यहेतुरिति ॥ ३८ ॥

नियमानियमौ तु तद्विशेषकौ ॥ ३९ ॥

तयोः= इच्छाद्वेषयोर्नियमानियमौ विशेपकौ= भेदकौ, ज्ञस्येच्छाद्वेपनिमित्ते प्रवृत्तिनिवृत्ती न स्वाश्रये, किं तर्हि ?. प्रयोज्याश्रये. तत्र प्रयुज्यमानेपु भूतेपु प्रवृत्तिनिवृत्ती स्तः न सर्वेष्वित्यऽनियमोपपत्तिः । यस्य तु ज्ञत्वाद् भूतानामिच्छाद्वेपनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियमः स्यात्= यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिः गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेन

---

चैतन्यसाधको न संभवतीति सूत्रार्थः । व्याचष्टे- कुम्भादीति, कुम्भादिपु मृदवयवानां व्यूहलिङ्गः= कुम्भादिरूपेण परिणामानुमेयः प्रवृत्तिविशेषलक्षण आरम्भो दृश्यते सिकतादिपु च तादृशप्रवृत्तिविशेषस्याभावरूपा निवृत्तिर्दृश्यते न च चैतन्यमुपलभ्यते इति यथाऽऽरम्भनिवृत्तिसत्त्वेपि मृदादीनां चैतन्यं नास्ति तथा शरीरस्यापि चैतन्यं नोपपद्यते इति "तल्लिङ्गत्वात् ३६ " इतिसूत्रस्योक्तमेतद् व्याख्यानान्तरमपि अहेतुः= शरीरचैतन्यसाधकं न संभवतीत्यर्थः ॥ ३८ ॥

उक्तचार्वाकमते दोषान्तरमुद्घाटयति- नियमेति, प्रवृत्तिनिवृत्त्योर्नियमानियमौ तत्= तयोः= इच्छाद्वेषयोर्विशेषकौ= भेदकौ= व्यवस्थापकौ भवत इत्यन्वयः, चार्वाकमते पदार्थमात्रे प्रवृत्तिनिवृत्तिनियमेन इच्छाद्वेपौ प्राप्नुतस्ताभ्यां च ज्ञानमिति पदार्थमात्रस्य चैतन्यं प्राप्तमितीदृमेव प्रवृत्तिनिवृत्तिनियमस्येच्छादिविशेपकत्वम्, न च पदार्थमात्रस्य चैतन्यमुपलभ्यते इति न शरीरस्यापि प्रवृत्तिनिवृत्तिभ्यां चैतन्यापत्तिः, स्वमतसाधकमाह- अनियमेति, शरीरातिरिक्तात्मवादे तु प्रवृत्तिनिवृत्त्योः पदार्थमात्रे नियमो नास्ति किं त्वात्मप्रयोज्येष्वेव शरीरादिपु प्रवृत्तिनिवृत्ती भवत इति प्रयोजके आत्मन्येव चैतन्यं संभवति- न शरीरादिपु- स्वयं प्रवृत्त्यादेरभावादिति सूत्रार्थः, किं वा प्रवृत्तिनिवृत्त्योर्नियमानियमौ तत्= तयोः= चार्वाकमतन्यायमतयोर्विशेपकौ. चार्वाकमते भूतचैतन्यस्वीकारात् पदार्थमात्रे प्रवृत्तिनिवृत्तिनियमः प्राप्नोति स च प्रत्यक्षविरुद्ध इति न भूतचैतन्यं संभवति, न्यायमते तु भूतातिरिक्तस्यात्मनश्चैतन्यस्वीकारात् प्रवृत्तिनिवृत्त्योरनियमः प्राप्नोति स च प्रत्यक्षसिद्धः- शरीरादिष्वात्मप्रयोज्येपु प्रवृत्तिनिवृत्तिनियमस्य घटादिपु चात्माप्रयोज्येपु प्रवृत्तिनिवृत्त्यनियमस्य स्पष्टत्वात् इति न्यायमतमेव युक्तमित्युक्तनियमानियमयोश्चार्वाकमतन्यायमतविशेपकत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे- तयोरिति, एतत् सूत्रघटकतच्छब्दस्य व्याख्यानम् । प्रत्यक्षसिद्धं प्रवृत्तिनिवृत्त्योरनियमं प्रथमं स्वमतेनोपपादयति- ज्ञस्येति, ज्ञस्य= आत्मन इच्छाद्वेपनिमित्ते= इच्छाद्वेपजन्ये प्रवृत्तिनिवृत्ती न स्वाश्रये= स्वाश्रिते भवत इत्यन्वयः । प्रवृत्तिनिवृत्त्योराश्रयं जिज्ञासते- किमिति, किमाश्रिते इत्यर्थः । उत्तरमाह- प्रयोज्येति, प्रवृत्तिनिवृत्ती प्रयोज्याश्रये= आत्मप्रयोज्यशरीराद्याश्रिते स्त इत्यर्थः । पर्यवसितमाह- तत्रेति, आत्मना प्रयुज्यमानेपु परश्वादिपु शरीरादिपु च प्रवृत्तिनिवृत्ती भवतो नाऽप्रयुज्यमानेष्विति प्रत्यक्षसिद्धः प्रवृत्तिनिवृत्त्योरनियम उपपन्नोऽस्मन्मते इत्यर्थः, अत्र-"अयमेव चेच्छाद्वेपयोर्विशेपो यद् भूताश्रयत्वमनयोर्व्यावर्त्य तदितराश्रयत्वव्यवस्थितिः एतदुक्तं भवति- न शरीरमिच्छाज्ञानद्वेपाधारः- इच्छाजनितस्पन्दाधारत्वात् परश्वादिवत्" इति तात्पर्यटीका ।

प्रत्यक्षसिद्धस्य प्रवृत्तिनिवृत्त्योरनियमस्य चार्वाकमतेऽनुपपत्तिमाह- यस्येति, यस्य चार्वाकस्य मते भूतचैतन्यमस्ति तस्य चार्वाकस्य मते भूतानां ज्ञत्वात्= चेतनत्वात् इच्छाद्वेपवत्त्वं प्राप्तं तेनेच्छाद्वेपजन्ये प्रवृत्तिनिवृत्ती स्वाश्रये= भूतमात्राश्रिते संभवत इति भूतमात्रे प्रवृत्तिनिवृत्त्योर्नियमः प्राप्तः न तु प्रयुज्यमानमात्रभूताश्रितत्वम्, उक्तनियमे दृष्टान्तमाह- यथेति, यथा भूतानाम्= पदार्थानां गुणा-

**एव भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्यातां न तु भवतः तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती. इतिसिद्धम् । एकशरीरे ज्ञातृबहुत्वं निरनुमानम् । भूतचैतनिकस्य एकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम्, ओमिति ब्रुवतः प्रमाणं नास्ति, यथा नानाशरीरेषु नानाज्ञातारो प्रत्ययव्यवस्थानाद् एवमेकशरीरेपि प्रत्ययव्यवस्थानुमानं स्यात् ज्ञातृबहुत्वस्येति ॥**

---

न्तरनिमित्ता= गुरुत्वादिनिमित्ता पतनादिलक्षणा प्रवृत्तिः तादृशगुरुत्वादिगुणस्य प्रतिबन्धाच्च पतनादिनिवृत्तिश्च नियमेन भूतमात्रे भवति– कारणीभूतस्य गुरुत्वादेस्तत्प्रतिबन्धस्य च भूतमात्रे संभवात् तथा इच्छाद्वेषजन्ययोः प्रवृत्तिनिवृत्त्योरपि भूतमात्रे नियमः प्राप्नोति– कारणीभूतानां ज्ञानेच्छाद्वेषाणां भूतमात्रे सत्त्वस्वीकारादित्यन्वयः, स्वं ज्ञानेच्छाद्वेषाः, स्वाश्रये= स्वाश्रिते= भूतमात्राश्रिते इतिद्विवचनान्तम् । उक्तनियमे प्रत्यक्षविरोधमाह– न त्विति, न तु भूतमात्रे नियमेन प्रवृत्तिनिवृत्ती भवतः= दृश्येते किं तु प्रयुज्यमानेष्वेव भूतेष्वित्यर्थः । निगमयति– तस्मादिति, यस्माद् भूतमात्रे प्रवृत्तिनिवृत्तिनियमो नास्ति तस्माद् भूतेषु ज्ञानेच्छाद्वेषा न स्वीकार्याः किं तु ज्ञानेच्छाद्वेषप्रयत्नादयः प्रयोजकाश्रिताः= आत्माश्रिताः स्वीकार्याः प्रवृत्तिनिवृत्ती च प्रयुज्यमानमात्रभूताश्रिते स्वीकार्ये एवं वैयधिकरण्यस्वीकारे हि प्रत्यक्षसिद्धः प्रवृत्तिनिवृत्त्योरनियम उपपद्यते– यदा प्रयुज्यमानत्वं तदा प्रवृत्तिनिवृत्ती नान्यदेति । अत्र– " तदेवमनियमं भेदकं व्याख्याय नियमं व्याचष्टे– यस्य तु चार्वाकस्य दर्शने ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये शरीरादौ तस्य चार्वाकस्य यथा भूतानां गुरुत्वादिगुणान्तरनिमित्ता प्रवृत्तिः पतनादिलक्षणा तस्यैव गुरुत्वादेर्गुणान्तरस्य प्रतिबन्ध आधारद्रव्यसंयोगेन तस्मान्निवृत्तिरपतनादिका सा भूतमात्रे भवति नियमेन व्याप्ता न तु शरीरोपगृहीतेषु भूतेषु. एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम्, एतदुक्तं भवति– ये ये पृथिव्यादिधर्मास्ते ते यावत्पृथिव्यादिभाविनो दृष्टा यथा गुरुत्वादयः ज्ञानेच्छादयोपि चेत् पृथिव्यादिधर्मास्तैरप्यवश्यं यावत्पृथिव्यादिभाविभिर्भवितव्यं न तु घटादौ दृश्यन्ते तस्मान्न पृथिव्यादिधर्मा ज्ञानादयः " इति तात्पर्यटीका ।

ननु यथा मदिरायामेव मदशक्तिनियमो न सर्वत्र तथा शरीरे एव भूतानां संयोगविशेषेण चैतन्यं जायते इति न भूतमात्रे चैतन्यापत्तिरित्याशङ्क्याह– एकेति, एवं हि यथा सर्वेष्वेव मदिरावयवेषु पृथक् पृथक् मदशक्तिर्भवति– मदिराभागपानेनापि मदोत्पत्तेस्तथा शरीरचैतन्यपक्षे शरीरावयवेष्वपि पृथक् पृथक् चैतन्यं स्यात् तथा चैकस्मिन्नपि शरीरे ज्ञातृबहुत्वं स्यात्– चैतन्यविशिष्टानां बहूनां शरीरावयवानां ज्ञातृत्वात्. एकशरीरे ज्ञातृबहुत्वं च निरनुमानम्= निर्हेतुकम्= अप्रामाणिकम्– एकेनैव ज्ञात्रा सर्वसंभवात् ज्ञातृबहुत्वस्य गौरवग्रस्तत्वेन स्वीकर्तुमशक्यत्वात्. किं च तेषां परस्परं कदाचित् कलहोपि स्यात् न च तादृशः कलह उपलभ्यते इति नैकस्मिन् शरीरे ज्ञातृबहुत्वं संभवति तथा च न शरीरचैतन्यमुपपद्यते इत्यर्थः । भूतचैतनिकस्य= चार्वाकस्य मते एकस्मिन् शरीरे ज्ञातृबहुत्वं प्रतिपादयति– भूतेति, ज्ञानादियुक्तानामेव ज्ञातृत्वात् शरीरचैतन्यपक्षे चोक्तरीत्या सर्वेषामेव शरीरावयवानां ज्ञानादियुक्तत्वादेकस्मिन् शरीरे ज्ञातृबहुत्वापत्तिः स्पष्टैव । नन्वस्तु ज्ञातृबहुत्वं को दोषः– स्वस्वाश्रयेषु स्थितानां ज्ञातृणां कलहासंभवादित्याशङ्क्याह– ओमिति, ओमिति ब्रुवतः= एकस्मिन् शरीरे ज्ञातृबहुत्वं स्वीकुर्वतः ज्ञातृबहुत्वे प्रमाणं नास्तीति न तत्संभवतीत्यर्थः । उक्तज्ञातृबहुत्वे प्रत्यक्षविरोधमुद्घाटयति– यथेति, यथा प्रतिशरीरं ज्ञातृभेदस्वीकारात् प्रत्ययव्यवस्थानम्= ज्ञानभेदोस्ति– चैत्रमैत्रादेर्ज्ञानादीनां परस्परं भिन्नत्वात्, चैत्रादिसुखादीनां मैत्रादेर्ज्ञानाभावात् किं वा प्रत्ययव्यवस्थानम्= स्मरणव्यवस्था सापि स्पष्टैव तथैकस्मिन् शरीरेपि ज्ञातृबहुत्वस्य= ज्ञातृबहुत्वपक्षे प्रत्ययव्यवस्थानुमानम्= सर्वेषां तादृशज्ञातणां ज्ञानादिभेद आपद्येत तथा च शरीरस्य कस्मिंश्चिदवयवे वृक्णे तद्दृष्टस्य स्मरणं

दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोनुमानमन्यत्रापि ॥

दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु च मृत्प्रभृतिषु अन्यगुणनिमित्तः प्रवृत्तिविशेषः सोनुमानमन्यत्रापि= स त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामऽन्यगुणनिमित्त इति, स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतनां प्रयत्नवदिति । आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः । "नेन्द्रियार्थयोस्तद्विनाशेपि ज्ञानावस्थानात् १८" इति च

---

न स्यात्- अन्यदृष्टस्य अन्येन स्मर्तुमशक्यत्वात् न चैवमस्तीति नैकस्मिन् शरीरे ज्ञातृबहुत्वं संभवतीत्यर्थः । प्रत्ययव्यवस्थानादेव नानाशरीरेषु नानाज्ञातार इत्यनुमीयते एकस्मिन् शरीरे तु प्रत्ययव्यवस्थानं नास्तीति न ज्ञातृबहुत्वमनुमातुं शक्यते तेन शरीरचैतन्यं नोपपद्यते इत्याशयः । अनेन भाष्यपाठेन तात्पर्यटीकावैमत्यमुपलभ्यते इतिखेदः । तथा च तात्पर्यटीका- "प्रत्ययव्यवस्था न भवेदिति दूषणमुक्तम्, क्वचित्पाठः- प्रत्ययव्यवस्थानुमानं स्यादिति स सुगम एव" इति. तथा- "एकस्मिन् शरीरे प्रत्ययानां परस्परप्रतिसंधानं पश्यामो न शरीरान्तरे इतिव्यवस्था. सेयं यद्येकस्मिन् शरीरे एक एव चेतनो न चासौ शरीरान्तरे ततो भवेन्नाऽन्यथेत्यर्थः" इति । किं वा यथा नानाशरीरेषु प्रत्ययव्यवस्थानादेव आत्मभेदानुमानं भवति तथैकशरीरेपि ज्ञातृबहुत्वस्य= आत्मबहुत्वस्य प्रत्ययव्यवस्थयैवानुमानं स्यात् प्रत्ययव्यवस्थैव वानुमानम्= अनुमापिका स्यात्= संभवति न चैकस्मिन् शरीरे प्रत्ययव्यवस्थोपलभ्यते इति नैकशरीरे ज्ञातृबहुत्वं संभवतीत्यन्वयः ॥

आत्माश्रितज्ञानेच्छादिप्रयुक्ते भूताश्रितप्रवृत्तिनिवृत्ती इति यदुक्तं तत्र सदृष्टान्तमनुमानमाह- दृष्ट इति, भूतनाम्= शरीरादीनां परश्वादीनां च प्रवृत्तिविशेषः= क्रियालक्षणा प्रवृत्तिः अन्यगुणनिमित्तः= शरीराद्यतिरिक्तो य आत्मा तद्गुणभूतेच्छादिजन्यो दृष्ट इति अन्यत्रापि= तदवयवव्यूहानुमेये प्रवृत्तिविशेषे= शरीररूपेण परिणामलक्षणायां प्रवृत्तावपि सः= अन्यगुणनिमित्त इत्यनुमानं ( अन्यगुणनिमित्तकत्वम् ) वेदितव्यम्, अयं चान्यगुण आत्मनिष्ठोऽदृष्टविशेषस्तेनैव भूतावयवानां शरीररूपेण परिणामो भवति, तथा च प्रयोगः- भूतानां शरीररूपेण परिणामलक्षणः प्रवृत्तिविशेषः आत्मगुणजन्यः प्रवृत्तिविशेषत्वात् क्रियालक्षणप्रवृत्तिविशेषवदित्यर्थः । अत्र- "नियमानियमाविति यदुक्तं तत्रानुमानमेव सूचयति भाष्यकारः दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेष इति, हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः सोऽयं प्रयोगः- त्रसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् परश्वादिगतप्रवृत्तिविशेषवदिति, न केवलं शरीरस्य प्रवृत्तिविशेषोऽन्यगुणनिमित्तः भूतानामपि तदारम्भकाणां प्रवृत्तिविशेषोऽन्यगुणनिबन्धन एवेत्याह- तदवयवव्यूहलिङ्ग इति" इति तात्पर्यटीका । स्वयं व्याचष्टे- दृष्ट इति, भूतेषु= भूतकार्याणां परश्वादीनां छेदनादिकरणत्वं मृदादीनां च घटाद्युपादानत्वं प्रसिद्धमेव, परश्वादिषु या प्रवृत्तिः सा जीवनिष्ठेच्छादिगुणजन्येति प्रसिद्धमेव तदनेन दृष्टान्तः प्रतिपादितः । प्रकृतमाह- सोऽनुमानमिति, उक्तं व्याचष्टे- स इति, भूतानां त्रसस्थावरशरीरेषु= मनुष्यादिशरीरेषु यस्तदवयवव्यूहानुमेयः प्रवृत्तिविशेषः सोपि अन्यगुणनिमित्तः= जीवादृष्टनिमित्तोऽनुमेय इत्यन्वयः । एतत्कारणीभूतं गुणमाह- स चेति, प्रयत्नसमानाश्रयः= प्रयत्नसमानाधिकरणम्= आत्मवृत्तिः, धर्माधर्मसमाख्यातः= अदृष्टनामकः, संस्कारः सर्वार्थः= सर्वसंपादकः, पुरुषार्थाराधनाय= जीवभोगसंपादनाय प्रयत्नवद् भूतानां प्रयोजकः= प्रवर्तको भवति तेन भूतानां शरीररूपेण परिणामो भवतीत्यन्वयः, तदनेन ज्ञानेच्छादीनां शरीरातिरिक्तजीवगुणत्वं सिद्धमिति शरीरचैतन्यं निरस्तं वेदितव्यमित्याशयः । अत्र हेत्वन्तरमुक्तं सूचयति- आत्मेति, "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १-१-१०" "दर्शनस्पर्शनाभ्याम् ३-१-१" इत्यादिभिरात्मास्तित्वहेतुभिः, यदि भूतचैतन्यं

समानः प्रतिषेध इति । क्रियामात्रं क्रियोपरममात्रं चारम्भनिवृत्ती इत्यभिप्रेत्योक्तम्- "तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ३६" (इति). अन्यथा त्विमे आरम्भनिवृत्ती आख्याते. न च तथाविधे पृथिव्यादिषु दृश्येते तस्मादयुक्तम्- "तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ३६" इति ॥ ३९ ॥

भूतेन्द्रियमनसां समानः प्रतिषेधो मनस्तूदाहरणमात्रम्—

## यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४० ॥

"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १-१-१०" इत्यतः प्रभृति यथोक्तं संगृह्यते तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः, पारतन्त्र्यात्= परतन्त्राणि भूतेन्द्रियमनांसि- धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्तन्ते. चैतन्ये पुनः स्वतन्त्राणि स्युरिति, अकृता-

---

स्यात्तदा भूतातिरिक्तस्यात्मनः सत्त्वं न स्यादित्यात्मास्तित्वप्रतिपादकहेतुभिर्भूतचैतन्यप्रतिषेधो वेदितव्यः, शरीरचैतन्यपक्षे शरीरस्यानित्यत्वेनात्मनोप्यनित्यत्वं स्यादिति आत्मनित्यत्वहेतुभिरपि अनित्यस्य शरीरस्य चैतन्यम्= आत्मत्वं प्रतिषिद्धं वेदितव्यमित्यन्वयः, आत्मनित्यत्वहेतवश्च तृतीयाध्यायप्रथमाह्निके एकोनविंशतिसूत्रमारभ्य द्रष्टव्याः । शरीरचैतन्यस्योक्तं सामान्यप्रतिषेधं सूचयति- नेन्द्रियार्थेति, नेन्द्रियार्थेतिपूर्वोक्तसूत्रेण यो ज्ञानस्येन्द्रियादिगुणत्वप्रतिषेधः कृतः स शरीरगुणत्वेपि समान एव- शरीरविनाशानन्तरमपि ज्ञानस्य सत्त्वज्ञानात् तच्च पूर्वजन्मानुभूतस्यात्र स्मरणेनानुमीयते इति नेन्द्रियार्थेतिसूत्रेणापि शरीरचैतन्यप्रतिषेधो वेदितव्यः- ज्ञानस्यैव चैतन्यपदार्थत्वात् तस्य च शरीरेपि प्रतिषिद्धत्वादित्यर्थः । उक्तं निगमयति- क्रियामात्रमिति, पूर्वपक्षिणा आरम्भशब्देन क्रियामात्रं निवृत्तिशब्देन च क्रियाभावमात्रं शरीरवर्तिनमभिप्रेत्य= गृहीत्वा "तल्लिङ्गत्वात् ३६" इतिसूत्रेण तादृशप्रवृत्तिनिवृत्तिभ्यां शरीरे चैतन्यापत्तिः प्रदर्शिता सा च न संभवति- आरम्भनिवृत्तिशब्दयोरात्मवृत्तिप्रयत्नतदभावपरत्वादित्याह- अन्यथेति, आख्याते= व्याख्याते, अन्यथा= आत्मगुणपरत्वेन, तथाविधे= प्रयत्नतदभावलक्षणे प्रवृत्तिनिवृत्ती पृथिव्यादिभूतेषु शरीरादिषु न दृश्येते इति न शरीरस्य चैतन्यापत्तिरिति "तल्लिङ्गत्वात्" इति शरीरचैतन्यापादकं सूत्रमयुक्तमेवेत्युपसंहरति- तस्मादिति ॥ ३९ ॥

अग्रिमसूत्रमवतारयति- भूतेति, प्रतिषेधः= चैतन्यप्रतिषेधः, पूर्वग्रन्थेन शरीरस्य चैतन्यं प्रतिषिध्य प्रकृतसूत्रेण भूतेन्द्रियमनसां समानरूपेण= तन्त्रेण चैतन्यं प्रतिषिध्यते तत्र सूत्रे मनोग्रहणमुदाहरणार्थम्, मनसश्चैतन्यप्रतिषेधेन भूतेन्द्रियाणामपि चैतन्यप्रतिषेधो विज्ञेय इत्यर्थः । यथोक्तेति- यथोक्तहेतुत्वात्= "इच्छाद्वेष १-१-१०" इत्यादिसूत्रैरात्मनश्चैतन्यप्रतिपादको यो हेतुरुक्तस्तस्माद् मनसश्चैतन्यं निरस्यते- आत्मनश्चैतन्ये मनसश्चैतन्यस्य व्यर्थत्वात्, मनो हि परतन्त्रम्= आत्माधीनं चैतन्यं च स्वतन्त्रस्यैवात्मनो युक्तमिति पारतन्त्र्यादपि मनसश्चैतन्यं निरस्यते, अकृताभ्यागमात्= यदि मनसश्चैतन्यं स्यात्तदा मनसैव कर्म कृतं स्यात् तत्र मनसा कृतस्य कर्मणः फलं जीवेन भुक्तं स्यादिति जीवेनाऽकृतस्य कर्मणोऽभ्यागमः= फलभोगः प्राप्नोति स च न युक्तः- अन्यकृतकर्मणां फलस्याऽन्येन भोक्तुमशक्यत्वादिति मनसश्चैतन्ये अकृताभ्यागमदोषप्रसङ्गादपि मनसश्चैतन्यं नोपपद्यते, यथा मनसो न चैतन्यं तथोक्तहेतुभिरेव भूतेन्द्रियाणामपि चैतन्यप्रतिषेधो विज्ञेय इतिसूत्रार्थः । प्रथमहेतुं व्याचष्टे- इच्छेति, इत्यतः प्रभृति= उक्तदशमसूत्रमारभ्य "ज्ञानलिङ्गत्वात् २-१-२३" "दर्शनस्पर्शनाभ्याम् ३-१-१-" इत्यादिसूत्रैर्यथोक्तम्= यदुक्तमात्मचैतन्यप्रतिपादकं हेतुजातं तत्सर्वम् "यथोक्तहेतुत्वात्" इत्यनेन संगृह्यते तथा च तेन= उक्तेनात्मचैत्यन्यप्रतिपादकेन हेतुजातेनात्मनश्चैतन्ये सिद्धे भूतेन्द्रियमनसां चैतन्यस्य प्रतिषेधः सिद्ध इत्यन्वयः । द्वितीयहेतुमाह- पारतन्त्र्यादिति, एतद् व्याचष्टे- परतन्त्राणीति, भूतेन्द्रियमनांसि आत्मकृतप्रयत्नवशात् धारणादिक्रियासु प्रवर्तन्ते इति परतन्त्राणि, तस्मान्न चैतन्य-

भ्यागमाच= "प्रवृत्तिः= वाग्बुद्धिशरीरारम्भ इति १-१-१७" चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यते इति स्यात्, अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यते इति ॥ ४० ॥

अथायं सिद्धोपसंग्रहः—

## परिशेषाद् यथोक्तहेतूपपत्तेश्च ॥ ४१ ॥

'आत्मगुणो ज्ञानम्' इतिप्रकृतम्, परिशेषो नाम प्रसक्तप्रतिषेधे अन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः= भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते शिष्यते चात्मा तस्य गुणो ज्ञानमिति ज्ञायते, यथोक्तहेतूपपत्तेश्चेति- "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ३-१-१" इत्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधादिति। परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति।

---

युक्तानि, भूतम्= शरीरम्, व्यूहनम्= संग्रहः, विपक्षे बाधकमाह- चैतन्ये इति, चेतनस्य स्वतन्त्रत्वात्, भूतेन्द्रियमनसां च पारतन्त्र्यादपि चैतन्यं नोपपद्यते इत्यर्थः, कादाचित्कप्रवृत्त्या शरीरादीनां पारतन्त्र्यं स्पष्टमेवेत्यर्थः। तृतीयहेतुमाह- अकृतेति, एतद् व्याचष्टे- प्रवृत्तिरिति, इत्यनेन कर्मस्वरूपं प्रदर्शितम्, वाग्बुद्धिशरीराणामारम्भः= क्रियैव कर्मपदार्थस्तत्र भूतेन्द्रियमनसां चैतन्यपक्षे यत् कर्म तत् भूतेन्द्रियमनसामेव स्यात् तस्य च फलं सुखादिरूपं पुरुषेणोपभुज्यते इति परकृतकर्मणाम्= भूतादिकर्मणां फलस्य पुरुषेण= जीवेन भोगे चाकृताभ्यागमरूपो दोषः प्रसज्यते न चैतद्युक्तमित्यकृताभ्यागमदोषप्रसङ्गादपि भूतेन्द्रियमनसां चैतन्यं नोपपद्यते इत्यन्वयः। स्वपक्षे एतद्दोषस्याभावमाह- अचैतन्ये इति, भूतेन्द्रियमनसामचैतन्ये तु शरीरादिद्वारा संपादितं कर्म जीवस्यैव संभवति- चेतनत्वात् स्वतन्त्रत्वाच तथा च तत्साधनस्य= इन्द्रियादिकं कर्मसाधनं यस्य तादृशस्य पुरुषस्य स्वकृतकर्मणामेव फलोपभोगो न परकृतकर्मणामित्युपपद्यते इत्यकृताभ्यागमदोषो नास्तीति प्रतिपादितहेतुभिर्भूतेन्द्रियमनसां चैतन्याभावः सिद्ध इत्यर्थः। अत्र- "यथोक्तहेतुत्वादिति व्याचष्टे, "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १-१-१०" इत्यत आत्मलक्षणात्प्रभृति तल्लक्षणपरीक्षापर्यवसानं यावदुक्तं तत्संगृह्यते" इति तात्पर्यटीका ॥ ४० ॥

अग्रिमसूत्रमवतारयति- अथेति, एवं सिद्धस्य उपसंग्रहः= उपसंहारः इत्यर्थः। परिशेषादिति- भूतेन्द्रियमनसामुक्तरीत्या चैतन्यं नोपपद्यते इतिहेतोः परिशेषात्= पारिशेष्यात्= परिशिष्टो यो जीवस्तस्यैव चैतन्यम्, यथोक्तहेतूपपत्तेः= "दर्शनस्पर्शनाभ्याम् ३-१-१" इत्यादिसूत्रोक्तहेतूनामुपपत्तेश्च शरीराद्यतिरिक्तस्यैव जीवस्य चैतन्यं सिद्धमिति जीवे चैतन्योपसंहार इतिसूत्रार्थः। व्याचष्टे- आत्मेति, तदेतत् प्रकृतमर्थादुपलब्धं विज्ञेयम्, अष्टादशसूत्रादेतदारब्धम्। सूत्रोक्तं प्रथमहेतुं व्याचष्टे- परिशेष इति, यथा चैतन्यस्य प्रसक्तेषु भूतादिषु प्रतिषेधे सिद्धे अन्यत्र= भूताद्यतिरिक्ते चैतन्यस्याऽप्रसङ्गात्= अप्राप्तेः शिष्यमाणे जीवे संप्रत्ययः= उपपत्तिः संभवतीत्यन्वयः, अष्टादशसूत्रावतरणे यदुक्तम्- "कस्येयं बुद्धिरात्मेन्द्रियमनोर्थानां गुणः" इति तेनैव भूतादीनां प्रसक्तत्वं जीवस्य च शिष्यमाणत्वं विज्ञेयम्- तत्र सर्वेषां प्रकृतत्वादित्यर्थः। उक्तं व्याचष्टे- भूतेति, भूतेन्द्रियमनसामुक्तरूपेण चैतन्यस्य प्रतिषेधे कृते द्रव्यान्तरम्= द्रव्यान्तरे कालादौ तु चैतन्यं न प्रसज्यते- उपपत्त्यभावात्. आत्मा हि शिष्यते इति तस्यैवात्मनो ज्ञानम्= चैतन्यं गुण इतिज्ञायते इत्यन्वयः। द्वितीयहेतुं व्याचष्टे- यथोक्तेति, आत्मप्रतिपत्तिहेतूनाम्= आत्मसाधकहेतूनामप्रतिषेधात् आत्मसत्त्वं सिद्धम् आत्मा च चेतन एव शरीरादिषु चैतन्याऽसंभवादेव साध्यते इति आत्मसाधकहेतूनामुपपत्तेरपि ज्ञानस्यात्मगुणत्वं सिद्धमित्यर्थः। ननु यद्यात्म-

अथ वा "उपपत्तेश्च" इति हेत्वन्तरमेवेदम्— नित्यः खल्वयमात्मा यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायभेदात् स्वर्गे देवेषूपपद्यते. अधर्मं चरित्वा देहभेदाद् नरकेषूपपद्यते इति, उपपत्तिः= शरीरान्तरप्राप्तिलक्षणा. सा सति सत्त्वे नित्ये चाश्रयवती। बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यते इति। एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते. शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते, बुद्धिसंततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद् दीर्घमध्वानं संधावति. न कश्चित् शरीरप्रबन्धाद्विमुच्यते इति संसारापवर्गानुपपत्तिरिति। बुद्धिसंततिमात्रे च सत्त्वभेदात् सर्वमिदं प्राणिव्यवहारजातमऽप्रतिसंहितमऽव्यावृत्तमऽपरिनिष्ठितं च स्यात् ततः स्मरणाभावात्— नाऽन्यदृष्टमन्यः स्मरतीति, स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम्— 'अज्ञासिषममुमर्थं ज्ञेयम्' इति. सोयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति तच्चास्य ग्रहणं स्मरणमिति. तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ४१ ॥

---

साधकहेतुभिरेवात्मनश्चैतन्यं सिद्धं तदा सूत्रमिदं व्यर्थमेवेत्याशङ्क्य सूत्रसार्थक्यमाह— परिशेषेति, यथोक्तहेतूपपत्तिवचनम्= इदं सूत्रं परिशेषस्य= उक्तरीत्या पारिशेष्यादात्मचैतन्यस्य ज्ञापनार्थम् प्रकृतस्य= आत्मचैतन्यस्य= आत्मगुणो ज्ञानमित्यस्य स्थापनादिज्ञानार्थम्= सिद्धस्यैवात्मचैतन्यस्योपसंहारार्थं च सूत्रमिति न सूत्रानर्थक्यम्— पूर्वसाधितसूचकत्वादित्यर्थः।

वर्णकान्तरमाह— अथ वेति, उपपत्तेः= उत्पत्तेः। उपपत्तिमुपपादयति— नित्य इति, आत्मनित्यत्वे हेतुमाह— यस्मादिति, यद्यात्माऽनित्यः स्यात्तदा तस्यानेकयोनिप्राप्तिर्न स्यादित्यनेकयोनिप्राप्त्या नित्यत्वमात्मनः सिद्धमित्यर्थः, कायभेदात्— शरीरविनाशात्= शरीरत्यागानन्तरम्, उपपद्यते= उत्पद्यते, उपपत्तिपदार्थमाह— उपपत्तिरिति, शरीरान्तरप्राप्तिरेवोपपत्तिः सा चोपपत्तिः सत्त्वे= आत्मनि सति नित्ये चाश्रयवती= उपपद्यते, यद्यात्मा न स्याद् नित्यो वा न स्यात्तदा तस्य शरीरान्तरप्राप्तिरपि न स्यादिति शरीरान्तरप्राप्त्या आत्मनः सत्त्वं नित्यत्वं च सिद्धं. शरीरान्तरप्राप्तिकारणं च कर्म आत्मकर्तृकं स्वीकार्यम् कर्मकर्तृत्वं च ज्ञानं विना न संभवतीति ज्ञानस्यात्मगुणत्वं सिद्धमित्यर्थः। बौद्धमते शरीरान्तरप्राप्तेरनुपपत्तिमाह— बुद्धीति, निरात्मके= आत्मपदार्थरहिते बुद्धिप्रबन्धमात्रे= ज्ञानसंतानपक्षे तेषां ज्ञानानां क्षणिकत्वेन कालान्तरे स्वकृतकर्मफलभोगो नोपपद्यते अनेकशरीरयोगश्च नोपपद्यते इति बौद्धमते शरीरान्तरप्राप्तिर्निराश्रया जाता— अनित्यस्य तदाश्रयत्वासंभवाद् नित्यस्य चाभावादिति नोपपद्यते इत्यर्थः। स्वमते उपपत्तिमाह— एकेति, नित्यात्मपक्षे तु एकसत्त्वाधिष्ठानः= एकात्मसंबन्धी अनेकशरीरयोगलक्षणः संसार उपपद्यते संसारे चोपपन्ने संसारप्रबन्धस्योच्छेदलक्षणोऽपवर्गोप्युपपद्यते इत्यन्वयः। बौद्धमते संसारापवर्गयोरनुपपत्तिमाह— बुद्धिसंततीति, बौद्धमते एकसत्त्वानुपपत्तेः= नित्यपदार्थाभावात् ज्ञानानां क्षणिकत्वात् न कश्चित्= काचित् ज्ञानव्यक्तिर्दीर्घमध्वानं संधावति= दीर्घकालपर्यन्तं तिष्ठति येन तस्या अनेकशरीरैः संबन्धलक्षणः संसार उपपद्येत, संसाराभावात् संसारोच्छेदलक्षणोऽपवर्गोपि नोपपद्यते इति बौद्धमते संसारापवर्गयोरनुपपत्तिरित्यन्वयः। बौद्धमते लोकव्यवहारानुपपत्तिमप्याह— बुद्धीति, बौद्धमते सत्त्वभेदात्= ज्ञानानां क्षणिकत्वेन परस्परं भेदात् नित्यस्यात्मनोऽभावाच्च प्राणिनां सर्वमिदं व्यवहारजातम् अप्रतिसंहितम्= स्मृत्यविषयीभूतं स्यात्— अन्येन ज्ञानेन कृतस्य व्यवहारस्यान्येन ज्ञानेन स्मर्तुमशक्यत्वात्, स्मरणे सति 'इदं मे कर्तव्यमिदं परस्य' इति व्यावृत्तिः संभवति स्मरणाभावे चैषा व्यावृत्तिरपि न संभवतीति सर्वं व्यवहारजातमऽव्यावृत्तम्= संकीर्णं स्यात् ततश्चापरिनिष्ठितम्= अव्यवस्थितं स्यात् अपरिपूर्णम्= असमाप्तं वा स्यात्— स्मरणाभावे व्यवस्थाया अप्यसंभवादित्यन्वयः, उक्तदोषत्रयेपि साधारणं हेतुमाह— स्मरणाभावादिति, ततः= सत्त्वभेदात्। क्षणिकानां ज्ञानानां स्मरणाभावेपि हेतुमाह— नान्येति। स्मृतिलक्षणमाह— स्मरणमिति, समानेन= एकेन='पूर्वापरकालस्थिरेण। स्मृतिमुदाहरति— अज्ञासिषमिति,

## स्मरणं त्वात्मनः- ज्ञस्वाभाव्यात् ॥ ४२ ॥

उपपद्यते इति, आत्मन एव स्मरणं न बुद्धिसंततिमात्रस्येति, तुशब्दोऽवधारणे। कथम्? ज्ञस्वाभाव्यात्= ज्ञ इत्यस्य स्वभावः= स्वो धर्मः- अयं खलु 'ज्ञास्यति जानाति अज्ञासीत्' इति त्रिकालविषयेणाऽनेकेन ज्ञानेन संबध्यते. तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयम्- 'ज्ञास्यामि जानामि अज्ञासिषम्' इति वर्तते. तद् यस्यायं स्वो धर्मस्तस्य स्मरणं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥ ४२ ॥

स्मृतिहेतूनामऽयौगपद्याद् युगपदस्मरणमित्युक्तम्, अथ केभ्यः स्मृतिरुत्पद्यते इति?, स्मृतिः खलु—

---

अमुं ज्ञेयमर्थमज्ञासिषमित्यन्वयः। उपसंहरन् स्वपक्षे स्मरणोपपत्तिमाह- सोयमिति, सोयम्= ज्ञानाद्यतिरिक्तः एकः= नित्यो ज्ञाता= आत्मा पूर्वज्ञातं पदार्थं गृह्णाति= ग्रहीतुं शक्नोति, अस्य= आत्मनो यत् पूर्वज्ञातस्य ग्रहणम्= ज्ञानं तत् स्मरणमित्युच्यते इति हेतोस्तत्= स्मरणं निरात्मके बुद्धिप्रबन्धमात्रे= ज्ञानसंतानमात्रे= बौद्धमते नोपपद्यते- तत्र ज्ञानानां क्षणिकत्वेन पूर्वज्ञातग्राहकत्वासंभवात्- अन्यज्ञातस्यान्येन स्मरणासंभवात् नित्यात्मनश्चास्वीकारादिति निरात्मवादे दोषबाहुल्यात् ज्ञानाद्यतिरिक्तो नित्यश्चेतनो ज्ञानगुणक आत्मा स्वीकार्य इति सिद्धमित्यर्थः। अत्र- "अप्रतिसंहितमिति- पूर्वेद्युरर्धकृतानांमपरेद्युः परिसमापना दृष्टा- 'मयाऽऽरब्धं मयैव परिसमापनीयम्' इतिप्रतिसंधाने. अप्रतिसंधाने तु न परिसमापयेयुः, परिसमापने वा चैत्रारब्धमपि मैत्रः परिसमापयेत् यतः स्वयमारब्धात् परारब्धमव्यावृत्तम्= अविशिष्टम्- स्वस्यापि परत्वात्, अपरिनिष्ठं च कर्मजातं स्यात् तथा हि- वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ एवं राजसूये राजैव न ब्राह्मणवैश्यौ एवं सोमसाधनके यागे ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ शूद्रश्चानधिकृत एवेति परिनिष्ठा सा बुद्धिसंततिमात्रे न स्यात्, कुतः? सल्लक्षणानां सर्वेषामेव त्रैलोक्यवैलक्षण्येन भेदात्. अन्यापोहसामान्यस्य च निवर्तितत्वादित्यर्थः, अप्रतिसंहितत्वे हेतुमाह- स्मरणाभावादिति" इति तात्पर्यटीका ॥ ४१ ॥

ननूक्तं स्मरणमपि बुद्धिधर्म एव किं न स्यादित्याशङ्क्याह- स्मरणमिति, स्मरणं त्वात्मनः= आत्मधर्म एव- आत्मनो ज्ञस्वाभाव्यात्= ज्ञातृत्वादित्यन्वयः, ज्ञानसमानाधिकरणत्वात् स्मरणं ज्ञातृधर्म एव न तु ज्ञानधर्मः- ज्ञानविशेषस्य स्मरणस्य ज्ञानधर्मत्वासंभवादिति तादृशस्मरणाश्रयत्वेन ज्ञानातिरिक्त आत्मा सिद्ध इतिसूत्रार्थः। व्याचष्टे- उपपद्यते इति, शेष इतिशेषः, आत्मनो ज्ञस्वाभाव्यात् स्मरणमुपपद्यते इत्यर्थः, षष्ठ्यर्थः कर्तृत्वम्। सूत्रप्रतिपाद्यमाह- आत्मन इति,। उक्ते हेतुं जिज्ञासते- कथमिति। हेतुमाह- ज्ञेति, हेतुवाक्यं व्याचष्टे- ज्ञ इति, ज्ञ इत्यस्य= ज्ञातुरित्यर्थः, ज्ञातुर्ज्ञानं स्वभावः= स्वधर्मः स्मरणमपि ज्ञानमेवेति ज्ञातुरात्मन एव धर्मो न ज्ञानस्येत्यर्थः। आत्मनो ज्ञानस्वभावत्वमाह- अयमिति, अयम्= आत्मा, त्रिकालविषयेण= त्रैकालिकेन, ज्ञानेन संबध्यते= ज्ञानवान् भवति। आत्मनस्त्रैकालिकज्ञानवत्त्वे प्रत्यक्षं प्रमाणयति- तच्चेति, अस्य= आत्मनः, प्रत्यात्मवेदनीयम्= सर्वजनप्रत्यक्षं वर्तते इत्यन्वयः। त्रैकालिकज्ञानमुदाहरति- ज्ञास्यामीति। उपसंहरति- तदिति, यस्य= आत्मनोऽयम्= ज्ञानपदार्थः स्वो धर्मस्तस्यैवात्मनः स्मरणमपि धर्मो न तु निरात्मकस्य बौद्धस्वीकृतस्य बुद्धिसंतानस्य- स्मरणस्यापि ज्ञानरूपत्वात्, धर्मत्वं च समवायेन विज्ञेयम्, तदनेनाष्टादशसूत्रमारभ्य प्रबन्धेन ज्ञानस्याऽऽत्मगुणत्वं सिद्धमित्यर्थः ॥ ४२ ॥

॥ इति बुद्धेरात्मगुणत्वप्रतिपादनं समाप्तम् ॥

---

अग्रिमसूत्रमवतारयति- स्मृतीति, स्मरणायौगपद्ये स्मरणहेतूनामयौगपद्यमिति प्रणिधानलिङ्गादीति सूत्रेणोक्तं तत्र कानि स्मरणकारणानीति जिज्ञासते- अथेति। स्मृतिः खलु प्रणिधानादिलक्षणेभ्यो

**प्रणिधाननिबन्धाऽभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाऽऽश्रयाऽऽश्रितसम्बन्धाऽऽनन्तर्यवियोगैककार्यविरोधाऽतिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयाऽर्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४३ ॥**

सुस्मूर्षया मनसो धारणं प्रणिधानम्– सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम् १, निवन्धः खल्वेकग्रन्थोपयमोर्थानाम्– एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतवः आनुपूर्व्येणेतरथा वा भवन्तीति, धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिक्षेपो निवन्ध इति २, अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिः अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते स च स्मृतिहेतुः समान इति ३, लिङ्गं पुनः संयोगि समवायि एकार्थसमवायि विरोधि चेति, संयोगि यथा धूमोऽग्नेः गोर्विषणं पाणिः पादस्य रूपं स्पर्शस्य अभूतं

---

निमित्तेभ्यो जायते इति सूत्रेणान्वयः। स्मृतिकारणान्याह– प्रणिधानेति, प्रणिधानादिभ्यः सप्तविंशतिभ्यो निमित्तेभ्यः= कारणेभ्यः स्मृतिर्जायते इतिसूत्रान्वयः, अन्यत्सर्वं भाष्ये स्पष्टमेव। व्याचष्टे– सुस्मूर्षयेति, सुस्मूर्षया= स्मरणेच्छया मनसो यद् धारणम्= एकाग्रीकरणम्= एकत्र नियोजनम्= मनसा चिन्तनं तदेव प्रणिधानम्, प्रणिधानस्य स्मृतिकारणत्वमाह– सुस्मूर्षितेति, सुस्मूर्षितस्य= स्मरणेच्छाविषयस्य यल्लिङ्गं तच्चिन्तनम् अर्थस्य= लिङ्गिनः स्मृतिकारणं भवति यथैकदेशचिन्तनेन देशिनः स्मरणं जायते इत्यर्थः १। निवन्धलक्षणमाह– निवन्धेति, अर्थानाम्= प्रतिपाद्यपदार्थानां य एकग्रन्थे उपयमः= प्रतिपादनं तदेव निवन्धः, निवन्धस्य स्मृतिकारणत्वमाह– एकेति, आनुपूर्व्येण= प्रतिपादनक्रमेण, इतरथा= अक्रमेण। अत्र– "यथाऽत्रैव प्रमाणादयोऽर्था एकग्रन्थोपात्ता अन्योन्यस्मृतिहेतवः. आनुपूर्व्या वा यथा प्रमाणपदार्थं स्मृत्वा प्रमेयं स्मरति, इतरथा वा= यथा निग्रहस्थानानां स्मृत्वा प्रमाणानां स्मरति" इतितात्पर्यटीका। निवन्धस्य स्वरूपान्तरमाह– धारणेति धारणाशास्त्रकृतः= योगशास्त्राभ्यासजन्यसंस्कारकृतो यो निक्षेपः= समारोपो यथा सूर्यादौ मधुत्वाद्यारोपः स निवन्धपदार्थस्तेनापि स्मरणं जायते, यथा च मुखे चन्द्रसमारोपात् चन्द्रदर्शनेन मुखस्मरणं जायते इत्यादि, अत्र– "धारणाशास्त्रं जैगीषव्यादिप्रोक्तं तत्कृतो ज्ञातेष्वेव वस्तुषु= नाडीवक्त्रहृत्पुण्डरीककण्ठकूपनासाग्रतालुललाटब्रह्मरन्ध्रादिषु स्मर्तव्यानां बीजरूपसंस्थानाऽस्त्राऽऽभरणभूतानां च देवतानामुपनिक्षेपः= समारोपः तथा च तत्र देवताः समारोपितास्तास्तत्तदवयवग्रहणात् स्मर्यन्ते इत्यर्थः" इतितात्पर्यटीका, योगशास्त्रविषयोऽयं नास्मत्प्रत्यक्ष इत्यलम् २। अभ्यासलक्षणमाह– अभ्यासेति, समाने= एकस्मिन्, अभ्यावृत्तिः= पुनःपुनरावृत्तिः, एकस्य पदार्थस्य पुनः पुनश्चिन्तनमेवाभ्यासः, अत्र चाभ्यासशब्देनैतादृशाभ्यासजन्यः संस्कारो ग्राह्यः स च समानः= सर्वस्मृतिहेतुरित्यर्थः ३। लिङ्गमाह– लिङ्गमिति, लिङ्गं चतुर्धा विभजते– संयोगीति, उदाहरति– यथेति, अग्निधूमयोः संयोगसंबन्धादग्नेर्धूमः संयोगि लिङ्गं धूमेन वह्निस्मृतिश्च स्पष्टैव। समवायिलिङ्गमुदाहरति– गोरिति, अवयवावयविनोः समवायस्वीकाराद् विषाणलक्षणोऽवयवो गोरवयविनः समवायि लिङ्गं अवयवदर्शनेनावयविस्मृतिश्च प्रसिद्धैव। एकार्थसमवायिलिङ्गमुदाहरति– पाणिरिति, पाणिपादौ एकार्थस्य= शरीरस्य समवायवन्तौ इत्येतादृशेनैकार्थसमवायेन पादस्य पाणिर्लिङ्गं तत्र पाणिदर्शनेन पादस्मृतिः संभवति, रूपस्पर्शौ चैकस्मिन् समवायवन्तौ इत्येतादृशेनैकार्थसमवायेन स्पर्शस्य रसस्य वा रूपं लिङ्गं तत्र रूपदर्शनेन रूपसमानाधिकरणस्य रसादेः स्मृतिः स्पष्टैव, विरोधिलिङ्गमुदाहरति– अभूतमिति, भूताभूतयोः परस्परं विरुद्धत्वाद् भूतस्याऽभूतं विरोधि लिङ्गं तत्राभूतेन= भविष्यता दुःखादिना भूतस्य= पूर्वजातस्य दुःखादेः स्मृतिर्भवत्येव, अत्र– "एकस्य खल्वत्रावयविनः समवायः पादे च पाणौ च तौ पाणिपादावेकार्थसमवायवन्तौ तत्रैकेनैकार्थसमवायवता प्रत्यक्षेणाऽप्रत्यक्ष

भूतस्येति ४, लक्षणं पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः- विदानामिदं गर्गाणामिदमिति ५, सादृश्यं चित्रगतं प्रतिरूपकं देवदत्तस्येत्येवमादि ६, परिग्रहात्- स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते ७, आश्रयात्- ग्रामण्या तदधीनं स्मरति ८, आश्रितात्- तदधीनेन ग्रामण्यमिति ९, संबन्धात्- अन्तेवासिना युक्तं गुरुं स्मरति ऋत्विजा याज्यमिति १०, आनन्तर्यात्- इतिकरणीयेष्वर्थेषु ११, वियोगात्- येन विप्रयुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति १२, एककार्यात्- कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृतिः १३, विरोधात्- विजिगीषमाणयोरन्यतरदर्शनादन्यतरः स्मर्यते १४, अतिशयात्- येनातिशय उत्पादितः १५, प्राप्तेः- यतो येन किंचित् प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति १६, व्यवधानात्- कोशादिभिरसिप्रभृतीनि स्मर्यन्ते १७, सुखदुःखाभ्यां तद्धेतुः स्मर्यते १९, इच्छाद्वेषाभ्यां यमिच्छति यं च द्वेष्टि तं स्मरति २१, भयात्- यतो बिभेति २२, अर्थित्वात्-येनार्थी भोजनेनाऽऽच्छादनेन वा २३, क्रियया- रथेन रथकारं स्मरति २४, रागात्- यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति २५,धर्मात् जात्यन्तरस्मरणम् इह चाधीतश्रुतावधारणमिति २६, अधर्मात् प्रागनुभूतदुःखसाधनं स्मरति२७, न चैतेषु निमित्तेषु युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति । निदर्शनं चेदं स्मृतिहेतूनां न परिसंख्यानमिति ४३

---

एकः स्मर्यते इति, यदा त्वेकस्मिन्नर्थे समवाय इत्यर्थस्तदा रूपं स्पर्शस्येत्युदाहरणम्, स्वाभाविकाऽविनाभावयुक्तं लिङ्गं सांकेतिकं तु चिह्नमितिविशेषः” इतितात्पर्यटीका ४ । लक्षणमाह- लक्षणमिति. चिह्नमित्यर्थः, पशुकण्ठस्थं विदानां चिह्नं विदानां गर्गाणां च चिह्नं गर्गाणां गोत्रस्य= जातेः स्मृतिजनकं भवति- इदं चिह्नं विदानामित्यादिरूपेणेत्यन्वयः ५। सादृश्यमाह- सादृश्यमिति, चित्रगतम्= चित्रपटगतम्. प्रतिरूपकम्= आकृतिः, देवदत्तचित्रेण देवदत्तस्मृतिर्जायते ६ । परिग्रहात् स्मृतिमाह- परिग्रहादिति, स्वेन= तत्पदार्थेन, स्वं तद्वस्तु ७। आश्रयात् स्मृतिमाह- आश्रयादिति, ग्रामण्या= ग्रामनायकेन. ग्रामनायको हि स्वाधीनस्याश्रयः ८। आश्रितात् स्मृतिमाह- आश्रितादिति, तदधीनेन= ग्रामनायकाधीनपदार्थेन. ग्रामण्यम्= ग्रामनायकं स्मरति अधीनं चाधीश्वराश्रितमिति प्रसिद्धमेव ९। संबन्धात् स्मृतिमाह- संबन्धादिति, छात्रदर्शनेन तद्गुरोः ऋत्विग्दर्शनेन च तद्यजमानस्य या स्मृतिः सा तत्संबन्धादेवेत्यर्थः १०। आनन्तर्यात् स्मृतिमाह- आनन्तर्यादिति, इतिकरणीयेषु= इतिकर्तव्यताप्रविष्टेषु= कर्तव्येषु पदार्थेषु= कार्येषु मध्ये प्रथमादनन्तरं या द्वितीयस्य स्मृतिः साऽऽनन्तर्यादेव यथोपाकरणानन्तरं नियोजनस्य, वह्निप्रज्वालनानन्तरं च स्थाल्यधिश्रयणस्य स्मृतिः ११। वियोगात् स्मृतिमाह- वियोगादिति, तद्वियोगप्रतिसंवेदी= तद्वियोगदुःखानुभवी तं प्रियं वियुक्तं वियोगात् स्मरति १२। एककार्यात् स्मृतिमाह- एकेति, एकस्य वीणावादकस्य दर्शनाद् या द्वितीयस्य वीणावादकस्य स्मृतिः सा एककार्यादेव= समानकार्यकर्तृत्वादेव जायते १३। विरोधात् स्मृतिमुदाहरति- विरोधादिति १४। अतिशयात् स्मृतिमाह- अतिशयादिति, येन यस्मिन्नर्थेऽतिशय उत्पादितस्तत्प्रकरणे या तत्स्मृतिः सा तादृशाऽतिशयादेव जायते यथा सिताराख्यवीणाप्रकरणे मत्संगीतगुरूणां श्रीमदमृतसेनमहोदयानाम्१५। प्राप्तेः स्मृतिमुदाहरति-प्राप्तेरिति, येन=जीवेन१६। व्यवधानात् स्मृतिमाह- व्यवधानादिति. व्यवधायकत्वा दित्यर्थः,कोशः= असिस्थानम् १७। सुखदुःखाभ्यां तद्धेतोः स्मृतिमाह- सुखेति, तद्धेतुः=सुखदुःखहेतुः १९। इच्छाद्वेषाभ्यां तद्विषययोः स्मृतिमाह- इच्छेति २१। भयात् स्मृतिमाह- भयादिति, तं स्मरतीतिशेषः २२। अर्थित्वात् स्मृतिमाह- अर्थित्वादिति, येन= यस्य भोजनस्य वस्त्रस्य वार्थी भवति तं पदार्थं स्मरति २३। क्रियया= कार्येण कर्तृस्मृतिमाह- क्रिययेति, रथो रथकारकार्यमेव २४। रागात् स्मृतिमाह- रागादिति २५। धर्मात् स्मृतिमाह- धर्मादिति, जात्यन्तरस्मरणम्= पूर्वजन्मवृत्तान्तस्मरणम्, इह= वर्तमानजन्मनि, एतादृशं स्मरणं हि धर्मादेव संभवति यथा मदीयविद्यागुरूणां श्रीगङ्गाधरशास्त्रिचरणानामनेकशास्त्र-

अनित्यायां च बुद्धौ उत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्चानित्यानां संशयः— किमुत्पन्नापवर्गिणी बुद्धिः शब्दवत्? आहो स्वित् कालान्तरावस्थायिनी कुम्भवत्? इति, उत्पन्नापवर्गिणीति पक्षः परिगृह्यते, कस्मात्?—

## कर्मानवस्थायिग्रहणात् ॥ ४४ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति– क्षिप्तस्येषोरापतनात् क्रियासंतानो गृह्यते, प्रत्यर्थनियमाच्च बुद्धीनां क्रियासंतानवद् बुद्धिसंतानोपपत्तिरिति, अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः= अवस्थिते च कुम्भे गृह्यमाणे संतानेनैव बुद्धिर्वर्तते प्राग् व्यवधानात्. तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते, कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेपि प्रत्यक्षमवतिष्ठेतेति। स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने– संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात्। यश्च मन्येत– अत्र-

---

विषयकं स्मरणं यत्तैः पुस्तकमगृहीत्वैवानेकानि शास्त्राण्यध्यापितानि २६। अधर्मात् स्मृतिमाह– अधर्मादिति, प्रागनुभूतदुःखादिस्मरणस्याधर्म एव कारणम् २७। पर्यवसितमाह– न चेति, एतेषां स्मृतिनिमित्तानां यौगपद्यं न संभवतीति स्मृतीनामपि यौगपद्यं न संभवतीति पूर्वोक्तं समर्थितमित्यर्थः, अत्रोक्तानि बहूनि निमित्तानि ज्ञातान्येव स्मृतिजनकानि भवन्ति ज्ञानं च तेपामनेकेषां युगपन्न संभवतीति संवेदनानीत्युक्तम्। उपसंहरति– निदर्शनं चेति, परिसंख्यानम्= इयत्ताकथन॰ ' तथा चोन्मादादीनामपि स्मृतिकारणत्वं विज्ञेयम् ॥ ४३ ॥

अग्रिमप्रकरणमारभते– अनित्यायामिति, बुद्धेरनित्यत्वमेतदाह्निकारम्भे एव प्रतिपादितम्, अनित्यानां च द्वैविध्यमस्ति कालान्तरावस्थायित्वं यथा घटादीनाम् उत्पन्नापवर्गित्वम्= तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्= क्षणिकत्वं यथा शब्दादीनां तथा चानित्यानामुत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्चाऽनित्यायां बुद्धौ संशय इत्यन्वयः। संशयमाह– किमिति। स्वपक्षमाह– उत्पन्नेति। अत्र हेतुं जिज्ञासते– कस्मादिति। सूत्रेण हेतुमाह– कर्मेति, बुद्धेः कर्मवत्= क्रियावद् अनवस्थायित्वग्रहणात् क्षणिकत्वं सिद्धमिति सूत्रार्थः। व्याचष्टे– कर्मण इति, अनवस्थायिनः= क्षणिकस्यापि कर्मणो यथा ग्रहणं भवति तथा बुद्धेरपीत्यर्थः। स्वाभिप्रायमाह– क्षिप्तस्येति, आपतनात्= पतनपर्यन्तम् इषोरुत्तरोत्तरदेशगमनानुकूलक्रियाणां संतानो गृह्यते– एकया क्रियया तादृशदूरदेशपर्यन्तं गमनासंभवात् क्रियासंताने सिद्धे तादृशक्रियाणां क्षणिकत्वं प्राप्तम्– पूर्वक्रियानाशं विना तत्रान्यक्रियाया असंभवादित्यर्थः। प्रकृतमाह– प्रत्यर्थेति, बुद्धीनां प्रत्यर्थनियमात्= विषयभेदेन भेदात्, एकस्यापि पदार्थस्य क्षणभेदेन भेदात् एकविषयकबुद्धिस्थलेपि इष्वादिषु क्रियासंतानवदात्मनि बुद्धिसंतानस्योपपत्तिस्तत्र पूर्वबुद्धेर्विनाशं विनाऽन्या बुद्धिर्न संभवतीति बुद्धीनां क्षणिकत्वं सिद्धमित्यर्थः। बुद्धेः क्षणिकत्वं स्पष्टमाह– अवस्थितेति, अवस्थितग्रहणे= स्थिरपदार्थग्रहणदशायामपि तस्य स्थिरपदार्थस्य व्यवधीयमानस्य= व्यवधानवतः= व्यवधाने जाते तत् प्रत्यक्षं निवर्तते तेन प्रत्यक्षस्य क्षणिकत्वं प्राप्तम् अन्यथा व्यवधाने जातेपि प्रत्यक्षमवतिष्ठेत न चावतिष्ठते इति क्षणिकत्वं सिद्धमित्यर्थः। उक्तं व्याचष्टे– अवस्थिते चेति, व्यवधानात् प्राक् अवस्थितग्रहणे बुद्धिः संतानेन= बुद्धिसन्तानः= अनेकबुद्धिशृङ्खला वर्तते बुद्धिसंताने स्वीकृते च बुद्धीनां क्षणिकत्वं प्राप्तम् अन्यथैकबुद्धिसत्त्वे बुद्धिसंतानो न स्यात्, तेन= बुद्धीनां क्षणिकत्वेनैव व्यवहिते= विषयव्यवधाने जाते प्रत्यक्षं निवर्तते इत्यन्वयः। विपक्षे बाधकमाह– कालान्तरेति, बुद्धेः कालान्तरावस्थाने= कालान्तरावस्थायित्वे= अक्षणिकत्वे दृश्यस्य व्यवधाने जातेपि पूर्वजातं प्रत्यक्षमवतिष्ठेत न चावतिष्ठते इति क्षणिकत्वं सिद्धमित्यर्थः। ननु यदि बुद्धिः स्थिरा न स्यात्तदा कालान्तरे तादृशबुद्धिविषयस्य स्मृतिर्न स्यात्– ज्ञातविषयकं हि ज्ञानं स्मृतिरिति ज्ञानस्य स्मृतिविषयविशेषणत्वं

तिष्ठते बुद्धिः- दृष्टा हि बुद्धिविषये स्मृतिः सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति, तदिदमलिङ्गम्, कस्मात्?. बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति ॥

हेत्वभावादयुक्तमितिचेत् ? बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः[११] ॥

यावदवतिष्ठते बुद्धिस्तावदसौ बोद्धव्यार्थः प्रत्यक्षः प्रत्यक्षे च स्मृतिरनुपपन्नेति ॥ ४४ ॥

अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्संपाते रूपाव्यक्तग्रहणवत् ॥४५॥

यद्युत्पन्नावर्गिणी बुद्धिः? प्राप्तम् अव्यक्तं बोद्धव्यस्य ग्रहणं यथा विद्युत्संपाते वैद्युतस्य प्रकाशस्याऽनवस्थानादव्यक्तं रूपग्रहणमिति. व्यक्तं तु द्रव्यणां ग्रहणं तस्मादयुक्तमेतदिति॥४५॥

हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४६ ॥

---

प्राप्तं विशिष्टबुद्धौ च विशेषणज्ञानं कारणं बुद्धेश्च नाशे जाते स्मृतिविषयविशेषणत्वेन ज्ञानं न संभवतीति स्मृत्युपपत्त्यर्थं बुद्धेः स्थिरत्वं स्वीकार्यमित्याशङ्क्याह किं वा कारणं विना कार्यं न भवतीति स्मृतिकारणीभूताया बुद्धेः स्थिरत्वं स्वीकार्यं स्मृतिसंपत्त्यर्थमित्याशङ्क्याह- स्मृतिरिति, बुद्ध्यवस्थाने= बुद्धिस्थिरत्वे । उक्ते हेतुमाह- संस्कारस्यैति, बुद्धिजन्यसंस्कारेण स्मृतिर्जायते न बुद्ध्येति न स्मृत्युपपत्त्यर्थं बुद्धेः स्थिरत्वापेक्षेत्यर्थः, स्मृतिविषयस्य च ज्ञानं न विशेषणं किं तूपलक्षणमेवेति न क्षणिकत्वे कोपि दोषः । पूर्वपक्षिमतमनुवदति- यश्चेत्यादिना, अवतिष्ठते= कालान्तरावस्थायिनी, अत्र प्रत्यक्षं प्रमाणयति- दृष्टेति, सा= स्मृतिः, अनित्यायाम्= विनष्टायाम् । घटविषयकबुद्धिं विना घटस्मृतिर्न भवतीत्यन्वयव्यतिरेकाभ्यामेव बुद्धेः स्मृतिकारणत्वं सिद्धं कारणं विना च कार्यं न भवतीतिप्रसिद्धमेवेति स्मृतिसिद्ध्यर्थं बुद्धेरवस्थितत्वं स्वीकार्यमित्यर्थः । परिहरति- तदिदमिति, इदम्= स्मरणं बुद्धिस्थिरत्वे लिङ्गं न संभवतीत्यर्थः । उक्ते हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- बुद्धिज इति, संस्कारश्चात्मगुण इतिप्रसिद्धमेव । वस्तुतस्तु पुनरुक्तिरियम् ॥

ननु बुद्धेः क्षणिकत्वमयुक्तम्- हेत्वभावात्= बुद्धिजन्यसंस्कारेण स्मृतिर्जायते न बुद्ध्येत्यत्र नियामकाभावादित्याशङ्कते- हेत्वभावादिति। उत्तरमाह- बुद्धीति, यद्यवतिष्ठते बुद्धिस्तदा बुद्धेरवस्थानात् प्रत्यक्षमप्यवतिष्ठेत तथा च घटप्रत्यक्षे जाते प्रत्यक्षस्थित्या घटस्य प्रत्यक्षत्वमेव स्यादिति स्मृत्यभावः प्राप्तः- प्रत्यक्षे विद्यमाने सति स्मृतेरसंभवात् तथा च स्मृत्युपपत्त्यर्थमपि बुद्धेरनित्यत्वं क्षणिकत्वं च स्वीकार्यमित्यर्थः । स्वयं व्याचष्टे- यावदिति । प्रत्यक्षे च विद्यमाने सति स्मृतिर्न संभवतीत्यर्थः । बोद्धव्यार्थः= बुद्धिविषयः पदार्थः । स्पष्टमन्यत् ॥ ४४ ॥

बुद्धेः क्षणिकत्वेऽनुपपत्तिमाह- अव्यक्तेति, यथा विद्युत्संपाते= विद्युत्प्रकाशे रूपस्याऽव्यक्तम्= अस्पष्टं ग्रहणं भवति- विद्युत्प्रकाशस्य क्षणिकत्वात् तथा यदि बुद्धिरपि क्षणिकी स्यात्तदा बुद्धेरनवस्थायित्वात्= क्षणिकत्वाद् घटादीनां ग्रहणमव्यक्तं स्यात्- व्यक्तग्रहणस्य प्रकाशकस्थित्यधीनत्वात्, न चैवमस्ति किं तु घटादीनां ग्रहणं व्यक्तमेव भवति- सर्वयोग्यधर्मविशिष्टप्रकाशादिति व्यक्तग्रहणेन बुद्धेः स्थिरत्वं प्राप्तमिति सूत्रार्थः । व्याचष्टे- यदीति, यथा विद्युत्संपाते विद्युत्प्रकाशस्य क्षणिकत्वाद् रूपग्रहणमव्यक्तमेव भवति तथा यदि बुद्धिरपि उत्पन्नापवर्गिणी= क्षणिकी स्यात्तदा बोद्धव्यस्य= घटादेर्ग्रहणमव्यक्तं प्राप्तम्= स्यात्- क्षणिकप्रकाशेन व्यक्तग्रहणोत्पत्तेरसंभवात्- व्यक्तग्रहणस्यानेकक्षणसापेक्षत्वात्, न चाव्यक्तं ग्रहणं किं तु द्रव्याणां ग्रहणं व्यक्तमेव भवति तच बुद्धेः स्थिरत्वे एव संभवति तस्मादेतत्= बुद्धेः क्षणिकत्वमयुक्तमेवेत्यर्थः ॥ ४५ ॥

उक्ते दोषमाह- हेत्विति, त्वया पूर्वपक्षिणा यद् बुद्धेः क्षणिकत्वं प्रतिषेद्धव्यमस्ति तत्रैव त्वया हेतुः= दृष्टान्त उपात्तः= प्रदर्शित इति प्रतिषेद्धव्यस्य= बुद्धिक्षणिकत्वस्याऽभ्यनुज्ञा= स्वीकारापत्तिः

'उत्पन्नापवर्गिणी बुद्धिः' इति प्रतिषेद्धव्यम्. तदेवाऽभ्यनुज्ञायते- "विद्युत्संपाते रूपाऽव्यक्तग्रहणवत्" इति ॥ ४६ ॥

यत्राऽव्यक्तग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति—

ग्रहणहेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात् ॥

यदिदं क्वचिदव्यक्तं क्वचिद् व्यक्तं ग्रहणमऽयं विकल्पो ग्रहणहेतुविकल्पात्=-यत्रानवस्थितो ग्रहणहेतुस्तत्राऽव्यक्तं ग्रहणम् यत्रावस्थितस्तत्र व्यक्तं न तु बुद्धेरऽवस्थानाऽनवस्थानाभ्यामिति। कस्मात्?- अर्थग्रहणं हि बुद्धिः= यत् तदर्थग्रहणमऽव्यक्तं व्यक्तं वा बुद्धिः सेति, विशेषाग्रहणे च सामान्यग्रहणमऽव्यक्तग्रहणं तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात्. यत्र सामान्यधर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद् व्यक्तं ग्रहणं. यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम्, सामान्यधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरम्, तत्र यद् ग्रहणं न भवति तद् ग्रहणनिमित्ताभावाद् न तु बुद्धेरनवस्थानादिति ।

---

प्राप्नोति ते वैपरीत्यमापन्नं बुद्धेश्च क्षणिकत्वं सिद्धमिति सूत्रार्थः, अपसिद्धान्तश्चात्र निग्रहस्थानम् । व्याचष्टे- उत्पन्नेति, स्वयेतिशेषः । तदेव= प्रतिषेद्धव्यं बुद्धिक्षणिकत्वमेव । अभ्यनुज्ञावाक्यमाह- विद्युदिति, तदेतत् पूर्वसूत्रे व्याख्यातम् । तथा च त्वदुपपादनेनैव बुद्धेः क्षणिकत्वं सिद्धं विद्युत्प्रकाशवदित्यर्थः । उत्पन्नापवर्गिणी= उत्पत्तिविनाशशालिनी= क्षणिकीतियावत् । स्पष्टमन्यत् । वस्तुतस्तु नेदं समाधानं समाहितम्- प्रकृते घटादिग्रहणस्य स्पष्टत्वेन तत्कारणीभूतस्य बुद्धिस्थिरत्वस्य प्राप्तस्य निरस्तत्वाभावाद् विद्युत्प्रकाशस्य क्षणिकत्वेन बुद्धेः क्षणिकत्वासंभवाच्चेति विभाव्यम् ॥ ४६ ॥

ननु यत्र व्यक्तं ग्रहणं तत्र बुद्धेः स्थिरत्वेपि यत्राव्यक्तं ग्रहणं तत्र तु बुद्धिरुत्पन्नापवर्गिणी= क्षणिकी बुद्धेः क्षणिकत्वं विना तज्जन्यस्य ग्रहणस्य= विषयप्रतिभासस्याव्यक्तत्वासंभवादिति बुद्धेर्द्वैविध्यं स्वीकार्यमित्याह- यत्रेति, बुद्धेः स्थिरत्वमभ्युपगम्यायं पूर्वपक्षः, वस्तुतस्तु इतः पूर्वं बुद्धेः स्थिरत्वप्रतिपादनमपेक्षितं तच्चात्र नास्तीति त्रुटिरनुसंधेया । अस्योत्तरमाह- ग्रहणेति, ग्रहणस्य विकल्पः= भेदः= व्यक्ताव्यक्तत्वं ग्रहणहेतोर्विकल्पात्= भेदादेव भवति न तु बुद्धेर्विकल्पात्= अवस्थायित्वानवस्थायित्वाभ्यामिति बुद्धेः स्थिरत्वं सिद्धम्- क्षणिकत्वे कारणाभावादित्यर्थः । स्वयं व्याचष्टे- यदिदमिति, विकल्पः= ग्रहणस्य व्यक्ताव्यक्तत्वविकल्पः । ग्रहणहेतुविकल्पमाह- यत्रेति, ग्रहणहेतुः= प्रकाशादिस्तत्संयोगो वा । व्यवच्छेद्यमाह- न त्विति, तथा च बुद्धेरऽवस्थितत्वं सिद्धमित्यर्थः । उक्ते हेतुं जिज्ञासते- कस्मादिति । उत्तरमाह- अर्थेति, अर्थस्य= पदार्थस्य यद् ग्रहणं तद् बुद्धिरेव तथा च यत् तद् अर्थग्रहणं व्यक्तं वाऽव्यक्तं वा तत् सर्वं बुद्धिरेव बुद्धेश्च व्यक्ताव्यक्तत्वे न बुद्धित एव संभवतो यथा पटस्य नीलपीतत्वे न पटादेव भवतः किं तु कारणान्तरादेव तथाऽर्थग्रहणलक्षणाया बुद्धेरपि व्यक्ताव्यक्तत्वे ग्रहणहेतुविकल्पादेव= बुद्धिकारणभेदादेव संभवत उक्तरीत्येति बुद्धेः क्षणिकत्वे कारणाभावात् स्थिरत्वं सिद्धमित्यर्थः । अव्यक्तग्रहणस्य कारणं स्वरूपं चाह- विशेषेति, विशेषस्य पुरुषत्वादेरग्रहणे सामान्यग्रहणमेवाऽव्यक्तग्रहणमित्यर्थः । विशेषाग्रहणकारणमाह- तत्रेति, तत्र= अव्यक्तग्रहणदशायां या विषयान्तरे= विशेषे= विशेषविषयाया बुद्धेरनुत्पत्तिः सा निमित्ताभावात्= स्वकारणाभावात्= विशेषग्रहणकारणाभावादित्यर्थः । व्यक्तग्रहणमाह- यत्रेति, यत्र सामान्यधर्मयुक्तो विशेषधर्मयुक्तश्च धर्मी गृह्यते तद् व्यक्तं ग्रहणमित्यन्वयः । अव्यक्तग्रहणं पुनराह- यत्र त्विति । पूर्वोक्तं विषयान्तरपदार्थमाह- सामान्येति, सामान्यधर्मातिरिक्तो यो विशिष्टधर्मः= विशेषधर्मस्तदेव विषयान्तरं यथा पुरुषत्वादि, सामन्यधर्मश्च

यथाविषयं च ग्रहण व्यक्तमेव– प्रत्यर्थनियतत्वाच्च बुद्धीनाम्= सामान्यविषयं च ग्रहणं स्वविषयं प्रति व्यक्तं विशेषविषयं च ग्रहणं स्वविषयं प्रति व्यक्तम्– प्रत्यर्थनियता हि बुद्धयः, तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्धयनवस्थानकारितं स्यादिति ॥

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः[13]

धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च तेषु प्रत्यर्थनियताः= नाना बुद्धयस्ता उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य. यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति. एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति, न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वाऽनवस्थायित्वादुपपद्यते इति ॥ ४६ ॥

---

द्रव्यत्वादिकम् । तद्योगः= गृह्यमाणे तत्संबन्धः । उपसंहरति– तत्रेति, तत्र= एवं सामान्यविशेषधर्मयोर्भेदे सिद्धे विशेषधर्मस्य ग्रहणं यन्न भवति तत् विशेषधर्मग्रहणस्य कारणाभावादेव संभवति न तु तत्र बुद्धेः क्षणिकत्वं कारणमिति बुद्धेः स्थिरत्वं सिद्धं क्षणिकत्वे कारणाभावादित्यर्थस्तथा च यत्राव्यक्तं ग्रहणं तत्रापि नोत्पन्नापवर्गिणी बुद्धिः ॥

यदि ग्रहणमव्यक्तं स्यात्तदा त्वदुक्तरीत्या तद्वशाद् बुद्धेः क्षणिकत्वं स्यादपि न चैवमस्ति किं तु ग्रहणमात्रं स्वविषयं प्रति व्यक्तमेवेति बुद्धेः स्थिरत्वमेव युक्तमित्युपपादयति– यथेति, यथाविषयम्= प्रतिविषयम् । उक्ते हेतुमाह– प्रत्यर्थेति, प्रत्यर्थनियतत्वात्= प्रतिविषयं भिन्नत्वात्, यदि बुद्धीनां प्रतिविषयं भेदो न स्यात्तदा बहूनां ग्रहणे ग्रहणस्याव्यक्तत्वमपि स्यात् यथा वने दीपप्रकाशस्याधिकदेशव्याप्त्याऽव्यक्तत्वं. यदा च बुद्धीनां प्रतिविषयं भेदस्तदैकया बुद्ध्या एकस्यैव ग्रहणेन ग्रहणस्य व्यक्तत्वमेव संभवतीत्यर्थः । उक्तं विशदयति– सामान्येति, स्वविषयं प्रति= सामान्यांशं प्रति, स्वविषयं प्रति= विशेषांशं प्रति । उक्ते हेतुमाह– प्रत्यर्थेति, व्याख्यातमिदम् । अत्र– "तत्त्वार्थग्रहणं सामान्यतो विशेषतश्च यच्च सामान्यविषयं तत् सामान्यं प्रति व्यक्तम् एवं विशेषविषयम् एवं तद्द्विषयमिति" इतिवार्तिकम् . तद्द्विषयं नाम सामान्यविशेषधर्मवद्विषयम्= धर्मिविषयकमपि ग्रहणं धर्मिणं प्रति व्यक्तमेवेत्यर्थः । उपसंहरति– तदिदमिति, देशितम्= उक्तम्, अव्यक्तं ग्रहणमेव नास्ति यत् क्वचिदपि विषये बुद्ध्यनवस्थानकारितं स्यात् तेन च बुद्धेः क्षणिकत्वं स्यादित्यर्थ इत्याक्षेपः ॥

ग्रहणस्य व्यक्ताव्यक्तत्वे उपपादयति– धर्मिण इति, धर्मिणो धर्माणां सामान्यविशेषरूपेण द्वैविध्यं भवतीति धर्मभेदे सिद्धे तादृशधर्माणामेकयैव बुद्ध्या ग्रहणं न संभवतीति बुद्धीनां नानात्वं प्राप्तं तत्र बुद्धिनानात्वस्य= सामान्यविशेषोभयधर्मविषयकानेकबुद्धीनां भावे= सत्त्वे व्यक्तं ग्रहणं भवति तादृशबुद्धीनामभावे= सामान्यधर्ममात्रविषयकबुद्धिसत्त्वे चाव्यक्तं ग्रहणं भवतीत्येवं तदुपपत्तिः= ग्रहणस्य व्यक्ताव्यक्तत्वयोरुपपत्तिः संभवतीत्यर्थः । स्वयं व्याचष्टे– धर्मिण इति, समानाः= सामान्याः, विशिष्टाः= विशेषाः, सन्तीति शेषः । तेषु= सामान्यविशेषधर्मेषु, प्रत्यर्थनियतत्वमाह– नानेति । ताः= बुद्धयः, उभय्यः= उभयविधाः= सामान्यधर्मविषया विशेषधर्मविषयाश्च धर्मिणि= धर्मिविषयका वर्तन्ते= जायन्ते यदा तदा धर्मिणमभिप्रेत्य ग्रहणं व्यक्तं भवति । अव्यक्तग्रहणमाह– यदेति, विशेषधर्माग्रहणे इत्यर्थः । पर्यवसितमाह– एवमिति, तथा चाव्यक्तग्रहणस्यापि स्वविषये सामान्यांशे व्यक्तत्वेपि धर्मिण्यऽव्यक्तत्वं स्पष्टमेवेत्यर्थः । अत्र पूर्वपक्ष्याह– न चेदमिति, एवमव्यक्ते ग्रहणे सिद्धेऽप्युक्तरीत्येदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य= विषयस्य वा क्षणिकत्वान्नोपपद्यते किं तु ग्रहणहेतुविकल्पादेवोक्तादिति बुद्धेः स्थिरत्वमेव सिद्धं– क्षणिकत्वे कारणाभावादित्यर्थः । वस्तुतस्तु भाष्यमिदमसंगतमेव प्रतिभाति– पूर्वापरभाष्याभ्यां संगतेरभावात्– पूर्वोत्तरभाष्ययोर्ग्रहणस्य व्यक्तत्वप्रतिपादनादिति चिन्त्यम् ॥ ४६ ॥

इदं हि न—

**प्रदीपार्चिस्संतत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् ॥ ४७ ॥**

अनवस्थायित्वेपि बुद्धेः तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम् । कथम् ?. प्रदीपार्चिस्संतत्यभिव्यक्तग्रहणवत्= प्रदीपार्चिषां संतत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च, प्रत्यर्थनियतत्वाद्वा बुद्धीनां यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति. दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥ ४७ ॥

चेतना शरीरगुणः— सति शरीरे भावादसति चाऽभावादिति ।

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४८ ॥**

---

अत्राह भाष्यकारः— इदं हि नेति, इदम्= अव्यक्तग्रहणं नास्ति— सामान्यग्रहणस्य सामान्यांशे विशेषग्रहणस्य च विशेषांशे व्यक्तत्वादेवेत्यर्थः, किं वा यदुक्तम् 'यत्र विषयग्रहणहेतोरनवस्थितत्वं तत्राव्यक्तं ग्रहणम्' इति इदं नियतं नास्तीत्यर्थस्तथा च वार्तिकम्— "नायमेकान्तोस्ति यद् ( यत्र ) विषयग्रहणहेतोर्ग्राह्यस्य चानवस्थानं तत्राव्यक्तग्रहणम्" इति । किं वा इदम्= बुद्धेः स्थिरत्वम् । सर्वथापि पूर्वपक्षपरिहारपरमिदं भाष्यम् । सिद्धान्तसूत्रमाह— प्रदीपेति, यथा प्रदीपार्चिस्संततेः= प्रदीपज्वालासंतानस्याभिव्यक्तमेव ग्रहणं भवति नाऽव्यक्तं तथा तत्= तस्य= द्रव्यस्य= धर्मिणोपि ग्रहणं व्यक्तमेव भवति नाऽव्यक्तं, यथा च प्रदीपार्चिषां व्यक्तग्रहणविषयत्वेपि न स्थायित्वम्— तैलावयवानां भेदेन क्षणिकत्वस्वीकारात् तथा बुद्धेरपि व्यक्तग्रहणहेतुत्वेपि न स्थायित्वं किं तु बुद्धिसंतानदर्शनात् प्रत्यक्षनिवृत्तेश्च दर्शनात् क्षणिकत्वमेव, किं च कासां चिद् बुद्धीनां क्षणिकत्वस्य प्रत्यक्षत्वात् तत्सामान्यात् सर्वासामपि बुद्धीनां क्षणिकत्वमनुमीयते इतिसूत्रार्थः । व्याचष्टे— अनवस्थायित्वेपीति, क्षणिकत्वेपीत्यर्थः, तदेतत् सिद्धान्तकथनम् । उक्ते हेतुं जिज्ञासते— कथमिति । उत्तरमाह— प्रदीपेति । उक्तं व्याचष्टे— प्रदीपार्चिषामिति, संतत्या= संतानेन= उत्तरोत्तरं प्रदीपार्चिषां नवनवानां वर्तमानानामित्यर्थः, तैलावयवभेदेन प्रतिक्षणं दीपज्वालाभेद इतिस्पष्टमेव, तत्र ग्राह्याणां प्रदीपार्चिषामनवस्थानम्= क्षणिकत्वं स्पष्टमेव, ग्राह्याणाम् प्रदीर्चिषामनवस्थाने च ग्रहणानवस्थानमपि स्पष्टमेव— विषयभेदेन बुद्धिभेदस्वीकारात् तथा च ग्राह्यग्रहणयोरनवस्थानेपि प्रदीपार्चिषां ग्रहणं व्यक्तमेव भवतीत्यन्वयः । उक्तं विशदयति— प्रत्यर्थेति, बुद्धीनां प्रत्यर्थनियतत्वात्= विषयव्यक्तिभेदेन भिन्नत्वात्, तदनेन ग्रहणानवस्थानं प्रतिपादितम् । पर्यवसितमाह— दृश्यते इति । तथा च यथा प्रदीपार्चिषां ग्रहणं व्यक्तमेव तथा धर्मिमात्रस्य ग्रहणं किं वा ग्रहणमात्रं व्यक्तमेव भवति नाव्यक्तं. व्यक्तं चापि ग्रहणं बुद्धेः स्थायित्वसमर्थकं न भवति— उक्तस्थले क्षणिकत्वेपि ग्रहणस्य व्यक्तत्वप्रदर्शनादिति बुद्धेः उत्पन्नापवर्गित्वम्= क्षणिकत्वम्= तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं सिद्धमित्यर्थः । तथा च वार्तिकम्— "व्यवस्थितं क्षणिका बुद्धिरिति" इति ॥४७॥

॥ इति बुद्धेः क्षणिकत्वप्रतिपादनं समाप्तम् ॥

---

पुनरपि शरीरचैतन्यवादं निराकर्तुमारभते— चेतनेति, चेतना= चैतन्यम्, शरीरे सति चेतनाया भावात् शरीरेऽसति च चेतनाया अभावादित्यन्वयः, शरीरे एव चेतनोपलभ्यते नान्यत्रेति शरीरगुणः, यदि चेतनाऽऽत्मगुणः स्यात्तदा विभोरात्मनश्चेतना घटाद्यवच्छेदेनापि गृह्येत । न च मृतशरीरेषु चेतनाव्यभिचारो दोषः— भूतानां तादृशसंयोगविशेषविशिष्टे एव शरीरे चेतनास्वीकारात् । सद्यः कर्तिताद्यङ्गेषु यो वै कम्प उपलभ्यते यथा पल्लीपुच्छे पतिते स शरीरचैतन्यं विना नोपपद्यते इत्यर्थः ।

उक्ते सूत्रेण संशयमाह— द्रव्ये इति, गुणशब्दो धर्मपरः, द्रव्ये स्वधर्मोप्युपलभ्यते परधर्मोप्युपलभ्यते तथा च शरीरे उपलभ्यमाना चेतना किं शरीरधर्म एव किं वा आत्मधर्मश्चेतना शरीरे उपलभ्यते इति

सांशयिकः सति भावः- स्वगुणोऽप्सु द्रवत्वमुपलभ्यते परगुणश्चोष्णता. तेनायं संशयः- किं शरीरगुणश्चेतना शरीरे गृह्यते ? अथ द्रव्यान्तरगुणः ? इति ॥ ४८ ॥

न शरीरगुणश्चेतना, कस्मात् ?,

यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४९ ॥

न रूपादिहीनं शरीरं गृह्यते चेतनाहीनं तु गृह्यते यथोष्णताहीना आपः तस्मान्न शरीरगुणश्चेतनेति ॥

संस्कारवदितिचेत् ? न- कारणानुच्छेदात् ॥

यथाविधे द्रव्ये संकारस्तथाविधे एवोपरमः ?. न- तत्र कारणोच्छेदादत्यन्तं संस्कारानुपपत्तिर्भवति, यथाविधे शरीरे चेतना गृह्यते तथाविधे एवात्यन्तोपरमश्चेतनाया गृह्यते. तस्मात् 'संस्कारवत्' इत्यसमः समाधिः ॥

---

संशयो भवतीति न चेतनायाः शरीरधर्मत्वं निश्चेतुं शक्यते तस्मात् संशय इतिसूत्रार्थः । व्याचष्टे- सांशयिक इति, शरीरे सत्येव चेतनाभाव इति सांशयिकम्, चेतनायाः शरीरधर्मत्वं सांशयिकमित्यर्थः । संशयदृष्टान्तमाह- स्वेति, स्वगुणः= स्वधर्मः, परगुणः= परधर्मः= तेजोधर्मः । उपसंहरति- तेनेति । संशयमाह- किमिति । द्रव्यान्तरगुणः= आत्मधर्म इत्यन्वयः, स्पष्टमन्यत् ॥ ४८ ॥

स्वसिद्धान्तमाह- नेति । उक्ते हेतुं जिज्ञासते- कस्मादिति । सूत्रेण हेतुमाह- यावदिति, शरीरधर्माणां रूपादीनां यावच्छरीरभावित्वादित्यन्वयः, शरीरधर्मा हि मृतशरीरेष्युपलभ्यन्ते यथा रूपादयस्तथा च यदि चेतनापि शरीरधर्मं स्यात्तदा मृतशरीरेष्युलभ्येत न चोपलभ्यते इति न चेतना शरीरधर्म इतिसूत्रार्थः । व्याचष्टे- नेति, ये शरीरधर्मा रूपादयस्तद्धीनं शरीरं नोलपभ्यते चेतनाहीनं तु मृतशरीरमुपलभ्यते तथा च यथोष्णताहीना आप उपलभ्यन्ते इति नोष्णता जलधर्मस्तथा चेतनापि न शरीरधर्म इत्यन्वयः ॥

ननु यथा स्नानादिजन्यसंस्कारस्योत्पत्तिविनाशौ शरीरे एव भवतस्तादृशसंस्कारस्य शरीरधर्मत्वेपि न यावच्छरीरभावित्वम्- शरीरे सत्यपि तद्विनाशदर्शनात् तथा चैतन्यस्यापि शरीरे एवोत्पत्तिविनाशयोः स्वीकारेपि न यावच्छरीरभावित्वापत्तिरित्याशङ्कते- संस्कारवदिति । परिहरति- नेति । परिहारहेतुमाह- कारणेति, शरीरवृत्तिसंस्कारस्य स्वकारणविनाशाद् विनाशः संभवति चैतन्यकारणस्य तु विनाशो निरूपयितुं न शक्यते- त्वन्मते चैतन्यकारणस्य भूतसंयोगस्य मृतशरीरेपि सत्त्वादिति यदि चैतन्यं शरीरगुणः स्यात्तदा कारणानुच्छेदात् यावच्छरीरभावि स्यात् न चैवमस्तीति न चैतन्यं शरीरगुण इत्यर्थः । स्वयं व्याचष्टे- यथेति, ननु यथाविधे= यादृशे द्रव्ये= शरीरादौ संस्कार उत्पद्यते तादृशे एव शरीरादौ संस्कारस्योपरमः= विनाशो गृह्यते अथापि संस्कारः शरीरधर्म एव एवं चेतनायाः शरीरधर्मत्वमुपपद्यते- शरीरे एव चेतनाया भावाभावयोर्गृह्यमाणत्वादिति पूर्वपक्षार्थः । परिहरति- नेति, इतिचेन्नेत्यर्थः, परिहारहेतुमाह- तत्रेति, तत्र= संस्कारपक्षे शरीरादौ वा. अत्यन्तं संस्कारकारणोच्छेदात् संस्कारानुपपत्तिः= संस्काराभावः संभवतीत्यर्थः, प्रकृतमाह- यथेति, यद्यपि चेतनापि यादृशे शरीरे गृह्यते तादृशे एव चेतनाया अत्यन्तोपरमः= विनाशो गृह्यते तथापि चेतनारहिते मृतशरीरादौ त्वन्मतेन चेतनाकारणस्य भूतसंयोगस्याभावो न गृह्यते येन कारणविनाशात् संस्कारवत् चेतानाविनाश उपपद्येत तस्मात् "संस्कारवत्" इति समाधिः= दृष्टान्तो न युक्त इति चेतनायाः शरीरधर्मत्वे यावच्छरीरभावित्वं स्यादेव न चास्तीति न चेतना शरीरधर्म इत्यर्थः, किं वा पूर्वपक्षं परित्यज्य पूर्वपक्षदूपणपरत्वेनैव भाष्यं व्याख्येयं तथा च 'यथाविधे द्रव्ये= शरीरादौ संस्कारस्तथाविधे एव न संस्कारोपरमः किं तु तत्र= शरीरे कार-

अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्यात् द्रव्यान्तरस्थं वा उभयस्थं वा, तन्न– नियमहेत्वभावात्= शरीरस्थेन कदाचित् चेतनोत्पद्यते कदाचिन्नेति नियमे हेतुर्नास्तीति. द्रव्यान्तरस्थेन च शरीरे एव चेतनोत्पद्यते न लोष्टादिष्वित्यत्र नियमहेतुर्नास्तीति. उभयस्थस्य निमित्तत्वे शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते शरीरे एव चोत्पद्यते इतिनियमे हेतुर्नास्तीति ॥४९॥

यच्च मन्येत– सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्ट एवं चेतनोपरमः स्यादिति,

## न– पाकजगुणान्तरोत्पत्तेः ॥ ५० ॥

नात्यन्तरूपोपरमः= द्रव्यस्य श्यामे रूपे निवृत्ते पाकजं गुणान्तरम्= रक्तं रूपमुत्पद्यते, शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ५०

अथापि—

## प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५१ ॥

---

णोच्छेदात्= संस्कारकारणाभावविशिष्टे एव संस्कारानुपपत्तिः= संस्कारोपरमो भवति. चेतना तु यथाविधे शरीरे गृह्यते तादृशे एव चेतनोपरमोपि गृह्यते– मृतशरीरेपि चेतनाकारणस्य भूतसंयोगस्य सत्त्वादेवेति वैषम्यमिति संस्कारवदित्यसमः= विषमः समाधिः' इत्यन्वयः । वस्तुतस्त्वत्र "संस्कारानुपपत्तिः" इत्यत्र 'न संस्काराभावानुपपत्तिः' इतिपाठो युक्तस्तस्य च 'कारणोच्छेदात्संस्काराभावानुपपत्तिर्न' इत्यन्वयः, चेतनायाश्च कारणोच्छेदासंभवात् शरीरे चेतनाया अभावानुपपत्तिरित्यर्थः । वाक्यार्थस्तु प्रतिपादित एव । अलौकिकं हि सूत्रभाष्यकृतोः पाण्डित्यम् ॥

चैतन्यकारणानुपपत्तिं प्रदर्शयति– अथेति, अथापि= किंच । कल्पत्रयस्याप्यसंभवमाह– तन्नेति । हेतुमाह– नियमेति, उक्तं व्याचष्टे– शरीरस्थेनेति, शरीरस्थेन चेतनाकारणेन, यदि चेतनोत्पत्तिकारणं शरीरस्थं स्यात्तदा तादृशकारणसत्त्वेन शरीरे सदैव चेतना स्यादिति चेतनाविनाशो न स्यादित्यर्थः, कदाचिन्नेति– मृताद्यवस्थायाम् । द्वितीयकल्पे दोषमाह– द्रव्येति, द्रव्यान्तरस्थेन चेतनाकारणेन, चेतनाकारणस्य शरीरातिरिक्तस्थत्वे पदार्थमात्रे चेतना उत्पद्येत विशेषाभावादित्यर्थः । तृतीयकल्पे दोषमाह– उभयेति, शरीरतदतिरिक्तेत्युभयस्थस्य चेतनाकारणत्वेपि पदार्थमात्रे चेतनोत्पद्येत– विशेषाभावादित्यर्थः, शरीरसमानजातीयद्रव्ये= फलादौ । तथा च चेतनोत्पत्तिकारणस्य स्थितेर्निरूपयितुमशक्यत्वान्न सकारणका चेतना किं तु नित्येति नित्यात्मनिष्ठैव स्वीकार्येत्यर्थः, स्पष्टमन्यत् ॥ ४९ ॥

पूर्वपक्षमनुवदति– यदिति, द्रव्ये= घटादौ यत्र श्यामत्वादिरूपमुत्पद्यते तत्रैव तस्य विनाशोपि भवतीति उत्पत्तिविनाशयोः सामानाधिकरण्यं सिद्धं चेतनाया उपरमश्च शरीरे प्रत्यक्ष एव मृतशरीरादौ तथा च शरीरे एव चेतनोत्पत्तिरपि स्वीकार्येति शरीरे चेतनोत्पत्तिसत्त्वे एव शरीरे चेतनोपरमः संभवति नान्यथेत्यर्थस्तथा च चैतन्यस्य शरीरधर्मत्वं सिद्धमितिभावः । एतत्सूत्रेण निराकरोति– नेति, उक्तदृष्टान्तो नोपपद्यते इत्यर्थः, हेतुमाह– पाकेति, श्यामघटे पाकजन्यस्य रक्तस्य रूपान्तरस्योत्पत्तिर्भवति तादृशोत्पत्त्या च पूर्वं श्यामादिरूपं नश्यति न च घटादौ रूपमात्रस्याभावो भवति मृतशरीरे तु चेतनामात्रस्याभावो भवतीति नोक्तदृष्टान्तोत्र घटते इतिसूत्रार्थः । व्याचष्टे– नेति, द्रव्ये घटादौ रूपस्यात्यन्ताभावो न भवतीत्यर्थः । उक्तं विशदयति– द्रव्यस्येति । प्रकृतमाह– शरीरे इति, यदि चेतना शरीरगुणः स्यात्तदा पूर्वचेतनाया विनाशे चेतनान्तरमुत्पद्येत न चोत्पद्यते मृतशरीरे इति न चेतना शरीरधर्म इत्यर्थः । शरीरे तु चेतनामात्रस्यात्यन्तमुपरमो मृतावस्थायां दृश्यते इत्यन्वयः ॥ ५० ॥

अग्रिमसूत्रमवतारयति– अथेति, अथापि= किंच । अत्र– "तदेवमात्यन्तिकाऽनात्यन्तिकत्वं वैधर्म्यमुक्त्वा सप्रतिद्वन्द्वित्वाऽसप्रतिद्वन्द्वित्वं वैधर्म्यान्तरमाह– इतश्च प्रतिद्वन्द्विसिद्धेः" इति तात्पर्यटीका ।

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते- पूर्वगुणैः सह पाकजानामवस्थानस्याऽग्रहणात्. न च शरीरे चेतनाप्रतिद्वन्द्वि सहानवस्थायि गुणान्तरं गृह्यते येनाऽनुमीयेत तेन चेतनाया विरोधः, तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तेत न तु वर्तते तस्मान्न शरीरगुणश्चेतना इति ॥ ५१ ॥

इतश्च न शरीरगुणश्चेतना—

## शरीरव्यापित्वात् ॥ ५२ ॥

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः. शरीरवत् शरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम्, तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्था लिङ्गम् एवमेकशरीरेपि स्यात्. न तु भवति. तस्मान्न शरीरगुणश्चेतनेति ॥५२॥

---

किं चोक्तस्थले विरुद्धगुणेन पूर्वगुणस्य नाशः संभवति शरीरे तु मृतावस्थायामपि चेतनाविरोधी कोपि गुणो न गृह्यते येन शरीरधर्मभूतायाश्चेतनाया विनाशः स्यादित्याह- प्रतीति, किं वा ननु पाकजापाकजगुणयोर्न परस्परं विरोधोस्ति येन तादृशविरुद्धगुणादेव पूर्वगुणनाशस्वीकारेण प्रकृते चेतनाविरोधिगुणस्याभावात् शरीरे शरीरधर्मभूतायाश्चेतनाया विनाशानुपपत्तिः स्यादित्याशङ्क्याह- प्रतीति, पाकजानां रक्तादिरूपाणां प्रतिषेधो नोपपद्यते- प्रतिद्वन्द्विसिद्धेः= प्रतिद्वन्द्वित्वात्= परस्परं विरुद्धत्वादित्यर्थः, किं वा पाकजानां गुणानां प्रतिद्वन्द्विसिद्धेः= पूर्वगुणविरोधित्वस्य प्रतिषेधो न संभवति तस्मात् पूर्वगुणस्य तद्विरोधिनैवोत्तरगुणेन नाशः संभवति यथा घटे रक्तरूपेण श्यामरूपस्य, चेतनाविरोधिगुणस्तु शरीरे नोपलभ्यते येन चेतनाविनाशः स्यादिति चेतनायाः शरीरगुणत्वे सदैव शरीरे सत्त्वं स्यात् न च भवतीति न चेतना शरीरगुण इतिसूत्रार्थः प्रतिभाति, किं वा पाकजानां श्यामरक्तादिरूपाणां गुणानां द्रव्यधर्मत्वस्य प्रतिषेधो नोपपद्यते तत्रापि यस्तेषामभावः स प्रतिद्वन्द्विसिद्धेः= प्रतिद्वन्द्विनः= विरोधिनो गुणान्तरस्योत्पत्त्या संभवति- विरुद्धयोः सहावस्थानासंभवात्, प्रकृते च मृतशरीरेपि चेतनाविरोधी कोपि गुणो नोपलभ्यते येन मृतशरीरे चेतनाया अभाव उपपद्येत तथा च चेतनायाः शरीरगुणत्वे यावच्छरीरभावित्वं स्यात् न चैवमस्तीति न चेतना शरीरगुण इतिसूत्रार्थः, सूत्रमिदं क्लेशेनापि न प्रकृतापेक्षितमर्थं प्रकाशयति. अत एवासंतोषाद् वृत्तिकारेणेदं सूत्रं त्रिधा व्याख्यातं तदपि परमुखेनैवेत्यनुसंधेयम्, सूत्रस्यास्य पूर्वपक्षसूत्रं विनष्टमिति संभावयामि। व्याचष्टे- यावदिति, द्रव्येषु घटादिषु, पूर्वगुणप्रतिद्वन्द्विसिद्धिः= पूर्वगुणविरोधिगुणसत्ता दृश्यते, पाकजोत्पत्तिः= पाकजगुणोत्पत्तिः। उक्ते हेतुमाह- पूर्वगुणैरिति, तथा च सहानवस्थानादेवोत्तरगुणेन पूर्वगुणविनाशो भवतीत्यर्थः, सहानवस्थाने च परस्परं विरोध एव कारणम्। प्रकृतमाह- न चेति, शरीरे तु चेतनाविरोधी कोपि गुणो न गृह्यते येन तेन गुणेन सह चेतनाया विरोधोऽनुमीयेत विरोधाच्च तेन चेतनाविनाशः स्यादित्यर्थः। उपसंहरति- तस्मादिति, विरोधिगुणाभावादप्रतिषिद्धा= अविनश्यमाना चेतना शरीरगुणभूता सती यावच्छरीरम्= मृतशरीरेपि वर्तेत न च वर्तते इति न चेतना शरीरगुणः ॥ ५१ ॥

अग्रिमसूत्रमवतारयति- इतश्चेति, इतः= सूत्रोक्तहेतोः। शरीरेति- चेतनायाः शरीरव्यापित्वं प्रत्यक्षमेव तथा च शरीरावयवभेदेन चेतनाभेदः स्यात्तेन चैकस्मिन्नपि शरीरे चेतनस्याऽनेकत्वं स्यात् न चैकस्मिन् शरीरे चेतनानेकत्वमुपपद्यते- परस्परविरोधे सति शरीरोन्माथप्रसङ्गात् न चाप्यनुभूयते इति न चेतना [illegible]गुणः किं त्वात्मगुण इतिसूत्रार्थः। व्याचष्टे- शरीरमिति, सर्वेषु शरीरावयवेषु पृथक् पृथगेव चेतना उत्पद्यते इत्यर्थः, एकस्मिन् शरीरे एवं चेतनबहुत्वापत्तिमाह- शरीरवदिति, सर्वेषां शरीरावयवानां चेतनत्वादितिशेषः। पर्यवसितमाह- तत्रेति, तत्र= एवमेकस्मिन् शरीरे चेतनबहुत्वे प्राप्ते, प्रतिशरीरम्=

यदुक्तम्– न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति. सा न—

केशनखादिष्वनुपलब्धेः ॥ ५३ ॥

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इत्यनुपपन्नं शरीरव्यापित्वमिति ॥ ३ ॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५४ ॥

इन्द्रियाश्रयत्वं शरीरलक्षणम्= त्वक्पर्यन्तं जीवमनस्सुखदुःखसंविच्यायतनभूतं शरीरं तस्मान्न केशादिषु चेतनोत्पद्यते, अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५४ ॥

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५५ ॥

---

शरीरभेदेन, किं वा प्रतिशरीरं चेतनबहुत्वे= चेतनभेदे सुखादीनां व्यवस्था= चैत्रीयसुखादीनां ज्ञानं मैत्रस्य न भवतीति व्यवस्था लिङ्गम्– एतादृशव्यवस्थयैव प्रतिशरीरमात्मभेदः सिद्ध्यतीति, आत्मैकत्वे एतादृशव्यवस्था न स्यादित्यर्थः। प्रकृतमाह– एवमिति, चेतनायाः शरीरगुणत्वे एवम्= शरीरभेदे इव एकस्मिन्नपि शरीरे उक्ता व्यवस्था स्यात्= शरीरावयवभेदेन चेतनबाहुल्यात् एकशरीरवृत्तिचेतनानामपि परस्परं सुखाद्यज्ञानं स्यात् न चास्तीति नैकशरीरे चेतनबहुत्वं संभवति तथा च न चेतना शरीरगुणः संभवति। अत्र– "प्रत्ययव्यवस्थाप्रसङ्गात्= यथा देवदत्तस्य ज्ञानं न यज्ञदत्तः प्रतिसंधत्ते किं तु देवदत्त एवेति व्यवस्था एवमेकस्मिन् शरीरे अवयवान्तरज्ञानमवयविनो वा ज्ञानं न प्रतिसंधत्ते इत्यर्थः" इति तात्पर्यटीका ॥ ५२ ॥

पूर्वपक्षी पूर्वसूत्रभाष्यवाक्यं परिहर्तुमनुवदति– यदुक्तमिति। सा नेत्यत्र तन्नेति वक्तव्यमासीत्, किं वा सा= शरीरस्य सर्वावयवेषु चेतनोत्पत्तिर्नास्तीत्यर्थः। सूत्रेण हेतुमाह– केशेति, शरीरस्यावयवभूतेषु केशादिषु चेतना नोपलभ्यते इति न सर्वेषु शरीरावयवेषु चेतनोत्पत्तिः संभवतीति न पूर्वसूत्रोक्तदोषापत्तिरिति सूत्रार्थः। व्याचष्टे– केशेष्विति। पर्यवसितमाह– इतीति, चेतनायाः शरीरव्यापित्वाभावे एकस्मिन् शरीरे चेतनबहुत्वापत्तिर्नास्ति तेनोक्तदोषापत्तिर्नास्ति चेतनायाः शरीरगुणत्वे इत्यर्थः ॥ ५३ ॥

केशादीनां शरीरावयवत्वं प्रत्याचष्टे– त्वगिति, शरीरस्य त्वक्पर्यन्तत्वात् तदग्रे केशादिषु शरीरावयवत्वं नास्ति किं वा शरीरस्य त्वग्व्याप्तत्वात् केशादिषु च त्वगभावात् शरीरावयवत्वं नास्तीति हेतोरेव केशादिषु चेतनाया अप्रसङ्गः= अभावोस्ति तथा च शरीरावयवेषु करचरणादिषु प्रत्येकं चेतनासत्त्वादेकस्मिन् शरीरे चेतनबहुत्वं चार्वाकमते प्राप्तमेव तथा च "शरीरव्यापित्वात्" इतिसूत्रोक्तो दोषस्तदवस्थ एवेति सूत्रार्थः। व्याचष्टे– इन्द्रियेति। उक्तं विशदयति– त्वगिति, शरीरलक्षणं चेदं न युक्तम्– मृतशरीरे समन्वयासंभवादिति विभाव्यम्, जीवादीनामायतनभूतम्= आश्रयभूतं यत् तत् शरीरं केशादिकं च न जीवादीनामाश्रयभूतमिति न शरीरावयवभूतम् अत एव केशादिषु चेतना नोत्पद्यते शरीरावयवेषु तु चार्वाकमतेन चेतनोत्पत्तिरापद्यते तत्र च शरीरव्यापित्वादित्यनेन दोषः प्रदर्शित एवेत्यर्थः। केशादीनां संबन्धकारणमाह– अर्थेति, केशादीनां शरीरोपनिबन्धः= शरीरे संबन्धः अर्थकारितः= भोगकारणको न त्ववयवत्वमूलकः– केशादीनां कर्तनेन दुःखाभावात्, केशनखादिकं विना नखविदलनादिकार्यं न स्यादितिहेतोरेव नखादिसंबन्धः किं वा देहरक्षणार्थः ॥ ५४ ॥

अग्रिमसूत्रमवतारयति– इत इति, इतः= सूत्रोक्तहेतोः। शरीरेति– चेतनायाः शरीरगुणेभ्यो रूपादिभ्यो वैधर्म्यात्= वैलक्षण्यात् शरीरगुणत्वं न संभवतीति सूत्रान्वयः; शेषं भाष्ये स्पष्टम्।

द्विविधः शरीरगुणः- अप्रत्यक्षं च गुरुत्वम् इन्द्रियग्राह्यं च रूपादि, विधान्तरं तु चेतना= नाऽप्रत्यक्षा- संवेद्यत्वात्. नेन्द्रियग्राह्या- मनोविषयत्वात्. तस्माद् द्रव्यान्तरगुण इति ॥५५॥

न- रूपादीनामितरेतरवैधर्म्यात् ॥ ५६ ॥

यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहति. एवं रूपादिवैधर्म्यात् चेतना शरीरगुणत्वं न हास्यतीति ॥ ५६ ॥

ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः ॥ ५७ ॥

अप्रत्यक्षत्वाच्चेति, यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्यात् चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यादिति. अतिवर्त्तते तु तस्मान्न शरीरगुण इति ॥ भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्याऽऽरम्भो विशेषज्ञापनार्थः= बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति ॥ ५७ ॥

---

व्याचष्टे- द्विविध इति, इन्द्रियग्राह्यम्= बाह्येन्द्रियप्रत्यक्षम्, विधान्तरम्= उभयविधगुणविलक्षणा, वैलक्षण्यमेवाह- नेति, संवेद्यत्वात्= मानसप्रत्यक्षविषयत्वात् । नेन्द्रियग्राह्या= न बाह्येन्द्रियग्राह्या- मनोविषयत्वात्= मनोमात्रग्राह्यत्वात् । उपसंहरति- तस्मादिति, तस्मात्= चेतनायाः शरीरगुणवैलक्षण्येन शरीरगुणेष्वन्तर्भावाभावात् चेतना द्रव्यान्तरगुणः= आत्मगुण एव न शरीरगुण इत्यर्थः, स्पष्टमन्यत् । मनस इन्द्रियत्वं च भाष्यकृता प्रत्यक्षलक्षणभाष्ये प्रतिपादितं तदत्र विस्मृतमिति भाष्यकारस्य सावधानता, अत एवात्र इन्द्रियशब्देन बाह्येन्द्रियं ग्राह्यम् ॥ ५५ ॥

उक्तं पूर्वपक्षी परिहरति- नेति, चेतनायाः शरीरगुणत्वप्रत्याख्यानं नोपपद्यते किं तु यथा रूपादीनां शरीरगुणानाम् इतरेतरवैधर्म्यात्= परस्परं वैलक्षण्येपि शरीरगुणत्वं संभवति तथा रूपादिवैलक्षण्येपि चेतनायाः शरीरगुणत्वं संभवतीति सूत्रान्वयः । व्याचष्टे- यथेति, इतरेतरविधर्माणः= परस्परं विलक्षणाः, जहति= त्यजन्ति । प्रकृतमाह- एवमिति, रूपादिवैधर्म्यात्= रूपादिवैलक्षण्येपि । हास्यति= त्यक्ष्यति, तस्मात् चेतना शरीरगुण इत्यन्वयः, स्पष्टमन्यत् ॥ ५६ ॥

उक्तं सिद्धान्ती परिहरति-ऐन्द्रियकत्वादिति, रूपादीनामैन्द्रियकत्वात्=इन्द्रियग्राह्यत्वात्= बाह्येन्द्रियप्रत्यक्षत्वाद् गुरुत्वादीनां चाऽप्रत्यक्षत्वात् शरीरगुणत्वस्य प्रतिषेधो नोपपद्यते किं तु शरीरगुणत्वं संभवति चेतना तूक्तरीत्या न बाह्येन्द्रियप्रत्यक्षा नाप्यऽप्रत्यक्षेति चेतनायाः शरीरगुणत्वं नोपपद्यते-शरीरगुणानां द्वैविध्यस्य प्रदर्शितत्वाद् विधाद्वयरहितस्य च शरीरगुणत्वे दृष्टान्ताभावेन शरीरगुणत्वासंभवादिति सूत्रार्थः । व्याचष्टे- अप्रत्यक्षेति, अप्रत्यक्षत्वाच्चेतिशेष इत्यर्थः, गुरुत्वादीनामप्रत्यक्षत्वादेव शरीरगुणत्वमित्याशयः । यथेति- परस्परविलक्षणा अपि रूपादयः शरीरधर्मत्वादेव यथा द्वैविध्यम्= प्रत्यक्षत्वाप्रत्यक्षत्वप्रकारं नातिवर्तन्ते तथा यदि चेतनापि शरीरगुणः स्यात्तदोक्तद्वैविध्यं नातिवर्तेत अतिवर्तते तूक्तद्वैविध्यमुक्तरीत्येवि न चेतना शरीरगुण इत्यन्वयः । नन्वत्राष्टादशसूत्रमारभ्य भूतेन्द्रियमनसां ज्ञानवत्त्वप्रतिषेधः कृतः "परश्वादिषु ३७" इतिसूत्रमारभ्य शरीरस्यापि विशेषरूपेण ज्ञानवत्त्वप्रतिषेधः कृतः ज्ञानमेव च चेतनेति चेतनाप्रतिषेधे सिद्धे पुनरत्र शरीरे चेतनाप्रतिषेधः किमर्थः ? इत्याशङ्क्याह- भूतेति, भूतेन्द्रियमनसां ज्ञानवत्त्वप्रतिषेधात् चेतनाप्रतिषेधे सिद्धेपि योऽयं शरीरे चेतनाप्रतिषेधस्य पुनरारम्भः स विशेषज्ञापनार्थः= निश्चयजननार्थ इति मन्तव्यम्, उक्तं व्याचष्टे- बहुधेति । तथा चोक्तरीत्या बुद्धेरनित्यत्वमात्मगुणत्वं क्षणिकत्वं शरीरागुणत्वं च सिद्धमित्युपसंहारः ॥ ५७ ॥

॥ इति बुद्धिविवेचनं समाप्तम् ॥

---

परीक्षिता बुद्धिः, मनस इदानीं परीक्षाक्रमः तत् किं प्रतिशरीरमेकमनेकमिति विचारे—

## ज्ञानायौगपद्यादेकं मनः ॥ ५८ ॥

अस्ति खलु वै ज्ञानायौगपद्यम्— एकैकस्येन्द्रियस्य यथाविषयं करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यात् न तदेकत्वे मनसो लिङ्गम्. यत्तु खल्विन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम्। कस्मात्?. संभवति खलु वै बहुषु मनस्सु इन्द्रियमनस्संयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात्. न तु भवति तस्माद् विषये प्रत्ययपर्यायादेकं मनो भवतीति ॥ ५८ ॥

## न— युगपदनेकक्रियोपलब्धेः ॥ ५९ ॥

अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यारण्यजान् शब्दान् बिभेति व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं स्थानीयमिति क्रमस्याग्रहणाद् युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति ॥ ५९ ॥

---

बुद्धिपरीक्षासमाप्तिमाह— परीक्षितेति। अग्रिमकर्तव्यमाह— मनस इति, क्रमश्चायं प्रमेयोद्देशसूत्रे द्रष्टव्यः, तत्= मनः, इतिविचारे= इतिसंशये प्राप्ते स्वसिद्धान्तमाह— ज्ञानेति, यदि प्रतिशरीरं बहूनि मनांसि स्युस्तदा तेषामनेकैरिन्द्रियैर्युगपदपि संयोगसंभवाद् युगपदनेकज्ञानानि उत्पद्येरन् न चोत्पद्यन्ते किं त्वेकस्मिन् क्षणे एकमेव ज्ञानमुत्पद्यते तस्मात् ज्ञायते— एकस्मिन् शरीरे एकमेव मन इति सूत्रार्थः। तदेतत् पूर्वमपि व्याख्यातमित्यलम्। व्याचष्टे— अस्तीति, द्विविधं हि ज्ञानायौगपद्यमस्ति इन्द्रियैः स्वविषयग्रहणायौगपद्यरूपम् आत्मना विषयग्रहणायौगपद्यरूपं च तत्र प्रथमं मनस एकत्वे लिङ्गं न संभवति— तत्र मनस्संबन्धाभावात् तत्तु इन्द्रियाणां परिच्छिन्नत्वाद् एकैकत्वाच्चेन्द्रियैः स्वस्वविषयाणामनेकेषां युगपद्ग्रहणासंभवादेवेति न मनस एकत्वे लिङ्गमित्याह— नेति, एतस्य ज्ञानायौगपद्यस्यान्यथोपपत्तिमाह— एकैकस्येति, यथाविषयम्= प्रतिविषयं करणस्य यथा गन्धं प्रति घ्राणस्य करणत्वम्, करणत्वं चेदमात्मनिष्ठज्ञानक्रियाकर्तृत्वनिरूपितम्, एकप्रत्ययनिर्वृत्तौ= एकपदार्थग्रहणसंपादने सामर्थ्यात् यथा घ्राणं नैकस्मिन् क्षणेऽनेकेषां गन्धानां ग्रहणं न संभवतीति इदमपि ज्ञानायौगपद्यमेव न चैतन्मनस एकत्वे लिङ्गं किं तु घ्राणादीनां बाह्येन्द्रियाणां प्रत्येकमेकत्वे लिङ्गमित्यर्थस्तथा च वार्तिकम्— "यस्त्वेकेन्द्रियग्राह्येष्वर्थेषु विज्ञानानामयुगद्भावस्तन्न मनस एकत्वे लिङ्गम्— अन्यतस्तद्भावात्" इति। मनस एकत्वसाधकं ज्ञानायौगपद्यमाह— यत्त्विति, यथा घ्राणेन गन्धग्रहणकाले इन्द्रियान्तराणाम्= इन्द्रियान्तरैः श्रोत्रादिभिर्विषयान्तरेषु= विषयान्तराणां शब्दादीनां यो युगपत् ज्ञानाभावः स एव मनस एकत्वे लिङ्गम्— एतादृशज्ञानायौगपद्यस्य मनएकत्वप्रयुक्तत्वात्. प्रतिशरीरं मन एकमितिपक्षे एकस्याणुभूतस्य मनसो युगपदनेकैरिन्द्रियैः संयोगासंभवात् ज्ञानायौगपद्यमुपपद्यते इत्यर्थः। उक्ते हेतुं जिज्ञासते— कस्मादिति। उत्तरमाह— संभवतीति, अनेकेषां मनसामनेकैरिन्द्रियैर्युगपत्संयोगसंभवः स्पष्ट एव। व्यतिरेकमाह— न त्विति, ज्ञानयौगपद्यं तु न भवति किं तु पर्यायेण= क्रमेणैव ज्ञानानि जायन्ते इति योऽयं गन्धादिविषयविषयकः प्रत्ययपर्यायः= ज्ञानानां क्रमस्तस्मादेकस्मिन् शरीरे एकमेव मनो भवति= सिध्यतीत्यन्वयः ॥ ५८ ॥

पूर्वपक्षी मनस एकत्वं निराकरोति— नेति, उक्तरीत्या मनस एकत्वं नोपपद्यते इत्यर्थः, हेतुमाह— युगपदिति, यथा ज्ञानं मनो विना न संभवति तथा क्रियापि मनो विना न संभवति तत्र युगपदनेकाः क्रिया उपलभ्यन्ते इति तदुपपत्त्यर्थं मनसोऽनेकत्वं स्वीकार्यमिति सूत्रार्थः, युगपदनेकक्रियोपलब्धिश्च भाष्ये स्पष्टैव। व्याचष्टे— अयमिति, अयमध्यापकः, युगपदनेकक्रियाणां सत्त्वमुदाहरति— अधीते इति, अधीते= ग्रन्थावृत्तिं करोति, आरण्यजान् शब्दान्= पशुपक्षिशब्दान् शृणोति, व्याललिङ्गानि= सर्प-

## अलातचक्रदर्शनवत् तदुपलब्धिराशुसंचारात् ॥ ६० ॥

आशुसंचारादलातचक्रस्य भ्रमतो विद्यमानः क्रमो न गृह्यते. क्रमस्याऽग्रहणाद् अविच्छेदबुद्ध्या चक्रवद् बुद्धिर्भवति, तथा बुद्धीनां क्रियाणां चाशुवृत्तित्वाद् विद्यमानः क्रमो न गृह्यते. क्रमस्याऽग्रहणाद् युगपत् क्रिया भवन्तीति अभिमानो भवति ।

किं पुनः क्रमस्याऽग्रहणाद् युगपत् क्रियाभिमानः? अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति?, नात्र विशेषप्रतिपत्तेः कारणमुच्यते । उक्तम्- इन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्तीति, तच्चाऽप्रत्याख्येयम्- आत्मप्रत्यक्षत्वात् । अथापि दृष्टश्रुतानर्थांश्चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपद् अनेनानुमातव्यमिति । वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाशुवृत्तित्वात् क्रमस्याग्रहणम् । कथम्?, वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं ताव-

---

चिह्नानि बुभुत्सते, स्थानीयम्= स्थानं गन्तव्यं स्मरतीत्यन्वयः, उक्तानामध्ययनादिक्रियाणां क्रमो न गृह्यते तेन युगपद्भावः प्राप्तस्तथा चैतादृशीनां क्रियाणां युगपत् सिद्ध्यर्थं मनसो बहुत्वं स्वीकार्यमित्यन्वयः ॥ ५९ ॥

उक्तं समाधत्ते- अलातेति, उभयोरग्रयोरग्निविशिष्टो दण्डोऽलातमित्युच्यते यथाऽलातचक्रस्याशुसंचारात्= शीघ्रभ्रमेः युगपत्= नैरन्तर्येण दर्शनं जायते तत्र क्रमस्य सत्त्वेप्याशुसंचारात् क्रमो न गृह्यते तथोक्तस्थलेपि मनस आशुसंचारादेव तदुपलब्धिः= क्रियाणां यौगपद्योपलब्धिर्भवति वस्तुतस्तु न क्रियाणां यौगपद्यं येन मनोबहुत्वं सिध्येत किं तु क्रमेणैव शीघ्रतरं क्रिया भवन्तीति क्रमो न गृह्यते इति न मनसो बहुत्वापत्तिरिति सूत्रार्थः, अत्र दर्शनशब्दो व्यर्थ एव किं वा 'अलातचक्रनैरन्तर्योपलब्धिवत्' इतिवक्तव्यमासीत् । व्याचष्टे- आश्विति, अलातचक्रस्य भ्रमतो विद्यमानोपि क्रमः= उत्तरोत्तरदेशसंयोगक्रम आशुसंचारान्न गृह्यते क्रमस्य चाग्रहणाद् बुद्धिविच्छेदो न भवतीति अविच्छेदबुद्ध्या= बुद्धिविच्छेदाभवात् किं वा उत्तरोत्तरदेशसंयोगस्याऽविच्छेदज्ञानेन चक्रवद्बुद्धिः= चक्रत्वबुद्धिर्भवति- क्रमस्याग्रहणादित्यन्वयः, प्रकृतमाह- तथेति, बुद्धीनां क्रियाणां चोदाहृतानां विद्यमानोपि क्रमो न गृह्यते- आशुवृत्तित्वात्= शीघ्रभावित्वादित्यन्वयः, पर्यवसितमाह- क्रमस्येति, अभिमानः= भ्रमः, तथा च क्रियाणां ज्ञानानां च क्रमेण जायमानत्वेन यौगपद्याभावात् मनसो बहुत्वापेक्षा नास्तीत्येकमेव मन इतियुक्तम्- बहुत्वस्वीकारे गौरवादित्यन्वयः । अत्र- "अलातचक्रस्य" इत्यत्र 'अलातदण्डस्य' इतिवक्तव्यमासीत् ॥

यदुक्तम्- "क्रमस्याग्रहणाद् युगपत् क्रिया भवन्तीत्यभिमानो भवति" इति तत्र द्विधा शङ्कते- किमिति, अभिमानः= भ्रमः, उपलब्धिः= यथार्थज्ञानमिति विवेकः । अत्र= उक्तपक्षद्वयेपि विशेषप्रतिपत्तेः= एकतरपक्षवधारणस्य कारणं नोक्तं येनैकतरपक्षावधारणं स्यादित्यन्वयः । उत्तरमाह- उक्तमिति, एकतरपक्षावधारणकारणमुक्तमित्यर्थः, उक्तमनुवदति- इन्द्रियान्तराणामिति, एकस्मिन् क्षणेऽनेकैरिन्द्रियैरर्थग्रहणं न भवति किं तु पर्यायेण= क्रमेणेति "ज्ञानायौगपद्यात् ५८" इतिसूत्रे उक्तं तच्चोक्तं प्रत्यक्षसिद्धत्वाद् अप्रत्याख्येयम्= अबाधितमेव तेन चाबाधितेन प्रत्यक्षेण बुद्धीनां क्रमः सिद्धस्तेन च क्रमेण मनस एकत्वं सिद्धमित्युक्तमेव तथा च मनस एकत्वादनेकक्रियाणां यौगपद्यं न संभवतीति येयं क्रियाणां यौगपद्यप्रतीतिः सा क्रमस्याऽग्रहणाद् युगपत् क्रियाभिमानः= क्रियाणां यौगपद्यभ्रान्तिरेवेति सिद्धमित्यर्थः । बुद्धीनां क्रमे दृष्टान्तमाह- अथेति, अथापि= किं च दृष्टान् श्रुतांश्चार्थान् चिन्तयतः पुरुषस्य बुद्धयः= तद्विषयकस्मृतयः क्रमेण भवन्ति अनेन क्रमेणान्यत्रापि बुद्धीनां क्रमेण जायमानत्वमनुमेयमित्यन्वयः, बुद्धयः क्रमवर्तिन्यो बुद्धित्वात् स्मृतिवदित्यनुमानम् । क्रमाग्रहणमुदाहरति- वर्णेति, पदेषु वर्णबुद्धयो वाक्येषु न पदबुद्धयः क्रमेणैव भवन्ति- वर्णानां क्रमेणैव श्रवणसंभवादुच्चारणसंभवाच्च

च्छ्रवणं भवति. श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसंधत्ते. प्रतिसंधाय पदं व्यवस्यति. पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते, पदसमूहप्रतिसंधानाच्च वाक्यं व्यवस्यति. संबद्धांश्च पदार्थान गृहीत्वा वाक्यार्थं प्रतिपद्यते, न चासां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते. तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति । न चास्ति मुक्तसंशया युगपदुत्पत्तिर्बुद्धीनां यया मनसो बहुत्वमेकशरीरेऽनुमीयते इति ॥ ६० ॥

## यथोक्तहेतुत्वाच्चाऽणु ॥ ६१ ॥

अणु मन एकं चेति धर्मसमुच्चयः– ज्ञानायौगपद्यात्, महत्त्वे मनसः सर्वेन्द्रियसंयोगाद् युगपद् विषयग्रहणं स्यादिति ॥ ६१ ॥

मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिलाभो नान्यत्र शरीरात्, ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानम् ईप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहाराः, तत्र खलु विप्रतिपत्तेः संशयः– किमयं पुरुषकर्मनिमित्तः शरीरसर्गः ? अथ वा भूतमात्रादकर्मनिमित्तः ? इति, श्रूयते खल्वत्र विप्रतिपत्तिरिति ।

---

अथाप्याशुवृत्तित्वात् क्रमो न गृह्यते इति विद्यमानस्यापि क्रमस्याग्रहणमुपपन्नं तेन यौगपद्याभिमानः सिद्ध इत्यर्थः । उक्ते हेतुं जिज्ञासते– कथमिति । उत्तरमाह– वाक्यस्थेति, वाक्यवृत्तिवर्णानां पृथक् पृथगेव श्रवणं भवतीत्यर्थः, पदत्वप्रतीतिमाह– श्रुतमिति, पदभावेन= पदत्वेन, प्रतिसंधत्ते= अनुसंधत्ते, व्यवस्यति= अवधारयति, पदावधारणानन्तरं पदार्थस्मृतिर्भवति, आसां वर्णपदपदार्थबुद्धीनां क्रमेण जायमानत्वेपि आशुवृत्तित्वात् क्रमो न गृह्यते, एवं पदसमूहज्ञानानन्तरं वाक्यत्वज्ञानं जायते तदनन्तरं वाक्यार्थज्ञानं जायते तत्रापि क्रमो न गृह्यते इति क्रमस्याग्रहणं सिद्धमित्यर्थः, पदार्थानां परस्परं संबन्धे सत्येव वाक्यार्थज्ञानं जायते इत्युक्तम्– संबद्धानिति । पर्यवसितमाह– तदेतदिति, यथोक्तवर्णादिबुद्धिषु क्रमस्य सत्त्वेपि यौगपद्याभिमानो भवति एवं सर्वत्र बुद्धीनां क्रियाणां च क्रमस्य सत्त्वेपि आशुतरभावेन तदग्रहणादेव यौगपद्याभिमानो विज्ञेयः । विपक्षे बाधकमाह– न चेति, मुक्तसंशया= संशयरहिता, अनुमीयते= अनुमीयेत । स्पष्टमन्यत्, तथा च प्रतिशरीरमेकमेव मन इतिसिद्धम् ॥ ६० ॥

सिद्धान्ती मनसोऽणुत्वमाह– यथोक्तेति, यथोक्तहेतुत्वात्= ज्ञानायौगपद्यादेव मनः अणु= सूक्ष्मं यदि मनोऽणु न स्यात्तदा एकस्यापि मनस एकस्मिन् क्षणेऽनेकैरिन्द्रियैः संयोगसंभवाद् युगपज्ज्ञानान्युत्पद्येरन् न चोत्पद्यन्ते तस्मादणु मनः, एकस्याणोश्च मनसो युगपदनेकैरिन्द्रियैः संयोगासंभवादेव युगपदनेकज्ञानापत्तिर्नास्ति किं तु ज्ञानानां क्रम उपपन्न इतिसूत्रार्थः । अत्र “ यथोक्तहेतुत्वात् ” इत्यत्र ‘ उक्तहेतोरेव ’ इति वक्तव्यमासीत् । व्याचष्टे– अण्विति, एकत्वाणुत्वधर्मयोः समुच्चयः । उक्ते हेतुमाह– ज्ञानेति । विपक्षे बाधकमाह– महत्त्वे इति, स्पष्टमन्यत् ॥ ६१ ॥

॥ इति मनोविवेचनं समाप्तम् ॥

---

शरीरस्यादृष्टजन्यत्वप्रतिपादनपरमग्रिमप्रकरणमुपक्रमते– मनस इति, सेन्द्रियस्य= इन्द्रियसंयुक्तस्य, वृत्तिलाभः= विषयग्रहणम्, ज्ञातुर्जीवस्य बुद्ध्यादयः शरीरायतनाः= शरीरे एव भवन्ति, विषयोपभोगादयश्च सर्वे व्यवहारा अपि जीवस्य शरीराश्रयाः= शरीरे एव भवन्ति न तु शरीरं विनेति तस्य शरीरस्योत्पत्तिर्विचारणीयेत्यर्थः । अत्र संशयमुत्थापयति– तत्रेति, तत्र= शरीरोत्पत्तौ, विप्रतिपत्तेः= मतभेदेन । संशयस्वरूपमाह– किमिति, भूतमात्रात्= केवलभूतेभ्यः कर्मनिरपेक्षेभ्यः । पुनः संशयकारणमाह–

तत्रेदं तत्त्वम्—

**पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६२ ॥**

पूर्वशरीरे या प्रवृत्तिः वाग्बुद्धिशरीरारम्भलक्षणा तत् पूर्वकृतं कर्मोक्तं तस्य फलम्= तज्जनितौ धर्माधर्मौ. तत्फलस्यानुबन्धः= आत्मसमवेतस्यात्रस्थानम्. तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्य शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्य इति । यदधिष्ठानोयमात्मा 'अयमहम्' इतिमन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम्. तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिन् शरीरे शरीरान्तरं निष्पद्यते. निष्पन्नस्य च तस्य पूर्वशरीरवत् पुरुषार्थक्रिया पुरुषस्य च पूर्वशरीरवत् प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सति एतदुपपद्यते इति, दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिस्तयाऽनुमातव्यम्– 'शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यते' इति ॥ ६२ ॥

अत्र नास्तिक आह—

**भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् ॥ ६३ ॥**

---

श्रूयते इति, अत्र= शरीरोत्पत्तौ । शरीरसर्गं केपि कर्मनिमित्तकं वदन्ति केपि च कर्मानिमित्तकं वदन्तीति विप्रतिपत्तिः ।

अग्रिमसूत्रमवतारयति– तत्रेति, इदम्= सूत्रेण वक्ष्यमाणम् । पूर्वेति– पूर्वकृतम्= पूर्वजन्मकृतं कर्म तस्य फलभूतम्= तादृशकर्मजन्यं यदऽदृष्टं तदनुबन्धात्= तत्संबन्धात्= तत्सहकारात् भूतेभ्यस्तत्= तस्य= शरीरस्योत्पत्तिर्भवति न तु कर्मनिरपेक्षेभ्यो भूतेभ्य इतिसूत्रार्थः । व्याचष्टे– पूर्वेति, पूर्वशरीरे= पूर्वजन्मनि, प्रवृत्तिश्च ग्रन्थारम्भे सप्तदशसूत्रे उक्ता, उक्तम्= उच्यते, तस्य= पूर्वकृतस्य, तत्फलस्य= तस्य धर्माधर्मलक्षणादृष्टरूपफलस्य, आत्मसमवेतस्यावस्थानम्= आत्मसमवायः, तेन= अदृष्टस्यात्मसमवायेन, प्रयुक्तेभ्यः= प्रेरितेभ्यः, स्वतन्त्रेभ्यः= कर्मनिरपेक्षेभ्यः, इत्यन्वयः, स्पष्टमन्यत् । शरीरलक्षणमाह– यदिति, यदधिष्ठानः= यन्निष्ठः, अयमहमितिमन्यमानोयमात्मा यत्राभियुक्तः= यद्विषयकाभिनिवेशविशिष्टः, संस्करोति= संपादयति, अस्य= आत्मनस्तदेव शरीरम्, यच्छब्दैरुक्तस्य तच्छब्देन परामर्शः, तदेतत् शरीरलक्षणं सर्वप्रसिद्धमेव । कर्मसहितेभ्यो भूतेभ्यः शरीरोत्पत्तिमाह– तेनेति, अस्मिन्= वर्तमाने, शरीरे पतिते सति तेन भूतसहितेन धर्माधर्मलक्षणेन संस्कारेण= अदृष्टेन शरीरान्तरम्= अग्रिमजन्मशरीरं निष्पद्यते इत्यन्वयः । उत्पन्नस्य शरीरस्य प्रयोजनमाह– निष्पन्नस्येति, तस्य= शरीरस्य, पूर्वशरीरस्येवेति पूर्वशरीरवत् पुरुषार्था गमनादिक्रिया भवति, पूर्वशरीरे इवेति पूर्वशरीरवत् तस्मिन् शरीरेपि पुरुषस्य प्रवृत्तिर्भवति भोजनादौ, एतत्सर्वं कर्मसापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सति उपपद्यते– तत्तत्कारणीभूतानां कर्मणामानुकूल्यात्, कर्मनिरपेक्षेभ्यश्च भूतेभ्यः शरीरसर्गस्वीकारे एतत्सर्वं नोपपद्यते– कर्मणामकारणत्वे शरीरपातस्य भोगवैषम्यादेश्चानुपपत्तेरित्यनुसंधेयम् । उक्ते दृष्टान्तमाह– दृष्टेति, पुरुषार्थक्रियात्र ग्रामप्रापणादिक्रिया, तया= रथादीनामुत्पत्त्या, अनुमेयमाह– शरीरमपीति, गुणान्तरापेक्षेभ्यः= कर्मसापेक्षेभ्यः, तथा च यथा रथादिकं प्रयत्नलक्षणपुरुषगुणसापेक्षेभ्य एव भूतेभ्यः= काष्ठादिभ्य उत्पद्यते तथा शरीरमपि अदृष्टलक्षणपुरुषगुणसापेक्षेभ्य एव भूतेभ्य उत्पद्यते न स्वतन्त्रेभ्य इति सिद्धमित्यर्थः, स्पष्टमन्यत् । शरीरं जीवगुणप्रयुक्तभूतकार्यं पुरुषार्थसाधनत्वाद्रथादिवदित्यनुमानप्रयोगः ॥ ६२ ॥

अग्रिमसूत्रमवतारयति– अत्रेति, अत्र= शरीरसर्गस्य कर्मनिमित्तकत्वे प्राप्ते । भूतेभ्य इति– यथा कर्मनिरपेक्षेभ्य एव भूतेभ्यो मूर्तयः= पाषाणाद्यवयविन उत्पद्यन्ते– तेषां कर्मासंभवात् तथा कर्मनिर-

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः= सिकताशर्करापाषाणगैरिकाऽञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयते इति ॥ ६३ ॥

## न- साध्यसमत्वात् ॥ ६४ ॥

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यऽकर्मनिमित्तः सर्गः साध्यः साध्यसमत्वादसाधनमिति= "भूतेभ्यो मूर्त्युपादानवत्" इति चानेन साध्यम् ॥ ६४ ॥

## न-उत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६५ ॥

विषमश्चायमुपन्यासः, कस्मात् ?, निर्बीजा इमा मूर्तय उत्पद्यन्ते. वीजपूर्विका तु शरीरोत्पत्तिः । मातापितृशब्देन लोहितरेतसी वीजभूते गृह्येते, तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाश्रये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्ति इत्युपपन्नं वीजानुविधानमिति ॥ ६५ ॥

---

पेक्षेभ्य एव भूतेभ्यः तत्= तस्य= शरीरस्योपादानम्= उत्पत्तिः संभवतीति न तत्र कर्मणां कारणत्वमिति सूत्रार्थः । व्याचष्टे- यथेति, निर्वृत्ताः= उत्पन्नाः, मूर्तिपदार्थमाह- सिकतेति, शर्करा= सर्षपसमाना मृत्खण्डाः, पुरुषार्थकारित्वात्= कार्यकारित्वात्, उपादीयन्ते= गृह्यन्ते । प्रकृतमाह- तथेति, पुरुषार्थकारित्वात्= भोगसाधनत्वात्, उपादीयते= आत्मना गृह्यते, तदेतत् शरीरातिरिक्तात्मपक्षे विज्ञेयम्, स्पष्टमन्यत् ॥ ६३ ॥

उक्तं सिद्धान्ती निराकरोति- नेति, पाषाणाद्युत्पत्तिरपि कर्मनिरपेक्षभूतेभ्यो न संभवति-तदुत्पत्तेरपि जीवकर्मसापेक्षेभ्य एव भूतेभ्यः संभवात् पाषाणादिपदार्थमात्रस्य जीवार्थत्वादिति पाषाणाद्युत्पत्तिः कर्मनिरपेक्षभूतकृतेति दृष्टान्तः साध्यसमः= साध्यः= असिद्ध एवेति न शरीरोत्पत्तेः कर्मनिरपेक्षभूतकृतत्वसाधने समर्थः- सिद्धस्यैव दृष्टान्तत्वसंभवादिति सूत्रार्थः । व्याचष्टे- यथेति, प्रकृतमाह- तथेति । पर्यवसितमाह- साध्यसमत्वादिति, असाधनम्= असाधकमिदमुदाहरणमित्यर्थः । उक्तं विशदयति- भूतेभ्य इति, अनेन= पूर्वपक्षिणा "भूतेभ्यो मूर्त्युपादानवत्" इति पूर्वसूत्रोक्तमुदाहरणं साध्यमेव न सिद्धं साध्यत्वाच्च न प्रकृतसाधकं संभवति, साध्यत्वं च पाषाणाद्युत्पत्तेरपि कर्मसापेक्षत्वस्वीकारादिति शरीरोत्पत्तेः कर्मनिरपेक्षत्वं न संभवतीत्यर्थः ॥ ६४ ॥

"भूतेभ्यो मूर्त्युपादानवत्" इत्युक्तदृष्टान्ते किं वा सिकताद्युत्पत्तेः कर्मनिरपेक्षत्वमभ्युपगम्यापि जीवकर्मनिरपेक्षेभ्यः केवलभूतेभ्यः शरीरोत्पत्तौ दोषान्तरमाह- नेति, पाषाणाद्युत्पत्तिर्यथा केवलभूतेभ्यः संभवति तथा शरीरोत्पत्तिः केवलभूतेभ्यो न संभवतीत्यर्थः, उक्ते हेतुमाह- उत्पत्तीति, मातापित्रोः= मातापितृशुक्रशोणितयोरपि शरीरोत्पत्तिकारणत्वात् अन्यथा तादृशशुक्रादिकं विनापि शरीरमुत्पद्येत न चोत्पद्यते इति शरीरोत्पत्तेः पाषाणाद्युत्पत्तेश्च साम्यमेव नास्तीति न शरीरोत्पत्तौ पाषाणाद्युत्पत्तिर्दृष्टान्तः संभवतीति सूत्रार्थः, अत्र सूत्रे- "नोत्पत्तिनिमित्तत्वात्" इत्यत्र 'उत्पत्तिनिमित्तत्वाच्च' इति-वक्तव्यमासीत् । व्याचष्टे- विषम इति, उपन्यासः= पाषाणाद्युत्पत्तिदृष्टान्तो विषमः= विपरीतः । उक्तवैषम्यस्य हेतुं जिज्ञासते- कस्मादिति । वैषम्यमुपपादयति- निर्बीजा इति, निर्बीजाः= शुक्रं विना, मूर्तयः= पाषाणाद्यवयविनः, बीजपूर्विका= शुक्रशोणिताभ्याम्, तथा च सबीजत्वनिर्बीजत्वे एव वैषम्यम् । सूत्रघटकमातापितृशब्देन ग्राह्यमाह- मातेति, मातुर्लोहितं पितुश्च रेतः= शुक्रं ते शरीरस्य बीजभूते । पर्यवसितमाह- तत्रेति, तत्र= एवं शरीरोत्पत्तेः बीजपूर्वकत्वे सिद्धे, सत्त्वस्य= जीवस्य

## तथाऽऽहारस्य ॥ ६६ ॥

"उत्पत्तिनिमित्तत्वात्" इतिप्रकृतम्, भुक्तं पीतम् आहारस्तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चोपचीयते. बीजे गर्भाशयस्थे बीजसमानपाकं मात्रया चोपचयः बीजे यावद् व्यूहसमर्थः संचय इति. संचितं चाऽर्बुदमांसपेशीकलककण्डरशिरःपाण्यादिना च व्यूहेन इन्द्रियाधिष्ठानभेदेन व्यूह्यते. व्यूहे च गर्भनाड्याऽवतारितं रसद्रव्यमुपचीयते यावत् प्रसवसमर्थमिति। न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पते इति, एतस्मात् कारणात् कर्मनिमित्तत्वं शरीरस्य विज्ञायते इति ॥ ६६ ॥

---

गर्भवासेनाऽनुभवनीयम्= भोग्यं कर्मास्ति. पित्रोः= मातापित्रोरपि पुत्रलक्षणफलेनानुभवनीये= भोग्ये कर्मणी स्तः तानि हि कर्माणि मातुर्गर्भाश्रये भूतेभ्यः= शुक्रशोणितादिभ्यः शरीरोत्पत्तिप्रयोजकानि भवन्ति इति शरीरोत्पत्तेः कर्मसापेक्षत्वं सिद्धं तथा बीजानुविधानम्= मातापितृसादृश्यमपि शरीरोत्पत्तेर्बीजपूर्वकत्वे एव संभवतीति बीजानुविधानमुपपन्नमित्यर्थः। अत्र- "बीजानुविधानाच्च यज्जातीयौ तस्य पितरौ तज्जातीयः संभवतीति" इति वार्तिकम्। किं वा शरीरोत्पत्तेः कर्मसापेक्षत्वे एव बीजानुविधानम्= उक्तबीजपूर्वकत्वं संभवति अन्यथा पाषाणाद्युत्पत्तिवत् कर्मसापेक्षत्वं न स्यान्न चैवमस्तीति कर्मसापेक्षत्वेन बीजानुविधानमप्युपपन्नमित्यर्थः॥ ६५ ॥

शरीरोत्पत्तेः कारणान्तरमप्याह- तथेति, यथोक्तबीजस्य शरीरोत्पत्तिकारणत्वं तथा मातापितृकर्तृकस्याहारस्य= भोजनस्यापि शरीरोत्पत्तिकारणत्वमस्ति- तादृशभोजनं विनोक्तबीजस्यासंभवात्, साक्षादप्याहाररसेन गर्भाशये शरीरं वर्धते पाषाणाद्युत्पत्तौ तु नाऽऽहारस्य कारणत्वमिति न शरीरोत्पत्तौ पाषाणाद्युत्पत्तिर्दृष्टान्तः संभवति- वैधर्म्यादिति सूत्रार्थः। व्याचष्टे- उत्पत्तीति, प्रकृतम्= पूर्वसूत्रादनुवर्तनीयमित्यर्थः। आहारपदार्थमाह- भुक्तं पीतमिति, तस्य= आहारस्य, पक्तिनिर्वृत्तम्= जाठराग्निकृतपाकेन संपन्नम्, उपचीयते= संचितं भवति, तत्र बीजे गर्भाशयस्थे सति तस्य बीजस्य= पुरुषशुक्रस्य यावत्= यावत्कालपर्यन्तं व्यूहसमर्थः= शरीररूपेण परिणामसमर्थः संचयः= पुष्टिर्भवति तावत्पर्यन्तं अर्थात् शरीरसिद्धिपर्यन्तं बीजेपि बीजसमानपाकम्= बीजपाकानुकूलं किं वा बीजेन सह पाकयोग्यं मात्रया= किंचित् किंचित् तस्य रसद्रव्यस्य उपचयः= संचयो भवति, बीजसमानपाकमिति क्रियाविशेषणम्। अग्रिमप्रक्रियामाह- संचितमिति, बीजे संचितं च तद्रसद्रव्यं क्रमेणाऽर्बुदादिरूपेण व्यूहेन= पिण्डरूपेण इन्द्रियाधिष्ठानभेदेन= चक्षुरादिगोलकादिविशेषरूपेण व्यूह्यते= परिणमते= पिण्डावस्थां प्राप्नोतीत्यन्वयः। गर्भाशयस्थितस्य बीजस्य क्रमेणाऽर्बुदादिलक्षणा अवस्था भवन्ति, अर्बुदावस्था बुद्बुदावस्था ततो मांसावस्था ततः पेशी= पिष्टसदृशावस्था ततोपि घनावस्था कलकावस्था ततः कण्डरावस्था= लम्बायमानपिण्डावस्था ततः शिरःपाण्याद्यङ्गानां प्राकट्यमित्यनुसंधेयम्। उक्तं च याज्ञवल्क्यस्मृतौ—

"प्रथमे मासि संक्लेदभूतो धातुर्विमूर्च्छितः।
मास्यऽर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः॥" इति।

अग्रिमप्रक्रियामाह- व्यूहे इति, व्यूहे= पिण्डे गर्भाशयस्थे। यावत्प्रसवसमर्थम्= प्रसवपर्यन्तमित्यर्थः। पूर्वपक्षिमते बाधकमाह- न चेति, अन्नपानस्य स्थाल्यादिस्थितस्य अयम्= शरीररूपेण परिणामो न भवति तस्मात् शरीरस्य कर्मजन्यत्वं विज्ञायते इत्याह -एतस्मादिति, यदि कर्मनिरपेक्षेभ्योपि भूतेभ्यः शरीरोत्पत्तिः स्यात्तदा स्थाल्यादिगतेभ्योपि स्यात् न च भवतीति कर्मसापेक्षत्वं सिद्धम्, भूतानि च शरीरोत्पादकानि अन्नादिरूपाण्येवेत्यनुसंधेयम्। वस्तुतस्तु नेदं बाधकं संतोषकरमिति 'यदि कर्मनिरपेक्षत्वं शरीरोत्पत्तेः स्यात्तदा संतानरहितत्वं कस्यापि न स्यात्' इतिवक्तव्यम्॥ ६६ ॥

## प्राप्तौ चानियमात् ॥ ६७ ॥

न सर्वो दम्पत्योः संयोगो गर्भाधानहेतुर्दृश्यते. तत्राऽसति कर्मणि न भवति सति च भवतीत्युपपन्नो नियमाभाव इति । कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात्– न ह्यत्र कारणाभाव इति ॥ ६७ ॥

अथापि—

## शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ६८ ॥

यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाहूदराणां सक्थ्नां च कोष्ठगानां वातपित्तकफानां च मुखकण्ठहृदयाऽऽमाशयपक्वाशयाऽधःस्रोतसां च परमदुःखसंपादनीयेन संनिवेशेन व्यूहितम् अशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते, एवं च प्रत्यात्मनियतस्य निमित्तस्याऽभावाद् निरतिशयैरात्मभिः संबन्धात् सर्वात्मनां च समानैः

---

ननु कर्मनिरपेक्षत्वमतेति यद् यथा भवति तत् तथैव भवति नान्यथा, अन्यथा कर्मसापेक्षभूतेभ्योपि स्थाल्यादिगतेभ्यः कथं न शरीरमुत्पद्यते इति चोद्यस्य संभवात् तथा च गर्भाशयगतेभ्य एव कर्मनिरपेक्षेभ्योपि भूतेभ्यः शरीरमुत्पद्यते न स्थाल्यादिगतेभ्य इति नियम उपपद्यते इत्याशङ्क्याह– प्राप्ताविति, प्राप्तौ= स्त्रीपुरुषयोः संयोगे सत्यपि कदाचित् गर्भाधानं शरीरोत्पत्तिर्वा न भवतीत्यऽस्माद्ऽनियमादपि कर्मसापेक्षत्वं सिद्धम् अन्यथा कर्मसापेक्षत्वाभावेन स्त्रीपुरुषयोः संयोगे सत्यवश्यं गर्भाधानं स्यात् न चैवं नियमोस्तीति तादृशनियमाभावादपि कर्मसापेक्षत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे– नेति, तत्र= एवं सति= कर्मणां कारणत्वस्वीकारे, गर्भाधानमितिशेषः, नियमाभावः= गर्भाधाननियमस्याभाव उपपन्नस्तेन प्रकारान्तरासंभवात् कर्मसापेक्षत्वं सिद्धमित्यर्थः । पूर्वपक्षिमते बाधकमाह– कर्मेति कर्मनिरपेक्षाणां भूतानां शरीरोत्पत्तिकारणत्वे स्त्रीपुरुषसंयोगे गर्भाधानस्य नियमः स्यादित्यर्थः, नियमापत्तौ हेतुमाह– न हीति, अत्र= पूर्वपक्षिमते स्त्रीपुरुषसंयोगे जाते गर्भाधानस्य कारणाभावो नास्ति येन गर्भाधानाभाव उपपद्येत, अस्मन्मते तु कर्मरूपकारणस्याभावाद् गर्भाधानाभाव उपपद्यते इति कर्मसापेक्षत्वं सिद्धमित्यर्थः ॥ ६७ ॥

अग्रिमसूत्रमवतारयति– अथापीति, किं चेत्यर्थः । अत्र– "नन्वात्मनां विभुत्वात् सकलशरीरैः संबन्धादिदं शरीरमस्यैवात्मन इतिनियमे को हेतुरित्यस्योत्तरद्वारकं सूत्रम्" इति श्रीगुरुचरणाः । किं वा ननु यदा न गर्भाधानं तदा न दम्पत्त्योर्वास्तवः संयोग इत्याशङ्क्य तादृशसंयोगाभावोपि कर्मसापेक्षत्वं विना नोपपद्यते– प्रकारान्तरासंभवादित्याह– शरीरेति, यथा शरीरोत्पत्तिकारणं कर्म तथा स्त्रीपुरुषयोः संयोगोत्पत्तिकारणमपि कर्मैव तथा च सति कर्मणि गर्भाधानहेतुः संयोगो भवति नान्यथेति संयोगानियमोपि कर्मसापेक्षत्वेनोपपद्यते इति सूत्रार्थः, किंवाऽऽत्मनां विभुत्वेन सर्वशरीरैः संयोगे सत्यपि सुखादिहेतुभूतो यः शरीरविशेषेण संयोगस्तस्यापि किं वा भोगव्यवस्थाया अपि निमित्तं कर्मैवेति सूत्रार्थः । सर्वशरीरेषु भोगाभावादयं संयोगविशेषः सिद्ध एव । व्याचष्टे– यथेति, अनेन ग्रन्थेन कर्मनिरपेक्षभूतानां शरीरोत्पादकत्वासंभवमुपपादयति, यथा व्यूहितमित्यन्वयः, स्नायुः= संधिबन्धनपदार्थः, सक्थ्नामिति– "सक्थि क्लीबे पुमानूरुः" इत्यमरः, आमाशयः= अपक्वमलाशयः, पक्वाशयः= पक्वमलाशयः, अधःस्रोतः= अधोमार्गः, स्पष्टमन्यत्, परमदुःखसंपादनीयेन= परमदुःखभोगयोग्येन अशक्येन वा उक्तनाड्याद्यङ्गानां संनिवेशेन यथा व्यूहितम्= संपन्नं शरीरं तथा कर्मनिरपेक्षैः पृथिव्यादिभूतैरुत्पादयितुमशक्यमेवेति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते इत्यन्वयः । पूर्वपक्षिमते बाधकमाह– एवं चेति, चैत्रादीनां मैत्रादिभोगस्यानुभवो न भवतीति प्रत्यक्षसिद्धं तदेतत् कर्मनिरपेक्षत्वमते

पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वात्मनां सुखदुःखसंवित्तिसाधनं समानं प्राप्तम्, यत्तु प्रत्यात्मं व्यवतिष्ठते तत्र शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते, परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति, तदेवं शरीरोत्पत्तिनिमित्तवत् संयोगनिमित्तं कर्मेति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्यात्मना संयोगं प्रचक्ष्महे इति ॥ ६८ ॥

## एतेन नियमः प्रत्युक्तः ॥ ६९ ॥

नोपपद्यते तथा हि चैत्रात्मनस्तेनैव शरीरेण भोगसंपादकः संबन्ध इत्यस्य निमित्तं प्रत्यात्मनियतं नास्ति– आत्मनां निरतिशयत्वेन= समानरूपत्वेन कर्मातिरिक्तनिमित्तविशेषाश्रयत्वासंभवात्. निरतिशयैरेवात्मभिः शरीराणां संबन्धोस्तीति सर्वात्मभोगजनकत्वं स्यादेव, तथा सर्वात्मनां समानैः= सर्वात्मसाधारणैः पृथिव्यादिभूतैः शरीरमुत्पादितमस्ति पृथिव्यादिषु च चैत्रात्मादिसंबन्धनियामको हेतुर्नास्ति तथा च यथात्मसु संबन्धनियामको नास्ति आत्मनां निरतिशयत्वात् तथा शरीरेष्वपि संबन्धनियामको न संभवति– शरीरकारणीभूतानां पृथिव्यादिभूतानां सर्वात्मसाधारणत्वात् तथा च कर्मनिरपेक्षभूतेभ्य उत्पन्नं यावच्छरीरं समानम्= समानभावेन= अविशेषेण सर्वेषामात्मनां सुखादिज्ञानसाधकं प्राप्तम्= स्यादित्यन्वयः, न चैवमस्तीत्याह– यत्त्विति, यत् शरीरं प्रत्यात्मं व्यवतिष्ठते= व्यवस्थया वर्तते= एकस्यैवात्मनः सुखादिसाधनं भवति न सर्वेषामिति व्यवस्था तत्र शरीरोत्पत्तिनिमित्तं कर्मैव व्यवस्थाहेतुरितिविज्ञायते– प्रकारान्तरासंभवात् । शरीरकारणीभूतस्य कर्मण एतद्व्यवस्थाहेतुत्वमुपपादयति– परिपच्यमान इति, यस्यात्मनः कर्मणा शरीरमुत्पन्नं तच्छरीरं तस्यैवात्मनो भोगसाधनं भवति नान्यस्येत्यर्थः, परिपच्यमानः= फलोन्मुखः, प्रत्यात्मनियतः= तत्तदात्मव्यक्तिसमवेतः, कर्माशयः= अदृष्टम्, व्यवस्थापयति= उक्तभोगसाधनत्वव्यवस्थां करोतीत्यर्थः । उपसंहरति– तदेवमिति, अत्र 'शरीरोत्पत्तिनिमित्तत्ववत्' इति वक्तव्यमासीत् । प्रकृतसंयोगपदार्थमाह– प्रत्यात्मेति, यत् खलूक्तरूपं शरीरस्य प्रत्यात्मव्यवस्थानं तदेवात्मनः शरीरेण संयोग इत्युच्यते एतादृशसंयोगस्यापि कारणं कर्मैवेत्यर्थः । किं वा यः खलु तेन तेन शरीरेण तस्य तस्यात्मनो भोगकारणीभूतः संयोगः स एव शरीराणां प्रत्यात्मव्यवस्थानमित्युच्यते इत्यर्थः ॥ ६८ ॥

उक्तमन्यत्रातिदिशति– एतेनेति, एतेन= "शरीरोत्पत्तिनिमित्तवत्" इत्यादिसूत्रैः शरीरोत्पत्त्यादीना कर्मसापेक्षत्वनिरूपणेन नियमः= सर्वेषां शरीराणामेकरूपतानियमोपि कर्मसापेक्षत्वेन प्रत्युक्तः= प्रत्याख्यात इत्यन्वयः, पूर्वपक्षिमते शरीरोत्पत्तेः कर्मनिरपेक्षत्वात् शरीराणामेकरूपत्वं प्राप्नोति– सरोगत्वनीरोगत्वादिलक्षणस्य विविधवैलक्षण्यस्य कारणासंभवात्, अस्मन्मते च कर्मसापेक्षत्वात् शरीराणां विविधवैलक्षण्यं तत् संभवतीति कर्मनिरपेक्षत्वेनाऽऽपद्यमानः शरीराणामेकरूपत्वनियमः प्रत्याख्यात इति सूत्रार्थः । नियमो ह्येकरूपतेति अनियमः= अनेकरूपता= परस्परवैलक्षण्यमिति पदार्थः । अत्र– "ये तु मेनिरे न कर्मनिबन्धनः शरीरसर्गोऽपि तु प्रकृत्यादिनिबन्धनः– प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्त्वरजस्तमोरूपतया प्रवृत्तिशीलाः स्वं स्वं विकारमारभन्ते प्रतिबन्धापगममात्रे तु धर्माधर्मावपेक्षन्ते. तद् यथा कृषीवलः केदारादपां पूर्णात् केदारान्तरमपूर्णमाऽऽपिप्लावयिषुरपां सेतुमात्रं भिनत्ति तास्तु निम्नाभिसर्पणस्वभावा अपहृतसेतवः स्वयमेव केदारमाप्लावयन्ति एवमाप्लावयन्ति प्रकृतयोपि विकारानिति यथाहुः– "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षैत्रिकवत्" (योगसूत्रम्) इति तान् प्रत्याह– एतेनानियमः प्रत्युक्तः" इति तात्पर्यटीका, तदेतद् योगभाष्यकैवल्यपादतृतीयसूत्रे द्रष्टव्यम् । वस्तुतस्तु "एतेनानियमः प्रत्युक्तः" इत्येवं यः सूत्रपाठः स तु न संगतः प्रतिभाति– एतेन= पूर्वसूत्रोक्तकर्मसापेक्षत्वेनाऽनियमपदार्थस्य प्रत्याख्यानासंभवात् । अनियम इतिपाठाग्रहपक्षे तु "प्रत्युक्तः" इत्यस्य 'उपपादितः' इत्यर्थो वक्तव्यः ।

योऽयमकर्मनिमित्ते शरीरसर्गे सति नियम इत्युच्यते अयम्– "शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ६८" इत्यनेन प्रत्युक्तः। कस्तावदयं नियमः?. यथैकस्यात्मनः शरीरं तथा सर्वेषामिति नियमः, अन्यस्याऽन्यथा अन्यस्याऽन्यथा इत्यऽनियमः= भेदः= व्यावृत्तिविशेष इति, दृष्टा च जन्मव्यावृत्तिः– उच्चाभिजनो निकृष्टाभिजन इति. प्रशस्तं निन्दितमिति. व्याधिबहुलम्. अरोगमिति. समग्रं विकलमिति. पीडाबहुलं सुखबहुलमिति. पुरुषातिशयलक्षणोपपन्नं विपरीतमिति. प्रशस्तलक्षणं निन्दितलक्षणमिति. पट्विन्द्रियं मृद्विन्द्रियमिति. सूक्ष्मश्च भेदोऽपरिमेयः, सोयं जन्मभेदः प्रत्यात्मनियतात् कर्मभेदादुपपद्यते । असति कर्मभेदे प्रत्यात्मनियते निरतिशयत्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतोरभावात् सर्वं सर्वात्मनां प्रसज्येत, न त्विदमित्थम्भूतं जन्म, तस्माद् नाऽकर्मनिमित्ता शरीरोत्पत्तिरिति ॥६९॥

---

व्याचष्टे– योयमिति, शरीरसर्गे अकर्मनिमित्ते= कर्मनिरपक्षे सति योऽयं पूर्वपक्षिमतेन नियमः= सर्वेषां शरीराणामेकरूपत्वनियमः प्राप्नोति– परस्परं वैलक्षण्यस्य कारणासंभवात्= वैलक्षण्यकारणीभूतानां कर्मणां कारणत्वास्वीकारात् इत्युच्यते. किं वा यः खलूक्तो नियम इत्युच्यते अयम्= सोपि "शरीरोत्पत्तिनिमित्तवत्" इत्यनेन सूत्रेण प्रत्युक्तः= प्रत्याख्यातः– अस्मन्मते सर्वत्र कर्मसापेक्षत्वस्वीकारेण कर्मभिरेव दृष्टं शरीराणां वैलक्षण्यमुपपद्यते एवेति न शरीराणामेकरूपत्वनियमः प्राप्नोतीत्यर्थः। "अनियमः" इतिपाठस्तु न संगतः। नियमपदार्थं जिज्ञासते– क इति। नियमस्वरूपमत्राह– यथेति, यथा= यादृशः, तथा= तादृशः, सर्वेषामात्मनाम्, यावच्छरीराणामेकरूपत्वमेवात्र नियमपदार्थ इत्यर्थः। अनियपदार्थमाह– अन्यस्येति, अन्यस्यात्मनः, अन्यथा= विलक्षणम्, अनियमः= परस्परं भेदः, भेदश्च व्यावृत्तिविशेषः= परस्परवैलक्षण्यमित्यन्वयः, सर्वेषामपि शरीराणां यत् परस्परवैलक्षण्यं तदेवानियमपदार्थोऽत्रेत्यर्थः। अत्र– "कः पुनरयं नियमः?, यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति नियमः, अन्यस्यान्यथा अन्यस्यान्यथा इत्यनियमः= भेदः= व्यावृत्तिः, दृष्टः शरीरभेदः प्राणिनामनेकरूपः स च कर्मनिरपेक्षैर्भूतैः शरीरारम्भे न युक्तः, कर्मणां भेदात् शरीराणि भिद्यन्ते इति युक्तम्" इतिवार्तिकम्। ननु यदि शरीराणां परस्परवैलक्षण्यं स्यात् तदा स्यादपि कर्मसापेक्षत्वमित्याशङ्क्य शरीराणां परस्परवैलक्षण्ये प्रत्यक्षप्रमाणमाह– दृष्टेति, जन्मव्यावृत्तिः= शरीराणां वैलक्षण्यम्, वैलक्षण्यमाह– उच्चेति, उच्चाभिजनः= कश्चिदुच्चकुलप्रसूतः कश्चिद् निकृष्टकुलप्रसूतो देह इति वैलक्षण्यं प्रत्यक्षमेव तच्च कारणं विना न संभवति तत्र कारणान्तरासंभवात् कर्मैव तत्कारणमित्यर्थः एवमग्रेप्यन्वयः। प्रशस्तम्= सुन्दरं निन्दितम्= कुरूपं शरीरम्, समग्रम्= समग्राङ्गयुक्तम्, विकलम्= अङ्गहीनम्, पीडा= दुःखम्, पुरुषातिशयलक्षणोपपन्नम्= पुरुषोत्कर्षसूचकैराजानुबाहुत्वादिलक्षणैर्युक्तम्, विपरीतम्= पुरुषापकर्षसूचकलक्षणयुक्तम्, प्रशस्तलक्षणम्= सुन्दरावयवसंनिवेशयुक्तम्, उक्तविपरीतं च निन्दितलक्षणं शरीरम्, पट्विन्द्रियम्= समर्थेन्द्रिययुक्तम्, मृद्विन्द्रियम्= असमर्थेन्द्रिययुक्तम्, एते स्थूला भेदाः सर्वजनप्रत्यक्षाः, सूक्ष्मभेदानामपरिमितत्वमाह– सूक्ष्मश्चेति। स्वमतेनोपसंहरति– सोयमिति, जन्मभेदः= शरीराणां वैलक्षण्यं प्रत्यात्मनियतात् कर्मभेदादुपपद्यते नान्यथेत्यन्वयः। पूर्वपक्षिमते बाधकमाह– असतीति, प्रत्यात्मनियते= प्रत्यात्मसंबद्धे कर्मभेदे असतीत्यन्वयः, पूर्वपक्षिमते कर्मसापेक्षत्वमपि नास्ति आत्मस्वपि अतिशयः= विशेषो नास्ति पृथिव्यादिभूतानां च सर्वात्मसाधारणत्वात् पृथिव्यादिष्वपि नियमहेतुः= शरीरसंयोगादिनियमहेतुर्नास्तीति सर्वशरीरगतं सर्वं सुखादिकं सर्वात्मनां प्रसज्येत तथोक्तवैलक्षण्यमपि नोपपद्यते– कारणाभावादित्यर्थः। विपक्षे प्रत्यक्षबाधमाह– न त्विति, इदं जन्म= शरीरम् इत्थम्भूतम्= सर्वात्मसाधारणम् अविलक्षणं च तु नास्ति तथा चाऽसाधारणत्वविलक्षणत्वयोरुपपत्त्यर्थं कर्मसापेक्षत्वमावश्यकमिति नाऽकर्मनिमित्ता= कर्मलक्षणनिमित्तरहिता शरीरोत्पत्तिः संभवतीत्यन्वयः, स्पष्टमन्यत् ॥६९॥

## उपपन्नश्च तद्वियोगः— कर्मक्षयोपपत्तेः ॥ ७० ॥

कर्मनिमित्ते शरीरसर्गे तेन शरीरेणात्मनो वियोग उपपन्नः । कस्मात् ?, कर्मक्षयोपपत्तेः= उपपद्यते खलु कर्मक्षयः सम्यग्दर्शनात्, प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुकर्म कायवाङ्मनोभिर्न करोति इत्युत्तरस्याऽनुपचयः पूर्वोपचितस्य विपाकप्रतिसंवेदनात् प्रक्षयः, एवं प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनः शरीरान्तरानुत्पत्तेरप्रतिसंधिः । अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥ ७० ॥

## तदऽदृष्टकारितमितिचेत् ? पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ७१ ॥

अदर्शनं खलु अदृष्टमित्युच्यते. अदृष्टकारिता भूतेभ्यः शरीरोत्पत्तिः । न जात्वऽनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति. तच्चास्य दृश्यं द्विविधम्— विषयश्च नानात्वं चाऽव्यक्तात्मनोः तदर्थः शरीरसर्गः, तस्मिन्नऽवसिते चरितार्थानि भूतानि न शरीरमुत्पादयन्तीति

कर्मसापेक्षत्वमते स्वकीये अपवर्गोपपत्तिं किं वा मरणोपपत्तिमाह— उपपन्न इति, तद्वियोगः= शरीरवियोगः मृत्युरपवर्गश्चाप्युपपन्नः— कर्मक्षयोपपत्तेः= शरीरसंयोगकारणीभूतानां कर्मणां फलभोगेन क्षये जाते शरीरवियोगः संभवत्येव, कर्मनिरपेक्षत्वमते तु शरीरवियोगकारणासंभवाद् शरीरवियोगो नोपपद्यते इतिसूत्रार्थः, उपपन्नश्चेति वाक्यं न प्रधानं सूत्रमित्यपि केचित् । व्याचष्टे— कर्मनिमित्ते इति । उक्तं हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— कर्मक्षयेति । कर्मक्षयोपपत्तिमाह— उपपद्यते इति, सम्यग्दर्शनात्= षोडशपदार्थविवेकज्ञानात् किं वा स्वस्वमतानुसारेण तत्त्वज्ञानात्, अयं च कर्मक्षय आत्यन्तिको मोक्षाव्यवहितपूर्वो विज्ञेयः । उक्तमुपपादयति— प्रक्षीणे इति, वीतरागः= रागहीनः पुरुषः पुनर्भवहेतुभूतम्= पुनर्जन्महेतुभूतं कर्म कायवाङ्मनोभिर्न करोतीति उत्तरस्य कर्मणोऽनुपचयः= संचयाभावः सिद्धः पूर्वोपचितस्य च कर्मणो विपाकप्रतिसंवेदनात्= भोगात् प्रक्षयो भवतीति कर्मक्षय उपपन्नः । उपसंहरति— एवमिति, एवम्= उक्तप्रकारेण कर्मक्षये सति अस्मिन्= वर्तमाने शरीरे पतिते प्रसवहेतोरभावात्= जन्महेतुभूतकर्मणामभावात् पुनरस्यात्मनः शरीरान्तरं नोत्पद्यते इत्यऽप्रतिसन्धिः= शरीरवियोगः किं वा शरीराऽसंबध आत्यन्तिकः सिद्धस्तेन मोक्षोपि सिद्धः कर्मसापेक्षत्वमते इत्यन्वयः। पूर्वपक्षिमते बाधकमाह— अकर्मेति, पूर्वपक्षिमते तु कर्मनिरपेक्षाणामेव भूतानां शरीरकारणत्वं तत्र भूतक्षयश्चानुपपन्न इति तद्वियोगानुपपत्तिः= शरीरवियोगो नोपपद्यते— शरीरकारणीभूतानां भूतानां क्षयासंभवादित्यन्वयः, स्पष्टमन्यत् । प्रक्षीणे मोहे इत्यादिकं सर्वं दुःखजन्मप्रवृत्तीतिसूत्रभाष्ये द्रष्टव्यम् ॥ ७० ॥

ननु तत्= तयोः= प्रकृतिपुरुषयोर्यद् अदृष्टम्= अदर्शनं तत्कारितम्= तत्कृतः शरीरसंयोग इति प्रकृतिपुरुषदर्शनेन शरीरसंयोगो निवर्तते इति नास्मन्मते मोक्षानुपपत्तिरित्याशङ्कते— तदिति, अत्र दोषमाह— पुनरिति, अपवर्गे= मोक्षावस्थायामपि प्रकृतिपुरुषदर्शनकारणस्यासंभवाददर्शनं प्राप्तमिति तेनादर्शनेन पुनः= अपवर्गानन्तरमपि तत्प्रसङ्गः= शरीरसंयोगप्रसङ्ग इति पूर्वपक्षिमते दोष इतिसूत्रार्थः । व्याचष्टे— अदर्शनमिति, सूत्रघटकादृष्टशब्देन प्रकृतिपुरुषयोरदर्शनं ग्राह्यमित्यर्थः । अदृष्टकारिता= प्रकृतिपुरुषादर्शनकृता । पूर्वपक्षी स्वमतमाह— न जात्वित्यादिना, द्रष्टा= आत्मा, निरायतनः= निराश्रयः= शरीररहितः, पश्यति= द्रष्टुमर्हति, तथा च दृश्यदर्शनार्थमेव शरीरमित्यर्थः । दृश्यद्वैविध्यमाह— तच्चेति, अस्य= आत्मनः, विषयाः शब्दस्पर्शादयः, अव्यक्तात्मनोः= प्रकृतिपुरुषयोः नानात्वम्= भेदश्च दृश्यः, शरीरसर्गश्च तदर्थः= उक्तद्विविधदृश्यदर्शनार्थः— शरीरं विना दृश्यदर्शनासंभवादित्यर्थः, तस्मिन्= दृश्यदर्शने अवसिते— समाप्ते सति शरीरान्तरोत्पत्तेः फलभूतस्य दर्शनस्य समाप्त्या चरितार्थानि=

उपपन्नः शरीरवियोग इति, एवं चेन्मन्यसे ? पुनस्तत्प्रसङ्गोऽपवर्गे= पुनः शरीरोत्पत्तिः प्रसज्यते इति= या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता नैतयोरदर्शनयोः क्वचिद् विशेष इत्यऽदर्शनस्याऽनिवृत्तेरपवर्गे पुनः शरीरोत्पत्तिप्रसङ्ग इति ॥

चरितार्थता विशेष इति चेत् ?

न– करणाऽकरणयोरारम्भदर्शनात्[६५] ॥

चरितार्थानि भूतानि दर्शनावसानाद् न शरीरान्तरमारभन्ते इत्ययं विशेषः. एवं चेदुच्यते ? न– करणाकरणयोरारम्भदर्शनात्= चरितार्थानां भूतानां विषयोपलब्धिकरणात् पुनः पुनः शरीरारम्भो दृश्यते. प्रकृतिपुरुषयोर्नानात्वदर्शनस्याऽकरणाद् निरर्थकः शरीरारम्भः पुनः पुनर्दृश्यते. तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्तिर्युक्ता. युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्तिः ।

---

कृतार्थानि भूतानि शरीरं नोत्पादयन्तीति शरीरवियोगः= मोक्षोऽस्मन्मतेऽप्युपपन्न इत्यर्थः । पूर्वपक्षमुपसंहरति– एवं चेदिति । उक्ते दोषमाह– पुनरिति । उक्तं व्याचष्टे– पुनरिति, पुनः= मोक्षानन्तरमपि । मोक्षानन्तरमपि पूर्वपक्षिमते संसारापत्तिमुपपादयति– या चेति, अदर्शनाभिमता= अदर्शनाख्या, एतयोः= शरीरोत्पत्तिपूर्वभाविनः मोक्षावस्थाभाविनश्चादर्शनस्य न क्वचित्= कस्मिंश्चिदप्यंशे= कश्चिद्विशेष उपलभ्यते, अपवर्गे= मोक्षावस्थायामपि अदर्शनस्याऽनिवृत्तेः= सत्त्वादेव पुनः= मोक्षानन्तरमपि शरीरसंबन्धः स्यादेवेत्यन्वयः, यदा हि प्रकृतिपुरुषादर्शनमेव शरीरकारणं तदा तादृशादर्शनं यथा शरीरोत्पत्तेः पूर्वं संभवति तथा मोक्षावस्थायामपि संभवति– दर्शनकारणाभावात् पूर्वजातदर्शनस्य च क्षणिकत्वेन विनाशादिति तादृशादर्शनेन मोक्षानन्तरमपि शरीरसंयोगः स्यादेवेत्यर्थः, स्पष्टमन्यत् ॥

यदऽदर्शनयोरविशेष उक्तस्तत्र विशेषमाह– चरितार्थतेति, शरीरोत्पत्तेः पूर्वं भूतानां चरितार्थता नास्ति– भोगस्याऽवशेषात्. अपवर्गे जाते तु भोगाभावाद् भूतानां चरितार्थता भवतीत्ययं विशेषस्तथा चैतादृशचरितार्थतया प्रतिबन्धात् मोक्षानन्तरं शरीरसंबन्धाभाव उपपद्यते इत्यर्थः । एतन्निराकरोति– नेति, परिहारहेतुमाह– करणेति, द्विविधं हि दृश्यमुक्तं तत्र पूर्वजन्मनि शब्दादिदृश्यदर्शनस्य करणं संपादनं जातमेव प्रकृतिपुरुषयोर्भेददर्शनस्य च संपादनं न जातमिति दृश्यदर्शनस्य करणाऽकरणयोः शरीरारम्भः= शरीरोत्पत्तिः समानैव दृश्यते इति विषयोपभोगसंपादनेन चरितार्थैरपि भूतैरुत्तरोत्तरं शरीरोत्पत्तिर्यथा मोक्षात्पूर्वं दृश्यते तथा मोक्षानन्तरमपि स्यादेवेति दोषस्तदवस्थ एवेत्यर्थः । पूर्वपक्षं व्याचष्टे– चरितार्थानीति, दर्शनावसानात्= दृश्यदर्शनसमाप्त्या चरितार्थानीत्यन्वयः । उत्तरमाह– नेति । उक्तं व्याचष्टे– चरितार्थानामिति, विषयोपलब्धिकरणात्= विषयोपभोगसंपादनात् चरितार्थानाम्= चरितार्थैरपि भूतैर्यथा मोक्षात्पूर्वं पुनः पुनः शरीरोत्पादनं दृश्यते तथा मोक्षानन्तरमपि चरितार्थैरपि भूतैः शरीरोत्पादनं स्यादिति मोक्षानन्तरमपि शरीरसंयोगात् ससंसारत्वापत्तिस्तदवस्थैवेति दृश्यदर्शनकरणपक्षेपि शरीरारम्भ आपद्यते इत्यन्वयः, दर्शनस्याकरणपक्षे व्यर्थमपि शरीरारम्भमाह– प्रकृतीति, नानात्वदर्शनस्य= भेददर्शनस्यैव प्रधानत्वेन तदकरणात् शरीरारम्भो निरर्थक इतिभावः । उपसंहरति– तस्मादिति, अकर्मनिमित्तायांभूतसृष्टौ= पूर्वपक्षिमते शरीरोत्पत्तिर्दर्शनार्था= प्रकृतिपुरुषभेददर्शनार्था न संभवति– अद्यावधि भेददर्शनस्याजातत्वात्, अन्यथा कल्पारम्भकालिकशरीरसंयोगेनैव तादृशभेददर्शनस्य सिद्धिः स्यात् तथा चाग्रेतनशरीरयोगो न स्यादिति शरीराभाव एव स्यादित्यर्थः । स्वमते शरीरोत्पत्तेर्दर्शनार्थत्वसंभवमाह– युक्तेति, कर्मसापेक्षत्वमते तु कर्मणामद्यावधि क्षयाभावेन भेददर्शनोत्पादक-

कर्मविपाकसंवेदनं दर्शनमिति तददृष्टकारितमिति च कस्यचिद् दर्शनम्= अदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुस्तेन प्रेरिताः परमाणवः संमूर्च्छिताः शरीरमुत्पादयन्तीति तद् मनः समाविशति स्वगुणेनादृष्टेन प्रेरितम्. समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति। एतस्मिन् वै दर्शने गुणानुच्छेदात् पुनस्तत्प्रसङ्गः= अपवर्गेऽपवर्गे शरीरोत्पत्तिः– परमाणुगुणस्यादृष्टस्याऽनुच्छेद्यत्वादिति ॥ ७१ ॥

## मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७२ ॥

मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो न स्यात्. तत्र किंकृतं शरीरादपसर्पणं मनस इति?। कर्माशयक्षये तु कर्माशयान्तराद् विपच्यमानादपसर्पणोपपत्तिरिति। अदृष्टादेवापसर्पणमितिचेत्?, योऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति न– एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः= एवं च सति एकमदृष्टं जीवनप्रायणयोर्हेतुरितिप्राप्तं नैतदुपपद्यते ॥ ७२ ॥

र्मणां चाभिमुख्याभावेनाऽजातेपि भेददर्शने भेददर्शनार्था शरीरोत्पत्तिः संभवतीत्यर्थः प्रतिभाति, अन्यत्तु भाष्यकार एव विजानातीत्यलम् ॥

परिहर्तुं जैनमतमुपक्षिपति– कर्मेति, यत् कर्मविपाकसंवेदनम्= कर्मफलभोगः किं वा कर्मफलभोगज्ञानं तदेव दर्शनं तच्चादृष्टजन्यमिति कस्यचित्= जिनस्य दर्शनम्। उक्तं व्याचष्टे– अदृष्टमिति, तेन= अदृष्टेन, संमूर्च्छिताः= संयुक्ताः, तत्= शरीरमुत्पन्नम्, स्वगुणेनादृष्टेन प्रेरितं मनः शरीरे समाविशतीत्यन्वयः, द्रष्टुः= आत्मनः, उपलब्धिः= विषयोपलब्धिः आत्मज्ञानं वा। उक्तमते दोषमाह– एतस्मिन्निति। उक्तं व्याचष्टे– अपवर्गे इति, अत्र हेतुमाह– परमाणुगुणस्येति, उक्तमते शरीरोत्पत्तिकारणीभूतस्य परमाणुगुणस्य विनाशासंभवादपवर्गानन्तरमपि शरीरोत्पत्तिः स्यादेवेत्यर्थः। पूर्वपक्षप्रतिपादनस्य याथात्म्यं तु जैनग्रन्थेष्वेव द्रष्टव्यम्। अत्र– "अपरे त्वार्हता अदृष्टं परमाणुगुणं वर्णयन्ति= पार्थिवादीनामणूनां मनसश्च गुणोऽदृष्टं तत्र पार्थिवाद्या अणवः स्वादृष्टप्रयुक्ताः शरीरमारभन्ते मनश्च स्वगुणप्रयुक्तं शरीरमाविशति तत्र स्वकादेवाऽदृष्टात् पुद्गलस्य सुखदुःखोपभोगं साधयति न तु पुद्गलस्य धर्मोऽदृष्टमिति. सांख्यवत्तेषामपि दिगम्बराणां पुनस्तत्प्रसङ्गोऽपवर्गे एतदुपपादयति" इति तात्पर्यटीका ॥ ७१ ॥

उक्तजैनमते सूत्रकारोपि दोषमाह– मन इति, "संयोगानुच्छेदः" इत्यत्र 'संयोगस्यानुच्छेदः' इतिवक्तव्यमासीत्। उक्तरीत्या जैनमते शरीरसंयोगो मनःकर्मनिमित्तकः= मनोवृत्त्यदृष्टनिमित्तकोस्ति तत्र मनोगुणस्यादृष्टस्य निवृत्त्यसंभवात् संयोगानुच्छेदः शरीरवियोगो नोपपद्यते इति मरणानुपपत्तिप्रसङ्ग इतिसूत्रार्थः। व्याचष्टे– मनोगुणेनेति, मनसि शरीरे समावेशिते, संयोगव्युच्छेदः= शरीरसंयोगाभावो न स्यादित्यन्वयः। उक्तमतमाक्षिपति– तत्रेति, तत्र= एवं सति, स्यादितिशेषः। स्वमते मरणोपपत्तिमाह– कर्मेति, कर्मसापेक्षत्वमते तु शरीरसंयोगकारणीभूतकर्मणः क्षये जाते शरीरवियोगकारणीभूताद् विपच्यमानात्= फलोन्मुखात् कर्माशयान्तरात्= कर्मान्तरादपसर्पणस्य= शरीरवियोगस्योपपत्तिः संभवति। नन्वस्मन्मतेप्युक्तादृष्टादेवापसर्पणम्= शरीरवियोगः संभवति संयोगवदित्याशङ्कते– अदृष्टादेवेति। उक्ते दोषमाह– य इति, शरीरोपसर्पणम्= शरीरसंयोगः, त्वन्मते एकस्यैवादृष्टस्योपसर्पणापसर्पणहेतुत्वं प्राप्तं तत्तु न संभवतीत्यर्थः, मनस्येकस्यैवादृष्टस्य संभवात्. अनेकादृष्टस्वीकारे च तत्कार्ययोर्जीवनमरणयोर्युगपदापत्तिः स्यात्. क्रमेणानेकादृष्टस्वीकारे च क्रमनियामकाभावाद्विनिगमनाविरहस्तत्राप्यदृष्टान्तरस्वीकारे चानवस्थेति दोषा इत्याशयः। प्रतिषेधहेतुमाह– एकस्येति, प्रायणम्= मृत्युः, जीवनप्रायणयोः परस्परविरोधात् तदुभयकारणत्वमेकस्यादृष्टस्य न संभवतीत्यर्थः। उक्तं विशदयति– एवमिति, एवं च सति= उक्तपूर्वपक्षेण, उक्तं परिहरति– नैतदिति, स्पष्टमन्यत् ॥ ७२ ॥

## नित्यत्वप्रसङ्गश्च– प्रायणानुपपत्तेः ॥ ७३ ॥

विपाकसंवेदनात् कर्माशयक्षये शरीरपातः प्रायणम्, कर्माशयान्तराच्च पुनर्जन्म। भूतमात्रात्तु कर्मनिरपेक्षात् शरीरोत्पत्तौ कस्य क्षयात् शरीरपातः= प्रायणमिति ? प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः, यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७३ ॥

"पुनस्तत्प्रसङ्गोऽपवर्गे७१" एतत्समाधित्सुराह—

## अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ ७४ ॥

यथाऽणोः श्यामता नित्या अग्निसंयोगेन प्रतिबद्धा न पुनरुत्पद्यते एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यते इति ॥ ७४ ॥

## न– अकृताभ्यागमप्रसङ्गात् ॥ ७५ ॥

नायमस्ति दृष्टान्तः, कस्मात् ?, अकृताभ्यागमप्रसङ्गात्= अकृतम्= प्रमाणतोऽनुपपन्नं तस्याऽभ्यागमः= अभ्युपपत्तिः= व्यवसायः, एतत्श्रद्दधानेन प्रमाणतोऽनुपपन्नं मन्तव्यम्,

---

पूर्वपक्षिमते शरीरसंयोगस्य नित्यत्वापत्तिदोषमाह– नित्यत्वेति, प्रायणानुपपत्तेः= उक्तरीत्या मरणानुपपत्त्या शरीरसंयोगस्य नित्यत्वं स्यात् ततश्चापवर्गानुपपत्तिरपि पूर्वपक्षिमते विज्ञेयेति सूत्रार्थः । व्याचष्टे– विपाकेति, विपाकसंवेदनात्= कर्मफलभोगात्, जन्मकारणमाह– कर्मेति, तदनेन स्वमते कर्मभिर्जन्ममरणयोरुपपत्तिः प्रदर्शिता । पूर्वपक्षिमते काका मरणानुपपत्तिमाह– भूतेति । मरणानुपपत्तौ शरीरसंयोगस्य नित्यत्वापत्तिमाह– प्रायणानुपपत्तेरिति । ननु मरणं यादृच्छिकम्= निर्हेतुकमेव भवतीत्याशङ्क्याह– यादृच्छिके इति, मरणस्य निर्हेतुकत्वे प्रायणभेदस्य= प्रत्यक्षसिद्धस्य मृत्योरनेकविधत्वस्यानुपपत्तिरस्ति– कारणभेदं विना कार्यभेदानुपपत्तेरित्यर्थः, अस्मन्मते तु सर्वमिदं कर्मवैलक्षण्यादुपपद्यते इति न कोपि दोषः ॥ ७३ ॥

अग्रिमसूत्रमवतारयति– पुनरिति, अपवर्गे जाते प्रदर्शितायाः शरीरसंयोगापत्तेरभावमुपपादयति अनेन सूत्रेण पूर्वपक्षीत्यर्थः । एतत्समाधित्सुः= उक्तदोषसमाधानेच्छुः पूर्वपक्षी । अणुश्यामतेति– यथा परमाणुश्यामता नित्याप्यग्निसंयोगान्नश्यति न च पुनरुत्पद्यते तथा एतत्= अपवर्गानन्तरं शरीरसंयोगापत्त्यभावः स्यात्= संभवतीति नापवर्गानन्तरमस्मन्मतेपि पुनः शरीरसंयोगापत्तिदोष इतिसूत्रार्थः, अत्र "अणुश्यामतानित्यत्ववत्" इत्यत्र 'अणुश्यामतानुत्पत्तिवत्' इति किं वा 'अणुश्यामताविनाशनित्यत्ववत्' इति वक्तव्यमासीत् । किं वा यथाऽणुश्यामताया अनित्यत्वमुपपद्यते तथाऽस्मन्मतेपि एतत्= शरीरसंयोगानित्यत्वं स्यात्= उपपद्यते इति न मरणापवर्गयोरनुपपत्तिरित्येवं सूत्रं व्याख्येयम् । व्याचष्टे– यथेति, अणोः= परमाणोः, प्रतिबद्धा= विनष्टा । प्रकृतमाह– एवमिति, अदृष्टकारितम्= परमाणुगुणभूतादृष्टजन्यं शरीरं तादृशादृष्टनिवृत्त्या निवृत्तमपवर्गानन्तरं नोत्पद्यते इत्यन्वयः, स्पष्टमन्यत् ॥ ७४ ॥

कर्मनिरपेक्षत्वमतं निराकरोति– नेति, कर्मनिरपेक्षत्वं नोपपद्यते इत्यर्थः, उक्ते हेतुमाह– अकृतेति, कर्मनिरपेक्षत्वमते अकृतानामेवात्मना कर्मणां फलभोगस्याभ्यागमप्रसङ्गः= प्राप्तिप्रसङ्गोस्ति स च न युक्त इत्यन्वयः, दृश्यमानस्य फलभोगस्य कर्मनिरपेक्षत्वमते निष्कारणकत्वं प्राप्नोति तच्च न संभवति– कार्यमात्रस्य सकारणकत्वनियमादिति सूत्रार्थः । वस्तुतस्तु पूर्वसूत्रोक्तार्थस्य साक्षात् प्रत्याख्यानमुपेक्ष्याऽकृताभ्यागमदोषप्रदर्शनं नातीव हृदयङ्गमं भवति, किं वाह्निकसमाप्तिकाम उपसंहरन् पूर्वपक्षिमते साकल्येन दोषमाहेति समाधेयमित्यलमनयोः सूत्रकारभाष्यकारयोर्विवेचनया यतः छात्राणां क्लेशायैवानयोर्जन्म जातमितिसंभावयामि । व्याचष्टे– नायमिति, अयम्= पूर्वसूत्रोक्तः । उक्तदृष्टान्तस्यानुपपत्तेर्हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– अकृतेति, अकृतपदस्यार्थमाह– प्रमाणत इति, तस्य= प्रमाणतोऽनुपपन्नस्य,

तस्मान्नायं दृष्टान्तः— न प्रत्यक्षं न चानुमानं किंचिदुच्यते इति, तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयते इति। अथ वा— नाकृताभ्यागमप्रसङ्गात्= अणुश्यामतादृष्टान्तेनाऽकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्य अकृताभ्यागमप्रसङ्गः= अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत, ओमितिब्रुवतः प्रत्यक्षानुमानागमविरोधः।

प्रत्यक्षविरोधस्तावत्— भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात् प्रत्यक्षं सर्वशरीरिणाम्। को भेदः?, तीव्रं मन्दं चिरमाशु नानाप्रकारमेकप्रकारम् इत्येवमादिर्विशेषः। न चास्ति प्रत्यात्मनियतः सुखदुःखहेतुविशेषः, न चाऽसति हेतुविशेषे फलविशेषो दृश्यते। कर्मनिमित्ते तु सुखदुःखयोगे कर्मणां तीव्रमन्दतोपपत्तेः कर्मसंचयानां चोत्कर्षापकर्षभावाद् नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः, सोयं हेतुभेदाभावाद् दृष्टः सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः॥

---

अभ्यागमपदार्थमाह— अभ्युपपत्तिरिति, व्यवसायः= स्वीकारः। पर्यवसितमाह— एतदिति, एतत् प्रमाणतोनुपपन्नमित्यन्वयः, किं वा एतत्श्रद्दधानेन= जैनमतश्रद्धाविशिष्टेनेत्यन्वयः। उपसंहरति— तस्मादिति, तस्मात्= उक्तदृष्टान्तस्यानुपपन्नत्वात्, उक्ते हेतुमाह— नेति, प्रत्यक्षं वाऽनुमानं वा प्रमाणं स्वमते नोच्यते दृष्टान्तमात्रमुच्यते स च दृष्टान्तोप्यनुपपन्न इति न तेन स्वपक्षसिद्धिः संभवतीत्यन्वयः। अणुश्यामतावत् शरीरोत्पत्त्यादीनां कर्मनिरपेक्षत्वस्वीकारे ह्यकृताभ्यागमदोषः= फलभोगस्य निर्हेतुकत्वापत्तिदोषोस्तीत्यर्थः। उक्ते दोषान्तरमप्याह— तदिदमिति। शरीरोत्पत्त्यादीनां यथा निर्हेतुकत्वं साध्यमस्ति न तु सिद्धं तथाऽणुश्यामताया अपि पुनरनुत्पत्तेर्दृष्टान्तभूताया निर्हेतुकत्वं साध्यमेवास्तीति दृष्टान्ते साध्यसमत्वं दोष इत्यर्थः, अत्र= "न च परमाणुश्यामताप्यकारणा पार्थिवरूपत्वात् लोहितादिवदित्यनुमानेन तस्या अपि पाकजत्वाभ्युपगमादितिभावः" इति तात्पर्यटीका। सूत्रस्य सरलार्थमाह— अथ वेति। अणुश्यामतेति— यथा परमाणुश्यामता कर्मनिरपेक्षैव जायते नश्यति च तथा शरीरमपि कर्मनिरपेक्षमेव जायते नश्यति चेति समादधानस्य जैनस्य मतेऽकृताभ्यागमदोषः प्रसज्यते इत्यन्वयः। उक्तं व्याचष्टे— अकृते इति, कर्मनिरपेक्षत्वमते सुखदुःखादिकं सर्वमकारणकं स्यात् न चैतद् युक्तम्— कार्यमात्रस्य सकारणत्वनियमादित्यर्थः, अभ्यागच्छति= प्राप्नोति, स्पष्टमन्यत्। अकृताभ्यागमदोषस्वीकारे बाधकमाह— ओमिति, ओमितिब्रुवतः= अकृताभ्यागमदोषं स्वीकुर्वतः। प्रत्यक्षादिविरोधश्चाग्रे स्पष्टः॥

प्रत्यक्षविरोधमुपपादयति— प्रत्यक्षविरोध इति, प्रत्यात्मवेदनीयत्वात् सर्वशरीरिणामिदं सुखदुःखं भिन्नमिति प्रत्यक्षं तत्राऽकृताभ्यागमपक्षे सुखादीनां निर्हेतुकत्वेन भेदो न संभवतीति भेदप्रत्यक्षविरोध इत्यन्वयः, कारणभेदं विना कार्यभेदानुपपत्तेरित्यर्थः। सुखादीनां भेदं जिज्ञासते— क इति। भेदमाह— तीव्रमिति, किंचित् सुखादिकं तीव्रं किंचित् मन्दमिति तीव्रत्वादिलक्षणो विशेष एवात्र भेदपदार्थः। चिरम्= चिरेण= चिरस्थायि. आशु= अचिरस्थायि इति चार्थः। पूर्वपक्षिमते सुखादिहेतुभेदस्याभावमाह— न चेति। हेतुभेदाभावे फलभेदासंभवमाह— न चासतीति, फलविशेषः= फलभेदः, दृश्यते= उपपद्यते। स्वमते सुखादिभेदस्योपपत्तिमाह— कर्मनिमित्ते इति, अस्मन्मते तु सुखादियोगः कर्मनिमित्तक इति कर्मणां तीव्रत्वमन्दत्वाभ्यां सुखादीनां तीव्रत्वमन्दत्वे कर्मसंचयानामुत्कर्षात् आशु= शीघ्रम् अपकर्षाच्च चिरेण सुखादिकं भवतीति. कर्मणां नानाविधत्वात् सुखादीनां नानाप्रकारत्वम् एकविधत्वाच्चैकप्रकारत्वमुपपद्यते इत्यन्वयः। उपसंहरति— सोयमिति, पूर्वपक्षिमते हेतुभेदाभावात्= कर्मभेदाभावात्= कर्मणामकारणत्वात् दृष्टः= प्रत्यक्षोपि सुखदुःखभेदो न संभवतीति प्रत्यक्षविरोधः— कार्यभेदस्य कारणभेदाधीनत्वादित्यर्थः॥

तथाऽनुमानविरोधः— दृष्टं हि पुरुषगुणव्यवस्थानात् सुखदुःखव्यवस्थानम्= यः खलु चेतनावान् साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन् साधनावाप्तये यतते स सुखेन युज्यते न विपरीतः, यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते स च दुःखेन त्यज्यते न विपरीतः, नास्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानं तेनापि चेतनगुणान्तरव्यवस्थाकृतेन भवितव्यमित्यनुमानम्. तदेतद् अकर्मनिमित्ते सुखदुःखयोगे विरुध्यते इति, तच्च गुणान्तरम् असंवेद्यत्वाददृष्टं विपाककालाऽनियमाच्चाऽव्यवस्थितम्। बुद्ध्यादयस्तु संवेद्याश्चाऽपवर्गिणश्चेति।

अथाऽऽगमविरोधः— बहु खल्विदमार्षम्= ऋषीणामुपदेशजातम् अनुष्ठानपरिवर्जनाश्रयम्. उपदेशफलं च शरीरिणां वर्णाश्रमविभागेनाऽनुष्ठानलक्षणा प्रवृत्तिः परिवर्जनलक्षणा निवृत्तिः। तच्चोभयमेतस्यां दृष्टौ 'नास्ति कर्म सुचरितं दुश्चरितं वाऽकर्मनिमित्तः पुरुषाणां सुखदुःखयोगः'

अकृताभ्यागमपक्षेऽनुमानविरोधमुपपादयति— तथेति, पुरुषगुणस्य= आत्मगुणभूतस्य यत्नस्य व्यवस्थया सुखादिव्यवस्था भवतीत्यन्वयः, यत्नानुसारेण सुखादिकं भवतीत्यर्थः। उक्तं व्याचष्टे— य इति, यश्चेतनावान्= ज्ञानवान् जीवः साधननिर्वर्तनीयम्= सुखसाधनसाध्यं सुखं ज्ञात्वा तत्= सुखमीप्सन्= अभिलषन् साधनावाप्तये= सुखसाधनसिद्ध्यर्थं यतते स सुखं लभते न विपरीतः= तादृशयत्नरहित इत्यन्वयः, अत्र 'जानाति इच्छति यतते' इति क्रमोनुसंधेयः। यश्च चेतनावान् केनचित् साधनेन निर्वर्तनीयं दुःखं ज्ञात्वा तज्जिहासुः= दुःखनिवृत्तीच्छावान् साधनपरिवर्जनाय= दुःखसाधनपरित्यागाय यतते स दुःखेन त्यज्यते न विपरीतः= तादृशयत्नरहितः, इदं सुखदुःखव्यवस्थानं चेतनानां यत्नं विना न संभवतीति सुखादिसाधको यत्नोत्र सिद्धः, तेन= यत्नेनापि, यथा सुखादिकं पुरुषगुणभूतयत्नं विना न संभवति तथा स यत्नोपि विविधरूपत्वात् चेतनस्य गुणान्तरभूतेन कर्मणा विना न संभवतीति कर्मणामनुमानं सिद्धं. तथा हि यत्नः चेतनगुणान्तरपूर्वकश्चेतनधर्मत्वात् सुखादिवदिति प्रयोगः, चेतनगुणान्तरं चात्रादृष्टशब्दवाच्यं कर्मैवेत्यन्वयः। एवमनुमानं प्रसाध्य पूर्वपक्षिमते तद्विरोधमाह— तदेतदिति, पूर्वपक्षिमते कर्म कारणं नास्तीति यत्नस्योक्तानुमानसिद्धं कर्मपूर्वकत्वं न संभवतीत्युक्तानुमानविरोध इत्यर्थः। यत्नकारणीभूतं पुरुषगुणान्तरमाह— तच्चेति, अस्यादृष्टपदवाच्यत्वकारणमाह— असंवेद्यत्वादिति, अस्याव्यवस्थितत्वकारणमाह— विपाकेति, फलकालस्याव्यवस्थयैव कर्मणामव्यवस्थितत्वमुच्यते न तु स्वरूपेणेत्यर्थः। पुरुषगुणेभ्यो बुद्ध्यादिभ्यः कर्मणां व्यतिरेकमाह— बुद्ध्यादय इति, बुद्ध्यादयः पुरुषगुणाः पुरुषस्य संवेद्याः= प्रत्यक्षाः अपवर्गिणः= क्षणिकाश्च सन्ति. आदिपदात् सुखदुःखेच्छादयो ग्राह्याः, कर्म तु न क्षणिकं नापि प्रत्यक्षं किं तु फलप्राप्तिपर्यन्तं तिष्ठति अनुमानगम्यं चेत्यर्थः॥

पूर्वपक्षिमते आगमविरोधमुपपादयति— अथेति, आर्षपदं व्याचष्टे— ऋषीणामिति, उपदेशजातं श्रुतिस्मृत्यादिरूपम्। अनुष्ठानेति— धर्मोपदेशस्यानुष्ठानमेवाश्रयः= मूलम्= प्रयोजनमिति यावत्. अधर्मोपदेशस्य परिवर्जनमेवाश्रय इत्यन्वयः— परिवर्जनार्थत्वादधर्मोपदेशस्य, अनुष्ठानपरिवर्जने आश्रयो यस्य तद् अनुष्ठानपरिवर्जनाश्रयमुपदेशजातम्। तादृशोपदेशस्य फलमाह— उपदेशफलमिति, शरीरिणां स्ववर्णाश्रमानुकूल्येनानुष्ठानलक्षणा या प्रवृत्तिः सैव धर्मोपदेशस्य फलम्, वर्णो ब्राह्मणादिः, आश्रमो ब्रह्मचर्यादिः, तयोः कर्तव्यं शास्त्रेषु द्रष्टव्यम् यथा सोमयागेषु ब्राह्मणस्याधिकारः राजसूये च राज्ञः क्षत्रियस्यैवेति, गृहस्थधर्मेषु गृहस्थस्यैवाधिकार इति। स्ववर्णाश्रमानुकूल्येन या परिवर्जनलक्षणा निवृत्तिः सैवाऽधर्मोपदेशस्य फलम्. परिवर्जनीयमपि धर्मशास्त्रेषु प्रसिद्धं यथा ब्राह्मणेन मद्यपानादिकं त्याज्यं ब्रह्मचारिणा मध्वादिसेवनं त्याज्यमिति। एवमागमं प्रतिपाद्य पूर्वपक्षिमते तद्विरोधं प्रदर्शयति— तच्चेति, 'नास्ति कर्म पुण्यरूपं पापरूपं च न च कर्महेतुकः पुरुषाणां सुखदुःखयोगः' इति इतिहेतोरेतस्यां दृष्टौ= इत्युक्त.

इतिविरुद्ध्यते, सेयं पापिष्ठानां मिथ्यादृष्टिः– ' अकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोगः ' इति ॥ ७५ ॥

॥ इति वात्स्यायनीये न्यायभाष्ये तृतीयाध्यायद्वितीयमाह्निकं समाप्तम् ॥

॥ तृतीयाध्यायश्च समाप्तः ॥

---

पूर्वपक्षिदर्शने तच्चोभयम्= उक्तप्रवृत्तिनिवृत्तिलक्षणमुपदेशफलं विरुध्यते– पुण्यपापयोरभावे तत्प्रवृत्तिनिवृत्त्योरसंभवादित्यन्वयः, किं वा ' नास्ति कर्म नास्ति च कर्मफलम् ' इत्युभयमागमेन विरुध्यते इत्यन्वयः । किं वा तच्चोभयम्= ऋषीणां धर्माधर्मप्रतिपादनम् "नास्ति कर्म सुचरितं दुश्चरितं वा " इत्येतस्यां दृष्टौ= दर्शने= नास्तिकमते "कर्मनिमित्तः पुरुषाणां सुखदुःखयोगः" इतिहेतोर्विरुध्यते इत्यन्वयः । उपसंहरति– सेयमिति, मिथ्यादृष्टिः भ्रान्तिः, मिथ्यादृष्टिस्वरूपमाह– अकर्मनिमित्तेति । तथा च सांसारिकपदार्थमात्रस्य कर्मनिमित्तकत्वादकर्मनिमित्तकत्वं न स्वीकार्यमित्यर्थः । स्पष्टमन्यत् ॥

॥ इति शरीरस्यादृष्टजन्यत्वप्रतिपादनं समाप्तम् ॥

अत्र— "आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा ।
यद् यथा वस्तु तत्त्वेन तत् तथेहोपपादितम् ॥ "

इत्येतदध्यायप्रतिपादितपदार्थसंग्रहपरं वार्तिकम् ॥ ७५ ॥

॥ इति पञ्चनदीयसुदर्शनाचार्यशास्त्रिनिर्मिता न्यायभाष्यतृतीयाध्यायस्य प्रसन्नपदाख्या व्याख्या समाप्ता ॥

---

अथ
सटीके

## ॥ न्यायभाष्ये चतुर्थाध्यायस्य प्रथममाह्निकम् ॥



मनसोऽनन्तरं प्रवृत्तिः परीक्षितव्या, तत्र खलु यावद् धर्माधर्माश्रयशरीरादि परीक्षितं सर्वा सा प्रवृत्तेः परीक्षेत्याह—

**प्रवृत्तिर्यथोक्ता ॥ १ ॥**

तथा परीक्षितेति ॥ १ ॥

प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

**तथा दोषाः ॥ २ ॥**

परीक्षिता इति, बुद्धिसमानाश्रयत्वादात्मगुणाः. प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसंधानसामर्थ्याच्च संसारहेतवः. संसारस्याऽनादित्वादनादिना प्रबन्धेन प्रवर्तन्ते । मिथ्याज्ञाननिवृत्ति-

---

अथ

## चतुर्थाध्यायप्रसन्नपदा



नमस्कृत्वा हृषीकेशं वाजिवक्त्रविराजितम् ।
चतुर्थाध्यायटीकेयं न्यायभाष्यस्य तन्यते ॥

चतुर्थाध्यायमारभते– मनस इति, मनोनिरूपणानन्तरं संप्रतीत्यर्थः, क्रमश्चायं प्रमेयसंग्रहसूत्रे द्रष्टव्यः । प्रवृत्तिश्च धर्माधर्मस्वरूपेति पूर्वमुक्तम् । अग्रिमसूत्रमवतारयति– तत्रेति, धर्माधर्मौ आश्रयः= कारणं यस्य शरीरादेस्तद् धर्माधर्माश्रयं शरीरादि, किं वा शरीरे एव धर्माधर्मयोराचरणसंभवात् शरीरस्य धर्माधर्माश्रयत्वं विज्ञेयम्, धर्माधर्मकार्यभूतानां शरीरादीनां परीक्षणेन तत्कारणीभूतयोर्धर्माधर्मयोः सत्त्वं सिद्धं सत्त्वव्यवस्थापनमेव च परीक्षणमिति प्रवृत्तिपरीक्षा जातैवेत्यर्थः, धर्मलक्षणं च "चोदनालक्षणोऽर्थो धर्मः" इति. धर्मविपरीतश्चाधर्मस्तदेतद् दुःखजन्मेतिसूत्रभाष्ये व्युत्पादितमेव, कल्याणकर्मणां धर्मत्वे तद्विपरीतानां चाधर्मत्वे न कस्यापि वैमत्यमिति न प्रवृत्तेर्विशेषपरीक्षणावश्यकता । प्रवृत्तिरिति– प्रवृत्तिर्यथोक्ता= "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः १–१–१७" इतिसूत्रे यादृश्युक्ता तादृश्येव मन्तव्येति सूत्रार्थः । व्याचष्टे– तथेति, अत्र शेष इतिशेषः, यथा उक्ता= लक्षिता तथा शरीरादिपरीक्षणेन परीक्षिता– शरीरादिकारणीभूता प्रवृत्तिरित्यर्थः ॥ १ ॥ ॥ इति प्रवृत्तिपरीक्षणं समाप्तम् ॥

अध्यायत्रयवाक्यानां व्याख्याविशदविस्तरैः ।
शङ्के स्वल्पमिदं भाष्यं क्लिष्टं शिष्टमितः परम् ॥

अग्रिमसूत्रमवतारयति– प्रवृत्त्यनन्तरा इति, प्रवृत्त्यनन्तरमुक्ता इत्यर्थः । तथेति– तथा= प्रवृत्तिवद् दोषा अपि यथोक्ताः= "प्रवर्तनालक्षणा दोषाः १–१–१८" इति सूत्रोक्तस्वरूपाः परीक्षिता एव विज्ञेयाः– दोषस्वरूपेपि वादिनां वैमत्याभावादिति सूत्रार्थः । व्याचष्टे– परीक्षिता इति, अत्रापि शेष इतिशेषः । विशेषवक्तव्यमाह– बुद्धीति, पदार्थज्ञानं विना तद्विषया रागादयो न संभवन्तीति यत्रात्मनि ज्ञानं तत्रैव रागादय इति सामानाधिकरण्यस्य लोके दर्शनाद् रागादयो दोषा बुद्धिसमानाश्रया इति

स्तत्त्वज्ञानात् तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति। प्रादुर्भावतिरोधानधर्मका इत्येवमाद्युक्तं दोषाणामिति ॥ २ ॥

"प्रवर्तनालक्षणा दोषाः १-१-१८" इत्युक्तं तथा चेमे मानेर्ष्याऽसूयाविचिकित्सामत्सरादयः ते कस्मान्नोपसंख्यायन्ते ? इत्यत आह—

## तत्त्रैराश्यम्- रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयः= त्रयः पक्षाः- रागपक्षः- कामो मत्सरः स्पृहा तृष्णा लोभ इति. द्वेषपक्षः- क्रोध ईर्ष्याऽसूया द्रोहोऽमर्ष इति, मोहपक्षः- मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति. त्रैराश्यान्नोपसंख्यायन्ते इति। लक्षणस्य तर्ह्यभेदात् त्रित्वमनुपपन्नम् ?. नानुपपन्नम्- रागद्वेषमोहार्थान्तरभावात्= आसक्तिलक्षणो रागः. अमर्षलक्षणो द्वेषः. मिथ्याप्रतिपत्तिलक्षणो मोह इति, एतत् प्रत्यात्मवेदनीयं सर्वशरीरिणाम्= विजानात्ययं शरीरी रागमुत्पन्नम्- 'अस्ति मेऽध्यात्मं रागधर्मः' इति, विरागं च विजानाति- 'नास्ति मेऽध्यात्मं रागधर्मः' इति. एवमितरयोरपीति। मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसंख्यायन्ते ॥ ३ ॥

---

दोषाणामात्मगुणत्वं सिद्धम्- बुद्धेरात्मगुणत्वात्। दोषाणां संसारहेतुत्वमाह- प्रवृत्तीति, प्रवृत्तिहेतुत्वात्= धर्माधर्महेतुत्वात् तदेतद् दुःखजन्मेतिसूत्रभाष्ये स्पष्टम्, पुनर्भवप्रतिसं ानसामर्थ्यात्= पुनर्जन्मसंपादनसमर्थत्वात्= विविधसंस्कारजनकत्वादितियावत्। दोषाणामनादित्वमाह- संसारस्येति, दोषकार्यस्य संसारस्याऽनादित्वे दोषाणामनादित्वं स्पष्टमेव। दोषाणां निवृत्तिकारणमाह- मिथ्येति, तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिः तन्निवृत्तौ= मिथ्याज्ञाननिवृत्तौ रागादिदोषाणां निवृत्तिस्ततश्चापवर्गः। प्रादुर्भावतिरोधानधर्मकाः= उत्पादविनाशशालिनो दोषाः। उपसंहरति- इत्येवमिति, इत्येवमादि= इत्यादिकं दोषाणाम्= दोषविषयकं यदुक्तव्यमस्ति तदुक्तमेवेत्यन्वयः। अन्यत् वीतरागेतिसूत्रप्रकरणे द्रष्टव्यमित्यलम् ॥ २ ॥

अग्रिमसूत्रमवतारयति- प्रवर्तनेति, इमे मानादयोपि तथा= प्रवर्तनालक्षणाः= प्रवर्तका एवेति दोषलक्षणाक्रान्ता एवेति ते मानादय कस्माद् दोषेषु नोक्ताः ? इत्यन्वयः। उत्तरमाह- तदिति- तत्= तेषाम्= दोषाणां त्रैराश्यम्= राशित्रयम्= समुदायत्रयमस्ति- रागद्वेषमोहानाम् अर्थान्तरभावात्= अवान्तरभेदवत्त्वादिति मानादीनां मोहादिसमुदायान्तर्गतत्वेन मोहादिग्रहणेन मानादीनां ग्रहणं जातमेवेति न पृथग् विशेषरूपेण मानादीनां ग्रहणं कृतमिति सूत्रार्थः। अन्यद् भाष्ये स्पष्टमेव। व्याचष्टे- तेषामिति। राशिपदार्थमाह- पक्षा इति, पक्षाः= समुदायाः। रागसमुदायमाह- काम इति। द्वेषसमुदायमाह- क्रोध इति। मोहसमुदायमाह- मिथ्येति। पर्यवसितमाह- त्रैराश्यादिति, कामादयो रागादिराशित्रयान्तर्गता इतिहेतोरेव पृथक् नोपसंख्यायन्ते- रागादिशब्दैरुक्तरागादिराशेरेव ग्राह्यत्वात् इत्यन्वयः। अत्र- "कामः स्त्रीगतोऽभिलाषः, प्रक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः, अस्ववस्त्वादानेच्छा स्पृहा, पुनर्भवप्रतिसंधानहेतुभूता तृष्णा= या पुनर्भवप्रार्थना सा तृष्णा, प्रमाणविरुद्धपरद्रव्यापहारेच्छा लोभः, शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुः क्रोधः, साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या, परगुणाक्षमता असूया, परापकारेच्छा द्रोहः, कृतापकराक्षमता अमर्षः, विपर्ययज्ञानं मिथ्याज्ञानम्, संशयो विचिकित्सा, विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः, शक्तस्य कर्तव्याकरणं प्रमादः" इति वार्तिकम्। ननु यदि मानादीनां मोहादिष्वन्तर्भावस्तदा रागद्वेषमोहानामपि प्रवर्तकत्वलक्षणलक्षणस्याभेदादेकत्वमेव वक्तव्यं न त्रित्वमित्याशङ्कते- लक्षणस्येति। निराकरोति, नेति, त्रित्वं नानुपपन्नमित्यर्थः। अत्र हेतुमाह- रागेति, रागद्वेषमोहानामर्थान्तरभावात्= परस्परं भेदादित्यर्थः। रागलक्षणमाह- आसक्तीति,

## न- एकप्रत्यनीकभावात् ॥ ४ ॥

नाऽर्थान्तरं रागादयः, कस्मात् ?, एकप्रत्यनीकभावात्= तत्त्वज्ञानम्= सम्यङ्मतिः= आर्यप्रज्ञा= संबोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति ॥ ४ ॥

## व्यभिचारादहेतुः ॥ ५ ॥

एकप्रत्यनीकाः पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेन, एकयोनयश्च पाकजा इति ॥ ५ ॥

सति चार्थान्तरभावे—

## तेषां मोहः पापीयान्- नामूढस्येतरोत्पत्तेः ॥ ६ ॥

मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तम्, कस्मात् ?, नाऽमूढस्येतरोत्पत्तेः= अमूढस्य रागद्वेषौ नोत्पद्येते, मूढस्य तु यथासंकल्पमुत्पत्तिः=विषयेषु रञ्जनीयाः संकल्पा रागहेतवः

---

आसक्तिः= प्रीतिः, द्वेषलक्षणमाह- अमर्षेति, मोहलक्षणमाह- मिथ्येति । रागद्वेषमोहानां पार्थक्ये प्रत्यक्षं प्रमाणयति- एतदिति, प्रत्यात्मवेदनीयम्= स्वस्वात्मविदितमेवेत्यर्थः । प्रत्यक्षमुदाहरति- अस्तीति, अध्यात्मम्= आत्मनि । रागलक्षणो धर्मो रागधर्मः । रागाभावेपि प्रत्यक्षं प्रमाणयति- विरागमिति, विरागम्= रागाभावम् । अत्र प्रत्यक्षमुदाहरति- नास्तीति । उक्तमन्यत्रातिदिशति- एवमिति, एवं इतरयोः= द्वेषमोहयोरप्युदाहार्यमित्यर्थः, यथा 'अस्ति मे आत्मनि द्वेषः' 'अस्ति मे आत्मनि मोहः' इति सर्वविदितमेव । उपसंहरति- मानेति, मानादय उक्तरीत्या त्रैराश्यम्= रागद्वेषमोहानां समुदायत्रये अनुपतिताः= अन्तर्भूता एवेति न पृथगुच्यन्ते इत्यन्वयः ॥ ३ ॥

रागादीनां भेदं पूर्वपक्षी निराकरोति- नेति, रागद्वेषमोहा न परस्परं भिन्ना इत्यर्थः, हेतुमाह- एकेति, एकप्रत्यनीकभावात्= एकप्रत्यनीकत्वात्= त्रयाणामप्येकेन तत्त्वज्ञानेन नाश्यत्वात् , एकनाश्यत्वं चैकत्वं विना न संभवतीत्यभिन्ना रागादय इतिसूत्रार्थः । व्याचष्टे- नेति, अर्थान्तरम्= अर्थान्तरभूताः= भिन्नाः । हेतुमाह- एकेति । एकं नाशकमाह- तत्त्वेति, उत्तरोत्तरं व्याचष्टे- सम्यगित्यादिना । आर्याणां प्रज्ञा आर्यप्रज्ञा= यथार्थज्ञानम् । इदम्= तत्त्वज्ञानम्, त्रयाणाम्= रागद्वेषमोहानाम् प्रत्यनीकम्= नाशकमित्यन्वयः, तथा चैकेन तत्त्वज्ञानेन नाश्यत्वाद्रागद्वेषमोहानामभेदः सिद्ध इत्यर्थः ॥ ४ ॥

उक्तं सिद्धान्ती परिहरति- व्यभिचारादिति, एकविनाश्यानामभेद इति व्यभिचारात्= अनियमात् रागादीनामभेदे य एकप्रत्यनीकत्वं हेतुरुक्तः सोऽहेतुः= रागादीनामभेदसाधको न भवति- एकाग्निविनाश्यानामपि पटपुस्तकादीनामभेदासंभवादिति सूत्रार्थः । व्याचष्टे- एकेति, पृथिव्यां ये श्यामादयो गुणास्ते एकेनाग्निसंयोगेन नाश्या इत्येकप्रत्यनीकाः पाकजत्वादेकयोनयः= एककारणकाश्च अथापि नाऽभिन्नास्तथैकप्रत्यनीका रागादयोपि नाऽभिन्ना इत्यर्थः ॥ ५ ॥

अग्रिमसूत्रमवतारयति- सतीति, रागद्वेषमोहानामुक्तेनाऽर्थान्तरभावे= भेदे सिद्धे तेषां विशेषमाहेत्यर्थः । तेषामिति- तेषां रागद्वेषमोहानां मध्ये मोहः पापीयान्= अत्यन्तदुष्टः= प्रबलः- रागद्वेषजनकत्वादित्यर्थः । उक्ते हेतुमाह- नेति, अमूढस्य= मोहरहितस्य जनस्य नेतरोत्पत्तेः= इतरोत्पत्तेरभावात्= द्वेषरागयोरसंभवादित्यन्वयः, तथा च रागद्वेषजनकत्वान्मोहस्य पापिष्ठत्वं सिद्धमिति सूत्रार्थः ।

व्याचष्टे- मोह इति, द्वावभिप्रेत्य= रागद्वेषाभ्यां मोहः पापतर इत्युक्तमित्यर्थः । हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- नेति, एतद् व्याचष्टे- अमूढस्येति, अमूढस्य= मोहरहितस्य । समोहस्य रागद्वेषोत्पत्तिमाह- मूढस्येति, यथासंकल्पम्= संकल्पानुसारेण रागद्वेषयोरुत्पत्तिर्भवतीत्यन्वयः । उक्तं विशदयति- विषयेष्विति, विषयत्वं सप्तम्यर्थः, विषयेषु शब्दस्पर्शादिषु ये रञ्जनीयाः= हर्षोत्पादकाः

कोपनीयाः संकल्पा द्वेषहेतवः उभये च संकल्पा न मिथ्याप्रतिपत्तिलक्षणत्वाद् मोहादन्ये, ताविमौ मोहयोनी रागद्वेषाविति, तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः, एवं च कृत्वा तत्त्वज्ञानात् " दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः १-१-२ " इति व्याख्यातमिति ॥ ६ ॥

प्राप्तस्तर्हि—

**निमित्तनैमित्तकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥**

अन्यद्धि निमित्तमऽन्यच्च नैमित्तकमिति दोषनिमित्तत्वाददोषो मोह इति ॥ ७ ॥

**न- दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥**

"प्रवर्तनालक्षणा दोषाः १-१-१८" इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति॥८॥

**निमित्तनैमित्तकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥**

द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्तनैमित्तकभावो तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

---

संकल्पाः= सुखसाधनत्वप्रत्ययास्ते रागहेतवः, कोपनीयाः= विक्षेपजनका ये संकल्पाः= दुःखसाधनत्वप्रत्ययास्ते द्वेषहेतवः, संकल्पाश्चैते मोहं विना न संभवन्तीति मोहस्य रागद्वेषजनकत्वं सिद्धमित्याह- उभये इति, उभये= उक्ता द्विविधा अपि संकल्पा मिथ्याप्रतिपत्तिलक्षणत्वात् न मोहादन्ये भवन्ति तथा च मोहोपि मिथ्याज्ञानरूप एव उक्तसंकल्पा अपि मिथाज्ञानरूपा एवेति मोहस्योक्तसंकल्पानां चाभेदः सिद्धः- मिथ्याप्रतिपत्तिलक्षणत्वात् तथा च रागद्वेषयोरुक्तसंकल्पजन्यत्वेन मोहजन्यत्वमपि प्राप्तमित्याह- ताविति, ताविमौ रागद्वेषौ मोहयोनी= मोहजन्यावितिसिद्धमित्यर्थः । वस्तुतस्तु " मिथ्याप्रतिपत्तिलक्षणत्वात् " इत्यत्र ' मिथ्याप्रतिपत्तिलक्षणात् ' इतियुक्तं स्यात् । अत्र- " मोहाद्विषयस्य सुखसाधनत्वानुस्मृतिः दुःखसाधनत्वानुस्मृतिश्च संकल्पः " इतितात्पर्यटीका । रागद्वेषमोहानामेकप्रत्यनीकत्वप्रकारमाह- तत्त्वेति, तत्त्वज्ञानेन मोहस्य निवृत्तिर्भवतीति मोहकार्ययोरागद्वेषयोरपि तत्त्वज्ञानेन मोहनिवृत्तिद्वारा निवृत्तिर्भवतीति हेतोरेव त्रयाणामेकतत्त्वज्ञाननाश्यत्वमभिमतमित्यन्वयः । उपसंहरति- एवमिति, एवं च कृत्वा= इतिहेतोः= त्रयाणामेकतत्त्वज्ञाननाश्यत्वादेव तत्त्वज्ञानादपवर्ग उक्तः अन्यथा= त्रयाणामेकतत्त्वज्ञानानाश्यत्वे तत्त्वज्ञानान्मोक्षो न स्यात्- एकदोषनाशेप्यपरदोषस्थितिसंभवादित्यर्थः । अपवर्गसाधनबोधकसूत्रं स्मारयति- दुःखेति । स्पष्टमन्यत् ॥ ६ ॥

अग्रिमसूत्रमवतारयति- प्राप्त इति, तर्हि= उक्तकार्यकारणभावेन दोषेभ्यो मोहस्यार्थान्तरभावः प्राप्तः- दोषकारणत्वादित्यर्थः । निमित्तेति- निमित्तनैमित्तकभावात्= कार्यकारणभावात् मोहस्योक्तरीत्या दोषकारणत्वाद् दोषेभ्योऽर्थान्तरभावः= पदार्थान्तरत्वम्= अदोषत्वं प्राप्तमिति सूत्रार्थः । व्याचष्टे- अन्यदिति, नैमित्तकम्= कार्यम् । स्पष्टमन्यत् ॥ ७ ॥

उक्तं सिद्धान्ती निराकरोति- नेति, मोहस्य दोषेभ्योऽर्थान्तरत्वं न संभवतीत्यर्थः, उक्ते हेतुमाह- दोषेति, मोहस्य दोषलक्षणेन= प्रवर्तकत्वेनाऽवरोधात्= आक्रान्तत्वाद् दोष एव मोह इतिसूत्रार्थः । व्याचष्टे- प्रवर्तनेति, स्पष्टार्थं भाष्यम् ॥ ८ ॥

मोहस्य दोषकारणत्वेपि दोषत्वोपपत्तिमाह- निमित्तेति, तुल्यजातीयानाम्= सदृशानामपि निमित्तनैमित्तकोपपत्तेः= कार्यकारणभावसंभवात् दोषस्यापि मोहस्य दोषकारणत्वसंभवेन दोषत्वस्य प्रतिषेधो नोपपद्यते इति सिद्धं मोहस्य दोषत्वमिति सूत्रार्थः । व्याचष्टे- द्रव्याणामिति, तुल्यजाती-

दोषानन्तरं प्रेत्यभावः, तस्याऽसिद्धिः– आत्मनो नित्यत्वात्= न खलु नित्यं किंचित् जायते म्रियते वा इति. जन्ममरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः उभयं च प्रेत्यभाव इति।

तत्रायं सिद्धानुवादः—

## आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

नित्योयमात्मा प्रैति= पूर्वशरीरं जहाति= म्रियते इति. प्रेत्य च= पूर्वशरीरं हित्वा भवति= जायते= शरीरान्तरमुपादत्ते इति. तच्चैतदुभयम्= पुनरुत्पत्तिः प्रेत्यभाव इति. तच्चैतत् नित्यत्वे संभवतीति। यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावस्तस्य कृतहानमकृताभ्यागमश्च दोषः, उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थका इति ॥ १० ॥

कथमुत्पत्तिरितिचेत् ?.

## व्यक्ताद् व्यक्तानाम्– प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

---

यानामपि द्रव्याणां गुणानां चाऽनेकविधविकल्पः= विविधरूपो निमित्तनैमित्तकभावो दृष्ट इति दोषस्यापि मोहस्य दोषकारणत्वमुपपद्यते इत्यन्वयः, द्रव्याणां यथा मृद्घटयोः, गुणानां यथा कार्यगुणं प्रति कारणगुणस्य कारणत्वम्, विविधरूपत्वं च कारणस्य समवायित्वासमवयित्वनिमित्तत्वभेदात् ॥ ९ ॥

॥ इति दोषविवेचनं समाप्तम् ॥

---

क्रमप्राप्तं प्रेत्यभावविवेचनमारभते– दोषानन्तरमिति, विवेचनार्थं प्राप्त इतिशेषः। तस्य= प्रेत्यभावस्य= जन्ममरणयोः। असिद्धौ पूर्वपक्षी हेतुमाह– आत्मन इति, प्रेत्यभाव उत्पादविनाशावेव तौ च नित्यस्यात्मनो न संभवत इत्याशयः। उक्तं विशदयति– नेति। पर्यवसितं प्रकृतमाह– जन्मेति, आत्मनो नित्यत्वात् जन्ममरणयोरनुपपत्तिः, जन्ममरणेत्युभयमेव प्रेत्यभाव इति प्रेत्यभावस्याप्यनुपपत्तिरित्यन्वयः, एवं पूर्वपक्षमनूद्याग्रिमसूत्रमवतारयति तत्रेति, तत्र= एवं पूर्वपक्षे प्राप्ते सिद्धानुवादः= सूत्रेण सिद्धान्त उच्यते इत्यर्थः। आत्मेति– आत्मनो नित्यत्वेनैव प्रेत्यभावः सिध्यतीत्यन्वयः, पूर्वशरीरं त्यक्त्वा शरीरान्तरग्रहणमेव प्रेत्यभावः स चात्मनो नित्यत्वे एव संभवति नाऽनित्यत्वेपि– अनित्यस्यात्मनः पूर्वशरीरेण सह विनाशसंभवात् शरीरान्तरग्रहणानुपपत्तेरिति स्पष्टमेवेति सूत्रार्थः। व्याचष्टे– नित्य इति। प्रैतिपदार्थमाह– पूर्वेति । पूर्वशरीरत्यागपदार्थमाह– म्रियते इति । प्रेत्यभावमाह– प्रेत्येति, तदेतदुत्तरोत्तरं व्याचष्टे– पूर्वेत्यादिना। तच्चैतत् जन्ममरणलक्षणमुभयं प्रेत्यभाव इत्युच्यते। पर्यवसितमाह– तच्चैतदिति। नित्यस्य पूर्वशरीरं त्यक्त्वा शरीरान्तरग्रहणं संभवतीत्यर्थः। पूर्वपक्षिमते बाधकमाह– यस्येति, यस्य मते सत्त्वोत्पादः= आत्मोत्पत्तिः, सत्त्वनिरोधः= आत्मविनाशः प्रेत्यभावस्तस्य मते आत्मन उत्पादविनाशयोः प्रेत्यभावत्वे कृतहान्यकृताभ्यागमदोषः स्पष्ट एवेत्यन्वयः। दोषान्तरमाह– उच्छेदेति, उच्छेदहेतुवादे= आत्मोच्छेदहेतुभिरात्मोच्छेद इतिमते आत्मनो विनाशित्वेन विहितयागादिफलभोगो न संभवतीति ऋष्युपदेशानामानर्थक्यमपि दोष इति तत्परिहारार्थम् आत्मनो नित्यत्वं स्वीकार्यं तेन प्रेत्यभावः सिद्ध इत्यर्थः ॥ १० ॥

शरीरोत्पत्तिप्रकारं जिज्ञासते– कथमिति। सूत्रेणोत्तरमाह– व्यक्तादिति, व्यक्तानाम्= शरीरादीनां मूर्तपदार्थानां व्यक्तात्= कारणीभूतात् मूर्तादेव भूतपदार्थादुत्पत्तिर्भवति– प्रत्यक्षस्य प्रामाण्यात्= प्रत्यक्षसिद्धत्वाद् यथा व्यक्ताद् मृत्पदार्थाद् व्यक्तस्य घटस्योत्पत्तिर्दृश्यते तथा शरीरस्यापि शुक्रशोणितादिभ्य उत्पत्तिर्विज्ञेयेति सूत्रार्थः। वस्तुतस्तु सूत्रे– ‘अव्यक्ताद् व्यक्तानामुत्पत्तिः’ इतिवक्तव्यमासीत्।

केन प्रकारेण किंधर्मकात् कारणाद् व्यक्तं शरीरमुत्पद्यते इति ?, व्यक्तात्= भूतसमाख्यातात् पृथिव्यादितः परमसूक्ष्माद् नित्यात् व्यक्तम्= शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते, व्यक्तं च खल्विन्द्रियग्राह्यं तत्सामान्यात् कारणमपि व्यक्तम् । किं सामान्यम् ?, रूपादिगुणयोगः= रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीरादि उत्पद्यते- प्रत्यक्षप्रामाण्यात्= दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः तेन चाऽदृष्टस्यानुमानमिति= रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयते इति ॥ ११ ॥

## न- घटाद् घटानिष्पत्तेः ॥ १२ ॥

इदमपि प्रत्यक्षम्- न खलु व्यक्ताद् घटाद् व्यक्तो घट उत्पद्यमानो दृश्यते इति, व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति ॥ १२ ॥

## व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

न ब्रूमः सर्वं सर्वस्य कारणमिति किं तु यदुत्पद्यते व्यक्तं द्रव्यं तत् तथाभूतादेवोत्पद्यते इति, व्यक्तं च तद् मृद्द्रव्यं कपालसंज्ञकं यतो घट उत्पद्यते न चैतद् निह्नुवानः कचिदभ्यनुज्ञां लब्धुमर्हतीति । तदेतत् तत्त्वम् ॥ १३ ॥

---

व्याचष्टे- केनेति, किंधर्मकात्= किंगुणविशिष्टात्, जिज्ञासावाक्यमिदम् । उत्तरमाह- व्यक्तादिति, उक्तं व्याचष्टे- भूतेति, भूतसमाख्यातात्= भूतसंज्ञकात् परमसूक्ष्मात्= परमाणुरूपात् व्यक्तमुत्पद्यते इत्यन्वयः । कार्यमाह- व्यक्तमिति, एतद् व्याचष्टे- शरीरेति, विषयाः शब्दस्पर्शादयः, शरीरादिलक्षणं यदुपकरणम्= भोगसाधनं तदाधारम्= तत्कारणीभूतं प्रज्ञातम्= प्रत्यक्षं द्रव्यं स्थूलपृथिव्यादिकमुत्पद्यते इत्यन्वयः । कारणद्रव्यस्य परमाणुलक्षणस्याऽप्रत्यक्षत्वेपि व्यक्तत्वमाह- व्यक्तं चेति, इन्द्रियग्राह्यम्= प्रत्यक्षं द्रव्यं कार्यभूतं व्यक्तमित्युच्यते तत्सामान्यात्= कार्यद्रव्यसादृश्यात् कारणमपि परमाणुद्रव्यं व्यक्तमित्युच्यते- कार्यकारणयोः सारूप्यस्यावश्यकत्वादित्यर्थः । उक्तसादृश्यस्य स्वरूपं जिज्ञासते- किमिति, सामान्यम्= कार्यकारणयोः सादृश्यम् । उत्तरमाह- रूपादीति । उक्तं विशदयति- रूपादिगुणयुक्तेभ्य इति, नित्येभ्यः= परमाणुरूपेभ्यः, क्रमेणोत्पद्यते इत्यर्थः । हेतुमाह- प्रत्यक्षेति । प्रत्यक्षमुदाहरति- दृष्ट इति, तथाभूतस्य= रूपादिगुणयुक्तस्य । तेन= उक्तदृष्टेन= दृष्टानुसारेण, अदृष्टस्य कारणस्यानुमानं भवतीत्यर्थः, उक्तं विशदयति- रूपादीनामिति, प्रकृतिविकारयोः= कार्यकारणयोः मृद्घटादिलक्षणयोः रूपादीनामन्वयदर्शनात् स्थूलपृथिव्यादिषु रूपादिकमस्तीति तत्कारणेनापि रूपादियुक्तेनैव भवितव्यमिति नित्यानामतीन्द्रियाणां पृथिव्यादीनां परमाणुरूपाणां कारणभावः= स्थूलभूतकारणत्वमनुमीयते- रूपादियुक्तत्वादिति व्यक्ताद् व्यक्तं शरीरादिकमुत्पद्यते इति सिद्धमित्यर्थः ॥ ११ ॥

उक्तं पूर्वपक्षी परिहरति- नेति, व्यक्ताद् व्यक्तस्योत्पत्तिर्न संभवति- व्यक्ताद् घटाद् व्यक्तस्य घटस्यानिष्पत्तेः= उत्पत्तेरभावादिति सूत्रार्थः । व्याचष्टे- इदमिति, यथा मृदो घट उत्पद्यते इति प्रत्यक्षं तथा घटाद् घटो नोत्पद्यते इदमपि प्रत्यक्षमेव. घटश्च व्यक्त एवेत्यन्वयः । पर्यवसितमाह- व्यक्तादिति, व्यक्ताद् घटाद् व्यक्तस्य घटस्यानुत्पत्तिदर्शनात् । यदि व्यक्ताद् व्यक्तमुत्पद्येत तदा घटाद् घटोप्युत्पद्येत न चैवमस्तीति न व्यक्तस्य कारणत्वमुपपद्यते इत्यर्थः ॥ १२ ॥

सिद्धान्ती समाधत्ते- व्यक्तादिति, व्यक्ताद् घटनिष्पत्तेः= घटोत्पत्तेः प्रतिषेधो नोपपद्यते- व्यक्तादेव मृत्पदार्थाद् घटोत्पत्तेर्दर्शनादिति व्यक्तस्य कारणत्वं सिद्धमितिसूत्रार्थः । व्याचष्टे- न ब्रूम इति, तत्= व्यक्तम्, तथाभूतात्= व्यक्तादेव रूपादिगुणयुक्तात् । समन्वयति- व्यक्तं चेति । विपक्षे बाधकमाह-

अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते—

**अभावाद् भावोत्पत्तिः— नाऽनुपमृद्य प्रादुर्भावात् ॥ १४ ॥**

असतः सदुत्पद्यते इत्ययं पक्षः, कस्मात् ?, उपमृद्य प्रादुर्भावात्= उपमृद्य बीजमङ्कुर उत्पद्यते नाऽनुपमृद्य, न चेद् बीजोपमर्दोऽङ्कुरकारणम् ? अनुपमर्देऽपि बीजस्याऽङ्कुरोत्पत्तिः स्यादिति ॥ १४ ॥

अत्राभिधीयते—

**व्याघातादप्रयोगः ॥ १५ ॥**

'उपमृद्य प्रादुर्भावात्' इत्यऽयुक्तः प्रयोगः— व्याघातात्= यदुपमृद्नाति न तदुपमृद्य प्रादुर्भवितुमर्हति— विद्यमानत्वात्. यच्च प्रादुर्भवति न तेनाऽप्रादुर्भूतेन= अविद्यमानेनोपमर्द इति ॥ १५ ॥

**न— अतीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥**

---

न चेति, एतत्= प्रत्यक्षसिद्धं निह्नुवानः कमपि पदार्थं साधयितुं न शक्नोति— मेयसिद्धेर्मानाधीनत्वात् मानेषु च प्रत्यक्षस्य प्रधानत्वादित्यर्थः । अभ्यनुज्ञाम्= संमतिम्= दृष्टान्तमितियावत् । अत्र— "प्रत्यक्षकारणापलापी न कस्मिन्नपि दर्शने संवादं लब्धुं योग्यः स्यादित्यर्थः" इति श्रीगुरुचरणाः । उपसंहरति— तदेतदिति, तत्त्वम्= सिद्धान्तः, कथितमितिशेषः, स्पष्टमन्यत् ॥ १३ ॥

अग्रिमविषयमाह— अत इति, प्रावादुकानाम्= भिन्नमतावलम्बिनाम्, दृष्टयः= मतानि । कार्यकारणभावे बौद्धमतमाह— अभावादिति, अभावात्= कारणाभावात् भावस्य कार्यस्योत्पत्तिर्भवति यथा मृत्सलिलसंयोगाद् बीजे नष्टे सत्येवाङ्कुर उत्पद्यते इति स्पष्टमेवेत्यभावस्य कारणत्वं सिद्धमित्यर्थः, उक्ते हेतुमाह— नेति, अनुपमृद्य= बीजादीनां विनाशं विना नप्रादुर्भावात्= प्रादुर्भावाभावात्= कार्योत्पत्तेरसंभवात्, अव्यवहितपूर्ववर्तिन एव कारणत्वमभीष्टम् अङ्कुरादिकार्यादव्यवहितपूर्ववर्तित्वं च बीजाद्यभावस्यैव संभवति न बीजादेरित्यभावस्य कारणत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे— असत इति, असतः= अभावात्, पक्षः= पूर्वपक्षिमतम् । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— उपमृद्येति । उक्तं व्याचष्टे— उपमृद्येति । स्वविपक्षे बाधकमाह— न चेदिति, बीजोपमर्दः= बीजविनाशः, बीजस्यानुपमर्देऽपि= स्वरूपेण स्थितावपि, स्पष्टमन्यत् । एवं घटादिस्थलेऽपि मृत्पिण्डादेः स्वरूपविनाशो भवत्येवेति स्पष्टमेवेत्यभावस्य कारणत्वं सिद्धं न तु भावस्येतिभावः ॥ १४ ॥

अग्रिमसूत्रमवतारयति— अत्रेति । व्याघातादिति— "नानुपमृद्य प्रादुर्भावात्" इत्यप्रयोगः= वक्तुं न शक्यते— व्याघातात्= विरुद्धत्वादित्यन्वयः, 'उपमृद्य प्रादुर्भावः' इत्यनेनाङ्कुरादेः कार्यस्य उपमर्दप्रादुर्भावयोः कर्तृत्वं प्राप्तं तच्च न संभवति— उपमर्दानन्तरं जायमानस्याङ्कुरस्योपमर्दकर्तृत्वाऽसंभवात् उपमर्दात् पूर्वस्य चाङ्कुरस्योपमर्दकर्तृत्वसंभवेऽपि उपमर्दानन्तरजायमानप्रादुर्भावकर्तृत्वासंभवादिति पूर्वपक्षिमते व्याघात इतिसूत्रार्थः । व्याचष्टे— उपमृद्येति, प्रयोगः= वाक्यं सिद्धान्तो वा । अयुक्तत्वे हेतुमाह— व्याघातादिति । एतद् व्याचष्टे— यदिति । उपमर्दकस्य प्रादुर्भावाभावे हेतुमाह— विद्यमानत्वादिति, उपमर्दकस्य विद्यमानत्वावश्यम्भावेन भविष्यत्प्रादुर्भावासंभवः स्पष्ट एव, अविद्यमानत्वे दोषमाह— यच्चेति, प्रादुर्भवति= प्रादुर्भविष्यति । स्पष्टं सर्वमिति पूर्वपक्षिमते व्याघातः प्रदर्शितः ॥ १५ ॥

उक्तदोषं पूर्वपक्षी परिहरति— नेति, न व्याघातदोष इत्यर्थः । हेतुमाह— अतीतेति, अतीतानागतयोरपि पदार्थयोः कारकशब्दस्य= कर्तृत्वादिबोधकशब्दस्य प्रयोगात्= प्रयोगो भवति यथाऽनु-

अतीते चाऽनागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते– पुत्रो जनिष्यते जनिष्यमाणं पुत्रमभिनन्दति, पुत्रस्य जनिष्यमाणस्य नाम करोति, अभूत् कुम्भो भिन्नं कुम्भमनुशोचति– भिन्नस्य कुम्भस्य कपालानि, अजाताः पुत्राः पितरं तापयन्ति इति बहुलं भाक्ताः प्रयोगा दृश्यन्ते। का पुनरियं भक्तिः ?. आनन्तर्यं भक्तिः= आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः= प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति ॥ १६ ॥

## न– विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

न विनष्टाद् बीजादङ्कुर उत्पद्यते इति तस्मान्नाऽभावाद् भावोत्पत्तिरिति ॥ १७ ॥

## क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः स खल्वभावाद् भावोत्पत्तेर्हेतुर्निर्दिश्यते स च न प्रतिषिध्यते इति ॥

---

त्पन्नेपि पुत्रे पिता वदति– 'एतत्कार्यं मे पुत्रः करिष्यति' इति यथात्राविद्यमानस्यैव पुत्रस्य कार्यकर्तृत्वमुच्यते तथा प्रकृतेप्यनुत्पन्नस्यापि कार्यस्योपमर्दकर्तृत्वमुच्यते तथा विनष्टस्य बीजादेः कारणत्वमुच्यते इति न व्याघातदोष इति सूत्रार्थः। व्याचष्टे– अतीते इति, अतीतलक्षणे चानागतलक्षणे चाविद्यमाने इत्यर्थः। उदाहरति– पुत्र इति, जनिष्यमाणमित्यनेनाऽनुत्पन्नस्यापि पुत्रस्याभिनन्दनकर्मत्वं प्रदर्शितम्, पुत्रस्येत्यनेनानुत्पन्नस्य नामक्रियाकर्मत्वं प्रदर्शितम्। अतीते कारकशब्दप्रयोगमुदाहरति– अभूदिति। भिन्नमित्यनेनातीतस्य कर्मत्वं प्रदर्शितम्, कपालानीत्यत्र पश्यतीतिशेषस्तदनेनातीतस्य कपालसंबन्धित्वं प्रदर्शितम्। अनागतस्य कर्तृत्वमुदाहरति– अजाता इति, एवमनागतस्य कार्यस्याप्युपमर्दकर्तृत्वं बोध्यमिति न व्याघात इत्यर्थः। उपसंहरति– इतिबहुलमिति। उक्ते भाक्तत्वं जिज्ञासते– केति। उत्तरमाह– आनन्तर्यमिति। एतद् व्याचष्टे– आनन्तर्येति, प्रादुर्भावार्थः= प्रादुर्भावपदार्थः, य उपमृद्य प्रादुर्भावः= भावाभावयोः कार्यकारणभावः स आनन्तर्यादेवास्ति तत्रानुत्पन्नस्यापि कार्यस्य यदुपमर्दकर्तृत्वं तद् भाक्तमेव 'अजाताः' इत्युदाहृतवदित्यर्थः। एतदपि व्याचष्टे– प्रादुर्भविष्यन्निति। स्पष्टमन्यत्। तथा च यथा यथा प्रादुर्भवति तथा तथोपमृद्नातीति न मन्मते व्याघातदोष इत्याशयः ॥ १६ ॥

उक्तपूर्वपक्षं सिद्धान्ती निराकरोति– नेति, अभावाद् भावोत्पत्तिर्न संभवतीत्यर्थः, हेतुमाह– विनष्टेभ्य इति, विनष्टेभ्यो बीजादिभ्यः कारणेभ्योङ्कुरादिकार्याणामनिष्पत्तेः= उत्पत्तेरभावात्, यदि विनष्टादेव बीजादङ्कुर उत्पद्येत तदा चूर्णीकृतादप्युत्पद्येत– विनशस्याविशेषादितिसूत्रार्थः। व्याचष्टे– नेति। उपसंहरति– तस्मादिति, स्पष्टार्थं भाष्यम्। यदुक्तम्– यथा 'अजाताः' इत्यत्रानुत्पन्नस्य कर्तृत्वं तथा प्रकृतेपीति. तन्न युक्तम्– तत्रोत्पत्त्यनन्तरभाविकार्यं प्रत्येव कर्तृत्वस्य बोधनात् तस्य च संभवात्. प्रकृते चोत्पत्तेः पूर्वभाविनमुपमर्दं प्रति कर्तृत्वस्य बोधनात् तस्य चासंभवादित्यनुसंधेयम् ॥ १७ ॥

पूर्वपक्षिणा भावाभावयोः कार्यकारणभावे तयोः पौर्वापर्यक्रमो हेतुत्वेनोपन्यस्तः– बीजविनाशानन्तरमेवाङ्कुरो जायते इति तयोः पौर्वापर्यक्रमः प्रसिद्ध एव तस्य क्रमस्य स्वमतेपि संभवमाह– क्रमेति, क्रमनिर्देशात्= भावाभावयोः क्रमनिर्देशस्य प्रतिषेधो न क्रियते– बीजाकृतिविलोपं विनाङ्कुराकृतेरसंभवात्, नैतावता भावाभावयोः कार्यकारणभावः संभवति अन्यथा पद्मबीजाभावस्य स्थलेपि सत्त्वात् स्थलेपि पद्मं जायेत. किं चैवं सर्वं सर्वत्र सुलभं स्यात्– कारणाभावस्य कारणाश्रयदेशातिरिक्तसर्वदेशेषु संभवात्, न चैवमस्तीति न भावाभावयोः कार्यकारणभावः संभवतीति सूत्रार्थः। अत्र– "क्रमनिर्देशादित्यस्य हेतोरस्मत्पक्षेप्यप्रतिषेधः– तत्राप्यानन्तर्यस्य तुल्यत्वात्" इति तात्पर्यटीका। सूत्रार्थमाह– उपमर्देति, उपमर्दः= कारणाभावः, उपमर्दप्रादुर्भावयोर्यः पौवापर्यनियमः स क्रम इत्युच्यते

व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाऽभावात्= बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते व्यूहान्तरादङ्कुर उत्पद्यते— दृश्यन्ते खलु अवयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः, न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमिति उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः तस्मान्नाऽभावाद् भावोत्पत्तिरिति, न चान्यद् बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

अथाऽपर आह—

## ईश्वरः कारणम्— पुरुषकर्माऽऽफल्यदर्शनात् ॥ १९ ॥

पुरुषोयं समीहमानो नावश्यं समीहाफलं प्राप्नोति तेनानुमीयते— पराधीनं पुरुषस्य कर्मफलाराधनमिति. यदधीनं स ईश्वरः तस्मादीश्वरः कारणमिति ॥ १९ ॥

---

स एवाभावाद् भावोत्पत्तेः पूर्वपक्षिणा हेतुरुच्यते— तादृशकारणाभावस्य कार्यापेक्षया नियमेनाव्यवहितपूर्ववृत्तित्वात् कारणत्वमिति, स च प्रत्यक्षसिद्धः क्रमोऽस्माभिरपि न प्रतिषिध्यते येनास्मन्मते प्रत्यक्षविरोधः स्यात् किं तु कारणाभावस्य कारणत्वं न स्वीक्रियते किं तु कारणस्यैव, कारणाभावस्य कारणत्वे सर्वं सर्वत्र सुलभं स्यादित्यर्थः । वस्तुतस्तु सूत्रं भाष्यं चेदं पूर्वपक्षपरमेव प्रतिभाति तथा च 'अप्रतिषेधः' इत्यस्य भावाभावयोः कार्यकारणभावस्याप्रतिषेध इत्यर्थः ।

उक्तक्रमस्य स्वपक्षेपि संभवमुपपादयति— व्याहतेति, व्याहतव्यूहानाम्= नष्टसंयोगानामवयवानां पूर्वव्यूहनिवृत्तौ= कारणाकृतौ विनष्टायां व्यूहान्तरात्= संयोगान्तरात् कार्यं जायते नाऽभावादित्यन्वयः, कार्योत्पत्तेः पूर्वक्षणे कारणस्याकृत्यन्तरं जायते इति प्रसिद्धमेव । कार्योत्पत्तिक्रममाह— बीजेति, कुतश्चिन्निमित्तात्= मृत्सलिलसंयोगात्, प्रादुर्भूतक्रियाः= स्थूलीभवनक्रियायुक्ताः, पूर्वव्यूहम्= पूर्वाकृतिम्, व्यूहान्तरम्=आकृत्यन्तरम्, तदेतत् प्रत्यक्षवेद्यमेव । भावस्य कारणत्वे प्रत्यक्षं प्रमाणयति— दृश्यन्ते इति, जातेप्यङ्कुरे तदधोभागे बीजावयवाः संयोगान्तरविशिष्टा दृश्यन्ते एवेति प्रत्यक्षेणैव कारणावयवानां कारणावयवसंयोगानां च कारणत्वं सिद्धमित्यर्थः, अन्यथा कार्योत्पत्तिकालेपि कारणावयवा नोपलभ्येरन् । स्वमते उक्तक्रमस्य संभवमाह— न चेति, पूर्वव्यूहे= पूर्वाकृतौ, व्यूहान्तरेण= आकृत्यन्तरेण= कार्याकृत्या, कारणाकृतेः कार्याकृतेश्च सामानाधिकरण्यं न संभवतीति कारणाकृत्युपमर्दं विना कार्याकृतिर्न संभवति तत एवोपमर्दप्रादुर्भावयोः= कारणाभावकार्योत्पत्त्योः पौर्वापर्यक्रमनियमोस्ति स चास्मन्मतेप्युक्तरीत्या नानुपपन्न इति नाऽभावाद् भावोत्पत्तिः संभवति किं तु अन्वयव्यतिरेकाभ्यां भावादेवेत्यर्थः । स्वमते साधकान्तरमाह— न चेति, अस्मन्मते बीजाङ्कुरयोः कारणकार्यभावादङ्कुरार्थिनो बीजोपादाननियमः= बीजग्रहणनियम उपपद्यते पूर्वपक्षिमते त्वभावस्यैव कारणत्वं तस्य च सर्वत्र सुलभत्वादङ्कुरार्थिनो बीजग्रहणनियमो नोपपद्यते इत्यर्थः, उपादानशब्दः समवायिकारणपरोपि संभवति ॥१८॥

॥ इत्यभावस्य कारणत्वखण्डनं समाप्तम् ॥

---

अग्रिमप्रकरणमारभते— अथेति । ईश्वर इति— कार्यमात्रस्येश्वरः कारणम्— फलोत्पत्त्यनुकूलेश्वरेच्छां विनां पुरुषकर्मणाम् आफल्यदर्शनात्= वैफल्यदर्शनात्, अफलस्य भाव आफल्यमिति सूत्रान्वयः । व्याचष्टे— पुरुष इति, समीहमानः= फलार्थं यतमानः, समीहाफलम्= स्वयत्नफलम् । अनुमेयमाह— परेति, पराधीनम्= ईश्वराधीनम्, कर्मफलाराधनम्= कर्मफलसिद्धिः । उपसंहरति— तस्मादिति । कार्यं यदधीनं भवति तत् कारणं कार्यमात्रस्य चेश्वराधीनत्वादीश्वरस्य कारणत्वं सिद्धमित्यर्थः, स्पष्टमन्यत् ॥ १९ ॥

## न- पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥

ईश्वराधीना चेत् फलनिष्पत्तिः स्याद् अपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति ॥ २० ॥

## तत्कारितत्वादहेतुः ॥ २१ ॥

पुरुषकारमीश्वरोऽनुगृह्णाति= फलाय पुरुषस्य यतमानस्येश्वरः फलं संपादयतीति. यदा न संपादयति तदा पुरुषकर्माऽफलं भवतीति. तस्मादीश्वरकारितत्वादऽहेतुः- " पुरुषकर्माभावे फलानिष्पत्तेः " इति ।

गुणविशिष्टमात्मान्तरमीश्वरः तस्याऽऽत्मकल्पात् कल्पान्तरानुपपत्तिः, अधर्ममिथ्याज्ञान-प्रमादहान्या धर्मज्ञानसमाधिसंपदा च विशिष्टमात्मान्तरमीश्वरः तस्य च धर्मसमाधिफलम् अणिमाद्यष्टविधमैश्वर्यम्, संकल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन् धर्माधर्मसंचयान् पृथिव्यादीनि च भूतानि प्रवर्तयति, एवं च स्वकृताभ्यागमस्याऽलोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम् ।

---

ईश्वरकारणत्वं निराकरोति- नेति, ईश्वरो न कारणम्- पुरुषकर्मणामभावे फलानिष्पत्तेः= फल-प्राप्त्यदर्शनात्, यदीश्वरः कारणं स्यात्तदा तस्य नित्यत्वेन पुरुषकर्मणामभावेपि कदाचित् फलसिद्धिः स्यात् न चैवं कदापि दृश्यते इति नेश्वरः कारणमिति सूत्रार्थः । व्याचष्टे- ईश्वरेति । अपि तर्हि= तदा, समीहामन्तरेण= यत्नं विनापि, स्पष्टं सर्वम् ॥ २० ॥

उक्तं प्रत्याचष्टे- तदिति, कर्मफलस्य तत्कारितत्वात्= ईश्वरसंपादितत्वाद् अहेतुः= पूर्वसूत्रोक्तो हेतुर्न युक्त इत्यन्वयः, रागद्वेषादिदोषरहितत्वादीश्वरः कर्मानुसारेण फलं ददातीति न कर्माभावे फल-संभवः न वेश्वरस्याऽकारणत्वमितीश्वरस्य कारणत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे- पुरुषेति, पुरुष-कारम्= पुरुषकर्म= पुरुषयत्नम्, अनुगृह्णाति= सफलं करोति न्यायशीलस्वामिवत्, उक्तं व्याचष्टे-- फलायेति । व्यतिरेकमाह- यदेति, उक्तान्वयव्यतिरेकाभ्यामीश्वरस्य फलसंपादकत्वं तेन कारणत्वं सिद्धमित्यर्थः । उपसंहरति- तस्मादिति, फलस्येश्वरकारितत्वात् " पुरुषकर्माभावे " इत्यादिपूर्वसूत्रोक्तो हेतुः अहेतुः= हेत्वाभास एवेत्यन्वयः ।

प्रकरणप्राप्तमीश्वरं निरूपयति- गुणेति, नित्यज्ञानेच्छादिगुणविशिष्ट आत्मान्तरम्= आत्म-विशेष ईश्वरस्तथा च योगसूत्रम्- " क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः " इति । ईश्वर-स्यात्मस्वरूपत्वमाह- तस्येति, आत्मकल्पात्= आत्मविशेषरूपात्= आत्मत्वादतिरिक्तस्य कल्पान्तरस्य= प्रकारान्तरस्य= स्वरूपान्तरस्योपपत्तिर्न संभवति- चेतनत्वादित्यर्थः, अत्र- " आत्मकल्पादित्यत्रात्म-प्रकारादात्मजातीयादिति यावत् " इति तात्पर्यटीका । पुनरीश्वरस्वरूपमाह- अधर्मेति, अधर्ममिथ्या-ज्ञानप्रमादानां हान्या= राहित्येन= अभावेन विशिष्टम्= युक्तमात्मान्तरम्= चेतनविशेष ईश्वर इत्य-न्वयः, तदेतत् " दुःखजन्मप्रवृत्ति " इतिसूत्रभाष्ये स्पष्टम्, संपदा= ऐश्वर्येण, तस्य= ईश्वरस्य, अणिमादीति- तदुक्तम्—

" अणिमा महिमा चैव लघिमा गरिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च " इति ।

ईश्वरस्य धर्ममाह- संकल्पेति, अस्य= ईश्वरस्य संकल्पानुविधायी= संकल्पमात्रजन्यो न तु क्रियाजन्यो धर्मस्तथा च श्रुतिः- "यस्य ज्ञानमयं तपः" इति, अत्र यस्य=ईश्वरस्य । ईश्वरधर्मस्य कार्यमाह- प्रत्यात्मेति, प्रत्यात्मवृत्तीन्= प्रत्येकात्मसमवेतान्, धर्माधर्मसंचयान्= पुण्यपापजन्यानदृष्टान् एतादृशप्रवर्तनया

आप्तकल्पश्चायम्= यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम्, न चात्मकल्पादन्यः कल्पः संभवति । न तावदस्य बुद्धिं विना कश्चिद् धर्मो लिङ्गभूतः शक्य उपपादयितुम्. आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता ईश्वर इति । बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् । स्वकृताभ्यागमलोपेन च प्रवर्तमानस्यास्य यदुक्तं प्रतिषेधजातम् अकर्मनिमित्ते शरीरसर्गे तत्सर्वं प्रसज्यते इति ॥ २१ ॥

अपर इदानीमाह—

## अनिमित्ततो भावोत्पत्तिः– कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥

अनिमित्ता शरीराद्युत्पत्तिः– कण्टकतैक्ष्ण्यादिदर्शनात्= कण्टकस्य तैक्ष्ण्यं पर्वतधातूनां चित्रता ग्राव्णां श्लक्ष्णता. निर्निमित्तं चोपादानं दृष्टं तथा शरीरसर्गोपीति ॥ २२ ॥

---

सृष्टिर्भवतीत्यर्थः । अत्र– "नन्वस्य कर्मानुष्ठानाभावात् कुतो धर्मः ? तथा चाणिमादिकमैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह । मा भूद् बाह्यानुष्ठानं संकल्पलक्षणानुष्ठानजनितधर्मफलमस्यैश्वर्यं जगन्निर्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः" इति तात्पर्यटीका । उपसंहरति– एवं चेति, एवम्= उक्तरीत्या ईश्वरधर्मस्य संकल्पमात्रजन्यत्वात् अकृताभ्यागमप्रसङ्गो नास्तीति स्वकृताभ्यागमस्य= ईश्वरकृतसंकल्पलक्षणानुष्ठानजन्यफलस्याऽलोपेन= लोपासंभवात् ईश्वरस्य यद् निर्माणप्राकाम्यम्= जगन्निर्माणकृतिपूर्वत्वं= जगन्निर्माणपरत्वं तदेव स्वकृतकर्मफलम्= ईश्वरकृतसंकल्पलक्षणकर्मणो फलं वेदितव्यमित्यन्वयः, ईश्वरः संकल्पमात्रेण जगन्निर्मातीत्यर्थः ।

ईश्वरस्याप्तत्वमाह– आप्तेति, अयम्= ईश्वरः, आप्तलक्षणं पूर्वमुक्तम् शब्दलक्षणभाष्ये । उक्तं व्याचष्टे– यथेति । ईश्वरस्य पुनरात्मत्वमाह– न चेति, आत्मकल्पात्= आत्मत्वात्= चेतनत्वात्, तदेतत् पूर्वं व्याख्यातमेव । ईश्वरस्यानुमापकलिङ्गमाह– न तावदिति, अस्य= ईश्वरस्य, ईश्वरज्ञानमेवेश्वरानुमापकं लिङ्गमस्तीत्यर्थः, प्रपञ्चस्य विलक्षणसंनिवेशेन बुद्धिमत्कर्तृकत्वं सिध्यति यश्चैतादृशनिर्माणविषयकबुद्धिमान् स ईश्वर इति जगन्निर्माणबुद्ध्या ईश्वरोनुमीयते इति भावः । उक्ते वेदं प्रमाणयति– आगमादिति, सिध्यतीति शेषः, तथा च श्रूयते– "यः सर्वज्ञः सर्ववित्" "द्रष्टा बोद्धा रसयिता" इत्यादि । निर्विशेषब्रह्माणि बाधकमाह– बुद्ध्यादिभिरिति, प्रत्यक्षानुमानागमविषयतारहितं निरुपाख्यम्= निर्विशेषं परमेश्वरं बुद्ध्यादिभिरात्मलिङ्गैर्न कोप्युपपादयितुं शक्त इत्यन्वयः, ईश्वरस्योपपादनं जगन्निर्माणकौशलबुद्ध्यैव संभवति तादृशबुद्ध्या च विशिष्ट एवेश्वरः संभवति न तु निर्विशेषोपीत्यर्थः । ईश्वरो जीवकर्मानुकूल्येन जगत् करोति तत्र कर्मनैरपेक्ष्ये पूर्वोक्तदोषं स्मारयति– स्वकृतेति, अस्य= ईश्वरस्य स्वकृताभ्यागमलोपेन= कर्मनैरपेक्ष्येण प्रवर्तमानस्य= यदि जगन्निर्माणप्रवृत्तिः स्यात्तदा अकर्मनिमित्ते= कर्मनिरपेक्षे शरीरसर्गे तृतीयाध्यायद्वितीयाह्निकान्तिमप्रकरणेन प्रतिषेधजातम्= दोषजातं यदुक्तं तत्सर्वं प्रसज्येतेति जीवकर्मानुगुण्येनैवेश्वरः प्रवर्तते इत्यन्वयः । तच्च दोषजातं पूर्वत्र द्रष्टव्यम् ॥ २१ ॥

॥ इतीश्वरकारणत्वप्रतिपादनं समाप्तम् ॥

---

निष्कारणतावादमवतारयति– अपर इति । अनिमित्तत इति– भावोत्पत्तिः= कार्योत्पत्तिः अनिमित्ततः= निमित्तकारणं विनैव भवति, हेतुमाह– कण्टकेति, यथा कण्टकतैक्ष्ण्यादिकं कार्यं विनैव निमित्तकारणेन स्वत एव दृश्यते तथा कार्यमात्रं शरीरादिकं विनैव निमित्तकारणेन जायते इतिसूत्रार्थः, अत्र निमित्तकारणमात्रस्यादृष्टादिलक्षणस्य प्रतिषेधो विज्ञेयः । कण्टकादीनामचेतनानामदृष्टादिलक्षणं तैक्ष्ण्यादिनिमितं न संभवति– अभावादेवेत्याशयः । व्याचष्टे– अनिमित्तेति । हेतुमाह– कण्टकेति, उक्तं व्याचष्टे– कण्टकस्येति, ग्राव्णाम्= पाषाणानाम्, उपादानम्= उपादानकारणं निर्निमित्तम्=

## अनिमित्तनिमित्तत्वाद् नाऽनिमित्ततः ॥ २३ ॥

" अनिमित्ततो भावोत्पत्तिः " इत्युच्यते. यतश्चोत्पद्यते तन्निमित्तम्, अनिमित्तस्य निमित्तत्वाद् नाऽनिमित्ता भावोत्पत्तिरिति ॥ २३ ॥

## निमित्ताऽनिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

अन्यद्धि निमित्तम् अन्यच्च निमित्तप्रत्याख्यानं. न च प्रत्याख्यानमेव प्रत्याख्येयं यथा- ' अनुदकः कमण्डलुः ' इति नोदकप्रतिषेध उदकं भवतीति ॥ स खल्वयं वादः ' अकर्मनिमित्तः शरीरादिसर्गः ' इत्येतस्मान्न भिद्यते अभेदात् तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

अन्ये तु मन्यन्ते—

## सर्वमनित्यम्- उत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम ?, यस्य कदाचिद् भावस्तदनित्यम्= उत्पत्तिधर्मकमनुत्पन्नं नास्ति.

---

निमित्तकारणरहितमेव दृष्टमिति शरीरसर्गोऽपि तथा= निर्निमित्त एव, ईश्वरादिकं चोक्तं निमित्तकारणमेव स्यात् निमित्तकारणस्य च प्रतिषेधे कृते ईश्वरादीनामकारणत्वं सिद्धमित्यर्थः ॥ २२ ॥

उक्तं प्रत्याचष्टे- अनिमित्तेति, अनिमित्ततः= निमित्तकारणं विना कार्योत्पत्तिर्न संभवति- त्वदुक्तस्याऽनिमित्तस्याऽपि निमित्तत्वसंभवात्- अनिमित्ततस्त्वया कार्योत्पत्तेरुक्तत्वादिति सूत्रार्थः । व्याचक्षाणः पूर्वपक्षमनुवदति- अनिमित्तत इति । निमित्तलक्षणमाह- यत इति । स्ववक्तव्यमाह- अनिमित्तस्येति, भावोत्पत्तिरनिमित्ता न संभवति- अनिमित्तस्यैव निमित्तत्वसंभवादित्यन्वयः, स्पष्टमन्यत् ॥ २३ ॥

उक्तं पूर्वपक्षी प्रत्याचष्टे- निमित्तेति, निमित्तानिमित्तयोरर्थान्तरभावात्= परस्परं भेदादनिमित्तस्य निमित्तत्वं नोपपद्यते इति पूर्वसूत्रोक्तः प्रतिषेधोऽनुपपन्न इति कार्योत्पत्तिरनिमित्तेति सिद्धं तेनेश्वरादीनां कारणत्वं न संभवतीति सूत्रार्थः । व्याचष्टे- अन्यदिति, निमित्तप्रत्याख्यानम्= अनिमित्तम्= निमित्ताभावः । स्ववक्तव्यमाह- न चेति, प्रकृते प्रत्याख्यानम्= निमित्तप्रत्याख्यानम्= निमित्ताभावः प्रत्याख्येयम्= निमित्तं न भवितुमर्हति- परस्परं विरोधादित्यर्थः, " अनिमित्ततः " इति हि निमित्तप्रत्याख्यानमेव तदेव कथं निमित्तं स्यात्- निषेधनिषेध्ययोरभेदासंभवादित्यन्वयः । उदाहरति- यथेति, यथोदकप्रतिषेध उदकं न संभवति तथा निमित्तप्रतिषेधरूपमऽनिमित्तमपि निमित्तं न संभवति अन्योथोदकप्रतिषेधेनाप्युदककार्यं स्यादित्यर्थः ॥ एतत्पूर्वपक्षसूत्रस्य सूत्रकारेण प्रत्याख्यानं न कृतं तस्य कारणमाह- स खल्विति, अत्र- " कस्मात् पुनः पूर्वपक्षः स्वयं सूत्रकारेण न निराकृत इत्यत आह भाष्यकारः स खल्वयम् " इति तात्पर्यटीका । अयं वादः= एतत्सूत्रोक्तार्थः, तृतीयाध्यायद्वितीयाह्निके " भूतेभ्यः ६३ " इतिसूत्रे " अकर्मनिमित्तः शरीरादिसर्गः " इति यदुक्तं तस्मान्न भिद्यते- समानार्थत्वात् अभेदाच्च तत्प्रतिषेधेनैवायं वादः प्रतिषिद्धो वेदितव्यस्तस्य च प्रतिषेधस्तत्रैव द्रष्टव्य इत्यन्वयः, स्पष्टमन्यत् । अहं तु मन्ये एतत्पूर्वपक्षप्रत्याख्यानपरं सूत्रं भाष्यकारादपि पूर्वमेव विनष्टं स्यादिति ॥२४॥

॥ इत्यनिमित्तकवादप्रत्याख्यानं समाप्तम् ॥

---

सर्वानित्यत्ववादमुपक्रमते- अन्ये इति । सर्वमिति, स्पष्टार्थं सूत्रम् । अनित्यस्वरूपं जिज्ञासते- किमिति । उत्तरमाह- यस्येति । उक्तं विशदयति- उत्पत्तिधर्मकमिति, उत्पत्तिधर्मकम् अनुत्पन्नम्= उत्पत्तेः पूर्वं नास्तीति उत्पत्त्यनन्तरभाविकालमात्रभावित्वेन कादाचित्कत्वं प्राप्तं तेनानित्यत्वं सिद्धम्,

विनाशधर्मकं चाऽविनष्टं नास्ति । किं पुनः ?, सर्वं भौतिकं च शरीरादि अभौतिकं च बुद्ध्यादि तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते तस्मात्तत्सर्वमनित्यमिति ॥ २५ ॥

## न- अनित्यतानित्यत्वात् ॥ २६ ॥

यदि तावत् सर्वस्याऽनित्यता नित्या ? तन्नित्यत्वाद् न सर्वमनित्यम् । अथाऽनित्या ? तस्यामऽविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

## तदनित्यत्वम् अग्नेर्दाह्यं विनाश्याऽनुविनाशवत् ॥ २७ ॥

तस्या अनित्यताया अप्यनित्यत्वम् । कथम् ?, यथाऽग्निर्दाह्यं विनाश्याऽनुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

## नित्यस्याऽप्रत्याख्यानम्- यथोपलब्धि व्यवस्थानात् ॥ २८ ॥

अयं खलु वादो नित्यं प्रत्याचष्टे नित्यस्य च प्रत्याख्यानमनुपपन्नम् । कस्मात् ?, यथोपलब्धि व्यवस्थानात्= यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यम्, यस्य नोपलभ्यते तद् विपरीतम्, न च परमसूक्ष्माणां भूतानामाऽऽकाशकालदिगात्ममनसां तद्गुणानां च केषांचित् सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते तस्माद् नित्यान्येतानीति ॥ २८ ॥

---

विनाशधर्मकं चाविनष्टं नास्ति= विनश्यत्येवेति विनाशानन्तरमसत्त्वात् कादाचित्कत्वं प्राप्तं तेनानित्यत्वं सिद्धम्, उत्पत्तिविनाशरहितं च किमपि न दृश्यते इति सर्वस्यानित्यत्वं सिद्धमित्यर्थः । पूर्वपक्षिणो वक्तव्यं जिज्ञासते- किमिति । पूर्वपक्षी स्वमतमाह- सर्वमिति, तदुभयम्= भौतिकं चाभौतिकं च सर्वम् । उपसंहरति- तस्मादिति, तत्सर्वम्= भौतिकं चाभौतिकं च सर्वम् ॥ २५ ॥

उक्तं निराकरोति- नेति, सर्वस्यानित्यत्वं न संभवति- त्वदुक्तायाः सर्वानित्यताया नित्यत्वसंभवात् अन्यथा अनित्यताया अनित्यत्वे तद्विनाशेन सर्वस्य नित्यत्वमेव स्यादिति सूत्रार्थः । व्याचष्टे- यदीति, तन्नित्यत्वात्= अनित्यताया नित्यत्वात् । द्वितीयपक्षमाह- अथेति, तस्याम्= अनित्यतायाम् अनित्यत्वेनाविद्यमानायां सर्वमेव नित्यं स्यादित्यन्वयः । स्पष्टं सर्वम् ॥ २६ ॥

उक्तं पूर्वपक्षी समाधत्ते- तदिति, तत्= तस्याः= अनित्यताया अनित्यत्वमेव, यथा दाह्यं काष्ठादिकं विनाश्य= दग्ध्वा अनु= पश्चादग्नेरपि विनाशो भवत्येव अथापि दग्धस्य न पुनः सत्त्वापत्तिः तथैवानित्यतापि सर्वं विनाश्य स्वयमपि विनश्यतीति न कस्यापि नित्यत्वापत्तिरिति सूत्रार्थः । व्याचष्टे- तस्या इति । अनित्यताया अनित्यत्वप्रकारं जिज्ञासते- कथमिति । उत्तरमाह- यथेति । प्रकृतमाह- एवमिति । स्पष्टार्थं सर्वम् ॥ वस्तुतस्तु नास्तिकपूर्वपक्षाणामास्तिकैः प्रत्याख्यानं वास्तवं नोपजायते इत्यनुसंधेयम् ॥ २७ ॥

उक्तं सिद्धान्ती प्रत्याचष्टे- नित्यस्येति, नित्यस्य= नित्यत्वस्य प्रत्याख्यानं न संभवति- यथोपलब्धि= उपलब्ध्यनुसारेण व्यवस्थापनात्= नित्यत्वानित्यत्वयोर्व्यवस्थायाः संभवात् यथा यस्योत्पत्तिविनाशावुपलभ्येते तदनित्यं यथा घटादि यस्य नोपलभ्येते तन्नित्यं यथात्मादीति नित्यपदार्थस्य प्रत्याख्यानं न संभवति- प्रमाणसिद्धत्वादिति सूत्रार्थः । व्याचष्टे- अयमिति, अयं वादः= पूर्वोक्तो वादः, अत्र वादीति वक्तव्यमासीत् । स्ववक्तव्यमाह- नित्यस्येति । उक्ते हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- यथेति । उक्तं व्याचष्टे- यस्येति, विपरीतम्= नित्यम् । प्रमाणत उपलभ्यते इत्यन्वयः ।

अयमन्य एकान्तः—

सर्वं नित्यम्- पञ्चभूतनित्यत्वात् ॥ २९ ॥

भूतमात्रम् इदं सर्वं. तानि च नित्यानि- भूतोच्छेदानुपपत्तेरिति ॥ २९ ॥

न- उत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

उत्पत्तिकारणं चोपलभ्यते विनाशकारणं च तत् सर्वनित्यत्वे व्याहन्यते इति ॥ ३१ ॥

तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

यस्योत्पत्तिविनाशकारणमुपलभ्यते इति मन्यसे न तद् भूतलक्षणहीनमर्थान्तरं गृह्यते. भूतलक्षणावरोधाद् भूतमात्रमिदम् इत्यऽयुक्तोयं प्रतिषेध इति ॥ ३१ ॥

न- उत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

---

नित्यपदार्थानाह- न चेति, परमसूक्ष्मभूतानाम्= परमाणूनां आकाशादीनां सामान्यादीनां चोत्पत्तिविनाशधर्मकत्वाभावान्नित्यत्वं सिद्धमित्यर्थः । एतेषां च गुणाः सर्वे न नित्याः किं तु केचिदेवेदयुक्तम्- केषांचिदिति, यथा नित्यानां परिमाणलक्षणो गुणो नित्यः पृथक्त्वं च नित्यमेवमन्यदपि विज्ञेयम् ॥ २८ ॥

॥ इति सर्वानित्यत्वप्रत्याख्यानं समाप्तम् ॥

---

सर्वनित्यत्वमतमुपक्रमते- अयमिति, एकान्तः= पूर्वपक्षिनियमः= पूर्वपक्षिमतमितियावत् । सर्वस्य नित्यत्वस्वीकारादेकान्तत्वम्= एकरूपत्वमित्यक्षरार्थः । सर्वमिति, पञ्चानां भूतानां नित्यत्वात् तद्विकारात्मकमपि सर्वं नित्यमेवेति सूत्रार्थः । व्याचष्टे- भूतमात्रमिति, इदम्= गोघटादिकम् , तानि= भूतानि । भूतनित्यत्वे हेतुमाह- भूतोच्छेदेति, उच्छेदः= विनाशः । तस्मात्सर्वं नित्यम् , स्पष्टं सर्वम् ॥ २९ ॥

उक्तं निराकरोति- नेति, सर्वनित्यत्वं न संभवति- गोघटादीनां बहूनां पदार्थानामुत्पत्तिविनाशकारणोपलब्ध्या उत्पत्तिविनाशयोः प्रामाणिकत्वादिति सूत्रार्थः । व्याचष्टे- उत्पत्तीति, तत्= उपलभ्यमानमुत्पत्तिकारणं विनाशकारणं च, व्याहन्यते= विरुध्यते, यदि सर्वं नित्यं स्यात्तदा कस्याप्युत्पत्तिकारणं विनाशकारणं च नोपलभ्येत उपलभ्यते तु तस्मान्न सर्वं नित्यमित्यन्वयः ॥ ३० ॥

उक्तं पूर्वपक्षी पराकरोति- तदिति, सर्वस्य तल्लक्षणावरोधात्= भूतलक्षणाक्रान्तत्वात् भूतानां च नित्यत्वाद् नित्यत्वं प्राप्तमिति सर्वनित्यत्वस्य प्रतिषेधो नोपपद्यते, भूतलक्षणं च विशेषगुणवत्त्वं तच गोघटादिष्वपि सर्वेष्वस्त्येव, भूतानां च पृथिव्यादीनामुत्पत्तिविनाशयोरदर्शनादेव नित्यत्वं तदभेदात् सर्वस्य नित्यत्वमिति सूत्रार्थः । व्याचष्टे- यस्येति, यस्य त्वयोत्पत्तिविनाशौ गृह्येते तदपि भूतलक्षणहीनम् अर्थान्तरम्= भूतातिरिक्तं न गृह्यते किं तु भूतमेव तथा च सर्वं गोघटादिकं भूतलक्षणयुक्तत्वाद् भूतमेव भूतानि च नित्यानीति तदभेदात् सर्वं नित्यमेवेति सिद्धं तथा चाऽयं प्रतिषेधः= पूर्वोक्तः सर्वनित्यत्वप्रतिषेधो न युक्त उत्पत्तिविनाशकारणज्ञानं च भ्रम इत्यन्वयः, सर्वं स्पष्टार्थम् । वस्तुतस्तु घटादीनामाकृतेरेव विनाशो दृश्यते न द्रव्यस्येति पूर्वपक्ष्याशयः स्यादिति संभावयामि ॥ ३१ ॥

उक्तं सिद्धान्ती निराकरोति- नेति, सर्वनित्यत्वं न संभवति- गोघटादीनामुत्पत्तेरुत्पत्तिकारणस्य चोपलब्धेः= प्रत्यक्षत्वात् यच्चोत्पद्यते विनश्यति च न तन्नित्यं भवतीति न सर्वनित्यत्वं संभवतीति सूत्रार्थः । अत्र- "भूतसाम्यं गोघटादीनां भूतकार्यत्वेष्युपपद्यमानं न भूतात्मकत्वमवगमयतीत्याशयवानाह- नोत्पत्तितत्कारणोपलब्धेरिति । अपि च यद्युत्पत्तिविनाशौ न भावानां वस्तुसन्तौ कथं प्रेक्षावतामभिमतोत्पत्तिकारणेऽभिमतविनाशकारणे च तदर्थिनां प्रवृत्तिः ?" इति तात्पर्यटीका ।

कारणसमानगुणस्योत्पत्तिः कारणं चोपलभ्यते न चैतदुभयं नित्यविषयम्, न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम्— न चाऽविषया काचिदुपलब्धिः, उपलब्धिसामर्थ्यात् कारणेन समानगुणं कार्यमुत्पद्यते इत्यनुमीयते स खलूपलब्धेर्विषय इति, एवं च तल्लक्षणावरोधोपपत्तिरिति । उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति । प्रसिद्धश्चावयवी तद्धर्मा= उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति । शब्दकर्मबुद्ध्यादीनां चाऽव्याप्तिः= पञ्चभूतनित्यत्वात् तल्लक्षणावरोधाच्चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्तास्तस्मादनेकान्तः ॥

स्वप्नविषयाभिमानवद् मिथ्योपलब्धिरितिचेत् ? भूतोपलब्धौ तुल्यम् ॥

यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति, एवं च एतद् भूतोपलब्धौ तुल्यम्= पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते ॥

व्याचष्टे— कारणेति, कारणसमानगुणस्य= कारणगुणसमानगुणविशिष्टस्य कार्यस्य गोघटादेरुत्पत्तिः कारणं च मृदादिकमुपलभ्यते एतदुभयम्= उत्पत्तिज्ञानं कारणज्ञानं च नित्यविषयकं न संभवतीति न सर्वनित्यत्वं संभवतीत्यन्वयः । ननूत्पत्तितत्कारणोपलब्धिर्भ्रान्तिरेव किं वा नास्त्येवेत्याशङ्कयाह— न चेति । भ्रान्तित्वपक्षे दोषमाह— न चेति, उत्पत्तितत्कारणोपलब्धेर्विषय उत्पत्तिस्तत्कारणं च न च तदुपलब्धेर्बाधो दृश्यते येन भ्रान्तित्वं स्याद् इति प्रामाणिकत्वं सिद्धं तेनानित्यत्वं घटादीनां सिद्धमित्याह— उपलब्धिसामर्थ्यादिति, सः= उत्पद्यमानो गोघटादिपदार्थः । उपसंहरति— एवमिति, एवम्= भूतकार्यत्वान् भूतलक्षणाक्रान्तत्वमुपपद्यते यथा मृत्कार्यत्वाद् घटस्य मृल्लक्षणाक्रान्तत्वम्, न च भूतलक्षणाक्रान्तत्वान्नित्यत्वं संभवति— उत्पत्तिविनाशयोः प्रत्यक्षत्वादित्यर्थः । उत्पत्तिविनाशयोरुपपत्त्यन्तरमाह— उत्पत्तीति, उत्पत्तिविनाशकारणप्रयुक्तस्य= उत्पत्तिविनाशकारणज्ञानप्रयुक्तस्य तज्ज्ञातुरुत्पत्तिविनाशविषयकः प्रयत्नो दृश्यते तत्फलभूतावुत्पत्तिविनाशावपि दृश्येते तत्सर्वं सर्वनित्यत्वे बाध्यते न चैतद् युक्तमिति न सर्वनित्यत्वं संभवतीत्यर्थः । अनित्यत्वे प्रत्यक्षं प्रमाणयति— प्रसिद्ध इति, एतद् व्याचष्टे— उत्पत्तीति, अवयवी= कार्यम्, सिद्धः= प्रत्यक्षसिद्ध इति नानित्यस्य प्रत्याख्यानं संभवतीत्यर्थः । हेतुदोषमाह— शब्देति, शब्दकर्मबुद्ध्यादीनाम्= शब्दकर्मबुद्ध्यादिषु भूतलक्षणावरोधात्इति= भूतलक्षणाक्रान्तत्वं हेतुर्नास्तीति हेतोरव्याप्तिः= स्वरूपासिद्धिस्तया शब्दादीनां नित्यत्वाभावः प्राप्त इत्यर्थः, एतद् व्याचष्टे— पञ्चेति, इत्यनेन नित्यत्वसाधकेन हेतुना शब्दादयो न व्याप्ताः= नाक्रान्ता इति हेतुरयमनेकान्तः= अव्यापकः= क्वचिद् गोघटादिषु वर्तते क्वचित् शब्दादिषु च न वर्तते इत्यनेकान्तस्तस्मादनेन दुष्टेन हेतुना सर्वस्य नित्यत्वं न सिध्यतीत्यर्थः । अत्र— " अपि चाव्यापको हेतुरित्याह— शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः ( इति ) अव्यापकश्चानेकान्त उक्तः, पक्षो हि सर्वं नित्यमिति तस्मिन् सत्त्वासत्त्वाभ्यामऽनेकान्तः= नैकः सत्त्वासत्त्वलक्षणोऽन्तोऽस्येत्यनेकान्तः " इति तात्पर्यटीका ॥

ननु यथा स्वप्ने विनैव पदार्थं स्वप्नविषयस्य= स्वाप्नपदार्थस्याभिमानः= मिथ्याज्ञानं भवति तथोत्पत्तिविनाशकारणस्यापि मिथ्योपलब्धिः= भ्रान्तिरेव संभवतीति न तया कस्याप्यनित्यत्वमुपपद्यते इत्याशङ्कते— स्वप्नेति । उत्तरमाह— भूतेति, एवं हि भूतोपलब्धिरपि मिथ्या स्यात्तथा च भूतानां मिथ्यात्वमेव स्यान्न तु नित्यत्वमित्यर्थः, एवं हि भूतोपलब्धौ तुल्यं मिथ्यात्वं प्रसज्येतेत्यन्वयः । व्याचष्टे— यथेति, विषयाणामभिमानः= मिथ्याज्ञानम् । प्रकृतमाह— एवमिति । उत्तरमाह— एवं चेति, एतत्= मिथ्यात्वम् । उक्तं व्याचष्टे— पृथिव्यादीनि, प्रसज्यते= मिथ्या स्यात्, तेन च भूतानां मिथ्यात्वमेव स्यान्न तु नित्यत्वमित्यर्थः ॥

पृथिव्याद्यभावे सर्वव्यवहारविलोप इतिचेत् ? तदितरत्र समानम् ॥

उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति. सोयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः ' स्वप्नविषयाभिमानवत् ' इत्यहेतुरिति ॥ ३२ ॥

अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमुपजायते स खलूत्पत्तिविनाशयोर्विषयः, यच्चोपजायते तत् प्रागप्युपजननादस्ति यच्च निवर्तते तद् निवृत्तमप्यस्तीति एवं च सर्वस्य नित्यत्वमिति—

न- व्यवस्थानुपपत्तेः ॥ ३३ ॥

अयमुपजन इयं निवृत्तिरिति व्यवस्था नोपपद्यते- उपजातनिवृत्तयोर्विद्यमानत्वात्, अयं धर्म उपजातोऽयं निवृत्त इति सद्भावाऽविशेषादव्यवस्था, इदानीमुपजननिवृत्ती नेदानीमिति कालव्यवस्था नोपपद्यते- सर्वदा विद्यमानत्वात्, अस्य धर्मस्योपजननिवृत्ती नास्येति व्यवस्थानुपपत्तिः- उभयोरविशेषात्, अनागतोऽतीत इति च कालव्यवस्थानुपपत्तिः- वर्त-

---

ननु पृथिव्यादीनामभावे= मिथ्यात्वे सर्वव्यवहारविलोपः स्यादिति न भूतज्ञानं मिथ्या स्वीकार्यम् उत्पत्तिविनाशकारणज्ञानस्य तु मिथ्यात्वेपि न काचित् क्षतिरस्तीति तस्य मिथ्यात्वं स्वीकार्यमित्याशङ्कते- पृथिव्याद्यभावे इति । उत्तरमाह- तदिति, तत्= सर्वव्यवहारविलोपः इतरत्र= उत्पत्तिविनाशकारणाभावेपि समानम्= तुल्य एव- सर्वनित्यत्वे कस्याप्युत्पादविनाशार्थ व्यवहारो न स्यादित्यर्थः । स्वयं व्याचष्टे- उत्पत्तीति, उत्पत्तिविनाशकारणोपलब्धिविषयस्य= उत्पत्तिविनाशकारणस्य, अभावे= मिथ्यात्वे, तदेतत् उत्तरपक्षमात्रस्य व्याख्यानम् । उपसंहरति- सोयमिति, " स्वप्नविषयाभिमानवत् " इत्ययमुक्तो हेतुः अहेतुः= सर्वनित्यत्वसाधको न संभवति- नित्यानामतीन्द्रियत्वाद् उत्पत्तिविनाशयोरविषयत्वाच्चोत्पत्तिविनशयोर्विषयभूतमनित्यं प्रत्यक्षयोग्यं स्वीकार्यमेवेत्यर्थः । अत्र- " उत्पत्तिविनाशाभिमान इति च ब्रुवता उत्पत्तिविनाशयोर्विषयो वक्तव्यः न च सर्वनित्यवादिनामुत्पत्तिविनाशयोर्विषयोस्ति " इति वार्तिकम् ॥ ३२ ॥

प्रकारान्तरेण सर्वनित्यत्वमुपपादयति- अवस्थितेति, अवस्थितस्य= नित्यस्य, उपादानस्य= उपादानकारणस्य मृदादेः, धर्ममात्रम्= आकृतिमात्रम् । सः= धर्मः । एवमपि सर्वस्य नित्यत्वं न प्राप्तमित्याशङ्क्याह- यच्चेति, यत्= धर्ममात्रम् । उपसंहरति- एवमिति । अत्र- "तदेवं सांख्यानां मतमपास्य स्वायंभुवानां मतं दूषयति" इति तात्पर्यटीका सा चैषा चिन्तनीयैव सांख्यैर्वा यौगिकैर्वा सर्वनित्यत्वस्याऽप्रतिपादितत्वात् । किं वा सांख्ययोगाभ्यां सद्वादस्वीकारादत्र नित्यत्वशब्दः सद्वादपरो विज्ञेयः ।

उक्तं सूत्रकारो निराकरोति- नेति, सर्वनित्यत्वं न संभवति- सर्वनित्यत्वे उत्पादविनाशव्यवस्थाया अनुपपत्तेः, किं वा उत्पत्तिविनाशकारणज्ञानस्य भ्रमत्वं न संभवति- अबाधितस्याप्युत्पत्तिविनाशकारणज्ञानस्य भ्रमत्वे भ्रमप्रमाव्यवस्थाया अनुपपत्तेरिति सूत्रार्थः । व्याचष्टे- अयमिति, सर्वनित्यत्वेऽयमुपजनः= उत्पत्तिः, इयं निवृत्तिः= विनाश इति प्रत्यक्षसिद्धा व्यवस्था नोपपद्यते । उक्ते हेतुमाह- उपजातेति, उपजातनिवृत्तयोः= उत्पन्नविनष्टयोस्त्वदुक्तरीत्या विद्यमानत्वादेवोत्पत्तिविनाशसिद्धिः कथं स्यादित्यर्थः । उत्पादविनाशयोरव्यवस्थां सद्भावादाह- अयं धर्म इति, अयं धर्म उत्पन्नोऽयं च विनष्ट इति व्यवस्था न संभवति- उभयोरपि सद्भावाविशेषादित्यन्वयः । कालाव्यवस्थामाह- इदानीमिति, एषा कालव्यवस्थापि नोपपद्यते- पदार्थमात्रस्य नित्यत्वे सदा सद्भावादित्यर्थः । पुनरपि उत्पत्तिविनाशयोः स्वरूपाऽव्यवस्थामाह- अस्येति, उभयोः= उक्तधर्मयोः, अविशेषात्= विद्यमानत्वादेव । पुनः कालाव्यवस्थामाह- अनागत इति, हेतुमाह- वर्तमानस्येति, वर्तमानस्य सद्भावलक्षणत्वात्= सद्रूपत्वात् , सर्वनित्यत्वे च सर्वं सदेव सत्त्वेन

मानस्य सद्भावलक्षणत्वात् । अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महानं निवृत्तिः इत्येतस्मिन् सति नैते दोषाः, तस्माद् यदुक्तम्– ' प्रागप्युपजननादस्ति निवृत्तं चास्ति ' ( इति ) तदयुक्तमिति ॥ ३३ ॥

अयमन्य एकान्तः—

## सर्वं पृथक्– भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं नाना= न कश्चिदेको भावो विद्यते, कस्मात् ?, भावलक्षणपृथक्त्वात्= भावस्य लक्षणम्= अभिधानम्= येन लक्ष्यते भावः स समाख्याशब्दः तस्य पृथग्विषयत्वात्= सर्वो भावसमाख्याशब्दः समूहवाची, ' कुम्भः ' इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्व-ग्रीवादिसमूहे च वर्तते, निदर्शनमात्रं चेदमिति ॥ ३४ ॥

## न– अनेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

' अनेकविधलक्षणैः ' इति मध्यमपदलोपी समासः, गन्धादिभिश्च गुणैर्बुध्नादिभिश्चा-वयवैः संबद्ध एको भावो निष्पद्यते । गुणव्यतिरिक्तं च द्रव्यम् अवयवातिरिक्तश्चाऽवयवीति, विभक्तन्यायं चैतदुभयमिति ॥ ३५ ॥

---

च वर्तमानत्वं प्राप्तं वर्तमानत्वे चातीतत्वमनागतत्वं च नोपपद्यते इति कालाव्यवस्थेत्यर्थः । स्वपक्षे उक्त-दोषाणामभावमाह– अविद्यमानस्येति, तदेतदुत्पादविनाशयोर्लक्षणमुक्तम्, आत्मलाभः= स्वरूपलाभः, उपजनः= उत्पत्तिः, निवृत्तिः= विनाशः, इत्येतस्मिन् सति= इत्येवमुत्पत्तिविनाशयोः स्वीकारे कृते सति पूर्वोक्ता दोषा न संभवन्तीत्यऽनित्यमपि स्वीकार्यमित्यर्थः । उपसंहरति– तस्मादिति, तस्मात्= सर्व-नित्यत्वे दोषसद्भावात् " प्रागप्युपजननादस्ति " इत्यादिना यत् सर्वनित्यत्वमुक्तं तन्न युक्तमित्यन्वयः, स्पष्टमन्यत् ॥ ३३ ॥

॥ इति सर्वनित्यत्वनिराकरणं समाप्तम् ॥

---

अग्रिमप्रकरणमवतारयति– अयमिति, एकान्तः= नियतरूपः सिद्धान्तः, बौद्धस्येतिशेषः । सर्व-मिति– सर्वं घटपटादिकं पृथक्= नाना= अवयवसमुदायरूप एव न त्वेकोऽवयवी– भावलक्षणानाम्= पदार्थावयवानां परस्परं पृथक्त्वात्= नानात्वात्, अवयवसमुदायस्यैव घटादिपदार्थत्वादिति सूत्रार्थः । व्याचष्टे– सर्वमिति । एतदपि व्याचष्टे– नेति, अवयवसमुदाय एव घटादिशब्दवाच्योऽस्ति न त्वेकोऽव-यवीत्यर्थः । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– भावेति । हेतुवाक्यं व्याचष्टे– भावस्येति । लक्षणपदार्थमाह– अभिधानमिति । लक्षणशब्दव्युत्पत्तिमाह– येनेति । पर्यवसितमाह– समाख्येति, अत्र लक्षणशब्देन समाख्याशब्दः= घटादिवाचको घटादिशब्दो ग्राह्य इत्यर्थः । पृथग्विषयत्वं च अव-यवसमुदायवाचकत्वं तदाह– सर्व इति । उदाहरति– कुम्भ इति, वर्तते= गन्धाद्यवयववृन्दवाचक इत्यर्थः, एवं पटादिशब्दानामप्यवयववृन्दवाचकत्वं विज्ञेयमित्याह– निदर्शनमात्रमिति ॥ ३४ ॥

उक्तमतं निराकरोति– नेति, एकस्याऽवयविनो नाऽभावः संभवति– अनेकलक्षणैः= अनेकैरवयवैरे-कस्य भावस्य= पदार्थस्य घटादेर्निष्पत्तेः= उत्पत्तिसंभवादिति सूत्रार्थः । अयं विषयो द्वितीयाध्यायप्रथमा-ह्निकेपि प्रतिपादितः । व्याचष्टे– अनेकेति, अनेकविधलक्षणैरित्यनेकलक्षणैरिति 'शाकपार्थिवः' इतिवत् मध्यमपदलोपी समासः । अनेकलक्षणान्याह– गन्धादिभिरिति । अवयवैः संबद्धः= अनेकावयवसमवेतः, भावः= घटादिपदार्थः । निष्पद्यते= उत्पद्यते । गन्धादिभ्यो घटादिद्रव्यस्य भेदमाह– गुणेति, द्रव्यं गुणाद्-व्यतिरिक्तं गुणादीनामाश्रयत्वादित्यर्थः । अवयविनोऽवयवातिरिक्तत्वमाह– अवयवेति, अवयवावयविनोश्च

अथापि—

## लक्षणव्यवस्थानादेवाऽप्रतिषेधः ॥ ३६ ॥

' न कश्चिदेको भावः ' इत्ययुक्तः प्रतिषेधः, कस्मात् ?. लक्षणव्यवस्थानादेव= यदिह लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मिन् व्यवस्थितम्— ' यं कुम्भमद्राक्षं तं स्पृशामि ' ' यमेवाऽस्प्राक्षं तं पश्यामि ' इति. नाऽणुसमूहो गृह्यते इति. अणुसमूहे चागृह्यमाणे यद् गृह्यते तदेकमेवेति ॥

## अथाप्येतदनूक्तम्— नास्त्येको भावो यस्मात्समुदायः ।

एकानुपपत्तेर्नास्त्येव समूहः । नास्त्येको भावो यस्मात् समूहे भावशब्दप्रयोगः, एकस्य चानुपपत्तेः समूहो नोपपद्यते— एकसमुच्चयो हि समूह इति, व्याहतत्वादनुपपन्नम्— ' नास्त्येको भावः ' इति । यस्य प्रतिषेधः प्रतिज्ञायते— ' समूहे भावशब्दप्रयोगात् ' इति हेतुं ब्रुवता स

---

भेदः पृथक्कार्यकरत्वात् स्पष्ट एवेत्येकोऽवयवी सिद्ध इत्यर्थः । गुणगुणिलक्षणमवयवावयविलक्षणं चोभयं विभक्तन्यायम्= भिन्नलक्षणकं यथा गुणाश्रयत्वं गुणित्वम् अवयवसमवेतत्वमवयवित्वम्. तथा च नावयविनोऽवयवरूपत्वमुपपद्यते— लक्षणभेदादित्याह— विभक्तन्यायमिति, किं वा गुणव्यतिरिक्तो गुणीति न गुणगुणिनोरभेदः संभवति. अवयवव्यतिरिक्तश्चावयवीति नावयवाऽवयविनोरभेदः संभवतीत्यर्थस्तथा च वार्तिकम्— "गुणव्यतिरिक्तो गुणीति अवयवव्यतिरिक्तश्चावयवीति विभक्तन्यायमेतत्" इति॥३५॥

अग्रिमसूत्रमवतारयति— अथापीति, किं चेत्यर्थः । एकस्यावयविनः सद्भावे हेत्वन्तरमाह— लक्षणेति, लक्षणानाम्= वाचकशब्दानां किं वाऽवयवानां व्यवस्थायाः सत्त्वादपि एकस्याऽवयविनः प्रतिषेधो नोपपद्यते तथा हि ' घटः ' इत्येकवचनान्तः शब्दः एकस्यावयविनो वाचक इति प्रसिद्धमेव अन्यथैकवचनान्तत्वं नोपपद्येत. घटादीनां कपालादिलक्षणा अवयवा अपि व्यवस्थिताः सन्ति अन्यथैकस्याभावे यदि सर्वं नानैव तदाऽवयवानामेव नानात्वात् किं निरूपितमवयवत्वं स्यात् यतोऽवयविनिरूपितमेवावयवत्वं संभवति अवयवत्वासंभवे च नानात्वमपि न स्यादिति लक्षणव्यवस्थानादप्येकोऽवयवी सिद्ध इति सूत्रार्थः । व्याचष्टे— नेति, एतत्पूर्वपक्षानुवादः । परिहरति— इत्ययुक्त इति । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— लक्षणेति । हेतुवाक्यं व्याचष्टे— यदिहेति, घटादिपदं एकस्मिन् व्यवस्थितम्= एकव्यक्तेर्वाचकमित्येको भावः सिद्ध इत्यर्थः । उदाहरति— यमिति, यमित्यादिशब्दानामेकवचनान्तत्वात् तद्वाच्यस्यैकत्वं सिद्धमित्यर्थः । पूर्वपक्षिमते बाधकमाह— नेति, यदा ह्ययोग्यत्वादणुसमूहो न गृह्यते तदैको भावो गृह्यते इति सिद्धम् अन्यथा ज्ञानं निर्विषयमेव स्यादित्यर्थः ॥

बौद्धोक्तवाक्यमनुवदितुमाह— अथेति । तद्वाक्यमाह— नास्तीति, यस्मादवयवसमुदाय एव तस्मादेको भावो नास्तीति एतदप्यनूक्तम्= त्वयोक्तमित्यर्थः । अत्र— "अपि च भावलक्षणपृथक्त्वादिति हेतुमुक्त्वा बौद्धेन पश्चादेतदुक्तं किं तदुक्तमित्याह— नास्त्येको भावो यस्मात्समुदाय इति, एतदनूक्तं दूषयति— एकानुपपत्तेर्नास्त्येव समूहः " इति तात्पर्यटीका । उक्तं व्याचक्षाणः प्रथमं पूर्वपक्षिमतं दूषयति— एकेति, एकाभावे समूहः= अनेकोपि न संभवति— एकसमूहस्यैवानेकत्वादित्यर्थः । बौद्धोक्तं व्याचष्टे— नास्तीति, घटादिशब्दानामवयववृन्दवाचकत्वादेको भावो नास्तीत्यर्थः । उक्तेऽनुपपत्तिमाह— एकस्येति । अनुपपत्तेः= अभावे । अत्र हेतुमाह— एकेति । पर्यवसितमाह— व्याहतत्वादिति, 'नास्त्येको भावः' इति यदुक्तं तद् व्याहतत्वादनुपपन्नमित्यन्वयः, व्याहतिश्च एकाभावेऽनेकानुपपत्तिरेव । एकस्यार्थात् स्वीकृतत्वमाह— यस्येति, "समूहे भावशब्दप्रयोगात्" इत्येकप्रतिषेधकं हेतुं ब्रुवता यस्यैकस्य प्रतिषेधः प्रति-

एवाभ्युनुज्ञायते– एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येकं समूहिप्रतिषेधः– नास्त्येको भाव इति, सोयमुभयतो व्याघाताद् यत्किंचन वाद इति ॥३६॥

अयमपर एकान्तः—

## सर्वमभावः– भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

यावद् भावजातं तत्सर्वमऽभावः, कस्मात् ?, भावेष्वितरेतराभावसिद्धेः= ' असन् गौरश्वात्मना ' ' अनश्वो गौः ' ' असन्नऽश्वो गवात्मना ' ' अगौरश्वः ' इत्यऽसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति ॥

## प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम् ॥

अनेकस्याऽशेषता सर्वशब्दस्यार्थः भावप्रतिषेधश्चाऽभावशब्दस्यार्थः. पूर्वं सोपाख्यम् उत्तरं निरुपाख्यम्. तत्र समुपाख्यायमानं कथं निरुपाख्यमऽभावः स्यादिति= न जात्वभावो

---

ज्ञायते स एवैकोऽभ्यनुज्ञायते= स्वीक्रियते इत्यन्वयः। उक्ते हेतुमाह– एकेति, यत एकसमुच्चयः= एकत्वावच्छिन्नतत्तत्पदार्थसमुदाय एव समूहस्ततः समूहं स्वीकुर्वता एकः स्वीकृत एवेत्यर्थः। उपसंहरति– समूहे इति, "समूहे भावशब्दप्रयोगात्" इतिवाक्येन समूह आश्रितः= स्वीकृतस्ततश्च "नास्त्येको भावः" इत्यनेन प्रत्येकम्= तस्य तस्य समूहिनः= एकस्यावयविनः प्रतिषेधः क्रियते स च प्रतिषेधो व्याहत एवेत्याह– सोयमिति, उभयतो व्याघातो यथा– एकाभावे समूहोपि न संभवति यद्यस्ति समूहस्तदैकाभावो न संभवतीत्युभयतः पाशारज्जुरिति सोयमेकप्रतिषेधवादो यत्किंचन= तुच्छ एवेत्यर्थः। अत्र– "यश्चायं हेतुः– समूहे भावशब्दप्रयोगादिति. उभयतो व्याघातान्न किंचिदेतत्, कथमुभयतः (व्याघातः)? 'न कश्चिदेको भावः– समूहे भावशब्दप्रयोगात्' इतिप्रतिज्ञाहेत्वोर्व्याघातः– यस्मादेकार्थानुपपत्तौ न समूह उपपद्यते इति, समूहं चाश्रित्यैकं प्रत्याचक्षाणेन समूह एव प्रत्याख्यातो भवतीति सोयमुभयतो व्याघाताद् यत्किंचनवादः" इतिवार्तिकम् ॥ ३६ ॥

॥ इति सर्वनानात्वनिराकरणं समाप्तम् ॥

---

शून्यतावादमुपस्थापयति– अयमिति, एकान्तः= एकरूपः सिद्धान्तः। सर्वमिति– सर्वमभावः= अभावात्मकम्= शून्यमेव–भावेषु= भावानां घटपटादीनाम् इतरेतराभावसिद्धेः= अन्योन्याभावरूपत्वात् यथा–' घटः पटो न ' इत्यन्योन्याभावेन घटस्य पटाभावरूपत्वं प्रतीयते एवं सर्वत्रेति सर्वस्याभावरूपत्वं सिद्धमिति सूत्रार्थः। व्याचष्टे– यावदिति। हेतुमाह– भावेष्विति। उदाहरति– असन्निति, ' गौरश्वात्मनाऽसन्' इत्यत्र गोरसद्रूपत्वम्= अभावात्मकत्वं प्रतीयते इत्यर्थः। 'असन् गौरश्वात्मना' इत्यादिस्थलेऽसत्प्रत्ययस्य 'अनश्वो गौः' इत्यादिस्थले च प्रतिषेधस्य= प्रतिषेधबोधकस्य= अश्वाभावबोधकस्यानश्वशब्दस्य भावशब्देन= गवादिशब्देन सामानाधिकरण्यादभावात्मकत्वं गवादीनां सिद्धं यथा ' नीलो घटः ' इत्यत्र नीलप्रत्ययसामानाधिकरण्याद् घटस्य नीलत्वमित्यर्थः, स्पष्टमन्यत् ॥

उक्तशून्यतावादं भाष्यकारो निराकरोति– प्रतिज्ञेति, 'सर्वमभावः' इति प्रतिज्ञावाक्ये सर्वपदाभावपदयोः= सर्वपदार्थाभावपदार्थयोर्व्याघातः= परस्परं विरोधः– भावरूपस्यसर्वपदार्थस्य शून्यत्वासंभवात्, तथा प्रतिज्ञाहेत्वोश्च परस्परं विरोधः– हेतुघटकभावपदार्थस्वीकारे प्रतिज्ञातं सर्वाभावत्वं न संभवति. प्रतिज्ञोक्तसर्वाभावत्वस्वीकारे च हेतुघटकभावपदार्थो न संभवतीति. एतस्माद् व्याघातात् पूर्वोक्तं सर्वशून्यत्वं नोपपद्यते इत्यर्थः। स्वयं व्याचष्टे– अनेकस्येति, अनेकत्वविशिष्टानां घटादीनां यदशेषत्वम्= यावत्त्वं तदेव सर्वशब्दार्थो यथा– 'सर्वे घटाः पार्थिवाः' इत्यत्राशेषाणां घटानां पार्थिवत्वं प्रतिपाद्यते– सर्वशब्दसामानाधिकरण्यादित्यशेषत्वं सर्वपदार्थः इत्यर्थः, तदेतत् शक्तिवादस्यादर्शे

निरुपाख्योऽनेकतया= अशेषतया शक्यः प्रतिज्ञातुमिति । सर्वमेतदभाव इति चेत् ?= यदिदं सर्वमिति मन्यसे तदभाव इत्येवं चेत् ? अनिवृत्तो व्याघातः— अनेकमशेषं चेति नाऽभावप्रत्ययेन शक्यं भवितुम्. अस्ति चायं प्रत्ययः— सर्वमिति. तस्मान्नाऽभाव इति । प्रतिज्ञाहेत्वोश्च व्याघातः— 'सर्वमभावः' इति भावप्रतिषेधः प्रतिज्ञा. 'भावेष्वितरेतराभावसिद्धेः' इतिहेतुः. भावेष्वितरेतराभावमऽनुज्ञाय= आश्रित्य चेतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते. यदि सर्वमभावः ? " भावेष्वितरेतराभावसिद्धेः " इति नोपपद्यते. अथ भावेष्वितरेतराभावसिद्धिः ? सर्वमभाव इति नोपपद्यते ॥ ३७ ॥

सूत्रेण चाभिसंबन्धः—

## न- स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न सर्वमभावः, कस्मात् ? स्वेन भावेन सद्भावाद् भावानाम्= स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते ।कश्च स्वो धर्मो भावानाम् ?, द्रव्यगुणकर्मणां सदादि सामान्यम्. द्रव्याणां

---

व्याख्यातं मयेति तत्रैव विस्तरेण द्रष्टव्यम् । अभावशब्दस्यार्थमाह— भावेति । स्वाभिप्रायमाह— पूर्वमिति, पूर्वम्= सर्वशब्दार्थभूतमशेषत्वं सोपाख्यम्= निर्वक्तुं शक्यम्= सदिति यावत्, उत्तरम्= अभावपदार्थभूतं तुच्छं निरुपाख्यम्= असदेव, तयोरैक्याभावमाह— तत्रेति, तत्र एवं सति समुपाख्यायमानम्= सत्पदार्थभूतमशेषत्वं निरुपाख्यमभावपदार्थभूतं कथं स्यादित्यन्वयः, 'सर्वमभावः' इत्यनेन सदसतोरशेषतुच्छयोरभेद उच्यते स च न संभवति—परस्परं परमविरोधादित्यर्थः। उक्तमेव विशदयति— न जात्विति, निरुपाख्यलक्षणोऽभावपदार्थः= तुच्छः अशेषतया= अशेषत्वेन रूपेण प्रतिज्ञातुं न शक्यते इत्यन्वयः, तुच्छस्याशेषत्वं न संभवति— परस्परं विरोधादित्यर्थः । किं वा यथाऽशेषस्य तुच्छत्वं न संभवति तथा तुच्छस्याप्यशेषत्वं न संभवतीति वैपरीत्येनाह— न जात्विति । नन्वशेषत्वमपि तुच्छमेवेति न तयोरभेदानुपपत्तिस्तथा च न प्रतिज्ञानुपपत्तिरित्याशङ्कते— सर्वमिति । उक्तपूर्वपक्षं व्याचष्टे— यदिदमिति, यत्त्वया भावपदार्थवादिना सर्वपदार्थोऽशेषत्वं स्वीकृतं तदपि तुच्छमेवेत्यर्थः । उक्ते दोषमाह— अनिवृत्त इति, यः खलु व्याघातः प्रदर्शितः स एवमपि न निवृत्त इत्यन्वयः । व्याघातं प्रदर्शयति— अनेकमिति, अशेषमित्याकारकं ज्ञानम् अभावज्ञानं न भवितुमर्हतीत्यर्थः, अशेषत्वस्यानेकत्वस्य च भावरूपत्वादभावविषयकज्ञानविषयत्वं न संभवति अशेषज्ञानं चाभावविषयकं न संभवतीत्यर्थः, अशेषत्वाभावयोरैक्यं न संभवतीति यावत्। पूर्वपक्षिमते बाधकमाह— अस्तीति, सर्वमिति ज्ञानं चास्ति तेन तद्विषयभूतमशेषं सिद्धं तच्च भावरूपमेव न त्वभावरूपमिति न सर्वमभावात्मकं सिध्यतीत्यर्थः। द्वितीयं व्याघातमाह— प्रतिज्ञेति । प्रतिज्ञामाह— सर्वमिति । हेतुमाह— भावेष्विति । पूर्वपक्षस्वरूपमाह— भावेष्विति, भावेषु= भावानामुक्तरीत्या इतरेतराभावम्= अन्योन्याभावात्मकत्वमाश्रित्य तादृशस्येतरेतराभावस्य सिद्धौ= सिद्धया 'सर्वमभावः= अभावात्मकम्' इत्युच्यते= प्रतिज्ञायते बौद्धेनेत्यन्वयः । अत्र व्याघातदोषमाह— यदीति, यदि सर्वमभावात्मकमेव तदा भावस्याभावाद् भावपदार्थघटितः— "भावेष्वितरेतराभावसिद्धेः" इति हेतुर्नोपपद्यते, अथ= यदि च भावेष्वितरेतराभावसिद्धिर्नाम भावपदार्थघटितहेतोः सिद्धयर्थं भावपदार्थः स्वीक्रियते तदा 'सर्वमभावः' इति प्रतिज्ञा नोपपद्यते इति प्रतिज्ञाहेत्वोः परस्परं विरोध इति न सर्वशून्यतावादः सिध्यतीत्यर्थः ॥ ३७ ॥

अग्रिमसूत्रमवतारयति— सूत्रेणेति, उक्ते शून्यतावादे सूत्रेण दोष उच्यते इत्यर्थः । नेति— सर्वस्य तुच्छत्वं न संभवति— भावानाम्= पदार्थानां स्वभावसिद्धेः= स्वरूपस्य सिद्धत्वात्, यस्य चास्ति स्वरूपं न तत् तुच्छं भवितुमर्हति— निस्स्वरूपस्यैव शशविषाणादेस्तुच्छत्वसंभवादिति सूत्रार्थः । व्याचष्टे— नेति । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— स्वेनेति, भावेन= भावत्वेन= स्वरूपेण । उक्तं

क्रियावदित्येवमादिर्विशेषः. स्पर्शपर्यन्ताः पृथिव्या इति च, प्रत्येकं चाऽनन्तो भेदः, सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते, सोयमभावस्य निरुपाख्यत्वात् संप्रत्यायकोऽर्थभेदो न स्यात्. अस्ति त्वयं तस्मान्न सर्वमभाव इति ।

अथ वा—" न— स्वभावसिद्धेर्भावानाम् " इति स्वरूपसिद्धेरिति. गौरितिप्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते नाभावमात्रम्. यदि च सर्वमभावः गौरित्यभावः प्रतीयेत, गोशब्देन चाभाव उच्येत, यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावस्तस्मादयुक्तमिति ।

अथ वा— " न— स्वभावसिद्धेः " इति ' असन् गौरश्वात्मना ' इति गवात्मना कस्मान्नोच्यते ? अवचनाद् ' गवात्मना गौरस्ति ' इति स्वभावसिद्धिः, ' अनश्वोऽश्वः ' इति वा ' गौरगौः ' इति वा कस्मान्नोच्यते ? अवचनात् स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते ।

अव्यतिरेकप्रतिषेधे च भावानामऽसत्प्रत्ययसामानाधिकरण्यम् ।

---

व्याचष्टे— स्वेनेति, धर्मेण= स्वरूपेण, भवन्ति= वर्तन्ते भावा घटादिपदार्था इत्यस्माभिः प्रतिज्ञायते इत्यन्वयः । भावानां स्वरूपं जिज्ञासते— कश्चेति । धर्ममाह— द्रव्येति, द्रव्यगुणकर्मणां सत्तासामान्यं धर्मस्तेन सत्त्वं सिद्धं तेन तुच्छत्वं निवृत्तम्— सतस्तुच्छत्वासंभवात् । द्रव्याणां च क्रियावत्त्वमपि धर्म इत्याह— द्रव्याणामिति, आदिशब्दाद् गुणवत्त्वं ग्राह्यम् । पृथिवीधर्मानाह— स्पर्शेति, गन्धरसरूपस्पर्शाः पृथिव्या धर्माः । पुनश्च सामान्यस्य क्रियाणां गुणानां चावान्तरभेदा अनन्ता भवन्ति तद्वत्त्वमपि भावानामेवेत्याह— प्रत्येकमिति । सामान्यादीनां धर्मानाह— सामान्येति, विशिष्टाः= विशेषा धर्माः नित्यत्वादयः, एते धर्मास्तुच्छत्वे नोपपद्यन्ते इति भावानां सत्त्वं सिद्धमित्यर्थः । उपसंहरति— सोयमिति, यद्यभावः= तुच्छमेव सर्वं स्यात् तदा निरुपाख्यत्वात्= असत्त्वात् अभावस्य= तुच्छस्यैकविधत्वसंभवात् सोयम्= उक्तः संप्रत्यायकः= प्रतीतिविषयतासंपादकः किं वा प्रतीतिविषयीभूतोऽर्थभेदः= पदार्थवैविध्यं न स्यात्. अस्ति चायं धर्मभेदात् पदार्थभेद इति न सर्वं तुच्छं संभवतीत्यन्वयः ॥

सूत्रस्य वर्णकान्तरमाह— अथ वेति, अत्र स्वभावशब्दः स्वरूपपरो विज्ञेय इति विशेषः । उदाहरति— गौरिति, गृह्यते= प्रतीयते । पूर्वपक्षिमते बाधकमाह— यदीति, यदि सर्वमभाव एव तदा गोशब्देन गोरभावत्वेन प्रतीतिः स्यात् न चैवमस्ति— भावत्वेन प्रतीयमानत्वात् । पूर्वपक्षिमते गवादिशब्दानामभाववाचकत्वं स्यादित्याह— गोशब्देनेति, न चैवं संभवतीतिशेषः । उपसंहरति— यस्मादिति । अयुक्तम्= सर्वस्य तुच्छत्वमयुक्तमित्यन्वयः ॥

पूर्वपक्षिमतेऽनुपपत्त्यन्तरमाह— अथ वेति । स्ववक्तव्यमाह— असन्निति, गोरश्वात्मनाऽसत्त्वमुच्यते— ' गौरश्वात्मनाऽसन् ' इति न तु ' असन् गौर्गवात्मना ' इत्येवं गवात्मनापि. यदि सर्वमभावात्मकमेव स्यात्तदा गोर्गवात्मनाप्यसत्त्वमुच्येत— ' गौर्गवात्मनाप्यसन् ' इति, न त्वेवमुच्यते इत्येवमऽवचनाद् गोर्गवात्मना= स्वरूपेण सत्त्वं सिद्धमिति स्वभावस्य= स्वरूपस्य सिद्धिर्जाता तया च तुच्छत्वं निवृत्तमित्यर्थः । एवम्— 'अनश्वोऽश्वः' ' गौरगौः ' इत्यादिकमपि नोच्यते तस्मात् भावानां स्वरूपसिद्धिर्जातेति न तुच्छत्वं संभवति, अभावात्मकत्वे च ' गौरगौः ' इत्येवमप्युच्येत । ' असन् गौरश्वात्मना ' इत्यनेन हि गोरश्वत्वं प्रतिषिध्यते न तु भावत्वं वा स्वरूपं वेति तस्याशयः । स्पष्टमन्यत् ॥

ननु यदि गवादीनामभावात्मकत्वं नास्ति तदा ' असन् गौरश्वात्मना ' इत्यादिप्रतीतिप्रयोगौ कथं भवतः ? इत्याशङ्क्य तत्समाधत्ते— अव्यतिरेकेति, अव्यतिरेकस्य= गवाश्वयोरभेदस्य प्रतिषेधे= प्रतिषेधार्थम्= भेदबोधनार्थं भेदबोधनकाले वा भावानाम्= पदार्थानाम् ' असन् गौरश्वात्मना ' इत्याद्याकार-

संयोगादिसंबन्धो व्यतिरेकः अत्राऽव्यतिरेकोऽभेदाख्यसंबन्धः तत्प्रतिषेधे चासत्प्रत्ययसामानाधिकरण्यं यथा- 'न सन्ति कुण्डे बदराणि' इति, 'असन् गौरश्वात्मना' 'अनश्वोगौः' इति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते= गवाश्वयोरेकत्वं नास्तीति. तस्मिन् प्रतिषिध्यमाने भावेन गवा सामाधिकरण्यमसत्प्रत्ययस्य- 'असन् गौरश्वात्मना' इति. यथा 'न सन्ति कुण्डे बदराणि' इति कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामाधिकरण्यमिति ॥ ३८ ॥

## न स्वभावसिद्धिः- आपेक्षिकत्वात् ॥ ३९ ॥

अपेक्षाकृतम् आपेक्षिकम्, ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वम्. न स्वेनात्मनाऽवस्थितं किंचित् । कस्मात् ?. अपेक्षासामर्थ्यात्. तस्मान्न स्वभावसिद्धिर्भावानामिति ॥ ३९ ॥

---

केणाऽसत्प्रत्ययेन सामानाधिकरण्यं भवतीत्यर्थः, भेदज्ञापनार्थमेवोक्तासत्प्रत्ययविषयत्वं भावानां संपाद्यते इतियावत् तथा चाऽसत्प्रत्ययसामानाधिकरणस्य भेदबोधनपरत्वादभावात्मकत्वबोधनपरत्वं न संभवतीति न सर्वस्य तुच्छत्वं संभवतीत्यर्थः । स्वयं व्याचष्टे- संयोगेति, अव्यतिरेकप्रतिपादनार्थं संयोगादिर्व्यतिरेकसंबन्ध उक्तः । अव्यतिरेकपदार्थमाह- अत्रेति । तत्प्रतिषेधे= अभेदप्रतिषेधार्थमसत्प्रत्ययसामानाधिकरण्यं भवतीत्यर्थः, असत्प्रत्ययसामानाधिकरण्यमुदाहरति- न सन्तीति, 'कुण्डे बदराणि न सन्ति' इत्यत्र कुण्डे बदराणामसत्त्वं प्रतीयते इत्यसत्प्रत्ययसामानाधिकरण्यम्= असत्प्रत्ययविषयत्वं बदराणां प्राप्तमित्यन्वयः । प्रकृतमाह- असन्निति, 'असन् गौरश्वात्मना' इत्यादिना गवाश्वयोरव्यतिरेकः= अभेदः प्रतिषिध्यते । एतदपि व्याचष्टे- गवाश्वयोरिति । पर्यवसितमाह- तस्मिन्निति, तस्मिन्= अव्यतिरेके= अभेदे प्रतिषिध्यमाने= गवाश्वयोरभेदस्य प्रतिषेधार्थं भावपदार्थेन गवा 'असन् गौरश्वात्मना' इत्येवमसत्प्रत्ययस्य सामानाधिकरण्यं भवति न तु गोरभावात्मकत्वबोधनार्थमित्यर्थः । पुनरसत्प्रत्ययसामानाधिकरण्यमुदाहरति- यथेति । उदाहरणं व्याचष्टे- कुण्डे इति, यथात्र कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिः= बदरैः 'न सन्ति' इत्यसत्प्रत्ययसामानाधिकरण्यं भवति तथा प्रकृतेपि गवाश्वयोरभेदप्रतिषेधार्थमेव 'असन् गौरश्वात्मना' इत्यादिरूपेणासत्प्रत्ययसामानाधिकरण्यं भवति न तु गोस्तुच्छत्वबोधनार्थमित्यर्थः ॥ ३८ ॥

पूर्वपक्षी पूर्वसूत्रोक्तां भावानां स्वभावसिद्धिं सत्त्वसिद्धिहेतुभूतां निराकरोति- नेति, भावानामुक्ता स्वभावसिद्धिर्न संभवति- आपेक्षिकत्वात्= परस्परं सापेक्षत्वात् यथा ह्रस्वापेक्षं दीर्घं दीर्घापेक्षं च ह्रस्वं तथा पटादिभेदापेक्षो घटादिर्घटादिभेदापेक्षश्च पटादिरिति न कस्यापि स्वभावेन= स्वरूपमात्रेण सिद्धिः संभवति यच्च परापेक्षं तत् तुच्छमेव यथा जपाकुसुमापेक्षं स्फटिकस्यारुण्यं तथा च सर्वं सापेक्षत्वात् तुच्छमेवेति सूत्रार्थः । व्याचष्टे- अपेक्षेति, अपेक्षाकृतम्= अपेक्षया सिद्धमित्यर्थः, एषा चापेक्षिकशब्दस्य व्युत्पत्तिः । सूत्रार्थमाह- ह्रस्वेति । आत्मना= स्वस्वरूपेण. अवस्थितम्= सिद्धं किमपि नास्तीत्यन्वयः । अत्र हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- अपेक्षेति, अपेक्षायाः सामर्थ्यात्= अपेक्षाया इदं सामर्थ्यं यत् सापेक्षं तुच्छं करोतीत्यर्थः, किं वा अपेक्षासामर्थ्यात् नाम अपेक्षाप्रयोजनयोगात् यदि ह्रस्वादिकं स्वरूपसिद्धं स्यात्तदाऽपेक्षाप्रयोजनम्= सापेक्षत्वं तस्य न स्यादित्यर्थः । सापेक्षत्वादितियावत् । यदि ह्रस्वादिकं स्वभावेन= स्वरूपेण सिद्धं स्यात्तदा दीर्घाद्यपेक्षं न स्याद् अस्ति च दीर्घाद्यपेक्षमिति न ह्रस्वादिकं स्वभावसिद्धं संभवति तेन च स्वभावसिद्धेरभावः प्राप्त इति तुच्छत्वं सिद्धमेवमन्यत्रापि सर्वत्र तुच्छत्वं विज्ञेयमित्याशयः । उपसंहरति- तस्मादिति । स्वभावसिद्धेरभावात्तुच्छत्वं सिद्धमित्यर्थः ॥ ३९ ॥

## व्याहतत्वादयुक्तम् ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं किमिदानीमपेक्ष्य 'ह्रस्वम्' इति गृह्यते ?। अथ दीर्घापेक्षाकृतं ह्रस्वम् ? दीर्घमनापेक्षिकम्, एवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इत्यपेक्षाव्यवस्थानुपपन्ना । स्वभावसिद्धावऽसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः ?। अपेक्षायामनपेक्षायां च द्रव्ययोरभेदः= यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे नाऽन्यतरत्र भेदः । आपेक्षिकत्वे तु सत्यऽन्यतरत्र विशेषोपजनः स्यादिति ।

किमपेक्षासामर्थ्यमितिचेत् ? द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः ।

---

उक्तं सिद्धान्ती प्रत्याचष्टे– व्याहतत्वादिति, घटादिपदार्थानां तुच्छत्वमयुक्तम्= न संभवति– परसापेक्षत्वस्य व्याहतत्वात्= असिद्धत्वात् किं वा परस्पराश्रयदोषदुष्टत्वादित्यर्थः, तथा हि यदि ह्रस्वं दीर्घापेक्षं दीर्घं च ह्रस्वापेक्षं तदा परस्परसापेक्षत्वेन द्वयोरपि सिद्धिर्न स्यादित्यन्योन्याश्रयदोषेणोक्तस्य हेतोर्व्याहतत्वात् सर्वस्य तुच्छत्वमयुक्तमिति सूत्रार्थः । व्याचष्टे– यदीति, यदि दीर्घं ह्रस्वापेक्षम् इदानीम्= तदा किमपेक्ष्य ह्रस्वं गृह्यते= प्रतीयते इतिवक्तव्यमित्यन्वयः, ह्रस्वग्रहणस्य दीर्घापेक्षत्वे हि परस्पराश्रयो दोष इतिशेषः । अथ= यदि ह्रस्वं दीर्घापेक्षं तदा दीर्घं अनापेक्षिकम्= ह्रस्वानपेक्षं स्वीकार्यम् अन्यथा परस्पराश्रयो दोषः स्यादित्यनापेक्षिकत्वे स्वरूपेण सिद्धिः स्यादेवेत्यर्थः । पर्यवसितमाह– एवमिति, इतरेतराश्रययोः= परस्परसापेक्षयोर्ह्रस्वदीर्घयोर्मध्ये एकाभावेऽन्यतरस्यासंभवादुभयाभावः प्राप्तः स च न युक्त इत्यापेक्षिकत्वं नोपपद्यते इत्यपेक्षाव्यवस्था= परस्परापेक्षया व्यवस्था= सिद्धिः= सापेक्षताऽनुपपन्ना जातेति न स्वरूपसिद्ध्यभावो भावानां संभवतीत्यर्थः । विपक्षे बाधकमाह– स्वभावेति, यदि ह्रस्वदीर्घयोः स्वभावेन= स्वरूपेण सिद्धिर्न स्यात् किं तु सापेक्षत्वादेव तदा समानयोः परिमण्डलयोः= परमाण्वोर्वा घटादिद्रव्ययोर्वा परस्परसापेक्षत्वेन ह्रस्वत्वदीर्घत्वे स्याताम्– परस्परसापेक्षत्वस्य ह्रस्वत्वदीर्घत्वप्रयोजकत्वात्. सापेक्षत्वं च समत्वात् प्राप्तमेव समत्वस्य परस्परापेक्षयैव निरूप्यत्वात्. न च समयोर्ह्रस्वत्वदीर्घत्वे भवत इति न परस्परसापेक्षे किं तु स्वभावसिद्धे एव स्वभावेन सिद्धत्वे च तुच्छत्वं न संभवतीत्यर्थः । वस्तुतस्त्वयुक्त एवायमाक्षेपः– पूर्वपक्षिणा सापेक्षत्वेन स्वरूपसिद्धिमात्रस्य पराकृतत्वादित्यनुसंधेयम् । ननु ह्रस्वदीर्घादीनां सापेक्षत्वं निरपेक्षत्वं चोभयं स्वीक्रियते तत्र सापेक्षत्वात् तुच्छत्वं प्राप्तं निरपेक्षत्वाच्च परस्पराश्रयदोषाभाव इति नोभयाभावापत्तिरित्याशङ्क्याह– अपेक्षायामिति, अपेक्षायाम्= सापेक्षत्वे. अनपेक्षायाम्= निरपेक्षत्वे, एवं हि निरपेक्षत्वेन ह्रस्वदीर्घयोर्द्रव्ययोरभेदः= साम्यम्= निरतिशयत्वमेव स्यात्– ह्रस्वत्वदीर्घत्वादिलक्षणस्यातिशयस्य परापेक्षयैव ग्राह्यत्वादित्यन्वयः । उक्तवाक्यं व्याचष्टे– यावती इति, यावती= ये द्वे द्रव्ये. तावती= ते एव द्वे द्रव्ये. तयोः सापेक्षयोरपि निरपेक्षत्वेन अन्यतरत्र= ह्रस्वदीर्घयोर्द्वयोर्मध्ये एकस्मिन्नपि भेदः= दीर्घत्वादिलक्षणोऽतिशयो न गृहीतः स्यात्. न चैवमस्ति– उक्तभेदस्य गृह्यमाणत्वादिति नायमपि पक्षो युक्त इत्यर्थः । सापेक्षत्वपक्षेऽतिशयग्रहस्य संभवमाह– आपेक्षिकत्वे इति, आपेक्षिकत्वे= सापेक्षत्वे, विशेषोपजनः= अतिशयग्रहः, यथा ह्रस्वापेक्षया दीर्घेऽतिशयस्य= उत्कर्षस्य ग्रहणं संभवति सापेक्षत्वे च दोषः पूर्वमुक्त एवेति पदार्थानां स्वरूपेण सिद्धिः स्वीकार्या तथा च स्वरूपसिद्ध्या तुच्छत्वं न संभवतीत्यर्थः प्रतिभाति । अत्र– "ननु यद्यनेन क्रमेणोभयाभावो भवति भवतु सिद्धमेव नः समीहितमित्यत आह– अपेक्षायामनपेक्षायां चेति । भिन्नत्वं च भेदः स च वस्तुविशेषणं नोत्पत्तौ वस्त्वन्तरमपेक्षते किं तु स्वनिरूपणे । स्यादेतत् अपेक्षामात्रमेव दीर्घत्वादयो भविष्यन्ति कृतमेषां वस्तुस्वभावेन" इत्यादितात्पर्यटीका ॥

ननु यदि भावाः स्वरूपेणैव सिद्धास्तदाऽपेक्षासामर्थ्यम्= अपेक्षाप्रयोजनं किमित्याशङ्कते किमपेक्षेति, अत्र– "अपेक्षासामर्थ्यम्= अपेक्षाप्रयोजनयोगः" इतितात्पर्यटीका । उत्तरमाह– द्वयोरिति,

द्वे द्रव्ये पश्यन् एकत्र विद्यमानमतिशयं गृह्णाति तद् दीर्घमिति व्यवस्यति, यच्च हीनं गृह्णाति तद् ह्रस्वमिति व्यवस्यतीति, एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

अथेमे संख्यैकान्ताः- सर्वमेकम्- सदऽविशेषात्, सर्वं द्वेधा- नित्यानित्यभेदात्, सर्वं त्रेधा- ज्ञाता ज्ञानं ज्ञेयमिति, सर्वं चतुर्धा- प्रमाता प्रमाणं प्रमेयं प्रमितिरिति, एवं यथासंभवमन्येऽपीति । तत्र परीक्षा—

संख्यैकान्ताऽसिद्धिः- कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

यदि साध्यसाधनयोर्नानात्वम् ? एकान्तो न सिध्यति- व्यतिरेकात्, अथ साध्यसाधनयोरभेदः ? एवमप्येकान्तो न सिध्यति- साधनाभावात्, न हि तमन्तरेण कस्यचित् सिद्धिरिति ॥ ४१ ॥

---

ह्रस्वदीर्घयोर्द्वयोर्ग्रहणे जाते अतिशयग्रहणोपपत्तिः= दीर्घे यदतिशयस्य= उत्कृष्टत्वस्य= ह्रस्वापेक्षया लम्बायमानत्वस्य ग्रहणं तदेवापेक्षासामर्थ्यम्= अपेक्षायाः= सापेक्षत्वस्य प्रयोजनमित्यर्थः । व्याचष्टे- द्वे इति, एकत्र= दीर्घे, अतिशयम्= लम्बायमानत्वं गृह्णाति, तत्= तादृशातिशयविशिष्टम्= लम्बायमानम् । हीनम्= अतिशयरहितम् । उपसंहरति- एतदिति, एतत्= अतिशयतद्राहित्ययोर्ग्रहणमेवापेक्षाप्रयोजनमित्यन्वयस्तथा च ह्रस्वत्वदीर्घत्वयोर्ग्रहणस्य परस्परसापेक्षत्वेऽपि ह्रस्वदीर्घयोः स्वरूपं तु न परसापेक्षं किं तु स्वभावसिद्धमेवेति न सर्वेषां भावानामभावात्मकत्वम्= तुच्छत्वं संभवतीत्यर्थः ॥ ४० ॥

॥ इति सर्वशून्यत्ववादनिराकरणं समाप्तम् ॥

---

अग्रिमप्रकरणमुपक्रमते- अथेति, संख्याया एकान्तः= नियमो येषु ते संख्यैकान्ताः= अल्पसंख्याकतत्त्वप्रतिपादकाः सिद्धान्ता इत्यर्थः, अत्र- " संख्या एकान्तो येषु वादेषु ते तथोक्ताः " इति तात्पर्यटीका । संख्यैकान्तवादान् विशेषरूपेणाह- सर्वमिति, अयं निर्विशेषब्रह्मवादः, निर्विशेषं ब्रह्मैवैकम्- सदविशेषात्= सतः= ब्रह्मणः सर्वस्याविशेषात्= अभेदादित्यन्वयः श्रूयते च " सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म " इत्यादि । मतान्तरमाह- सर्वं द्वेधेति । तृतीयमतमाह- सर्वं त्रेधेति, ज्ञाता= आत्मा, ज्ञेयं घटपटादिकम् । मतान्तरमाह- सर्वं चतुर्धेति, प्रमाता= आत्मा, प्रमाणं प्रत्यक्षादि, प्रमेयं घटपटादि, प्रमितिः= प्रमाणजन्यं ज्ञानम् । उपसंहरति- एवमिति, एवमन्येऽपि संख्यैकान्तवादा विज्ञेया इत्यर्थः । अत्र- " अन्येपीत्यनेन रूपसंज्ञासंस्कारवेदनानुभवाः पञ्च स्कन्धा इति सौत्रान्तिका इत्यादिसमुच्चयः" इतिवृत्तिः । अग्रिमसूत्रमवतारयति- तत्रेति, तत्र= तेषां संख्यैकान्तवादानां संप्रति परीक्षेत्यन्वयः ।

संख्येति- उक्तानां संख्यैकान्तवादानामसिद्धिः= उपपत्तिर्नास्ति- स्वीकृतपदार्थातिरिक्तस्य स्वीकृतपदार्थसिद्धिकारणस्य= स्वीकृतपदार्थविषयकप्रमाणस्याऽनुपपत्त्या= असंभवात्= स्वीकृतपदार्थातिरिक्तस्य तत्साधकस्य प्रमाणस्याऽस्वीकारात् प्रमाणं विना च पदार्थसिद्धेरसंभवात्, उपपत्त्या= कारणोपपत्त्या च= यदि स्वीकृतपदार्थसाधकं प्रमाणं स्वीक्रियते तदा स्वीकृतपदार्थातिरिक्तप्रमाणस्य स्वीकारेण तत्त्वसंख्यावृद्ध्या स्वीकृतसंख्यानियमभङ्गः स्यादित्युभयतः पाशारज्जुरिति संख्यैकान्तवादानामनुपपत्तिरिति सूत्रार्थः । भाष्यकारः संख्यैकान्तवादानामनुपपत्तिमाह- यदीति, यदि साध्यस्य= स्वीकृतपदार्थस्य साधनस्य= स्वीकृतपदार्थविषयकप्रमाणस्य च नानात्वम्= भेदस्तदा एकान्तः= स्वीकृतैकत्वसंख्यानियमो न सिध्यति- व्यतिरेकात्= साध्यसाधनयोर्भेदात् तादृशभेदेन स्वीकृतसंख्यातः संख्यावृद्धेरवश्यम्भावादित्यर्थः । साध्यसाधनयोरभेदपक्षे दोषमाह- अथेति, अथ= यदि साध्यसाधनयोरभेद एवमपि= तदापि एकान्तः= स्वीकृततत्त्वसंख्यानियमो न सिध्यति- साधनाभावात्= साध्यातिरिक्तप्रमाणाभावात्, तमन्तरेण= साध्यातिरिक्तप्रमाणं विना च न कस्यापि पदार्थस्य सिद्धिः संभवतीत्याह- नहीति ॥ ४१ ॥

## न– कारणावयवभावात् ॥ ४२ ॥

न संख्यैकान्तानामसिद्धिः, कस्मात् ?. कारणस्यावयवभावात्= अवयवः कश्चित् साधनभूत इत्यऽव्यतिरेकः। एवं द्वैतादीनामपीति ॥ ४२ ॥

## निरवयवत्वादहेतुः ॥ ४३ ॥

"कारणस्यावयवभावात्" इत्यहेतुः, कस्मात् ? 'सर्वमेकम्' इत्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते तत्र व्यपवृक्तोऽवयवः साधनभूतो नोपपद्यते, एवं द्वैतादिष्वपीति। ते खल्विमे संख्यैकान्ता यदि विशेषकारितस्याऽर्थभेदविस्तरस्य प्रत्याख्यानेन वर्तन्ते ? प्रत्यक्षानुमानागमविरोधाद् मिथ्यावादा भवन्ति। अथाभ्यनुज्ञानेन वर्तन्ते ? समानधर्मकारितोऽर्थसंग्रहो विशेषकारितश्चार्थभेद इत्येवमेकान्तत्वं जहतीति। ते खल्वेते तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति ॥ ४३ ॥

---

पूर्वपक्षी समाधत्ते– नेति, संख्यैकान्तवादानामसिद्धिर्नास्तीत्यर्थः, उक्ते हेतुमाह– कारणेति, कारणस्य= साधनस्य= प्रमाणस्य अवयवभावात्= अवयवत्वात्= साध्यैकदेशत्वात्, तथा चैकस्यैव तत्त्वस्य कश्चिदेकदेशः साध्यः कश्चिदेकदेशश्च साधकः= प्रमाणमिति न साध्यसाधनभावानुपपत्तिः, समुदायस्य चैक्यैनैकत्वानुपपत्तिरपि नास्तीति न संख्यैकान्तानुपपत्तिरिति सूत्रार्थः। व्याचष्टे– नेति। उक्ते हेतुं जिज्ञासते– कस्मादिति। हेतुमाह– कारणस्येति, कारणस्य= प्रमाणस्याऽवयवभावात्= अवयवत्वादित्यन्वयः। उक्तं विशदयति– अवयव इति, स्वीकृततत्त्वस्य कश्चिदवयवः साधनभूतो न तु साध्यातिरिक्त इत्यऽव्यतिरेकः= साध्यसाधनयोरभेदः– अवयवावयविनोरभेदादिति न स्वीकृततत्त्वैकत्वस्यानुपपत्तिरित्यर्थः किं वा "अव्यतिरेकः" इत्यस्य स्वीकृतसंख्याधिकसंख्यापत्तिर्नास्तीत्यर्थः। उक्तमन्यत्रातिदिशति– एवमिति, उपपत्तिर्विज्ञेयेतिशेषः, नित्यानित्ययोर्मध्ये ह्यनित्येषु प्रमाणस्यान्तर्भावो विज्ञेयः, स्पष्टमन्यत्। द्वैतादीनाम्= "सर्वं द्वेधा" इत्यादिमतानामित्यर्थः ॥ ४२ ॥

उक्तं सिद्धान्ती निराकरोति– निरवयवत्वादिति, त्वदभिमतस्यैकस्य तत्त्वस्य ब्रह्मणो निरवयत्वादेकदेशस्य साध्यत्वमपरदेशस्य च साधनत्वमिति न घटते इति "कारणावयवभावात्" इति हेतुर्न संभवतीति न तत्त्वैकत्ववादः संभवतीति सूत्रार्थः। व्याचष्टे– कारणस्येति। उक्तहेतोरहेतुत्वे हेतुं जिज्ञासते– कस्मादिति। हेतुमाह– सर्वमिति, अनपवर्गेण= अभेदेन= साकल्येन 'सर्वमेकम्' इति प्रतिज्ञाय कस्यचित्= ब्रह्मण एकत्वमुच्यते तत्र व्यपवृक्तः= अभिन्नः= साध्याभिन्नोऽवयवः= साध्यैकदेशः साधनभूतो नोपपद्यते= साधनं भवितुं नार्हति– साध्यभिन्नस्यैव साधनत्वसंभवादित्यन्वयः। किं च निरवयवस्य ब्रह्मणोऽवयव एव न संभवति यस्य साधनत्वं स्यादित्यर्थः। अत्र– "सर्वमेकमित्येतस्मिन् प्रतिज्ञार्थे न किंचिदपवृज्यते= व्यावर्तते यतस्तत् साधनं स्यादित्यर्थः" इति तात्पर्यटीका। उक्तामनुपपत्तिमन्यत्रातिदिशति– एवमिति, द्वितीयमते नित्यानामनित्यानां चैकत्वं नोपपद्यते– नानात्वात्= बहव खलु नित्या बहवश्चानित्या इति द्वित्वमात्रं कथं स्यादित्यर्थः किं वा नित्यानित्यविलक्षणस्यापि संभवात् द्विप्रकरत्वानुपपत्तिरित्यर्थः, चतुर्थमते चतुर्धात्वमपि नोपपद्यते– ईश्वरस्याधिक्यात्, एवं तृतीयमते त्रित्वं नोपपद्यते– तत्त्वाधिक्यादेवेत्यनुसंधेयम्। संख्यैकान्तवादानां प्रयोजनमाह– ते खल्विति, एते वादा विशेषकारितस्य= तत्तद्विशेषकारणजन्यस्याऽर्थभेदविस्तरस्य= पदार्थविशेषसमुदायस्य यदि प्रत्याख्यानेन= प्रत्याख्यानाय वर्तन्ते= प्रवृत्ताः सन्ति ? तदा पदार्थविशेषवृन्दस्य प्रत्यक्षादिप्रमाणसिद्धत्वेन प्रत्याख्यानं न संभवतीति प्रत्यक्षादिप्रमाणविरोधान्मिथ्यावादा भवन्तीत्यन्वयः। अर्थभेदविस्तरस्वीकारपक्षे दोषमाह– अथेति, यद्येते वादा अर्थभेदविस्तरस्याभ्यनुज्ञानेन= स्वीकाराय प्रवृत्तास्तदा समानधर्मकृतः=

प्रेत्यभावानन्तरं फलम् । तस्मिन्—

## सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

'पचति दोग्धि' इति सद्यः फलम् ओदनपयसी, 'कर्षति वपति' इति कालान्तरे फलं शस्याधिगम इति, अस्ति चेयं क्रिया– "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति एतस्याः फले संशयः ॥ ४४ ॥

## न सद्यः– कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

स्वर्गः फलं श्रूयते तच्च भिन्नेऽस्मिन् देहभेदादुत्पद्यते इति न सद्यः, ग्रामादिकामानामारम्भफलमिति ॥ ४५ ॥

## कालान्तरेणाऽनिष्पत्तिः– हेतुविनाशात् ॥ ४६ ॥

---

सत्तासामान्यकृतोर्थसंग्रहो यथास्ति तथा विशेषकारितः= तत्तद्विशेषरूपकृतोर्थभेदोप्यस्त्येवेति तादृशपदार्थभेदस्वीकारेणैकान्तत्वम्= संख्यानियमं जहति= त्यजन्ति= स्वीकृततत्त्वैकत्वादिसंख्यानियमस्य भङ्गो भवतीति दोषः । एतेषां वादानां निरासस्य प्रयोजनमाह– ते खल्वेते इति, एते एकान्ताः= संख्यैकान्तवादास्तत्त्वज्ञानप्रविवेकार्थम्= षोडशपदार्थतत्त्वज्ञानार्थम्= षोडशपदार्थसिद्ध्यर्थं किं वा षोडशपदार्थानां तत्त्वज्ञानार्थं प्रविवेकार्थम्= भेदसिद्ध्यर्थं च परीक्षिताः= निराकृतास्तेन षोडश पदार्थाः सिद्धा इति तेषां तत्त्वज्ञानविवेकौ संपाद्यावित्यर्थः ॥ ४३ ॥

॥ इति संख्यैकान्तवादनिरासः समाप्तः ॥

॥ इति प्रेत्यभावविवेचनं समाप्तम् ॥

---

फलविवेचनमारभते– प्रेत्येति । तस्मिन्= फले संशय इत्यन्वयः । सद्य इति– पाकादिक्रियाणां सद्यः कृष्यादिक्रियाणां च कालान्तरे फलनिष्पत्तिर्भवति, अग्निहोत्रादिक्रियाणां च न सद्यः न वा कालान्तरे फलं दृश्यते इति अग्निहोत्रादिफले संशयः– अस्ति वा न वेति सूत्रार्थः । व्याचष्टे– पचतीति, पचतीतिपाकक्रियाया ओदनं फलं दोग्धीतिदोहनक्रियायाः पयः फलं सद्य एव, कर्षतीति कृष्यादिक्रियाणां शस्याधिगमः फलं कालान्तरे भवतीत्यन्वयः । प्रकृतमाह– अस्तीति, एतस्याः= अग्निहोत्रक्रियायाः फले संशयः– भवति वा न वेत्यर्थः ॥ ४४ ॥

सिद्धान्ती समाधत्ते– नेति, अग्निहोत्रादिक्रियायाः फलं सद्यो न भवति– कालान्तरे= देहपातानन्तरं स्वर्लोके उपभोग्यत्वादिति सूत्रार्थः । व्याचष्टे– स्वर्ग इति, अग्निहोत्रादीनां स्वर्गः फलं श्रूयते– "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति, तच्च स्वर्गलक्षणं फलं भिन्ने= पतितेऽस्मिन् देहे देहभेदात्= स्वार्गिकदेहविशेषावच्छेदेन कालान्तरे उत्पद्यते= प्राप्नोति न सद्य इति न तत्र संशय उपपद्यते– वेदबोध्यत्वादित्यर्थः । यद्यग्निहोत्रादीनां फलमैहिकं स्यात्तदा तस्य सद्योऽनुपलब्ध्या संशयः स्यादपि न चैवमस्तीत्याशयः । 'अनया ग्रामकामो यजेत' "चित्रया यजेत पशुकामः" इत्यादिग्रामादिकामानाम्= ग्रामाद्यैहिकफलानामिष्टीनामारम्भे= सद्यः फलं भवति तेन कालान्तरभाविफले स्वर्गादावपि न संशयः कर्तव्य इत्यर्थः, किं वा ग्रामादिकामेष्टीनामेव आरम्भफलम्= सद्यः फलमुक्तं न त्वग्निहोत्रादीनामपि येन तेषां सद्यः फलानुपलम्भात् फलाभावापत्तिः स्यादित्यर्थः ॥ ४५ ॥

उक्तं पूर्वपक्षी प्रत्याचष्टे– कालान्तरेणेति, अग्निहोत्रादीनां कालान्तरेण= कालान्तरेपि फलनिष्पत्तिर्न संभवति– हेतुविनाशात्= स्वर्गादिफलजनकानामग्निहोत्रादीनां विनाशात्= विनाशित्वात्–

ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हतिः— न खलु वै विनष्टात् कारणात् किंचिदुत्पद्यते इति ॥ ४६ ॥

## प्राङ् निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥ ४७ ॥

यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण संनिविशमानः पर्णादि फलं निर्वर्तयति एवं परिषेकादि कर्म चार्थवत्— न च विनष्टात् फलनिष्पत्तिः । तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति. उक्तं चैतत्— "पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ३–२–६२" इति ॥ ४७ ॥

तदिदं प्राङ् निष्पत्तेर्निष्पद्यमानम्—

## नाऽसत्. न सत्. न सदसत्— सदसतोर्वैधर्म्यात् ॥ ४८ ॥

---

क्रियायाः स्थिरत्वासंभवादित्यग्निहोत्रादीनां फलं न संभवतीति सूत्रार्थः । व्याचष्टे— ध्वस्तायामिति ध्वस्तायाम्= विनष्टायां प्रवृत्तौ= अग्निहोत्रादिकर्मणि प्रवृत्तेः= अग्निहोत्रादिकर्मणः फलं कारणमन्तरेण= अग्निहोत्रादिकारणं विना नोत्पत्तुमर्हति । निगमयति— नेति । तथाचाग्निहोत्रादीनां सद्यो विनाशित्वान्न कालान्तरे फलं संभवति न च सद्यो दृश्यते इति नास्त्येव फलमित्यर्थः ॥ ४६ ॥

उक्तं सिद्धान्ती समाधत्ते— प्रागिति, निष्पत्तेः= फलनिष्पत्तेः प्राक् तत्= फलकारणम्= अग्निहोत्रादिजन्यापूर्वं स्यात्= संभवतीति वृक्षफलवत् स्वर्गादिकं फलं संभवतीत्यर्थः, किं वा— स्वर्गादिफलनिष्पत्तेः प्राक् कर्मजन्यापूर्वलक्षणकारणस्य सत्त्वात् वृक्षफलवत् तत्= स्वर्गादिकं फलं संभवतीत्यर्थः, किं वा फलात् प्राक् कर्मजन्यापूर्वलक्षणकारणस्य निष्पत्तेः= सिद्धेर्वृक्षफलवत् तत्= स्वर्गादिकं फलं संभवतीति न तत्र काप्यनुपपत्तिरिति सूत्रार्थः । अन्यत् सर्वं भाष्ये स्पष्टम् । व्याचष्टे— यथेति, परिकर्म= संस्कारः, तस्मिन्= परिसेकादिकर्मणि, पृथिवीधातुः= पार्थिवपरमाणुसमुदायः, अब्धातुना= जलेन, संगृहीतः= आकृष्टः संयुक्तो वा, पृथिव्याद्यन्तर्गतं तेजश्च प्रसिद्धमेव, पच्यमानः पृथिवीधातुरित्यन्वयः, रसद्रव्यम्= रसम् , निर्वर्तयति= संपादयति, वृक्षानुगतः= वृक्षे व्याप्तः, पाकविशिष्टः= पक्वः, व्यूहविशेषेण= रूपविशेषेण संनिविशमानः प्रविशमानः पर्णादि= पत्रमारभ्य फलपर्यन्तं निर्वर्तयति । व्यूहेति— यथा केनचिद्रूपेण पत्रं केनचिद्रूपेण पुष्पं केनचिद्रूपेण फलं संपादयति । दृष्टान्तमुपसंहरति— एवमिति, एवम्= उक्तप्रकारेण= परम्परया= रससंपादनद्वारा परिषेकादिकर्म अर्थवत्= फलजनकं भवति न तु साक्षात्— विनष्टत्वात्. तदाह— न चेति, विनष्टात् परिषेकात् साक्षात् फलं न संभवति अतः परम्परयेत्यर्थः । प्रकृतमाह— तथेति, प्रवृत्त्या= अग्निहोत्रादिकर्मणा, संस्कारः= अदृष्टम् , सः= संस्कारः, निमित्तान्तरेण= फलप्राप्तियोग्यदेशादिनानुगृहीतः, कालान्तरे= मरणानन्तरकाले, फलं स्वर्गादिकं निष्पादयतीत्यन्वयः । अत्र पूर्वोक्तसूत्रं प्रमाणयति— पूर्वेति, सूत्रव्याख्या च तत्रैव द्रष्टव्या, स्पष्टमन्यत् । तथा च यथा सेकादिकर्मणा रसो जायते तेन च फलमिति न कार्यकारणत्वयोरनुपपत्तिस्तथाऽग्निहोत्रादिकर्मणाऽदृष्टं जायते तच्च फलभोगपर्यन्तं स्थायीति तेन फलं जायते इति नाग्निहोत्रादीनां फलतत्कारणत्वयोरनुपपत्तिरित्यर्थः ॥ ४७ ॥

अग्रिमसूत्रमवतारयति— तदिति, इदम्= फलं निष्पद्यमानं निष्पत्तेः प्राक् नाऽसत् न सत् न सदसदित्यन्वयः । अत्र— "इदमिदानीं चिन्त्यते किमेतत् फलमुत्पत्तेः प्रागसद्वा सद्वा सदसद्वाऽनुभयं वेति, अत्र समस्तपक्षाक्षेपेण फलाभावमभिधित्सुः पूर्वपक्षयति तदिदं फलं निष्पत्तेः प्राक्" इति तात्पर्य-

प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नाऽसत्– उपादाननियमात्= कस्यचिदुत्पत्तये किंचिदुपादेयं न सर्वं सर्वस्येत्यऽसद्भावे नियमो नोपपद्यते इति । न सत्– प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति । न सदसत्– सदसतोर्वैधर्म्यात्= 'सत्' इत्यर्थाभ्यनुज्ञा. 'असत्' इत्यर्थप्रतिषेधः एतयोर्व्याघातो वैधर्म्यं व्याघातादव्यतिरेकानुपपत्तिरिति ॥ ४८ ॥

प्रागुत्पत्तेरुत्पत्तिधर्मकमऽसदित्यऽद्धा, कस्मात् ?—

**उत्पादव्ययदर्शनात् ॥ ४९ ॥**

यत्पुनरुक्तम्– 'प्रागुत्पत्तेः कार्यं नाऽसत्– उपादाननियमात्' इति ?—

**बुद्धिसिद्धं तु तदऽसत् ॥ ५० ॥**

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या सिद्धम्– उत्पत्तिनियमदर्शनात् तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति॥५०॥

---

टीका । नेति– उत्पद्यमानं फलमुत्पत्तेः प्राक् नाऽसत्– असत उत्पत्तेरसंभवादन्यथा शशविषाणमप्युत्पद्येत, न च सत्– सतोऽप्युत्पत्तेरसंभवात्, नापि सदसत्– सत्त्वासत्त्वयोः सामानाधिकरण्यासंभवादित्यर्थः, तृतीयकल्पे हेतुमाह– सदसतोरिति, सदसतोः= सत्त्वासत्त्वयोर्वैधर्म्यात्= परस्परं विरुद्धत्वात्= सामानाधिकरण्यासंभवादिति सूत्रार्थः । व्याचष्टे– प्रागिति, निष्पत्तिधर्मकम्= उत्पद्यमानं फलादि वस्तु निष्पत्तेः= उत्पत्तेः प्राक् नाऽसदित्यन्वयः । उक्ते हेतुमाह– उपादानेति । हेतुवाक्यं व्याचष्टे– कस्यचिदिति, कस्यचिदुत्पत्तये किंचिदुपादीयते न तु सर्वस्योत्पत्तये सर्वमुपादीयते इति कार्यकारणत्वयोर्नियमोऽसद्भावे= उत्पत्तेः प्राक् कार्यस्यासत्त्वपक्षे नोपपद्यते इत्यन्वयः, घटोत्पादनार्थं मृत्तिका गृह्यते न तु तन्त्वादि यद्युत्पत्तेः प्रागसदेव कार्यं स्यात्तदा कार्यासत्त्वस्य सर्वत्राविशेषाद् तन्त्वादिभ्योऽपि घट उत्पद्येत न चोत्पद्यते तस्मान्नाऽसत्, सत्त्वपक्षे तु घटस्य मृत्तिकायां सत्त्वात् मृत्तिकातो घटोत्पत्तिः संभवतीत्यर्थः । अस्तु तर्हि कार्यमुत्पत्तेः प्राक् सदित्याशङ्कयाह– न सदिति । उक्ते हेतुमाह– प्रागिति सत्त्वं हि विद्यमानत्वं विद्यमानस्य चोत्पत्तिरनुपपन्नेति स्पष्टमेव । सत्त्वासत्त्वपक्षं निराकरोति– न सदसदिति । उक्ते हेतुमाह– सदसतोरिति । हेतुवाक्यं व्याचष्टे– सदिति, अर्थाभ्यनुज्ञा= पदार्थस्य विद्यमानता, प्रतिषेधः= अभावः, एतयोः= विद्यमानत्वाभावयोर्व्याघातः= परस्परं विरोधोक्ति तादृशविरोधादव्यतिरेकस्य= अभेदस्य= सामानाधिकरण्यस्यानुपपत्तिरिति सदसद्रूपत्वमपि न संभवतीति नाग्निहोत्रादीनां फलं संभवति– सत्त्वासत्त्वादिना स्वरूपानुपपत्तेरित्यर्थः ॥ ४८ ॥

सिद्धान्तमाह– प्रागिति, उत्पत्तिधर्मकम्= कार्यं प्रागुत्पत्तेरसत् इत्यद्धा= इतियुक्तमित्यर्थः । उक्ते हेतुं जिज्ञासते– कस्मादिति । सूत्रेण हेतुमाह– उत्पादेति, कार्यस्योत्पादो व्ययः= विनाशश्च दृश्यते तेनोत्पत्तेः प्रागसत्त्वं सिद्धमिति सूत्रार्थः, उत्पादविनाशाभ्यामनित्यत्वं तेन चोत्पत्तेः प्रागसत्त्वं फलस्य कार्यस्य सिद्धमित्याशयः । अत्र भाष्यं नास्ति ॥ ४९ ॥

प्रागुत्पत्तेः कार्यासत्त्वप्रतिषेधकं पूर्वपक्षिवाक्यमनुवदति– यत्पुनरिति, तदेतत् पूर्वत्र व्याख्यातम् । प्रागुत्पत्तेः कार्यासत्त्वं समाधत्ते– बुद्धीति, तत्= कार्यम् प्रागुत्पत्तेरसदिति बुद्धिसिद्धम्= प्रमाणसिद्धमेव– असत्त्वाभावे तदुत्पादनार्थं यत्नो न स्यात्, न चैवं शशविषाणस्याप्युत्पत्तिः स्यादिति वाच्यम्, तस्य प्रागभावप्रतियोगित्वाभावात् कार्यस्य च प्रागभावप्रतियोगित्वादिति व्यतिरेकादिति सूत्रार्थः, किंवा प्रागुत्पत्तेरसदपि कार्यं बुद्धिसिद्धम्= बुद्धिविषयीभूतमेव तथा च कार्यस्य बुद्धिविषयत्वादुक्तस्योपादाननियमस्यानुपपत्तिर्नास्ति– दर्शनानुकूल्येन घटाद्युत्पादनार्थं मृदादिग्रहणसंभवात् तेन च कार्यकारणभावनियमोऽप्युपपन्न इतिसूत्रार्थः । व्याचष्टे– इदमिति, इदम्= मृद्द्रव्यमऽस्य= घटस्योत्पत्तये समर्थम्= पर्याप्तं न सर्वं तन्त्वादिकमित्येवंरूपेण प्रागुत्पत्तेः कार्यं नियतं कारणं यस्य तत् नियतकारणं बुद्ध्या= प्रमाणेन

## आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम्. कर्म चेह शरीरे फलं चाऽमुत्रेति आश्रयव्यतिरेकादहेतुरिति ॥ ५१ ॥

## प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया तदाश्रयमेव कर्म धर्मसंज्ञितम्— धर्मस्यात्मगुणत्वात् तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥ ५२ ॥

## न— पुत्रपशुस्त्रीपरिच्छदहिरण्याऽन्नादिफलनिर्देशात् ॥ ५३ ॥

पुत्रादि फलं निर्दिश्यते न प्रीतिः— "ग्रामकामो यजेत" "पुत्रकामो यजेत" इति. तत्र यदुक्तम्— 'प्रीतिः फलम्' इति एतदयुक्तम् ॥ ५३ ॥

## तत्संबन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥

---

सिद्धम्। अत्र हेतुमाह— उत्पत्तीति, मृदो घटस्योत्पत्तिर्भवति न तन्त्वादिभ्य इति नियमदर्शनाद् यदि कार्यं नियतकारणं न स्यात्तदा मृद एव घटस्योत्पत्तिर्भवतीति नियमो न स्यात् अत एव नियमादुपादाननियमस्योपपत्तिरस्ति— घटोत्पत्त्यर्थं मृदेव गृह्यते इति । विपक्षे बाधकमाह— सतीति, यदि प्रागुत्पत्तेरपि कार्यं सदेव स्यात्तदा सतस्तस्योत्पत्तिर्न संभवति अन्यथोत्पत्त्यनन्तरमप्युत्पत्तिः स्यादित्यर्थः ॥ ५० ॥

"वृक्षफलवत्" इत्युक्तदृष्टान्तं पूर्वपक्षी दूषयति— आश्रयेति, 'अग्निहोत्रादिफलोत्पत्तिर्वृक्षफलोत्पत्तिवत् संभवति' इति यदुक्तं तदऽहेतुः= असाधकमेव— आश्रयव्यतिरेकात्= वृक्षे एव सेकादि कारणं वृक्षे एव च तत्फलमिति वृक्षफलोत्पत्तिः संभवति, प्रकृते च येन शरीरेण कर्म कृतं न तेन स्वर्गादिफलं भोक्तुं शक्यते किं तु शरीरान्तरेणेति फलतत्कारणयोराश्रयस्य व्यतिरेकः= भेदः प्राप्त आश्रयभेदे च कार्यकारणभावो न भवतीत्यनुपपत्त्याऽग्निहोत्रादीनां फलं न संभवतीति सूत्रार्थः । व्याचष्टे— मूलेति, तस्मात् फलस्य मूलसेकादिकर्मणश्च कार्यकारणभावः संभवतीतिशेषः । प्रकृतमाह— कर्मेति, अमुत्र= पारलौकिकशरीरे । अहेतुः= उक्तदृष्टान्तो न कर्मफलसाधकः । स्पष्टं सर्वम् ॥ ५१ ॥

उक्तं सिद्धान्ती समाधत्ते— प्रीतेरिति, अग्निहोत्रादीनां फलं प्रीतिः= सुखमेव तच्चात्माश्रयम्= आत्मनिष्ठं तत्कारणीभूतं चादृष्टमपि आत्मनिष्ठमेवेति फलतत्कारणयोः सामानाधिकरण्यं सिद्धमिति नोक्तरीत्याग्निहोत्रादीनां फलस्य प्रतिषेधः संभवतीति सूत्रार्थः । व्याचष्टे— प्रीतिरिति, आत्मप्रत्यक्षत्वात्= आत्मनानुभूयमानत्वात् सर्वलोकप्रत्यक्षसिद्धत्वाद्वेत्यर्थः । तदाश्रयम्= आत्मनिष्ठम् । धर्मसंज्ञितम्= फलजनकमदृष्टाख्यम् । उक्ते हेतुमाह— धर्मस्येति, धर्मस्य= अदृष्टस्य । उपसंहरति— तस्मादिति, उक्तरूपेण फलतत्कारणयोराश्रयभेदो नोपपद्यते— उभयोरप्यात्मनिष्ठत्वादित्यर्थः ॥ ५२ ॥

पूर्वपक्षी सुखस्य फलत्वं निराकरोति— नेति, अग्निहोत्रादीनां सर्वेषां सुखं न फलम्— पुत्रादिलक्षणफलनिर्देशात् तेषां च नाग्निहोत्रादिना तज्जन्यादृष्टेन च सामानाधिकरण्यं संभवतीति पुनरपि फलानुपपत्तिस्तदवस्थैवेति सूत्रार्थः । व्याचष्टे— पुत्रादीति, पुत्रादिलक्षणफलबोधकवाक्यान्युदाहरति— ग्रामेति, "चित्रया यजेत पशुकामः" इत्यादिवाक्यानि विज्ञेयानि । उपसंहरति— तत्रेति, तत्र= एवं पुत्रादीनां फलत्वे सिद्धे, एतत्= तत्, तथा च सुखस्यैव फलत्वं न संभवति येन फलतत्कारणयोः सामाधिकरण्यं सिध्येतेत्यर्थः ॥ ५३ ॥

उक्तं सिद्धाती समाधत्ते— तत्संबन्धादिति, न केवलं पुत्रादिकं फलं किं तु तत्संबन्धात्= पुत्रादिसंबन्धात्= पुत्रादिप्राप्त्या फलनिष्पत्तिः= सुखसिद्धिर्भवतीति सुखमेवात्र फलमिति तेषु= पुत्रादिषु=

पुत्रादिसंबन्धात् फलं प्रीतिलक्षणमुत्पद्यते इति पुत्रादिषु फलवदुपचारो यथाऽन्ने प्राणशब्दः- " अन्नं वै प्राणाः " इति ॥ ५४ ॥

फलानन्तरं दुःखमुद्दिष्टमुक्तं च- " बाधनालक्षणं दुःखम् १-१-२१" इति. तत् किमिदं प्रत्यात्मवेदनीयस्य= सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानम्? आहोस्विदन्यः कल्पः? इति, अन्य इत्याह, कथम् ?, न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखाद् निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति। कया युक्त्या ?, सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्यात् " बाधनालक्षणं दुःखम् १-१-२१" इत्युक्तम्. ऋषिभिर्दुःखसंज्ञाभावनमुपदिश्यते, अत्र च हेतुरुपादीयते—

---

पुत्रादीनां फलवत्= फलत्वेन उपचारः= गौणो व्यपदेशोस्ति- " पुत्रकामो यजेत " इत्यादिस्तथा च सुखस्य तत्कारणस्य चादृष्टस्य सामानाधिकरण्यान्न काप्यनुपपत्तिरिति सूत्रार्थः। व्याचष्टे- पुत्रादीति। पुत्रादिषु= पुत्रादीनाम्। दृष्टान्तमाह- यथेति, यथा- " अन्नं वै प्राणाः " इत्यत्रान्ने प्राणशब्दप्रयोग औपचारिकस्तथा फलभूतसुखजनके पुत्रादौ फलत्वव्यपदेश औपचारिकः- सुखस्यैव फलत्वात् सुखजनकमेव पुत्रादिकं सर्वः समीहते न तु दुःखप्रदमपीति सिद्धं सुखस्य फलत्वमित्यर्थः। सुखस्य तज्जनकादृष्टस्य चात्मनि सामानाधिकरण्यमुक्तमेवेति न कोपि दोषः ॥ ५४ ॥

॥ इति फलविवेचनं समाप्तम् ॥

---

क्रमप्राप्तं दुःखविवेचनमारभते- फलानन्तरमिति। उक्तं दुःखलक्षणं स्मारयति- बाधनेति, तदेतत् पूर्वत्र व्याख्यातम्। प्रकृतमाह- तदिति, प्रत्यात्मेत्युक्तं व्याचष्टे- सर्वेति, संसारस्य यद् दुःखात्मकत्वमुच्यते " दुःखमेव सर्वम् " इत्यादि तेन किं सुखाभावो बोध्यते इत्यर्थः, किं वाऽन्यः कल्पः= सुखमप्यस्ति दुःखमप्यस्ति तत्र दुःखबाहुल्याद् दुःखात्मकत्वमुच्यते इति वा पक्ष इत्यर्थः। सिद्धान्ती द्वितीयकल्पं स्वीकरोति- अन्य इति। सूत्रकार इतिशेषस्तथा चानुपदमेव वक्ष्यति- सुखस्येति। द्वितीयकल्पे उपपत्तिं जिज्ञासते- कथमिति। उपपत्तिमाह- न वै इति, यदा हि सुखप्रत्याख्यानं न संभवति तदोक्तो द्वितीयकल्प एव युक्त इत्यर्थः। ननु यद्यस्ति सुखं तदा सर्वस्य दुःखात्मकत्वं कथमुपदिश्यते ? इत्याशङ्क्य दुःखात्मकत्वोपदेशस्य प्रयोजनमाह- अयमिति, अयं दुःखसंज्ञाभावनोपदेशः= " दुःखमेव सर्वं विवेकिनः " इत्यादिरूपः दुःखत्वानुसंधानोपदेशः दुःखहानार्थः= संसारनिवृत्त्यर्थः= अपवर्गप्राप्त्यर्थ इत्यन्वयः, 'यतमानसंज्ञा व्यतिरेकसंज्ञा' इत्यादिप्रयोगेष्विवात्रापि दुःखसंज्ञेति संज्ञाशब्दप्रयोगो विज्ञेयः, प्रबन्धः= परम्परा, निर्विण्णस्य= विरक्तस्य= खिन्नस्य। दुःखसंज्ञाभावनेन दुःखनिवृत्तिप्रकारं जिज्ञासते- कयेति। उत्तरमाह- सर्वे इति, सत्त्वनिकायाः= देहाः, उत्पत्तिस्थानानि= लोकाः, पुनर्भवः= जन्म, सर्वोप्ययं दुःखसाहचर्यात्= दुःखसंबन्धाद् बाधनानुषक्तः= क्लेशात्मकः= दुःखात्मक इत्यन्वयः। अत्र-" उत्पत्तिः सुखदुःखहेतुभूता विषयसंपत्तिस्तस्याः संस्थानानि= भुवनानि. आसत्यलोकादा चावीचेरिति " इति तात्पर्यटीका। उक्तं दुःखलक्षणं स्मारयति- बाधनेति। दुःखात्मकसंसारस्य निवृत्तये दुःखसंज्ञाभावनमुपदिश्यते- " दुःखमेव सर्वम् " इत्याह- ऋषिभिरिति। संसारस्य दुःखात्मकत्वानुसंधानेन ततो निर्विण्णस्य विरक्तस्य चापवर्ग इत्यर्थः। तदनेन पतञ्जलिसूत्रार्थानुवादेनास्य भाष्यकारस्य तदनन्तरभावित्वं स्पष्टमेव। अग्रिमसूत्रमवतारयति- अत्रेति, अत्र= संसारस्य दुःखात्मकत्वे सूत्रेण हेतुरुपादीयते= उच्यते इत्यन्वयः।

## विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥

जन्म= जायते इति शरीरेन्द्रियबुद्धयः, शरीरादीनां संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः, विविधा च बाधना- हीना मध्यमा उत्कृष्टा चेति. उत्कृष्टा नारकिणां. तिरश्चां तु मध्यमा, मनुष्याणां हीना. देवानां हीनतरा वीतरागाणां च, एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते. दुःखसंज्ञाव्यवस्थानात् सर्वलोकेष्वऽनभिरतिसंज्ञा भवति. अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते. तृष्णाप्रहाणात् सर्वदुःखाद् विमुच्यते इति, यथा विषयोगात् पयो विषमिति बुध्यमानो नोपादत्ते. अनुपाददानो मरणदुःखं नाप्नोति ॥ ५५ ॥

दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानम्, कस्मात् ?—

## सुखस्याप्यन्तरालनिष्पत्तेः ॥ ५६ ॥

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम्, कस्मात् ?, सुखस्यान्तरालनिष्पत्तेः= निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

अथापि—

## बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

---

विविधेति- बहुविधपीडासंबन्धात् जन्मोत्पत्तिः= शरीरोत्पत्तिः= संसारसंबन्धो दुःखम्= दुःखात्मकमेवेति सूत्रान्वयः । व्याचष्टे- जन्मेति, जायते इति जन्म= शरीरादिकम्, उत्पत्तिपदार्थमाह- शरीरादीनामिति, संस्थानविशिष्टानाम्= स्वस्वाकृतिविशिष्टानाम्, बाधनाया वैविध्यमाह- विविधेति, देवानां वीतरागाणां च हीनतरा बाधनेत्यन्वयः । संकलयति- एवमिति, उत्पत्तिस्थानम्= भुवनम्, विविधबाधनानुषक्तम्= विविधदुःखयुक्तम्, जन्मजरामरणादिकृतानि दुःखानि विविधानीति स्पष्टमेव, तत्साधनेषु= सुखसाधनेषु, दुःखसंज्ञा= दुःखात्मकत्वज्ञानं व्यवतिष्ठते= स्थिरं भवति, दुःखसंज्ञाव्यवस्थानात्= दुःखात्मकत्वज्ञानस्थैर्यात्, अनभिरतिसंज्ञा= अप्रियत्वज्ञानं जायते, ततश्च तृष्णा निवर्तते, तृष्णानिवृत्त्या च सर्वदुःखनिवृत्तिर्भवतीत्यन्वयः । अत्र दृष्टान्तमाह- यथेति, पयः= विषसंयुक्तं पयः, तथा च यथा विषसंयुक्तपयसः परित्यागेन मरणदुःखं न भवति तथा दुःखात्मकसंसारस्य परित्यागेन जन्मजरामरणादिदुःखं न भवति मोक्षपदं च प्राप्नोतीत्यर्थः । स्पष्टमन्यत् ॥ ५५ ॥

अग्रिमसूत्रमवतारयति- दुःखेति, प्रमेयगणनासूत्रे सुखोद्देशाभावेपि यो दुःखोद्देशस्तेन सुखस्य प्रत्याख्यानं न क्रियते किं तु दुःखबाहुल्यं सूच्यते इत्यर्थः । उक्ते हेतुं जिज्ञासते- कस्मादिति । सूत्रेण हेतुमाह- सुखस्येति, सुखस्याप्यन्तरालेषु= दुःखाभावकालेषु निष्पत्तेः= प्रत्यक्षसिद्धत्वादिति सुखमप्यस्तीति सूत्रान्वयः । व्याचष्टे- नेति । प्रत्याख्यानम्= प्रत्याख्यानार्थम् । सुखसत्तायां हेतुमाह- सुखस्येति । हेतुवाक्यं व्याचष्टे- निष्पद्यते इति, निष्पद्यते= सिध्यति= प्रत्यक्षमनुभूयते, बाधनान्तरालेषु= दुःखानुभवसंधिषु= दुःखाभावकाले शरीरिणां प्रत्यात्मवेदनीयम्= सर्वजनप्रत्यक्षं सुखम्, तत्= सर्वजनप्रत्यक्षभूतं सुखं प्रत्याख्यातुं न शक्यते- प्रत्यक्षस्य पदार्थस्य प्रत्याख्यानासंभवादित्यन्वयः ॥ ५६ ॥

अग्रिमसूत्रमवतारयति- अथेति, किं चेत्यर्थः । दुःखोद्देशेन सुखस्याप्रत्याख्याने हेत्वन्तरमाह- बाधनेति, वेदयतः= सुखसाधनविषयकज्ञानवतः पुरुषस्य पर्येषणस्य= विषयार्जनतृष्णाया दोषात्= समीहितपदार्थाऽनिष्पत्त्या बाधनायाः= दुःखस्य निवृत्तिर्न भवतीति वैराग्योत्पादनार्थं दुःखसंज्ञाभाव-

-सुखस्य दुःखोद्देशेनेति प्रकरणात्, पर्येषणम्= प्रार्थना= विषयार्जनतृष्णा. पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते. तच्चाऽस्य प्रार्थितं न संपद्यते. संपद्य वा विपद्यते. न्यूनं वा संपद्यते. बहुप्रत्यनीकं वा संपद्यते. इत्येतस्मात् पर्येषणदोषात् नानाविधो मानसः संतापो भवति. एवं वेदयतः पर्येषणदोषाद् बाधनाया अनिवृत्तिः. बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुद्दिश्यते. अनेन कारणेन दुःखं जन्म न तु सुखस्याभावादिति। अथाप्येतदनूक्तम्—

" कामं कामयमानस्य यदा कामः समृध्यते।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते ॥"

" अपि चेदुदनेमि समन्ताद् भूमिमालभते सगवाश्वां न स तेन धनेन धनैषी तृप्यति किं नु सुखं धनकामे " इति ॥ ५७ ॥

## दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥

दुःखसंज्ञाभावनोपदेशः क्रियते, अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते— न सुखादन्यद् निःश्रेयसमस्ति. सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति. मिथ्यासंकल्पात् सुखे तत्साधनेषु च विषयेषु संरज्यते. संरक्तः सुखाय घटते. घटमानस्याऽस्य जन्म-

---

नमुपदिश्यते न तु सुखस्याभावादिति दुःखोद्देशेन सुखस्याऽप्रतिषेधः= प्रत्याख्यानं न संभवतीति सूत्रार्थः। अत्र– " यस्मादयं वेदयन् इदं मे सुखसाधनमिदं मे दुःखसाधनमिति सुखसाधनमाप्तुं दुःखसाधनं हातुं प्रयतते सुखसाधनानां प्राप्तये चास्य यतमानस्याऽनेकविधस्तापोऽनुपप्लवते ततस्तापानुभवात् सर्वं दुःखमित्युच्यते न सुखस्याभावादिति " इति वार्तिकम्। व्याचष्टे– सुखस्येति, ' सुखस्य दुःखोद्देशेन ' इति प्रकरणाल्लभ्यते तस्य " अप्रतिषेधः " इत्यनेनान्वयस्तथा च ' दुःखोद्देशेन सुखस्य न प्रतिषेधः ' इत्यर्थः। पर्येषणपदार्थमाह– प्रार्थनेति, एतदपि व्याचष्टे– विषयेति। पर्येषणस्य दोषमाह– यदयमिति, अयम्= जीवः, वेदयमानः= सुखसाधनं जानानः, प्रार्थयते= सुखसाधनं समीहते, अस्य= उक्तेच्छावतः, तत्= प्रार्थितम्= समीहितम्, पक्षान्तरमाह– संपद्येति, विपद्यते= विनश्यति, पक्षान्तरमाह– न्यूनमिति, पक्षान्तरमाह– बह्विति, बहुप्रत्यनीकम्= बहुविघ्नयुक्तं वा प्रार्थितं संपद्यते इत्यन्वयः। पर्यवसितमाह– इत्येतस्मादिति, पर्येषणदोषात्= अभिलापस्यापूर्त्या नानाविधो मानसः संतापो भवतीत्यन्वयः। उपसंहरति– एवमिति, एवम्= उक्तप्रकारेण वेदयतः= सुखसाधनज्ञानवतः सुखसाधने प्रवृत्त्या उक्तपर्येषणदोषाद् बाधनायाः= दुःखस्य निवृत्तिर्न भवतीति दुःखानिवृत्तेर्दुःखत्वभावनोपदिश्यते तथा चानेन कारणेन= दुःखानिवृत्त्या= दुःखबाहुल्येन ' दुःखं जन्म ' इत्युक्तं न तु सुखस्याभावात्। अथापि= अत एव। उक्ते प्रमाणमाह– काममिति, कामम्= विषयं कामयमानस्य= समीहमानस्य यदा समीहितः कामः समृध्यते= सिध्यति, अथ= तदैवैनम्= कामिनमपरः कामः क्षिप्रम्= शीघ्रमेव प्रबाधते इत्यन्वयः। वाक्यान्तरमुदाहरति– अपीति, उदनेमि= समुद्रपर्यन्तां सगवाश्वामपि यदि पृथिवीं लभते तदापि कामी न तेन तृप्यति तस्माद् धनकामे= विषयकामनायां सु[illegible] नास्तीत्यन्वयः, तथा च कामनादुःखादेव दुःखं जन्मेत्युक्तं न तु सुखाभावादित्यर्थः ॥ ५७ ॥

दुःखसंज्ञाभावनोपदेशस्य कारणमाह– दुःखेति, दुःखविकल्पे= पुत्रकलत्रादिलक्षणविविधदुःखविशेषेषु सुखाभिमानात्= संसारिणां सुखत्वज्ञानात्तत्त्यागेनापवर्गप्राप्त्यर्थं दुःखसंज्ञाभावनमुपदिश्यते न तु सुखस्याभावादिति सूत्रार्थः। व्याचष्टे– दुःखेति, इदं सूत्रस्य शेषवाक्यम्। अयम्= जीवः सुखसंवेदने व्यवस्थितः= सुखानुभवपरायणः, वैषयिकसुखात् मोक्षमप्युत्कृष्टं न मन्यते, चरितार्थः= कृतार्थः, कृतकरणीयः= कृतकृत्यः। धनादिना मे सुखं भविष्यतीत्यादितो मिथ्यासंकल्पात्, संरक्तः= विषयेषु

जराव्याधिप्रायणाऽनिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते तं दुःखविकल्पं सुखमित्यभिमन्यते. सुखाङ्गभूतं दुःखं– न दुःखमनासाद्य शक्यं सुखमवाप्तुम्. तादर्थ्यात् सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञः– 'जायस्व म्रियस्व संधाव' इति संसारं नातिवर्तते. तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते. दुःखानुषङ्गाद् दुःखं जन्मेति न सुखस्याभावात् । यद्येवं कस्मात् 'दुःखं जन्म' इति नोच्यते ?. सोयमेवं वाच्ये यदेवमाह– "दुःखमेव जन्म ५५" इति तेन सुखाभावं ज्ञापयतीति, जन्मविनिग्रहार्थीयो वै खल्वयमेवशब्दः, कथम् ? न दुःखं जन्म स्वरूपतः किं तु दुःखोपचारात्. एवं सुखमपी। एतदऽनेनैव निवर्त्यते न तु दुःखमेव जन्मेति ॥ ५८ ॥

दुःखोपदेशानन्तरमपवर्गः स प्रत्याख्यायते—

**ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥**

---

संरक्तः, घटते= यतते, घटमानस्य= यतमानस्याऽस्य= जीवस्य जन्मादिनाऽनिष्टसंयोगेनेष्टवियोगेन समीहितपदार्थाऽसिद्धया चानेकविधं यावत्= यद् यद् दुःखमुत्पद्यते तं तं दुःखविकल्पम्= दुःखजातम्= दुःखविशेषं सुखमित्यभिमन्यते इत्यन्वयः । दुःखस्यावश्यम्भावे हेतुमाह– सुखाङ्गेति, दुःखं विना सुखं न लब्धुं शक्यतं– दुःखस्य सुखाङ्गत्वादित्यर्थः । सुखसंज्ञोपहतप्रज्ञः= सुखानुभवेन नष्टप्रज्ञः= सुखाभिलाषान्धः तादर्थ्यात्= दुःखस्य सुखार्थत्वाद् दुःखमपि सुखमेवेदमिति मन्यते तेन जायस्व= जायते म्रियस्व= म्रियते संधाव= विविधयोनिषु संधावतीति संसारं नातिवर्तते । उपसंहरति– तदस्या इति, प्रतिपक्षः विरुद्धः, स्पष्टमन्यत् । अत्र– "पुनर्जायते पुनर्म्रियते जनित्वा म्रियते मृत्वा जायते तदिदं संधावनव्यापारप्रचय इत्यर्थः " इति तात्पर्यटीका । शङ्कते– यदीति, यद्येवम्= उक्तरीत्या यदि सुखमप्यस्ति तदा पञ्चपञ्चाशत्सूत्रे 'दुःखं जन्म' इति वक्तव्यमासीत् न तु "दुःखमेव जन्म" इति, सोयम्= सूत्रकारः एवम्= 'दुःखं जन्म' इति वक्तव्ये यदेवमाह– "दुःखमेव जन्म" इति तेन= एवशब्दप्रयोगेण सुखाभावं ज्ञापयतीति तत्र यत् सुखसत्त्वप्रतिपादनं तत् सिद्धान्तविरुद्धमित्यर्थः । सिद्धान्ती समाधत्ते– जन्मविनिग्रहेति, जन्मविनिग्रहार्थीयः= संसारनिवृत्त्यर्थोयम्– "दुःखमेव जन्म" इत्येवशब्दः– एवशब्देन जन्मनः केवलदुःखमयत्वज्ञानेन संसारे हेयत्वबुद्धिः संभवति नान्यथेति हेतोरेव एवशब्दः प्रयुक्तो न तु सुखाभावज्ञापनार्थमित्यर्थः । अत्र– "विनिग्रहः= विनिवृत्तिः स एवार्थः प्रवर्तते इति जन्मविनिग्रहार्थीयः यथा च मत्वर्थीय इति. एतदुक्तं भवति– जन्म दुःखमेवेति भावयितव्यं नात्र मनागपि सुखबुद्धिः कर्तव्या– अनेकानर्थपरम्परापातेनापवर्गप्रत्यूहप्रसङ्गात्" इति तात्पर्यटीका । किं वोक्त एवशब्दोऽयोगव्यवच्छेदपरो नान्ययोगव्यवच्छेदपर इत्यर्थः । उक्ते हेतुं जिज्ञासते– कथमिति । हेतुमाह– नेति, दुःखोपचारात्= दुःखबाहुल्यात्, एवं सुखमपि= जन्म स्वरूपतः सुखात्मकमपि नास्ति किं तु सुखोपचारादेव– सुखदुःखयोरात्मवृत्तित्वेन जन्माभेदासंभवादित्यर्थः । एतत्= जन्म अनेन= दुःखसंभावनेन निवर्त्यते इतिहेतोरेव "दुःखमेव जन्म" इत्युक्तं न तु सुखस्याभावादित्यर्थः । अत्र– "जन्मनोऽनेन विनिग्रहं शास्ति. सर्वं दुःखमिति भावयन् दुःखसाधनानि नोपादत्ते अनुपाददानो विमुच्यते" इतिवार्तिकम् ॥ ५८ ॥

॥ इति दुःखविवेचनं समाप्तम् ॥

---

अपवर्गविवेचनमारभते– दुःखोपदेशानन्तरमिति । सः= अपवर्गः । पूर्वपक्षी अपवर्गाभावमाह– ऋणेति, यज्ञादिलक्षणानामृणानामविद्यादिलक्षणक्लेशानां कर्मलक्षणप्रवृत्तेश्चानुबन्धात्= नैरन्तर्यादपवर्गाभाव इति सूत्रान्वयः, अन्यत्सर्वं भाष्ये स्पष्टमेव, अत्र–"अनुबन्धः= सर्वदा करणीयता" इति वार्तिकम् ।

'ऋणानुबन्धान्नास्त्यपवर्गः=" जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते- ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजाया पितृभ्यः " इति ऋणानि. तेषामनुबन्धः= स्वकर्मभिः संबन्धः- कर्मसंबन्धवचनात्- " जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति= जरया ह एष तस्मात् सत्राद्विमुच्यते मृत्युना ह वा " इति ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यऽपवर्गाभावः। क्लेशानुबन्धान्नास्त्यपवर्गः= क्लेशानुबद्ध एवायं म्रियते क्लेशानुबद्धश्च जायते नास्य क्लेशानुबन्धविच्छेदो गृह्यते। प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः= जन्मप्रभृत्यऽयं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाऽविमुक्तो गृह्यते तत्र यदुक्तम्- " दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः १-१-२ " इति तदनुपपन्नमिति ॥ ५९ ॥

अत्राभिधीयते- यत्तावत् ' ऋणानुबन्धात् ' इति ?. ऋणैरिव ऋणैरिति-—

## प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादः- निन्दाप्रशंसोपपत्तेः ॥६०॥

" ऋणैः " इति नायं प्रधानशब्दः, यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः. न चैतदिहोपपद्यते प्रधानशब्दानुपपत्तेर्गुणशब्देनाय-

---

व्याचष्टे- ऋणेति, ऋणबोधकं श्रुतिवाक्यमाह- जायमान इति, श्रुतौ ऋणत्रयमाह- ब्रह्मचर्येणेति, ब्रह्मचर्यं ऋषीणामृणम्. यज्ञो देवानामृणम्, प्रजा पितॄणामृणं तत् त्रयमपि संपाद्यमित्यर्थः। ऋणानुबन्धमाह- तेषामिति, तेषाम्= उक्तानामृणानाम्, स्वकर्मभिः संबन्धः= संपाद्यत्वम्= स्वकार्यत्वम्। अत्र हेतुमाह- कर्मेति, कर्मसंबन्धवचनात्= अवश्यकर्तव्यत्ववचनात्। वचनमाह- जरेति। जरामर्यपदार्थं श्रुतिः स्वयमेवाह- जरयेति, अग्निहोत्रादिनित्यनैमित्तिककर्मभ्यो जरया वा मृत्युना वा विमुच्यते इति तत्कर्म जरामर्यम्। पर्यवसितमाह- ऋणानुबन्धादिति, अपवर्गानुष्ठानकालः= अपवर्गसाधनानुष्ठानकालः, अपवर्गसाधनं च तत्त्वज्ञानमुक्तमेवेत्यन्वयः। द्वितीयहेतुं व्याचष्टे- क्लेशेति, "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति क्लेशास्तद्युक्तस्यापवर्गो न संभवति- क्लेशानां संसारहेतुत्वात् क्लेशनिवृत्तिश्चास्य= जीवस्य न दृश्यते इत्यपवर्गानुपपत्तिरित्यन्वयः। तृतीयहेतुं व्याचष्टे- प्रवृत्तीति, जन्मप्रभृति= जन्मारभ्य, यावत्प्रायणम्= मरणपर्यन्तम्. प्रवृत्तिमाह- वागिति, तदनुबन्धमाह- अविमुक्त इति, वाग्बुद्धिशरीराणां प्रवृत्त्या= कर्मणा युक्त एव जीवो भवतीति अपवर्गाभाव इत्यन्वयः। उपसंहरति- तत्रेति, तत्र= एवमपवर्गाभावे सिद्धे " दुःखजन्म " इत्यादिसूत्रेण यदपवर्गसत्त्वमुक्तं तदनुपपन्नमित्यन्वयः, स्पष्टमन्यत् सर्वम् ॥ ५९ ॥

अग्रिमसूत्रमवतारयति- अत्रेति, यत्तावत् ऋणानुबन्धादपवर्गाभाव उक्तस्तत्र ब्रह्मचर्यादिकमवश्यानुष्ठेयत्वाद् ऋणसदृशमेव न तु ऋणमेवेति जायमान इति श्रुतौ " ऋणैः " इत्यस्य ऋणैरिव= ऋणसदृशैरित्यर्थ इत्यन्वयः। सिद्धान्ती समाधत्ते- प्रधानेति, प्रधानशब्दानुपपत्तेः= 'जायमानः' 'ऋणैः' इतिश्रुत्युक्तयोः शब्दयोः प्राधान्यस्य= प्रधानार्थपरत्वस्यानुपपत्तेर्गुणशब्देन= जायमान इति ऋणैरिति च गौणेन शब्देन तदर्थस्यानुवादः क्रियते- यागादीनामननुष्ठाने निन्दाया अनुष्ठाने च प्रशंसाया उपपत्तेः= बोधनार्थम्, यथा ऋणस्याऽदाने निन्दा दाने च प्रशंसा तथा यागादीनामपि अकरणे निन्दा करणे च प्रशंसेति यागादीनां ऋणसादृश्यादेव ऋणशब्देन प्रतिपादनमस्तीति ऋणशब्दो गौणः, जायमानशब्दश्च तत्तदाश्रमग्रहणकालपर इति गौण इति चतुर्थाश्रमे तत्त्वज्ञानेनापवर्गसंभवादित्यपवर्गप्रत्याख्यानं नोपपद्यते इतिसूत्रार्थः, अन्यद् भाष्ये स्पष्टम्। उदाहृतश्रुतिघटकस्य ऋणशब्दस्य गौणत्वं व्याचष्टे- ऋणैरिति। ऋणशब्दस्य मुख्यार्थमाह- यत्रेति, प्रत्यादेयम्= पुनर्ग्राह्यं धनम्, प्रतिदेयम्= पुनर्देयम्, तत्र= तादृशधने अस्य= ऋणशब्दस्य दृष्टत्वात्= शक्तिग्रहात् तत्र ऋणशब्दः प्रधानम्- शक्तः, एतादृशार्थयोगश्च इह=

अथ

## न्यायभाष्यचतुर्थाध्यायस्य द्वितीयमाह्निकम्

किं नु खलु भो यावन्तो विषयास्तावत्सु प्रत्येकं तत्त्वज्ञानमुत्पद्यते ? अथ कचिदुत्पद्यते ? इति । कश्चात्र विशेषः ?, न तावदेकैकत्र= यावद्विषयमुत्पद्यते– ज्ञेयानामानन्त्यात्, नापि कचिदुत्पद्यते– यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः– न चान्यविषयेण तत्त्वज्ञानेनाऽन्यविषयो मोहः शक्यः प्रतिषेद्धुमिति । मिथ्याज्ञानं वै खलु मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रं तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति । किं पुनस्तन्मिथ्याज्ञानम् ?, अनात्मन्यात्मग्रहः= अहमस्मीति मोहोऽहङ्कार इति. अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति । किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः ?, शरीरेन्द्रियमनोवेदनाबुद्धयः । कथं तद्विषयोऽहङ्कारः संसारबीजं भवति ?, अयं खलु शरीराद्यर्थजातम् अहमस्मीति व्यवसितः तदुच्छेदेनात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते तदुपाददानो जन्ममरणाय यतते तेनाऽवियोगाद् नाऽत्यन्तं दुःखाद्विमुच्यते इति ।

---

संशयप्रमाणप्रमेयाणां परीक्षणानन्तरं संप्रति प्रथमसूत्रे षोडशपदार्थानां तत्त्वज्ञानादपवर्गप्राप्तिरुक्तेति तत्त्वज्ञानस्य विषयेयत्तां प्रतिपादयितुं जिज्ञासते– किं नु इति, तावत्सुप्रत्येकम्= प्रत्येकपदार्थविषयकं तत्त्वज्ञानमुत्पद्यते= उत्पाद्यम्= संपाद्यम्, अथ= किं वा कचित्= किंचित्पदार्थविषयकं तत्त्वज्ञानं संपाद्यमिति विकल्प इत्यन्वयः । कल्पद्वयस्यास्य विशेषं जिज्ञासते– कश्चेति । कल्पद्वयमपि नोपपद्यते इत्येव विशेष एतादृशविशेषस्य प्रतिपादनार्थं प्रथमकल्पस्यासंभवमाह– न तावदिति, एकैकत्र= पदार्थमात्रस्य तत्त्वज्ञानं न संभवतीत्यर्थः। अत्र हेतुमाह– ज्ञेयानामिति । द्वितीयकल्पे दोषमाह– नापीति, किंचित्पदार्थविषयकेण तत्त्वज्ञानेन सर्वपदार्थविषयकमोहस्य निवृत्तिर्न संभवतीति तत्त्वज्ञानविषयातिरिक्तपदार्थानां मोहस्तदवस्थ एव स्यादित्यपवर्गानुपपत्तिः– मोहस्य संसारहेतुत्वादित्यर्थः । मोहशेषप्रसङ्गेऽत्रोपपत्तिमाह– न चेति । प्रतिषेद्धुम्= निवर्तयितुम् । एवं संशये सिद्धान्तमाह– मिथ्याज्ञानमिति, मिथ्याज्ञानमेव मोहः, यद्विषयकं च मिथ्याज्ञानं संसारकारणं भवति स विषयस्तत्त्वतो ज्ञेय इत्यन्वयः । मिथ्याज्ञानस्वरूपं जिज्ञासते– किं पुनरिति । उत्तरमाह– अनात्मनीति, अत्र "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति योगसूत्रमनुसंधेयम् । उक्तं विशदयति– अहमिति, अनात्मनि= आत्मातिरिक्ते शरीरादौ य आत्मग्रहः= आत्मत्वज्ञानम्= 'अहमस्मि' इति योऽहङ्कारः स मोहः स एव च संसारकारणं मिथ्याज्ञानमित्यर्थः । अहङ्कारस्वरूपमाह– अनात्मानमिति, 'अहं गच्छामि' इत्यादिरूपेणाऽनात्मानम्= शरीरादिकमहमितिपश्यतो या दृष्टिः= शरीरादिषु यदात्मत्वज्ञानं तदेवाहङ्कार इत्यर्थः । अहङ्कारविषयं जिज्ञासते– किं पुनरिति । उत्तरमाह– शरीरेति, अहङ्कारविषया इतिशेषः, तत्र शरीरे यथा– 'कृष्णोहं गौरोहम्' इत्यादिः, इन्द्रियेषु यथा– 'काणोहं बधिरोहम्' इत्यादिः, मनसि यथा– 'अणुपरिमाणोहम्' इत्यादिः, वेदनाशब्देन दुःखप्रदाः पुत्रकलत्रादयो ग्राह्यास्तत्र स्वात्मत्वाभिमानः स्पष्ट एव, बुद्धौ यथा– 'ज्ञानस्वरूपोहम्' इत्यादिरहम्बुद्धिः । एतादृशाहङ्कारस्य संसारकारणत्वकारणं जिज्ञासते– कथमिति । उत्तरमाह– अयमिति, अयम्= उक्ताहङ्कारवान्, व्यवसितः= निश्चिन्वानः, तदुच्छेदेन= शरीरादिविनाशेन, अनुच्छेदतृष्णापरिप्लुतः= शरीराद्यविनाशेच्छाविशिष्टः, तत्= शरीरादिकम्, शरीरादिग्रहणं हि जन्ममरणाय यत्नः– संसारनिर्वाहकत्वात्, तेन= शरीरादिना, तथा चास्याः परम्परायाः मूलमहङ्कार एवेत्यहङ्कार एव संसारबीजमित्यर्थः । स्पष्टार्थमन्यत् ।

वद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति ?, न खलु वै नर्तकोन्धेषु प्रवर्तते न गायनो बधिरेष्विति । उपदिष्टार्थविज्ञानं चोपदेशविषयः= यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते न चैतदस्ति जायमानकुमारके इति । गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति= यच्च मन्त्रब्राह्मणं कर्माभिवदति तत् पत्नीसंबन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नं तस्माद् गृहस्थोयं जायमानोऽभिधीयते इति ॥

अर्थित्वस्य चाविपरिणामे जरामर्यवादोपपत्तिः ।

यावच्चास्य फलेनार्थित्वं न विपरिणमते= न निवर्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्तं प्रतीति. " जरया ह वा " इत्यायुपस्तुरीयस्य= चतुर्थस्य प्रव्रज्यायुक्तस्य वचनम्— " जरया ह वा एष एतस्माद्विमुच्यते " इति. आयुषस्तुरीयम्= चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते— तत्र हि प्रव्रज्या विधीयते, अत्यन्तजरासंयोगे " जरया ह वा " इत्यनर्थकम् । ' अशक्तो विमुच्यते ' इत्येतदपि नोपपद्यते— स्वयमशक्तस्य बाह्यां शक्तिमाह— " अन्तेवासी वा जुहुयात् ब्रह्मणा स परिक्रीतः. क्षीरहोता वा जुहुयाद् धनेन स परिक्रीतः " इति ।

---

तत्रेति । प्रकृतमाह— कुत इति, ऋषिः= परमेश्वरः, उपपन्नानवद्यवादी= उपपन्ननिर्दोषवक्ता उपदेशार्थेन= उपदेशाय प्रयुक्तः= प्रवृत्तः कथं स्तनन्धयस्य कर्म उपदिशति= विदध्यादित्यर्थः, अत्र दृष्टान्तमाह— नेति, निष्फलत्वादितिशेषः । उपदेशफलमाह— उपदिष्टेति, उपदेशविषयः= उपदेशफलम् । एतद्विशदयति— यश्चेति । एतत्= उपदिष्टार्थविज्ञानं कुमारे नास्ति= न संभवति । उक्तजायमानशब्देन गृहस्थग्रहणे उपपत्तिमाह— गार्हस्थ्येति, मन्त्राश्च वेदभागा ब्राह्मणानि चेति मन्त्रब्राह्मणं गार्हस्थ्यमेव लिङ्गं साधकं यस्य तादृशं यागादिकर्म अभिवदति= विदधाति न तु स्तनन्धयकर्तृकमित्यत्र जायमानशब्देन गृहस्थ एव ग्राह्य इत्यर्थः । एतद् व्याचष्टे— यच्चेति, गार्हस्थ्यलिङ्गेनोपपन्नम्= गृहस्थसाध्यम्— सपत्नीकस्यैवाधिकारात् पत्न्या अपि किंचित् कर्तव्यत्वात् । उपसंहरति— तस्मादिति, तस्मादत्र जायमानशब्देन गृहस्थो जायमानो गृह्यते न तु स्तनन्धय इत्यन्वयः । अत्र— " गार्हस्थ्यस्य लिङ्गं पत्नी यस्मिन् कर्मणि तत् तथोक्तम् " इति तात्पर्यटीका ॥

उक्तजरामर्यवादस्योपपत्तिमाह— अर्थित्वेति, अर्थित्वस्य= कर्मफलकामनाया अविपरिणामे= अनिवृत्तौ जरापर्यन्तं वा मरणपर्यन्तं वा कर्म कर्तव्यमित्येवमुदाहृतश्रुत्युक्तस्य जरामर्यवादस्योपपत्तिरस्ति तथा च कामनाया निवृत्तौ मोक्षसाधनानुष्ठानेन मोक्षोपि संभवतीति न मोक्षाभावापत्तिरित्यर्थः । स्वयं व्याचष्टे— यावदिति, फलेनार्थित्वम्= फलार्थित्वम् , तम्= फलार्थिनं प्रति जरामर्यवाद उपपद्यते इत्यन्वयः। जराशब्दग्राह्यमाह— जरयेति, चतुर्थस्य भागस्येत्यर्थः, जराशब्देनात्रायुषश्चतुर्थो भागः प्रव्रज्यायुक्तः= संन्यासाश्रमयुक्तो ग्राह्य इत्यर्थः । उक्तमेव पुनराह— आयुष इति, चतुर्थ खण्डम् । जराशब्देन संन्यासाश्रमयुक्तचतुर्थभागस्य ग्रहणे हेतुमाह— तत्रेति, तत्र= आयुषश्चतुर्थभागे, प्रव्रज्या= संन्यासः । विपक्षे बाधकमाह— अत्यन्तेति, अत्र जराशब्देनात्यन्तजराग्रहणेऽत्यन्तजरासंयोगे मृत्युनैव कर्मभ्यो निवृत्तिः संभवतीति " जरया ह एष तस्माद्विमुच्यते " इत्यनर्थकमेव स्यादिति जराशब्देनात्रायुषश्चतुर्थो भागः प्रव्रज्यायुक्तो ग्राह्य इत्यर्थः । अत्र— " प्रायेण पञ्चसप्ततिवर्षेष्वतिवाहितेषु अर्थतृष्णा तनूभवति. अत्यन्तसंयोगे तु " जरया ह वा " इत्यनर्थकम्— " मृत्युना वा " इत्यनेनैव सिद्धेरितिशेषः " इति तात्पर्यटीका । जराशब्देनाशक्तग्रहणमपि नोपपद्यते येन शक्तिपर्यन्तं कर्मानुबन्धः स्यादशक्तेन चापवर्गसाधनाऽनुष्ठानाऽनुपपत्त्याऽपवर्गाभावः स्यादित्याह— अशक्त इति । उक्ते हेतुमाह— स्वयमिति, श्रुत्या बाह्यशक्तिमाह— अन्तेवासीति, स्वयमशक्तोऽन्तेवासिद्वारा वा क्षीरहोतृद्वारा वा जुहुयादितिश्रुत्या विधानादशक्तस्यापि कर्मभ्यो विमुक्तिर्न संभवतीति नात्र जराशब्देनाशक्तस्यापि ग्रहणमुपपद्यते इति जराशब्देनात्रायुषश्च-

अथापि विहितं वाऽनूद्येत ? कामाद्वार्थः परिकल्प्येत ? विहितानुवचनं न्याय्यमिति, ऋणवानिवाऽस्वतन्त्रो गृहस्थः कर्मसु प्रवर्तते इत्युपपन्नं वाक्यस्य सामर्थ्यम् । फलस्य हि साधनानि प्रयत्नविषयो न फलं. तानि संपन्नानि फलाय कल्पन्ते । विहितं च जायमानं विधीयते च जायमानं तेन यः संबध्यते सोयं जायमान इति ।

प्रत्यक्षविधानाभावादितिचेत् ? न– प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति । 

प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन यदि चाश्रमान्तरमभविष्यत् तदपि व्यधास्यत् प्रत्यक्षतः. प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति, न– प्रतिषेधस्यापि प्रत्यक्षविधानाभावात्= न प्रतिषेधोपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते– 'न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रमः' इति. प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति ॥

---

तुर्योभागः संन्यासाश्रमयुक्तो ग्राह्य इत्यन्वयः । सः= अन्तेवासी, ब्रह्मणा= वेदेन= वेदाध्यापनेन, क्षीरहोता= अध्वर्युस्तथा च कर्कभाष्यम्– "क्षीरहोता प्रत्यस्तमितावयवार्थवृत्तितयाऽध्वर्युरुच्यते" इति, सः= क्षीरहोता= अध्वर्युः, धनेन= दक्षिणया ।

"जायमानः" इति वाक्यं किं कर्मानुष्ठानविधायकमस्ति किं वा विहितस्यानुवादकमस्तीति विचारमारभते– अथेति, "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिवाक्यैर्विहितं कर्मानुष्ठानम् "जायमानः" इतिवाक्येनाऽनूद्येत= अनूद्यते किं वा कामात्= स्वेच्छयाऽत्रार्थः= विधायकत्वं परिकल्प्येत ? तत्र कः पक्षः श्रेष्ठ इति जिज्ञासा । अत्र श्रेष्ठपक्षमाह– विहितेति, "जायमानः" इतिवाक्ये विधिविभक्तेरश्रवणाद् विहितस्यानुवचनम्= अनुवाद एव युक्तस्तथा च विधायकत्वाभावात् जरामर्यवादापत्तेरभावादपवर्गसाधनानुष्ठानेनापवर्गोपपत्तिः सिद्धेत्यर्थः । विधायकत्वाभावेपि वाक्यस्य सार्थक्यमाह– ऋणवानिति, कर्मपरित्यागे गृहस्थस्य स्वातन्त्र्यं नास्ति– कामनानिवृत्त्यनन्तरमेव कर्मपरित्यागसंभवादित्यस्वातन्त्र्यबोधनेनैव "जायमानः" इति वाक्यस्य सामर्थ्यम्= सार्थक्यमुपपन्नमिति न वैयर्थ्यापत्तिरपीत्यर्थः । ननु फलकामना बालस्यापि संभवतीति बालस्याप्यधिकारसंभवात् जायमानशब्देन बालग्रहणं किं न स्यादित्याशङ्क्याह– फलस्येति, बालस्य फलकामनासत्त्वेपि फलसाधनानुष्ठानशक्तेरभावादधिकारो न संभवतीति नात्र जायमानशब्देन बालग्रहणमुपपद्यते इत्यर्थः, साधनानि= यागादीनि प्रयत्नविषयः= प्रयत्नसाध्यानि भवन्ति न च तत्र बालसामर्थ्यम् । तानि= साधनानि, संपन्नानि= सिद्धानि, फलाय कल्पन्ते= फलोत्पादकानि भवन्ति तस्मान्नात्र जायमानशब्दार्थः स्तनन्धयः । न तु फलं प्रयत्नविषयः, अत्र– "साधने तु प्रयत्नव्यापारो दृष्टो न फले यथा पाकसाधनेषु काष्ठादिषु न पाके" इति वार्तिकम् । अत्र जायमानशब्देन गृहस्थग्रहणे उपपत्तिमाह– विहितमिति, "जायमानो ह वै" इति श्रुत्यपेक्षया पूर्वत्रापि तत्प्रकरणे जायमानम्= जायमानशब्दार्थो विहितः उत्तरत्र च विधीयते तादृशपूर्वोत्तरवाक्ययोश्च जायमानशब्देन गृहस्थ एव ग्रहीतुं शक्यते इति तत्र स्पष्टं तथा च तेन= तादृशपूर्वोत्तरवाक्योक्तजायमानेन यो गृहस्थोऽभेदसंबन्धेन संबध्यते स एवात्र जायमानशब्देन गृहस्थो ग्राह्य इत्यर्थः प्रतिभाति, तथा च पूर्वोत्तरवाक्ययोर्जायमानशब्दस्य गृहस्थपरत्वेन प्रकरणसंदंशाभ्यामत्रापि जायमानशब्दो गृहस्थपर एव युक्तो न तु स्तनन्धयपर इत्याशयः, । अत्र– "विहितं च जायमानमिति– ऋणवाक्यात् प्राग् विधीयते च ऋणवाक्यादूर्ध्वमित्यर्थः" इति तात्पर्यटीका ॥

पूर्वत्र या प्रव्रज्योक्ता तत्राशङ्कते– प्रत्यक्षेति, अपवर्गसाधनानुष्ठानयोग्यः संन्यासाश्रमो नास्ति– तस्य प्रत्यक्षवचनेन विधानाभावादित्यपवर्गाभावः प्राप्त इतिचेत् ? न– संन्यासाश्रमप्रतिषेधस्यापि प्रत्यक्षवचनेन विधानाभावादित्यर्थः । स्वयं व्याचष्टे– प्रत्यक्षत इति । संन्यासाश्रमस्याभावमाह– यदीति, तत्= गृहस्थातिरिक्तमाश्रमान्तरम् । निराकरोति– नेति । निषेधहेतुमाह– प्रतिषेधस्येति । हेतुवाक्यं

अधिकाराच्च विधानं विद्यान्तरवत् ॥

यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नाऽर्थान्तराभावाद् एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति । ऋग्ब्राह्मणं चापवर्गाभिधाय्यऽभिधीयते= ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति. ऋचश्च तावत्- " कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः, अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः," " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" " परेण नाकं निहितं गुहायां विभ्राजते तद् यतयो विशन्ति " " वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्. तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय " । अथ ब्राह्मणानि-" त्रयो धर्मस्कन्धाः- यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याऽऽचार्यकुलवासीति तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्वे एवैते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" " एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति" " अथो खल्वाहुः-

---

व्याचष्टे- न प्रतिषेधोपीति । उक्तमेव विशदयति- न सन्तीति, इति= इत्येवम्, प्रतिषेधस्य= गृहस्थातिरिक्ताश्रमप्रतिषेधस्याश्रवणात् यदुक्तं संन्यासाश्रमो नास्तीति तदेतदयुक्तमिति नोक्तरीत्याप्यपवर्गाभावः संभवतीत्यर्थः ॥

गृहस्थाश्रमविधानेनाप्याश्रमान्तराणामभावो न संभवतीत्याह- अधिकारादिति, विद्यान्तरवत्= यथाग्निहोत्रविधानेन ज्योतिष्टोमादीनामभावो न सिध्यति यथा च वेदान्तशास्त्रप्रतिपादनेन योगादिशास्त्राणामभावो न सिध्यति तथा गृहस्थाधिकारयोग्यस्य पुरुषस्य गृहस्थाधिकाराद् गृहस्थाश्रमविधानमस्तीति न तेन विधानेन संन्यासाद्याश्रमाणामभावः संभवतीत्यर्थः । स्वयं व्याचष्टे- यथेति, शास्त्रान्तराणि= योगादिशास्त्राणि स्वे स्वेऽधिकारे= स्वस्वविषयाणां सत्त्वादेव विधायकानि भवन्ति न तु अर्थान्तराभावात्= शास्त्रान्तरविषयस्याभावात्, प्रकृतमाह- एवमिति, इदं ब्राह्मणम्= " जायमानो ह वै" इति ब्राह्मणवाक्यम् तच्च गृहस्थशास्त्रम्- गृहस्थकर्मबोधकत्वात्, स्वेधिकारे= स्वविषयस्य गृहस्थाश्रमस्य गृहस्थानुष्ठेयस्य वा । अपवर्गे श्रुतिं प्रमाणयति- ऋगिति, अभिधीयते= प्रदर्श्यते । उक्तं व्याचष्टे- ऋचश्चेति, ऋचश्च ब्राह्मणानि च ऋग्ब्राह्मणम् । ऋचमाह- कर्मभिरिति, मृत्युम्= संसारम्, निषेदुः= प्रापुः । प्रजावन्तः= प्रजेच्छावन्तो द्रव्येच्छावन्तश्च ऋषय इत्यन्वयः । अपवर्गमाह- अथेति, मनीषिणः= तत्त्वज्ञानवन्तः, कर्मभ्यः परम्= अप्राप्यम्. अमृतत्वम्= अपवर्गम्. आनशुः= प्रापुः । उक्तार्थे ऋगन्तरमाह- न कर्मणेति । ऋगन्तरमाह- परेणेति, परेण नाकम्= स्वर्गात्= परे गुहायां निहितं मोक्षपदं विभ्राजते तत्र यतयो गच्छन्तीत्यर्थः । श्रुत्यन्तरमाह- वेदाहेति, तमसः परस्तात्= अविद्यातः प्रकृतेर्वा परम् । तम्= उक्तपरमात्मानमेव विदित्वाऽतिमृत्युमेति= मृत्युम्= संसारमत्येति= मोक्षपदं प्राप्नोति, मोक्षप्राप्तेः साधनान्तराभावमाह- नान्य इति, अयनाय= मोक्षपदप्राप्तये अन्यः= परमात्मज्ञानातिरिक्तः पन्था= उपायो नास्तीत्यर्थः । ब्राह्मणवाक्यान्याह- त्रय इति, त्रयः= ब्रह्मचर्यगृहस्थवानप्रस्था एते त्रय आश्रमा धर्मस्कन्धाः= धर्माश्रयाः= धर्मप्रधानाः । आश्रमत्रयमाह- यज्ञ इत्यादिना, यज्ञादिपरो गृहस्थाश्रमः प्रथमः प्राथम्यं चास्य सर्वाश्रमाधारत्वात् सर्वाश्रमिजीवकत्वाचोक्तम्- वस्तुतो ब्रह्मचर्यस्य प्राथम्यादिति विज्ञेयम् । द्वितीयस्तप एवेति वानप्रस्थाश्रम उक्तः, तृतीयो ब्रह्मचारी तस्य द्वौ भेदौ- सामान्यब्रह्मचारी नैष्ठिकब्रह्मचारी चेति । अध्ययनशब्दश्चाधीतवेदावृत्तिपरः । आश्रमत्रयमुपसंहरति- सर्वे इति, एते सर्वे= ब्रह्मचारिगृहस्थवानप्रस्थाः पुण्यलोकाः= स्वर्गाधिकारिणो भवन्ति । चतुर्थाश्रममाह- ब्रह्मसंस्थ इति, ब्रह्मसंस्थः= ब्रह्मोपासको मोक्षं प्राप्नोतीत्यर्थः । प्रव्रज्याबोधकवाक्यमाह- एतमिति, प्रव्राजिनः= संन्यासिनः, एतं लोकम्= मोक्षपदम् । कर्मभिः संसारप्राप्तिबोधकवाक्यमाह-

काममय एवायं पुरुष इति स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति– "इति तु कामयमानोऽथाऽकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति" इति, तत्र यदुक्तम्– 'ऋणानुबन्धादपवर्गाभावः' इति एतदयुक्तमिति । "ये चत्वारः पथयो देवयानाः" इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः । फलार्थिनश्चेदं ब्राह्मणम्– "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च" इति ॥ ६० ॥

कथम् ?—

## समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥

"प्राजापत्यामिष्टिं निरुप्य तस्यां सर्ववेदसं हुत्वा आत्मन्यग्नीन् समारोप्य ब्राह्मणः

---

अथो इति, काममयः= कामनाप्रधानः, पुरुषः= जीवः, सः= पुरुषः, यथाकामः= यादृशकामनाविशिष्टो भवति तथाक्रतुः= स्वकामनाविषयकसंकल्पवान् भवति, यथाक्रतुः= यादृशसंकल्पवान् भवति तत्= स्वसंकल्पानुकूलं कर्म कुरुते यत्= यादृशं कर्म कुरुते तत्= तादृशमेव फलमभिसंपद्यते= लभते इत्यर्थस्तथा च कर्मणां क्षयित्वात् कर्मभिः क्षयिफलस्य प्राप्तिर्भवतीत्याह– इतिकर्मभिरिति, संसरणम्= संसारप्राप्तिम् । अपवर्गबोधकवाक्यमाह– इति तु इति, इति= पूर्वोक्तः पुरुषः । अपवर्गाधिकारिणमाह– अकामयमान इति, आत्मकामः= आत्मज्ञानवान्, अपवर्गकाम इति वार्थः, अपवर्गाधिकारिणः स्वर्गादिलोकाऽप्राप्तेः प्राणा नोत्क्रामन्ति किं तु इहैव वायौ लीना भवन्ति अपवर्गाधिकारी तु ब्रह्मभूतः= ब्रह्मभावनायुक्तो ब्रह्म प्राप्नोतीत्यर्थः । उपसंहरति– तत्रेति, तत्र= उक्तरीत्यापवर्गबोधकवेदवाक्यानां सत्त्वेपि ऋणानुबन्धादपवर्गाभावो य उक्त स नोपपद्यते इत्यन्वयः । आश्रमचतुष्टयबोधकवाक्यमाह– ये इति, पथयः= आश्रमाः, देवयानाः= देवलोकप्रापकाः । स्ववक्तव्यमाह– चातुराश्रम्यश्रुतेरिति, चातुराश्रम्यश्रुतेः= उक्तसंन्यासाद्याश्रमचतुष्टयश्रुतिसत्त्वात् ऐकाश्रम्यस्य= गृहस्थाश्रममात्रस्यानुपपत्तिरित्यर्थः । जरामर्यवादबोधकवाक्याधिकारिणमाह– फलार्थिन इति, फलार्थिना पुरुषेण जरापर्यन्तं मरणपर्यन्तं वा कर्म कर्तव्यमित्येव श्रुत्या प्रतिपाद्यते फलेच्छारहितेन च प्रव्रज्याश्रमेऽपवर्गसाधनानुष्ठानं कर्तव्यमिति वेदेन प्रतिपादनादपवर्गाभावो न सिध्यतीत्यर्थः । अन्यत्सर्वं स्पष्टार्थमेव भाष्यम् । अत्र– "परेण नाकमिति. नाकमित्यविद्यामुपलक्षयति अविद्यातः परमित्यर्थः, निहितं गुहायामिति लौकिकप्रमाणागोचरत्वं प्रदर्शयति, तमसः परस्तादिति अविद्या तमस्तस्य परस्तात्, आदित्यवर्णमिति नित्यप्रकाशमित्यर्थः, तदनेनेश्वरप्रणिधानस्यापवर्गोपायत्वमुक्तम्, यज्ञ इत्यादिना गृहस्थाश्रमो दर्शितः, तप एवेति वानप्रस्थाश्रमः, ब्रह्मचारीति ब्रह्मचर्याश्रमः, चतुर्थाश्रममाह– ब्रह्मसंस्थ इति, तथाक्रतुरिति क्रतुः संकल्पः" इति तात्पर्यटीका । "फलार्थिनश्चेदम्" इत्यादिभाष्यमग्रिमसूत्रस्यावतरणमपि संभवतीति विभाव्यम् ॥ ६० ॥

फलार्थिनः कर्मणां जरामर्यवाद इत्युक्ते हेतुं जिज्ञासते– कथमिति । सूत्रेण हेतुमाह– समारोपणादिति, कर्माश्रयभूतानामाहवनीयाद्यग्नीनामात्मनि समारोपणात्= समारोपणविधानात् संन्यासाश्रमप्रतिषेधो न संभवति– अग्नीनामात्मनि समारोपणस्य संन्यासाश्रमग्रहणार्थमेव विधानात् तेन संन्यासाश्रमे सिद्धेऽपवर्गोपि सिद्धः– संन्यासाश्रमस्यापवर्गार्थत्वात् तथा च कर्मणां जरामर्यवादः फलार्थिनं प्रत्येवेति सिद्धमिति सूत्रार्थः । व्याचक्षाणोऽग्नीनामात्मनि समारोपणविधायकवाक्यमुदाहरति– प्राजापत्यामिति, निरुप्य= आरभ्य, सर्ववेदसम्= सर्वस्वदक्षिणं यागम्, तस्मिन् यागे सर्वस्वं ब्राह्मणेभ्यो

प्रव्रजेत् " इति श्रूयते तेन विजानीमः- प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयते इति, एवं च ब्राह्मणानि- " सोऽन्यद् व्रतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमितिहोवाच- प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणीति. अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज " इति ॥ ६१ ॥

## पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

जरामर्ये च कर्मण्यऽविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते तत्रैषणाव्युत्थानं न श्रूयेत- " एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोक इति. ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति" इति, एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति नाऽविशेषेण कर्तुः प्रयोजकं फलं भवतीति । चातुराश्रम्यविधानाचेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः ।

---

दत्वा ब्राह्मणः= ब्रह्मनिष्ठः= मोक्षकामः प्रव्रजेत्= संन्यस्येत् । स्वाभिप्रायमाह- तेनेति, पुत्रैषणावित्तैषणालोकैषणाभ्यो व्युत्थितस्य= निवृत्तस्य, एषणा= इच्छा, लोकैषणा= कीर्त्तीच्छा, फलार्थित्वे निवृत्तेऽग्नीनामात्मनि समारोपणविधानात् फलार्थिनं प्रत्येव कर्मणां जरामर्यवाद इति सिद्धमित्यर्थः । एवं च= उक्तार्थकानि, उक्ते ब्राह्मणवाक्यमुदाहरति- स इति, अन्यद्व्रतम्= संन्यासाश्रमम् , उपाकरिष्यमाणः= आचरिष्यमाणः, स्वभार्यां मैत्रेयीम् , ज्येष्ठभार्यया कात्यायन्या सहान्तम्= सहवासम् , एतावत्= उपनिषदि पूर्वोक्तम् । तदनेन संन्यासाश्रमस्तेन तत्साध्योपवर्गश्च सिद्ध इत्यर्थः ॥ ६१ ॥

नन्वग्नीनामात्मनि समारोपणेन कर्मणामपवर्गप्रतिबन्धकत्वाभावेपि पूर्वकृतकर्मणां फलं स्वर्गादिकमपवर्गप्रतिबन्धकं भविष्यतीत्याशङ्क्याह- पात्रेति, अग्निहोत्रादिकर्मपरायणस्य मृतस्य शरीरे यज्ञपात्राणां चयनं भवति श्रूयते हि- " स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति " इति सा चान्त्येष्टिः पूर्वकृतकर्मणामङ्गभूतेति तस्यां कृतायामेव स्वर्गादिफलं भवति- साङ्गस्यैव फलप्रदत्वनियमात् तत्र संन्यासाश्रमप्रविष्टस्य तादृशपात्रचयनं न भवतीति पात्रचयान्तानाम्= पात्रचयनान्तानां कर्मणामनुपपत्तेः= असंभवात्= अभावात् पूर्वकृतकर्मणां फलाभाव इति न स्वर्गादिकं फलमपि संन्यासिनोऽपवर्गप्रतिबन्धकमिति सूत्रार्थः, प्रारब्धं कर्म च न्यायमते एकजन्मभोग्यं भवतीति भोगेन क्षीणमिति विज्ञेयम् । व्याचष्टे- जरामर्ये इति, जरामर्यपर्यन्तं क्रियमाणं कर्म जरामर्यं तस्मिन् अविशेषेण= सर्वेषाम् , यदि सर्वेषामेव मरणपर्यन्तं कर्म श्रुतिविहितं स्यात्तदा एषणापरित्यागः= संन्यासो न श्रूयेत श्रूयते च संन्यासोपीति न मरणपर्यन्तं सर्वं प्रति कर्मविधानं किं तु फलार्थिनं प्रत्येवेत्यर्थः । एषणापरित्यागबोधकश्रुतिमाह- एतद्धेति, अयमात्मा= आत्मज्ञानम् , अयं लोकः= मोक्षपदम् , भिक्षाचर्यम्= प्रव्रज्याम् । स्ववक्तव्यमाह- एषणाभ्य इति, एषणाभ्यो व्युत्थितस्य= संन्यासिनोऽग्नीनामभावात् पात्रचयनं न संभवतीति पात्रचयनान्तानां कर्मणामभावः प्राप्तस्तेन अविशेषेण= सामान्यरूपेण फलं कर्तुः प्रयोजकम्= कर्तृमात्रस्य= पुरुषमात्रस्य प्रयोजकं= प्रवर्तकं कर्मणि न भवतीत्यर्थः, अत्र- "तस्मान्नाविशेषेण कर्तुः प्रयोजकं फलं भवतीति- फलाभाव इत्यस्य सूत्रावयवस्याऽविशेषेण फलस्य कर्तृप्रयोजकत्वाभाव इत्यर्थः " इति तात्पर्यटीका । पूर्वपक्षिणा यदुक्तम्- एको गृहस्थाश्रम एवेति तत्र बाधकमाह- चातुराश्रम्येति, इतिहासादिषु चतुर्णामप्याश्रमाणां विधानादेको गृहस्थाश्रम एवेत्यनुपपन्नम् , संन्यासाश्रमाभावेऽपवर्गसाधनानुष्ठानासंभवादपवर्गाभाव इति प्रकृतेन पूर्वपक्षेण संबन्धः ।

## तदप्रमाणमितिचेत् ? न— प्रमाणेन प्रामाण्याभ्यनुज्ञानात् ।

प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते— "ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन् इतिहासपुराणं पञ्चमं वेदानां वेदः" इति. तस्मादयुक्तमेतत्— अप्रामाण्यमिति । अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपात् लोकोच्छेदप्रसङ्गः, द्रष्टृप्रवक्तृसामान्याच्चाऽप्रामाण्यानुपपत्तिः= ये एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति । विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्= अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति= यज्ञो मन्त्रब्राह्मणस्य. लोकवृत्तमितिहासपुराणस्य. लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः, तत्रैकेन न सर्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥ ६२ ॥

यत्पुनरेतत्— क्लेशानुबन्धस्याविच्छेदादिति—

## सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते तथाऽपवर्गेपीति, एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति ॥ ६३ ॥

---

ननु तत्— इतिहासादिकमप्रमाणमिति न चातुराश्रम्यविधानं संभवतीत्याशङ्कते— तदिति । निराकरोति— नेति । हेतुमाह— प्रमाणेनेति, प्रमाणेन= वेदेन "इतिहासपुराणं पञ्चमं वेदानां वेदः" इत्यादिना इतिहासादिप्रामाण्यस्याऽभ्यनुज्ञानात्= प्रतिपादनादित्यर्थः । स्वयं व्याचष्टे— प्रमाणेनेति । श्रुतिमाह— ते वेति । अथर्वाङ्गिरसो ऋषिविशेषाः । अप्रामाण्यम्= इतिहासादीनामप्रामाण्यमयुक्तमित्यन्वयः । धर्मशास्त्रस्याऽप्रामाण्ये बाधकमाह— अप्रामाण्ये चेति, लोकस्थितेर्व्यवहाराधीनत्वाद् व्यवहारस्य च धर्मशास्त्राधीनत्वादित्याशयः । इतिहासादीनामप्रामाण्ये बाधकान्तरमाह— द्रष्ट्रीति, सामान्यात्= ऐक्यात्, उक्तं व्याचष्टे— ये एवेति, ये ऋषयः, मन्त्रब्राह्मणस्य= मन्त्रभागस्य ब्राह्मणभागस्य च, यदि मन्वाद्युक्तस्य धर्मशास्त्रादेः प्रामाण्यं न स्यात्तदा मन्वाद्युपदिष्टस्य वेदस्यापि प्रामाण्यं न स्यात् न चैतदिष्टमिति सिद्धं धर्मशास्त्रादीनां प्रामाण्यमित्यर्थः । धर्मशास्त्रादीनां प्रामाण्यव्यवस्थामाह— विषयेति, इतिहासादीनां विषयस्य व्यवस्थासत्त्वाद् यथाविषयम्= स्वस्वविषये प्रामाण्यमित्यर्थः । उक्तं विशदयति— अन्य इति । उक्तमपि व्याचष्टे— यज्ञ इति, लोकवृत्तम्= पूर्वलोकवृत्तान्तः= चरित्रम् तस्येतिहासपुराणप्रतिपाद्यत्वात् । उपसंहरति— तत्रेति, एकेनेतिहासादिना, यथाविषयम्= स्वस्वविषये, एतानि= इतिहासादीनि । यथा समक्षे इन्द्रियाणां प्रामाण्यं परोक्षे च लिङ्गस्य प्रामाण्यमलौकिके च शब्दस्य तथा यज्ञादिषु मन्त्रब्राह्मणस्य लोकवृत्ते इतिहासपुराणस्य लोकव्यवहारे च धर्मशास्त्रस्य प्रामाण्यमित्यादि सिद्धम्, तथा चेतिहासादीनामपि प्रामाण्यात् तत्रोक्तं चातुराश्रम्यं प्रामाणिकमेवेति न संन्यासाश्रमाभावोऽपवर्गाभावश्च सिध्यतीत्यर्थः ॥ ६२ ॥

द्वितीयमपवर्गाभावसाधकहेतुमनुवदति— यत्पुनरिति, यत्पुनः क्लेशानुबन्धाऽविच्छेदादपवर्गाभाव उक्तस्तत्र सूत्रेण बाधकमाहेत्यर्थः । सुषुप्तस्येति— सुषुप्तस्य स्वप्नादर्शने= सुषुप्तिकाले प्रवृत्त्यभावात् क्लेशाभावः स्पष्ट एव तथा च यथा सुषुप्तिकाले क्लेशानुबन्धविच्छेदो भवति तथैषणाभ्यो व्युत्थितस्यापि क्लेशानुबन्धविच्छेदः संभवतीति तेनापवर्गसाधनानुष्ठानेनापवर्गः सिद्ध इति सूत्रार्थः । व्याचष्टे— यथेति, सुखानुबन्धविच्छेदप्रतिपादनेनाऽसुखात्मकत्वमपवर्गस्याभिप्रेतीति न्यायदर्शने स्पष्टमेव । प्रकृतमाह— तथेति, क्लेशानुबन्धविच्छेदः संभवतीत्यर्थः । प्रकृतदृष्टान्तस्याभिप्रायमाह— एतदिति, एतत्= सुषुप्तिकालिकम् .

यदपि प्रवृत्त्यनुबन्धादिति—

न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य ॥ ६४ ॥

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसंधानाय, प्रतिसंधिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म तच्चाऽदृष्टकारितं तस्यां प्रहीणायां जन्मान्तराभावः= अप्रतिसंधानम्= अपवर्गः ।

कर्मवैफल्यप्रसङ्ग इतिचेत् ? न– कर्मविपाकप्रतिसंवेदनस्याऽप्रत्याख्यानात् ।

पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते, सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्ते इति ॥ ६४ ॥

न– क्लेशसंततेः स्वाभाविकत्वात् ॥ ६५ ॥

नोपपद्यते क्लेशानुबन्धविच्छेदः, कस्मात् ?, क्लेशसंततेः स्वाभाविकत्वात्= अनादिरियं क्लेशसंततिः न चानादिः शक्य उच्छेत्तुमिति ॥ ६५ ॥

अत्र कश्चित् परीहारमाह—

प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥

यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी क्लेशसंततिरनित्येति ॥ ६६ ॥

---

आत्मनो यादृशं रूपं सुषुप्तौ भवति तादृशमेव ब्रह्मविदो मुक्तस्य= मोक्षावस्थायां भवति तत्र सुषुप्तौ क्लेशानुबन्धो न दृश्यते इत्यपवर्गेपि क्लेशाभावः सिद्ध इत्याशयः ॥ ६३ ॥

तृतीयमपवर्गाभावसाधकहेतुमनुवदति– यदपीति, प्रवृत्त्यनुबन्धादपवर्गाभाव इति यदुक्तं तदपि नोपपद्यते इत्यर्थः । सूत्रेण निराकरोति– नेति, हीनक्लेशस्य पुरुषस्य प्रवृत्तिः= कर्म प्रतिसंधानाय= पुनर्जन्मसंपादकं न भवतीति न प्रवृत्त्यनुबन्धोपवर्गप्रतिबन्धक इतिसूत्रार्थः । व्याचष्टे– प्रक्षीणेष्विति । प्रतिसंधिपदार्थमाह– प्रतिसंधिरिति । तत्= पुनर्जन्म, तस्याम्= प्रवृत्तौ, अप्रतिसंधानम्= जन्मान्तराभाव एवापवर्ग इति सिद्धोऽपवर्गः, स्पष्टं सर्वम् ॥

नन्वेवं जन्मान्तराभावे कृतकर्मणां वैफल्यं स्यात्– जन्म विना कर्मफलभोगासंभवादित्याशङ्कते– कर्मेति । निराकरोति– नेति । हेतुमाह– कर्मेति, अपवर्गप्रतिपादनेन कर्मविपाकप्रतिसंवेदनस्य= कर्मफलभोगस्य प्रत्याख्यानं न क्रियते तथा च यज्जन्मोत्तरमपवर्गस्तज्जन्मन्येव पूर्वकृतकर्मणां फलभोगसमाप्तिर्भवति– प्रारब्धकर्मणामेकजन्मभोग्यत्वादिति न कृतकर्मणां वैफल्यप्रसङ्ग इत्यर्थः । स्वयं व्याचष्टे– पूर्वेति । कर्मफलभोगकालमाह– सर्वाणीति, अन्ते= अपवर्गात् पूर्वस्मिन्, विपच्यन्ते= फलदानि भवन्ति । स्पष्टमन्यत् ॥ ६४ ॥

अपवर्गं पूर्वपक्षी निराकरोति– नेति, अपवर्गो न संभवति– अपवर्गप्रतिबन्धिकायाः क्लेशसंततेः स्वाभाविकत्वात्= अनादित्वात् अनादिभावस्य च निवृत्तेरसंभवादात्मवदिति सूत्रान्वयः । व्याचष्टे– नोपपद्यते इति । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– क्लेशसंततेरिति । उक्तं व्याचष्टे– अनादिरिति । पर्यवसितमाह– न चेति, पदार्थ इतिशेषः, स्पष्टं सर्वम् ॥ ६५ ॥

अग्रिमसूत्रमवतारयति– अत्रेति । उक्तमेकदेशिमतेन प्रत्याचष्टे– प्रागिति, प्रागुत्पत्तेरभावस्य= प्रागभावस्य यथाऽनादित्वेप्यनित्यत्वं तथा स्वाभाविकेपि= अनादिभूताया अपि क्लेशसंततेरनित्यत्वम्= विनाशित्वं संभवतीति क्लेशनिवृत्तेः संभवात् सिद्धोऽपवर्ग इति सूत्रान्वयः । व्याचष्टे– यथेति, प्रागुत्पत्तेरभावः= प्रागभावः । भावेन= तत्प्रतियोगिना । अनित्या= विनाशयोग्या । स्पष्टं सर्वम् ॥ ६६ ॥

## अणुश्यामताऽनित्यत्ववद्वा ॥ ६७ ॥

अपर आह– यथाऽनादिरणुश्यामता अथ चाग्निसंयोगादनित्या तथा क्लेशसंततिरपीति ॥ ६७ ॥

सतः खलु धर्मो नित्यत्वमनित्यत्वं च तत्त्वं भावेऽभावे भाक्तमिति। 'अनादिरणुश्यामता' इति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति।

अयं तु समाधिः—

## न– संकल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

'कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्च' इति समुच्चयः, मिथ्यासंकल्पेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते, कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान् रागद्वेषमोहान् निर्वर्तयति– नियमदर्शनात्= दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुलः कश्चिद् द्वेषबहुलः कश्चिद् मोहबहुलः इति, इतरेतरनिमित्ता च रागादीनामुत्पत्तिः= मूढो रज्यति मूढः

---

ननु प्रागभावस्याऽभावत्वादनादित्वेऽप्यनित्यत्वं संभवति क्लेशसंततिश्च भावरूपा अनादिभावस्य तु विनाशोऽनुपपन्न इति न क्लेशसंततेर्विनाशः संभवति– अनादिभावत्वादित्याशङ्क्याह– अणुश्यामतेति, यथाऽणोः= परमाणोः श्यामताया अनादिभावत्वेऽप्यग्निसंयोगेनाऽनित्यत्वम्= विनाशो भवति तथाऽनादिभावरूपाया अपि क्लेशसंततेर्विनाशः संभवतीति नापवर्गानुपपत्तिरिति सूत्रार्थः। व्याचष्टे– अपर इति, अनित्या= विनश्यति। प्रकृतमाह– तथेति, अनित्येत्यन्वयः। स्पष्टं सर्वम् ॥ ६७ ॥

प्रागभावदृष्टान्तमुक्तं दूषयति– सत इति, तत्त्वम्= नित्यत्वमनित्यत्वं च, तत्र नित्यत्वं भावे भाक्तम्= स्थितम् अनित्यत्वं चाभावे तथा च प्रागभावस्याऽभावत्वादेवानादित्वेऽप्यनित्यत्वाद्विनाशः संभवति, क्लेशसंततिश्च भावरूपेति तस्या अनादित्वेन नित्यत्वं प्राप्तं तथा च तद्विनाशोऽनुपपन्न इत्यपवर्गाऽनुपपत्तिरित्यर्थः। अणुश्यामतादृष्टान्तं दूषयति– अनादिरिति, अणुश्यामताया अनादित्वे हेतुर्नास्ति– पार्थिवरूपमात्रस्य पाकजत्वेन सादित्वात् क्लेशसंततिश्चानादिरिति न तत्राऽणुश्यामतादृष्टान्तो घटते इत्यर्थः। अनुत्पत्तिधर्मकस्य= अनादिपदार्थस्यानित्यत्वं नोपपद्यतेऽन्यथात्मादेरप्यनित्यत्वं स्यादिति नाऽनादिभूतायाः क्लेशसंततेर्विनाशः संभवतीत्यपवर्गानुपपत्तिरित्याह– अनुत्पत्तीति, इति नात्र= इत्यत्र नेत्यन्वयः, श्यामता च पार्थिवे एव परमाणौ संभवति न जलादिपरमाणावपीति स्मर्तव्यम्। अत्र– "प्रथममेकदेशिनं दूषयति– सतः खल्विति, द्वितीयमेकदेशिनं दूषयति– अनादिरणुश्यामतेति, तदेवमेकदेशिनौ दूषयित्वा परमसमाधिमाह– अयं तु समाधिः" इति तात्पर्यटीका।

अग्रिमसूत्रमवतारयति– अयमिति। नेति– रागादिक्लेशनिवृत्तेरनुपपत्तिर्नास्ति– रागादीनां संकल्पनिमित्तत्वात्, तथा च तत्त्वज्ञानात् मिथ्यासंकल्पनिरोधे जाते रागादिक्लेशानामपि निरोधो भवतीति सिद्धोऽपवर्ग इति सूत्रार्थः। व्याचष्टे– कर्मेति। समुच्चयः= सूत्रघटकचकाराद् ग्रहणमित्यर्थस्तथा च 'रागादीनां संकल्पनिमित्तत्वात् कर्मनिमित्तत्वाद् इतरेतरनिमित्तत्वाच्च' इत्यन्वयः। संकल्पनिमित्तत्वमुदाहरति– मिथ्येति, रञ्जनीयाः= लोकदृष्टया सुखप्रदा इष्टपदार्थविषयकाः, कोपनीयाः= दुःखप्रदा द्विष्टपदार्थविषयकाः, मोहनीयाः= अज्ञानप्रधाना निद्रालस्यादिविषयकाः संकल्पास्तेभ्यो यथाक्रमं रागद्वेषमोहा जायन्ते। रागादीनां कर्मनिमित्तत्वमुदाहरति– कर्म चेति, सत्त्वनिकायनिर्वर्तकम्= शरीरकारणीभूतम्, निर्वर्तयति= उत्पादयति। हेतुमाह– नियमेति। रागादीनां नैयमिकत्वमुदाहरति– दृश्यते इति, कश्चित् सत्त्वनिकायः= देहो रागबहुलो यथा कपोतादीनामिति रागनियमः, कश्चिद् देहो मोहबहुलो यथाऽजगरादीनामिति मोहनियमः, कश्चिद् देहो द्वेषबहुलो यथा सर्पादीनामिति द्वेषनियम

कुप्यति. रक्तो मुह्यति. कुपितो मुह्यति। सर्वमिथ्यासंकल्पानां तत्त्वज्ञानादनुत्पत्तिः कारणानुत्पत्तौ च कार्यानुत्पत्तेरिति रागादीनामत्यन्तमनुत्पत्तिरिति।

'अनादिश्च क्लेशसंततिः' इत्यऽयुक्तम्— सर्वे इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयो. न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात्। न चैवं सत्यऽनुत्पत्तिधर्मकं किंचिद् व्ययधर्मकं प्रतिज्ञायते इति। कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृताद् मिथ्यासंकल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति सुखदुःखसंवित्तिफलं तु भवतीति ॥ ६८ ॥

॥ इति वात्स्यायनविरचिते न्यायभाष्ये चतुर्थाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

---

इतिशेषः। रागादीनामितरेतरनिमित्तत्वमुदाहरति— इतरेतरेति। उक्तं विशदयति— मूढ इति, यत्र मूढो रज्यति तत्र मोहाद्रागः, मूढः कुप्यतीति मोहाद् द्वेषः, रक्तो मुह्यतीति रागाद् मोहः, कुपितो मुह्यतीति द्वेषाद् मोहो जायते इति इतरेतरनिमित्तत्वं सिद्धम्. एवं रक्तो कुप्यति कुपितो रज्यति यथा पुत्रादिष्वितिशेषः। सूत्रार्थमुपसंहरति— सर्वेति, अनुत्पत्तिः= निरोधः, कारणानुत्पत्तौ= रागादिकारणीभूतानां मिथ्यासंकल्पानां निरोधे कारणाभावे कार्याभावनियमात् रागादीनां निरोधस्तेनापवर्ग इति नापवर्गानुपपत्तिरित्यन्वयः।

पूर्वपक्षं निराकरोति— अनादिरिति, अनादिश्च क्लेशसंततिः= "क्लेशसंततेः स्वाभाविकत्वात् ६५" इति यदुक्तं तदयुक्तमित्यर्थः, अत्र हेतुमाह— सर्वे इति, यथाऽनादिभूतानां शरीरादीनां निवृत्तिर्भवति तथाऽनादिभूतायाः क्लेशसंततेरपि निवृत्तिः संभवतीत्याशयः, आत्मानमाश्रित्य प्रवृत्ता आध्यात्मिका भावाः शरीरादयः, पूर्वपूर्वशरीराणां सत्त्वादनादिना प्रबन्धेन प्रवर्तन्ते— पदार्थमात्रस्यानादित्वात्। विपक्षे बाधकमाह— न जात्विति, अनुत्पन्नपूर्वः= यः कदापि पूर्वं नोत्पन्नः प्रथममेवोत्पद्येत स पदार्थो नास्ति अन्यत्र तत्त्वज्ञानात्= तत्त्वज्ञानं विना= तत्त्वज्ञानं तु पूर्वमनुत्पन्नमेवोत्पद्यते— तत्त्वज्ञानानन्तरं जन्मासंभवादिति शरीरादिवत् क्लेशसंततेरपि निवृत्तिः संभवति— अनादित्वस्याविशेषादित्यर्थः। अत्र— "यदपीदमुच्यते— अनादिः क्लेशसंततिरिति, तन्न— अविशेषात्= यथाऽनादिः क्लेशसंततिरेवमाध्यात्मिका भावा सर्वेऽनादिना प्रबन्धेन प्रवर्तन्ते न जात्वनुत्पन्नपूर्वं कश्चिदुत्पद्यते" इति वार्तिकम्। नन्वेवमनादिभूतानामात्मादीनामपि निवृत्तिः स्यादित्याशङ्क्याह— न चैवमिति, एवमपि किंचिदनुत्पत्तिधर्मकमपि व्ययधर्मकम्= विनाशीति न प्रतिज्ञायते इत्यन्वयः, आत्मादिकमनुत्पत्तिधर्मकं तस्य व्ययधर्मकत्वम्= विनाशित्वं न प्रतिज्ञायते किं तूत्पत्तिधर्मकस्य. क्लेशसंततिश्चानादिभूताप्युत्पत्तिधर्मिकेति तस्या निवृत्तिः संभवतीत्यर्थः। नन्वेवं मिथ्यासंकल्पनिमित्तानां रागादीनां निवृत्तिसंभवेपि कर्मणां तु तत्त्वज्ञानान्निवृत्तिर्न संभवतीति तत्त्वज्ञाने जातेपि कर्मनिमित्तानां रागादीनां कथं निवृत्तिः स्यादित्याशङ्क्याह— कर्म चेति, शरीरकारणीभूतं कर्मापि तत्त्वज्ञानाद् मिथ्यासंकल्पनिरोधे जाते रागाद्युत्पादकं न भवति— रागादीनां तत्त्वज्ञानेन विरोधादित्यर्थः। तत्त्वज्ञानानन्तरं कर्मफलमाह— सुखेति, तत्त्वज्ञानानन्तरं कर्म सुखदुःखप्रतीतिमात्रजनकं भवति रागादिजनकं च न भवतीति तत्त्वज्ञाने जातेऽपवर्गप्रतिबन्धकस्याभावात् शास्त्रप्रतिपाद्यत्वाच्च सिद्धोऽपवर्ग इतिसंक्षेपः ॥ ६८ ॥

॥ इत्यपवर्गविवेचनं समाप्तम् ॥

॥ इति प्रमेयविवेचनं च समाप्तम् ॥

॥ इति न्यायभाष्यप्रसन्नपदायां चतुर्थाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

मनुवादः— ऋणैरिव ऋणैरिति, प्रयुक्तोपमं चैतद् यथा— "अग्निर्माणवकः" इति= अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाग्निशब्दो माणवके। कथं गुणशब्देनानुवादः ?, निन्दा-प्रशंसोपपत्तेः= कर्मलोपे ऋणीव ऋणाऽदानाद् निन्द्यते. कर्मानुष्ठाने च ऋणीव ऋणदानाद् प्रशस्यते स एवोपमार्थ इति।

"जायमानः" इति गुणशब्दः— विपर्ययेऽनधिकारात्= "जायमानो ह वै ब्राह्मणः" इति च शब्दो गृहस्थः संपद्यमानः, जायमान इति= यदायं गृहस्थो जायते तदा कर्मभिरधि-क्रियते— मातृतो जायमानस्यानधिकारात्= यदा तु मातृतो जायते कुमारो न तदा कर्मभि-रधिक्रियते— अर्थिनः शक्तस्य चाधिकारात्= अर्थिनः कर्मभिरधिकारः— कर्मविधौ कामसंयोग-स्मृतेः— "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्येवमादि, शक्तस्य च प्रवृत्तिसंभवात्= शक्तस्य कर्मभिरधिकारः— प्रवृत्तिसंभवात्= शक्तः खलु विहिते कर्मणि प्रवर्तते नेतर इति।

**उभयाभावस्तु प्रधानशब्दार्थे।**

मातृतो जायमाने कुमारे उभयम्= अर्थिता शक्तिश्च न भवतीति, न भिद्यते लौकिकाद् वाक्याद् वैदिकं वाक्यम्— प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन, तत्र लौकिकस्तावदपरीक्षकोपि न जातमात्रं कुमारमेवं ब्रूयात्— 'अधीष्व यजस्व ब्रह्मचर्यं चर' इति. कुत एष ऋषिरुपपन्नाऽन-

---

यागादौ नोपपद्यते इति न यागादौ ऋणशब्दः प्रधानमित्याह— न चेति। प्राधान्यानुपपत्तेश्च गौणोयं शब्दोऽनुवादक इत्याह— प्रधानेति, गौणत्वस्वरूपमाह— ऋणैरिवेति। गौणत्वकारणमाह— प्रयुक्तेति, उपमया प्रयुक्तमिति प्रयुक्तोपमम्= सादृश्यमूलकम् ऋणपदम्। उदाहरति— यथेति। उक्तं व्याचष्टे— अन्यत्रेति, यथाग्निशब्दो वह्निवाचको माणवके प्रयुज्यते इति गौणः तथाऽन्यत्र= प्रतिदेयपदार्थे दृष्टः= गृहीतशक्तिकोयमृणशब्द इह= यागादौ ऋणसादृश्यात् प्रयुज्यते इति गौणः। गौणशब्दप्रयोगहेतुं जिज्ञासते— कथमिति। हेतुमाह— निन्देति। हेतुवाक्यं व्याचष्टे— कर्मेति, यथा ऋणी ऋणाऽदानाद् निन्द्यते तथा कर्मलोपे= कर्माकरणे गृहस्थो निन्द्यते कर्मानुष्ठाने च प्रशस्यते अयमेवात्र सादृश्यपदार्थ इति यागादीनां ऋणेन सादृश्यबोधनार्थमेव गौणेन ऋणशब्देनानुवादः— अवश्यानुष्ठेयत्वादित्यन्वयः।

उक्तश्रुतिघटकजायमानशब्दस्य गौणत्वमुपपादयति— जायमान इति, उक्ते हेतुमाह— विपर्ययेति, विपर्यये= मुख्यार्थपरत्वे यदि जायमानशब्देन जन्मकालिको बालो गृह्येत तदा तस्य न कर्मस्वधिकारः संभवति— कर्मानुष्ठानसामर्थ्यादेरभावादिति यागादिपक्षे जायमानशब्देन गृहस्थः संपद्यमानो ग्राह्यः— तस्य कर्मस्वधिकारसंभवादित्यर्थः, उक्तं व्याचष्टे— यदायमिति, कर्मभिः= कर्मसु। मुख्यार्थपरत्वे बाधकमाह— मातृत इति, एतदपि व्याचष्टे— यदेति। जातमात्रस्यानधिकारे हेतुमाह— अर्थिन इति, एतदपि विशदयति— अर्थिन इति। उक्ते हेतुमाह— कर्मेति, कामसंयोगस्मृतेः= "स्वर्गकामः" इत्यादिरूपेण फलकामनायाः श्रवणात्। अधिकारिणः शक्तत्वविशेषणमाह— शक्तस्येति। एतद् व्याचष्टे— शक्तस्येति। हेतुमाह— प्रवृत्तीति। पुनर्व्याचष्टे— शक्त इति, नेतरः= न बालोऽशक्तः कामनारहितश्च ग्राह्य इति जायमानशब्दो गृहस्थाश्रमप्राप्तपर इत्यन्वयः॥

जायमानशब्दस्योक्तस्य मुख्यार्थग्रहणे बाधकमाह— उभयेति, प्रधाने जायमानशब्दस्यार्थे= जात-मात्रकुमारे अर्थित्वशक्त्योरुभयोरप्यभाव इति न सोऽत्र जायमानशब्देन ग्राह्य इत्यर्थः। स्वयं व्याचष्टे— मातृत इति। बालार्थं कर्मविधानासंभवमुपपादयति— न भिद्यते इति। वेदवाक्यानां लौकिकवाक्य-सादृश्ये हेतुमाह— प्रेक्षेति, प्रेक्षापूर्वकारी= विचारपूर्वकवक्ता परमेश्वरस्तत्प्रणीतत्वेन। स्वाभिप्रायमाह—

यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति स दुःखं परिजानाति परिज्ञातं च दुःखं प्रहीणं भवति- अनुपादानात् सविषान्नवत्, एवं दोषान् कर्म च दुःखहेतुरिति पश्यति। न चाऽप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति. प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसंधानायेत्युक्तम्, प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषांश्च प्रहेयान्, अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानम्. एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्य=अभ्यस्यतः= भावयतः सम्यग्दर्शनम्= यथाभूतावबोधः= तत्त्वज्ञानमुत्पद्यते ॥

एवं च—

## दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥

शरीरादि दुःखान्तं प्रमेयं दोषनिमित्तम्, तद्विषयत्वान्मिथ्याज्ञानस्य तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमऽहङ्कारं निवर्तयति- समानविषये तयोर्विरोधात्. एवं तत्त्वज्ञानात् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः १-१-२" इति, स चायं शास्त्रार्थसंग्रहोऽनूद्यते नाऽपूर्वो विधीयते इति ॥ १ ॥

---

तत्त्वज्ञानवतो व्यतिरेकमाह किं वा तत्त्वज्ञानोत्पत्तिप्रकारमाह- यस्त्विति, दुःखायतनम्= शरीरादिकं दुःखप्रदमिति पश्यति, सुखं च दुःखानुषक्तम्= दुःखमिश्रमिति पश्यति, सः= उक्त तत्त्वज्ञानवान्, प्रहीणम्= परित्यक्तं भवति, हेतुमाह- अनुपादानादिति । दृष्टान्तमाह- सविषान्नवदिति। उपसंहरति- एवमिति । संसारदुःखनिवृत्त्यर्थं रागादिदोषाणां त्याज्यत्वमाह- न चेति, तत्त्वज्ञानवानितिशेषः। दोषत्यागेन संसारनिवृत्तिमाह- प्रहीणेषु चेति, प्रवृत्तिः= कर्म, प्रतिसंधानाय= पुनर्जन्मार्थं न भवतीति प्रथमाह्निकेऽत्र "न प्रवृत्तिः ६४" इतिसूत्रेणोक्तमित्यन्वयः। उक्तं संकलयति- प्रेत्येति, प्रेत्यभावः= पुनर्जन्म, फलम्= कर्मफलम्, दुःखम्= संसारदुःखमेतानि ज्ञेयानीति तत्त्वज्ञानवान् व्यवस्थापयति= निश्चिनोति- एतेषां त्यागे सामर्थ्याभावात्, कर्माणि दोषाश्च प्रहेया इति व्यवस्थापयतीत्यन्वयः, किं वा सूत्रकारो व्यवस्थापयतीत्यर्थः। किं वा कर्म च दोषांश्च प्रहेयान् जानीयादित्यर्थः। अत्र- "तदेवमुक्तेन प्रकारेण मोहतत्त्वज्ञानयोः संसारापवर्गहेतुभावो यस्मात्तस्माद् मोक्षमाणैः प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयतीत्यादि पूर्वोपसंहारः" इति तात्पर्यटीका। तस्य= अपवर्गस्य। उपसंहरति- एवमिति, संसारो हेयस्तत्कारणं कर्माणि दोषाश्च, अपवर्गः प्राप्यस्तत्प्राप्तिकारणं तत्त्वज्ञानमित्येवं चतुर्धा विभक्तं प्रमेयमासेवमानस्य तत्त्वज्ञानमुत्पद्यते- हेयादीनां हेयत्वाद्यभ्यासात् इत्यन्वय इत्युपोद्घातभाष्यम् ॥

प्रथमसूत्रमवतारयति- एवमिति, यतः शरीरादीनां तत्त्वज्ञानाभावादहङ्कारो जायते एवम्= अतः शरीरादीनां तत्त्वज्ञानादहङ्कारो निवर्तते इत्यर्थः। अहङ्कारनिवृत्त्युपायमाह- दोषेति, दोषकारणकानां शरीरादीनां तत्त्वज्ञानात्= यथार्थस्वरूपज्ञानात्= विनाशित्वदुःखमयत्वाऽनात्मत्वादिज्ञानादहङ्कारो निवर्तते ततोऽपवर्गसाधकं तत्त्वज्ञानम्= आत्मज्ञानं जायते इतिसूत्रार्थः। व्याचष्टे- शरीरेति, शरीरादि= शरीरमारभ्य दुःखान्तम्= दुःखपर्यन्तं प्रमेयसूत्रोक्तं प्रमेयजातं दोषनिमित्तकमस्ति। मिथ्याज्ञानस्य शरीरादिविषयकत्वात्= शरीरादिष्वात्मत्वज्ञानमेव मिथ्याज्ञानमित्यात्मत्वज्ञानविषयत्वमापन्नाः शरीरादयोऽहङ्कारमुत्पादयन्तीत्यर्थः अत एव तदिदम्= शरीरादिविषयकम्, तद्विषयम्= शरीरादिविषयकम्, उक्ते हेतुमाह- समानेति, तयोः= तत्त्वज्ञानाहङ्कारयोः, तत्त्वज्ञानाद् मिथ्याज्ञानं निवर्तते ततश्चाहङ्कारो

प्रसंख्यानानुपूर्व्या तु खलु—

दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते. ते मिथ्या संकल्प्यमाना रागद्वेषमोहान् प्रवर्तयन्ति तान् पूर्वं प्रसंचक्षीत, तांश्च प्रसंचक्षाणस्य रूपादिविषयो मिथ्यासंकल्पो निवर्तते, तन्निवृत्तौ अध्यात्मं शरीरादि प्रसंचक्षीत, तत्प्रसंख्यानादध्यात्मविषयोऽहङ्कारो निवर्तते. सोय-मध्यात्मं वहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते ॥ २ ॥

अतः परं काचित् संज्ञा हेया काचिद् भावयितव्येत्युपदिश्यते, नार्थनिराकरणमर्थो-पादानं वा, कथमिति—

तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

तेषाम्= दोषाणां निमित्तं त्ववयव्यभिमानः, सा च खलु स्त्रीसंज्ञा सपरिष्कारा पुरु-षस्य पुरुषसंज्ञा च स्त्रियाः, परिष्कारश्च= निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च, निमित्तसंज्ञा= रसनाश्रोत्रं दन्तोष्ठं चक्षुर्नासिकम्, अनुव्यञ्जनसंज्ञा= इत्थं दन्तौ इत्थमोष्ठाविति, सेयं संज्ञा

---

निवर्तते इति क्रमः। उपसंहरति– एवमिति, तत्त्वज्ञानाद् मिथ्याज्ञानमपैति इत्येवमन्वयः, एवं तत्त्वज्ञाना-दपवर्गः सिद्ध इत्यर्थः। स्वसिद्धान्तस्य श्रुतिसिद्धत्वमाह– स चेति, शास्त्रार्थसंग्रहः= वेदप्रतिपाद्यार्थ एवानू-द्यते न तु नूतनं किंचिद्विधीयते, श्रूयते च "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादि। स्पष्टमन्यत्॥१॥

अग्रिमसूत्रमवतारयति– प्रसंख्यानेति, प्रसंख्यानम्= ज्ञानं तदानुपूर्व्या= कः पदार्थः प्रथमं विज्ञेयः कश्च तदनन्तरमिति ज्ञानक्रमबोधनार्थं सूत्रमुच्यते इत्यर्थः। दोषनिमित्तमाह– दोषेति, रूपादयो विषयाः संकल्पकृताः= संकल्पविषयीभूता दोषनिमित्तम्= रागादिदोषाणामुत्पादका भवन्तीति सूत्रार्थः। व्याचष्टे– कामेति, तदेतद् रूपादिपदार्थव्याख्यानम्, कामविषयाः= कामनाविषयाः, इन्द्रियार्थाः= इन्द्रियग्राह्या विषया रूपादय इत्युच्यन्ते इत्यन्वयः, ते= रूपादयः, प्रवर्तयन्ति= उत्पादयन्ति, तान्= रूपादीन्, प्रसंचक्षीत= तत्त्वतो जानीयात्। तान्= रूपादीन् प्रसंचक्षाणस्य= तत्त्वतो जानानस्य, वस्तुतो रूपादीनां दुःखप्रदत्वादितिशेषः। तन्निवृत्तौ= रूपादिविषयकमिथ्यासंकल्पनिवृत्तौ, अध्यात्मम्= अध्यात्मभूतम्= अहन्त्वाभिमानविषयम्, तत्प्रसंख्यानात्= शरीरादितत्त्वज्ञानात्, अध्यात्मविषयः= शरीरादिविषयकः, अहङ्कारः= अहन्त्वाभिमानः, तदनेनाहङ्कारनिवृत्त्युपायक्रम उक्तः। उपसंहरति– सोयमिति, अयम्= तत्त्वज्ञानवान्, अध्यात्मम्= शरीरादिषु. वहिः= रूपादिषु च विविक्तचित्तः= विवेकवान्= मिथ्यासंकल्परहितो विहरन्= कर्मफलं भुञ्जानो मुक्तः= जीवन्मुक्त इत्युच्यते इत्यन्वयः॥२॥

अग्रिमसूत्रमवतारयति– अत इति, संज्ञाशब्दोयं विषयपरो विषयज्ञानपरो वा विज्ञेयः, संज्ञायते इति संज्ञा विषयः, सम्यक् ज्ञायतेऽनेनेति संज्ञा ज्ञानम्। भावयितव्या= अनुसंधेया। अकर्तव्यमाह– नार्थेति, उपादानम्= उपपादनम्. अत्र कस्यापि पदार्थस्योपपादनं निराकरणं वा न प्रतिपाद्यते किं तु भावनीयत्वमभावनीयत्वं च प्रतिपाद्यते इत्यर्थः। उक्तसंज्ञानां हेयत्वभाव्यत्वयोर्हेतुं जिज्ञासते– कथमिति, किमर्थमित्यर्थः। किं वा कथम्= केन प्रकारेण हेया भावयितव्या चेत्यर्थः। अत्र– "दन्तत्वादितद्विशिष्टा विषयाः संज्ञाः" इति तात्पर्यटीका। तदिति– अवयविषु= भोग्यव्यक्तिषु यथा नायिकादिदेहेषु अभिमानः= अभिमतत्वज्ञानम्= भोग्यत्वज्ञानं तत्= तेषाम्= रागादिदोषाणां निमित्तम्= उत्पादकं भवतीत्येतादृशोभिमानः परित्याज्य इतिसूत्रार्थः। व्याचष्टे– तेषामिति। दोषनिमित्तमवयव्यभिमान-मुदाहरति– सेति, स्त्रीसंज्ञा= स्त्रीलक्षणो विषयः पुरुषस्य रागादिहेतुर्भवति. पुरुषसंज्ञा= पुरुषलक्षणो विषयश्च स्त्रियाः रागादिहेतुर्भवतीत्यन्वयः। परिष्कारस्य द्वैविध्यमाह– परिष्कारश्चेति। निमित्तसंज्ञा-

कामं वर्धयति तदनुपक्तांश्च दोपान् विवर्जनीयान् । वर्जनं त्वस्या भेदेनावयवसंज्ञा= केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा तामशुभसंज्ञेत्याचक्षते. तामस्य भावयतः कामरागः प्रहीयते. सत्येव च द्विविधे विपये काचित् संज्ञा भावनीया काचित् परिवर्जनीयेत्युपदिश्यते यथा विपसंपृक्तेऽन्ने अन्नसंज्ञोपादानाय विपसंज्ञा प्रहाणायेति ॥ ३ ॥

अथेदानीमर्थं निराकरिष्यताऽवयविन्युपपाद्यते—

## विद्याऽविद्याद्वैविध्यात् संशयः ॥ ४ ॥

सदसतोरुपलम्भाद् विद्या द्विविधा. सदसतोरनुपलम्भादऽविद्यापि द्विविधा, उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात् संशयः. अनुपलभ्यमाने चाऽविद्याद्वैविध्यात् संशयः, सोयमऽवयवी यद्युपलभ्यते अथापि नोपलभ्यते न कथंचन संशयाद् मुच्यते इति ॥ ४ ॥

## तदसंशयः- पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

तस्मिन्नऽनुपपन्नः संशयः, कस्मात्?, पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति॥५॥

---

मुदाहरति- रसनेति, अवयवा एव रागादिहेतवो भवन्तीति दन्ताद्यवयवा निमित्तसंज्ञा । अनुव्यञ्जनसंज्ञामुदाहरति- इत्थमिति, अनु= पश्चात्= अवयवदर्शनानन्तरमवयवसौन्दर्य्यं व्यज्यते इत्यनुव्यञ्जनसंज्ञा सौन्दर्य्यम् । इत्थम्= ईदृशौ । पर्यवसितमाह- सेयमिति, संज्ञा= अवयवतत्सौन्दर्य्यज्ञानम् तदनुपक्तान्= कामानुपक्तान् दोपान्= रागादीन् विवर्जनीयानपि वर्धयतीत्यन्वयः । निवृत्तिप्रकारमाह- वर्जनमिति, अस्याः= उक्तसंज्ञायाः, अवयवानां भेदेन= पार्थक्येनानुसंधानात् कामो निवर्तते इत्यर्थः । उदाहरति- केशेति, ताम्= एनाम्= भेदेनावयवसंज्ञाम् । अस्य पुरुपस्य तामशुभसंज्ञां भावयतः कामरागः= विपयरागः प्रहीयते इत्यन्वयः । विपयद्वैविध्यं च शुभाशुभसंज्ञाभेदेन विज्ञेयं तच्चोदाहृतमेव । भावनीया अशुभसंज्ञा. परिवर्जनीया शुभसंज्ञा, श्रूयते हि- "हीयतेर्थाद् यो वै प्रेयो वृणीते" इति । उदाहरति- यथेति, अन्नसंज्ञा= भोज्यत्वज्ञानमुपादानाय= ग्रहणाय भवति, विपत्वज्ञानं च त्यागाय तथा स्त्रीशरीरस्यापि सुन्दरत्वेन समष्ट्या भावनं कामाय भवति मांसशोणिताद्यवयवैर्भावनं परित्यागाय भवति, स्पष्टमन्यत् ॥ ३ ॥

अग्रिमसूत्रमवतारयति- अथेति, अर्थम्= अवयविनं निराकरिष्यता बौद्धेनावयववादिनाऽवयविनि संशय उपपाद्यते इत्यन्वयः । विद्येति- सद्विपयकत्वेनासद्विपयकत्वेन च विद्यायाः= उपलब्धेरविद्याया अनुपलब्धेश्च द्वैविध्यात् अवयविनि सत्त्वासत्त्वयोः संशयः, असदप्युपलभ्यते शुक्तिरजतादिकमित्युपलभ्यमानस्याप्यवयविनः सत्त्वं न निश्चेतुं शक्यते. सदपि नोपलभ्यते कूपे पतितमित्यनुपलभ्यमानस्याप्यवयविनः सत्त्वं संभवतीति यद्यवयवी उपलभ्यते यदि च नोपलभ्यते उभयथापि तस्य सत्त्वासत्त्वसंशयो न निवर्तते इतिसूत्रार्थः । व्याचष्टे- सदसतोरिति, विद्या= ज्ञानम्, सतः= घटादेः, असतः= शुक्तिरजतादेः । अविद्याद्वैविध्यमाह- सदसतोरिति, सतः= कूपे पतितस्य, असतः= शशविपाणादेश्चानुपलब्धिः स्पष्टैव । समन्वयति- उपलभ्यमाने इति, उपलभ्यमानोऽवयवी सद्वाऽसद्वेति संशयः- सदसतोरुभयोरप्युपलभ्यमानत्वात्, अनुपलभ्यमानो प्यवयवी सद्वाऽसद्वेति संशयः- सदसतोरुभयोरप्यनुपलभ्यमानत्वसंभवादित्यर्थः । उपसंहरति- सोयमिति, अथापि= यदि च, अवयविनि सत्त्वासत्त्वयोः संशयो न निवर्तते इति सत्त्वं न सिध्यतीत्यर्थः ॥ ४ ॥

उक्तं सिद्धान्ती प्रत्याचष्टे- तदिति, तत्= तस्मिन्= अवयविनि संशयो नोपपद्यते- पूर्वहेतुभिः= द्वितीयाध्यायप्रथमाह्निके "सर्वाग्रहणम् ३४" इत्यादिसूत्रोक्तैर्हेतुभिरवयविनः प्रसिद्धत्वात्= सिद्धत्वादिति सूत्रार्थः । व्याचष्टे- तस्मिन्निति, तस्मिन्= अवयविनि । असंशये हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- पूर्वोक्तेति, तदेतत् द्वितीयाध्यायप्रथमाह्निके द्रष्टव्यम्, द्रव्यान्तरम्= अवयवातिरिक्तोऽवयवी तदारम्भः= तदुत्पत्तिः सिद्धेत्यर्थः ॥ अवयविसाधनरोगग्रस्तौ चैतौ सूत्रकारभाष्यकारौ ॥ ५ ॥

## वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥

वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः– नास्त्यवयवीति ॥ ६ ॥

तद्विभजते—

## कृत्स्नैकदेशाऽवृत्तित्वादवयवानामवयव्यऽभावः ॥ ७ ॥

एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्तते– तयोः परिमाणभेदादऽवयवान्तरसंबन्धाभावप्रसङ्गाच्च, नाप्यवयव्येकदेशे– न ह्यस्यान्ये अवयवा एकदेशभूताः सन्तीति ॥ ७ ॥

अथावयवेष्ववयवी वर्तते ?—

## तेषु चाऽवृत्तेरवयव्यभावः ॥ ८ ॥

न तावत् प्रत्यवयवं वर्तते– तयोः परिमाणभेदाद् द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात्, नाप्येकदेशे– सर्वेष्वन्यावयवाभावात्, तदेवं न युक्तः संशयः– नास्त्यवयवीति ॥ ८ ॥

---

पूर्वपक्ष्युत्तरमाह– वृत्तीति, उक्तरीत्या वक्ष्यमाणरीत्या चावयविनोऽवयवेषु वृत्तिः= स्थितिर्नोपपद्यते नाप्यन्यत्रेत्यवयविनोऽसत्त्वमेव सिध्यतीत्यसत्त्वनिश्चयेनापि संशयो न संभवति= असत्त्वनिश्चयादेव संशयो निवर्तते न सत्त्वनिश्चयादिति सूत्रार्थः । व्याचष्टे– वृत्तीति, यतोऽवयवी नास्ति तस्मादवयविनः संशयानुपपत्तिः– निश्चयस्य संशयनिवर्तकत्वनियमात्, अवयव्यभावनिश्चये चावयविनो वक्ष्यमाणा वृत्त्यनुपपत्तिर्हेतुरित्यर्थः ॥ ६ ॥

अग्रिमसूत्रमवतारयति– तदिति, तत्= वृत्त्यनुपपत्तिं त्रिभिः सूत्रैः पूर्वपक्षी विभजते= विभागेन प्रतिपादयतीत्यर्थः । अवयवानामवयविनि वृत्त्यनुपपत्तिमाह– कृत्स्नेति, अवयवानां कृत्स्ने= सकलेऽवयविनि वृत्तिर्नोपपद्यते– कस्य चिदप्यवयवस्य सकलेऽवयविनि व्यापकत्वासंभवात्, नाप्यवयव्येकदेशे वृत्तिरुपपद्यते– अवयवान्तरस्याऽवयव्येकदेशभूतेऽवयवान्तरे वृत्तेरसंभवादिति अवयव्यऽभावः सिद्ध इतिसूत्रार्थः । व्याचष्टे– एकैक इति । उक्ते हेतुमाह– तयोरिति, तयोः= अवयवावयविनोः परिमाणभेदात् अवयव्यपेक्षयाऽवयवस्याल्पपरिमाणत्वेन तादृशावयवेनावयविनो व्यापनं न संभवति तथा चावयविपूर्तिर्न स्यादित्यर्थः, हेत्वन्तरमाह– अवयवान्तरेति, यद्येकेनावयवेनावयविव्यापनं स्यात्तदा तत्रावयवान्तरस्य वृत्तिर्न स्यात् न चैकेनावयवेनावयवी संभवतीत्यर्थः । द्वितीयपक्षं निराकरोति– नापीति, अवयवानामवयव्येकदेशेपि वृत्तिर्न संभवतीत्यन्वयः । अत्र "नाप्यवयव्येकदेशेन" इतिपाठान्तरं तच्चासंगतमेव– अवयवानामवयविनि वृत्त्यनुपपत्तिनिरूपणस्य प्रक्रान्तत्वात् । अत्र– "अवयव्येकदेशेनेति– अवयविनो ये एकदेशास्तेनावयवोऽवयविनि वर्तते इत्यर्थः" इतितात्पर्यटीका । अत्र हेतुमाह– न हीति, यद्यस्य= अवयविनः एकदेशभूता अन्येऽवयवा स्युस्तदा तत्रैषामवयवानां वृत्तिः स्यादपि न चैवमस्ति, न चावयवान्तरे अवयवान्तरस्य वृत्तिः संभवति– समानत्वात्, नापि स्वस्मिन्नित्यवयवानां वृत्त्यनुपपत्तेरवयव्यभावः सिद्ध इत्यर्थः ॥ ७ ॥

नन्ववयवेष्ववयवी वर्तते नावयवा अवयविनीति नोक्तदोषापत्तिरित्याह– अथेति । अत्रापि पूर्वपक्षी दोषमाह– तेष्विति, तेषु= अवयवेष्वपि अवयविनो वृत्तिर्नोपपद्यते इत्यवयव्यभावः सिद्ध इति सूत्रान्वयः, अन्यद् भाष्ये स्पष्टम् । व्याचष्टे– न तावदिति, अवयवीतिशेषः, तथाहि न तावत् प्रत्यवयवं वृत्तिरवयविनः संभवति– अवयविनोऽवयवभेदेनानेकत्वप्रसङ्गात्, तयोः= अवयवावयविनोः परिमाणभेदाद् अल्पपरिमाणेऽवयवेऽवयविनो वृत्तेरसंभवात्, द्रव्यस्य= प्रत्येकमवयवस्य एकद्रव्यत्वप्रसङ्गात्= अवयवित्वप्रसङ्गादित्यन्वयः । किं वा द्रव्यस्य= अवयविनः एकद्रव्यत्वप्रसङ्गात्= एकावयववृत्तित्वेन निरवयवत्वप्रसङ्गात् अनेकावयववृत्तित एव सावयवत्वसंभवात्, न चावयविनो निरवयवत्वमुपपद्यते इति नायं पक्षो युक्त

## पृथक् चावयवेभ्योऽवृत्तेः ॥ ९ ॥

पृथक् चावयवेभ्यः= धर्मिभ्यो धर्मस्याग्रहणादिति समानम् ॥ ९ ॥

## न चावयव्यवयवाः ॥ १० ॥

## एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

किं प्रत्यवयवं कृत्स्नोऽवयवी वर्तते अथैकदेशेनेति नोपपद्यते प्रश्नः, कस्मात् ?, एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेः= 'कृत्स्नम्' इत्यनेकस्याशेषाभिधानम्. 'एकदेशः' इति नानात्वे कस्यचिदभिधानम्, ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते– भेदाभावादिति ॥ ११ ॥

---

इत्यर्थः, अत्र– "अवयविनश्चैकद्रव्यताप्रसङ्गात्= एकावयववृत्तित्वादेकद्रव्योऽवयवी प्राप्नोति. एकद्रव्यश्चावयवी एकेन द्रव्येण ( अवयवेन ) आरभ्यते इति सततोत्पत्तिप्रसङ्गः" इतिवार्तिकम् । किंचिदवयववृत्तित्वं निराकरोति– नापीति, अवयवी एकदेशे= अवयवसमुदायैकदेशे= कस्मिंश्चिदवयवेपि न वर्तते इत्यर्थः, अत्र हेतुमाह– सर्वेष्विति, अवयवी यत्रैकत्रेशे वर्तेत तत्र स्वावयवैः सहैव वर्तेत न च सर्वेष्वऽवयवेष्वन्ये अवयवा वर्तन्ते इति नैकदेशेप्यवयविनो वृत्तिरुपपद्यते इति अवयव्यभावः सिद्धस्तत्र नास्त्यवयवीति निश्चये जाते अवयवी अस्ति न वेति संशयो न युक्त इति "वृत्त्यनुपपत्तेः ६" इतिसूत्रोक्तोपक्रमानुकूल्येनोपसंहरति– तदेवमिति, उक्तसंशयाभावे हेतुमाह– नास्तीति, इति= यतो नास्त्यवयवी ततो न युक्तः संशय इत्यन्वयः । अत्र– "नाप्येकदेशे" इत्यत्र "नाप्येकदेशेन" इति पाठान्तरं तथा च वार्तिकम् । "अथाप्यवयवी एकदेशेन वर्तते ? तथाप्यवयविन आरम्भकावयवातिरिक्ता अवयवाः प्राप्नुवन्ति येऽवयवेषु वर्तन्ते इति" इति । एतद्वार्तिकानुसारेण तु "न तावत्" इत्यादिभाष्येण प्रत्यवयवमवयविनः कार्त्स्न्येन वृत्त्यनुपपत्तिः प्रदर्शिता तथा च वार्तिकम्– "न तावत् प्रत्यवयवं कृत्स्नो वर्तते इति" इति, "नाप्येकदेशेन" इत्यादिभाष्येण चावयविन एकदेशेन वृत्त्यनुपपत्तिः प्रदर्शितेत्यवधेयम् । अविशदं चैतद्भाष्यमित्यलम् ॥ ८ ॥

नन्ववयवेभ्योऽन्यत्रावयविनः किं न वृत्तिः स्यादित्याशङ्क्याह– पृथगिति, अवयवेभ्यः पृथक्= अन्यत्राप्यवयविनो वृत्तिर्नोपपद्ये इति नास्त्यवयवीति सिद्धमिति सूत्रार्थः । व्याचष्टे– पृथगिति, धर्मस्य= अवयविनः, इदमपि समानम्= पूर्वोक्तदूषणसदृशं दूषणमित्यन्वयः । अवयवानां धर्मित्वं ह्यऽवयव्याश्रयत्वाद् अवयविनश्च धर्मत्वमवयवाश्रितत्वाद्विज्ञेयम् ॥ ९ ॥

नन्ववयवानां सिद्ध्याऽवयविसिद्धिः किं न स्यात्– अभेदादित्याशङ्क्याह– न चेति, अवयवा एव नाऽवयवी– अभेदासंभवात् अवयविसाध्यकार्यस्याऽवयवैरसिद्धेरिति नावयवसिद्ध्याप्यवयविसिद्धिः संभवतीति नास्त्यवयवीति सिद्धमिति सूत्रार्थः, अत्र भाष्यं नास्ति ॥ १० ॥

उक्तं सिद्धान्ती निराकरोति– एकस्मिन्निति, 'अवयवेषु कृत्स्नोवयवी वर्तते एकदेशेन वा' इत्युक्तं तत्र कृत्स्न इति एकदेश इति च भेदशब्दः– भेदे सत्येव प्रयुज्यमानत्वात्. एतादृशभेदशब्दस्य= भेदबोधकशब्दस्य एकस्मिन्नवयविनि प्रयोगो नोपपद्यते– एकस्मिन् भेदाभावादिति पूर्वोक्तः प्रश्नो नोपपद्यते इतिसूत्रान्वयः, वस्तुतस्तु 'सर्वेष्ववयवेषु कृत्स्नोऽवयवी वर्तते इति सिद्धोऽवयवी' इत्युत्तरं युक्तम् । व्याचष्टे– किमिति, तदेतत् उक्तपूर्वपक्षानुवादः । स्ववक्तव्यमाह– इति नेति । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– एकस्मिन्निति । उक्तं व्याचष्टे– कृत्स्नमिति, यथा 'सर्वे घटाः' इति सर्वशब्दप्रयोगोऽनेकस्याऽशेषत्वबोधनार्थो भवति तथा कृत्स्नशब्दप्रयोगोपि विज्ञेयः, एकदेशशब्दस्यापि प्रयोगो नानात्वे सति कस्यचिदंशस्य बोधनार्थो भवतीत्यन्वयः यथा पटस्यैकदेश इति पटभागानां नानात्वे

अन्यावयवाभावाद् नैकदेशेन वर्तते इत्यहेतुः—

## अवयवान्तरभावेप्यवृत्तेरहेतुः– ॥ १२ ॥

अवयवान्तराभावादिति, यद्यप्येकदेशोऽवयवान्तरभूतः स्यात् तथाप्यवयवेऽवयवान्तरं वर्तेत नावयवीति– अन्योऽवयवीति। अन्यावयवभावेप्यवृत्तेः– 'अवयविनो नैकदेशेन वृत्तिः– अन्यावयवाभावात्' इत्यहेतुः। वृत्तिः कथमितिचेत्? एकस्याऽनेकत्राऽऽश्रयाश्रितसंबन्धलक्षणा प्राप्तिः। आश्रयाश्रितभावः कथमितिचेत्? यस्य यतोऽन्यत्राऽऽत्मलाभानुपपत्तिः स आश्रयः न कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते. विपर्ययस्तु कारणद्रव्येष्विति।

नित्येषु कथमितिचेत्? अनित्येषु दर्शनात् सिद्धम्।

---

सत्येव प्रयोगो भवति। पर्यवसितमाह– ताविमाविति। हेतुमाह– भेदाभावादिति, एकत्वादेव एकस्मिन्नवयविनि भेदो नास्ति भेदाभावादनेकत्वं नास्ति तेन कृत्स्नैकदेशशब्दयोः प्रयोगो नोपपद्यते तेनोक्तप्रश्नोपि नोपपद्यते इत्यन्वयः, स्पष्टमन्यत् ॥ ११ ॥

अग्रिमसूत्रमवतारयति– अन्येति, तदेतत् यत् सप्तमसूत्रस्य भाष्ये उक्तं तस्यैवानुवादः। स्ववक्तव्यमाह– इत्यहेतुरिति, उक्तो हेतुरवयव्यभावसाधको न भवतीत्यर्थः। अवयवेति– 'अवयवी नाप्येकदेशेन वर्तते– अवयवान्तराभावात्' इत्युक्तो हेतुरहेतुः– अवयवान्तरभावेप्यवृत्तेरित्यन्वयः, यद्यवयवान्तरसत्त्वे एकदेशेन वृत्तिरुपपद्येत तदाऽवयवान्तराभावे वृत्तेरनुपपत्तेरवयवान्तराभावादिति हेतुरुपपद्येतापि न चैवमस्ति– अवयवान्तरसत्त्वे तादृशावयवान्तरस्यैव वृत्तिरुपपद्यते नावयविनोपि– अवयवावयविनोर्भेदादिति सूत्रार्थः। अत्र सूत्रे "अवयवान्तराभावेपि" इतिपाठस्तु असंगत एव प्रतिभाति। व्याचष्टे– अवयवान्तरेति, 'अवयवान्तराभावात्' इत्यहेतुरिति सूत्रेणान्वयः। यदुक्तम्– 'नाप्येकदेशेनावयवी वर्तते– अवयवान्तराभावात्' इति तत्र यद्यपि= यदि चैकदेशोऽवयवान्तरभूतः स्यात्तथापि= तदापि तादृशावयवान्तरस्यैवावयवान्तरे वृत्तिः संभवेत् नावयविनः– अ.यविवृत्तेरवयवान्तराधीनत्वासंभवादित्यवयविवृत्तिप्रतिषेधे 'अवयवान्तराभावात्' इति हेतुन संभवतीत्यर्थः। उक्ते हेतुमाह– अन्य इति, यतोऽवयवेभ्योऽन्यः= भिन्नोऽवयवी ततोवयववृत्त्या अवयविनो वृत्तिर्न संभवतीति अवयवान्तरसत्त्वपक्षेप्यवयववृत्तिरेव स्यान्नावयविनो वृत्तिरित्यवयविवृत्तिप्रतिषेधे 'अवयवान्तराभावात्' इत्यहेतुरेवेत्यर्थः। संकलयति– अन्यावयवेति, 'अवयविनो नैकदेशेनापि वृत्तिः संभवति– अन्यावयवाभावात्' इत्यहेतुः– अन्यावयवभावेप्यवृत्तेरित्यन्वयः, यद्यन्यावयवभावेऽवयविनो वृत्तिरुपपद्येत तदाऽन्यावयवाभावे वृत्त्यभावो वक्तुं शक्येतापि न चैवमस्तीत्यर्थः। वृत्तिस्वरूपं जिज्ञासते– वृत्तिरिति, कथम्= किंस्वरूपेत्यर्थः। उत्तरमाह– एकस्येति, प्रकृते एकस्यावयविनोऽनेकत्र= अनेकेष्ववयवेषु य आश्रयाश्रितसंबन्धलक्षणः= आश्रयाश्रयिभावलक्षणः प्राप्तिः= समवायः स वृत्तिपदार्थः। आश्रयाश्रितभावं जिज्ञासते– आश्रयेति। उत्तरमाह– यस्येति, यस्य= अवयविनः कार्यद्रव्यस्य यतः= अवयवसमुदायात्= कारणद्रव्यादन्यत्र आत्मलाभानुपपत्तिः= स्वरूपसत्तानुपपत्तिस्तस्य स आश्रयः= आधारः यथाऽवयवा अपर आधेय इत्यन्वयः, यत इत्युक्तस्य तच्छब्देन परामर्शात् सोऽवयवसमुदाय आश्रय इत्यर्थः। उदाहरति– नेति, कारणद्रव्येभ्यः कपालादिभ्योऽन्यत्र कार्यद्रव्यं घटादिकं न संभवतीति कारणद्रव्यमाधार इत्युच्यते कार्यद्रव्यं चाधेयस्तयोराधाराधेयभावः संबन्धः। विपर्यय इति– कारणद्रव्यं तु कार्यद्रव्यादन्यत्रापि संभवतीति न तदाधेयं भवति, तथा चाधाराधेयभावसंबन्धेनावयवेष्ववयविनो वृत्तिर्भवतीत्यर्थः।

ननु नित्यानां तु कारणं न भवतीति कथं तेषां वृत्तिः स्यात्? वृत्त्यनुपपत्तौ च नित्यानामभाव एव सिध्येदित्याशङ्कते– नित्येष्विति। उत्तरमाह– अनित्येष्विति, यथाऽनित्येष्वाधाराधेयभावस्तथा नित्येष्वप्यस्ति यथाकाशे पक्षी. आत्मनि ज्ञानम्, घटे परमाणुरिति, नित्यानां कारणं तु नास्त्येवेति

नित्येषु द्रव्येषु कथमाश्रयाश्रयिभाव इतिचेत् ? अनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाश्रयिभावस्य नित्येषु सिद्धिरिति । तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य. नावयवी. यथा रूपादिषु मिथ्यासंकल्पो न रूपादय इति ॥ १२ ॥

" सर्वाग्रहणमवयव्यऽसिद्धेः २-१-३४" इतिप्रत्यवस्थितोप्येतदाह—

## केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥

यथैकैकः केशस्तैमिरिकेण नोपलभ्यते केशसमूहस्तूपलभ्यते तथैकैकोऽणुर्नोपलभ्यते अणुसंचयस्तूपलभ्यते तदिदमणुसमूहविषयं ग्रहणमिति ॥ १३ ॥

## स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥

यथाविषयमिन्द्रियाणां पटुमन्दभावाद् विषयग्रहणानां पटुमन्दभावो भवति= चक्षुः खलु प्रकृष्यमाणं नाऽविषयं गन्धं गृह्णाति. निकृष्यमाणं च न स्वविषयात् प्रच्यवते, सोयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति गृह्णाति च केशसमूहम्. उभयं ह्यऽतैमिरिकेण चक्षुषा गृह्यते,

---

पदार्थान्तराधारत्वेन सत्त्वं सिद्धमित्यर्थः । स्वयं व्याचष्टे— नित्येष्विति । उत्तरमाह— अनित्येष्विति, यथा 'पटे रूपं घटे जलम्' इति । उपसंहरति— तस्मादिति, निःश्रेयसकामस्य= मोक्षकामाय= मोक्षसिद्धयर्थं उक्तरीत्याऽवयव्यभिमानस्य रागादिदोषजनकत्वाद् हेयत्वमुच्यते अवयवी तु न प्रतिषिध्यते । दृष्टान्तमाह— यथेति, यथा रूपादिविषयाणां मिथ्यासंकल्पः प्रतिषिध्यते न तु रूपादयः प्रतिषिध्यन्ते तथैतन्नवयस्तथा च नावयविप्रतिषेधः संभवतीत्यर्थः, स्पष्टमन्यत् ॥ १२ ॥

अग्रिमसूत्रमवतारयति— सर्वेति, एतत्सूत्रार्थः पूर्वत्र द्रष्टव्यः, इति= इत्युक्तेन प्रत्यवस्थितः= निरुत्तरीकृतः पूर्वपक्षी तदुत्तरभूतमेतत्सूत्रमाहेत्यर्थः । यद्यवयवी न स्यात्तदा सर्वग्रहणं नोपपद्येत— अवयवानामनेकत्वादिति सर्वाग्रहणमितिसूत्रेण समाहिते पूर्वपक्ष्याह— केशेति, यथा तैमिरिकस्य= चक्षुर्दोषविशिष्टस्य जनस्य प्रत्येकं केशानुपलब्धावपि केशसमूहस्योपलब्धिर्भवत्येव तथा प्रत्येकं परमाणोरुपलब्ध्यसंभवेपि तत्= तस्य= परमाणुसमूहस्योपलब्धिः संभवत्येवेति न तदतिरिक्तोऽवयवी स्वीकार्य इतिसूत्रार्थः । व्याचष्टे— यथेति । प्रकृतमाह— तथेति । उपसंहरति— तदिदमिति, यद् 'घटोयम्' इत्यादिलक्षणमवयविविषयकं ग्रहणमुच्यते तत् परमाणुसमूहविषयकमेव— परमाणुसमूहस्य प्रत्यक्षयोग्यत्वादित्यवयवी नास्त्ये वेत्यर्थः ॥ १३ ॥

उक्तं सिद्धान्ती प्रतिषेधति— स्वविषयेति, इन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावः= पटुमन्दभावो भवति तथा च तैमिरिकजनस्येन्द्रियमान्द्यात् प्रत्येकं केशस्य ग्रहणं न भवति अतैमिरिकजनस्य चेन्द्रियपटुत्वात् प्रत्येकं केशस्य ग्रहणं भवति एवमपीन्द्रियस्य स्वविषयातिक्रमो न संभवति यतः कदापि चक्षुर्गन्धादिकं ग्रहीतुं न शक्नोतीति स्वविषयानतिक्रमेण= स्वविषयाऽनतिक्रमनियमादिन्द्रियस्य स्वाऽविषये प्रवृत्तिर्न भवति तत्र परमाणुरपीन्द्रियस्याविषय एवेति परमाणुसमूहप्रत्यक्षमपीन्द्रियेण न संभवतीति 'घटोयम्' इत्यादिप्रत्यक्षविषयोऽवयवी अवयवसमुदायातिरिक्तः स्वीकार्य इतिसूत्रार्थः ।

व्याचष्टे— यथेति, यथाविषयम्= स्वस्वविषयं प्रति, पटुत्वम्= सूक्ष्मग्राहकत्वम्, इन्द्रियस्य सूक्ष्मग्राहकत्वे तज्जन्यं ज्ञानमपि सूक्ष्मविषयकं भवति मन्दत्वे च तज्जन्यं ज्ञानं स्थूलविषयकं भवति अयमेवं विशेषो न तु स्वाविषयग्राहकत्वं संभवतीत्यन्वयः । उक्तं विशदयति— चक्षुरिति, प्रकृष्यमाणम्= प्रकृष्टमपि= समीपस्थमपि, निकृष्यमाणम्= निकृष्टमपि दूरस्थमपि, स्वविषयात्= रूपात्, प्रच्यवते इति— दूरस्थमपि

परमाणवस्त्वऽतीन्द्रियाः= इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते समुदितास्तु गृह्यन्ते इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत– न जात्वऽर्थान्तरमणुभ्यो गृह्यते इति. ते खल्विमे परमाणवः संहता गृह्यमाणा अतीन्द्रियत्वं जहति वियुक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्ते इति सोमं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते द्रव्यान्तरं यद् ग्रहणस्य विषय इति।

संचयमात्रं विषय इतिचेत् ? न– संचयस्य संयोगभावात्तस्य चातीन्द्रियस्याऽग्रहणादयुक्तम्[२]।

संचयः खल्वनेकस्य संयोगः स च गृह्यमाणाश्रयो गृह्यते नाऽतीन्द्रियाश्रयः. भवति हि 'इदमनेन संयुक्तम्' इति. तस्मादयुक्तमेतदिति। गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणादि अनुपलब्धिकारणमुपलभ्यते तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनां यथा नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धादीनामिति ॥ १४ ॥

---

चक्षू रूपाग्राहकं न भवति किं तु रूपं गृह्णात्येवेत्यर्थः। प्रकृतमाह– सोयमिति, उभयम्= प्रत्येकं केशः केशसमूहश्च, तदनेनेन्द्रियस्य स्वविषये एव प्रवृत्तिर्भवतीति प्रतिपादितम्– प्रत्येकं केशस्य केशसमूहस्य च चक्षुर्विषयत्वात्। अविषयमाह– परमाणव इति। उक्तं व्याचष्टे– इन्द्रियाविषयभूता इति, यदि समुदिताः परमाणव इन्द्रियेण गृहीताः स्युस्तदेन्द्रियस्य स्वाविषये प्रवृत्तिः स्यात्– परमाणूनामविषयत्वात्, समुदितग्रहणेपि परमाणूनामेव ग्रहणादित्यर्थः। उक्ते हेतुमाह– न जात्विति, अणुसमुदायग्रहणेप्यणुग्रहणमेव प्रसज्यते इत्यर्थः। तदेवं पूर्वपक्षिमते परस्परविरोधमुद्धाटयति– ते इति, वियुक्ताः= प्रत्येकम्, उपसंहरति– सोयमिति, द्रव्यान्तरानुत्पत्तौ= अवयवातिरिक्तस्यावयविन उत्पत्त्यस्वीकारपक्षे परमाणुसमूहस्य प्रत्यक्षविषयत्वस्वीकारेणातिमहान् व्याघातः= विरोधोस्ति यतस्तेषामेव परमाणूनां परस्परमऽसंयुक्तानामिन्द्रियाविषयत्वं प्राप्तं परस्परं संयुक्तानां चेन्द्रियविषयत्वं प्राप्तम्– न ह्येकस्यैवावस्थाभेदमात्रेणेन्द्रियविषयत्वाविषयत्वमुभयं संभवति तस्मादवयवातिरिक्तोऽवयवी स्वीकार्यस्तस्य स्थूलत्वादिन्द्रियविषयत्वं संभवतीत्याह– इत्युपपद्यते इति। यद् ग्रहणस्य= प्रत्यक्षस्य विषयस्तद् द्रव्यान्तरम्= अवयवी इत्यन्वयः, स्पष्टमन्यत् ॥

ननु संचयमात्रम्= परमाणुसमूह एवेन्द्रियविषयो भवति न परमाणुरपि येन विरोधः स्यादित्याशङ्कते– संचयमात्रमिति। परिहरति– नेति। हेतुमाह– संचयस्येति, संचयस्य= समुदायस्य संयोगभावात्= संयोगरूपत्वात् तस्य= संयोगस्य चातीन्द्रियस्य= अतीन्द्रियपदार्थनिष्ठस्य अग्रहणात्= ग्रहीतुमशक्यत्वात् परमाणूनामप्यऽतीन्द्रियत्वेन तन्निष्ठसंयोगरूपस्य संचयस्येन्द्रियेण ग्रहीतुमशक्यत्वात् संचयस्येन्द्रियविषयत्वमयुक्तमित्यर्थः। "अतीन्द्रियस्य" इत्यत्र 'अतीन्द्रियनिष्ठस्य' इतिपाठो युक्तः। स्वयं व्याचष्टे– संचय इति, गृह्यमाणाश्रयः= प्रत्यक्षपदार्थनिष्ठः, अतीन्द्रियाश्रयः= अतीन्द्रियपदार्थनिष्ठः। उक्ते प्रत्यक्षं प्रमाणयति– भवतीति, इदमनेनेत्येवं प्रत्यक्षपदार्थनिष्ठ एव संयोगो गृह्यते न तु परमाण्वाद्यऽप्रत्यक्षपदार्थनिष्ठ इति परमाणुसंचयस्य प्रत्यक्षेण ग्रहणमयुक्तमेवेत्याह– तस्मादिति। नन्विन्द्रियदौर्बल्यात् प्रत्येकं परमाणूनां ग्रहणं न संभवतीति समुदितानां प्रत्यक्षं किं न स्यादित्याशङ्क्याह– गृह्यमाणस्येति, इन्द्रियेण गृह्यमाणस्य विषयस्यानुपलब्धिकारणमावरणादि भवति परमाणूनामनुपलब्धौ तु नावरणाद्युपलभ्यते यदि च परमाणूनामनुपलब्धिरिन्द्रियदौर्बल्यादेव स्यात्तदा कस्यापि बलवदिन्द्रियविशिष्टस्य परमाणुप्रत्यक्षं स्यादेव न चैवमस्ति तस्माज्ज्ञायते परमाणूनामनुपलब्धिरिन्द्रियदौर्बल्यान्न भवति किं तु परमाणूनामतीन्द्रियत्वादेव तथा च न परमाणुसमूहस्यापि संयोगरूपस्य प्रत्यक्षं संभवति– प्रत्यक्षपदार्थनिष्ठस्यैव संयोगस्य प्रत्यक्षसंभवात् परमाणूनां चाप्रत्यक्षत्वादित्यर्थः। उक्ते दृष्टान्तमाह– यथेति, यथा चक्षुषा या

## अवयवावयवप्रसङ्गश्चैवमाऽऽप्रलयात् ॥ १५ ॥

यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः सोयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत निरवयवाद्वा परमाणुतो निवर्तेत. उभयथा चोपलब्धिविषयस्याभावः तदभावादुपलब्ध्यभावः, उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः स आश्रयं व्याघ्नन् आत्मघाताय कल्पते इति ॥ १५ ॥

अथापि—

## न प्रलयः—अणुसद्भावात् ॥ १६ ॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात् परमाणोर्निवर्तते

गन्धादीनामनुपलब्धिः सा न चक्षुषो दौर्बल्यात् किं तु गन्धादीनां चक्षुरविषयत्वादेव तथा परमाणूनामप्यनुपलब्धिरिन्द्रियाविषयत्वादेवेति न परमाणूसमूहस्यापि प्रत्यक्षं संभवतीति प्रत्यक्षविषयोऽवयवी अवयवसमुदायातिरिक्तः स्वीकार्य एवेत्यर्थः ॥ १४ ॥ अस्यैव हठ इतिनामधेयम् ॥

अवयव्यऽस्वीकारपक्षे दोषमाह— अवयवेति, एवम्= उक्तरीत्या वृत्तिविकल्पेनावयव्यसिद्धौ यथाऽवयविनोऽवयवेषु वृत्तिर्न संभवति तथाऽवयवानामपि स्वावयवेषु वृत्तिर्नोपपद्येत तथा च आप्रलयात्= सर्वाभावसिद्धिपर्यन्तम्= सर्वशून्यपर्यन्तम् उत्तरोत्तरमवयवानामवयवप्रसङ्गः स्यादित्यन्वयः, अनेनोत्तरोत्तरावयवप्रसङ्गेन प्रलयः= सर्वाभावः= सर्वशून्यमेव प्रसज्यते— अवयवविभागविश्रान्तेरसंभवात् तथा च परमाणुरपि न सिध्येत न चैवं युक्तमिति नायं वृत्तिविकल्पो युक्त इत्यवयविनोऽवयवेषु वृत्तिः स्वीकार्येति सिद्धोऽवयवीति सूत्रार्थः । सूत्रे " अवयवावयविप्रसङ्गः " इतिपाठस्त्वसंगतो भाष्यविरुद्धश्च प्रतिभाति, एतत्पाठपक्षे तु ' अवयवावयविनोरुभयोरपि उक्तवृत्तिविकल्पेनाभावप्रसङ्गस्तेन च सर्वशून्यत्वप्रसङ्गः ' इत्यन्वयः, अन्यदुक्तमेव । व्याचष्टे— य इति, अवयविनोऽभाव इत्यन्वयः, सोयमभावः स्वावयवेषु अवयवस्य प्रसज्यमानः सर्वप्रलयाय= सर्वशून्यकरः स्यात् अवयवानामपि पूर्वोक्तवृत्तिविकल्पेन स्वावयवेषु वृत्तेरसंभवादवयवसिद्धिरपि न स्यादिति, किं वा परमाणुतो निवर्तेत तथा च परमाणुसिद्धिः स्यादित्यन्वयः । पर्यवसितमाह— उभयथेति, उभयथा= उक्तकल्पद्वयेपि नाम यदि सर्वशून्यं स्याद् यदि वा परमाणुमात्रमवशिष्येत तदापि उपलब्धिविषयस्य= प्रत्यक्षविषयस्याभावः स्यात्— परमाणूनां प्रत्यक्षाविषयत्वात्. सर्वशून्यपक्षे तु स्पष्ट एव प्रत्यक्षविषयस्याभावः, तथा च तदभावात्= प्रत्यक्षविषयस्याभावात् उपलब्ध्यभावः= प्रत्यक्षाभावः प्राप्तः— विषयं विना प्रत्यक्षासंभवादित्यर्थः । अवयविप्रतिषेधे व्याघातमाह— उपलब्ध्याश्रय इति, योयमवयविनोऽवयवेषु वृत्तिप्रतिषेधः स उपलब्ध्याश्रयः= उपलब्ध्यधीनोस्ति— अवयविन उपलब्धिं विना सामान्यत उपलब्धिं विना वाऽवयवेषु तद्वृत्तिप्रतिषेधस्याप्यसंभवात् सः= उक्तो वृत्तिप्रतिषेधः आश्रयम्= स्वसिद्धिकारणीभूताम् उपलब्धिं व्याघ्नन् आत्मघातकर एव स्यादित्यन्वयः, उक्तवृत्तिप्रतिषेधेनोक्तरीत्या सर्वाभावः स्यात्तेन चोपलब्ध्यभावः स्यात्— विषयं विनोपलब्धेरसंभवात्. उपलब्ध्यभावे च वृत्तिप्रतिषेधोपि न संभवति— उपलब्धिं विना पदार्थसिद्धेरसंभवादित्यर्थस्तथा चावयविनो वृत्तिप्रतिषेधो न कर्तव्य इति सिद्धोऽवयवीति भावः । यद्यपि सूत्रमिदं पूर्वपक्षपरमपि संभवति— अग्रिमसूत्रे परिहारदर्शनात्तथापि अग्रे सप्तविंशतिकसूत्रभाष्येऽस्य सूत्रस्य स्वपक्षे प्रमाणत्वेनोपन्यासात् सिद्धान्तसूत्रत्वमवधार्यते इति विभाव्यम् । अत्र— " दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते " इति तात्पर्यटीका ॥ १५ ॥

अग्रिमसूत्रमवतारयति— अथापीति, वस्तुतस्त्वित्यर्थः । नेति— वस्तुतस्तु प्रलयः= सर्वशून्यं न संभवति— अणुसद्भावात्= परमाणूनामवशिष्यमाणत्वादिति सूत्रार्थः । व्याचष्टे— अवयवेति, उत्तरोत्तर-

न सर्वप्रलयाय कल्पते । निरवयवत्वं खलु परमाणोर्विभागैरल्पतरप्रसङ्गस्य ( अभावात् ) यतो नाल्पीयस्तत्रावस्थानात् । लोष्टस्य खलु प्रविभज्यमानावयवस्याऽल्पतरमल्पतममुत्तरमुत्तरं भवति स चायमल्पतरप्रसङ्गः यस्मान्नाल्पतरमस्ति= यः परमोऽल्पस्तत्र निवर्तते. यतश्च नाल्पीयोस्ति तं परमाणुं प्रचक्ष्महे इति ॥ १६ ॥

## परं वा त्रुटेः ॥ १७ ॥

अवयवविभागस्याऽनवस्थानाद् द्रव्याणामसंख्येयत्वात् त्रुटित्वनिवृत्तिरिति ॥ १७ ॥

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—

## आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥

तस्याऽणोर्निरवयवस्य नित्यस्यानुपपत्तिः, कस्मात् ?. आकाशव्यतिभेदात्= अन्तर्बहिश्चाणुराकाशेन समाविष्टः= व्यतिभिन्नो व्यतिभेदात् सावयवः सावयवत्वादनित्य इति ॥१८॥

---

वयवविभागमाश्रित्य योयमवयविनो वृत्तिप्रतिपेधादभावः प्रसज्यते स परमाणुतो निवर्तते— परमाणोर्निरवयवत्वेनावयवविभागासंभवादिति न सर्वप्रलयः= सर्वशून्यं संभवतीत्यर्थः । ननु स्यादेवं यदि परमाणुर्निरवयवः स्यादित्याशङ्क्य परमाणोर्निरवयवत्वमुपपादयति— निरवयवत्वमिति, अवयवविभागैः परमाणोरल्पतरप्रसङ्गस्याभावादेव निरवयवत्वं सिद्धम्— अवयवविभागैरल्पतरप्रसङ्गाश्रयस्यैव सावयवत्वात्, यतो नाल्पीयस्तत्रावयवविभागप्रसङ्गस्यावस्थानात्= समाप्तेः परमाणोश्च परं नाल्पीय इत्यवयवविभागासंभवाद् विनाशासंभवस्ततश्च परमाणूनां पारिशेष्यान्न सर्वशून्यापत्तिरित्यर्थः, विनाशश्चावयवविभागव्याप्य इत्यनुसंधेयम् । किं वा 'यतो नाल्पीयस्तत्र विभागैरल्पतरप्रसङ्गस्यावस्थानात् परमाणोर्निरवयवत्वम्' इत्यन्वयः । उक्तमेव विशदयति— लोष्टस्येति, तत्र= तस्मात्, स्पष्टोयं ग्रन्थः । परमाणुस्वरूपमाह— यतश्चेति, परमाणोः परमाल्पत्वान्निरवयवत्वं तेन विभागाभावस्तेन विनाशाभावस्तेन च सर्वशून्यत्वाभावः सिद्धस्तथा चावयविस्वीकारेपि न कोपि दोष इत्यर्थः ॥ १६ ॥

सूत्रेण परमाणुस्वरूपमाह— परमिति, त्रुटेः परं यः स परमाणुरिति सूत्रार्थस्तथा चातिसूक्ष्मत्वात् परमाणोर्विभागो न संभवतीत्याशयः । "स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः" इत्यमरः, "त्रुटिस्त्रसरेणुरित्यनर्थान्तरम्" इति तात्पर्यटीका । भाष्यकारः स्वाभिप्रायमाह— अवयवेति, यद्यवयवविभागस्य परमाणौ अनवस्था स्यात्= समाप्तिर्न स्यात्तदा द्रव्याणाम्= अवयवानामसंख्येयत्वात् त्रुटित्वस्य= सूक्ष्मत्वस्य निवृत्तिः स्यात् तथा च सुमेरुसर्षपयोरपि साम्यं स्यात्— अवयवानामानन्त्यात् न चैतद् युक्तमिति परमाणावऽवयवविभागस्य समाप्तिः स्वीकार्या= निरवयवत्वं स्वीकार्यं तथा च परमाणुविनाशासंभवान्न सर्वशून्यतापत्तिः नापि सुमेरुसर्षपयोः साम्यापत्तिः— अवयवभूतपरमाणूनां संख्याया अतिवैषम्यादित्यर्थः, तथा च पूर्वोक्तरीत्याऽवयविनः प्रत्याख्यानं नोपपद्यते नाप्यवयवानामिति अवयवावयविनौ सिद्धावित्युपसंहारः । ग्रन्थकृता तूपक्रान्तस्यावयविसमर्थनस्योपसंहारो विस्मृत एवेत्यलम् ॥

अत्र— "इत्यवयवावयविप्रकरणम्" इति वार्तिकम् ॥ १७ ॥

अग्रिमप्रकरणमुपक्रमते— अथेति, नोपलभते इत्यानुपलम्भिकः= सर्वशून्यवादी । पूर्वपक्षी परमाणोरनित्यत्वमाह— आकाशेति, आकाशव्यतिभेदात्= परमाणोरन्तः आकाशसमावेशात् सावयवत्वं तेन तत्= तस्य= नित्यत्वस्य= परमाणुनित्यत्वस्यानुपपत्तिरिति सूत्रान्वयः । व्याचष्टे— तस्येति । नित्यस्य= नित्यत्वस्य । उक्ते हेतुमाह— आकाशेति, व्यतिभिन्नः= समाविष्टः= व्याप्तः, व्यतिभेदात्= समावेशात्= व्यापनात्, निरवयवे आकाशसमावेशो न संभवतीत्याकाशसमावेशात् सावयवस्तेनानित्यः परमाणुस्तथा च परमाणुविनाशात् सर्वशून्यत्वं सिद्धमित्यर्थः । स्पष्टार्थं सर्वम् ॥ १८ ॥

## आकाशासर्वगतत्वं वा ॥ १९ ॥

अथैतन्नेष्यते= परमाणोरन्तर्नास्त्याकाशमिति ? असर्वगतत्वं प्रसज्यते इति ॥ १९ ॥

## अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ २० ॥

'अन्तः' इति पिहितं कारणान्तरैः कारणमुच्यते, 'बहिः' इति च व्यवधायकमव्यवहितं कारणमेवोच्यते. तदेतत् कार्यद्रव्यस्य संभवति. नाऽणोः- अकार्यत्वात्= अकार्ये हि परमाणावन्तर्बहिरित्यस्याभावः, यत्र चास्य भावोऽणुकार्यं तत् न परमाणुः, यतो हि नाल्पतरमस्ति स परमाणुरिति ॥ २० ॥

## सर्वसंयोगशब्दविभवाच्च सर्वगतम् ॥ २१ ॥

यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे= तदाश्रया भवन्ति. मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा भवन्त्याकाशे. नाऽसंयुक्तमाकाशेन किंचिन्मूर्तद्रव्यमुपलभ्यते तस्मान्नाऽसर्वगतमिति ॥ २१ ॥

---

पूर्वपक्षी विपक्षे बाधकमाह- आकाशेति, यदि परमाणुर्नाकाशेन समाविष्टस्तदाऽऽकाशस्याऽसर्वगतत्वं स्यात्तदपि न तवाभीष्टमित्युभयतः पाशारज्जुरिति सूत्रान्वयः । व्याचष्टे- अथेति । एतदपि व्याचष्टे- परमाणोरिति । पर्यवसितमाह- असर्वेति, आकाशस्यासर्वगतत्वं प्रसज्यते इत्यन्वयः ॥ १९ ॥

सिद्धान्ती प्रत्याचष्टे- अन्तरिति, अन्तर्बहिःशब्दयोः कार्यद्रव्यस्य कारणान्तरवचनात्= अवयवविशेषवाचकत्वादकार्ये= अकार्यद्रव्ये निरवयवे परमाणौ तदभावः= अन्तर्बहिरवयवयोरसंभवात् परमाणावाकाशसमावेशो न संभवति तथा चानित्यत्वापत्तिर्नास्तीति परमाणूनां पारिशेष्यात् सर्वशून्यापत्तिर्नास्तीति सूत्रार्थः । व्याचष्टे- अन्तरिति, कारणान्तरैः= बाह्यावयवैः पिहितम्= आच्छादितं कारणम्= अन्तर्भूतोऽवयवः अन्तइति= अन्तःशब्देनोच्यते, बहिःशब्देन चान्तर्भागस्य व्यवधायकं तदव्यवहितं च कारणम्= बाह्योऽवयव उच्यते इत्यन्वयः । पर्यवसितमाह- तदेतदिति, तदेतत्= उक्तमवयवलक्षणं कारणं कार्यद्रव्यस्य घटादेः संभवति न तु परमाणोः- अकार्यत्वात्= निरवयवत्वात् , निरवयवे चावयवाऽसंभवः स्पष्ट एव । उक्तं व्याचष्टे- अकार्ये इति । अन्तर्बहिरित्यस्य= अन्तर्बहिर्भागयोः । व्यतिरेकमाह- यत्रेति, यत्र= त्रसरेण्वादौ अस्य= अन्तर्बहिर्भागस्य भावः= सत्ता तदणुरपि कार्यमेव किं वाऽणोः कार्यमेव तच्च न परमाणुः- परमाणोरकार्यत्वादित्यन्वयः । परमाणुस्वरूपमाह- यत इति, तथा च परमसूक्ष्मे परमाणावन्तर्बहिर्भागौ न संभवत इति न सावयवत्वापत्तिस्तथा च नानित्यत्वापत्तिस्तथा च न सर्वशून्यत्वापत्तिरित्यर्थः ॥ २० ॥

आकाशस्य परमाणौ समावेशाभावेपि सर्वगतत्वं समाधत्ते- सर्वेति, आकाशं सर्वगतम्- सर्वसंयोगात्= सर्वसंयोगित्वात् शब्दस्य विभवात्= व्यापनाच्चेत्यन्वयः, सर्वसंयोगिनः सर्वगतत्वं स्पष्टमेव. शब्दव्यापनं च सावयवे न संभवतीति शब्दव्यापनादपि निरवयवत्वं व्यापकत्वं चाकाशस्य सिद्धमिति सूत्रार्थः । व्याचष्टे- यत्रेति, विभवन्ति= व्याप्नुवन्ति, तदेतद् व्यापनं च व्यापके एव संभवतीत्याकाशस्य सर्वगतत्वं प्राप्तम् । उक्तं व्याचष्टे- तदेति, तदाश्रयाः= आकाशसमवेता भवन्ति शब्दाः । आकाशस्य सर्वसंयोगमाह- मनोभिरिति, तत्कार्यैः= परमाणुकार्यैः, आकाशे= आकाशस्य, तथा च शरीरान्तर्वर्तिना मनसा संयोगेन सर्वसंयोगित्वं सुतरां सिद्धमित्याशयः । व्यतिरेकमाह- नेति । उपसंहरति- तस्मादिति । आकाशमितिशेषः ॥ २१ ॥

## अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥

संसर्पता प्रतिघातिना द्रव्येण न व्यूह्यते यथा काष्ठेनोदकम्, कस्मात् ?, निरवयवत्वात्, सर्पच्च प्रतिघाति द्रव्यं न विष्टभ्नाति= नास्य क्रियाहेतुं गुणं प्रतिबध्नाति, कस्मात्? अस्पर्शत्वात्, विपर्यये हि विष्टम्भो दृष्ट इति, सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हति ॥

## अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः ॥

सावयवत्वे चाऽणोरण्ववयवोऽणुतर इति प्रसज्यते, कस्मात् ?, कार्यकारणद्रव्ययोः परिमाणभेददर्शनात्. तस्मादण्ववयवस्याणुतरत्वम्, यस्तु सावयवः अणुकार्यं तदिति. तस्मादणुकार्यमिदं प्रतिषिध्यते इति । कारणविभागाच्च कार्यस्यानित्यत्वं नाऽऽकाशव्यतिभेदात्= लोष्टस्यावयवविभागादनित्यत्वं नाऽऽकाशसमावेशादिति ॥ २२ ॥

---

आकाशस्य सर्वगतत्वे हेत्वन्तरमाह– अव्यूहेति, व्यूहनम्= एकत्रीकरणम्, विष्टम्भः= प्रतिरोधस्तयोरभावात् विभुत्वेन चाकाशधर्मेणाकाशस्य सर्वगतत्वं सिद्धम्– व्यूहनविष्टम्भयोः सावयवे एव संभवादिति सूत्रार्थः । अत्र– "व्यूहः= प्रतिहतस्य परावर्तनम्. विष्टम्भः= उत्तरदेशगतिप्रतिबन्धः आकाशे तयोरभावः– निस्स्पर्शत्वात्" इति विश्वनाथभट्टाः । व्याचष्टे– संसर्पतेति, व्यतिरेकदृष्टान्तमाह– यथेति, यथा काष्ठेन= दण्डादिना जलादिकं व्यूह्यते= प्रतिहन्यते एकत्रीक्रियते वा तथा संसर्पता= गच्छता= व्यापारयुक्तेनापि प्रतिघातिना द्रव्येण दण्डादिनाऽऽकाशो न व्यूह्यते तेन निरवयवत्वं सिद्धम्– सावयवस्यैव व्यूहनसंभवादित्यर्थः । उक्ते हेतुं जिज्ञासते– कस्मादिति, हेतुमाह– निरवयवत्वादिति । विष्टम्भाभावमाह– सर्पदिति, तदेतत् कर्मपदम्. प्रतिघातिपदार्थमाकाशो न विष्टभ्नाति= न निरुणद्धि तदनेन निरोधकत्वाभावेनापि निरवयवत्वं सिद्धम्– सावयवस्य निरोधकत्वादित्यर्थः । उक्तं व्याचष्टे– नास्येति, अस्य= सर्पतः प्रतिघातिद्रव्यस्य, गुणम्= उत्तरदेशसंयोगं पूर्वदेशविभागं चाकाशो न प्रतिबध्नाति । उक्ते हेतुमाह– अस्पर्शत्वादिति । विपर्यये= सस्पर्शत्वे. यथा पृथिव्यादौ, विष्टम्भः= विष्टम्भकत्वम् । उपसंहरति– सावयवे इति, धर्मम्= विष्टम्भकत्वं व्यूहनं च विपरीते= निरवयवे निस्स्पर्शे चाकाशे न कोप्याशङ्कितुमर्हतीत्याकाशस्य निरवयवत्वविभुत्वाभ्यां सर्वगतत्वं सिद्धमित्यर्थः ॥

परमाणोरकार्यत्वे हेतुमाह– अण्ववयवस्येति, यदि परमाणोरवयवः स्यात्तदा स परमाण्ववयवः परमाण्वपेक्षयापि अणुतरः= सूक्ष्मतरः स्यात् न च परमाण्वपेक्षया सूक्ष्मः संभवति– सर्वापेक्षया सूक्ष्मस्यैव परमाणुत्वस्वीकारात् तथा च न परमाण्ववयवः संभवति तस्माद् अणुकार्यस्य= परमाणुलक्षणकार्यस्य नाम परमाणोः कार्यत्वस्य प्रतिषेधः क्रियते– निरवयवत्वात्, परमाणोरकार्यत्वाच्च न विनाशः संभवतीति परमाणूनां प्रलयेपि पारिशेष्यान्न सर्वशून्यत्वं संभवतीत्यर्थः । स्वयं व्याचष्टे– सावयवत्वे चेति । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– कार्येति, अवयव्यपेक्षया तदवयवोऽल्पपरिमाणको भवतीति नियमादण्ववयवोणुतरः स्यादेव, तदेवाह– तस्मादिति, प्रसज्यते इतिशेषः । न च परमाणोरणुतरः संभवतीति न परमाण्ववयवः संभवतीत्यर्थः । सावयवस्य परमाणुत्वं प्रतिषेधति– यस्त्विति । उपसंहरति– तस्मादिति, अणुकार्यम्= परमाणोः कार्यत्वम्= सावयवत्वं प्रतिषिध्यते किं वा तव प्रतिषेधोऽणुकार्यविषयको संभवति नाणुविषयक इत्यर्थः । अनित्यत्वकारणमाह– कारणेति, कार्यस्यापि घटादेर्यदनित्यत्वम्= विनाशः स कारणविभागादेव भवति न त्वाकाशसमावेशादिति आकाशसमावेशेनापि परमाणोरनित्यत्वं न संभवतीत्यर्थः । उक्तं दृष्टान्तेन विशदयति– लोष्टस्येति, स्पष्टमन्यत् । "अणुकार्यप्रतिषेधः" इत्यत्र 'अण्ववयवप्रतिषेधः' इतिवक्तव्यमासीत् ॥ २२ ॥

## मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥

परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं परिमण्डलमित्युपपद्यते यत्तत् संस्थानं सोऽवयवसंनिवेशः परिमण्डलाश्चाणवस्तस्मात् सावयवा इति ॥ २३ ॥

## संयोगोपपत्तेश्च ॥ २४ ॥

मध्ये सन्नणुः पूर्वापराभ्यामणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते. व्यवधानेनाऽनुमीयते- पूर्वभागेन पूर्वेणाणुना संयुज्यते परभागेन परेणाणुना संयुज्यते. यौ तौ पूर्वापरौ भागौ तावऽस्याऽवयवौ. एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति ॥ २४ ॥

यत्तावत्- " मूर्तिमतां संस्थानोपपत्तेरवयवसद्भावः २३ " इति. अत्रोक्तम् । किमुक्तम् ?, ' विभागाल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्तेः, अण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः ' इति । यत्पुनरेतत्- " संयोगोपपत्तेश्च " इति ?, स्पर्शवत्त्वाद् व्यवधानम्. आश्रयस्य चाऽव्याप्त्या भागभक्तिः उक्तं चात्र- स्पर्शवानणुः स्पर्शवतोरण्वोः प्रतिघातात् व्यवधायको न सावयवत्वात्, स्पर्शवत्त्वाच्च व्यवधाने सत्यऽणुसंयोगो नाश्रयं व्याप्नोतीति भागभक्तिर्भवति= भागवानिवायमिति, उक्तं चात्र- ' विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्. तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः ' इति ॥

---

पूर्वपक्षी प्रकारान्तरेण परमाणोः सावयत्वमुपपादयति- मूर्तिमतामिति, मूर्तिमताम्= मूर्तपदार्थानां संस्थानोपपत्तेः= आकृतिमत्त्वाद् अवयवसद्भावः= सावयवत्वं प्राप्नोति- सावयवत्वं विना संस्थानासंभवात्- अवयवसंनिवेशविशेषस्यैव संस्थानपदार्थत्वात्, परमाणुरपि मूर्तपदार्थः मूर्तत्वात् ससंस्थानत्वं तेन सावयवत्वं तेन विनाशित्वं तेन सर्वशून्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे- परिच्छिन्नानामिति, परिच्छिन्नस्यापि घटाकाशस्य ससंस्थानत्वं नास्तीति तद्व्यवच्छेदार्थं स्पर्शवतामिति । संस्थानविशेषमाह- त्रिकोणमिति, चतुरस्रम्= चतुष्कोणम्, परिमण्डलम्= वर्तुलम्, इत्यादि संस्थानं मूर्तत्वादुपपद्यते । संस्थानस्य सामान्यस्वरूपमाह- यत्तदिति । निगमयति- परिमण्डला इति, परमाणूनां वर्तुलत्वात् ससंस्थानत्वं प्राप्तं तेन च सावयवत्वं तेन विनाशित्वं सिद्धमित्याह- तस्मादिति ॥ २३ ॥

पूर्वपक्षी परमाणोः सावयवत्वे हेत्वन्तरमाह- संयोगेति, परमाणोः संयोगोपपत्तेः= परमाण्वन्तरेण संयुज्यमानत्वादपि सावयवत्वं सिद्धम्- स्वावयवेनैव परसंयोगसंभवादिति सूत्रान्वयः, अन्यद्भाष्ये स्पष्टमेव । व्याचष्टे- मध्ये इति, मध्ये=परमाणुद्वयमध्ये सन्= स्थितः, तयोः= पूर्वापरयोः परमाण्वोः । पर्यवसितमाह- याविति । अस्य= परमाणोः ये भागास्तेऽवयवा एव तथा च सावयवत्वाद्विनाशित्वं सिद्धमित्यर्थः ॥ २४ ॥

उक्तपूर्वपक्षं भाष्यकारो निराकरोति- यत्तावदित्यादिना । पूर्वपक्षमनूद्य तन्निरासस्य कृतत्वमाह- अत्रेति, उक्तम्= पूर्वमेवेदं निरस्तमित्यर्थः । उक्तं जिज्ञासते- किमिति । उक्तमनुवदति- विभागेति, यतो नाल्पीयस्तत्र= तस्माद् विभागैरल्पतरत्वप्रसङ्गस्य निवृत्तिर्भवति परमाणुश्च परमाल्पीयानिति न परमाणोरवयवविभागः सावयवत्वं च संभवतीत्यर्थः, तदेतत् "न प्रलयः १६" इतिसूत्रभाष्ये द्रष्टव्यम् । अन्यदप्युक्तं स्मारयति- अण्ववयवस्येति, एतत् "अव्यूहाविष्टम्भविभुत्वानि २२" इतिसूत्रभाष्ये द्रष्टव्यम् । प्रकृतसूत्रोक्तं परिहरति- यत्पुनरिति । स्ववक्तव्यमाह- स्पर्शेति, परमाणुना यत् परमाण्वोर्व्यवधानं क्रियते तत् स्पर्शवत्वादेव न तु सावयवत्वादित्यर्थः । आश्रयस्य= संयोगाश्रयस्य= संयुज्यमानस्याऽव्यापनादेव परमाणौ भागभक्तिः= भागोपचारो भवति न तु वस्तुतो भागवत्त्वम्= सावयवत्वमित्याह- आश्रयस्येति । अत्राप्युक्तमतिदिशति- उक्तं चात्रेति, स्पर्शवान् परमाणुः प्रतिघातात्= निरोधकत्वादेव परमाणुद्वयव्यवधायको भवति न तु सावयवत्वात् तत्र स्पर्शवत्त्वाद् व्यवधाने सति= कृतेपि तस्य परमाणोः

मूर्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमितिहेत्वोः—

## अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

यावद् मूर्तिमद् यावच्च संयुज्यते तत् सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू. सा चानवस्था नोपपद्यते. सत्यामनवस्थायां सत्यौ हेतू स्यातां. तस्मादप्रतिषेधोयं निरवयवत्वस्येति । विभागश्च विभज्यमानहानेर्नोपपद्यते तस्मात् प्रलयान्तता नोपपद्यते इति । अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदानां गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चाऽवयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति ॥ २५ ॥

---

संयोग एकदेशवृत्तित्वाद् आश्रयम्= संयुक्तं परमाणुद्वयं न व्याप्नोतीति परमाणुसंयोगस्याव्यापकत्वाद् भागभक्तिः= परमाणौ भागोपचारो भवतीत्यन्वयः, संयुक्तव्यापनं चाकाशादौ प्रसिद्धम् । भागभक्तिं व्याचष्टे— भागवानिवेति, अयम्= परमाणुः, इदं कुत्रोक्तमिति तु नावधार्यते । किं वैतत्प्रतिपादकं संयोगोपपत्तेश्चेतिसूत्रभाष्यस्योत्तरपक्षभाष्यं विनष्टमित्यवधार्यम् । पूर्वोक्तं पुनः स्मारयति— विभागे इति । द्वितीयवाक्यमाह— तदिति, तदवयवस्य= परमाण्ववयवस्य, तदेतत् पूर्वत्र व्याख्यातम् । तथा च परमाणुविनाशासंभवान्न सर्वशून्यवाद उपपद्यते इत्याशयः ॥

अग्रिमसूत्रमवतारयति— मूर्तिमतामिति, परमाणूनां मूर्तिमताम्= मूर्तानां संस्थानोपपत्तेः= आकृतिमत्त्वात् १ संयोगोपपत्तेः= संयुज्यमानत्वाच्च २ सावयवत्वमिति यौ हेतू पूर्वसूत्राभ्यामुक्तौ तयोरनवस्थाकारित्वात्= सावयवत्वानवस्थासंपादकत्वादयुक्तत्वं विज्ञेयम्— ताभ्यां हेतुभ्यां परमाणुनिरवयवत्वप्रतिषेधस्यासंभवादिति सूत्रेणान्वयः । उक्तसूत्रद्वयं सूत्रकारो निराकरोति— अनवस्थेति, परमाणुसावयवत्वसाधनायोक्तयोः "संस्थानोपपत्तेः" "संयोगोपपत्तेः" इति हेत्वोरनवस्थाकारित्वात्= सावयवत्वानवस्थासंपादकत्वात् अनवस्थानुपपत्तेः= सावयवत्वानवस्थायाश्चायुक्तत्वात् अप्रतिषेधः= परमाणूनां निरवयवत्वस्य प्रतिषेधो नोपपद्यते तथा च परमाणूनां निरवयवत्वेनाविनाशित्वात् सर्वशून्यता न संभवतीति सूत्रार्थः, यदि परमाल्पस्य परमाणोरपि सावयवत्वं स्यात्तदा कस्यापि निरवयवत्वं न स्यादित्युत्तरोत्तरं सावयवत्वप्रसक्त्या सावयवत्वानवस्था प्राप्नोति, एतादृशानवस्थायां च सुमेरुसर्षपयोः साम्यमापद्येत— उभयोरप्यवयवानामानन्त्यात्— सावयवत्वसमाप्तेरस्वीकारात् , न च सुमेरुसर्षपयोः साम्यं कस्याप्यभीष्टमिति तन्निवृत्त्यर्थं परमाणौ सावयवत्वस्य समाप्तिः स्वीकार्येति परमाणोर्निरवयवत्वं सिद्धमित्याशयः ।

व्याचक्षाणः पूर्वपक्षमनुवदति— यावदिति, यावत्= यत् यत् मूर्तिमत्. यावत्= यद् यच्च संयुज्यते= संयुज्यमानं तदित्यन्वयः, सर्वं सावयवम्— मूर्तिमत्= मूर्तत्वात् संयुज्यते= संयुज्यमानत्वाच्चेत्यर्थः । अत्र दोषमाह— इत्यनवस्थेति, इमौ= 'मूर्तत्वात्' 'संयुज्यमानत्वाच्च' इतीमौ । अस्त्वनवस्था को दोषः ? इत्याशङ्क्याह— सेति, नोपपद्यते= न युक्ता— सदोषत्वात् , दोषश्चोक्त एव । यदि सावयवत्वानवस्था सती= उपपन्ना स्यात् तदोक्तौ हेतू सत्यौ= परमाणोः सावयवत्वसाधकौ स्यातामपि न चानवस्थोपपद्यते— सुमेरुसर्षपयोरपि साम्यप्रसङ्गादिति नोक्तौ हेतू सत्यौ तस्मादयम्= प्रकृतः परमाणुनिरवयवत्वस्य प्रतिषेधो नोपपद्यते इत्याह— सत्यामिति । परमाणोर्विभागेन स्वरूपहानिरेव स्यादिति परमाणुविभागो नोपपद्यते तस्मात् परमाणूनां नित्यत्वात् प्रलयान्तता= सर्वशून्यता नोपपद्यते इत्याह— विभागश्चेति, अत्र "विभागस्य च विभज्यमानहानिर्नोपपद्यते" इत्यपि पाठ उपलभ्यते, वार्तिकदर्शनेन तु "विभागस्य विभज्यमानैर्विनानुपपत्तेः" इतिपाठः प्रतिभाति संगतश्चायं पाठः । अनवस्थापक्षे दोषमाह— अनवस्थायामिति, परमाण्ववयवविभागादूर्ध्वम्= परमाणूनामवयवविभागे स्वीकृते प्रत्यधिकरणम्= प्रतिद्रव्यम् , द्रव्यावयवानामाऽऽनन्त्यापत्त्याऽवयवावयविनोः परिमाणभेदस्य गुरुत्वस्य= गुरुत्वभेदस्य च ग्रहणं न स्यात् तथा च सम-

यदिदं भवान् बुद्धिराश्रित्य 'बुद्धिविषयाः सन्ति' इति मन्यते मिथ्याबुद्धय एताः, यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत—

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत्तदनुपलब्धिः ॥ २६ ॥**

यथा 'अयं तन्तुरयं तन्तुः' इति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किंचिदुपलभ्यते यत् पटबुद्धेर्विषयः स्यात्– याथात्म्यानुपलब्धेः, असति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति, एवं सर्वत्रेति ॥ २६ ॥

**व्याहतत्वादहेतुः ॥ २७ ॥**

यदि बुद्ध्या विवेचनं भावानाम् ? न सर्वभावानां याथात्म्यानुपलब्धिः, अथ सर्वभावानां याथात्म्यानुपलब्धिः ? न बुद्ध्या विवेचनं भावानाम्, बुद्ध्या विवेचनं च याथात्म्यानुपलब्धिश्चेति व्याहन्यते. तदुक्तम्– "अवयवावयवप्रसङ्गश्चैवमाऽऽप्रलयात् १५" इति ॥ २७॥

परिमाणत्वं स्यात् न चैतत् कस्याप्यभीष्टमिति सावयवत्वानवस्थानिवृत्त्यर्थं परमाणोर्निरवयवत्वं स्वीकार्यं तथा च परमाणूनामविनाशित्वान्न सर्वशून्यवादसंभव इत्यर्थः ॥ २५ ॥

॥ इति परमाणोर्निरवयवत्वसमर्थनं समाप्तम् ॥

---

अग्रिमप्रकरणमुपक्रमते– यदिदमिति, इदं बुद्धीः= 'घटोस्ति पटोस्ति' इत्याद्या बुद्धीराश्रित्य बुद्धिविषयाणां घटपटादीनां सत्त्वं न संभवति– तादृशबुद्धीनां मिथ्यात्वात्। विपक्षे बाधकमाह– यदीति, यदि घटादिबुद्धयः सत्याः स्युस्तदा बुद्धिविषयाणां बुद्ध्या विवेचने कृते याथात्म्यम्= सत्त्वमुपलभ्येत न चोपलभ्यते इति बौद्धस्य पूर्वपक्षः। अत्र सूत्रमाह– बुद्ध्येति, भावानाम्= घटादिपदार्थानां बुद्ध्या विवेचनाद् याथात्म्यम्= सत्त्वं नोपलभ्यते यथा तन्तूनामपकर्षणे कृते नाम तन्तुभ्योतिरिक्तस्य पटस्य सद्भावः= सत्त्वं नोपलभ्यते तथा तदनुपलब्धिः= घटादीनां सत्त्वस्यानुपलब्धिरिति मिथ्यात्वं सिद्धमिति सूत्रान्वयः। अत्र "तदनुपलब्धिः" इतिपाठो व्यर्थ एव। पूर्वपक्षोयं शून्यवादेन संगच्छते स चान्यत्र द्रष्टव्यः, उक्तं हि तैः—

"न सतः कारणापेक्षा व्योमादेरिव युज्यते।
कार्यस्यासंभवो हेतोः खपुष्पादेरिवासतः॥"
"यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा।" इत्यादि।

व्याचष्टे– यथेति, प्रत्येकम्= तेषु तेषु तन्तुषु विविच्यमानेषु पृथक् पृथक् क्रियमाणेषु, अर्थान्तरम्= तन्त्वतिरिक्तम्। उक्ते हेतुमाह– याथात्म्येति। उपसंहरति– असतीति, भवन्ती= जायमाना, यथा शुक्तिरजतस्याभावात् शुक्तिरजतज्ञानं मिथ्या भवति तथैव घटादीनामभावाद् घटादिज्ञानमपि मिथ्यैवेत्यर्थः, घटादीनां मिथ्यात्वं च बुद्ध्या विवेचने कृते सत्त्वानुपलब्ध्या सिद्धम्, एतादृशविवेचनं चाद्वैतग्रन्थेषु सविस्तरमुपलभ्यते इति नेह प्रत्यन्यते। उक्तं सर्वत्रातिदिशति– एवमिति, एवं सर्वत्र बुद्धीनां मिथ्यात्वं विज्ञेयम्– पदार्थमात्रस्यासत्त्वादित्यन्वयः, स्पष्टमन्यत्। यथाशब्दस्य एवंशब्देनान्वयः, एवम्= तथा ॥२६॥

उक्तं सिद्धान्ती प्रत्याचष्टे– व्याहतत्वादिति, उक्तः पूर्वपक्षः सर्वशून्यत्वस्य अहेतुः= असाधकः– व्याहतत्वात्= पूर्वापरव्याघातदोषाक्रान्तत्वादिति सूत्रान्वयः, अन्यद् भाष्ये स्पष्टम्। व्याचष्टे– यदीति, यदि भावनां बुद्ध्या विवेचनं संभवति तदा तादृशबुद्धिविषयत्वादेव भावानां याथात्म्यानुपलब्धिः= मिथ्यात्वं न संभवति, शुक्तिरजतज्ञानस्याप्यन्यथाख्यातित्वस्वीकारेण मिथ्याविषयकत्वास्वीकारात्, अथ= यदि च सर्वभावानां मिथ्यात्वमस्ति तदा न तेषां बुद्ध्या विवेचनं संभवति– मिथ्याभूतस्य शशविषाणादेर्बुद्धिविषयत्वासंभवात् बुद्ध्यऽविषयस्य च विवेचनासंभवादित्यन्वयः। पर्यवसितमाह–

## तदाश्रयत्वादऽपृथग्ग्रहणम् ॥ २८ ॥

कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः पृथङ् नोपलभ्यते. विपर्यये पृथग् ग्रहणात्= यत्राऽऽश्रयाश्रितभावो नास्ति तत्र पृथग् ग्रहणमिति, बुद्ध्या विवेचनात्तु भावानां पृथग् ग्रहणम्= अतीन्द्रियेष्वणुषु यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २८ ॥

## प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

बुद्ध्या विवेचनाद् भावानां याथात्म्योपलब्धिः= यदस्ति यथा च यन्नास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति, या च प्रमाणत उपलब्धिस्तद् बुद्ध्या विवेचनं भावानां

---

बुद्ध्येति, विषयाणां बुद्ध्या विवेचनमपि मिथ्यात्वमपीति च परस्परं विरुद्धम्, मिथ्याभूतानां बुद्ध्या विवेचनं न संभवतीति बुद्ध्या विवेचनादेव भावानां सत्त्वं सिद्धमिति न सर्वशून्यत्वमुपपद्यते इत्यर्थः। अत्र पूर्वोक्तं स्मारयति– तदुक्तमिति, अवयवायवप्रसङ्ग इतिसूत्रभाष्ये " उभयथा च " इत्यारभ्य " स आश्रयं व्याघ्नन्नात्मघाताय कल्पते " इत्यादिना व्याघातदोषः प्रदर्शित इत्यर्थः ॥ २७ ॥

यदुक्तम्– " तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् " इति तत्समाधत्ते– तदाश्रयत्वादिति, तदाश्रयत्वात्= पटस्य तन्त्वाश्रितत्वात्= तन्तुपटयोरुपादानोपादेयभावादेव पटस्य तन्तुभ्यः पृथग् ग्रहणं न भवति न तु मिथ्यात्वात्, न चापृथग्ग्रहणात्सर्वभावानां मिथ्यात्वं संभवतीति सूत्रार्थः। व्याचष्टे– कार्येति, कार्यद्रव्यं पटादिकं कारणद्रव्याश्रितम्= स्वकारणीभूततन्त्वाद्याश्रितत्वादेव तत्कारणेभ्यः= स्वसमवायिकारणेभ्यः पृथक् नोपलभ्यते न तु मिथ्यात्वात्, किं वा तत्= तस्मादित्यर्थः, विपर्यये= उपादानोपादेयभावाभावे पृथग् ग्रहणमपि भवत्येव यथा घटपटयोरित्याह– विपर्ययेति। उक्तं व्याचष्टे– यत्रेति, आश्रयाश्रितभावः= उपादानोपादेयभावः। बुद्ध्येति– भावानां बुद्ध्या विवेचनात् पृथग्ग्रहणं भवति– तन्तुपटयोरैक्यासंभवात्, किं च कार्यस्य कारणापेक्षया पृथगऽग्रहणेपि कार्यापेक्षया कारणस्य तु पृथग् ग्रहणं संभवत्येव– कारणस्य कार्यात्मकत्वाभावात् तथा चातीन्द्रियाणामणूनां कार्यत्वाभावादनुमानबुद्ध्या पृथग्ग्रहणं संभवति यतः अतीन्द्रियेष्वणुषु(सत्सु)= परमाणूनामऽतीन्द्रियत्वादिन्द्रियेण ग्रहणं न संभवतीति यद् घटादिकमिन्द्रियेण गृह्यते तद् घटादिकम् एतया बुद्ध्या= प्रत्यक्षबुद्ध्या विविच्यमानम् अन्यत्= अतीन्द्रियेभ्यः परमाणुभ्यो भिन्नमेवेति सर्वभावानां पृथग्ग्रहणमपि संभवत्येवेत्याशयः प्रतिभाति। यदि परमाणुभ्यो घटादीनां पृथग्ग्रहणं न स्यात्तदोभयोरपि समानबुद्धिवेद्यत्वं स्यात्. न चैवमस्ति– न हि घटबुद्धिविषयत्वं परमाणूनां परमाणुबुद्धिविषयत्वं वा घटादीनां दृश्यते– परमाणूनामनुमितिविषयत्वाद् घटादीनां च प्रत्यक्षविषयत्वादिति बुद्धिभेदादेव बुद्धिविषयाणां पृथग्ग्रहणं सिद्धं तेन च सत्त्वं सिद्धं तेन च बुद्धीनामपि यथार्थत्वं सिद्धमित्यर्थः। अत्र– " भाष्यम्– बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु. यत्र खल्ववयवावयविनावैन्द्रियकौ तत्र पृथग्ग्रहणमविवेचकानामस्फुटतरमऽतीन्द्रियेभ्योणुभ्य आनुमानिकेभ्यः प्रत्यक्षदृश्यानां तदाश्रितानामवयविनां पृथग्ग्रहणमित्यतिस्फुटमित्यर्थः " इति तात्पर्यटीका ॥ २८ ॥

सिद्धान्ती भावानां सत्त्वे हेतुमाह– प्रमाणत इति, अर्थानाम्= पदार्थानां प्रमाणतः प्रतिपत्तिर्भवति तथा च प्रमितिविषयत्वात् सत्त्वं सिद्धमिति न सर्वशून्यवाद उपपद्यते इतिसूत्रान्वयः। व्याचष्टे– बुद्ध्येति, भावानां बुद्ध्या विवेचनाद् याथात्म्यम्= सत्त्वमेवोपलभ्यते यथा मृदा घट उत्पाद्यते तेन जलमानीयते तच्च पीयते पानेन तृप्यते तदनेनोत्तरोत्तरं फलोपलम्भेन भावानां सत्त्वमध्यवसीयते– असता फलोपलम्भासंभवादित्यर्थः। उक्तं विशदयति– यदस्तीति, यच्च घटादिकं यथा= यद्रूपमस्ति तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति. यच्च शशविषाणादिकं यथा= यद्रूपम्= शशीयविषाणत्वेन रूपेण नास्ति तदपि सर्वं प्रमाणत उपलब्ध्या सिध्यतीत्यन्वयः, भावानां सत्त्वासत्त्वे प्रमाणेन सिध्यतः इत्यर्थः। उक्तस्य

तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः– परीक्षमाणो हि बुद्ध्याऽध्यवस्यति– 'इदमस्ति इदं नास्ति' इति. तत्र च न सर्वभावानुपपत्तिः ॥ २९ ॥

## प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

एवं च सति सर्वं नास्तीति नोपपद्यते, कस्मात् ?. प्रमाणानुपपत्त्युपपत्तिभ्याम्= यदि सर्वं नास्तीति प्रमाणमुपपद्यते ? सर्वं नास्तीत्येतद् व्याहन्यते, अथ प्रमाणं नोपपद्यते ? सर्वं नास्तीत्यस्य कथं सिद्धिः ?, अथ प्रमाणमन्तरेण सिद्धिः ? सर्वमस्तीत्यस्य कथं न सिद्धिः॥३०॥

## स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥

यथा स्वप्ने न विषयाः सन्ति अथ चाभिमानो भवति. एवं न प्रमाणानि प्रमेयाणि च सन्ति अथ च प्रमाणप्रमेयाभिमानो भवति ॥ ३१ ॥

## मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥

## हेत्वभावादसिद्धिः ॥ ३३ ॥

फलमाह– येति, उपलब्धिरेव विवेचनं तेन= विवेचनेन व्याप्ताः= विवेचनाधीना इत्यर्थः । उक्ते हेतुमाह– परीक्षमाण इति, यतो परीक्षमाणः= विवेचकः 'इदमस्ति' 'इदं नास्ति' इत्यध्यवस्यति तदनन्तरं च शास्त्रोपदेशः कर्म च व्यवहारश्च भवतीति, तत्र= एवं प्राप्ते सर्वभावानामनुपपत्तिः= मिथ्यात्वं न संभवति– अध्यवसायविषयत्वादित्यर्थः ॥ २९ ॥

सर्वशून्यवादं बाधकान्तरमाह– प्रमाणेति, यदि प्रमाणस्यानुपपत्तिः= मिथ्यात्वं तदा सर्वशून्यत्वसाधकस्य प्रमाणस्याभावादेव सर्वशून्यत्वं न संभवति, यदि प्रमाणस्योपपत्तिः= सत्त्वं तदा प्रमाणस्य सत्त्वादेव सर्वशून्यत्वं न संभवतीति सूत्रार्थः । व्याचष्टे– एवं चेति, यतः पदार्थानां सत्त्वासत्त्वे प्रमाणत एव सिध्यतस्तस्मात् सर्वशून्यत्वं नोपपद्यते इत्यर्थः । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– प्रमाणेति । हेतुवाक्यं व्याचष्टे– यदीति, इतिप्रमाणम्= सर्वाभावसाधकं प्रमाणम् , व्याहन्यते= नोपपद्यते– सर्वाभावसाधकप्रमाणस्य सत्त्वापातादित्यर्थः । अथ= यदि च सर्वाभावसाधकं प्रमाणमपि नास्ति तदा सर्वं नास्तीत्यस्य= सर्वाभावस्य सिद्धिर्न संभवति– मेयसिद्धेर्मानाधीनत्वादित्यर्थः । अथ= यदि च प्रमाणं विनैव सर्वाभावस्य सिद्धिः स्यात्तदा सर्वमस्तीत्यस्य= सर्वसत्त्वस्यापि प्रमाणं विना कथं न सिद्धिः स्यात् ? विपक्षे विनिगमनाविरहादित्युभयतः पाशारज्जुरिति न कथमपि सर्वशून्यत्वं सिध्यतीत्यर्थः ॥ ३० ॥

पूर्वपक्षी सर्वमिथ्यात्वं समाधत्ते– स्वप्नेति, यथा स्वप्ने विषयाभिमानः= पदार्थज्ञानं मिथ्या भवति तथा अयम्= जाग्रत्कालिकोऽपि विषयाभिमानो मिथ्यैवेत्यन्वयः, यथा स्वप्ने विषयं विनैव तज्ज्ञानं जायते तथैव जाग्रदवस्थायामपि विषयं विना तज्ज्ञानं संभवतीति सर्वशून्यत्वं सिद्धमिति सूत्रार्थः । व्याचष्टे– यथेति, अथ च= अथापि, अभिमानः= विषयज्ञानम् । प्रकृतमाह– एवमिति, जाग्रदवस्थायामपीतिशेषः तथा च सर्वशून्यत्वं सिद्धमित्यर्थः, स्पष्टं सर्वम् ॥ ३१ ॥

पूर्वपक्षी सर्वमिथ्यात्वे साधकान्तरमाह– मायेति, इन्द्रजालादौ माया प्रसिद्धा, यथा मायादीनां मिथ्यात्वेपि तज्ज्ञानं जायते गन्धर्वनगरे मृगतृष्णिकायां चापि मिथ्याज्ञानं प्रसिद्धमेव तथा सर्वत्र विषयाणां मिथ्यात्वं तेन सर्वशून्यत्वं विज्ञेयमिति सूत्रान्वयः । अत्र भाष्यं नास्ति ॥ ३२ ॥

सिद्धान्ती शून्यवादं निराकरोति– हेत्वभावादिति, शून्यवादस्य= सर्वशून्यत्वस्य सिद्धिर्न संभवति– हेत्वभावात्= साधकाभावात् प्रत्यक्षविरोधाच्चेति सूत्रान्वयः । व्याचष्टे– स्वप्नान्ते इति, स्वप्नान्ते=

'स्वप्नान्ते विषयाभिमानवत् प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवत्' इत्यत्र हेतुर्नास्ति. हेत्वभावादसिद्धिः। स्वप्नान्ते चासन्तो विषया उपलभ्यन्ते इत्यत्रापि हेत्वभावः ॥

प्रतिबोधेऽनुपलम्भादितिचेत् ? प्रतिबोधविषयोपलम्भादप्रतिषेधः ।

यदि प्रतिबोधेऽनुपलम्भात् स्वप्ने विषया न सन्तीति ? तर्हि ये इमे प्रतिबुद्धेन विषया उपलभ्यन्ते (ते) उपलम्भात् सन्तीति— विपर्यये हि हेतुसामर्थ्यम्= उपलम्भाभावे सति अनुपलम्भादभावः सिध्यति, उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति. यथा प्रदीपस्याभावाद् रूपस्यादर्शनमिति, तत्र भावेनाभावः समर्थ्यते इति ।

स्वप्नावस्थायाम्, जागरितान्ते= जाग्रदवस्थायाम्, अत्र— "अन्तःशब्दोऽवयववचनोप्याश्रि(त)त्वमात्रेणावस्थायां प्रयुक्तस्तेन स्वप्नावस्थायां जागरितावस्थायामित्यर्थः" इतितात्पर्यटीका । तथा च प्रमाणप्रमेयज्ञानं स्वाप्निकविषयज्ञानतुल्यं मिथ्याभूतमस्ति जाग्रदवस्थागतविषयज्ञानतुल्यं यथार्थं नास्तीत्युक्ते हेतुः= विनिगमना नास्तीत्यर्थः । हेतुं विना च कस्यापि सिद्धिर्न भवतीति हेत्वभावात् शून्यवादस्याऽसिद्धिरित्याह— हेत्वभावादिति । किं च यदि स्वप्नेप्यसतां विषयाणामुपलब्धिः स्यात्तदा तद्दृष्टान्तेन जागरिते दृश्यमानानामसत्त्वं स्यादपि न चैवमस्ति— हेत्वभावात्. किं तु जागरितेऽनुभूतानां यर्थार्थानामेव विषयाणां स्वप्ने स्मृतिर्भवति न च सा स्मृतिर्मिथ्या नापि स्मर्यमाणा विषया मिथ्याभूता इति न स्वप्नेपि मिथ्याविषयोपलब्धिरुपपद्यते इत्याह— स्वप्नान्ते चेति ॥

ननु स्वप्ने दृश्यमानानां पदार्थानां प्रतिबोधे= जाग्रदवस्थायामनुपलम्भादेवासत्त्वं प्राप्नोति यदि स्वाप्नपदार्थाः सत्याः स्युस्तदा प्रतिबोधेप्युपलभ्येरन्नित्याशङ्कते— प्रतिबोधे इति । परिहरति— प्रतिबोधेति, यदि स्वाप्नविषयाः प्रतिबोधेऽनुपलम्भादेव मिथ्याभूतास्तदा प्रतिबोधविषयाणाम्= जाग्रदवस्थायां दृश्यमानविषयाणां प्रतिबोधे उपलम्भात् सत्यत्वं सिद्धमिति तत्सत्यत्वस्य प्रतिषेधो नोपपद्यते इति सर्वशून्यत्वानुपपत्तिरित्यर्थः। स्वयं व्याचष्टे— यदीति, स्वप्ने विषयाः= स्वाप्नविषयाः, नसन्ति= मिथ्याभूताः। परिहरति— तर्हीति, एवं हि जाग्रदवस्थायां ये विषया उपलभ्यन्ते ते उपलभ्यमानत्वात् सन्ति= सत्यभूताः सिद्धा इति न सर्वशून्यत्वमुपपद्यते इत्यर्थः । उक्ते हेतुमाह— विपर्यये इति, हि= यतो विपर्यये= उपलम्भस्य विपर्यये= उपलम्भाभावे एवाऽनुपलम्भादितिहेतुनाऽनुपलभ्यमानस्य स्वाप्नविषयस्याभावः सिध्यति न तूपलम्भेपि तथा च जाग्रदवस्थागतविषयाणामुपलम्भादेव सत्त्वं सिद्धमित्यर्थः । हेतुसामर्थ्यम्= हेतोः साध्यसाधकत्वम् । उक्तं व्याचष्टे— उपलम्भाभावे इति । विपक्षे बाधकमाह— उभयथेति, उभयथा= उभयत्र= स्वप्नावस्थायां जाग्रदवस्थायां चेत्युभयत्र किं वा उभयथा नाम यदि जाग्रदवस्थागतविषयाणां सत्त्वमस्ति यदि च नास्तीत्युभयथापि, असत्त्वपक्षे व्यतिरेकदृष्टान्तस्याभावादित्याशयः, इत्युभयथापि विषयाणामभावे अनुपलम्भस्य= अनुपलम्भादितिहेतोः सामर्थ्यम्= विषयाभावसाधकत्वं नास्ति= न संभवति— यत एकत्रोपलम्भेन सत्त्वसंभवे एवान्यत्रानुपलम्भेनासत्त्वमुपपद्यते तथा च स्वाप्नविषयाणामनुपलम्भादसत्त्वं साधयता जाग्रद्विषयाणामुपलम्भात् सत्त्वं स्वीकार्यमेवेति न सर्वशून्यत्वमुपपद्यते इत्यर्थः । उक्ते दृष्टान्तमाह— यथेति, यथा प्रदीपस्याभावाद्रूपस्याऽदर्शनसिध्या प्रदीपसत्त्वे रूपदर्शनं सिध्यति तथा स्वाप्नपदार्थानामनुपलम्भेनाभावसिद्ध्या जाग्रत्पदार्थानामुपलम्भात् सत्त्वं सिध्यत्येव. किं वा यथा प्रदीपेन रूपदर्शनसिद्ध्यैव प्रदीपाभावेन रूपदर्शनाभावः सिध्यति तथा जाग्रद्विषयाणामुपलम्भात् सत्त्वसिद्ध्यैव स्वाप्नविषयाणामनुपलम्भादभावः सिध्यति नान्यथेत्यर्थः । उपसंहरति— तत्रेति, तत्र= एवं हि भावेनाभवस्य सिद्धिः संभवतीति सिद्धं तथा च जाग्रदवस्थायां पदार्थानां भावेनैव स्वप्नावस्थायामभावः सिध्यति नान्यथेत्यर्थः ।

स्वप्नान्तविकल्पे च हेतुवचनम् ।

" स्वप्नविषयाभिमानवत् " इतिब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः, कश्चित्स्वप्नो भयोपसंहितः कश्चित् प्रमोदोपसंहितः कश्चिदुभयविपरीतः कदाचित् स्वप्नमेव न पश्यतीति, निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद् विकल्पोपपत्तिः ॥ ३३ ॥

स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

पूर्वोपलब्धविषयः, यथा स्मृतिश्च संकल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते. तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पते इति. एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन । यः सुप्तः स्वप्नं पश्यति स एव जाग्रत् स्वप्नदर्शनानि प्रतिसंधत्ते- 'इदमद्राक्षम्' इति. तत्र जाग्रद्बुद्धिवृत्तिवशात् स्वप्नविषयाभिमानो मिथ्येति व्यवसायः= सति च प्रतिसंधाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः- स्वप्नविषयाभिमानो मिथ्येति ।

---

सर्वशून्यवादेऽनुपपत्त्यन्तरमाह- स्वप्नान्तेति, सर्वशून्यवादिना स्वप्नान्तविकल्पे= स्वप्नानां वैविध्ये हेतुवचनम्= हेतुर्वक्तव्य इत्यन्वयः, सर्वशून्यवादे स्वप्नानां वैविध्यं नोपपद्यते- कार्यवैविध्यस्य कारणवैविध्याधीनत्वात्. कारणवैविध्यं च नोपपद्यते- सर्वशून्यत्वस्वीकारात्. कारणवैविध्यस्वीकारे च सर्वशून्यत्वानुपपत्तिरित्यर्थः । स्वयं व्याचष्टे- स्वप्नेति । स्वप्नविषयाभिमानस्य दृष्टान्तत्वेन स्वीकारे स्वप्नसिद्धिस्तथा च स्वप्नवैविध्यहेतुरवश्यं स्वीकार्य इति न सर्वशून्यत्वापत्तिरित्यर्थः । स्वप्नानां वैविध्यमुदाहरति- कश्चिदिति, उपसंहितः= युक्तः, उभयविपरीतः= भयप्रमोदोभयरहितः, विकल्पात्= वैविध्यात्, कदाचित् स्वप्नो भवति कदाचिन्न न भवतीति कादाचित्कत्वेन निमित्तवत्त्वम्= कारणजन्यत्वं स्वप्नविषयाभिमानस्य= स्वप्नस्य प्राप्तं तत्र स्वप्नवैविध्यं प्रत्यक्षं स्वप्नकारणवैविध्यादेवोपपद्यते कार्यकारणभावादिकं च सर्वं सर्वशून्यवादे नोपपद्यते इतिदोष इत्यर्थः ॥ ३३ ॥

सिद्धान्ती स्वसिद्धान्तमाह- स्मृतीति, यथा स्मृतिसंकल्पौ पूर्वानुभूतपदार्थविषयकौ भवतस्तथा स्वप्नेपि विषयाभिमानः= विषयज्ञानं पूर्वानुभूतपदार्थविषयकं भवति पूर्वानुभूतश्च पदार्थो नाऽसन् संभवतीति न स्वप्नविषयाभिमानोऽसद्विषयको भवति यद्दृष्टान्तेन जाग्रद्विषयाभिमानस्याऽसद्विषयकत्वं सिध्येदिति न सर्वशून्यवाद उपपद्यते इतिसूत्रार्थः । व्याचष्टे- पूर्वेति, अत्र 'इतिशेषः' इतिशेषस्तथा च स्मृतिसंकल्पवत् स्वप्नविषयाभिमानः पूर्वोपलब्धविषय इत्यन्वयः । विशदयति- यथेति, तस्य= पूर्वोपलब्धस्य । प्रत्याख्यानाय= अभावसाधनाय । प्रकृतमाह- तथेति, तस्य= पूर्वोपलब्धस्य, ज्ञानं स्वविषयस्य बाधकं न भवतीति न स्वप्नज्ञानेनापि तद्विषयस्य पूर्वोपलब्धस्य बाधः= असत्त्वं संभवतीत्यर्थः । पर्यवसितमाह- एवमिति, तथा च स्वप्नान्तः= स्वप्नो दृष्टविषयः जागरितान्तेन= जाग्रदवस्थायां यद् दृश्यते तद्विषयकः स्वप्नो भवति न त्वसद्विषयक इत्यर्थः किं वा दृष्टविषयः= समानविषयस्तथाच " जागरितान्तेन " इति युक्ता तृतीया । ननु यदि स्वप्नोपि सद्विषयक एव तदा स्वप्नस्य मिथ्यात्वं कथमुच्यते ? इत्याशङ्क्य स्वप्नस्य मिथ्यात्वप्रकारमाह- य इति, जाग्रत्= जाग्रदवस्थायाम्, प्रतिसंधत्ते= स्मरति । स्मरणमुदाहरति- इदमिति । पर्यवसितमाह- तत्रेति, जाग्रज्ज्ञानापेक्षयैव जाग्रज्ज्ञानविलक्षणत्वाद्वा स्वप्नस्य मिथ्यात्वं न तु स्वरूपेण विषयेण वेत्यर्थः । उक्तं विशदयति- सतीति, 'स्वप्नविषयाभिमानो मिथ्या' इतिव्यवसायो जाग्रद्बुद्धिवृत्तिवशादित्यन्वयः, स्मरणे सत्यपि जाग्रदवस्थायां स्वाप्नविषया नोपलभ्यन्ते इतिहेतोरेव स्वप्नविषयज्ञानस्य मिथ्यात्वमुच्यते न तु स्वरूपेण- स्वप्नकाले तत्स्वरूपस्य बाधकाभावात्, कचिदपि देशे काले वा वर्तमानस्य मिथ्यात्वासंभवादित्यर्थः । स्पष्टमन्यत् ॥

## उभयाविशेषे तु साधनानर्थक्यम् ।

यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य " स्वप्नविषयाभिमानवत् " इति साधनमनर्थकम्– तदाश्रयप्रत्याख्यानात्= अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः= अपुरुषे स्थाणौ पुरुष इति (यः) व्यवसायः स प्रधानाश्रयः– न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति, एवं स्वप्नविषयस्य व्यवसायः– ' हस्तिनमद्राक्षम् ' ' पर्वतमद्राक्षम् ' इति प्रधानाश्रयो भवितुमर्हति ॥ ३४ ॥

एवं च सति—

## मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥

स्थाणौ ' पुरुषोयम् ' इतिव्यवसायो मिथ्योपलब्धिः= अतस्मिंस्तदितिज्ञानम्, स्थाणौ ' स्थाणुः ' इतिव्यवसायस्तत्त्वज्ञानम्, तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्यते– नार्थः स्थाणुपुरु-

---

स्वप्नजाग्रज्ज्ञानयोरुभयोरपि मिथ्यात्वेन साम्ये भाष्यकारो दूषणमाह– उभयेति, उभययोः= जाग्रत्स्वप्नयोरविशेषे= अविशेषेण मिथ्यात्वे सिद्धे साधनानर्थक्यम्= साध्यसाधनभावः= दृष्टान्तदार्ष्टान्तिकभावो न संभवति– साध्यसिद्धिविहीनस्यैव दार्ष्टान्तिकत्वसंभवादित्यर्थः । स्वयं व्याचष्टे– यस्येति, यस्य बौद्धस्य मते इत्यर्थः, तस्य बौद्धस्य, साध्यतेऽनेनेति साधनमत्र दृष्टान्तः, जाग्रद्विषयाभिमानस्य मिथ्यात्वे सिद्धे तत्साधनार्थम् " स्वप्नविषयाभिमानवत् " इत्युदाहरणमनर्थकमित्यर्थः । उक्ते हेतुमाह– तदाश्रयेति, तदाश्रयस्य= स्वप्नमूलस्य जाग्रद्विषयाभिमानस्य प्रत्याख्यानात्= बाधनात्, जाग्रद्विषयाभिमानं विना स्वप्नविषयाभिमानो न संभवतीति जाग्रद्विषयाभिमानस्य स्वप्नविषयाभिमानमूलत्वं प्राप्तम्, तत्र मूलभूतस्य जाग्रद्विषयाभिमानस्य बाधे स्वप्नविषयाभिमानोऽसिद्धः सन् साधको न संभवतीत्यर्थः । उक्तं व्याचष्टे– अतस्मिन्निति, अतस्मिन्= पुरुषभिन्ने तदिति= पुरुष इति व्यवसायः= प्रत्ययः प्रधानाश्रयो भवति । प्रधानाश्रयत्वं व्याचष्टे– अपुरुषे इति, योऽपुरुषे= पुरुषभिन्ने स्थाणौ ' पुरुषोयम् ' इतिव्यवसायः स प्रधानाश्रयः= पुरुषे पुरुषप्रत्ययमूलकः, पुरुषे पुरुषप्रत्ययो हि प्रधानम्, अपुरुषे पुरुषप्रत्ययश्चाप्रधानम् । विपक्षे बाधकमाह– नेति, पुरुषेऽनुपलब्धे= पुरुषे पुरुषप्रत्ययं विना अपुरुषे= पुरुषभिन्ने ' पुरुषोयम् ' इतिव्यवसायो न भवतीति अतस्मिंस्तदितिव्यवसायस्य प्रधानव्यवसायमूलकत्वं सिद्धमित्यर्थः । प्रकृतमाह– एवमिति, ' हस्तिनं स्वप्नेऽद्राक्षम् ' इत्यादिः स्वप्नविषयव्यवसायोपि प्रधानाश्रयः= जाग्रद्विषयाभिमानमूलको भवितुमर्हति, तत्र प्रधानाप्रधानयोश्च साम्यं नोपपद्यते इति प्रधानस्य जाग्रद्विषयाभिमानस्य स्वाप्नविषयाभिमानतुल्यं मिथ्यात्वं न संभवतीत्यर्थः । किं वा तदाश्रयेण= स्वाप्नविषयाभिमानमूलेन जाग्रद्विषयाभिमानेनैव स्वाप्नविषयाभिमानस्य प्रत्याख्यानात्= बाधनादित्यर्थः । भाष्यकारोयं कामसूत्रकारो वात्स्यायनमिश्र एवेत्यलम् । किं वा स्वमूलबाधकत्वं नोपपद्यते इति स्वाप्नविषयाभिमानस्यापि स्वमूलभूतजाग्रद्विषयाभिमानबाधकत्वं नोपपद्यते इत्यानर्थक्यमित्याशयः, अनर्थकम्= असमर्थं व्याहतं वेत्यर्थः । वस्तुतस्तु तदाश्रयप्रत्याख्यानादितिहेतोः स्वप्नविषयाभिमानानर्थक्यसाधकत्वं न प्रतिबुध्यते ॥ ३४ ॥

अग्रिमसूत्रमवतारयति– एवमिति, एवं च सति= मिथ्याज्ञानस्य तत्त्वज्ञानमूलकत्वे सिद्धे इत्यर्थः, मिथ्येति– यथा प्रतिबोधे= जाग्रद्बोधेन स्वप्नविषयाभिमानस्य नाशो भवति तथा तत्त्वज्ञानाद् मिथ्योपलब्धेः= मिथ्याज्ञानस्य= शरीरादावात्मत्वाद्यभिमानस्य विनाशो भवतीति सूत्रान्वयः । व्याचष्टे– स्थाणाविति । मिथ्योपलब्धिं व्याचष्टे– अतस्मिन्निति । तत्त्वज्ञानेन मिथ्योपलब्धिनिवृत्तौ हेतुमाह– नार्थ

पसामान्यलक्षणः, यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो निवर्त्यते- नार्थो विषयसामान्यलक्षणः, तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयः (ताः) अतस्मिंस्तदिति-व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानाद्. नार्थप्रतिषेध इति। उपादानवच्च मायादिषु मिथ्याज्ञानम्. प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवान् परस्य मिथ्याध्यवसायं करोति सा माया, नीहारप्रभृतीनां नगरसरूपसंनिवेशे दूराद् नगरबुद्धिरुत्पद्यते विपर्यये तदभावात्, सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति- सामान्यग्रहणात्. अन्तिकस्थस्य विपर्यये तदभावात्, क्वचित् कदाचित् कस्यचिच्च भावाद् नाऽनिमित्तं मिथ्याज्ञानम्। दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु सुप्तप्रतिबुद्धयोश्च स्वप्नविषये. तदेतत् सर्वस्याभावे= निरुपाख्यतायाम्= निरात्मकत्वे नोपपद्यते इति ॥३५॥

---

इति, दृश्यमानः पदार्थः स्थाणुपुरुषोभयसामान्यस्वरूपस्तु नास्ति येन तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तिर्न स्यादित्यर्थः। दृष्टान्तमाह- यथेति। उक्तनिवृत्तौ हेतुमाह- नार्थ इति, "विषयसामान्यलक्षणः" इत्यत्र 'उभयसामान्यलक्षणः' किं वा 'सामान्यलक्षणः' इतिपाठो युक्तस्तथा च पदार्थः स्वप्नजाग्रदुभयसामान्यलक्षणो न भवतीति जाग्रद्बोधेन स्वप्नज्ञानं बाध्यते- यथार्थस्य बाधकत्वादित्यर्थः, किं वा सामान्यलक्षणः= सादृश्यलक्षणोर्थस्तु तत्त्वज्ञानेन न निवर्त्यते इत्यर्थः। प्रकृतमाह- तथेति, मायादिबुद्धिं व्याचष्टे- अतस्मिन्निति, कल्पेन= न्यायेन, यथार्थस्य बाधकत्वादित्यर्थः। स्वाभिप्रायमाह- नार्थेति, मिथ्याबुद्धेरेव तत्त्वज्ञानाद् बाधो भवति न तु मिथ्याबुद्धिविषयस्यापि तस्यान्यत्र सत्त्वादेव तथा च स्वप्ने दृश्यमानानामपि विषयाणां सत्त्वादेव नाऽसत्त्वं संभवतीति न सर्वशून्यवादः संभवतीत्यर्थः। किं च मायादिषु= मायादिविषयकं मिथ्याज्ञानमुपादानवत्= कारणवत्= कारणविशेषजन्यमेवेति न शून्यस्वरूपं भवितुमर्हतीत्याह- उपादानेति। मिथ्याज्ञानस्य कारणवत्त्वमुपपादयति- प्रज्ञापनीयेति, प्रज्ञापनीयसरूपम्= प्रदर्शनीयसदृशम्, यथा सर्पे प्रदर्शनीये मायावी सर्पसदृशं दण्डमुपादाय साधनवान्= सर्पप्रदर्शनसाधनविशिष्टः= इन्द्रजालोक्ततन्त्रयुक्तः परस्य मिथ्याज्ञानं सर्पादिविषयकं जनयति सैव मायेत्युच्यते। गन्धर्वनगरज्ञानस्य कारणवत्त्वमाह- नीहारेति, नीहारादीनां नगरसदृशे संनिवेशे जाते तत्र दूरान्नगरबुद्धिर्जायते. विपर्यये= नीहारादीनां नगरसदृशसंनिवेशाभावे च तदभावात्= नगरबुद्धिर्न जायते इति गन्धर्वनगरज्ञानस्यापि सकारणकत्वं सिद्धं तेन शून्यरूपत्वं न संभवतीत्यर्थः। मृगतृष्णाज्ञानस्य कारणवत्त्वमाह- सूर्येति, स्पन्दमानेषु= प्रकाशनक्रियाविशिष्टेषु जलत्वज्ञानं जायते. स्पष्टमन्यत्, हेतुमाह- सामान्येति, सामान्यग्रहणात्= जलसूर्यकिरणयोः शुक्लत्वसादृश्यग्रहणात्, किं वा सामान्यरूपेण ग्रहणादित्यर्थः, अन्तिकस्थस्य= तद्देशसमीपस्थस्य विपर्यये= जलसूर्यकिरणयोः सामान्यग्रहणाभावे तदभावात्= जलज्ञानं न जायते इति मृगतृष्णाज्ञानस्यापि सकारणकत्वं सिद्धमिति न शून्यरूपत्वं संभवतीत्यर्थः। मिथ्याज्ञानस्य सकारणकत्वं निगमयति- क्वचिदिति, भावात्= जायमानत्वात्, अकारणकस्य क्वचिदित्याद्युक्तं कादाचित्कत्वं न संभवतीत्यर्थः। मिथ्यात्वामिथ्यात्वभेदेन ज्ञानानां द्वैविध्यमाह- दृष्टमिति, तथा च न ज्ञानमात्रस्य मिथ्यात्वं संभवतीत्याशयः, मायाप्रयोक्तुर्ज्ञानं यथार्थं भवति दण्डे दण्डत्वज्ञानात्. परस्य= मायाद्रष्टुश्च ज्ञानं मिथ्या भवति दण्डे सर्पत्वज्ञानादिति द्वैविध्यम्, गन्धर्वनगरादिषु च दूरस्थस्य मिथ्याज्ञानं भवति गन्धर्वनगरादित्वज्ञानात्, अन्तिकस्थस्य= समीपस्थस्य च यथार्थं ज्ञानं भवति- नीहारादित्वज्ञानादिति द्वैविध्यम्, स्वाप्नविषयविषयकं च ज्ञानं सुप्तस्य यथार्थं भवति प्रतिबुद्धस्य च यथार्थं न भवति. किं वा सुप्तस्य स्वाप्नज्ञानं मिथ्या भवति- अयथार्थे यथार्थत्वज्ञानात्. प्रतिबुद्धस्य च स्वाप्नज्ञानं मिथ्या न भवति- अयथार्थस्याऽयथार्थत्वज्ञानादित्यर्थस्तथा च ज्ञानानां मिथ्यात्वाऽमिथ्यात्वभेदेन द्वैविध्यं सिद्धम्। उपसंहरति- तदेतदिति, एतत्= उक्तद्वैविध्यम्, अभावपदार्थमाह- निरुपाख्येति, सर्वस्य

## बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

मिथ्याबुद्धेश्चार्थवदऽप्रतिषेधः, कस्मात् ?, निमित्तोपलम्भात् सद्भावोपलम्भाच्च= उपलभ्यते मिथ्याबुद्धिनिमित्तं मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते– संवेद्यत्वात्. तस्मात् मिथ्याबुद्धिरप्यस्तीति ॥ ३६ ॥

## तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

तत्त्वं स्थाणुरिति. प्रधानं पुरुष इति. तत्त्वप्रधानयोरलोपात्= भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते– सामान्यग्रहणात्, एवं पताकायां बलाकेति लोष्टे कपोत इति, न त्वऽसमाने विषये मिथ्याबुद्धीनां समावेशः– सामान्यग्रहणव्यवस्थानात् । यस्य तु निरात्मकम्= निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते । गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याऽभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात् तत्त्वबुद्धय एव भवन्ति, तस्मादयुक्तमेतत्– 'प्रमाणप्रमेयबुद्धयो मिथ्या' इति ॥ ३७ ॥

---

मिथ्यात्वे इत्यर्थः, एतदपि व्याचष्टे– निरात्मेति, सर्वस्य निरात्मकत्वे= सर्वशून्यत्वे एतन्नोपपद्यते इति न सर्वशून्यवाद उपपद्यते इत्यन्वयः ॥ ३५ ॥

पदार्थसत्त्वं प्रतिपाद्य मिथ्याबुद्धेरपि सत्त्वं प्रतिपादयति– बुद्धेरिति, एवम्= पदार्थवद् बुद्धेः= मिथ्याबुद्धेरपि सत्त्वं विज्ञेयम्– निमित्तस्य= कारणस्य सादृश्यादिकस्य स्वरूपसद्भावस्य चोपलम्भादिति सूत्रान्वयः । व्याचष्टे– मिथ्येति, अप्रतिषेधः= प्रतिषेधो नोपपद्यते इत्यर्थः । उक्ते हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– निमित्तेति । हेतुवाक्यं व्याचष्टे– उपलभ्यते इति । निमित्तमुक्त्वा सद्भावमाह– मिथ्येति । मिथ्याबुद्धिग्रहणेपि हेतुमाह– संवेद्यत्वादिति, परकीया मिथ्याबुद्धिश्चानुमानादिना संवेद्या । उपसंहरति– तस्मादिति । सर्वं स्पष्टमेव ॥ ३६ ॥

मिथ्याबुद्धिनिमित्तस्य द्वैविध्यमाह– तत्त्वेति, मिथ्याबुद्धेः= मिथ्याबुद्धिनिमित्तस्य तत्त्वप्रधानभेदाद् द्वैविध्योपपत्तिरित्यन्वयः, स्थाणौ या पुरुषबुद्धिः सा मिथ्याबुद्धिः सा हि स्थाणुं विना पुरुषं विना च न भवतीति तयोः कारणत्वं सिद्धं तत्र धर्मिभूतं स्थाण्वादिकं तत्त्वं पुरुषादिकं चारोप्यं प्रधानं भवति तयोश्च परस्परं भेदाद् मिथ्याबुद्धिनिमित्तस्य द्वैविध्यं सिद्धं तेन मिथ्याबुद्धीनां सत्त्वं सिद्धम्– असतः कारणासंभवादिति सूत्रार्थः । व्याचष्टे– तत्त्वमिति, स्थाणोस्तत्त्वत्वम्– वास्तवत्वात्. पुरुषस्य प्रधानत्वम्– मिथ्याबुद्धिविषयत्वात् । स्थाणुपुरुषयोरभेदे हि स्थाणौ पुरुषबुद्धिर्मिथ्याबुद्धिर्न स्यादित्याशयः । मिथ्याबुद्धेरुत्पत्तौ हेतुमाह– सामान्येति, सामान्यग्रहणात्= स्थाणुपुरुषयोः सादृश्यग्रहणात् । मिथ्याबुद्ध्यन्तरमाह– एवमिति, मिथ्याबुद्धिरुत्पद्यते इत्यनेनान्वयः । नेति– असमाने विषये= असमानविषयविषयाणां मिथ्याबुद्धीनां समावेशो न भवति= असदृशविषया मिथ्याबुद्धिर्न जायते इत्यर्थः– सामान्यग्रहणव्यवस्थानात्= सादृश्यग्रहणस्य व्यवस्थापकत्वात्= सादृश्यग्रहणस्य मिथ्याबुद्धिकारणत्वात्. न हि शुक्तौ सुवर्णत्वज्ञानं जायते तत् कस्य हेतोः ? शुक्तिसुवर्णयोः सादृश्यग्रहणासंभवादित्यर्थः । बौद्धमते बाधकमाह– यस्येति, यस्य बौद्धस्य मते सर्वं शून्यमेव तस्य मते सादृश्यासंभवेन सादृश्यग्रहणस्यासंभवाद्ऽसमानेपि विषये मिथ्याबुद्धीनां समावेशः स्यात्= असदृशविषयापि मिथ्याबुद्धिरुत्पद्येतेत्यर्थः तथा च शुक्तौ लोहबुद्धिरपि स्यात् न चैवमस्तीति न सर्वशून्यत्वमुपपद्यते इत्यर्थः । तत्त्वबुद्धीनां स्वरूपमाह– गन्धादाविति, तस्मिन् तद्बुद्धिस्तत्त्वबुद्धिरेवेत्यर्थः, मिथ्याभिमता बौद्धेनेत्यर्थः । गन्धादौ गन्धादिबुद्धीनां तत्त्वबुद्धित्वे हेतुमाह– तत्त्वेति, तत्त्वप्रधानयोर्भेदः सामान्यग्रहणं च मिथ्याबुद्धिकारणं तदभावे जायमाना बुद्धिस्तत्त्वबुद्धिर्भवतीत्यर्थः, गन्धादौ गन्धात्वादिज्ञानं तु तत्त्वज्ञानमेव– तस्मिंस्तदितिज्ञानत्वात्, न तु

" दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ४-२-१ " इत्युक्तम्. अथ कथं तत्त्वज्ञानमुत्पद्यते ? इति—

## समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतस्येन्द्रियार्थेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्त्वबुभुत्साविशिष्टः, सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते तदभ्यासवशात् तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

यदुक्तम्- ' सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते ' इत्येतत्—

## न- अर्थविशेषप्राबल्यात् ॥ ३९ ॥

अनिच्छतोपि बुद्ध्युत्पत्तेर्नैतद् युक्तम् , कस्मात् ? अर्थविशेषप्राबल्यादबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा यथा स्तनयित्नुशब्दप्रभृतिषु. तत्र समाधिविशेषो नोपपद्यते ॥ ३९ ॥

## क्षुदादिभिः प्रवर्तनाच्च ॥ ४० ॥

क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोपि बुद्धयः प्रवर्तन्ते तस्मादैकाग्र्यानुपपत्तिरिति ॥ ४० ॥

---

मिथ्याज्ञानम्- तत्प्रयोजकाभावादित्याशयः । किं वा ' गन्धादिबुद्धिषु तत्त्वप्रधानयोश्च सामान्यग्रहणस्याभावाद् गन्धादिबुद्धयस्तत्त्वबुद्धय एव भवन्ति= सिद्धा इत्यन्वयः । उपसंहरति- तस्मादिति, प्रमाणप्रमेयबुद्धीनां मिथ्यात्वं न संभवति- यथार्थत्वादित्यर्थः । अत्र- " मिथ्याबुद्धया स्वनिमित्तं लक्ष्यते तेन मिथ्याज्ञाननिमित्तस्य द्वैविध्यमित्यर्थः, यत्र स्थाणौ पुरुष इतिज्ञानं भवति तत्र तत्त्वं स्थाणुरिति प्रधानं पुरुष इति " इति तात्पर्यटीका ॥ ३७ ॥

अग्रिमसूत्रमवतारयति- दोषेति, सूत्रमिदं पूर्वत्र व्याख्यातमेव, जिज्ञासामाह- अथेति । अथ= तत्र । समाधीति- तत्त्वज्ञानानुकूलसमाधेरभ्यासात्= पुनः पुनरनुष्ठानात् तत्त्वज्ञानमुत्पद्यते इति सूत्रान्वयः । व्याचष्टे- सत्विति, सः= समाधिविशेषः, इन्द्रियार्थेभ्यः= गन्धादिविषयेभ्यः प्रत्याहृतस्य= आकृष्टस्य धारकेण= निरोधकेन प्रयत्नेन योगोक्तेन धार्यमाणस्य= विषयेभ्यो निरुद्धस्य मनसो यस्तत्त्वजिज्ञासाप्रयुक्त आत्मसंयोगः स समाधिरित्यन्वयः आत्ममनस्संयोगस्य ज्ञानकारणत्वात् । समाधिफलमाह- सतीति, तस्मिन्= समाधौ, इन्द्रियार्थेषु= इन्द्रियार्थविषयाः । पर्यवसितमाह- तदिति, तदभ्यासवशात्= समाध्यभ्यासात् ॥ ३८ ॥

पूर्वपक्षी शङ्कते- यदुक्तमिति । ' इत्येतन्न ' इत्येवं सूत्रेणान्वयः । उक्तं पूर्वपक्षी निराचष्टे- नेति, ' समाधिनेन्द्रियार्थविषयकं ज्ञानं नोत्पद्यते ' इतियदुक्तं तन्नोपपद्यते- अर्थविशेषस्य= गन्धादिविषयस्य प्राबल्यात् समाधौ सत्यपि विषयज्ञानसंभवादिति सूत्रार्थः । व्याचष्टे- अनिच्छतोपीति, एतत्= गन्धादिविषयकज्ञानानुत्पत्तिः न युक्ता= न संभवति- अनिच्छतोपि= विषयज्ञानेच्छारहितस्यापि विषयज्ञानोत्पत्तेर्दर्शनादित्यर्थः । उक्ते हेतुमाह- अर्थेति, उदाहरति- यथेति, स्तनयित्नुः= मेघः, जिज्ञासाया अभावेपि मेघादिगर्जनादिज्ञानं भवत्येवेत्यर्थः । उपसंहरति- तत्रेति, तत्र= एवं हि= विषयप्राबल्यादवश्यं तज्ज्ञानं स्यादेव तथा च समाध्यनुपपत्तिः- विषयज्ञाने सति समाधेरसंभवात्. समाध्यसंभवे च तत्त्वज्ञानासंभव इत्यर्थः ॥ ३९ ॥

पूर्वपक्षी समाध्यनुपपत्तौ हेत्वन्तरमाह- क्षुदादिभिरिति, क्षुदादिभिर्योगिनोपि बाह्यविषयेषु प्रवृत्तिः स्यादेव तथा च कुतः समाधिः कुतस्तरां च तत्त्वज्ञानसंभव इतिसूत्रार्थः । व्याचष्टे- क्षुदिति, अन्नादिविषया बुद्धयः प्रवर्तन्ते= उत्पद्यन्ते । उपसंहरति- तस्मादिति, ऐकाग्र्यम्= समाधिः, स्पष्टं सर्वम् ॥४०॥

अस्त्वेतत् समाधिव्युत्थाननिमित्तं समाधिप्रत्यनीकं च. सति त्वेतस्मिन्—

## पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतः= जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः. फलानुबन्धः= योगाभ्याससामर्थ्यं, निष्फले ह्यभ्यासे नाभ्यासमाद्रियेरन्. दृष्टं हि लौकिकेषु कर्मस्वऽभ्याससामर्थ्यम् ॥ ४१ ॥

प्रत्यनीकपरिहारार्थं च—

## अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥

योगाभ्यासजनितो धर्मो जन्मान्तरेप्यनुवर्तते, प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यते इति, दृष्टश्च समाधिनाऽर्थविशेषप्राबल्याभिभवः— ' नाहमेतदश्रौषम् नाहमेतदज्ञासिषम्— अन्यत्र मे मनोऽभूत् ' इत्याह लौकिक इति ॥ ४२ ॥

यद्यर्थविशेषप्राबल्यादनिच्छतोपि बुद्ध्युत्पत्तिरनुज्ञायते?—

---

सिद्धान्तसूत्रमवतारयति— अस्त्विति, एतत्= पूर्वोक्तं पदार्थप्राबल्यं क्षुदादिकं च समाधिव्युत्थाननिमित्तम्= समाधिविघातकं समाधिप्रत्यनीकम्= समाधिविरुद्धं चास्तु. सति त्वेतस्मिन्= उक्ते समाधिप्रतिबन्धके सत्यपि पूर्वकृतफलानुबन्धात्तदुत्पत्तिरिति सूत्रेणान्वयः । पूर्वेति— पूर्वकृतस्य= पूर्वजन्मन्यऽनुष्ठितस्य समाधेः फलानुबन्धात्= संस्कारानुरोधात्= संस्कारसमवायात् तदुत्पत्तिः= अत्र जन्मनि समाधिसिद्धिः संभवतीति न प्रतिबन्धकवशात् समाध्यभाव उपपद्यते. समाधिना च तत्त्वज्ञानसंभव इतिसूत्रार्थः । अत्र— " पूर्वकृतः समाधिस्तस्य फलं संस्कारस्तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थः " इतितात्पर्यटीका । किं वा पूर्वकृतस्य पुण्यविशेषस्य फलानुबन्धात्= आत्मसमवेतादृष्टसामर्थ्यात् समाधिसिद्धिः संभवतीतिसूत्रार्थः । व्याचष्टे— पूर्वकृत इति, अत्र— " प्रविविच्यते= विशिष्यतेऽनेनेति प्रविवेकः धर्मश्चासौ प्रविवेकश्चेति धर्मप्रविवेकः= प्रकृष्टः संस्कारः स त्वात्मधर्मः " इति तात्पर्यटीका, धर्मप्रविवेकस्य फलानुबन्धमाह— फलेति, फलानुबन्धः= पूर्वकृतयोगाभ्यासस्य सामर्थ्यं तस्मात् समाधिसिद्धिर्भवतीत्यर्थः, अभ्यासस्य साफल्यमाह— निष्फले इति । अभ्याससामर्थ्ये प्रत्यक्षं प्रमाणयति— दृष्टमिति, सामर्थ्यम्= संस्कारः, अभ्यासेन संस्कारोत्पत्तिः प्रत्यक्षैव तथा च पूर्वकृतयोगाभ्यासेन वा पूर्वकृतसुकृतेन वा संस्कार उत्पद्यते तेन च संस्कारेणात्र समाधिसिद्धिः संभवतीत्यर्थः ॥ ४१ ॥

अग्रिमसूत्रमवतारयति— प्रत्यनीकेति । अरण्येति— प्रत्यनीकस्य= समाधिप्रतिबन्धकस्य परिहारार्थमेव अरण्ये गुहायां पुलिनादिषु= नदीतीरादिनिर्जनप्रदेशे एव योगाभ्यासस्य= समाध्यनुष्ठानस्य योगशास्त्रेणोपदेशः क्रियते तत्र समाधिविघातो न संभवति— विषयसांनिध्यासंभवादिति सूत्रार्थः । तथा च भगवद्गीतम्— "योगी युञ्जीत सततमात्मानं रहसि स्थितः" इति । व्याचष्टे— योगाभ्यासेति, धर्मः= संस्कारः, प्रचयकाष्ठागते इति— अत्र— "प्रचयकाष्ठा= प्रचयावधिर्यतः परमपरः प्रचयो नास्ति तत्सहकारिशालितया प्रकृष्टायां समाधिभावनायां समाधिप्रयत्नः समाधिभावना तस्यामित्यर्थः" इति तात्पर्यटीका, प्रचयकाष्ठागते= अतिशयेन संघीभूते धर्मे= पूर्वकृतयोगाभ्यासजन्यसंस्कारे । प्रकृष्टायाम्= सिद्धायाम् । तत्त्वज्ञानोत्पत्तिप्रकारमुक्त्वा प्रतिबन्धकाभावमाह— दृष्टश्चेति । उदाहरति— नाहमिति, अग्रहणे हेतुमाह— अन्यत्रेति, यथा हि मनसोऽन्यत्र संलग्नत्वादिन्द्रियसंयुक्तस्यापि विषयस्य ग्रहणं न भवति तथा मनसि समाधिसंलग्नेप्यर्थप्राबल्यमकिंचित्करमिति न समाध्यनुपपत्तिर्नतरां तत्त्वज्ञानोत्पत्त्यनुपपत्तिरित्यर्थः ॥ ४२ ॥

अग्रिमसूत्रमवतारयति— यदीति, एषा पूर्वपक्षिमते शङ्का— पूर्वपक्षिणा बौद्धेनापि मोक्षावस्थायां विषयज्ञाननिवृत्तिस्वीकारात्. उक्तं च बौद्धैः—

" नीलादिज्ञानसंतानवासनोच्छेदसंभवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ " इति ।

## अपवर्गेप्येवं प्रसङ्गः ॥ ४३ ॥

मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति ॥ ४३ ॥

## न- निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥

कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यम्भावी बुद्धीनामुत्पादः, न च प्रबलोपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति- तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४४ ॥

## तदभावश्चापवर्गे ॥ ४५ ॥

तस्य= बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे. तत्र यदुक्तम्- " अपवर्गेप्येवं प्रसङ्गः ४३ " इति तदयुक्तम्, तस्मात् सर्वदुःखविमोक्षोपवर्गः । यस्मात् सर्वदुःखबीजं सर्वदुःखायतनं चापवर्गे विच्छिद्यते तस्मात् सर्वेण दुःखेन विमुक्तिरपवर्गः. न निर्बीजं निरायतनं च दुःखमुत्पद्यते इति ॥ ४५ ॥

## तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥

---

सूत्रेण शङ्कते- अपवर्गेति, एवम्= उक्तादर्थप्राबल्यादपवर्गेपि विषयज्ञानं प्रसज्येत तेन च रागद्वेषाद्युत्पत्त्याऽपवर्गस्यापवर्गत्वक्षतिः संसारतुल्यतापत्तिश्च स्यात् न चैवमस्तीत्यर्थप्राबल्यमकिंचित्करमिति न समाध्यनुपपत्तिरिति सूत्रार्थः । व्याचष्टे- मुक्तस्येति, बाह्यार्थप्राबल्यस्वीकारे इतिशेषः, आक्षेपवाक्यमिदम्, सर्वं स्पष्टम् ॥ ४३ ॥

पूर्वपक्षी समाधत्ते- नेति, विषयबुद्धेरुत्पत्तिं प्रति निष्पन्नस्य= कर्मणोत्पन्नस्य शरीरादेरवश्यम्भावित्वात्= अविनाभावात्= कारणत्वनियमात् मुक्तस्य च शरीराद्यभावात् न विषयबुद्धेरुत्पत्तिसंभव इति सूत्रार्थः । अत्र- " पूर्वपक्षिणः सिद्धान्तसूत्रम् " इतितात्पर्यटीका । व्याचष्टे- कर्मेति, शरीरस्य चेष्टाद्याश्रयत्वं स्पष्टमेव, अर्थाश्रये= अर्थभोगाश्रये शरीरे= शरीरस्य, एतादृशे शरीरे सत्येव विषयबुद्धिरुत्पद्यते नान्यथा- शरीरस्य विषयबुद्धिं प्रति कारणत्वात् तस्मिन् शरीरे च सति विषयबुद्धीनामुत्पादोऽवश्यम्भावीति संसारावस्थायां विषयज्ञाननिवृत्तिर्न संभवति, मोक्षे च विषयज्ञानापत्तिर्नास्ति- कारणीभूतस्य शरीरस्याभावादित्यर्थः । प्रकृतमाह- न चेति, मोक्षावस्थायामितिशेषः । उक्ते हेतुमाह- तस्येति, तस्य= बाह्यार्थस्य= विषयस्येन्द्रियेण संयोगे सत्येव तद्विषया बुद्धिरुत्पद्यते इति दृश्यते मुक्तस्य च शरीरेन्द्रियादिकं नास्तीति न मुक्तस्य विषयबुद्धेरुत्पत्तिप्रसङ्ग इत्यर्थः ॥ ४४ ॥

उक्तसूत्रस्य शेषमाह- तदिति, अपवर्गे तदभावः= विषयबुद्धिकारणीभूतस्य शरीरादेरभाव इति न मुक्तस्य विषयबुद्धेरुत्पत्तिप्रसङ्ग इति सूत्रान्वयः । अत्र पूर्वसूत्रेण पूर्वपक्षिणा विषयबुद्धिं प्रति शरीरादेः कारणत्वे उपपादिते अनेन सूत्रेण सिद्धान्तिनापवर्गे शरीराद्यभाव उपपादितस्तथा च यथापवर्गावस्थायामर्थप्राबल्यमकिंचित्करं तथा समाध्यवस्थायामपीति न समाध्यनुपपत्तिरित्येवं ग्रन्थसंगतिर्विज्ञेया । व्याचष्टे- तस्येति, बुद्धिनिमित्तस्य बुद्ध्याश्रयस्य चेत्यन्वयस्तत्र बुद्धिनिमित्तमिन्द्रियादिकं बुद्ध्याश्रयश्च शरीरमित्यर्थः । अपवर्गे धर्माधर्मयोरभावाच्छरीराभावः शरीराभावाद् विषयबुद्ध्यभाव इत्यर्थः । पूर्वपक्षं निराकरोति- तत्रेति । उपसंहरति- तस्मादिति । निगमयति- यस्मादिति, सर्वदुःखबीजं कर्म, सर्वदुःखायतनं शरीरम् । विपक्षे बाधकमाह- नेति, दुःखस्य बीजमायतनं चापवर्गे विच्छिद्यते इति नापवर्गे दुःखभोगापत्तिरिति सर्वदुःखविमोक्षोऽपवर्ग इत्यन्वयः, स्पष्टमन्यत् ॥ ४५ ॥

तदर्थमिति- तदर्थम्= अपवर्गसिद्ध्यर्थं किं वा समाधिसिद्ध्यर्थं यमनियमाभ्यामात्मसंस्कारः= आत्मनः समाधियोग्यता= एकाग्रता संपाद्या, अपवर्गपक्षे अपवर्गप्राप्तियोग्यता संपाद्या, योगाच्चाध्यात्म-

तस्य= अपवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः, यमः= समानमाश्रमिणां धर्मसाधनम्, नियमस्तु विशिष्टम्, आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च, योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः स पुनः— तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति, इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः, उपायस्तु योगाचारविधानमिति ॥ ४६ ॥

## ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥

"तदर्थम्" इतिप्रकृतम् । ज्ञायतेऽनेनेति ज्ञानम्= आत्मविद्याशास्त्रं तस्य ग्रहणम्= अध्ययनधारणे, अभ्यासः= सततक्रिया= अध्ययनश्रवणचिन्तनानि, तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थं. परिपाकस्तु संशयच्छेदनम् अविज्ञातार्थबोधः अध्यवसिताभ्यनुज्ञानमिति, समापवादः संवादः ॥ ४७ ॥

---

विध्युपायैश्चात्मसंस्कारः संपाद्य इतिसूत्रान्वयः, इदं हि सूत्रकारस्य सूत्रनिर्माणकौशलम् । अत्र— "आत्मविधिः= आत्मसाक्षात्कारविधायकवाक्यम्— आत्मा वा अरे द्रष्टव्यः आत्मानं चेद्विजानीयादित्यादि. योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थस्तथा च योगशास्त्रोक्तात्मतत्त्वाधिगमसाधनैश्चात्मसंस्कारः कर्तव्य इत्यर्थः" इति विश्वनाथभट्टाः । व्याचष्टे— तस्येति । यमपदार्थमाह— यम इति, यमपदार्थानामहिंसादीनां सर्वाश्रमसाधारणत्वाद् यमस्यैतल्लक्षणम् । नियममाह— नियम इति, आश्रमिणां विशिष्टम्= असाधारणं धर्मसाधनं नियम इत्यर्थः । आत्मसंस्कारमाह— आत्मेति । अध्यात्मविधिसाधनमाह— योगशास्त्रादिति । अध्यात्मविधिस्वरूपमाह— स पुनरिति, सः= अध्यात्मविधिः । इन्द्रियविषयेषु= शब्दस्पर्शादिषु स्त्रीशरीरादिषु च यः प्रसंख्यानस्य= तत्त्वज्ञानस्याभ्यासः स रागद्वेषनिवृत्त्यर्थः— तत्त्वज्ञानेन तत्स्वरूपसाक्षात्कारात् तत्र रागद्वेषौ न भवत इत्यर्थः । योगाचारविधानम्= योगशास्त्रोक्ताचारस्याऽनुष्ठानमेव उपायः= आत्मसंस्कारोपाय इत्यर्थः, स्पष्टमन्यत् । अत्र सूत्रे "अध्यात्मविध्युपायैः" इत्यत्र 'अध्यात्मविधिरुपायैः' इत्येवं पाठो युक्तः । अत्र— "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" "अहिंसा सत्याऽस्तेयब्रह्मचर्यापरिग्रहा यमाः" "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" "स्थिरसुखमासनम्" "तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" "स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" "देशबन्धश्चित्तस्य धारणा" "तत्र प्रत्ययैकतानता ध्यानम्" "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इतियोगसूत्राणि अनुसंधेयानि. व्याख्यानं चैषां योगभाष्यादौ द्रष्टव्यमित्यलम् । प्राणायामः प्रसिद्धः, चित्तस्य बाह्यविषयेभ्यो निरोधः प्रत्याहारः, एकत्र संलग्नता= एकपरायणता ध्यानम्, तस्यातिशयः समाधिः । अत्र— "योगाचारः= एकाकिता आहारविशेषः एकत्रानवस्थानमित्यादि यतिधर्मोक्तम्" इतितात्पर्यटीका । "तपः= द्वन्द्वसहनम्" इतियोगभाष्यम्, द्वन्द्वश्च शीतोष्णादिकमिति प्रसिद्धमेव ॥ ४६ ॥

तत्त्वज्ञानपरिपाकोपायमाह— ज्ञानेति, तत्त्वज्ञानसिद्ध्यर्थं ज्ञानस्य= आत्मविद्यायाः= न्यायशास्त्रस्य ग्रहणाभ्यासौ कर्तव्यौ, तत्त्वज्ञानपरिपाकार्थं च तद्विद्यैः= न्यायशास्त्रज्ञैः सह संवादः कर्तव्यः इतिसूत्रान्वयः, अन्यत्सर्वं भाष्ये स्पष्टमेव । व्याचष्टे— तदर्थमिति । प्रकृतम्= पूर्वसूत्रादनुवर्तनीयम् । ज्ञानपदार्थमाह— ज्ञायते इति । तस्य= आत्मविद्याशास्त्रस्य । ग्रहणपदार्थमाह— ग्रहणमिति । अभ्यासपदार्थमाह— अभ्यास इति । अध्ययनम्= वाक्याध्ययनम्, श्रवणम्= वाक्यार्थाध्ययनमिति विवेकः, चिन्तनम्= मननम् । प्रज्ञा= तत्त्वज्ञानम् । परिपाकपदार्थमाह— परिपाक इति । अध्यवसिते= स्वनिश्चिते आत्मादिपदार्थस्वरूपे अभ्यनुज्ञानम्= परानुमतिसंपादनम् । संवादपदार्थमाह— समेति, समस्य शास्त्रस्य संवादकर्तुर्वाऽपवादः संवादः= वादः किं वा समेन विदुषाऽपवादः मननमेव संवाद इत्यर्थः, अत्र "समाय वादः संवादः" इतिपाठान्तरम्, अन्यत सर्वं स्पष्टम् ॥ ४७ ॥

"तद्विद्यैश्च सह संवादः" इत्यविभक्तार्थं वचनं विभज्यते—

तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥४८॥

एतन्निगदेनैव नीतार्थमिति ॥ ४८ ॥

यदि मन्येत- पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति—

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥

"तमभ्युपेयात्" इतिवर्तते, परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति ॥ ४९ ॥

अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि स्वपक्षरागेण चैके न्यायमतिवर्तन्ते. तत्र—

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥

अनुत्पन्नतत्त्वज्ञानानामऽप्रहीणदोषाणां तदर्थं घटमानानामेतदिति ॥ ५० ॥

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

---

अग्रिमसूत्रमवतारयति- तद्विद्यैरिति । तद्विद्यानां विभागो न कृत इति तेषामनेन सूत्रेण विभागः क्रियते इत्यर्थः । तमिति- तम्= संवादम्, सब्रह्मचारी= सतीर्थः, विशिष्टः= स्वापेक्षयाधिकविद्यावान् श्रेयोर्थी= मोक्षाभिलाषी एतैरनुसूयुभिः संवादं अभ्युपेयात्= कुर्यादिति सूत्रान्वयः । व्याचष्टे- एतदिति, निगदः= वाक्यव्यक्तिस्तया एतत्सूत्रम् नीतार्थम्= गृहीतार्थम्= व्याख्यातम्. स्पष्टार्थमित्यर्थः ॥ ४८ ॥

अग्रिमसूत्रमवतारयति- यदीति, परस्य= गुर्वादेः पक्षप्रतिपक्षपरिग्रहः= स्वपक्षस्थापनं तत्पक्षप्रत्याख्यानं च प्रतिकूलं तथा च संवादो न संभवति- प्रतिकूलाचारस्यानिष्टत्वादिति यदि मन्येत जिज्ञासुरित्यर्थः। अत्रोपायमाह—प्रतिपक्षेति, अर्थित्वे संवादार्थित्वे सति प्रयोजनार्थम्= तत्त्वज्ञानपरिपाकलक्षणस्वप्रयोजनसिद्ध्यर्थं प्रतिपक्षरहितमपि संवादं कुर्यादिति सूत्रान्वयः। व्याचष्टे- तमिति, तम्= संवादम्। वर्तते= अनुवर्तते। परतः= गुर्वादितः प्रज्ञाम्= तत्त्वज्ञानमुपादित्समानः= ग्रहीतुं प्रवृत्तः स्वपक्षमनवस्थापयन्= पक्षप्रतिपक्षौ परित्यज्य तत्त्वबुभुत्साप्रकाशनेन= तत्त्वज्ञानग्रहणेच्छां प्रकाश्य= जिज्ञासुरहमस्मि न प्रतिवादीत्युक्त्वा स्वदर्शनं परोपदेशेन शोधयेदित्यन्वयः । स्वदर्शनम्= स्वकीयं तत्त्वज्ञानम् । स्पष्टमन्यत् ॥४९॥

अग्रिमसूत्रमवतारयति- अन्योन्येति, प्रावादुकानाम्= पूर्वाचार्याणाम्। स्वपक्षरागेण= स्वपक्षाऽऽग्रहेण एके वादकर्तारः। अतिवर्तनम्= उल्लङ्घनम्। तत्र= न्यायातिवर्तने। न्यायातिवर्तने जल्पवितण्डयोः प्रयोगमाह- तत्त्वेति, यथा वीजप्ररोहसंरक्षणार्थम्= शस्यरक्षार्थं कण्टकशाखाभिरावरणं क्रियते तथा परेण न्यायातिवर्तने कृते परपक्षखण्डनेन तत्त्वाध्यवसायस्य= स्वपक्षस्य संरक्षणार्थं जल्पवितण्डे प्रयोक्तव्ये इति सूत्रार्थः । अत्र- "ननु यत्र वादस्यैव दशेयमीदृशी तत्त्वनिर्णये दत्तजलाञ्जली तर्हि जल्पवितण्डे इत्यत आह- स्वपक्षरागेण चैके" इतितात्पर्यटीका । व्याचष्टे- अनुत्पन्नेति, तदर्थम्= तत्त्वज्ञानोत्पत्त्यर्थं दोषनिवृत्त्यर्थं च किं वा तत्त्वज्ञानवत्त्वनिर्दोषत्वसिद्ध्यर्थं घटमानानाम्= यतमानानाम्= वादं कुर्वताम्, एतत्= जल्पवितण्डाभ्यां निराकरणमित्यर्थः । किं च तत्त्वज्ञानरहिताः सदोषाश्च पुरुषाः स्वदोषनिवृत्त्यर्थं स्वदोषाच्छादनार्थं वा जल्पवितण्डयोः प्रयोगं कुर्वन्ति न तु निर्दोषा अपि निर्दोषाणां वादेनापि स्वपक्षरक्षासंभवादित्यनुसंधेयम् ॥ ५० ॥

अग्रिमसूत्रमवतारयति- विद्येति, विद्यानिर्वेदादिभिः= स्वविद्याकुत्सनादिभिः, परेण स्वविद्याकुत्सने कृतेपि जल्पवितण्डाभ्यां कुत्सकपक्षनिराकरणं कर्तव्यमित्यर्थः प्रतिभाति, कर्तृत्वं षष्ठ्यर्थः ।

## ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति, तदेतद् विद्यापालनार्थं न लाभपूजाख्यात्यर्थमिति ॥ ५१ ॥

॥ इति श्रीवात्स्यायनविरचिते न्यायभाष्ये चतुर्थोऽध्यायः समाप्तः ॥

---

अत्र– "न केवलं तदर्थं घटमानानां जल्पवितण्डे अपि तु विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य (अपि)" इति तात्पर्यटीका। ताभ्यामिति– परेणावज्ञायमानेनापि ताभ्याम्= जल्पवितण्डाभ्यां विगृह्य– विवादेन कथनम्= परपक्षनिराकरणं कर्तव्यमिति सूत्रान्वयः। व्याचष्टे– विगृह्येति, विगृह्येतिपदस्य विजिगीषयेत्यर्थस्तथा च विजिगीषायां सत्यां जल्पवितण्डयोः प्रयोगः कर्तव्यो न तु तत्त्वबुभुत्सायामित्याशयः। उपसंहरति– तदिति, एतत्= जल्पवितण्डाभ्यां कथनं स्वविद्यारक्षणार्थमेवास्ति न तु लाभाद्यर्थम्– जल्पवितण्डाभ्यां परपक्षनिराकर्तुरपि ख्यात्यादेरसंभवादिति स्पष्टमेव। संप्रति त्वेतद्विपरीतमेव दृश्यते– यद्वैतण्डिकानामेव पूजादिकं भवतीति कालमाहात्म्यमित्यलम्। अत्र समाप्तिवार्तिकम्—

"प्रवृत्तिदोषसंबद्धः प्रेत्यभावः प्रपञ्चितः।
फलं दुःखं विमुक्तिश्च तदुपायश्च कीर्तिताः" इति ॥ ५१ ॥

॥ इति न्यायभाष्यचतुर्थाध्यायस्य प्रसन्नपदाख्या व्याख्या समाप्ता ॥

अथ

सटीके

## ॥ न्यायभाष्ये पञ्चमाध्यायस्य प्रथममाह्निकम् ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपेणोक्तं तद्विस्तरेण विभजते, ताः खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः ।

**[1]साधर्म्य[2]वैधर्म्यो[3]त्कर्षा[4]पकर्ष[5]वर्ण्या[6]ऽवर्ण्य[7]विकल्प[8]साध्य[9]प्राप्त्य[10]ऽप्राप्ति-[11]प्रसङ्ग[12]प्रतिदृष्टान्ता[13]ऽनुत्पत्ति[14]संशय[15]प्रकरणा[16]ऽहेत्व[17]र्थाप-त्त्य[18]ऽविशेषो[19]पपत्त्यु[20]पलब्ध्य[21]ऽनुपलब्धि[22]नित्या-[23]ऽनित्य[24]कार्यसमाः ॥ १ ॥**

साधर्म्येण प्रत्यवस्थानमऽविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः, विशेषं तत्र तत्रोदाहरिष्यामः, एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः ॥ १ ॥

---

अथ

## पञ्चमाध्यायप्रसन्नपदा

वाजिवक्त्रं नमस्कृत्य कृत्याकृत्यविवेकदम् ।
पञ्चमाध्यायटीकेयं नायभाष्यस्य तन्यते ॥

षोडशपदार्थेषु जातिनिग्रहस्थानयोरऽवान्तरभेदनिरूपणार्थं पञ्चमाध्यायमारभते— साधर्म्येति, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य= परमतखण्डनस्य विकल्पात्= भेदात् , उक्तम्= प्रथमाध्यायान्ते उक्तम् । तत्= संक्षेपेणोक्तम् । चतुर्विंशतिः= चतुर्विंशतिसंख्याका जातयः एताः प्रतिषेधहेतवः= परमतखण्डनसाधनीभूताः, प्रतिवादिना स्वमतस्थापके हेतौ प्रयुक्ते तस्य जातिभिः= जात्युत्तरैः प्रतिषेधः= निरासः कर्तव्यो भवतीति जातिभेदाः प्रतिपाद्यन्ते— सद्धेतोः सद्धेतुना प्रत्याख्यानासंभवादित्यर्थः, इत्युपोद्घातभाष्यम् । अत्र प्रथमसूत्रोक्तानां प्रयोजनमारभ्य छलान्तानां पदार्थानां विशेषरूपेण परीक्षणमुपेक्षितं ग्रन्थकृतेति विभाव्यम् ।

साधर्म्येति— साधर्म्यसमा १ वैधर्म्यसमा २ उत्कर्षसमा ३ अपकर्षसमा ४ वर्ण्यसमा ५ अवर्ण्यसमा ६ विकल्पसमा ७ साध्यसमा ८ प्राप्तिसमा ९ अप्राप्तिसमा १० प्रसङ्गसमा ११ प्रतिदृष्टान्तसमा १२ अनुत्पत्तिसमा १३ संशयसमा १४ प्रकरणसमा १५ अहेतुसमा १६ अर्थापत्तिसमा १७ अविशेषसमा १८ उपपत्तिसमा १९ उपलब्धिसमा २० अनुपलब्धिसमा २१ नित्यसमा २२ अनित्यसमा २३ कार्यसमा २४ च जातिः, इति सूत्रान्वयः । व्याचष्टे— साधर्म्येणेति, साधर्म्येण यत् प्रत्यवस्थानं तत् स्थापनाहेतुतोऽविशिष्यमाणम्= विशिष्टं न भवति किं तु समानमेवेति साधर्म्यसम इति नामधेयम् । स्थापनाहेतुतो वैधर्म्येण समो वैधर्म्यसमः । एवमग्रेपि बोध्यं, विशेषश्चाग्रे तत्तत्स्थलेषु द्रष्टव्य इत्यलम् । निर्वक्तव्याः= निर्वचनेन= अवयवार्थस्य व्युत्पादनेन व्याख्येया इत्यन्वयः । केषुचित् पुस्तकेषूपलभ्यमानः सूत्रगतः 'हेतु' इतिपाठोऽसंगत एव— लक्षणसूत्रेऽग्रे 'अहेतुसमः' इत्येवं नामनिर्देशादिति विभावनीयम् ॥ १ ॥

लक्षणं तु—

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥२॥**

साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमऽविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः, निदर्शनम्– 'क्रियावानात्मा– द्रव्यस्य क्रियाहेतुगुणयोगात्. द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् तथा चात्मा तस्मात् क्रियावान्' इति, एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते– 'निष्क्रिय आत्मा– विभुनो द्रव्यस्य निष्क्रियत्वात्. विभु चाकाशं निष्क्रियं च तथा चात्मा तस्माद् निष्क्रियः' इति, न चास्ति विशेषहेतुः– क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्याद् निष्क्रियेणेति, विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति ।

अथ वैधर्म्यसमः– 'क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टो न तथात्मा तस्मान्न लोष्टवत् क्रियावान्' इति. न चास्ति विशेषहेतुः– क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनः क्रियावद्वैधर्म्यादक्रियेणेति. विशेषहेत्वभावाद् वैधर्म्यसमः ।

---

अग्रिमसूत्रमवतारयति– लक्षणमिति । विभक्तासु जातिषु साधर्म्यसमावैधर्म्यसमयोर्लक्षणमाह– साधर्म्येति, साध्यस्य साधर्म्येण वा वैधर्म्येण वा वादिनोपसंहारे कृते तद्धर्मविपर्ययोपपत्तेः= उपसंहृतधर्मापेक्षया= साध्यापेक्षया विपरीतेन साधर्म्येण प्रत्यवस्थाने साधर्म्यसमा. विपरीतेन वैधर्म्येण· प्रत्यवस्थाने वैधर्म्यसमा जातिरिति सूत्रान्वयः, तथा च साधर्म्येणोपसंहारे साधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे च साधर्म्येण प्रत्यवस्थानमिति साधर्म्यसमाया द्वौ भेदौ, एवं वैधर्म्यणोपसंहारे वैधर्म्येण प्रत्यवस्थानं साधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानमिति च वैधर्म्यसमाया द्वौ भेदौ संजातौ । अन्यत्सर्वमुदाहरणेन स्पष्टं भविष्यति । अत्र– "साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे तद्विपरीतेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः, एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः" इतिवार्तिकम् । साधर्म्यसमं व्याचष्टे– साधर्म्येणेति, वादिना साध्यस्य साधर्म्येणोपसंहारे कृते साध्यधर्मविपर्ययोपपत्तेः= वादिनः साध्यलक्षणधर्मापेक्षया विपर्ययस्य= विपरीतधर्मस्योपपत्तेः= उपपादने स्थापनाहेतुतः साधर्म्येणाऽविशिष्यमाणम्= सदृशं प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः= जातिरित्यन्वयः । उदाहरति– क्रियेति, न्यायमते आत्मनि क्रिया नास्ति आत्मनो विभुत्वादित्यनुसंधेयम्, आत्मा द्रव्यत्वात् लोष्टवत् क्रियाहेतुगुणयुक्तः क्रियाहेतुगुणयोगाच्च क्रियावानित्यर्थः, क्रियाहेतुगुणश्च संयोगादिः, उदाहरणमाह– द्रव्यमिति । उपनयमाह– तथेति, तथा= क्रियाहेतुगुणयुक्तः, निगमयति– तस्मादिति, तस्मात्= क्रियाहेतुगुणयोगात् । प्रकृतमाह– एवमिति, लोष्टसाधर्म्येणात्मनि क्रियावत्त्वे उपसंहृते । प्रत्यवस्थानमुदाहरति– निष्क्रिय इति, विभुद्रव्यत्वादिति हेत्वर्थः, उदाहरणमाह– विभ्विति, उपनयमाह– तथेति, तथा= विभुद्रव्यम्, निगमयति– तस्मादिति, तस्मात्= विभुद्रव्यत्वात् । तथा चात्र लोष्टसाधर्म्येणात्मनि क्रियावत्त्वस्योपसंहारे वादिना कृते प्रतिवादिनाऽऽकाशसाधर्म्येणैवाऽऽत्मनि निष्क्रियत्वस्य प्रत्यवस्थानं कृतमिति साधर्म्यसम इति लक्षणसमन्वयः । एवं विरोधे प्राप्ते विनिगमनाविरहमाह– न चेति । समत्वहेतुमाह– विशेषहेत्वभावादिति, उक्तोभयोरप्यनुमानयोरुक्तरीत्या विशेषो नास्तीति समत्वं प्राप्तं तेनात्र समशब्दप्रयोग इत्यर्थः । अत्र– "साधर्म्यमेव समं वैधर्म्यमेवसममिति समार्थः= समीकरणार्थः प्रयोगो द्रष्टव्यः, विशेषहेत्वभावो वा समार्थः– न भवता विशेषहेतुः कश्चिदपदिश्यते इति" इतिवार्तिकम् ।

वैधर्म्यसमामुदाहरति– अथेति, अत्रापि "क्रियावानात्मा" इतिपूर्वोक्तः प्रयोगः प्रथममध्याहार्यः, तथा चात्मनि लोष्टसाधर्म्येण क्रियावत्त्वे उपसंहृते प्रतिवादी लोष्टवैधर्म्येणात्मनि निष्क्रियत्वस्य प्रत्यव-

वैधर्म्येण चोपसंहारे– ‘ निष्क्रिय आत्मा– विभुत्वात्. क्रियावद् द्रव्यमविभु दृष्टं यथा लोष्टः न च तथात्मा तस्माद् निष्क्रियः ’ इति, वैधर्म्येण प्रत्यवस्थानम्– ‘निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं दृष्टं न तथात्मा तस्मान्न निष्क्रियः ’ इति. न चास्ति विशेषहेतुः– क्रियावद्वैधर्म्याद् निष्क्रियेण भवितव्यं न पुनरक्रियवैधर्म्यात् क्रियावतेति. विशेषहेत्वभावाद् वैधर्म्यसमः।

अथ ( पुनः ) साधर्म्यसमः– ‘ क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः तथा चात्मा तस्मात् क्रियावान् ’ इति. न चास्ति विशेषहेतुः– क्रियावद्वैधर्म्याद् निष्क्रियो न पुनः क्रियावत्साधर्म्यात् क्रियावानिति. विशेषहेत्वभावात् साधर्म्यसमः ॥ २ ॥

अनयोरुत्तरम्—

## गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

साधर्म्यमात्रेण वैधर्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था सा तु धर्मविशेषे नोपपद्यते, गोसाधर्म्याद् गोत्वाज्जातिविशेषाद् गौः सिध्यति न तु सास्नादिसंबन्धात्. अश्वादि-

---

स्थानं करोति– क्रियेति, तस्माद्वैधर्म्यसमः, वैधर्म्यं च परिच्छिन्नत्वापरिच्छिन्नत्वाभ्याम्– लोष्टः परिच्छिन्न आत्मा चापरिच्छिन्न इति, न तथा= न परिच्छिन्नः। तस्मात्= अपरिच्छिन्नत्वात्। एवं विरोधे प्राप्ते विनिगमनाविरहमाह– न चेति, क्रियावतो लोष्टस्य द्रव्यत्वलक्षणसाधर्म्यात्. क्रियावतो लोष्टस्य अपरिच्छिन्नत्वलक्षणवैधर्म्यादित्यन्वयः । समत्वहेतुमाह– विशेषेति ।

वैधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानाद् वैधर्म्यसममुदाहरति– वैधर्म्येणेति, ‘ निष्क्रिय आत्मा ’ इत्यादिनात्मनि लोष्टवैधर्म्येण निष्क्रियत्वस्योपसंहारे कृते= निष्क्रियत्वे साधिते ‘ निष्क्रियम् ’ इत्यादिनाऽऽकाशवैधर्म्येणात्मनि निष्क्रियत्वाभावस्य प्रत्यवस्थानं कृतमिति वैधर्म्यसमः। पूर्वप्रयोगे न च तथात्मा= नाऽविभुरात्मेत्यर्थः, द्वितीयप्रयोगे च न च तथात्मा= न क्रियागुणहेतुरहित आत्मेत्यर्थः। तस्मात्= क्रियाहेतुगुणयुक्तत्वात्। आत्मा क्रियाहेतुगुणसहित आकाशश्च क्रियाहेतुगुणरहित इतिवैधर्म्यम्। एवं विरोधे विनिगमनाविरहमाह– न चेति, क्रियावद्वैधर्म्यात्= लोष्टादिवैधर्म्यात्, अक्रियवैधर्म्यात्= आकाशादिवैधर्म्यात्। समत्वहेतुमाह– विशेषेति ।

वैधर्म्येणोपसंहारे साधर्म्येण प्रत्यवस्थानात् साधर्म्यसममुदाहरति– क्रियावानिति, अत्र “ निष्क्रिय आत्मा ” इतिपूर्वोक्तः प्रयोगः प्रथममध्याहार्यस्तथा चात्रात्मनि लोष्टवैधर्म्येण निष्क्रियत्वस्योपसंहारे कृते “ क्रियावान् ” इत्यादिना लोष्टसाधर्म्येणात्मनि क्रियावत्त्वस्य प्रत्यवस्थानं कृतमिति साधर्म्यसमः। तथः= क्रियाहेतुगुणयुक्तः, तस्मात्= क्रियाहेतुगुणयुक्तत्वात्। एवं विरोधे विनिगमनाविरहमाह– न चेति। समत्वहेतुमाह– विशेषेति। स्पष्टमन्यत्, प्रथमोदाहरणे च सर्वं व्याख्यातमेवेत्यलम्। वस्तुतस्त्वेतदपि साधर्म्यसमोदाहरणमिति “ अथ वैधर्म्यसमः ” इत्यतः पूर्वमेव वक्तव्यमासीत् ॥ २ ॥

अग्रिमसूत्रमवतारयति– अनयोरिति, अनयोः= साधर्म्यसमवैधर्म्यसमयोः। गोत्वादिति– यथा गोत्वादेव गोस्वरूपसिद्धिर्भवति न तु वचनमात्रेण उक्तं च– “गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसंबन्धात्तु गौः ” इति, तथा व्याप्यहेतुनैव तत्= तस्य साध्यस्य सिद्धिर्भवति न तु येन केनापि हेतुना वचनमात्रेण वेति न पूर्वोक्तरीत्या लोष्टादिसाधर्म्यमात्रेणात्मनि सक्रियत्वादिकं सिध्यतीति निष्क्रियत्वसिद्धिरिति सूत्रार्थः। व्याचष्टे– साधर्म्यमात्रेणेति, प्रतिज्ञायमाने= क्रियमाणे, अव्यवस्था= अनिष्टधर्मप्रसक्तिः, यदि साधर्म्यमात्रेण वैधर्म्यमात्रेण वा साध्यसिद्धिः स्यात्तदा लोष्टसाधर्म्यादाकाशवैधर्म्याद्वात्मन्यऽनित्यत्वमपि सिध्येत् न चैतद् युक्तमित्याह– सेति, सा= अव्यवस्था धर्मविशेषे गृह्यमाणे नोपपद्यते तथा चात्मनि विभुत्वधर्मे गृह्यमाणे सक्रियत्वं न संभवतीत्यर्थः, किं वा धर्मविशेषे=धर्मविशेषस्याव्यवस्था नोपपद्यते तथा च सक्रियत्वं धर्मः परिच्छिन्नेषु संभवति न तु विभावात्मनीत्यर्थः। उदाहरति– गोसाधर्म्यादिति, गोसा-

वैधर्म्याद् गोत्वादेव गौः सिध्यति न गुणादिभेदात्, तच्चैतत् कृतव्याख्यानमवयवप्रकरणे, प्रमाणानामभिसंबन्धाच्चैकार्थकारित्वं समानं वाक्ये इति, हेत्वाभासाश्रया खल्वियमऽव्यवस्थेति॥३॥

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्च उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

दृष्टान्तधर्मं साध्ये समासजत उत्कर्षसमः- यदि क्रियाहेतुगुणयोगाल्लोष्टवत् क्रियावानात्मा ( तदा ) लोष्टवदेव स्पर्शवानपि प्राप्नोति. अथ न स्पर्शवान् लोष्टवत् क्रियावानपि न प्राप्नोति, विपर्यये वा विशेषो वक्तव्य इति ।

---

धर्म्यात्= संप्रतिपन्नगोदृष्टान्तात् जातिविशेषाद् गोत्वाद् हेतुतः गौः सिध्यति यथा 'इयं गौः गोत्वात् संप्रतिपन्नगोवत्' इति, न तु सास्नादिसंबन्धमात्रात्- तेषां व्यभिचारित्वात्= सास्नादीनां पश्वन्तरेपि संभवात्, एवमश्वादिवैधर्म्यात्= अश्वादिव्यतिरेकदृष्टान्तादपि गोत्वादेव गौः सिध्यति न तु गुणादिभेदात्- गुणादिभेदस्यापि पश्वन्तरे संभवेन व्यभिचारित्वात् यथा 'अयं गौः गोत्वाद् यो न गोत्ववान् स न गौः यथाऽश्वादिः' इति, तथा च नात्मनि आकाशवैधर्म्येण वा लोष्टसाधर्म्यमात्रेण वा उक्तरीत्या सक्रियत्वं संभवति. एवं साध्यान्तरेष्वपि विज्ञेयम्। एतत् पूर्वमपि विचारितमित्याह- तच्चेति, अवयवप्रकरणे= प्रथमाध्यायप्रथमाह्निके "उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ३४" इत्यादिसूत्रेषु द्रष्टव्यम्। अनुमानवाक्यस्यैकसाध्यसाधकत्वमाह- प्रमाणानामिति, प्रमाणानाम्= अवयवानां वाक्ये= एकवाक्यघटकानामभिसंबन्धात्= परस्परं संबन्धादेकार्थकारित्वम्= एकसाध्यसाधकत्वं समानम्= सर्वानुमानप्रयोगसाधारणं भवति यथा 'पर्वतो वह्निमान् धूमात्' इतिवाक्यघटकानां प्रतिज्ञाद्यवयवानां वह्निसाधकत्वं भवति तथा चैकत्र विरुद्धधर्मापत्तिर्न संभवति- परस्परविरुद्धधर्मसाधकयोर्हेत्वोर्मध्ये एकस्यैव हेतोः सद्धेतुत्वेन साध्यसाधकत्वसंभवादित्याशयः प्रतिभाति। इयं चाव्यवस्था हेत्वाभासनिष्ठा= हेत्वाभासेन भवति यथा 'वह्निमान् जलात्' इत्युक्ते जलह्रदस्यापि वह्निमत्त्वं प्रसज्यते तथा चात्मनि सक्रियत्वसाधको हेतुर्हेत्वाभास एवेति न तेनात्मनि सक्रियत्वप्रसक्तिरित्यर्थः प्रतिभाति तदाह- हेत्वाभासाश्रयेति। "कृतव्याख्यानम्" इत्यत्र "कृतव्यवस्थानम्" इतिपाठान्तरम्। अत्र- "सास्नादीत्यतद्गुणसंविज्ञानो बहुव्रीहिस्तेन व्यभिचारिणः शृङ्गादयो गृह्यन्ते" इति तात्पर्यटीका ॥ ३ ॥

उत्कर्षसमाऽपकर्षसमवर्ण्यसमाऽवर्ण्यसमविकल्पसमसाध्यसमानां ( ३-८ ) लक्षणमाह- साध्येति, साध्यदृष्टान्तयोः= पक्षदृष्टान्तयोरुभयोर्धर्मविकल्पात्= धर्मभेदात् उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमा जातयो भवन्ति, उभयसाध्यत्वात्= पक्षदृष्टान्तयोरुभययोरपि प्रदर्शनीयधर्मस्य साध्यत्वे साध्यसमा जातिरित्यन्वयः सूत्रस्य, अन्यदुदाहरणसमन्वये स्पष्टम्, अत्रत्या वृत्तिरपि द्रष्टव्या। तथाह्यत्र- "वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः वर्ण्यत्वादिना समो वर्ण्यसमादिः, अविद्यमानधर्मारोप उत्कर्षः विद्यमानधर्मापचयोऽपकर्षः वर्ण्यत्वं वर्णनीयत्वं तच्च संदिग्धसाध्यकत्वादि, तदभावोऽवर्ण्यत्वं, विकल्पो वैविध्यं, साध्यत्वं पञ्चावयवसाधनीयत्वम्, साध्यदृष्टान्तयोर्धर्मविकल्पादिति पञ्चानामुत्थानबीजम् उभयसाध्यत्वादिति षष्ठस्य, उभयं पक्षदृष्टान्तौ तद्धर्मो हेत्वादिस्तत्साध्यत्वम्= तदधीनानुमितिविषयत्वम्" इत्यादिर्वृत्तिः। अत्र- "दृष्टान्ते दृष्टस्य पक्षेऽनिष्टस्य धर्मस्य साध्येन सहापादनमुत्कर्षसमः, दृष्टान्ते विद्यमानधर्माभावापादनमपकर्षसमः, दृष्टान्तसादृश्यमात्रेण साध्यापादनं वर्ण्यसमः, पक्षसादृश्यमात्रेण दृष्टान्ते साध्याभावापादनमवर्ण्यसमः, पक्षदृष्टान्तयोर्धर्मान्तरेण वैसादृश्यात् साध्यसाधनमसाध्यसाधनं वा विकल्पसमः, दृष्टान्ते दृष्टस्यापि साध्यत्वापादनं साध्यसमः, इति षड् जातयः" इतिश्रीगुरुचरणाः।

क्रमेण भाष्यकारो व्याचष्टे- दृष्टान्तेति, दृष्टान्तधर्मम्= साध्यविशेषम्. साध्ये= पक्षे, समासजतः= आपादयतः= आपदने इतियावत्। उदाहरति- यदीति, क्रियाहेतुगुणयोगादित्यादि साधर्म्य-

साध्ये धर्माभावं दृष्टान्तात् प्रसजतोऽपकर्षसमः– लोष्टः खलु क्रियावानऽविभुर्दृष्टः काममात्मापि क्रियावानविभुरस्तु. विपर्यये वा विशेषो वक्तव्य इति।

ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यः तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः।

साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात् साध्यधर्मविकल्पं प्रसजतो विकल्पसमः– क्रियागुणहेतुयुक्तं किंचिद् गुरु यथा लोष्टः किंचिच्च लघु यथा वायुरेवं क्रियाहेतुगुणयुक्तं किंचित् क्रियावत् स्याद् यथा लोष्टः किंचिदक्रियं यथाऽऽत्मा. विशेषो वा वाच्य इति।

हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यस्तं दृष्टान्ते प्रसजतः साध्यसमः– यदि ' यथा लोष्टस्तथाऽऽत्मा ?' प्राप्तस्तर्हि ' यथात्मा तथा लोष्टः ' इति. साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोपि साध्यः, अथ नैवम् ? न तर्हि ' यथा लोष्टस्तथात्मा ' ( इति ) ॥ ४ ॥

---

समायां व्याख्यातम्। प्रकृतमाह– लोष्टवदेवेति, अत्र तदेतिशेषः। विपक्षे बाधकमाह– अथेति। विपर्यये= आत्मा लोष्टवत् क्रियावानस्ति स्पर्शवान्नास्तीत्यत्र, इत्यनेन विनिगमाविरहः प्रदर्शितस्तेन विशेषहेत्वभावः समत्वहेतुरुपलब्ध इत्युत्कर्षसमः– आत्मनि स्पर्शवत्त्वलक्षणोत्कर्षस्य= आधिक्यस्य साधनात्, अत्र दृष्टान्तधर्मस्य= लोष्टधर्मस्य स्पर्शवत्त्वस्यानिष्टस्यात्मन्यापादनं स्पष्टमेव।

अपकर्षसमं व्याचष्टे– साध्ये इति, दृष्टान्तात्= दृष्टान्तसादृश्यात् साध्ये= पक्षे विद्यमानधर्मस्याऽभावमापादयतोऽपकर्षसमः । उदाहरति– लोष्ट इति, अत्रात्मनि विद्यमानं यद्विभुत्वं तदऽभावस्याऽविभुत्वस्यापादनं लोष्टसादृश्यात् स्पष्टमेवेत्यपकर्षसमः– अपकर्षापादनात्, अन्यत् पूर्ववदेव व्याख्येयम्।

वर्ण्यावर्ण्यसमौ व्याचष्टे– ख्यापनीय इति, विपर्ययात्= वर्ण्यविपरीतोऽख्यापनीयोऽवर्ण्य इत्यर्थः, वर्ण्यत्वम्= संदिग्धसाध्यकत्वं तच्च साध्यस्य= पक्षस्य धर्मस्तद्विपर्यस्यतः= तद्विपर्यये= पक्षस्य निश्चितसाध्यकत्वे वर्ण्यसमः, ख्यापनीयः= उपपाद्यः= साध्यः, अवर्ण्यत्वम्= निश्चितसाध्यकत्वं तच्च दृष्टान्तधर्मस्तद्विपर्यये= दृष्टान्तस्यानिश्चितसाध्यकत्वे चाऽवर्ण्यसम इत्यन्वयः। यथा– ' घटोऽनित्यः कृतकत्वात् शब्दवत् यदि शब्दो नानित्यस्तदा घटोप्यनित्यो न स्यात् ' इत्यत्र घटेऽनित्यत्वसंशयो नास्ति शब्दे चानित्यत्वसंशयोस्तीति पक्षदृष्टान्तौ विपरीतौ जाताविति पक्षस्य घटस्य संदिग्धसाध्यकत्वाभावात् वर्ण्यसमा जातिः. दृष्टान्तस्य शब्दस्य निश्चितसाध्यकत्वाभावादवर्ण्यसमा जातिः. साध्यं चात्रानित्यत्वमित्याशयः प्रतिभाति। किं वा ' अनित्यो घटः कृतकत्वात् पटवत् ' इत्यत्र वर्ण्यसमा– घटे पक्षेऽनित्यत्वसंशयाभावात्, ' बुद्धिरनित्या कृतकत्वात् शब्दवत् ' इत्यत्र दृष्टान्ते शब्देऽनित्यत्वनिश्चयाभावादवर्ण्यसमा जातिरित्येवं पृथक् पृथगुदाहार्यम्।

विकल्पसमं व्याचष्टे– साधनेति, साधनधर्मयुक्ते= हेतुयुक्ते, तथा हि– ' क्रियावानात्मा क्रियाहेतुगुणयोगात् लोष्टवत् ' इत्युक्ते विकल्पसमामुदाहरति– क्रियेति, अत्र दृष्टान्ते लोष्टे साधनधर्मयुक्ते= हेतुयुक्ते= क्रियाहेतुगुणयुक्ते धर्मान्तरविकल्पात्= क्रियाहेतुगुणयुक्तस्य लघुत्वालघुत्वधर्मभेदात् पक्षे साध्यधर्मविकल्पम्= साध्यधर्मभेदम्= साध्यधर्माभावम्= क्रियावत्त्वाभावं प्रसजतः= आपादने विकल्पसमाजातिरिति लक्षणसमन्वयः, प्रकृते क्रियाहेतुगुणयुक्तस्यापि वायोर्यथा लोष्टवन्न गुरुत्वं तथा क्रियाहेतुगुणयुक्तस्याप्यात्मनो लोष्टवन्न क्रियावत्त्वप्रसङ्गः– पदार्थानां विकल्पात्= वैविध्यादित्यर्थः। विनिगमनाविरहमाह– विशेष इति, विशेषः= आत्मा क्रियावानेवास्तीत्यत्र विशेषहेतुर्वा वाच्यः। विशेषहेत्वभावश्च समत्वप्रयोजक इति विकल्पसमः– विकल्पस्य= दृष्टान्तधर्माभावस्य= क्रियावत्त्वाभावस्यापादनात्।

साध्यसमं व्याचष्टे– हेत्वादीति, हेत्वाद्यवयवानां सामर्थ्ययोगी= सामर्थ्येनोपपाद्यमानः साध्यः, तम्= साध्यम्= साध्यस्य धर्मस्य दृष्टान्ते साध्यत्वं प्रसजतः= आपादयत इत्यर्थः, किं वा तं साध्यं दृष्टान्ते साध्यत्वेनापादयत इत्यर्थः, ' क्रियावानात्मा क्रियाहेतुगुणयोगात् लोष्टवत् ' इत्युक्ते प्रथमं लोष्टात्मनोः

एतेषामुत्तरम्—

किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥

अलभ्यः सिद्धस्य निह्नवः, सिद्धं च किंचित्साधर्म्यादुपमानम्- 'यथा गौस्तथा गवयः' इति, तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुम्, एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पात्= वैधर्म्यात् प्रतिषेधो वक्तुमिति ॥ ५ ॥

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं तेनाऽविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थम्. एवं साध्यातिदेशाद् दृष्टान्ते उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

---

सादृश्यमाह- यदीति । एवं सादृश्यं प्रदर्श्य साध्यसमामुदाहरति- साध्य इति, साध्यः= क्रियावत्त्वेन साध्यः, लोष्टात्मनोः परस्परं सादृश्यमस्तीति आत्मनि क्रियावत्त्वे साध्ये लोष्टेऽपि क्रियावत्त्वं साध्यमेव स्यादित्यत्र लोष्टस्य दृष्टान्तत्वानुपपत्तिरित्यर्थः । विपक्षे बाधकमाह- अथेति, यदि लोष्टे क्रियावत्त्वं न साध्यं किं तु सिद्धमेव तदा लोष्टात्मनोः सादृश्यं नोपपद्यते- धर्मभेदादित्याह- नेति । तथा चात्र साध्यस्य क्रियावत्त्वस्योभयत्र= पक्षदृष्टान्तयोः साध्यत्वमापादितमिति साध्यसमा जातिरिति लक्षणसमन्वयः । पूर्वत्र तु पञ्चस्वपि जातिषु पक्षदृष्टान्तयोर्धर्मविकल्पः= धर्मभेदः प्रदर्शित इतिसूत्रोक्तलक्षणसमन्वयः ॥४॥

अग्रिमसूत्रमवतारयति- एतेषाम्= उक्तानामुत्कर्षसमादीनां षण्णां जातीनाम् । किंचिदिति- कस्यचित्साधर्म्यात् उपसंहारसिद्धेः= साध्योपसंहारे सिद्धे कस्यचिद्वैधर्म्यात् साध्यस्य प्रतिषेधो न संभवतीति सूत्रान्वयः । व्याचष्टे- अलभ्य इति, अलभ्यः= अशक्यः, निह्नवः= अपलापः । दृष्टान्तस्वरूपमाह- सिद्धमिति, किंचित्साधर्म्यात्= किंचित्साधर्म्यविशिष्टं यत् सिद्धं भवति तदुपमानम्= दृष्टान्तो भवति न त्वसिद्धं वा सर्वधर्मविशिष्टं वेत्यर्थः । दृष्टान्तमुदाहरति- यथेति । प्रकृतमाह- तत्रेति, तत्र= गोगवययोः सादृश्ये सिद्धे धर्मविकल्पः= धर्मभेदः= सादृश्याभावश्चोदयितुम्= उपपादयितुं न लभ्यः= न शक्य इत्यन्वयः । परमं प्रकृतमाह- एवमिति, साधके धर्मे= हेतौ दृष्टान्तादिसामर्थ्ययुक्ते= दृष्टान्तादिसाहाय्ययुक्ते सति साध्यदृष्टान्तयोः= पक्षदृष्टान्तयोर्धर्मविकल्पात्= वैधर्म्यात्= धर्मान्तरभेदात्= धर्मान्तरेण वैसादृश्यादपि साध्यप्रतिषेधो वक्तुं न शक्य इत्यन्वयः, तथा चोदाहृतस्थलेषु पक्षदृष्टान्तयोः किंचिद्वैधर्म्यात् साध्यप्रतिषेधो न संभवतीत्यर्थः, यथोत्कर्षसमोदाहरणे स्पर्शवत्त्वाभावेनात्मनि क्रियावत्त्वाभावो न संभवति । अपकर्षसमायां लोष्टस्याविभुत्वेनात्मन्यविभुत्वं न संभवति- पक्षसपक्षयोः सर्वात्मना साधर्म्यासंभवात्, वर्ण्यसमावर्ण्यसमयोश्च पक्षसपक्षयोर्यो धर्मविपर्यास उक्तः स नोपपद्यते । दृष्टान्तसादृश्येन पक्षे साध्ये सिद्धे साध्याभावो नोपपद्यते इति विकल्पसमानुपपत्तिः, दृष्टान्ते साध्यनिश्चयसत्त्वादेव साध्यसमाया अनुपपत्तिरित्येवं योज्यम् ॥ ५ ॥

वर्ण्यावर्ण्यसाध्यसमानां समाधानान्तरमाह- साध्येति, अत्र- "वर्ण्यावर्ण्यसाध्यसमानामपरं प्रत्याख्यानमाह" इति तात्पर्यटीका, साध्यातिदेशात्= साध्यसत्त्वप्रदर्शनेन दृष्टान्तस्य दृष्टान्तत्वमुपपद्यते तथा च लोष्टे क्रियावत्त्वस्य साध्यस्य प्रत्यक्षत्वात् लोष्टस्य दृष्टान्तत्वमुपपद्यते न त्वात्मन इति-सूत्रान्वयः । अत्र- "न हि दृष्टान्तदृष्टसकलधर्मयोगित्वं पक्षस्य सुवचं तथा सति दृष्टान्तदार्ष्टान्तिकभावस्यैवानुपपत्तेः किं तु दृष्टान्तदृष्टसाध्यव्याप्यहेतुमत्तानिश्चयेन साध्यमात्रं पक्षे सिध्यति न तत्समानाधिकरणं धर्मान्तरं नापि पक्षप्रसिद्धधर्मवत्ता दृष्टान्ते- साधकाभावादिति भावः" इति श्रीगुरुचरणास्तथा च लोष्टवृत्तिस्पर्शादीनामात्मन्यतिप्रसङ्गो न संभवतीत्यर्थः । व्याचष्टे- यत्रेति, यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तस्तेन= दृष्टान्तेनाऽविपरीतः= अनुकूलः= सदृशोर्थः प्रज्ञापनार्थम्= परं प्रति बोधनार्थमतिदिश्यते यथा महानसवद् वह्निमानिति, किं वा तेन= उक्तबुद्धिसाम्येनानुकूलोर्थो

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादऽप्राप्त्याऽसाधकत्वाच्च प्राप्त्यऽप्राप्तिसमौ ॥ ७ ॥**

हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ?, न तावत् प्राप्य– प्राप्त्यामविशिष्टत्वादऽसाधकः= द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ? । अप्राप्य साधकं न भवति– नाऽप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः, अप्राप्त्या प्रत्यवस्थानमऽप्राप्तिसमः ॥ ७ ॥

अनयोरुत्तरम्—

**घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥**

उभयथा खल्वयुक्तः प्रतिषेधः– कर्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति, अभिचाराच्च पीडने सति दृष्टमऽप्राप्य साधकत्वमिति ॥ ८ ॥

---

महानसादिर्दृष्टान्तत्वेनातिदिश्यते इत्यर्थः । उपसंहरति– एवमिति, साध्यसत्त्वेन दृष्टान्तस्य दृष्टान्तत्वे उपपन्ने तस्य पक्षवत् साध्यत्वम्= साध्यवत्त्वेन साध्यत्वं साध्यसमायां यदुक्तं तदनुपपन्नमिति साध्यसमाया अनुपपत्तिरित्यर्थः । एवं वर्ण्यसमायां निश्चितसाध्यवतो यत् पक्षत्वमुक्तं तन्नोपपद्यते– साध्यनिश्चयवत्त्वेन सपक्षत्वात् पक्षत्वानुपपत्तेः, अवर्ण्यसमायां च यत् साध्यनिश्चयरहितस्य सपक्षत्वमुक्तं तदपि नोपपद्यते– निश्चितसाध्यस्यैव सपक्षत्वात्= दृष्टान्तत्वादिति वर्ण्यसमावर्ण्यसमयोरनुपपत्तिरित्यर्थः ॥ ६ ॥

प्राप्तिसमाऽप्राप्तिसमयोर्लक्षणमाह– प्राप्येति, हेतोः साध्यं प्राप्य= संयुज्य साध्यसाधकत्वपक्षे प्राप्त्याऽविशिष्टत्वात्= साध्यसाधनयोः संयोगस्य परस्परमविशेषात् साध्यसाधनभावो नोपपद्यते इति प्राप्तिसमा जातिर्यथा वह्निमान् धूमादित्यत्र वह्निधूमयोः संयोगस्य समानत्वाद् धूमवद् वह्नेरपि हेतुत्वं स्यात् किं वा वह्निवद् धूमस्यापि साध्यत्वं स्यादिति । हेतोः साध्यमप्राप्य= असंयुज्य साध्यसाधकत्वपक्षे अप्राप्त्याऽसाधकत्वात्= संबन्धाभावे साधकत्वासंभवात् साध्यसाधनभावो नोपपद्यते इति अप्राप्तिसमाजातिर्यथा वह्न्यसंयुक्तस्य धूमस्य वह्निसाधकत्वं नोपपद्यते इति स्पष्टमेवेति सूत्रार्थः । व्याचष्टे– हेतुरिति, प्राप्य= संयुज्य, प्रथमकल्पासंभवमाह– नेति, प्राप्त्याम्= संबन्धे= संयोगे, अविशिष्टत्वात्= विशेषाभावात् । उक्तं व्याचष्टे– द्वयोरिति, द्वयोः= साध्यसाधनयोः, प्राप्तौ= संयोगे, तथा च यथा वह्निमान् धूमादिति संभवति तथा धूमवान् वह्नेरित्यपि स्यादित्यर्थः । द्वितीयकल्पासंभवमाह– अप्राप्येति । अत्र दृष्टान्तमाह– नेति । तथा च वह्न्यसंयुक्तस्यापि धूमस्य वह्निसाधनत्वं नोपपद्यते इत्यर्थः। निर्वचनमाह– प्राप्त्येति. अप्राप्त्येति च ॥ ७ ॥

अग्रिमसूत्रमवतारयति– अनयोरिति, अनयोः= प्राप्तिसमाऽप्राप्तिसमयोः । घटादीति– घटादिकारणानि मृदादिकमुपादानं प्राप्य= संयुज्य घटादिकं संपादयन्तीति कारणसंयोगात् घटादिनिष्पत्तिदर्शनात् प्राप्तस्य साधनस्य साधकत्वं नानुपपन्नम्, "श्येनेनाभिचरन् यजेत" इतिश्रुत्या श्येनस्याऽभिचारसाधनत्वमुक्तं तत्रासंयुक्तेनैव श्येनयागेन शत्रुपीडा साध्यते इति अभिचारात् यत् पीडनं जायते तत्र "अप्राप्य साधकं न भवति" इतिनियमस्य व्यभिचार इति प्राप्तस्याऽप्राप्तस्य च साधनस्य साधकत्वप्रतिषेधो नोपपद्यते इतिसूत्रार्थः । व्याचष्टे– उभयथेति, उभयथा= प्राप्य चाप्राप्य चेत्युभयथापि, प्रतिषेधः= साधकत्वप्रतिषेधः । प्राप्यसाधकत्वमाह– कर्त्रीति, अधिकरणम्= चक्रादिकम् । तथा च प्राप्य साधकत्वं सिद्धम्, संयोगस्य विशेषाभावेपि साधनत्वधर्मेण व्याप्यत्वादिना विशिष्टस्यैव साधनत्वमिति न विनिगमनाविरह इत्यर्थः । अप्राप्य साधकत्वमाह– अभिचारादिति, अभिचारात्= श्येनादियागात् । सति= सिद्धे । श्येनादीनामप्राप्य साधकत्वं दृष्टमित्यप्राप्तस्यापि साधकत्वं नानुपपन्नं स्पष्टमन्यत् ॥ ८ ॥

## दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः– क्रियाहेतुगुणयोगी क्रियावान् लोष्ट इतिहेतुर्नापदिश्यते न च हेतुमन्तरेण सिद्धिरस्तीति ।

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः– 'क्रियावानात्मा क्रियाहेतुगुणयोगात् लोष्टवत्' इत्युक्ते प्रतिदृष्टान्त उपादीयते– 'क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियं दृष्टम्' इति, कः पुनराकाशस्य क्रियाहेतुर्गुणः ? वायुना संयोगः संस्कारापेक्षः वायुवनस्पतिसंयोगवदिति ॥९॥

अनयोरुत्तरम्—

## प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥

इदं तावदयं पृष्टो वक्तुमर्हति– अथ के प्रदीपमुपाददते किमर्थं चेति ?, दिदृक्षमाणा दृश्यदर्शनार्थमिति । अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते ?, अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपस्तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः किमर्थमुच्यते इति ?, अप्रज्ञातस्य ज्ञापनार्थमिति । अथ दृष्टान्ते कारणापदेशः किमर्थं मृग्यते ?,

---

प्रसङ्गसमप्रतिदृष्टान्तसमौ लक्षयति– दृष्टान्तस्येति, दृष्टान्तस्य हेतुमत्त्वे कारणानपदेशात्= प्रमाणानभिधानात्= हेत्वनभिधानात्= हेतुवचनानवस्थायां प्रसङ्गसमा जातिः, प्रतिदृष्टान्तेन प्रत्यवस्थानात्= साध्याभावबोधने च प्रतिदृष्टान्तसमा जातिरिति यथासंख्यं सूत्रान्वयः । व्याचष्टे– साधनस्यापीति, साधनस्य= हेतोरपि साधनम्= हेतुर्वक्तव्यः । प्रतिषेधः= जातिः । उदाहरति– क्रियेति, इति= इत्यत्र= लोष्टस्य क्रियाहेतुगुणयोगित्वे हेतुर्नोच्यते हेतुं विना च हेतुमत्त्वसिद्धिर्न संभवति अन्यथा साध्यसिद्धिरपि हेतुमन्तरेण स्यादिति उत्तरोत्तरं हेतुर्वक्तव्य इति प्रसङ्गात् प्रसङ्गसमा जातिरित्यन्वयः ।

प्रतिदृष्टान्तसमां निर्वक्ति– प्रतिदृष्टान्तेनेति । उदाहरति– क्रियेति । प्रतिदृष्टान्तसमामाह– क्रियाहेतुगुणयुक्तमिति, 'एवं क्रियाहेतुगुणयुक्तोप्यात्मा निष्क्रियः किं न स्यादाकाशवत्' इतिशेषः, तथा च लोष्टापेक्षया प्रतिदृष्टान्तेनाकाशेनाकाशवदात्मनः क्रियाहेतुगुणयुक्तत्वेपि निष्क्रियत्वं प्राप्तमिति लक्षणसमन्वयः । आकाशस्य क्रियाहेतुगुणं जिज्ञासते– क इति । उत्तरमाह– वायुनेति, यथा वायुवृक्षसंयोगः क्रियाहेतुगुणस्तथा संस्कारापेक्षः= वायुगतस्थितिस्थापकादिसंस्कारजन्यो जीवादृष्टजन्यो वा वाय्वाकाशसंयोग एवाकाशस्य क्रियाहेतुगुण इत्यन्वयः । वस्तुतस्तु संस्कारापेक्ष इतिविशेषणं चिन्त्यम् । आकाशे च क्रियाया अभावात् क्रियाहेतुगुणोपि न संभवतीति "क्रियाहेतुगुणयुक्तमाकाशम्" इत्याद्युक्तं जात्युत्तरमिति विज्ञेयम्; प्रतिदृष्टान्तेनात्मनो निष्क्रियत्वस्यापादनात् प्रतिदृष्टान्तसमा ॥ ९ ॥

अग्रिमसूत्रमवतारयति– अनयोरिति, अनयोः= प्रसङ्गसमप्रतिदृष्टान्तसमयोः । प्रदीपेति– यथा प्रदीपदर्शनार्थं प्रदीपान्तरग्रहणस्य प्रसङ्गो नास्ति तथा तत्= तस्य= हेतुसिद्ध्यर्थं हेत्वन्तरप्रदर्शनप्रसङ्गस्य निवृत्तिर्विज्ञेयेति प्रसङ्गसमाया उत्तरमिति सूत्रार्थः । व्याचष्टे– इदमिति, अयम्= पूर्वोक्तजातिवादी, इदं वक्तुमर्हतीत्यन्वयः । स्वप्रष्टव्यमाह– अथेति । पूर्वपक्षी उत्तरमाह– दिदृक्षमाणा इति । अग्रिमप्रष्टव्यमाह– अथ प्रदीपमिति । पूर्वपक्ष्युत्तरमाह– अन्तरेणेति, तत्र= प्रदीपान्तरं विनापि प्रदीपस्य दृश्यमानत्वादित्यर्थः । प्रकृतं पृच्छति– अथ दृष्टान्त इति । उत्तरमाह– अप्रज्ञातस्येति, अप्रज्ञातस्य= असिद्धस्य पदार्थस्य ज्ञापनार्थम्= साधनार्थम् । परमं प्रकृतं पृच्छति– अथ दृष्टान्ते इति, दृष्टान्ते= दृष्टान्तस्य कारणापदेशः– हेतुसाधकनिर्देशस्त्वया किमर्थं मृग्यते– अपेक्ष्यते उत्तरीत्येत्यन्वयः, अत्र– "दृष्टान्तस्य

यदि प्रज्ञापनार्थम् ?, प्रज्ञातो दृष्टान्तः स खलु– " लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः १–१–२५ " इति तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

अथ प्रतिदृष्टान्तसमस्योत्तरम्—

## प्रतिदृष्टान्तहेतुत्वे च नाऽहेतुर्दृष्टान्तः ॥ ११ ॥

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते– अनेन प्रकारेण प्रतिदृष्टान्तः साधको न दृष्टान्त इति, एवं प्रतिदृष्टान्तहेतुत्वे नाऽहेतुर्दृष्टान्त इत्युपपद्यते. स च कथं हेतुर्न स्याद् यद्यप्रतिषिद्धः साधकः स्यादिति ॥ ११ ॥

## प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते अपर आह– प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति तदभावाद् नित्यत्वं प्राप्तं नित्यस्य चोत्पत्तिर्नास्ति । अनुत्पत्त्या प्रत्यवस्थानमऽनुत्पत्तिसमः ॥ १२ ॥

---

कारणानपदेशात् " इतिपूर्वसूत्रोक्तं स्मर्तव्यम् । ननु दृष्टान्तस्य कारणापदेशः प्रज्ञापनार्थं मृग्यते ? इत्याह– यदीति । अस्योत्तरमाह– प्रज्ञात इति, हेतुसाध्यवत्त्वेन सिद्ध एव दृष्टान्तो भवतीति दृष्टान्तस्य हेतुसाध्यवत्त्वेन सिद्ध्यर्थं कारणापदेशो निरर्थक एवेत्यर्थः । दृष्टान्तस्य प्रज्ञातत्वसमर्थनार्थं पूर्वोक्तं दृष्टान्तलक्षणमाह– लौकिकेति, सूत्रमिदं पूर्वत्र व्याख्यातम् । उपसंहरति– तदिति, तत्प्रज्ञापनार्थः= दृष्टान्तप्रज्ञापनार्थः, तथा च यथा दीपदर्शनार्थं दीपान्तरापेक्षा न भवति तथा दृष्टान्तस्योक्तरीत्या कारणापदेशापेक्षा= हेतुसमाधानापेक्षा नास्तीति प्रसङ्गसमा नोपपद्यते इत्यर्थः ॥ १० ॥

अग्रिमसूत्रमवतारयति– अथेति । प्र[illegible]ति– प्रतिदृष्टान्तस्य हेतुत्वे च= साधकत्वेपि दृष्टान्तः अहेतुः= असाधको न भवति तत्र दृष्टान्तप्रतिदृष्टान्तयोर्द्वयोरपि साधकत्वे व्याप्तिबलेनैव साध्यसिद्धिः संभवति न तु दृष्टान्तमात्रेणेति प्रतिदृष्टान्तमात्रेण साध्याभावापत्तिर्न संभवतीति नाकाशदृष्टान्तमात्रेणात्मनो निष्क्रियत्वमापद्यते इति प्रतिदृष्टान्तसमोत्तरमिति सूत्रार्थः । अत्र प्रथमं प्रतिदृष्टान्तसमा द्रष्टव्या । व्याचष्टे– प्रतिदृष्टान्तमिति । उपसंहरति– एवमिति, प्रतिदृष्टान्तस्य हेतुत्वेपि दृष्टान्तस्याऽहेतुत्वं नोपपद्यते इत्यर्थः । अत्र विनिगमनामाह– स चेति, सः= दृष्टान्तः, हेतुः= साधकः । अत्र– " कथमहेतुर्न स्यात् " इतिपाठान्तरं तु सूत्रवार्तिकविरुद्धमेव प्रतिभाति । अप्रतिषिद्धस्य= अदुष्टस्य साधकत्वं युक्तमेवेति लोष्टलक्षणदृष्टान्तस्यात्मनि क्रियावत्त्वसाधकत्वमुपपन्नमेवेति नाकाशलक्षणप्रतिदृष्टान्तेनात्मनि क्रियावत्त्वस्य बाधः संभवतीत्यर्थः । अत्र " साधकः " इति पाठो न युक्त इति प्रतिभाति ॥ ११ ॥

अनुत्पत्तिसमां जातिं लक्षयति– प्रागिति, उत्पत्तेः प्राक् पदार्थे कारणाभावात्= साध्यसाधकाभावात्= हेत्वभावात् साध्याभावप्रदर्शनमनुत्पत्तिसमा जातिरिति सूत्रान्वयः । व्याचष्टे– अनित्य इति, प्रयत्नानन्तरीयकत्वात्= प्रयत्नानन्तरभावित्वात्, यत्र यत्र प्रयत्नानन्तरभावित्वं तत्र तत्र जन्यत्वं तेन चानित्यत्वं स्पष्टमेव । अनुत्पत्तिसमामाह– प्रागुत्पत्तेरिति, यदा हि प्रागुत्पत्तेः शब्द एव नास्ति तदा शब्दे प्रयत्नानन्तरीयकत्वं कथं स्यात्–आधारं विना तदाधेयानुपपत्तेरिति स्पष्टमेव, तदभावात्= प्रयत्नानन्तरीयकत्वलक्षणस्यानित्यत्वकारणस्याभावात् । उपसंहरति– नित्यस्येति, एवं नित्यस्य शब्दस्योत्पत्त्यभावादनित्यत्वं नोपपद्यते इत्येवमनुत्पत्तिसमा जातिर्विज्ञेयेत्यर्थः । निर्वचनमाह– अनुत्पत्त्येति । प्रकृतेऽनुत्पत्त्या= शब्दस्यानुत्पत्त्या, प्रत्यवस्थानम्= नित्यत्वप्रत्यवस्थानमित्यनुत्पत्तिसम इत्यन्वयः, स्पष्टमन्यत् १२

अस्योत्तरम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥**

तथाभावादुत्पन्नस्येति- उत्पन्नः खल्वयं शब्द इति भवति. प्रागुत्पत्तेः शब्द एव नास्ति- उत्पन्नस्य शब्दभावात्. शब्दस्य सतः प्रयत्नानन्तरीयकत्वम् अनित्यत्वकारणमुपपद्यते. कारणोपपत्तेरयुक्तोयं दोषः- "प्रागुत्पत्तेः कारणाभावात्" इति ॥ १३ ॥

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १४ ॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते हेतौ. संशयेन प्रत्यवतिष्ठते- सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्यम्- ऐन्द्रियकत्वम्. अस्ति च घटेनानित्येन. अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

अस्योत्तरम्-

**साधर्म्यात्संशये न संशयो वैधर्म्यात्. उभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥**

---

अग्रिमसूत्रमवतारयति- अस्येति, अस्य= उक्तस्यानुत्पत्तिसमस्य । तथेति- उत्पन्नस्यैव शब्दस्य तथाभावात्= शब्दत्वसंभवात्= स्वरूपसंभवात् उत्पन्नस्य च कारणोपपत्तेः= प्रयत्नानन्तरीयकत्वोपपत्तेः कारणस्य= अनित्यत्वहेतोः प्रयत्नानन्तरीयकत्वस्य प्रतिषेधो न संभवतीत्यन्वयः, यदा शब्दस्तदा शब्दे प्रयत्नानन्तरीयकत्वमप्यस्त्येवेति न पूर्वोक्तरीत्या शब्दवृत्तिप्रयत्नानन्तरीयकत्वस्य प्रतिषेधः संभवतीति सूत्रार्थः।व्याचष्टे- तथाभावादिति, तथाभावादुत्पन्नस्येति सूत्रप्रतीकम् । अयं शब्द उत्पन्नः सन्नेव शब्दो भवति न तूत्पत्तेः पूर्वमपीत्यर्थः।उक्ते हेतुमाह- उत्पन्नस्येति, शब्दभावात्= शब्दत्वात्= शब्दस्य उत्पन्नस्य स्वरूपसंभवादित्यर्थः । पर्यवसितमाह- शब्दस्येति । सतः= विद्यमानस्य । उपसंहरति- कारणेति, कारणोपपत्तेः=अनित्यत्वकारणस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेः । अयम्= पूर्वसूत्रोक्तः । शब्दोत्पत्तेः पूर्वं शब्द एव नास्तीति शब्दस्वरूपसिद्धेः पूर्वं यः खलु शब्दे प्रयत्नानन्तरीयकत्वाभावः स न दोषायेत्यर्थः ॥१३॥

संशयसमां लक्षयति- सामान्येति, येनेन्द्रियेण पदार्थो गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिः= सामान्यमपि गृह्यते इति शब्दत्वसामान्येप्यैन्द्रियकत्वम्= इन्द्रियग्राह्यत्वं सिद्धं तथा च सामान्ये= शब्दत्वे दृष्टान्ते= घटे चैन्द्रियकत्वं समानमेव तथैन्द्रियकत्वं शब्देप्यस्ति तत्र सामान्यं नित्यं घटश्चानित्य इति तयोः नित्यानित्ययोः साधर्म्यात्= ऐन्द्रियकत्वसाधर्म्यात् शब्दे नित्यत्वानित्यत्वसंशयः- 'अनित्यः शब्द ऐन्द्रियकत्वाद् घटवत्' किं वा 'नित्यः शब्द ऐन्द्रियकत्वात् शब्दत्ववत्' इति संशयेनैवं प्रत्यवस्थानं संशयसम इतिसूत्रार्थः । व्याचष्टे- अनित्य इति । हेतावित्यस्य 'इत्युक्ते' इत्यनेनान्वयः न तु संशयप्रयुक्तप्रत्यवस्थानेन । प्रत्यवस्थानमाह- सतीति, सत्यपीत्यर्थः, अस्य= शब्दस्य, शब्दे प्रयत्नानन्तरीयकत्ववद् ऐन्द्रियकत्वमप्यस्तीत्यर्थः तच्च नित्यानित्ययोः शब्दत्वघटयोरपि धर्मः, किं वा घटेनाऽनित्येन सह शब्दस्य प्रयत्नानन्तरीयकत्वं सामान्येन चैन्द्रिकत्वं साधर्म्यमस्तीत्यर्थः । उपसंहरति- अत इति। नित्यानित्ययोः साधर्म्यात् शब्दे नित्यत्वानित्यत्वयोः संशयो न निवर्तते इति संशयसमेत्यर्थः. १४

अग्रिमसूत्रमवतारयति- अस्येति, अस्य= उक्तस्य संशयसमस्य । साधर्म्यादिति- साधर्म्यात्= सामान्यधर्मदर्शनात् संशये= संशयसंभवेपि वैधर्म्यात्= विशेषधर्मदर्शनात् संशयो न भवति किं तु संशयो निवर्तते एवेति शब्दे प्रयत्नानन्तरीयकत्वस्य विशेषधर्मस्य अनित्यत्वहेतोर्दर्शनादनित्यत्वावधा

विशेषाद् वैधर्म्यादवधार्यमाणेऽर्थे 'पुरुषः' इति न स्थाणुपुरुषसाधर्म्यात् संशयोऽवकाशं लभते, एवं वैधर्म्याद् विशेषात् प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्याऽनित्यंसाधर्म्यान् संशयोऽवकाशं न लभते. यदि वै लभेत ? ततः स्थाणुपुरुषसाधर्म्याऽनुच्छेदादत्यन्तं संशयः स्यात्, गृह्यमाणे च विशेषे नित्यसाधर्म्यं संशयहेतुरिति नाभ्युपगम्यते- नहि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति ॥ १५ ॥

## उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥

उभयेन= नित्येन चानित्येन साधर्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया, 'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्' इत्येकः पक्षं प्रवर्तयति. द्वितीयश्च नित्यसाधर्म्यात्, एवं च सति 'प्रयत्नानन्तरीयकत्वात्' इतिहेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते. प्रकरणानतिवृत्तेर्निर्णयानतिवर्तनम्, समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ, तदिदं प्रकरणानतिवृत्त्या प्रत्य-

---

रणेन नित्यत्वानित्यत्वसंशयो निवर्तते, उभयथा= सामान्यधर्मविशेषधर्मदर्शनाभ्यां वा संशये= यदि संशयस्तदाऽत्यन्तसंशयः स्यात्= कदापि संशयनिवृत्तिर्न स्यात्, किं च सामान्यस्य= शब्दत्वस्यापि नित्यत्वं न स्वीक्रियते येन तद्दृष्टान्तेन शब्दस्य नित्यत्वमापद्येत, तदेतत् परमुखेन वचनम् किं वा सामान्यस्य= साधर्म्यस्य= समानधर्मस्य नित्यत्वानभ्युपगमात्= नित्यत्वसंशयजनकत्वानभ्युपगमात् अप्रतिषेधः= प्रतिषेधः= उक्तरूपः संशयसमो नोपपद्यते इति सूत्रार्थः । अत्र- "साधर्म्यात्= साधर्म्यदर्शनात् संशयः, वैधर्म्यात्= विशेषदर्शनात्र संशयः, उभयथा तु संशये= सामान्यविशेषदर्शने सति संशयेऽत्यन्तसंशयप्रसङ्गः, नित्यं सामान्यं संशयं करोतीति तु न प्रतिपद्यामहे, सति सामान्ये विशेषदर्शनाद् व्यावृत्तेरिति ( संशयनिवृत्तिदर्शनाद् )" इतिवार्तिकम् । व्याचष्टे- विशेषादिति, वैधर्म्यात्= विशेषात्= पुरुषत्वव्याप्यधर्मविशेषात् अर्थे 'पुरुषः' इत्यवधार्यमाणे स्थाणुपुरुषयोरारोहादिलक्षणसाधर्म्यदर्शनादपि 'स्थाणुर्वा पुरुषो वा' इति संशयो न संभवतीत्यर्थः । सामान्यमुक्त्वा प्रकृतं विशेषमाह- एवमिति । नित्यानित्यसाधर्म्यात्= शब्दत्वघटयोरुक्तसाधर्म्यात्, संशयः= शब्दे नित्यत्वानित्यत्वसंशयः । विपक्षे बाधकमाह- यदीति, यदि विशेषावधारणे सत्यपि नित्यानित्यसाधर्म्यात् संशयोऽवकाशं लभेतेत्यर्थः । ततः= तदा, संशयकारणस्य साधर्म्यस्य विनाशाभावेन संशयनिवृत्तिः कदापि न स्यात् न चैवमस्ति किं तु विशेषधर्मज्ञानात् संशयो निवर्तते एवेत्यर्थः । पर्यवसितमाह- गृह्यमाणे इति, नित्यसाधर्म्यम्= शब्दत्वसाधर्म्यम्, 'नित्यं साधर्म्यम्' इतिपाठे तु 'साधर्म्यं नित्यम्= सदा संशयहेतुरिति नाभ्युपगम्यते' इत्यन्वयः । विशेषग्रहणात् प्रागेव संशयो भवति नानन्तरमित्यर्थः । उक्ते विनिगमनामाह- न हीति । स्पष्टमन्यत् । विशेषावधारणमेव संशयनिवर्तकं तत्र यदि विशेषावधारणे जातेपि किंचित्सामान्यधर्मेण संशयः स्यात् तदा कदापि संशयनिवृत्तिर्न स्याद् विशेषावधारणादन्यस्य संशयनिवर्तकस्याऽसंभवादिति विशेषावधारणानन्तरं तत्र संशयो न भवतीति स्वीकार्यमित्याशयः । विशेषे= पुरुषत्वव्याप्यधर्मविशेषे॥ १५ ॥

प्रकरणसमां लक्षयति- उभयेति, उभयसाधर्म्यात्= दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्यात् प्रक्रिया सिद्धेः= पक्षप्रतिपक्षलक्षणप्रकरणस्य सिद्धेः प्रकरणसमा जातिरिति सूत्रान्वयः, अन्यत्सर्वं भाष्ये स्पष्टम्। व्याचष्टे- उभयेनेति, अनेन प्रक्रियापदार्थो व्याख्यातः । एकं पक्षमाह- अनित्य इति, द्वितीयमाह- द्वितीयश्चेति, एकः= वादी, द्वितीयः= प्रतिवादी, नित्यसाधर्म्यात्= नित्यपदार्थसाधर्म्यात् । 'नित्यः शब्दः श्रावणत्वात् शब्दत्ववत्' इतिपक्षं द्वितीयः प्रवर्तयतीत्यर्थः । समन्वयति- एव चेति, अनित्यसाधर्म्येण= घटादिसाधर्म्येण, प्रकरणं च प्रक्रिया प्रतिपक्षमितियावत् । पर्यवसितमाह- प्रकरणेति, प्रकरणानतिवृत्तेः= प्रतिपक्षनिवृत्तेरभावात् निर्णयानतिवर्तनम्= शब्दे नित्यत्वानित्यत्वयोर्मध्ये एकतरधर्मस्य निर्णयासिद्धिरित्यर्थः । उक्तमन्यत्रातिदिशति- समानमिति, 'नित्यः शब्दः श्रावणत्वात्' इतिनित्यसा-

वस्थानं प्रकरणसमः ।समानं चैतद्वैधर्म्येऽपि= उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति॥१६॥

अस्योत्तरम्—

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥**

उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात् प्रक्रियासिद्धिरुक्ता भवति, यद्युभयसाधर्म्यं तत्रैकतरः प्रतिपक्ष इत्येवं सत्युपपन्नः प्रतिपक्षो भवति. प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधः— यतः प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति । तत्त्वानवधारणाच्च प्रक्रियासिद्धिः— विपर्यये प्रकरणावसानात्= तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति ॥ १७ ॥

---

धर्म्येणोच्यमानेपि हेतौ= श्रावणत्वादिहेतौ एतत्=प्रकरणानतिवर्तनं समानमेव— परेणाऽनित्यत्वसाधकहेतोः प्रयुक्तत्वादित्यन्वयः, अत्र— " एवमनित्यसाधनवादिनं प्रत्युत्तरं दर्शयित्वा नित्यत्वसाधनवादिनं प्रत्याह— समानं चैतत् (इति)" इतितात्पर्यटीका । पाठश्चायं तात्पर्यटीकानुसारेण संशोधितः, अत्र— "एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानेन हेतौ " इतिपाठस्तु स्पष्टमेवासंगतः । निर्वक्ति— तदिदमिति । उक्तमन्यत्रातिदिशति— समानमिति, उक्तं व्याचष्टे— उभयेति, उभयवैधर्म्यात्= दृष्टान्तप्रतिदृष्टान्तयोर्वैधर्म्यात् । 'शब्दो न नित्यः कृतकत्वेन नित्यवैधर्म्यात्' इत्येकः पक्षः. 'शब्दो नाऽनित्योऽस्पर्शत्वेनानित्यवैधर्म्यात्' इतिद्वितीयः पक्षः. तत्र प्रकरणनिवृत्त्यभावः पूर्ववदेव विज्ञेयः । अत्र— " तदेवं साधर्म्येण प्रकरणसमद्वयमुक्तं तथा वैधर्म्येण प्रकरणसमद्वयं नित्याऽनित्यसाधनवादिनावेव प्रत्याह— समानं चैतदिति " " उभयवैधर्म्यादिति— नित्याकाशवैधर्म्यात् कृतकत्वाद् अनित्यघटवैधर्म्याच्चास्पर्शवत्त्वादिति " " तदेवं प्रकरणसमचतुष्टयम् " इति तात्पर्यटीका । स्पष्टमन्यत् । अत्र— "संशयसमासाधर्म्यसमाभ्यां प्रकरणसमा न भिद्यते, कथमिति ?, तत्रापि साधर्म्यमिहापीति, न— उभयपक्षसाधर्म्याद् भेदसिद्धेः= उभावत्र वादिप्रतिवादिनौ पक्षपरिग्रहेण नित्यत्वानित्यत्वे साधयतः न चैवं साधर्म्यसमसंशयसमयोरिति" इतिवार्तिकम् । अत्र— "प्रकरणसमे हि स्वपक्षनिश्चयेन मया वादिपक्षसाधनं दूषणीयमिति बुद्ध्या प्रवर्तते. साधर्म्यसमसंशयसमयोस्तु वादिसाधनेन साम्यमात्रापादनेन तद्दूषणं न तु प्रतिपक्षनिश्चयेनेति विशेषः" इतितात्पर्यटीका । संशयसमायामेक एव पुरुषः स्वसंशयेन पक्षद्वयं प्रवर्तयति अत्र तु द्वौ पुरुषाविति भेदः स्पष्ट एव ॥ १६ ॥

अग्रिमसूत्रमवतारयति— अस्येति, अस्य= उक्तस्य प्रकरणसमस्य । प्रतिपक्षादिति— प्रतिपक्षात्= प्रतिपक्षमाश्रित्य प्रकरणसिद्धेः= प्रकरणसिद्ध्या यो मदीयपक्षस्य प्रतिषेधः क्रियते स नोपपद्यते— प्रतिपक्षोपपत्तेः= त्वदीयपक्षापेक्षया प्रतिपक्षभूतस्य मदीयपक्षस्योपपत्तेरित्यन्वयः, प्रकरणसिद्धिः प्रतिपक्षादेव संभवति— पक्षैक्ये प्रकरणासंभवात्. तस्य च प्रतिपक्षस्योपपत्तौ तस्य प्रतिषेधो नोपपद्यते. प्रतिपक्षस्य प्रतिषेधानुपपत्तौ च स्वपक्षो नोपपद्यते इति नानया प्रकरणसमया शब्दे नित्यत्वादिकमापद्यते इति प्रकरणसमाया निष्फलत्वमेव प्रतिषेधः, प्रतिपक्षाभावेपि प्रकरणसमाया अनुपपत्तिरितिसूत्रार्थः।व्याचष्टे— उभयेति, यदा ह्युभयसाधर्म्यात् प्रकरणसमा सिध्यति तदा प्रतिपक्षादपि प्रकरणसमासिद्धिः स्वीकार्या— उभयशब्देन पक्षप्रतिपक्षयोर्द्वयोरेव ग्रहणात् । प्रतिपक्षोपपत्तिमाह— यदीति, तत्र= उभयसाधर्म्येण प्रत्यवस्थाने । पर्यवसितमाह— प्रतिपक्षोपपत्तेरिति, प्रतिषेधः= प्रतिपक्षप्रतिषेधः । उक्तप्रतिषेधानुपपत्तौ हेतुमाह— यत इति, एकस्यैव पदार्थस्योपपत्तिप्रतिषेधौ न संभवत इति परस्परं विरुद्धाविति प्रतिपक्षस्योपपत्तिः प्रतिपक्षप्रतिषेधस्य चोपपत्तिरिति विप्रतिषिद्धम्= परस्परविरुद्धमेव तथा चोपपन्ने प्रतिपक्षे= मत्पक्षे तत्प्रतिषेधो नोपपद्यते, प्रतिपक्षानुपपत्तौ च प्रतिपक्षाधीना प्रकरणसमा नोपपद्यते इत्युभयतः पाशारज्जुरित्यर्थः । प्रकरणसमायाः कारणं प्रतिपादयन् विनिगमनाविरहमाह— तत्त्वेति, प्रक्रियासिद्धिः= पक्षप्रतिपक्षयोः संभवः । विपर्यये= तत्त्वावधारणे । अवसानम्= निवृत्तिः । उक्तं व्याचष्टे— तत्त्वाव-

## त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

हेतुः= साधनं तत् साध्यात् पूर्वं पश्चात् सह वा भवेत्. यदि पूर्वं साधनम् ? असति साध्ये कस्य साधनम्, अथ पश्चात्? असति साधने कस्येदं साध्यम्, अथ युगपत् साध्यसाधने?-द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यम्. इति हेतुरहेतुना न विशिष्यते । अहेतुना साधर्म्यात् प्रत्यवस्थानमऽहेतुसमः ॥ १८ ॥

अस्योत्तरम्—

## न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

न त्रैकाल्यासिद्धिः, कस्मात्? हेतुतः साध्यसिद्धेः, निर्वर्तनीयस्य निर्वृत्तिः विज्ञेयस्य विज्ञानम् उभयं कारणतो दृश्यते. सोयं महान् प्रत्यक्षविषय उदाहरणमिति । यत्तु खलूक्तम्—असति साध्ये कस्य साधनमिति? यत्तु निर्वर्त्यते यच्च विज्ञाप्यते तस्येति ॥ १९ ॥

## प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

'पूर्वं पश्चाद् युगपद्वा' प्रतिषेध इति नोपपद्यते. प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

---

धारणे इति, प्रकरणम् अवसितम्= निवृत्तं भवति । यदा हि प्रकरणसमायां तत्त्वावधारणं नास्ति तदा प्रतिपक्षस्य प्रतिषेधः कथं स्यात्— एकतरपक्षावधारणेनैव परपक्षप्रतिषेधस्य संभवादिति न मदीयपक्षप्रतिषेधः संभवतीति प्रकरणसमायाः प्रत्याख्यानमित्याशयः ॥ १७ ॥

अहेतुसमां लक्षयति— त्रैकाल्येति, हेतोस्त्रैकाल्यासिद्धेः= कालत्रयेपि सध्यसाधकत्वानुपपत्तिप्रदर्शनेन साध्यासाधकत्वप्रदर्शनमऽहेतुसमा जातिरिति सूत्रान्वयः । हेतोः साध्यासाधकत्वेनाऽहेतुसाम्यादहेतुसमेत्यर्थः । व्याचष्टे— हेतुरिति, तत्= साधनम् । प्रथमपक्षे दोषमाह— यदीति, पूर्वम्= साध्यात्पूर्वम् । द्वितीयपक्षे दोषमाह— अथेति, पश्चात्= साध्यात् पश्चात्, साध्यसाधनयोः परस्परं निरूप्यनिरूपकभावोस्तीत्यनुसंधेयम् । तृतीयपक्षे दोषमाह— अथ युगपदिति, साध्यसाधने इतिप्रथमाद्विवचनम् । तृतीयपक्षे साध्यत्वसाधनत्वयोर्विनिगमनाविरहमाह— द्वयोरिति, द्वयोः साध्यसाधनयोर्वर्तमानयोर्मध्ये विशेषाभावात् साध्यत्वसाधनत्वव्यवस्था नोपपद्यते इत्यर्थस्तथा च साध्यासाधकत्वाद् हेतोरहेतुतुल्यत्वं प्राप्तमित्यर्थः । निर्वचनमाह— अहेतुनेति । स्पष्टमन्यत् ॥ १८ ॥

अग्रिमसूत्रमवतारयति— अस्येति, अस्य= उक्तस्याहेतुसमस्य । नेति— हेतुतः साध्यसिद्धेः= साध्यसिद्धिसंभवात् हेतोरुक्ता त्रैकाल्यासिद्धिर्न दोषायेति सूत्रान्वयः । व्याचष्टे— नेति, त्रैकाल्यासिद्धिर्न दोषायेत्यर्थः । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— हेतुत इति । उपपादयति— निर्वर्तनीयस्येति, निर्वर्तनीयस्य= संपाद्यस्य= साध्यस्य कार्यस्य निर्वृत्तिः= सिद्धिः, विज्ञेयस्य= विज्ञापनीयस्य= अनुमेयस्य, उभयम्= निर्वृत्तिः विज्ञानं च, कारणतः= हेतुतः, दृश्यते= सिध्यति । उपसंहरति— सोयमिति, घटादिकार्यस्य सिद्धिर्हेतुतः प्रत्यक्षा, ज्ञाप्यस्य वह्न्यादेर्विज्ञानं च हेतुतः प्रत्यक्षमेवेति स्पष्टमेव तथा च हेतुतः साध्यसिद्धौ न किमपि बाधकमित्युत्तरम् । पूर्वपक्षमनुवदति— यत्त्विति । उत्तरमाह— यत्त्विति, हेतुः कार्यस्य ज्ञाप्यस्य च साधनं भवतीत्यर्थः ॥ १९ ॥

अहेतुसमायाः प्रतिषेधान्तरमाह— प्रतिषेधेति, यदा हि प्रतिषेधो नोपपद्यते तदा प्रतिषेध्यस्य प्रतिषेधो नोपपद्यते— प्रतिषेध्यप्रतिषेधस्य प्रतिषेधोपपत्त्यैव संभवात्. तथा च प्रतिषेधस्याऽहेतुसमस्याऽनुपपत्त्या प्रतिषेद्धव्यस्य= प्रतिषेध्यस्योक्तसाध्यस्य शब्दानित्यत्वस्य प्रतिषेधानुपपत्तिरिति सूत्रार्थः । व्याचष्टे— पूर्वमिति, तदेतद् अहेतुसमालक्षणे स्पष्टम्, इति प्रतिषेधो नोपपद्यते इत्यन्वयः । पर्यवसित-

## अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥

'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्' इति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः, यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इति ? (तदा) अर्थादापद्यते- नित्यसाधर्म्यान्नित्य इति, अस्ति चास्य नित्येन साधर्म्यम् अस्पर्शत्वमिति॥२१॥

अस्योत्तरम्—

## अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चाऽर्थापत्तेः ॥ २२ ॥

अनुपपाद्य सामर्थ्यमऽनुक्तमर्थादापद्यते इतिब्रुवतः पक्षहानेरुपपत्तिः- अनुक्तत्वात्= अनित्यपक्षसिद्धौ अर्थादापन्नम्- नित्यपक्षस्य हानिरिति। अनैकान्तिकत्वाच्चार्थापत्तेः= उभयपक्षसमा चेयमर्थापत्तिः- यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दः ? (तदा) अर्थादापन्नम्- अनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति, न चेयं विपर्ययमात्रादेकान्तेनार्थापत्तिः. न खलु वै घनस्य ग्राव्णः पतनमिति अर्थादापद्यते- द्रवाणामपां पतनाभाव इति॥ २२ ॥

---

माह- प्रतिषेधेति, प्रतिषेधस्य= उक्ताहेतुसमस्यानुपपत्त्या स्थापनाहेतुः= साध्यसाधको हेतुः सिद्धस्तेन प्रकृतं साध्यं शब्दानित्यत्वं सिद्धमिति न साध्यप्रतिषेधः संभवति- स्थापनाहेतुसिद्धौ तत्साध्यसिद्धेरावश्यकत्वादित्यर्थः ॥ २० ॥

अर्थापत्तिसमां लक्षयति- अर्थापत्तित इति, अर्थापत्त्या प्रतिपक्षसाधने ह्यर्थापत्तिसमा जातिरिति सूत्रान्वयः। व्याचष्टे- अनित्य इति, इतिपक्षे= शब्दानित्यत्वे स्थापिते इत्यन्वयः। प्रकृतमर्थापत्तिसममाह- यदीति, प्रयत्नानन्तरीयकत्वं ह्यनित्यसाधर्म्यमिति स्पष्टमेव। अर्थादापद्यते इत्यत्र तदेतिशेषः। नित्यसाधर्म्याद् नित्यः शब्द इत्यर्थापत्त्या सिद्धमित्यन्वयः। शब्दस्य नित्यसाधर्म्यमाह- अस्तीति, अस्य= शब्दस्य अस्पर्शत्वं नित्यं यदाकाशादिकं तत्साधर्म्यमिति स्पष्टमेव, तथा च 'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्' इतिवदर्थादेव- 'नित्यः शब्दोऽस्पर्शत्वादाकाशवत्' इत्यपि सिद्धमित्यस्य पक्षस्याऽर्थापत्त्या सिद्धत्वादियमर्थापत्तिसमा जातिरित्यर्थः ॥ २१ ॥

अग्रिमसूत्रमवतारयति- अस्येति, अस्य= उक्तस्यार्थापत्तिसमस्य। अनुक्तस्येति- अनुक्तस्य= असाधितस्य शब्दनित्यत्वस्योक्तरीत्याऽर्थापत्तेः= अर्थादापत्तौ पक्षहानेः= नित्यत्वपक्षहानेरुपपत्तिः= नित्यत्वपक्षहानिः- अनुक्तत्वात्= शब्दनित्यत्वस्य सद्धेतुनाऽसाधितत्वात् तथा च नोक्तरीत्याऽर्थात् शब्दस्य नित्यत्वं सिध्यति, किं चार्थापत्तेरुभयपक्षसाधरणत्वादनैकान्तिकत्वम्= व्यभिचारिणीत्वं प्राप्तं न च व्यभिचारिणा किंचित् सिध्यतीति नोक्तरीत्यार्थापत्तिसमेन शब्दनित्यत्वमुपपद्यते इत्यर्थापत्तिसमायाः प्रतिषेध इतिसूत्रार्थः। अन्यद् भाष्ये स्पष्टम्। व्याचष्टे- अनुपपाद्येति, सामर्थ्यम्= साध्यसाधनसामर्थ्यम्= साध्याविनाभावित्वमनुपपाद्याऽनुक्तम्= असाधितमपि शब्दनित्यत्वमर्थादापद्यते इतिब्रुवतः प्रतिपक्षिणः पक्षस्य= शब्दनित्यत्वपक्षस्य हानेरुपपत्तिः। अत्र हेतुमाह- अनुक्तत्वादिति, शब्दनित्यत्वस्यासाधितत्वादित्यर्थः, न ह्यसाधितं व्याप्तिरहितं वार्थादापद्यते इत्यर्थः। उक्तं व्याचष्टे- अनित्येति, नित्यपक्षस्य= शब्दनित्यत्वपक्षस्य हानिरित्यर्थादापन्नम्। दोषान्तरमाह- अनैकान्तिकत्वादिति। उक्तमनैकान्तिकत्वं व्याचष्टे- उभयेति। अर्थापत्तेरुभयपक्षसमत्वं व्याचष्टे- यदीति, यदि चेत्यन्वयः। शब्दस्य नित्यत्वानित्यत्वपक्षयोरुभयोरप्यर्थापत्तेः समानत्वाद् व्यभिचारिणीत्वं स्पष्टमेव प्राप्तम्। विपक्षे बाधकमाह-

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरऽविशेषसमः ॥२३॥**

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यते इत्यविशेषे उभयोरनित्यत्वे सर्वस्याऽविशेषः प्रसज्यते । कथम्? सद्भावोपपत्तेः= एको धर्मः सद्भावः सर्वस्योपपद्यते । सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमऽविशेषसमः ॥ २३ ॥

अस्योत्तरम्—

**क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥**

यथा साध्यदृष्टान्तयोरेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेरनित्यत्वं धर्मान्तरमऽविशेषो नैवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति येनाऽविशेषः स्यात् ।

अथ मतम्— अनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यादिति?, एवं खलु वै कल्प्यमाने— 'अनित्याः सर्वे भावाः सद्भावोपपत्तेः' इतिपक्षः प्राप्नोति, तत्र

---

न चेति, विपर्ययमात्रात्= विपर्यये= शब्दनित्यत्वपक्षे इयमर्थापत्तिः एकान्तेन= नियमेन= ऐकान्तिकी नास्ति येनाऽर्थापत्त्या शब्दस्य नित्यत्वमेव सिध्येन्नाऽनित्यत्वमित्यर्थः । उदाहरति— न खल्विति, घनस्य= घनीभूतस्य ग्राव्णः= पाषाणस्य पतनमित्युक्ते अर्थादपि द्रवाणामपां पतनाभावो न सिध्यति, तत्कस्य हेतोः? अर्थापत्तेरनैकान्तिकत्वादेवेति वक्तव्यं भवति. एवमेव शब्दानित्यत्वे सिद्धे शब्दनित्यत्वमर्थादपि न सिध्यतीत्यर्थः । घनत्वं च पाषाणधर्म इति प्रसिद्धमेव ॥ २२ ॥

अविशेषसमां लक्षयति— एकेति, एकधर्मोपपत्तेः= एकधर्मवत्त्वेन= हेतुविशिष्टत्वेन दृष्टान्तदार्ष्टान्तिकयोरविशेषे= अनित्यत्वादिलक्षणसाध्यधर्मवत्त्वे प्राप्ते सद्भावोपपत्तेः= सत्त्वधर्मवत्त्वेन सर्वेषामनित्यत्वेनाविशेषप्रसङ्गात्= अविशेषसाधने ह्यविशेषसमा जातिरिति सूत्रान्वयः । व्याचष्टे— एक इति, अविशेषे= प्रयत्नानन्तरीयकत्वाविशेषेण, उभयोः= शब्दघटयोः अविशेषे= अविशेषेणानित्यत्वे प्राप्ते पदार्थमात्रस्याविशेषः प्रसज्येत्— केनचिद्धर्मेण साधर्म्यादित्यन्वयः । सर्वस्याविशेषप्रसङ्गे हेतुं जिज्ञासते— कथमिति । हेतुमाह— सद्भावेति । उक्तं व्याचष्टे— एक इति, तथा च यथा घटे सत्त्वधर्मसत्त्वेप्यनित्यत्वं तथा सर्वेषामेवाकाशादीनामपि सत्त्वधर्मवतामनित्यत्वं स्यात्. नो चेत्? शब्दस्यापि घटसाधर्म्यादनित्यत्वं न स्यादित्यर्थः । उक्तं च— "यत्सत्तत् क्षणिकम्" इति । निर्वचनमाह— सद्भावोपपत्तेरिति । स्पष्टमन्यत् ॥२३॥

अग्रिमसूत्रमवतारयति— अस्येति, अस्य= उक्तस्याविशेषसमस्य । क्वचिदिति— कस्यचिद् धर्मस्य क्वचिदेवोपपत्तिर्भवति न सर्वत्रेति क्वचिदनुपपत्तिरपि भवति यथाऽनित्यत्वधर्मस्य घटादावुपपत्तिर्भवति नाकाशादावपीति उक्तस्य प्रतिषेधस्य= अविशेषसमस्याऽभावः= असंभव इत्युत्तरमिति सूत्रान्वयः । सूत्रमिदम्— 'धर्ममात्रस्य क्वचिदुपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः' इत्येवं रचनीयमासीत् । व्याचष्टे— यथेति, साध्यदृष्टान्तयोः= शब्दघटयोः, साध्यम्= पक्षः । उपपत्तेरिति पञ्चम्यन्तम् । अनित्यत्वमिति— अनित्यत्वलक्षणं धर्मान्तरमेवाविशेष इत्यन्वयः, अनित्यत्वलक्षणधर्मान्तरेणाविशेषो यथेत्यर्थः । दार्ष्टान्तिकमाह— नैवमिति, यदि सर्वपदार्थेषु सद्भावोपपत्तिनिमित्तं धर्मान्तरं स्यात् तदा तादृशधर्मवत्त्वेन सर्वेषामविशेषः स्यादपि न चैवमस्तीति न सर्वेषामविशेषप्रसङ्गः, सद्भावोपपत्तिर्निमित्तं यस्य तत् सद्भावोपपत्तिनिमित्तम्= सद्भावोपपत्तिनिमित्तकम्= सद्भावोपपत्त्या प्राप्यमाणं च धर्मान्तरम्= अनित्यत्वादीत्यर्थः । सत्त्वस्य सर्वत्र सत्त्वेपि नित्यत्वादिष्वेको धर्मः कोपि सर्वत्र न संभवति येन सर्वेषामविशेषः स्यात्— सद्भावस्य= सत्त्वस्य नित्यत्वानित्यत्वयोरेकतरव्याप्यत्वाभावादित्यर्थः ।

ननु सर्वपदार्थेषु सद्भावोपपत्तिनिमित्तकं धर्मान्तरमनित्यत्वमस्ति तथा चानित्यत्वेन सर्वेषामविशेषः प्राप्त इत्याशङ्कते— अथेति, भावानाम्= भावेषु । समाधत्ते— एवमिति । पूर्वपक्षिमतेन संपन्नमाह— अनित्या

प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति. अनुदाहरणश्च हेतुर्नास्तीति, प्रतिज्ञैकदेशस्य चोदाहरणत्वमनुपपन्नम्- न हि साध्यमुदाहरणं भवति, सतश्च नित्यानित्यभावादनित्यत्वानुपपत्तिस्तस्मात् 'सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गः' इति निरभिधेयमेतद्वाक्यमिति । 'सर्वभावानां सद्भावोपपत्तेरनित्यत्वम्' इति ब्रुवताऽनुज्ञातं शब्दस्यानित्यत्वं तत्रानुपपन्नः प्रतिषेध इति॥२४॥

## उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

यद्यऽनित्यत्वकारणमुपपद्यते शब्दस्य इत्यऽनित्यः शब्दः? नित्यत्वकारणमप्युपपद्यतेऽस्याऽस्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्य= अनित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥ २५ ॥

अस्योत्तरम्—

## उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

"उभयकारणोपपत्तेः" इतिब्रुवता नाऽनित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते, यदि प्रतिषिध्यते? नोभयकारणोपपत्तिः स्यात् । उभयकारणोपपत्तिवचनादनित्यत्वकारणोपपत्तिरभ्यनुज्ञायते अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः ।

---

इति । अत्र दोषमुद्भावयति- तत्रेति, तत्र= उक्तपूर्वपक्षे, प्रतिज्ञार्थव्यतिरिक्तम्= पक्षव्यतिरिक्तम्, सर्वेषां भावानां पक्षत्वे तदतिरिक्तमुदाहरणं न संभवतीति स्पष्टमेव। अत्रापि दोषमाह- अनुदाहरणश्चेति, अनुदाहरणः= दृष्टान्तरहितः= दृष्टान्तं विना हेतुर्नास्ति= न संभवति= साध्यसाधको न भवतीत्यर्थः । प्रतिज्ञैकदेशस्य= पक्षैकदेशस्य चोदाहरणत्वं न संभवति येन तस्यैवोदाहरणत्वं स्यादित्याह- प्रतिज्ञैकदेशस्येति । उक्ते हेतुमाह- न हीति, साध्यम्= पक्षः । पूर्वपक्षं प्रत्याचष्टे- सतश्चेति, सतो नित्यत्वमपि भवति अनित्यत्वमपि भवतीति अनित्यत्वानुपपत्तिः= अनित्यत्वनियमानुपपत्तिरित्यर्थः । सत्सु घटादीनामनित्यत्वमाकाशादीनां च नित्यत्वमिति प्रसिद्धमेव । उपसंहरति- तस्मादिति, इत्येतद्वाक्यं निरभिधेयम्= प्रतिपाद्यार्थरहितम्= अपार्थकमित्यन्वयः । पूर्वपक्षिमतेनापि शब्दस्यानित्यत्वसिद्धिमाह- सर्वभावानामिति, यदा हि पदार्थमात्रस्यानित्यत्वं तदा शब्दस्याप्यनित्यत्वं प्राप्तमेवेत्यर्थः । अनुज्ञातम्= स्वीकृतम् । पर्यवसितमाह- तत्रेति, तत्र= एवं शब्दस्यानित्यत्वे सिद्धे शब्दानित्यत्वस्य उक्तजात्युत्तरैः प्रतिषेधोऽनुपपन्न इत्यन्वयः, स्पष्टमन्यत् ॥ २४ ॥

उपपत्तिसमां लक्षयति- उभयेति, उभयस्य= धर्मद्वयस्य कारणोपपत्तेः= हेतूपपत्तिप्रदर्शने उपपत्तिसमाजातिरिति सूत्रान्वयः । धर्मद्वयं चात्र परस्परविरुद्धं ग्राह्यं यथा नित्यत्वाऽनित्यत्वादिकम् । व्याचष्टे- यदीति, अनित्यत्वकारणम्= प्रयत्नानन्तरीयकत्वम्, इति= उक्तानित्यत्वकारणोपपत्तेरनित्यः शब्द इत्यन्वयः । अस्य= शब्दस्य । तथा च 'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवत्' 'नित्यः शब्दोऽस्पर्शत्वादाकाशवत्' इतिप्राप्तम्, किं वा 'यदि शब्दः प्रयत्नानन्तरीयकत्वादनित्यस्तदाऽस्पर्शत्वान्नित्यः' इत्यपि सिद्धं नित्यत्वेन चानित्यत्वनिवृत्तिर्जातेत्याशयः । निर्वक्ति- उभयस्येति ॥ २५ ॥

अग्रिमसूत्रमवतारयति- अस्येति, अस्य= उक्तस्योपपत्तिसमस्य । उपपत्तीति- उभयोर्धर्मयोर्मध्ये यः खलु प्रतिषेध्यो धर्मस्तस्य यदुपपत्तिकारणं तस्याभ्यनुज्ञानात्= स्वीकारात् अप्रतिषेधः= तस्य धर्मस्य प्रतिषेधो नोपपद्यते, तादृशधर्मोपपत्तिकारणाऽस्वीकारे चोपपत्तिसमा नोपपद्यते- उभयकारणोपपत्तावेवोपपत्तिसमसंभवादिति सूत्रार्थः । व्याचष्टे- उभयेति, अनित्यत्वं न प्रतिषिध्यते= न प्रतिषेद्धुं शक्यते- अनित्यत्वकारणस्य प्रयत्नानन्तरीयकत्वस्योपपत्तिस्वीकारात् । विपक्षे बाधकमाह- यदीति, उभयकारणोपपत्त्यभावे चोपपत्तिसमा न स्यादित्यर्थः । उपसंहरति- उभयेति, अभ्यनुज्ञानात्= अनित्यत्वकारणोपपत्तेरभ्यनुज्ञाने चानित्यत्वप्रतिषेधो नोपपद्यते इत्यन्वयः । कारणशब्दो हेतुपरः, स्पष्टमन्यत् ॥

व्याघातात् प्रतिषेध इतिचेत्? समानो व्याघातः ।

एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवता उक्तः प्रतिषेध इतिचेत्? स्वपक्षपरपक्षयोः समानो व्याघातः स च नैकतरस्य साधक इति ॥ २६ ॥

निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमः ॥ २७ ॥

निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्याऽनित्यत्वकारणस्याभावेपि वायुनोदनाद् वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते । निर्दिष्टस्य साधनस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ॥ २७ ॥

अस्योत्तरम्—

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरभिधीयते. न (तु) कार्यस्य

---

ननु व्याघातात्= नित्यत्वधर्मविरोधात्= नित्यत्वविरुद्धत्वादनित्यत्वस्य प्रतिषेधो युक्तः ? इत्याशङ्कते— व्याघातादिति । निराकरोति— समान इति, यथाऽनित्यत्वस्य नित्यत्वेन विरोधस्तथा नित्यत्वस्यानित्यत्वेन विरोधः समान एव तथा चानित्यत्वप्रतिषेधवन्नित्यत्वस्यापि प्रतिषेधः स्यात् किं वाऽनित्यत्वविरोधान्नित्यत्वस्यैव प्रतिषेधः स्यादित्यर्थः । स्वयं व्याचष्टे— एकस्येति । एकस्य शब्दस्य, व्याहतम्= परस्परविरुद्धम् । ब्रुवता= ब्रुवतः । प्रतिषेधः= अनित्यत्वप्रतिषेधः, नित्यत्वानित्यत्वधर्मावेकत्र न संभवत इति विरोधादेवैकस्य धर्मस्यानित्यत्वस्य प्रतिषेध उक्त इत्यर्थः । उत्तरमाह— स्वपक्षेति, यथा नित्यत्वपक्षेऽनित्यत्वविरोधस्तथाऽनित्यत्वपक्षे नित्यत्वविरोधोस्त्येव स च व्याघातो नैकतरस्य धर्मस्य पक्षस्य वा साधकः संभवति येनानित्यत्वप्रतिषेध उपपद्येतेत्यर्थः ॥ २६ ॥

उपलब्धिसमां लक्षयति— निर्दिष्टेति, निर्दिष्टस्य= साध्यसिद्ध्यर्थं प्रदर्शितस्य कारणस्य= हेतोरभावेपि= अनुपलब्धावपि साध्यस्य प्रकारान्तरेण प्रत्यक्षादिनोपलम्भात्= उपलम्भे= उपलब्धिप्रदर्शने उपलब्धिसमा जातिरिति सूत्रान्वयः । व्याचष्टे— निर्दिष्टस्येति, अभावेपि= अनुपलब्धावपि, वायुनोदनात्= वायुप्रेरणात्= वायुवेगाद् यो वृक्षशाखाभङ्गस्तज्जन्यस्य शब्दस्यानित्यत्वं प्रत्यक्षेणाऽर्थाद्वोपलभ्यते— क्षणान्तरे श्रवणाभावादिति अनित्यत्वहेतोः प्रयत्नानन्तरीयकत्वस्यानुपलब्धावपि साध्यमनित्यत्वमुपलभ्यते एवेति 'प्रयत्नानन्तरीयकत्वमेवानित्यत्वसाधकम्' इतिनियमस्य व्यभिचारो जातस्तथा च प्रयत्नानन्तरीयकत्वस्याऽनित्यत्वसाधकत्वनियमाभावात् वर्णात्मकशब्दस्य प्रयत्नानन्तरीयकत्वेनाप्यनित्यत्वं न प्राप्नोतीति पूर्वपक्ष्याशयो वर्णनीयः— एतदाशयं विनाऽग्रिमपरिहारभाष्यस्य संगतिर्न संभवति एतन्मूलग्रन्थमात्रेणेति विभाव्यम्, अत एवात्रत्यसूत्रभाष्यमसंपूर्णमिति प्रतिभाति । वस्तुतस्तु प्रयत्नानन्तरीयकत्वमनित्यत्वस्य व्याप्यमस्ति न तु व्यापकं येन यावदनित्येषु प्रयत्नानन्तरीयकत्वस्य सत्ता प्रसज्येतेत्युक्तः पूर्वपक्ष्याशयोऽसंगत एव अत एवेदं. जात्युत्तरमिति बोध्यम् । प्रयत्नानन्तरीयकत्वस्यानित्यत्वहेतोरनुपलब्धावपि प्रकारान्तरेण साध्यमनित्यत्वमुपलभ्यते एवेत्युपलब्धिसमेत्यन्वयः । निर्वक्ति— निर्दिष्टस्येति, साध्यधर्मोपलब्ध्या= साध्यलक्षणधर्मोपलब्ध्या । स्पष्टमन्यत् ॥ २७ ॥

अग्रिमसूत्रमवतारयति— अस्येति, अस्य= उक्तस्योपलब्धिसमस्य । कारणान्तरादपीति— निर्दिष्टकारणाभावेपि कारणान्तरात् तद्धर्मोपपत्तेः= साध्योपपत्तिसंभवात् साध्यप्रतिषेधो नोपपद्यते इतिसूत्रान्वयः, साधनधर्मस्याभावेपि न क्षतिरित्याशयः किं वा साध्ये सिद्धे साधनमपि सिद्धमेवेति न तत्प्रतिषेधः संभवतीत्याशयः । व्याचष्टे— प्रयत्नेति, 'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्' इति ब्रुवता शब्दस्य कस्मादपि कारणादुत्पत्तिर्भवति न त्वकारणकः शब्द इत्यभिधीयते= इतितात्पर्यमस्ति

कारणनियमः, यदि च कारणान्तरादप्युपपद्यमानस्य शब्दस्य तद् अनित्यत्वमुपपद्यते? किमत्र प्रतिषिध्यते ? इति ॥ २८ ॥

न प्रागुच्चारणाद् विद्यमानस्य शब्दस्यानुपलब्धिः, कस्मात्? आवरणाद्यनुपलब्धेः= यथा विद्यमानस्योदकादेरर्थस्याऽऽवरणादेरनुपलब्धिर्नैवं शब्दस्याऽग्रहणकारणेनाऽऽवरणादिनाऽनुपलब्धिः= गृह्येत चैतदस्याग्रहणकारणमुदकादिवद् न ( च ) गृह्यते तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति—

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः॥ २९॥**

---

कार्यस्य शब्दस्य कारणनियमस्तु नाभिधीयते= प्रयत्नानन्तरीयकत्वादेवानित्यः शब्द इतिनियमो नोच्यते तथा च शब्दे प्रयत्नानन्तरीयकत्वस्याभावेपि कारणान्तरेणानित्यत्वे सिद्धे शब्दाऽनित्यत्वप्रतिषेधो नोपपद्यते इत्यर्थः । उपसंहरति— यदीति, अत्र= पूर्वसूत्रभाष्ययोरुपलब्धिसमया जात्या किं प्रतिषिध्यते ? इत्याक्षेपस्तथा चात्र शब्दानित्यत्वं प्रतिषेद्धुं न शक्यते— कारणान्तरेण त्वयैव सिद्धत्वप्रतिपादनादित्यर्थः । तदेतद् भाष्यं पूर्वत्र प्रतिपादितस्य पूर्वपक्ष्याशयस्योत्तरभूतं विज्ञेयम्— अन्यथा ह्यसंगतमेव स्यात् । तथा च शब्दत्वसामान्यादुक्तनियमव्यभिचारस्याकिंचित्करत्वाच्च ध्वनिवत् प्रयत्नानन्तरीयकत्वेन वर्णानामनित्यत्वं सिद्धमित्याशयः । स्पष्टमन्यत् । वस्तुतस्तु नेदं भाष्यं पूर्वेण संगतम्— पूर्वत्रानित्यत्वप्रतिषेधस्यानुक्तत्वादित्यनुसंधेयम् । अत्र— " कारणतः= प्रयत्नाच्छब्दस्योत्पत्तिनियमो विधीयते वर्णानामनित्यत्वं साधयितुं न तु कार्यस्य कारणनियमः= प्रयत्नादेव सर्वः शब्दो जायते न तु वायुसंयोगाद् वृक्षभङ्गादिति नियम उच्यते येनाव्यापकत्वं हेतोः स्यात् " इतितात्पर्यटीका ॥ २८ ॥

अग्रेऽनुपलब्धिसमेन शब्दावरणादीनामनुपलब्धेरनुपलम्भः प्रतिपाद्योस्ति तत्रावरणादीनामनुपलब्धेरनुपलम्भादावरणादीनां सत्त्वं सिध्यति तथा च सतोपि शब्दस्याऽश्रवणमावरणादिप्रतिबन्धादुपपद्यते तेन शब्दस्य नित्यत्वं सिध्यति. तदेतत् प्रतिपादनार्थं प्रथमं स्वसिद्धान्तेन शब्दावरणादेरभावं प्रतिपादयति— नेति, तदनेन शब्दोपलब्धिप्रतिबन्धकाभावेपि शब्दानुपलब्ध्या शब्दानित्यत्वं सिध्यतीत्यनुसंधेयं तथा चेदं भाष्यमग्रिमसूत्रस्यावतरणभूतमेव । अत्र— " अनुपलब्धिसमस्य प्रतिषेधस्य लक्षणं दर्शयितुं तत्प्रतिषेध्यं तावदाह भाष्यकारः— न प्रागुच्चारणाद्विद्यमानस्यानुपलब्धिरिति " इति तात्पर्यटीका । शब्दनित्यत्वमते प्रागुच्चारणादपि शब्दो विद्यमान एव भवति अभिव्यञ्जकाभावाच्च न श्रूयते अभिव्यञ्जकं चोच्चारणमेवेति तन्मतं सिद्धान्ती निराकरोति— नेति, किं त्वऽविद्यमानस्येतिशेषः । उक्ते हेतुं जिज्ञासते— कस्मादिति । हेतुमाह— आवरणेति, यदि प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः स्यात्तदा तादृशानुपलब्धिकारणं शब्दस्यावरणादिकमुपलभ्येत न चोपलभ्यते इति प्रागुच्चारणाद् यानुपलब्धिः शब्दस्य सा शब्दस्याविद्यमानत्वादेवेत्यर्थः । हेतुवाक्यं व्याचष्टे— यथेति, आवरणादेरिति पञ्चम्यन्तम्, उदकादेर्यथावरणादिनानुपलब्धिरित्यन्वयः । प्रकृतमाह— नैवमिति, शब्दस्यावरणादिकं नाऽग्रहणकारणं किं त्वविद्यमानत्वमेवेत्यर्थः । गृह्येतेति— यदि विद्यमानस्यापि शब्दस्याग्रहणकारणमावरणादिकं स्यात् तदा तद् गृह्येत यथोदकादेर्विद्यमानस्याप्यग्रहणकारणमावरणादिकं गृह्यते न च शब्दस्य विद्यमानस्याग्रहणकारणं गृह्यते तस्मात् शब्दोऽनुपलभ्यमान उदकादिविपरीतः= असन्= उदकादिवदावृतः सन्न किं तु प्रागुच्चारणादऽसन्नेवेति न शब्दो नित्य इत्यन्वयः, स्पष्टमन्यत् ।

अनुपलब्धिसमां लक्षयति— तदिति, तत्= तेषाम्= शब्दावरणादीनामनुपलब्धेरनुपलम्भात् अभावसिद्धौ= शब्दावरणाद्यनुपलब्धेरभावः सिद्धस्तेन तद्विपरीतोपपत्तेः= तद्विपरीतम्= अभावविपर्ययं सत्त्वं शब्दावरणादीनां सिद्धं तदुपपत्तेः= शब्दावरणादेः सत्त्वोपपत्तौ शब्दस्य नित्यत्वं सिध्यतीत्ययमनुपलब्धिसम इत्यन्वयः, यथा घटाभावाभावो घटस्वरूपो भवति तथा शब्दस्य आवरणाभावाभाव

तेषाम्= आवरणादीनामनुपलब्धिर्नोपलभ्यते अनुपलम्भान्नास्तीत्यऽभावोऽस्याः सिध्यति. अभावसिद्धौ हेत्वभावात् तद्विपरीतमऽस्तित्वमावरणादीनामवधार्यते. तद्विपरीतोपपत्तेर्यत् प्रतिज्ञातम्– 'न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः' इत्येतन्न सिध्यति. सोऽयं हेतुः– आवरणाद्यनुपलब्धेरिति आवरणादिषु चावरणाद्यनुपलब्धौ च समतयाऽनुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ॥ २९ ॥

अस्योत्तरम्—

## अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

'आवरणाद्यनुपलब्धिर्नास्ति– अनुपलम्भात्' इत्यहेतुः, कस्मात्?, अनुपलम्भात्मकत्वादनुपलब्धेः= उपलम्भाभावमात्रत्वादनुपलब्धेः यदस्ति तदुपलब्धेर्विषयः= उपलब्ध्या

---

आवरणस्वरूप एव. आवरणानुपलब्धेरनुपलम्भाच्चावरणाभावाभावः सिद्धस्तथा हि– यदि शब्दस्यावरणादिकं न स्यात्तदा तदनुपलब्धिरुपलभ्येत न चोपलभ्यते इति शब्दावरणाद्यनुपलब्धेरनुपलम्भादावरणानुपलब्धेरभावः सिद्धस्तेन शब्दावरणादेः सत्त्वं सिद्धं तेन प्रागुच्चारणादनुपलभ्यमानस्यापि शब्दस्य सत्त्वं सिद्धं तेन नित्यत्वं सिद्धमित्यर्थः तथा चानुपलब्धिमाश्रित्य प्रत्यवस्थानादनुपलब्धिसमा जातिरिति सूत्रार्थः, अन्यद् भाष्ये स्पष्टम् । व्याचष्टे– तेषामिति, तत्पदार्थमाह– आवरणादीनामिति, अनुपलम्भात्= शब्दावरणाद्यनुपलब्धेरनुपलम्भात्, अस्याः= शब्दावरणाद्यनुपलब्धेः नास्तीति=नास्तिशब्दवाच्योऽभावो सिध्यतीति । अभावसिद्धौ= आवरणाद्यनुपलब्ध्यभावे सिद्धे आवरणादीनामभावे हेत्वभावात्. किं वा शब्दावरणादीनामभावसिद्धौ हेत्वभावादित्यन्वयः, तद्विपरीतम्= अभावविपरीतम् । पर्यवसितमाह– तदिति, 'न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः किं त्वविद्यमानस्यैव' इति यत् प्रतिज्ञातं तन्न सिध्यति– तद्विपरीतोपपत्तेः= शब्दावरणादीनां सत्त्वोपपत्त्या विद्यमानस्यापि शब्दस्यानुपलब्धिसंभवात् नित्यत्वोपपत्तेरित्यर्थः । उपसंहरति– सोयमिति, अवतरणभाष्योक्तः "आवरणाद्यनुपलब्धेः" इतिहेतुरनुपलब्धिसमो भवति– आवरणादिषु आवरणाद्यनुपलब्धौ च समतयानुपलब्ध्या प्रत्यवस्थितत्वादित्यन्वयः,यथा त्वयाऽऽवरणादेरनुपलब्धिरुपपाद्यते तथा मयाऽऽवरणाद्यनुपलब्धेरनुपलब्धिरुपपाद्यते इत्यनुपलब्ध्या समतया प्रत्यवस्थानम्= प्रतिपक्षः= आवरणादीनां सत्त्वं प्रदर्शितमित्यनुपलब्धिसमा जातिरित्यर्थः । तदनेन शब्दस्य नित्यत्वं प्राप्तमित्यवधार्यम् ॥ वस्तुतस्तु "आवरणाद्यनुपलब्धेः" इत्यत्र 'अनुपलब्धेः' इत्येव वक्तव्यमासीत्– "आवरणाद्यनुपलब्धेः" इति विशिष्टहेतोरावरणादिषु आवरणाद्यनुपलब्धौ च समन्वयासंभवादित्यनुसंधेयम् ॥ २९ ॥

अग्रिमसूत्रमवतारयति– अस्येति, अस्य= उक्तस्यानुपलब्धिसमस्य । अनुपलम्भेति– शब्दावरणसत्त्वसाधनाय यः "तदनुपलब्धेरनुपलम्भात्" इतिहेतुरुक्तः सोऽहेतुः= शब्दावरणसत्त्वस्याऽसाधक एव– अनुपलब्धेरनुपलम्भात्मकत्वादित्यन्वयः, शब्दावरणादीनां यानुपलब्धिः सोपलम्भाभाव एव तादृशोपलम्भाभावेन शब्दस्यावरणादीनामभावः सिद्धः– यदि शब्दावरणादीनि स्युस्तदोपलभ्येरन् न चोपलभ्यन्ते इति शब्दावरकाभावात् प्रागुच्चारणाद् यः शब्दश्रवणस्याभावः स शब्दस्यासत्त्वादेवेति शब्दस्याऽनित्यत्वं सिद्धमिति अनुपलब्धिसमस्योत्तरमिति सूत्रार्थः प्रतिभाति । अत्र– "आवरणाद्यनुपलब्धिरावरणादीनामभावं गमयति न त्वात्मनोऽभावमावरणाद्युपलब्धिरूपम्– न ह्यसावनुपलब्धिरप्यात्मनः येनात्माभावं गमयेत् । उपलब्धिरप्युपलभ्यविषया किं पुनरनुपलब्धिः" इति तात्पर्यटीका । व्याचष्टे– आवरणादीति, तदेतत् पूर्वोक्तस्यानुवादः । स्ववक्तव्यमाह– इत्यहेतुरिति, स्वसाध्यासाधक इत्यर्थः, साध्यं च तस्य शब्दावरणसत्त्वम् । अहेतुत्वे हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– अनुपलम्भात्मकत्वादिति । हेतुवाक्यं व्याचष्टे– उपलम्भाभावमात्रत्वादिति, उपलम्भाभाव एवानुपलब्धिपदार्थस्तेन शब्दावरकस्याभावः

तदस्तीति प्रतिज्ञायते. यन्नास्ति तदनुपलब्धेर्विषयः= अनुपलभ्यमानं नास्तीति प्रतिज्ञायते, सोयमावरणाद्यनुपलब्धेरनुपलम्भोऽनुपलब्धौ स्वविषये प्रवर्तमानो न स्वविषयं प्रतिषेधति, अप्रतिषिद्धा चावरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते। आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः तेषामुपलब्ध्या भवितव्यं यत्तानि नोपलभ्यन्ते तद् उपलब्धेः स्वविषयप्रतिपादिकाया अभावाद्= अनुपलम्भादनुपलब्धेर्विषयो गम्यते- 'न सन्त्यावरणादीनि शब्दस्याऽग्रहणकारणानि' इति, अनुपलम्भादनुपलब्धिः सिध्यति- विषयः स तस्येति ॥ ३० ॥

## ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥

अहेतुरिति वर्तते। शरीरे शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ- 'अस्ति मे संशयज्ञानम् नास्ति मे संशयज्ञानम्' इति. एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु. सेयमावरणाद्य-

---

सिध्यति तस्मान्न शब्दावरकसत्त्वं संभवतीत्यर्थः। उक्तस्याभिप्रायमुद्घाटयति- यदस्तीत्यादिना। अस्याप्यर्थमाह- उपलब्ध्येति, यदस्ति तदुपलब्ध्याऽस्तीतिप्रतिज्ञायते इत्यन्वयः। अनुपलब्धेर्विषयमाह- यन्नास्तीति। अस्याप्यर्थमाह- अनुपलभ्यमानमिति। उपसंहरति- सोयमिति, अत्र "अनुपलम्भाभावः" इति पाठोऽसंगतस्तात्पर्यटीकाविरुद्धश्च। शब्दावरणाद्यनुपलब्धेर्योऽनुपलम्भः= अनुपलब्धिस्तस्याः शब्दावरणाद्यनुपलब्धिरेव विषय इति तेनानुपलम्भेन शब्दावरणाद्यनुपलब्धिः सिद्धा तया च शब्दावरणाद्यभावः सिद्ध इत्यर्थः। द्वाभ्यामपि स्वविषयशब्दाभ्यां शब्दावरणाद्यनुपलब्धिर्ग्राह्या। यदाह्युक्तानुपलम्भेन शब्दावरणाद्यनुपलब्धेः प्रतिषेधो नोपपद्यते तदा सा सिद्धानुपलब्धिः हेतुत्वाय कल्पते= शब्दावरणाद्यभावस्य हेतुः= साधिका भवतीत्यर्थः। शब्दस्यावरणादीनामभावमुपपादयति- आवरणादीनीति, भवेयुरितिशेषः। तेषाम्= आवरणादीनाम्, सत उपलब्धिर्युक्तैव। यत्= यस्मात्, तानि= आवरणादीनि, तत्= तस्मात्, स्वविषयप्रतिपादिकायाः= शब्दावरणसाधिकाया उपलब्धेरभावात्= अनुपलम्भात्. अर्थात् शब्दावरणोपलब्ध्यनुपलम्भात् शब्दावरणानुपलब्धिः सिद्धा तस्याश्च विषयः शब्दावरणाभाव इति शब्दावरणानुपलब्ध्या 'न सन्ति शब्दावरणादीनि' इति गम्यते इत्यन्वयः, उपलब्ध्यभावश्चानुपलम्भ एवेति स्पष्टमेव। अनुपलब्धेश्चात्र विषयः शब्दावरणाद्यभावः- अभावस्यैवानुपलब्धिविषयत्वात्। तादृशाभावमेवाह- न सन्तीति। शब्दावरणाद्यनुपलब्धिसिद्धिमाह- अनुपलम्भादिति, शब्दावरणाद्युपलब्धेरनुपलम्भात् शब्दावरणाद्यनुपलब्धिः सिध्यति तया च शब्दावरणाद्यभावः सिध्यति तेन च शब्दानित्यत्वं सिद्धमित्यर्थः। सः= सा= अनुपलब्धिः, तस्य= उक्तानुपलम्भस्य विषयः= तयोर्विषयविषयिभावात्, अत्र स इत्यस्य स्थाने सेति वक्तव्यमासीत्, अत्र "विषयः स तस्य= उपलब्धिनिषेधकस्य प्रमाणस्याऽनुपलब्धिस्ततश्चावरणाद्यभाव इति द्रष्टव्यम्" इति तात्पर्यटीका। किं वा सः= शब्दावरणाद्यभावस्तस्य= उक्तानुपलम्भस्य= शब्दावरणाद्यनुपलब्धेर्विषय इत्यन्वयस्तथा च शब्दावरणाद्यभावस्य सिद्ध्या शब्दस्याश्रूयमाणस्याऽसत्त्वं विनाशित्वं तेन चानित्यत्वं सिद्धम् ॥ ३० ॥

अनुपलब्धिसमायाः समाधानान्तरमाह- ज्ञानेति, अध्यात्मम्= आत्मनि ज्ञानविकल्पानाम्= ज्ञानविशेषाणां भावाभावयोः= सत्त्वासत्त्वयोः संवेदनम्= ज्ञानं भवति तथा च शब्दावरणविषयकज्ञानाभावस्यापि ज्ञानं जायते- 'नास्ति मे शब्दावरणविषयकं ज्ञानम्' इति तस्मात् शब्दावरणस्याभावः सिध्यति, यदि शब्दावरणादिकं स्यात् तदा कदाचित् तज्ज्ञानमपि जायेत न च जायते तथा च प्रागुच्चारणाद् या शब्दस्यानुपलब्धिः सा शब्दस्याविद्यमानत्वादेवेति शब्दानित्यत्वं सिद्धं न तूक्तरीत्याऽऽवरणवशादनुपलब्धिर्येन शब्दस्य नित्यत्वमापद्येतेति सूत्रार्थः। व्याचष्टे- अहेतुरिति, वर्तते= वर्तनीयम्= पूर्वसूत्रादनुवर्तनीयमित्यर्थः, तथा च 'अध्यात्मं ज्ञानविकल्पानां च भावाभावसंवेदनादहेतुः' इत्यन्वयः। शब्दावरणसत्त्वप्रतिपादनार्थं यः "तदनुपलब्धेरनुपलम्भात्" इति हेतुरुक्तः सोऽहेतुरित्यर्थः,

अनुपलब्धि:= उपलब्ध्यभाव: स्वसंवेद्य:– नास्ति मे शब्दस्यावरणाद्युपलब्धि: इति= 'नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनि ' इति, तत्र यदुक्तम्– 'तदनुपलब्धेरनुपलम्भादभावसिद्धि: ' इति एतन्नोपपद्यते ॥ ३१ ॥

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥**

'अनित्येन घटेन साधर्म्यादनित्य: शब्द: ' इतिब्रुवत:– 'अस्ति घटेनाऽनित्येन सर्वभावानां साधर्म्यम् ' इति सर्वस्यानित्यत्वमनिष्टं संपद्यते, सोयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति ॥ ३२ ॥

अस्योत्तरम्—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥ ३३ ॥**

प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्तकं प्रतिपक्षलक्षणं प्रतिषेध: तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोग:, तद् यद्यनित्यसाधर्म्यादनित्यत्वस्यासिद्धि: ?– साधर्म्यादसिद्धे:, प्रतिषेधस्याप्यसिद्धि:– प्रतिषेध्येन साधर्म्यादिति ॥ ३३ ॥

---

अन्यत् पूर्वत्र व्याख्यातम् । सूत्रार्थमाह– शरीर इति, शरीरावच्छेदेनेत्यर्थ:, भवत इतिशेष: । उदाहरति– अस्तीति, ज्ञानस्यास्तीत्यनेन सत्त्वं नास्तीत्यनेनासत्त्वं ज्ञायते इत्यर्थ: । उक्तमन्यत्रातिदिशति– एवमिति, उदाहार्यमिति शेष:, यथा– 'अस्ति मे प्रत्यक्षज्ञानं नास्ति मे प्रत्यक्षज्ञानम् ' इत्यादि । पर्यवसितमाह– सेयमिति, अत्र 'आवरणादीनामनुपलब्धि:' इतिवक्तव्यमासीत्– अग्रिमपदेनान्वयसंभवात् । आवरणाद्यनुपलब्धेरपि ज्ञानं जायते ततश्च शब्दावरणादेरभाव: सिध्यतीत्यर्थ: । उक्तस्यार्थमाह– उपलब्ध्यभाव इति । उदाहरति– नास्तीति । उदाहृतं व्याचष्टे– नोपलभ्यन्ते इति, विद्यमानस्य शब्दस्याग्रहणकारणान्यावरणादीनि नोपलभ्यन्ते तेनाऽश्रूयमाणस्य शब्दस्याऽसत्त्वमवधार्यते तेन शब्दस्यानित्यत्वं सिद्धमित्यर्थ: । उपसंहरति– तत्रेति, तत्र= एवं शब्दावरणादेरभावेऽवधार्यमाणेपि " तदनुपलब्धेरनुपलम्भात् " इत्यादि यदुक्तं तन्नोपपद्यते इत्यन्वय: । स्पष्टमन्यत् । अभावसिद्धि:= शब्दावरणानुपलब्धेरभावस्य सिद्धिस्तया शब्दावरणसिद्धिरित्यर्थस्तदेतत्तदनुपलब्धिसमलक्षणे उक्तं द्रष्टव्यम् ॥ ३१ ॥

अनित्यसमां लक्षयति– साधर्म्यादिति, साधर्म्यात्= कृतकत्वादिलक्षणाद् घटादिसाधर्म्यात् तुल्यधर्मोपपत्ते:= तुल्यधर्मत्वोपपत्ते:= शब्दस्यानित्यत्वापत्तौ सर्वेषामपि पदार्थानां सत्त्वादिना धर्मेण घटादिसाधर्म्यसंभवात् अनित्यत्वं प्रसज्यते न च सर्वानित्यत्वं तवाभीष्टमिति न घटादिसाधर्म्यादपि शब्दस्यानित्यत्वमुपपद्यते इत्यर्थस्तथा च सर्वानित्यत्वप्रसङ्गादनित्यसमा जातिर्भवतीति सूत्रार्थ: । व्याचष्टे– अनित्येनेति, ब्रुवतो नैयायिकस्य । प्रकृतमाह– अस्तीति, यथा– 'सर्वमनित्यं सत्त्वाद् घटवत् ' इति, साधर्म्यमत्र सत्त्वादिलक्षणं ग्राह्यम्, सर्वस्यानित्यत्वं च नैयायिकस्यानिष्टमेव– आत्मादीनां नित्यत्वस्वीकारात्. तथा च न घटादिसाधर्म्यादपि शब्दस्यानित्यत्वमुपपद्यते इत्यर्थ: । निर्वक्ति– सोयमिति । स्पष्टमन्यत् ॥ उद्देशसूत्रानुरोधेन प्रथमं नित्यसमस्य लक्षणं वक्तव्यमासीदित्यनुसंधेयम् ॥ ३२ ॥

अग्रिमसूत्रमवतारयति– अस्येति, अस्य= उक्तस्यानित्यसमस्य । साधर्म्यादिति– साधर्म्याद् असिद्धे:= साध्यासिद्धौ 'नित्य: शब्द: श्रावणत्वात् शब्दत्ववत् ' इतिप्रतिषेधस्य= त्वदीयानुमानस्यापि सिद्धिर्न संभवति– तस्यापि प्रतिषेध्यसाधर्म्यात्= प्रतिषेध्यं यदनित्यत्वानुमानं तत्साधर्म्येण प्रवृत्तत्वात् साधर्म्यस्य च त्वयाऽसाधकत्वस्वीकारात्, नित्यत्वानित्यत्वानुमानवाक्ययो: साधर्म्यं च प्रतिज्ञाद्यवयवयोगो विज्ञेय इतिसूत्रार्थ: । अत्रत्या वृत्तिरपि द्रष्टव्या । व्याचष्टे– प्रतिज्ञेति, पक्षनिवर्तकम्= साध्यपक्षप्रतिषेधकम्= प्रथमपक्षप्रतिषेधकमत एव प्रतिपक्षलक्षणं प्रतिज्ञाद्यवयवयुक्तं वाक्यं प्रतिषेध:, तस्य= प्रतिषेधस्य, प्रतिषेध्येन पक्षेण= 'अनित्य: शब्द: कृतकत्वात् ' इत्यादिना प्रथमपक्षेण, उभयमप्यनुमानवाक्यं

## दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥ ३४ ॥

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते स हेतुत्वेनाभिधीयते. स चोभयथा भवति- केन चित्समानः कुतश्चिद्विशिष्टः. सामान्यात् साधर्म्यं विशेषाच्च वैधर्म्यम्. एवं साधर्म्यविशेषो हेतुः नाऽविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा. साधर्म्यमात्रं वैधर्म्यमात्रं चाश्रित्य भवानाह- "साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ३२" इति. एतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम् ॥ ३४ ॥

## नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

---

प्रतिज्ञाद्यवयवयुक्तं भवतीति प्रसिद्धमेव तदेव साधर्म्यम्। प्रकृतमाह- तदिति, अनित्यसाधर्म्यात्= घटादिसाधर्म्येऽपि। उक्ते हेतुमाह- साधर्म्यादिति, त्वन्मतेन साधर्म्यात् साध्यसिद्धिर्न भवतीति घटादिसाधर्म्यादपि यदि शब्दस्यानित्यत्वासिद्धिस्तदा प्रतिषेधस्यापि= नित्यः शब्द इत्यनुमानस्यापि= शब्दनित्यत्वस्याप्यसिद्धिः- प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात्= प्रतिषेध्यं यदनित्यत्वानुमानं तत्साधर्म्येण प्रवृत्तत्वात्. साधर्म्यं च प्रतिज्ञाद्यवयवयोग इति न शब्दनित्यत्वापत्तिर्न वा शब्दानित्यत्वपरिहारस्योपपत्तिरित्यर्थः ॥ ३३ ॥

अनित्यसमस्य समाधानान्तरमाह- दृष्टान्ते इति, दृष्टान्ते साध्यसाधनभावेन= साध्यस्य साधनभावेन= साध्यव्याप्यत्वेन प्रज्ञातस्य= प्रमितस्य कृतकत्वादिधर्मस्य हेतुत्वात्= हेतुत्वसंभवात् तस्य= हेतुत्वस्य च मदीयहेतौ उभयथा= अन्वयव्याप्त्या व्यतिरेकव्याप्त्या च भावात्= सत्त्वात् त्वदीयहेतोर्मदीयहेतोश्चाविशेषः= साम्यं नास्ति- त्वदीयहेतौ साध्यव्याप्यत्वाभावादिति सूत्रान्वयः, एवमेव वृत्तिकारेणापि सूत्रमिदं व्याख्यातम्। तथा च शब्दानित्यत्वेपि सर्वानित्यत्वापत्तिर्नास्ति- सत्त्वादिहेतोरऽनित्यत्वव्याप्यत्वाभावादित्यर्थः। व्याचष्टे- दृष्टान्ते इति, धर्मः= कृतकत्वादिधर्मः। सः= साध्यव्याप्यः, हेतुत्वेनाभिधीयते= हेतुरित्युच्यते किं वा हेतुत्वेन प्रदर्श्यते इत्यर्थः, उभयथा= अन्वयव्यतिरेकाभ्याम्, केन चित्= सपक्षेण समानः= सपक्षसाधर्म्येण प्रवृत्तः, कुतश्चित्= विपक्षाद् विशिष्टः= विपक्षवैधर्म्येण प्रवृत्तः, अन्वयव्यतिरेकव्याप्तिभ्यां प्रवृत्त इत्यर्थस्तदेतत् हेतुलक्षणे स्पष्टमेव। साधर्म्यकारणमाह- सामान्यादिति, सामान्यात्= सादृश्यात् अन्वयव्याप्त्या, वैधर्म्यकारणमाह- विशेषादिति, विशेषात्= वैपरीत्यात्= व्यतिरेकव्याप्त्या। पर्यवसितमाह- एवमिति, साधर्म्यविशेषः= अन्वयव्यतिरेकव्याप्तिप्रयुक्तमेव साधर्म्यं हेतुः= साध्यसाधकं भवति. अविशेषेण= अन्वयव्यतिरेकव्याप्त्यऽप्रयुक्तं तु साधर्म्यं वा वैधर्म्यं वा साध्यसाधकं न भवतीत्यर्थः। प्रकृतमाह- साधर्म्यमात्रमिति। यदुक्तं तदनुवदति- साधर्म्यादिति, सूत्रं चैतत् पूर्वं व्याख्यातम्, अन्वयव्यतिरेकव्याप्त्यऽप्रयुक्तेन घटसाधर्म्यमात्रेण सर्वस्यानित्यत्वं भवानाऽऽपादयति न तु विशेषसाधर्म्येणापि, तत्र 'सर्वमनित्यं सत्त्वाद् घटवत्' इत्युक्ते सत्त्वादितिहेतुरऽनित्यत्वव्याप्यं नास्ति- नित्येप्याकाशादौ तत्सत्त्वादित्यर्थः। उपसंहरति- एतदिति, यदुक्तं तदयुक्तम्- सामान्यसाधर्म्यमाश्रित्योक्तत्वात् सामान्यसाधर्म्यस्य चासाधकत्वादित्यर्थः। पूर्वोक्तमप्यत्रातिदिशति- अविशेषेति, अविशेषसमप्रतिषेधे= चतुर्विंशतिसूत्रभाष्ये- "तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति अनुदाहरणश्च हेतुर्नास्तीति" इत्यादि यदुक्तं तदपि अनित्यसमप्रतिषेधरूपमेवेति वेदितव्यम्- अत्रापि सर्वस्य पक्षत्वेन दृष्टान्तस्याभावादित्यर्थः। स्पष्टमन्यत् ॥ ३४ ॥

नित्यसमा लक्षयति- नित्यमिति, अनित्ये शब्दादिपदार्थे नित्यम्= सर्वदाऽनित्यभावात्= अनित्यत्वस्थित्या नित्यत्वोपपत्तेः= नित्यत्वोपपादने नित्यसमा जातिरित्यन्वयः, यदि शब्दे सर्वदैवाऽनित्यत्वं तिष्ठति तदा तदाधारस्य शब्दस्यापि सर्वदा सत्त्वं स्यादिति नित्यत्वं स्यादेव. यदि चानित्यत्वं न सर्वदा

'अनित्यः शब्दः' इति प्रतिज्ञायते. तदनित्यत्वं किं शब्दे नित्यम्? अथाऽनित्यम्?. यदि तावत् सर्वदा भवति? धर्मस्य सदा भावाद् धर्मिणोपि सदा भाव इति 'नित्यः शब्दः' इति, अथ न सर्वदा भवति? अनित्यत्वस्याऽभावाद् नित्यः शब्दः, एवं नित्यत्वेन प्रत्यवस्थानात् नित्यसमः ॥ ३५ ॥

अस्योत्तरम्—

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ॥३६॥**

प्रतिषेध्ये शब्दे 'नित्यमनित्यत्वस्य भावात्' इत्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम्. अनित्यत्वोपपत्तेश्च 'नाऽनित्यः शब्दः' इति प्रतिषेधो नोपपद्यते, अथ नाभ्युपगम्यते? 'नित्यमनित्यत्वस्य भावात्' इतिहेतुर्न भवतीति हेत्वभावात् प्रतिषेधानुपपत्तिरिति। उत्पन्नस्य निरोधादऽभावः शब्दस्याऽनित्यत्वं तत्र परिप्रश्नानुपपत्तिः= सोयं प्रश्नः— 'तदनित्यत्वं किं शब्दे सर्वदा भवति? अथ न?' इत्यनुपपन्नः, कस्मात्? उत्पन्नस्ययो निरोधादऽभावः शब्दस्य तद् अनित्यत्वम्. एवं च सत्यऽधिकरणाधेयविभागो व्याघातान्नास्तीति। नित्यानित्यत्व-

---

तिष्ठति तदाप्यनित्यत्वराहित्यात् शब्दस्य नित्यत्वं स्यादेवेति एषा नित्यसमा जातिरिति सूत्रार्थः। व्याचष्टे— अनित्य इति। द्विधा विकल्पयति— तदिति। प्रथमकल्पेन शब्दस्य नित्यत्वापत्तिमाह— यदीति। द्वितीयकल्पेनापि शब्दस्य नित्यत्वापत्तिमाह— अथेति, सर्वदा= नित्यम्। निर्वक्ति— एवमिति। नित्यत्वेन= नित्यत्वमाश्रित्य= नित्यत्वसाधनार्थमितियावत्। स्पष्टं सर्वम् ॥ ३५ ॥

अग्रिमसूत्रमवतारयति— अस्येति, अस्य= उक्तस्य नित्यसमस्य। प्रतिषेध्ये इति— प्रतिषेध्ये= शब्दे नित्यमनित्यभावात्= सर्वदैवानित्यत्वस्वीकारादनित्ये शब्दे ह्यनित्यत्वमुपपद्यते तेन प्रतिषेधस्य= नित्यसमस्याऽभावः= असंभव इत्यन्वयः, यदा हि त्वया प्रतिषेध्ये शब्दे सर्वदैवानित्यत्वं स्वीक्रियते तदा शब्देऽनित्यत्वमुपपन्नमिति कथं शब्दस्य नित्यत्वमापद्येत तथा च प्रतिषेधः= नित्यसमा जातिर्नोपपद्यते किं वाऽनित्यत्वप्रतिषेधो नोपपद्यते, न चाऽनित्यत्वाधारत्वेन शब्दस्य नित्यत्वापत्तिः— यावत्पर्यन्तं शब्दस्तावत्कालपर्यन्तमेवानित्यत्वाधारत्वस्वीकारात्. अनित्यत्वं परित्यज्य शब्दस्थितेरस्वीकारात्. यद्यनित्यत्वरहितस्य शब्दस्य सत्ता स्वीक्रियेतानित्यत्वविशिष्टस्य वा सर्वदा तदायं दोषः स्यादपि न चैवमस्तीत्याशय इतिसूत्रार्थः। अत्र— "प्रतिषेध्ये नित्यमनित्यत्वमिति ब्रुवताऽभ्यनुज्ञातमनित्यत्वम् अभ्यनुज्ञानाच्चासमर्थः प्रतिषेध इति" इतिवार्तिकम्। व्याचष्टे— प्रतिषेध्ये इति, नित्यम्= सर्वदा, भावात्= सत्त्वात्, शब्दस्यानित्यत्वानुज्ञानादनित्यत्वमुपपन्नं तादृशानित्यत्वोपपत्तेश्च 'नानित्यः शब्दः' इति-प्रतिषेधः= शब्दानित्यत्वप्रतिषेधो नोपपद्यते इत्यन्वयः। द्वितीयक्षमाह— अथेति, यदि शब्दे नित्यमऽनित्यत्वं नाभ्युपगम्यते तदा "नित्यमनित्यभावात्" इति यो हेतुरुक्तस्तस्वरूपासिद्धिर्जातेति हेतोः पक्षावृत्तित्वेन हेत्वभावात् प्रतिषेधानुपपत्तिः= अनित्यत्वप्रतिषेधस्य नित्यत्वसमाधानस्य चानुपपत्तिरित्यन्वयः। अनित्यत्वस्वरूपमाह— उत्पन्नस्येति, उत्पन्नस्य शब्दस्य निरोधात्= विनाशाद् योऽभावः स एवाऽनित्यत्वम् तत्र= अनित्यत्वे एतादृशे सिद्धे तद्विरुद्धं नित्यत्वं नोपपद्यते इति नित्यत्वोपपादनार्थ प्रश्नोनुपपन्न इत्यर्थः। उक्तं विशदयति— सोयमिति। प्रश्नवाक्यमाह— तदिति। सोयं प्रश्नोनुपपन्न इत्यन्वयः। प्रश्नस्यानुपपन्नत्वे हेतुं जिज्ञासते— कस्मादिति। हेतुमाह— उत्पन्नस्येति, पूर्ववदेवान्वयः। पर्यवसितमाह— एवं चेति, यदा ह्युत्पन्नस्य शब्दस्य विनाशाद् योऽभावस्तदेवानित्यत्वं तदा हि तादृशमनित्यत्वं शब्दे स्थातुमेव न शक्नोति— शब्दस्य विनष्टत्वाद् विनष्टे च पदार्थे स्थितेरसंभवादिति व्याघाताद् अधिकरणाधेयविभागः= आधाराधेयभावः शब्दानित्यत्वयोर्नोपपद्यते इति नोक्तः प्रश्न उपपद्यते

विरोधाच्च नित्यत्वमनित्यत्वं चैकस्य धर्मिणो धर्माविति विरुध्येते= न संभवतः, तत्र यदुक्तम्- ' नित्यमनित्यत्वस्य भावाद् नित्य एव ' तदऽवर्तमानार्थमुक्तमिति ॥ ३६ ॥

## प्रयत्नकार्यानेकत्वात् कार्यसमः ॥ ३७ ॥

' प्रयत्नानन्तरीयकत्वादनित्यः शब्दः ' इति, यस्य प्रयत्नानन्तरमात्मलाभः तत्खलु अभूत्वा भवति यथा घटादि कार्यम्. अनित्यमिति च ' भूत्वा न भवति ' इत्येतद्विज्ञायते, एवमवस्थिते " प्रयत्नकार्यानेकत्वात् " इतिप्रतिषेध उच्यते= प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम्. व्यवधानाऽपोहाच्चाऽभिव्यक्तिर्व्यवहितानाम् , तत् किं प्रयत्नानन्तरमात्मलाभः शब्दस्य? आहो अभिव्यक्तिः? इति विशेषो नास्ति। कार्याविशेषेण प्रत्यवस्थानं कार्यसमः॥३७॥

अस्योत्तरम्—

## कार्यान्यत्वे प्रयत्नाहेतुत्वम्- अनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

---

इत्यर्थः । अत्र- " अनित्यत्वं हि शब्दस्याऽपरान्तावच्छिन्नसत्तासमवायः न चासौ शब्दाधेयस्तस्य स्वतन्त्रत्वादेवेत्यर्थः " इति तात्पर्यटीका । किं वाऽधिकरणाधेययोः= शब्दतदनित्यत्वयोर्विभागः= पार्थक्येन स्थितिर्न भवति- शब्दस्य विनाशित्वात्. व्याघातात्= विनष्टस्य स्वधर्मात्पृथक् स्थित्यसंभवादित्यर्थः। अनित्यत्वेन सहैव शब्द उत्पद्यते विनश्यति चेत्याशयः। दोषान्तरमाह- नित्यानित्यत्वेति, नित्यानित्यत्वविरोधात्= नित्यत्वानित्यत्वयोः परस्परं विरोधात् एकस्य धर्मिणो नित्यत्वमनित्यत्वं चेति धर्मौ विरुध्येते तस्मान्नैकस्य संभवत इत्यन्वयः। उपसंहरति- तत्रेति, तत्र= एवं स्थिते । उक्तमाह- नित्यमिति, अत्र शब्द इतिशेषः, एतत् पूर्वं व्याख्यातम् । एतद् यदुक्तं तदऽवर्तमानार्थम्= अर्थहीनम्= अपार्थकमुक्तम्- शब्दाऽनित्यत्वस्योपपादितत्वात् तेन शब्दनित्यत्वस्याऽसंभवादित्यर्थः ॥ ३६ ॥

कार्यसमां जातिं लक्षयति- प्रयत्नेति, प्रयत्नकार्याणामनेकत्वात्= अनेकविधत्वात् यथा प्रयत्नेनोत्पत्तिरपि भवति अभिव्यक्तिरपि भवति तत्र प्रयत्नेन शब्दस्योत्पत्तिर्भवति नाभिव्यक्तिरित्यत्र नियामकाभावादभिव्यक्तिपक्ष एव स्वीक्रियते इति शब्दस्य नित्यत्वं प्राप्तमिति प्रयत्नकार्याविशेषेण प्रत्यवस्थानात् कार्यसम इतिसूत्रार्थः । व्याचष्टे- प्रयत्नेति, तदेतत् कार्यसमजात्या प्रत्याख्येयस्य प्रथमपक्षस्यानुवादः । कार्यत्वं किं वा कार्यस्वरूपमाह- यस्येति, यस्य घटादिपदार्थस्य, आत्मलाभः= उत्पत्तिः, तत्= घटादि, अभूत्वा= अविद्यमानः, भवति= उत्पद्यते, उदाहरति- यथेति । तदेतादृशं घटादिकार्यमनित्यं भवतीत्याह- अनित्यमिति, भूत्वा= उत्पद्य= उत्पत्त्यनन्तरं न भवति= विनश्यतीत्येतस्मादऽनित्यत्वं सिद्धमित्यर्थः। प्रकृतमाह- एवमिति, एवमवस्थिते= प्रयत्नानन्तरीयकत्वात् शब्दस्याऽनित्यत्वे प्राप्ते इत्यर्थः । कार्यसमामाह- प्रयत्नेति, प्रतिषेधः= शब्दानित्यत्वप्रतिषेधः । प्रतिषेधं व्याचष्टे- प्रयत्नानन्तरमिति, आत्मलाभः= उत्पत्तिः । द्वितीयपक्षमाह- व्यवधानेति, प्रयत्नानन्तरम्= प्रयत्नेन व्यवधानाऽपोहात्= जवनिकादेर्व्यवधानस्य निवृत्त्या व्यवहितानां नटादीनामभिव्यक्तिर्भवतीति प्रयत्नकार्यद्वैविध्यं सिद्धम् । उपसंहरति- तदिति, शब्दस्य प्रयत्नेनाभिव्यक्तिरेव भवति नोत्पत्तिरित्यत्र किं वोत्पत्तिरेव भवति नाभिव्यक्तिरित्यत्र च विशेषहेतुर्नास्तीत्यर्थस्तथा च शब्दानित्यत्वनियामकस्याऽभावात् शब्दस्य नित्यत्वं प्राप्तमितिभावः । निर्वक्ति- कार्येति, उत्पत्त्यभिव्यक्त्योः प्रयत्नकार्यत्वाविशेषेण प्रत्यवस्थानं कार्यसमा जातिरित्यर्थः, समन्वयश्च स्पष्टएव ॥ ३७ ॥

अग्रिमसूत्रमवतारयति- अस्येति, अस्य= उक्तस्य कार्यसमस्य । कार्येति- कार्यान्यत्वे= शब्दस्याऽकार्यत्वे= नित्यत्वपक्षे अनुपलब्धिकारणस्यावरणादेरुपपत्तेः प्रयत्नस्य हेतुत्वं न स्यात्- कार्यत्वपक्षे एव प्रयत्नस्य हेतुत्वसंभवादिति सूत्रान्वयः, अत्रानुपलब्धिकारणस्याऽपाकरणात् प्रयत्नस्य तद्धेतुत्वमुपपद्यते इति प्रयत्नस्याहेतुत्वमुक्तं चिन्त्यमेव । किं वा- शब्दस्य नित्यत्वपक्षेऽनुपलब्धिकारणमावरणादिक-

सति कार्यान्यत्वे अनुपलब्धिकारणानुपपत्तेः प्रयत्नस्याऽहेतुत्वं शब्दस्याभिव्यक्तौ= यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते. व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति. न तु शब्दस्यानुपलब्धिकारणं किं चिदुपपद्यते यस्य प्रयत्नानन्तरमपोहात् शब्दस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति. तस्मादुत्पद्यते शब्दो नाभिव्यज्यते इति ॥ ३८ ॥

हेतोश्चेदनैकान्तिकत्वमुपपाद्यते– अनैकान्तिकत्वादसाधकः स्यादिति, यदि चाऽनैकान्तिकत्वादसाधकत्वम् ?—

## प्रतिषेधेपि समानो दोषः ॥ ३९ ॥

---

मित्युपपाद्यते इतिस्पष्टमेव तथा च शब्दस्य नित्यत्वपक्षे प्रयत्नस्याऽहेतुत्वे प्रयत्नानन्तरीयकत्वम्= प्रयत्नकार्यत्वं नोपपद्यते स्वीकृतं च प्रयत्नानन्तरीयकत्वं तेन कार्यत्वं तेन चानित्यत्वं सिद्धमित्याशयः । वस्तुतस्तु सूत्रे ‘ अनुपलब्धिकारणानुपपत्तेः ’ इत्येवं पाठो युक्तो भाष्यसंमतश्च तथा च शब्दस्य कार्यान्यत्वे= नित्यत्वपक्षे प्रयत्नस्य शब्दोत्पादकत्वाभावादहेतुत्वम्= निष्फलत्वं प्राप्तं पूर्वोक्तं शब्दस्यानुपलब्धिकारणमावरणादिकं तु नोपपद्यते यस्याऽपाकरणात् प्रयत्नस्य साफल्यं स्यादिति शब्दनित्यत्वपक्षे प्रयत्नस्य निष्फलत्वमापद्यते न चैतद् युक्तमिति शब्दोच्चारणप्रयत्नस्य साफल्यार्थं शब्दस्य कार्यत्वं स्वीकार्यमिति सूत्रार्थ उपपद्यते, “ अनुपलब्धिकारणोपपत्तेः ” इति प्रकृतपाठपक्षे तु शब्दानुपलब्धिकारणस्यावरणादेरुपपत्तौ तदपाकरणेन प्रयत्नस्य साफल्यं शब्दनित्यत्वपक्षेपि संभवति तदेतत् प्रकृतविरुद्धमेवेति नायं पाठो युक्त इति विभाव्यम् । व्याचष्टे– सतीति, शब्दस्याभिव्यक्तौ= अभिव्यक्तिपक्षे= नित्यत्वपक्षे, अन्यद् व्याख्यातमेव । उक्तं व्याचष्टे– यत्रेति, यथा नाट्यशालायां नटादीनामभिव्यक्तिर्भवति तत्र जवनिकादिकं व्यवधानमपि प्रसिद्धमेव तस्य व्यवधानस्याऽपोहात्= अपसारणात्, तादृशव्यवधानापसारणलक्षणप्रयत्नादनन्तरं भाविनः= दृश्यमानस्य नटादिपदार्थस्योपलब्धिरूपाऽभिव्यक्तिर्भवति, तत्र जवनिकादिलक्षणं व्यवधानं प्रत्यक्षमेव तस्यापसारणात् प्रयत्नसाफल्यम् । शब्दस्य त्वनुपलब्धिकारणं व्यवधानं न प्रमाणगम्यमस्ति येन शब्दस्याभिव्यक्तिः स्वीक्रियेत तथा च नित्यत्वं स्वीक्रियेतेत्याह– न त्विति, यस्य= अनुपलब्धिकारणस्य व्यवधानस्य, स्वीक्रियेतेतिशेषः । उपसंहरति– तस्मादिति, तस्मात्= शब्दस्य नित्यत्वासंभवात् किं वा व्यवधायकासंभवात् प्रागुच्चारणादसन्नेव शब्द इतिहेतोः प्रयत्नस्य साफल्यार्थं चोत्पद्यते एव शब्द इत्यऽनित्य एव न नित्य इति स्वीकार्यमित्यर्थः स्पष्टमन्यत् । अत्र ‘ अनुपलब्धिकारणानुपपत्तेः ’ इत्येवं सूत्रपाठे “ सति कार्यान्यत्वेऽनुपलब्धिकारणानुपपत्तेः” इतिभाष्यमप्यनुकूलम्, भाष्येप्यत्र “अनुपलब्धिकारणोपपत्तेः” इतिपाठान्तरं तु तादृशसूत्रपाठवदसंगतमेव “ न तु शब्दस्यानुपलब्धिकारणं किं चिदुपपद्यते ” इत्यग्रिमेणोक्तविशदीकरणभाष्यपाठेन प्रतिकूलश्चेति विभाव्यम् । “ अनुपलब्धिकारणस्यावरणादेरुपपत्तेरभिव्यक्तिहेतुत्वं स्याद् एवं तु नास्तीति व्यतिरेकपरं द्रष्टव्यम् ” इतितात्पर्यटीकातात्पर्येण तु सूत्रस्य व्यतिरेकपरत्वेन= आक्षेपपरत्वेन ‘ कार्यान्यत्वे प्रयत्नहेतुत्वमनुपलब्धिकारणोपपत्तेः ’ इत्येवं पाठः संभवति तस्य च ‘ शब्दस्य नित्यत्वपक्षेऽनुपलब्धिकारणोपपत्तौ सत्यामनुपलब्धिकारणाऽपाकरणात् प्रयत्नस्य हेतुत्वम्= साफल्यं स्यात् न चैवमस्ति ’ इत्यर्थः संभवतीत्यलमधिकेन ॥ ३८ ॥

॥ इति जातिनिरूपणप्रकरणं समाप्तम् ॥

---

अग्रिमसूत्रमवतारयति– हेतोरिति, हेतोः= प्रयत्नानन्तरीयकत्वादितिहेतोः, हेतोरनैकान्तिकत्वोपपादनस्य हेतुमाह– अनैकान्तिकत्वादिति । प्रकृतमाह– यदीति । षट्पक्षीमारभते– प्रतिषेधेपीति, यदि शब्दानित्यत्वसाधकहेतौ प्रयत्नानन्तरीयकत्वेऽनैकान्तिकत्वं दोषस्तदा प्रतिषेधेपि= अनित्यत्वप्रति-

प्रतिषेधोप्यनैकान्तिकः- किंचित् प्रतिषेधति किंचिन्नेति. अनैकान्तिकत्वादऽसाधक इति। अथ वा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः, नित्यत्वपक्षेपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः, सोयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति ॥ ३९ ॥

## सर्वत्रैवम् ॥ ४० ॥

सर्वेषु साधर्म्यप्रभृतिषु प्रतिषेधहेतुषु यत्र यत्राविशेषो दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यते इति ॥ ४० ॥

## प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

योऽयं प्रतिषेधेपि समानो दोषः अनैकान्तिकत्वमापाद्यते सोऽयं प्रतिषेधस्य प्रतिषेधेपि समानः, तत्र 'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्' इति साधनवादिनः स्थापना प्रथमः पक्षः, "प्रयत्नकार्यानेकत्वात् कार्यसमः ३७" इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः स च प्रतिषेध इत्युच्यते, तस्यास्य प्रतिषेधेपि समानो दोष इति तृतीयः पक्षः (स च) विप्रतिषेध उच्यते, तस्मिन् प्रतिषेधविप्रतिषेधेपि समानो दोषः अनैकान्तिकत्वं चतुर्थः पक्षः॥४१॥

---

षेधहेतावप्यनैकान्तिकत्वं दोषः समान एवेति न प्रतिषेधसिद्धिरपि संभवतीति सूत्रान्वयः, एवमेव सर्वत्र विज्ञेयम्। व्याचष्टे- प्रतिषेधोपीति। अनैकान्तिकत्वे हेतुमाह- किंचिदिति, किंचित्= किंचिन्निष्ठानित्यत्वम्, "प्रयत्नकार्यानेकत्वात्" किं वा 'अस्पर्शत्वात्' इतिप्रतिषेधहेतुरपि न सर्वस्य क्रियादिपदार्थस्य नित्यत्वं साधयतीत्यऽनैकान्तिक इत्यर्थः। अनैकान्तिकत्वस्य फलमाह- असाधक इति। वर्णकान्तरमाह- अथ वेति, इति= इत्यत्र विशेषहेतुर्नास्ति। द्वितीयपक्षे दोषमाह- नित्यत्वेति, शब्दस्योत्पत्तिरेव वाऽभिव्यक्तिरेव वेत्यत्र विशेषहेतुर्नास्तीत्यर्थः। एतद्व्याख्यानपक्षे सूत्रघटकदोषशब्देन विशेषहेत्वभावलक्षणो दोषो ग्राह्यः। उपसंहरति- सोयमिति, उभयपक्षसमः= शब्दस्योत्पत्तिपक्षाभिव्यक्तिपक्षयोस्तुल्यः, उभयम्= हेतुद्वयमपि, वादिनोपि प्रतिवादिनोपि च हेतुरनैकान्तिकः- विनिगमनाविरहादित्यर्थः॥ ३९॥

उक्तं सर्वत्रादिशति- सर्वत्रेति, एवम्= उक्तप्रकारेण सर्वत्र प्रतिषेधे दोषः प्रदर्शनीय इतिसूत्रार्थः। व्याचष्टे- सर्वेष्विति, साधर्म्यप्रभृतिषु= साधर्म्यसमप्रभृतिषु, प्रतिषेधहेतुषु= जातिषु, यत्र यत्र अविशेषः= पूर्वोत्तरपक्षयोः सदोषत्वेन विशेषाभावो दृश्यते तत्र तत्रोभयोः पक्षयोः स दोषः समान एव प्रसज्यते इत्यन्वयः। यथोक्ते क्रियाहेतुगुणयोगेप्यनैकान्तिकत्वमस्त्येव- क्रियाहीनगगनवृत्तित्वादिति पूर्वत्र सर्वं स्पष्टम्॥ ४०॥

प्रतिषेधेति- यथा प्रतिषेधे दोषस्तथा प्रतिषेधस्य प्रतिषेधेपि दोषः संभवतीति प्रतिषेधप्रतिषेधस्यापि सिद्धिर्न संभवतीति सूत्रान्वयः। व्याचष्टे- योयमिति, "प्रतिषेधेपि समानो दोषः ३९" इतिसूत्रेण प्रतिषेधे योयमनैकान्तिकत्वलक्षणो दोषः प्रतिपाद्यते स दोषः प्रतिषेधस्य प्रतिषेधेपि समान एव, तत्र प्रतिषेधस्य प्रतिषेधः "प्रतिषेधेपि समानो दोषः" इत्येव. स चायमपि न प्रतिषेधमात्रं दूषयतीति अत्राप्यनैकान्तिकत्वं दोष इत्यर्थः। षट्पक्षीस्वरूपप्रदर्शनार्थं प्रथमपक्षमाह- अनित्य इति, स्थापनापक्षः प्रथम इत्यन्वयः। द्वितीयपक्षमाह- प्रयत्नेति, प्रतिषेधहेतुना= प्रतिषेधकहेतुना= प्रतिषेधत्वेन रूपेण प्रवृत्त इत्यर्थः। द्वितीयपक्षस्य नामधेयमाह- स च प्रतिषेध इति। तृतीयपक्षमाह- तस्येति, तस्यास्य= उक्तस्य द्वितीयपक्षस्य प्रतिषेधस्य 'प्रतिषेधेपि समानो दोषः= दोषप्रदर्शनम्' इति तृतीयः पक्षः, तृतीयपक्षस्य नामधेयमाह- विप्रतिषेध इति। चतुर्थपक्षमाह- तस्मिन्निति, तस्मिन्= उक्ते प्रतिषेधविप्रतिषेधेपि= तृतीयपक्षेप्यनै-

## प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

प्रतिषेधम्= द्वितीयं पक्षं सदोषमभ्युपेत्य= तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे= तृतीयपक्षे समानमऽनैकान्तिकत्वमिति समानं दूषणं प्रसजतो दूषणवादिनो मतानुज्ञा प्रसज्यते इति पञ्चमः पक्षः ॥ ४२ ॥

## स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥ ४३ ॥

स्थापनापक्षे "प्रयत्नकार्यानेकत्वात्" इतिदोषः प्रतिषेधहेतुवादिनः स्वपक्षलक्षणो भवति, कस्मात्?, स्वपक्षसमुत्थत्वात्, सोयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्य= अनुज्ञाय "प्रतिषेधेपि समानो दोषः ३९" इत्युपपद्यमानं दोषं परपक्षे उपसंहरति, इत्थं चानैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति, तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे

---

कान्तिकत्वदोषप्रदर्शनं चतुर्थः पक्षः इत्यर्थः । तत्र "प्रतिषेधेपि समानो दोषः ३९" इतिसूत्रेण तृतीयः पक्षः प्रदर्शितः, "प्रतिषेधविप्रतिषेधे" इत्यनेन च सूत्रेण चतुर्थः पक्षः प्रदर्शितः ॥ ४१ ॥

पञ्चमपक्षमाह– प्रतिषेधमिति, प्रतिषेधविप्रतिषेधे= "प्रतिषेधेपि समानो दोषः ३९" इत्यनेन प्रदर्शिते तृतीयपक्षे समानदोषप्रसञ्जनेन द्वितीयपक्षस्वीकारः प्राप्नोतीति सदोषम् "प्रयत्नकार्यानेकत्वात् कार्यसमः ३७" इत्यनेन प्रदर्शितं प्रतिषेधम्= द्वितीयपक्षं स्वीकृत्य प्रतिषेधविप्रतिषेधे= तृतीयपक्षे द्वितीयपक्षसमदोषप्रसञ्जने चतुर्थपक्षधारिणो द्वितीयपक्षस्वीकारापत्त्या मतानुज्ञानामकं निग्रहस्थानं प्राप्नोतीति मतानुज्ञा= मतानुज्ञाप्रदर्शनं पञ्चमः पक्षः– चतुर्थपक्षानन्तरं प्राप्तत्वादिति सूत्रार्थः । व्याचष्टे– प्रतिषेधमिति, अभ्युपेत्यपदस्यार्थमाह– तदिति, तदुद्धारम्= द्वितीयपक्षोद्धारम् अनुक्त्वा= द्वितीयपक्षदूषणस्याऽनिराकरणेन तत्स्वीकारः प्राप्त इति सदोषं द्वितीयपक्षमनुज्ञाय= स्वीकृत्येत्यर्थः, । दूषणवादिनः= तृतीयपक्षदूषणवादिनः चतुर्थपक्षधारिणः, चतुर्थपक्षधारिणि मतानुज्ञादोषप्रदर्शनं पञ्चमः पक्ष इत्यर्थः स्पष्टमन्यत् ॥ ४२ ॥

षष्ठपक्षमाह– स्वपक्षेति, स्वपक्षः= प्रथमः पक्षस्तेन लक्ष्यते= उत्थाप्यते इति स्वपक्षलक्षणा जातिः= द्वितीयः पक्षस्तदपेक्षः स्वपक्षलक्षणापेक्षः= तृतीयः पक्षस्तस्योपपत्तिमुपसंहरतीति स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारस्तादृशे हेतुनिर्देशे= तृतीयपक्षस्वीकर्तरि पञ्चमपक्षे परपक्षदोषाभ्युपगमात्= तृतीयपक्षदोषाऽनुद्धारेण तत्स्वीकारात् समानः= चतुर्थपक्षे इव मतानुज्ञालक्षणो दोष इति पञ्चमपक्षेपि मतानुज्ञादोषप्रदर्शनं षष्ठः पक्ष इतिसूत्रार्थः । अत्र– "स्वपक्षेण लक्ष्यते तदुत्थानत्वाज्जातिः स्वपक्षलक्षणा= अनैकान्तिकत्वोद्भावनलक्षणा" इतितात्पर्यटीका । व्याचष्टे– स्थापनापक्षे इति, 'अनित्यः शब्दः' इतिप्रथमपक्षे इत्यर्थः, प्रतिषेधहेतुवादिनः= द्वितीयपक्षधारिणः, अत्र "स्थापनाहेतुवादिनः" इतिपाठस्त्वसङ्गतः । स्वपक्षलक्षणः= स्वपक्षलक्षणसंज्ञकः पक्षो भवतीत्यर्थः, तदेतदेकचत्वारिंशत्सूत्रे स्पष्टम् । उक्ते द्वितीयपक्षस्य स्वपक्षलक्षणत्वे हेतुं जिज्ञासते– कस्मादिति । हेतुमाह– स्वपक्षेति, स्वपक्षसमुत्थत्वात्= प्रथमपक्षमाश्रित्योत्पन्नत्वाद् द्वितीयः पक्षः स्वपक्षलक्षण इत्युच्यते इत्यर्थः । षष्ठपक्षमुत्थापयति– सोयमिति, सोयं पञ्चमपक्षवादी स्वपक्षलक्षणम्= द्वितीयपक्षोक्तं प्रथमपक्षदोषमपेक्षमाणः= स्वीकुर्वाणस्तं दोषमनुद्धृत्य स्वीकृत्य च परपक्षे= द्वितीयपक्षे "प्रतिषेधेपि समानो दोषः" इत्यनेन दोषमुपसंहरति । दोषोपसंहारमाह– इत्थमिति, प्रतिषेधः= द्वितीयपक्षः । पर्यवसितमाह– तत्रेति, तत्र= एवं स्थिते, अनेन=

च सति अनेन परपक्षोऽभ्युपगतो भवति । कथं कृत्वा?, यः परेण "प्रयत्नकार्यानेकत्वात्" इत्यादिनाऽनैकान्तिकत्वदोष उक्तस्तमऽनुद्धृत्य "प्रतिषेधेपि समानो दोषः ३९" इत्याह, एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधेपि समानं दोषं प्रसजतः परपक्षाभ्युपगमात् समानो दोषो भवति. यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेपि समानो दोषप्रसङ्गो मतानुज्ञा प्रसज्यते इति तथाऽस्यापि स्थापनां सदोषामभ्युपेत्य प्रतिषेधेपि समानं दोषं प्रसजतो मतानुज्ञा प्रसज्यते इति, स खल्वयं षष्ठः पक्षः ।

तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः, प्रतिषेधहेतुवादिनः द्वितीयचतुर्थषष्ठपक्षाः, तेषां साध्वऽसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात् पुनरुक्तदोषप्रसङ्गः= चतुर्थपक्षे समानदोषत्वं परस्योच्यते- "प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद् दोषः ४१" इति, षष्ठेपि "परपक्षाभ्युपगमात् समानो दोषः" इतिसमानदोषत्वमेवोच्यते नार्थविशेषः कश्चिदस्ति । समानस्तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः= तृतीयपक्षेपि "प्रतिषेधेपि समानो दोषः ३९"

---

पञ्चमपक्षवादिना= वादिना. स्वपक्षलक्षणापेक्षया= द्वितीयपक्षेण उपपद्यमानः= प्राप्तो यः प्रथमपक्षे दोषस्तस्योपसंहारे= स्वीकारे कृते तत्र च "इत्थं चानैकान्तिकः प्रतिषेधः" इत्येवं हेतुनिर्देशे च कृते सति= द्वितीयपक्षदोषे प्रदर्शिते सति परपक्षः= परप्रदर्शितो दोषः= स्वपक्षदोषोभ्युपगतो भवति तत्र परपक्षाभ्युपगमात् मतानुज्ञादोषः प्राप्तस्तथा च पञ्चमपक्षवादिनि मतानुज्ञाप्रदर्शनं षष्ठः पक्ष इत्यर्थः, अत्र प्रथमतृतीयपक्षावपि पञ्चमपक्षवादिनो विज्ञेयौ तेन स्वपक्षदोषो नोद्धृत इति मतानुज्ञा । परपक्षाभ्युपगमप्रकारं जिज्ञासते- कथं कृत्वेति, केन प्रकारेणेत्यर्थः । जिज्ञासितप्रकारं प्रतिपादयति- य इत्यादिना, यो दोष इत्यन्वयः, परेण= द्वितीयपक्षवादिना । इत्याह प्रथमपक्षवादीत्यन्वयः, अत्र यत इतिशेषः, प्रथमतृतीयपञ्चमपक्षाणां वक्ता एक एवेत्यनुसंधेयम् । पञ्चमपक्षधारिणो मतानुज्ञादोषापत्तिमाह- एवमिति, प्रथमपक्षवादिना प्रथमपक्षलक्षणा स्थापना सदोषाप्यभ्युपगता- प्राप्तदोषस्यानुद्धारात्, सदोषां च स्थापनामभ्युपेत्य "प्रतिषेधेपि समानो दोषः" इत्यनेन प्रतिषेधे= द्वितीयपक्षे दोषः प्रदर्शितः स चायं तृतीयः पक्षः संपन्नः अस्यैव पञ्चमः पक्षः, परपक्षस्य= प्रथमतृतीयपक्षयोः प्राप्तस्य दोषस्याभ्युपगमात् मतानुज्ञालक्षणो दोषः समानः= चतुर्थपक्षसदृश एव पञ्चमपक्षवादिनोपि भवतीत्यर्थः । अत्र दृष्टान्तमाह- यथेति, परस्य मतानुज्ञा प्रसज्यते यथेत्यन्वयः, यथा परस्य= चतुर्थपक्षधारिणः स्वोक्तं सदोषं प्रतिषेधम्= द्वितीयपक्षमभ्युपेत्य प्रतिषेधस्य प्रतिषेधे= तृतीयपक्षे समानो दोषप्रसङ्गः= "प्रतिषेधविप्रतिषेधे" इत्यनेन दोषप्रसञ्जने मतानुज्ञा प्रसज्यते, अत्र प्रतिषेधे प्राप्तदोषाऽपरिहारात् तदभ्युपगमः प्राप्त इति मतानुज्ञा प्राप्ता सं चायं दोषश्चतुर्थपक्षधारिणि प्राप्तः- तेनैव स्वकीयस्य सदोषस्य द्वितीयपक्षस्याभ्युपगमात्. एतद्दोषप्रदर्शनं च पञ्चमः पक्ष इत्यर्थः । प्रकृतमाह- तथेति, चतुर्थपक्षधारिवत् अस्यापि= पञ्चमपक्षधारिण्यपि मतानुज्ञादोषः प्राप्नोति- तेनापि स्वकीयस्य सदोषस्य प्रथमपक्षस्याभ्युपगमादित्यर्थः, एतद्दोषप्रदर्शनं च षष्ठः पक्षः । अत्र द्वितीयचतुर्थषष्ठपक्षा अपरस्यैकस्यैव विज्ञेयाः ।

वादिप्रतिवादिनोः पक्षान् संकलयति- तत्रेत्यादिना, स्थापनाहेतुवादिनः= प्रथमपक्षवादिनः, प्रतिषेधहेतुवादिनः= द्वितीयपक्षवादिनः, उत्तरोत्तरं क्रमेण तयोः पक्षाः स्थिता इत्यनुसंधेयम् । तेषाम्= उक्तपक्षाणाम् । चतुर्थषष्ठपक्षयोः पुनरुक्तदोषमाह- चतुर्थेति, द्वितीयचतुर्थषष्ठपक्षा एकस्यैव तत्र य एव प्रथमपक्षे दोषो द्वितीयपक्षेण प्रतिपादितः स एव चतुर्थषष्ठपक्षाभ्यामपि प्रतिपादनीय इति चतुर्थषष्ठपक्षयोः पुनरुक्तदोष इत्यर्थः । उक्तपुनरुक्तदोषमुपपादयति- चतुर्थपक्षे इति, चतुर्थपक्षेणेत्यर्थः, परस्य= तृतीयपक्षवादिनः । चतुर्थपक्षेणोक्तं षष्ठपक्षेतिदिशति- षष्ठेपीति, षष्ठपक्षेणापीत्यर्थः । उपसंहरति- नार्थेति, अर्थविशेषः= प्रतिपाद्यार्थभेदः । संप्रति तृतीयपञ्चमपक्षयोरपि पुनरुक्तदोषमाह- समान इति,

इति समानत्वमभ्युपगम्यते. पञ्चमपक्षेपि प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गोऽभ्युपगम्यते नार्थविशेषः कश्चिदुच्यते इति।

तत्र पञ्चमषष्ठपक्षयोरर्थाविशेषात् पुनरुक्तदोषः, तृतीयचतुर्थयोर्मतानुज्ञा, प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः। कदा षट्पक्षी?, यदा "प्रतिषेधेपि समानो दोषः" इत्येवं प्रवर्तते तदोभयोः पक्षयोरसिद्धिः, यदा तु "कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ३८" इत्यनेन तृतीयपक्षो युज्यते तदा विशेषहेतुवचनात् प्रयत्नानन्तरमात्मलाभः शब्दस्य नाभिव्यक्तिरिति सिद्धः प्रथमपक्षो न षट्पक्षी प्रवर्तते इति ॥ ४३ ॥

॥ इति वात्स्यायनविरचिते न्यायभाष्ये पञ्चमाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

---

चतुर्थषष्ठपक्षाभ्यां समान इत्यर्थः, प्रथमतृतीयपञ्चमपक्षा एकस्यैव तत्र यदेव प्रथमपक्षेण प्रतिपादितं तदेव तृतीयपञ्चमपक्षाभ्यामपीति तृतीयपञ्चमपक्षयोः पुनरुक्तदोषः प्राप्त इत्यर्थः। उक्तपुनरुक्तदोषमुपपादयति- तृतीयपक्षेपीति, तृतीयपक्षेणापीत्यर्थः, समानत्वम्= द्वितीयपक्षस्य प्रथमपक्षसमानदोषवत्त्वमुपपाद्यते इत्यर्थः। पञ्चमपक्षेपि= पञ्चमपक्षेणापि "प्रतिषेधं सदोषमभ्युपेत्य ४२" इतिसूत्रेण चतुर्थपक्षे दोषप्रतिपादनद्वारा द्वितीयपक्षे दोप उपसंह्रियते इति तृतीयपक्षसमानत्वमुपलब्धमिति पुनरुक्तत्वं सिद्धम्। प्रतिषेधविप्रतिषेधे इत्यस्य चतुर्थपक्षे इत्यर्थः, अत्र 'प्रतिषेधविप्रतिषेधप्रतिषेधे' इति वक्तव्यमासीत्- चतुर्थपक्षस्य प्रतिषेधविप्रतिषेधप्रतिषेधरूपत्वात्। उपसंहरति- नार्थेति, तृतीयपक्षापेक्षया पञ्चमपक्षे नार्थविशेप उच्यते इत्यर्थः।

पक्षचतुष्टयं दूषयित्वा पक्षषट्कमपि दूषयति- तत्रेति, पञ्चमपक्षेण चतुर्थपक्षे षष्ठपक्षेण च पञ्चमपक्षे मतानुज्ञा प्रदर्शितेत्यविशेषात् पुनरुक्तदोषः। किं वा पञ्चमषष्ठपक्षयोरुभयोरपि समानदोषप्रसङ्गप्रदर्शनात् पुनरुक्तदोप इत्यर्थः। तृतीयपक्षवादिना स्वकीयस्य प्रथमपक्षस्य चतुर्थपक्षवादिना च स्वकीयस्य द्वितीयपक्षस्य परप्रदर्शितदोषस्तदनुद्धारात् स्वीकृत इति तृतीयचतुर्थयोः पक्षयोर्मतानुज्ञादोषः प्राप्तः, प्रथमद्वितीययोः पक्षयोः= शब्दनित्यत्वानित्यत्वपक्षयोर्विशेषहेत्वभावः= पूर्वोक्तो विनिगमनाविरह इति पक्षषट्कमपि दुष्टमेवेत्यर्थः, उभयोः= वादिप्रतिवादिनोः पूर्वोत्तरपक्षयोः। षट्पक्षीप्रवृत्तिकारणं जिज्ञासते- कदेति। उत्तरमाह- यदेति, यदा प्रतिषेधे= उत्तरपक्षे पूर्वपक्षवद् दोषवत्त्वमतिदिश्यते तदोत्तरोत्तरं प्रतिषेधेषु पूर्वपूर्वपक्षवद् दोषातिदेशसंभवात् षट्पक्षी प्रवर्तते तत्रोभयोरपि पक्षयोरसिद्धिर्भवति- सदोषत्वातिदेशादित्यर्थः। प्रथमपक्षसिद्धिप्रकारमाह- यदा त्विति, यदा तु 'अनित्यः शब्दः प्रयत्नाऽनन्तरीयकत्वात्' इति प्रथमपक्षः, "प्रयत्नकार्यानेकत्वात् कार्यसमः ३७" इति द्वितीयः पक्षस्तत्र "कार्यान्यत्वे ३८" इति तृतीयपक्षो युज्यते= प्रयुज्यते= उच्यते तदा "कार्यान्यत्वे" इत्यनेन प्रथमपक्षे विशेषहेतुवचनात् शब्दस्यानित्यत्वं सिद्धं भवतीति तदग्रे च पक्षाप्रसरात् षट्पक्षी न प्रवर्तते इत्यर्थः। कार्यान्यत्वे इतिसूत्रं पूर्वं व्याख्यातम्। तथा च शब्दोच्चारणप्रयत्नस्य साफल्यार्थं तेन शब्दस्यात्मलाभः= उत्पत्तिः स्वीकार्येत्यऽनित्यत्वं सिद्धम्. अभिव्यक्तिस्तु न स्वीकार्येत्युपसंहारः। स्पष्टमन्यत्। भाष्यमिदं गभीराशयरहितमपीन्द्रजालसदृशत्वाद् बुद्धिविक्षेपं करोति ॥ ४३ ॥

॥ इति षट्पक्षीनिरूपणं समाप्तम् ॥

॥ इति न्यायभाष्यप्रसन्नपदायां पञ्चमाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

## अथ
## न्यायभाष्यपञ्चमाध्यायस्य द्वितीयमाह्निकम्



विप्रतिपत्त्यऽप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं तदिदानीं विभजनीयम्। निग्रहस्थानानि खलु पराजयवस्तून्यऽपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमऽतत्त्ववादिनं चाभिसंप्लवन्ते, तेषां विभागः—

**[1]प्रतिज्ञाहानिः [2]प्रतिज्ञान्तरं [3]प्रतिज्ञाविरोधः [4]प्रतिज्ञासंन्यासो [5]हेत्वन्तर-**
**म[6]ऽर्थान्तरं [7]निरर्थकम[8]ऽविज्ञातार्थम[9]ऽपार्थकम[10]ऽप्राप्तकालं [11]न्यून-**
**म[12]ऽधिकं [13]पुनरुक्तम[14]ऽननुभाषणम[15]ऽज्ञानम[16]ऽप्रतिभा विक्षेपो[17]**
**[18]मतानुज्ञा [19]पर्यनुयोज्योपेक्षणं [20]निरनुयोज्यानुयोगो[21]ऽप-**
**सिद्धान्तो [22]हेत्वाभासाश्च निग्रहस्थानानि ॥१॥**

तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते ॥ १ ॥

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥**

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः, निदर्शनम्— 'ऐन्द्रियकत्वादनित्यः शब्दो घटवत्' इतिकृते. अपर आह— 'दृष्टमैन्द्रियकत्वं सामान्ये नित्ये कस्मान्न तथा शब्दः ?' इति. (एवम्) प्रत्यवस्थिते. इदमाह—

---

उद्दिष्टपदार्थेषु शिष्टानां निग्रहस्थानानां निरूपणार्थं पञ्चमाध्यायस्य द्वितीयमाह्निकमारभते— विप्रतिपत्तीति, तदेतत् प्रथमाध्यायान्ते द्रष्टव्यं तथा च सूत्रम्— "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् १–२–१९" "तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् १–२–२०" इत्युक्तम्। निग्रहस्थानानां फलं स्वरूपं वाह— निग्रहस्थानानीति, पराजयो वसति एष्विति पराजयवस्तूनि= पराजयकारणानीत्यर्थः, अपराधाधिकरणानि= वक्तृदोषसूचकानि, अपराधश्चात्राऽकथनीयकथनमेव संगच्छते। निग्रहस्थानाश्रयमाह— प्रायेणेति, प्रतिज्ञाद्यवयवाश्रयाणि= प्रतिज्ञाद्यवयवनिष्ठानि यथा प्रतिज्ञासंन्यासपर्यन्तं चत्वारीणि प्रतिज्ञाश्रयाणि. हेत्वन्तरं हेतुनिष्ठम् हेत्वाभासा अपि हेतुसंबद्धा एव. एवमग्रेपि बोध्यम्। अभिसंप्लवन्ते= आश्रयन्ते, तत्त्ववादिनापि हेत्वन्तरनिर्देशे कृते निग्रहस्थानं भवत्येव यथा 'प्रपञ्चः सत्यः प्रमाणविषयत्वात् कार्यकरत्वाच्च ब्रह्मवत् आत्मवद्वा' इति। तेषाम्= निग्रहस्थानानाम्। विभागसूत्रमाह— प्रतिज्ञाहानिरिति, नात्र किंचिदपि व्याख्येयमस्ति। व्याचष्टे— तानीति, निग्रहस्थानानीत्यर्थः। लक्ष्यन्ते= प्रदर्श्यन्ते किं वाग्रे लक्षयिष्यन्ते इत्यर्थः ॥ १ ॥

निग्रहस्थानेषु प्रतिज्ञाहानिं लक्षयति— प्रतिदृष्टान्तेति, स्वदृष्टान्ते= स्वोक्तदृष्टान्ते प्रतिदृष्टान्तधर्मस्य याऽभ्यनुज्ञा सा प्रतिज्ञाहानिः यथा भाष्योक्तोदाहरणे घटे प्रतिदृष्टान्तधर्मस्य= सामान्यधर्मस्य नित्यत्वस्याभ्यनुज्ञेति सूत्रान्वयः, अन्यत्सर्वं भाष्ये स्पष्टम्। अत्रत्या वृत्तिरपि द्रष्टव्या। व्याचष्टे— साध्यधर्मेति, साध्यधर्मप्रत्यनीकेन= स्वसाध्यविरुद्धेन धर्मेण प्रत्यवस्थिते= प्रतिपक्षे उपस्थापिते सति परेणेत्यर्थः। उदाहरति— ऐन्द्रियकत्वादिति, निदर्शनम्= उदाहरणम्, ऐन्द्रियकत्वात्= इन्द्रियग्राह्यत्वात्, इतिकृते= इतिप्रयुक्ते, अपरः= प्रतिवादी, प्रत्यवस्थानमाह— दृष्टमिति, नित्ये सामान्ये= गोत्वादावप्यैन्द्रियकत्वमस्ति— इन्द्रियग्राह्यत्वात्, तथा= नित्यः। इदमाह प्रथमपक्षवादी, तथा च प्रकृते साध्यो धर्मः

'यत्वैन्द्रियकं सामान्यं नित्यम्? कामं घटो नित्योस्तु' इति, स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन् निगमनान्तमेव पक्षं जहाति. पक्षं जहत् प्रतिज्ञां जहातीत्युच्यते- प्रतिज्ञाश्रयत्वात् पक्षस्येति ॥ २ ॥

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

प्रतिज्ञातार्थः- 'अनित्यः शब्द ऐन्द्रियकत्वाद् घटवत्' इत्युक्ते योऽस्य प्रतिषेधः= प्रतिदृष्टान्तेन हेतुव्यभिचारः- 'सामान्यमैन्द्रियकं नित्यम्' इति तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति= दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्= सामान्यमैन्द्रियकं सर्वगतम् ऐन्द्रियकस्त्वऽसर्वगतो घट इति धर्मविकल्पात्. तदर्थं निर्देश इति साध्यसिद्ध्यर्थम् । कथम्? यथा घटोऽसर्वगत एवं शब्दोप्यसर्वगतो घटवदेवानित्य इति, तत्र- 'अनित्यः शब्दः' इति पूर्वा प्रतिज्ञा. 'असर्वगतः' इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् । तत् कथं निग्रहस्थानमिति?, न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरं किं तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः, तदेतदऽसाधनोपादानमऽनर्थकमिति. आनर्थक्यान्निग्रहस्थानमिति ॥ ३ ॥

---

अनित्यत्वं तत्प्रत्यनीकेन धर्मेण नित्यत्वेन दृष्टमित्यादिरूपेण प्रत्यवस्थिते सति प्रतिदृष्टान्तधर्मम्= सामान्यधर्मं नित्यत्वं स्वदृष्टान्ते घटे स्वीकरोति तेन घटवत् शब्दस्यापि नित्यत्वं प्राप्नोति तथा च शब्दानित्यत्वप्रतिज्ञाया हानिर्भवतीति प्रतिज्ञाहानिरिति लक्षणसमन्वयः । उपसंहरति- स खल्वयमिति, अयम्= प्रथमपक्षवादी, साधकस्य= अनित्यत्वसाधकस्य दृष्टान्तस्य= घटस्य, नित्यत्वं प्रसञ्जयन्= स्वीकुर्वन्, अत्र घटस्य नित्यत्वे स्वीकृते पूर्वोक्तानां निगमनान्तानां पञ्चानामपि प्रतिज्ञाद्यवयवानां हानिर्जातेत्यनुसंधेयम् । प्रतिज्ञाहानिमाह- पक्षमिति । पक्षहानौ प्रतिज्ञाहान्यापत्त्यां हेतुमाह- प्रतिज्ञाश्रयत्वादिति, पक्षस्य= स्वपक्षस्य प्रतिज्ञाश्रयत्वात्= प्रतिज्ञाया आश्रयत्वात्= प्रतिज्ञा पक्षनिष्ठेति पक्षहान्या प्रतिज्ञाहानिरुपलब्धेत्यन्वयः, स्पष्टमन्यत् ॥ २ ॥

प्रतिज्ञान्तरं लक्षयति- प्रतिज्ञातार्थेति, प्रतिज्ञातार्थस्य= शब्दानित्यत्वस्य परेण प्रतिषेधे कृते= हेतोः साध्यव्यभिचारित्वे प्रदर्शिते धर्मविकल्पात्= दृष्टान्तप्रतिदृष्टान्तयोर्धर्मभेदात्= यथा दृष्टान्तस्य घटस्याऽसर्वगतत्वं धर्मः प्रतिदृष्टान्तस्य सामान्यस्य च सर्वगतत्वं धर्म इति तद्भेदात् तदर्थम्= दृष्टान्तधर्मस्याऽसर्वगतत्वस्य साधनार्थम्= दृष्टान्तगतधर्मान्तरसाधनार्थं किं वा प्रतिज्ञातार्थसाधनार्थं यो निर्देशः तत् प्रतिज्ञान्तरमिति सूत्रान्वयः । व्याचष्टे- प्रतिज्ञातार्थ इति, अत्र 'प्रतिज्ञातार्थे' इति वक्तव्यमासीत् । उदाहरति- अनित्य इति, इत्युक्ते प्रतिज्ञातार्थे इत्यन्वयः । अस्य= प्रतिज्ञातार्थस्य शब्दानित्यत्वस्य । प्रतिषेधपदार्थमाह- प्रतिदृष्टान्तेनेति, ऐन्द्रियकत्वस्य हेतोरनित्यत्वाभाववति सामान्ये वृत्तित्वादनित्यत्वव्यभिचारित्वं प्राप्तं तदेतदुदाहरति- सामान्यमिति । संकलयति- तस्मिन्निति । धर्मविकल्पपदार्थमाह- दृष्टान्तेति, दृष्टान्तप्रतिदृष्टान्तयोः= घटसामान्ययोः, साधर्म्ययोगे= हेतुमत्त्वे= ऐन्द्रियकत्वयोगे सति । धर्मभेदमाह- सामान्यमिति, सामान्यं गोत्वादि सर्वगतं घटश्चासर्वगत इति दृष्टान्तप्रतिदृष्टान्तयोर्धर्मभेदः, तदर्थम्= प्रतिज्ञातार्थसिद्ध्यर्थम्= शब्दानित्यत्वसिद्ध्यर्थम् असर्वगत्वनिर्देश इत्यन्वयः, तदर्थमिति सूत्रपदं व्याचष्टे- साध्यसिद्ध्यर्थमिति, तदर्थं निर्देश इत्यस्य साध्यसिद्ध्यर्थं निर्देश इत्यर्थः । असर्वगतत्वनिर्देशेन शब्दानित्यत्वसिद्धेः प्रकारं जिज्ञासते- कथमिति । उत्तरमाह- यथेति, शब्दघटयोरसर्वगतत्वेन साधर्म्यादनित्यत्वेनापि साधर्म्यं सिद्धमिति शब्दानित्यत्वं सिद्धम्, शब्दसामान्ययोस्तु सर्वगतत्वासर्वगतत्वाभ्यां वैधर्म्यान्न सामान्यवत् शब्दस्य नित्यत्वापत्तिरित्यर्थः । उपसंहरति- तत्रेति । प्रतिज्ञान्तरस्य निग्रहस्थानत्वकारणं जिज्ञासते- तदिति, प्रतिज्ञान्तरस्य निग्रहस्थानत्वे एकस्मिन् जन्मन्येकविषयकमेकमेवानुमानं स्यादित्याशयः । उत्तरमाह- नेति । प्रतिज्ञासाधनमाह- किं त्विति ।

## प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

'गुणव्यतिरिक्तं द्रव्यम्' इति प्रतिज्ञा. 'रूपादितोऽर्थान्तरस्यानुपलब्धेः' इति हेतुः. सोयं प्रतिज्ञाहेत्वोर्विरोधः । कथम् ?, यदि गुणव्यतिरिक्तं द्रव्यम् ? रूपादिभ्योऽर्थान्तरस्यानुपलब्धेः (इति) नोपपद्यते, अथ रूपादिभ्योर्थान्तरस्यानुपलब्धिः? गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते, गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्योर्थान्तरस्यानुपलब्धिरिति विरुध्यते= व्याहन्यते= न संभवतीति ॥ ४ ॥

## पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥

'अनित्यः शब्द ऐन्द्रियकत्वात्' इत्युक्ते परो ब्रूयात्- 'सामान्यमैन्द्रियकं न चानित्यमेवं शब्दोप्यैन्द्रियको न चानित्यः' इति. एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्- 'कः पुनराह अनित्यः शब्दः (इति) ?' इति. सोयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासंन्यास इति ॥ ५ ॥

## अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

निदर्शनम्- 'एकप्रकृतीदं व्यक्तम्' इति प्रतिज्ञा. कस्माद् हेतोः? 'एकप्रकृतीनां विकाराणां परिमाणात्' 'मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणं यावान् प्रकृतेर्व्यूहो भवति तावान् विकारः' इति. दृष्टं च प्रतिविकारं परिमाणम्. अस्ति चेदं परिमाणं प्रतिव्यक्तम्,

---

उपसंहरति= तदेतदिति, प्रतिज्ञायाः प्रतिज्ञान्तरमसाधकमिति तदुपादानमऽनर्थकमेवेति प्रतिज्ञान्तरं निग्रहस्थानम्- प्रतिज्ञासाधकस्यैव वक्तव्यत्यादित्वन्वयः स्पष्टमन्यत् ॥ ३ ॥

प्रतिज्ञाविरोधं लक्षयति- प्रतिज्ञेति, प्रतिज्ञाहेत्वोर्यः परस्परं विरोधः स प्रतिज्ञाविरोध इतिसूत्रान्वयः । व्याचष्टे- गुणेति । उपसंहरति- सोयमिति, यदा हि रूपादिगुणातिरिक्तं पदार्थान्तरं नोपलभ्यते तदा गुणव्यतिरिक्तस्य द्रव्यस्य सिद्धिर्न संभवतीति प्रतिज्ञाहेत्वोर्विरोधः सिद्धः । उक्तविरोधस्य कारणं जिज्ञासते- कथमिति । उत्तरमाह- यदीति । निगमयति- गुणव्यतिरिक्तं चेति, इतिपरस्परं विरुध्यते इत्यर्थः स्पष्टं सर्वम् । 'विरुध्यते' इतिशब्दस्यार्थं परमाप्रसिद्धं मन्यमानोयं भाष्यकार उत्तरोत्तरं व्याचष्टे- व्याहन्यते इत्यादिना ॥ ४ ॥

प्रतिज्ञासंन्यासं लक्षयति- पक्षेति, परेण पक्षप्रतिषेधे= प्रतिज्ञातार्थस्य हेतुव्यभिचारादिप्रदर्शनेन प्रतिषेधे कृते यत् प्रतिज्ञातार्थस्यापनयनम्= परित्यागः स प्रतिज्ञासंन्यास इतिसूत्रान्वयः, अन्यद् भाष्ये स्पष्टम् । व्याचष्टे- अनित्य इति । पक्षप्रतिषेधमाह- सामान्यमिति, पक्षे= प्रतिज्ञातार्थे शब्दानित्यत्वे । प्रतिज्ञासंन्यासमाह- क इति । उपसंहरति- सोयमिति, प्रतिज्ञातार्थस्य= शब्दानित्यत्वस्य निह्नवः= परित्यागः प्रतिज्ञासंन्यास एवमन्यत्रापि योज्यम् । सर्वं स्पष्टम् ॥ ५ ॥

हेत्वन्तरं लक्षयति- अविशेषेति, वादिना हेतौ अविशेषोक्ते= अविशेषरूपेण= सामान्यरूपेणोक्ते तस्मिंश्च हेतौ प्रतिवादिना प्रतिषिद्धे= दूषिते सति तत्र हेतौ विशेषमिच्छतः= कुर्वतः= विशेषणान्तरं प्रक्षिपतः हेत्वन्तरं भवति तेन च प्रयुञ्जानस्य हेत्वन्तरं निग्रहस्थानं भवतीति सूत्रार्थः । व्याचष्टे- निदर्शनमिति, उदाहरणमित्यर्थः । उदाहरति- एकेति, इदं व्यक्तम्= दृश्यमानं जगत् एकं प्रकृतिरस्येति एकप्रकृति= एकस्य प्रधानस्य कार्यमित्यर्थः । हेतुं जिज्ञासते- कस्मादिति । हेतुमाह- एकेति, एकप्रकृतीनाम्= एकपदार्थजन्यानामेव विकाराणाम्= कार्याणां परिमाणात्= परिमितत्वात्= परिमितत्वदर्शनात्, अनेकप्रकृतीनां च परिमितत्वासंभवादित्यर्थः । उदाहरति- मृदिति, यथा मृत्पूर्वकाणाम्= मृद्विकाराणां शरावादीनां परिमाणम्= परिमितत्वं दृश्यते= यावान् प्रकृतेः= उपादानस्य व्यूहः= पूरो भवति तावान् तद्विकारो भवति, तत्कस्य हेतोः? इति जिज्ञासायामेकप्रकृतित्वादेवेति वक्तव्यं

तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति । अस्य व्यभिचारेण प्रत्यवस्थानम्– नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते आह– एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्. सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते. तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति, सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम्, हेत्वन्तर वचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते ? नेदं व्यक्तमेकप्रकृति भवति– प्रकृत्यन्तरोपादानात्, अथ नोपादीयते ?. दृष्टान्ते हेत्वर्थस्याऽनिदर्शितस्य साधकभावानुपपत्तेः आनर्थक्याद् हेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

---

भवति तथा च जगतोपि परिमाणात्= परिमितत्वादेककार्यत्वं सिद्धं यदि चानेककार्यत्वं स्यात्तदा कारणानामनेकत्वेनाऽपरिमितत्वात् तत्कार्यस्याप्यऽपरिमितत्वं स्यान्न तु परिमितत्वमित्यर्थः । उक्तस्य शरावादिदृष्टान्तस्य हेतुमत्त्वमाह– दृष्टं चेति, प्रतिविकारम्= कार्यमात्रे शरावादौ परिमाणम्= परिमितत्वं हेतुर्दृश्यते इत्यर्थः । उपनयमाह– अस्तीति, प्रतिव्यक्तम्= सर्वेषु पृथिव्यादिभूतेषु । निगमनमाह– तदेकेति, तत्= तस्मात् । हेतुप्रतिषेधमाह– अस्येति, अस्य= उक्तानुमानस्य= हेतोः । हेतुव्यभिचारमाह– नानेति, नानाप्रकृतिष्वपि विकारेषु लाक्षाजलमृदाद्यनेकपदार्थनिर्मितेषु घटादिषु परिमितत्वं हेतुर्दृश्यते इति हेतोर्व्यभिचारित्वं प्राप्तं तथा च परिमितत्वहेतुना प्रपञ्चस्यैकप्रकृतित्वं न सिध्यतीत्यर्थः । प्रकृतं हेत्वन्तरमाह– एवमिति, एवम्= उक्तप्रकारेण प्रत्यवस्थिते= हेतौ व्यभिचारदोषे प्रदर्शिते । उक्तहेतुं विशिनष्टि– एकेति, 'एकप्रकृतीनां विकाराणां परिमाणात्' इत्येतावन्मात्रं न हेतुः किंतु 'एकप्रकृतिसमन्वये सति विकाराणां परिमाणात्' इतिहेतुरित्यर्थः, एकप्रकृतिसमन्वितत्वे सति परिमितत्वं हेतुरिति यावत्, अत्र प्रकृतिशब्दः स्वभावपरस्तथा च नानाप्रकृतीनां विकाराणां नानास्वभावत्वात् तत्रैकप्रकृतिसमन्वितत्वम्= एकस्वभाववत्त्वं नास्तीति नात्र विशिष्टहेतौ व्यभिचारित्वं दोषः, नानाप्रकृतिषु नानास्वभाववत्त्वमेकप्रकृतिषु चैकस्वभाववत्त्वं स्पष्टमेव, तथा च पूर्वोक्तहेतौ एकप्रकृतिसमन्वितत्वविशेषणप्रक्षेपाद् हेत्वन्तरं निग्रहस्थानं सिद्धम् । पक्षे व्यक्ते एकप्रकृतिसमन्वितत्वमाह– सुखेति, प्रपञ्चे सुखदुःखमोहवत्त्वमेवैकप्रकृतिसमन्वितत्वं तदनेनोपनयः प्रदर्शितः, निगमनमाह– तत्रेति, तत्र= प्रपञ्चे, प्रकृत्यन्तररूपसमन्वयाभावे सति= नानाप्रकृतिसमन्वितत्वाभावात् एकप्रकृतित्वं सिद्धमित्यर्थः । प्रधाने यत् सुखदुःखमोहसमन्वितत्वं तदेव प्रपञ्चेपीति प्रपञ्चस्य प्रधानकार्यत्वं सिद्धम्, सुखदुःखमोहाश्च सामानाधिकरण्यादेकप्रकृतिरूपा एवेति न सुखादीनामनेकत्वेन स्वभावानेकत्वं शङ्कनीयम्– वैयधिकरण्ये सत्येव पदार्थानां भेदसंभवात् । अत्र– "एवं प्रत्यवस्थिते प्रतिवादिनि वादी पश्चात् परिमितत्वं हेतुं विशिनष्टि– एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनादिति, प्रकृतिः= स्वभावः= एकस्वभावसमन्वये सतीत्यर्थः, एकप्रकृतिसमन्वयं स्फुटयति– सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं गृह्यते" इति तात्पर्यटीका । लक्षणं समन्वयति– तदिदमिति, "एकप्रकृतीनां विकाराणां परिमाणात्" इत्यविशेषणोक्ते हेतौ, "नानाप्रकृतीनाम्" इत्यादिना प्रतिषिद्धे, "एकप्रकृतिसमन्वये सति" इत्यादिना विशेषम्= विशेषणं ब्रुवतो हेत्वन्तरं भवतीत्यन्वयः । हेत्वन्तरस्य निग्रहस्थानत्वकारणमाह– सतीति, हेत्वन्तरभावे= हेत्वन्तरप्रयोगे कृते पूर्वस्य हेतोः साध्यासाधकत्वादेव निग्रहस्थानत्वं भवति किं वा पूर्वस्य हेतोरसाधकत्वाद् हेत्वन्तरप्रयोगे कृते तादृशहेत्वन्तर वादिनो निग्रहस्थानमापद्यते इत्यर्थः । एवं हेत्वन्तरप्रयोगे कृतेपि प्रकृतसाध्यस्याऽसिद्धिमाह– हेत्वन्तर वचने सतीति, हेत्वन्तरप्रयोगे कृतेपि यदि हेत्वर्थनिदर्शनः= व्याप्तिप्रदर्शको दृष्टान्त उच्यते ? तदापि प्रपञ्चे एकप्रतित्वम्= प्रधानकार्यत्वं न सिध्यति– प्रकृत्यन्तरोपादानात्= प्रकृत्यन्तरस्य= प्रकृत्यन्तरकार्यस्य प्रदर्शनादित्यन्वयः, दृष्टान्तो हि पक्षापेक्षया पृथग् व्यक्तं च भविष्यति तादृशदृष्टान्तस्य च प्रकृतिः पदार्थान्तर-

## प्रकृतादर्थादप्रतिसंबद्धार्थमऽर्थान्तरम् ॥ ७॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्– 'नित्यः शब्दः अस्पर्शत्वादिति हेतुः' हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम्. पदं च– नामाख्यातोपसर्गनिपाताः, अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो नाम, क्रियाकारकसमुदायः. कारकसंख्याविशिष्टक्रियाकालयोगाभिधायि आख्यातम्. धात्वर्थमात्रं च कालाभिधानविशिष्टम्, प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः, उपसृज्यमानाः क्रियाऽवद्योतका उपसर्गाः, इत्येवमादि. तदर्थान्तरं वेदितव्यम् ॥ ७ ॥

---

मेव भविष्यति प्रधानकार्यस्य सर्वस्यैव पक्षभूतत्वात् दृष्टान्तत्वेन प्रदर्शनीयानां घटादीनामनेकप्रकृतित्वस्य प्रत्यक्षत्वाच्च तथा च समग्रस्य व्यक्तस्यैकप्रकृतित्वं न सेत्स्यति दृष्टान्तस्य भिन्नप्रकृतिकत्वसंभवादित्यर्थः। पक्षान्तरमाह– अथेति, यदि च दृष्टान्तो नोच्येत ? तदापि प्रपञ्चे एकप्रकृतित्वं न सिध्यति– दृष्टान्ते हेत्वर्थस्य= साध्यव्याप्यत्वस्याप्रदर्शने हेतोः साधकभावानुपपत्तेः= साध्यसाधकत्वासंभवात् तथा च साध्याऽसाधकत्वेनानर्थक्यादेव हेतोः हेत्वन्तरं निग्रहस्थानं भवतीति सिद्धमित्यर्थः। अत्र– "हेतुः साधनम् अर्थः साध्यः तौ हेत्वर्थौ निदर्शयति व्याप्यव्यापकभावेनेति निदर्शनः हेत्वर्थयोर्निदर्शनो हेत्वर्थनिदर्शनो दृष्टान्तः" इतितात्पर्यटीका। अनिवृत्तम्= प्राप्तम्, वादिन इतिशेषः ॥ ६ ॥

अर्थान्तरं लक्षयति– प्रकृतादिति, प्रकृतार्थे= प्रकृतसाध्ये अप्रतिसंबद्धः= असंबद्धोऽर्थो यस्य तत् अप्रतिसंबद्धार्थं वाक्यम् अर्थान्तरमिति सूत्रान्वयः। व्याचष्टे– यथोक्तेति, प्रवृत्ते इतिशेषः। अत्र– "वादिजल्पे वितण्डायामित्यर्थः" इति तात्पर्यटीका। वादिप्रतिवादिनोः पूर्वोत्तरपक्षौ यदा प्रवृत्तौ तदा हेतुतः साध्यसिद्धौ प्रकृतायां यदि 'नित्यः शब्दः– अस्पर्शत्वात्' इति साध्यं हेतुं चोक्त्वा साध्यसिद्ध्युपयुक्तमनुक्त्वा हेतुर्नामेत्यादिकमप्रकृतार्थं वदति तदा वक्तुरर्थान्तरं नाम निग्रहस्थानं भवतीति प्रघट्टकार्थः। प्रकृतमाह– नित्य इति। अत्रार्थान्तरमाह– हेतुर्नामेत्यादिना, धातोरिति पञ्चम्यन्तम्। प्रत्यये कृते इत्यन्वयः। कृदन्तपदमित्युक्तं तत्र पदं विभजते– नामेति, राम इत्यादि नामपदम्, पचतीत्यादि आख्यातपदम्, प्रादिकमुपसर्गपदम्, चादिकं निपातपदम्। नामलक्षणमाह– अभिधेयस्येति, यद्वाच्यार्थस्य क्रियया सहान्वयो भवति तद् नामेत्यर्थः, यथा 'रामो गच्छति' इत्यत्र रामपदार्थस्य कर्तृत्वेन गमनक्रियया योगात् 'रामः' इति विशिष्यमाणरूपः= प्रथमाविभक्त्यन्तरूपः शब्द एव नामपदमित्युच्यते. एवं 'रामेण' इत्यादौ तृतीयादिविभक्त्यन्तरूपः शब्दो नामपदमित्यनुसंधेयम्। आख्यातस्य लक्षणत्रयमाह– क्रियेत्यादिना, क्रियाकारकसमुदाय आख्यातपदम्, कारकसंख्याविशिष्टा या क्रियास्तस्याः कालयोगाभिधायि आख्यातम्, कालाभिधानविशिष्टं धात्वर्थमात्रं वाऽऽख्यातमित्यन्वयः। निपातलक्षणमाह– प्रयोगेष्विति, प्रयोगेषु अर्थात्= स्वार्थेन अभिद्यमानरूपाः= अभिद्यमानार्थाश्चादयो निपाताः। उपसर्गलक्षणमाह– उपेति, उप= समीपे सृज्यमानाः सन्तो ये क्रियाया अवद्योतकाः= प्रकृतक्रियायां किंचिदतिशयस्य द्योतकास्ते प्रादय उपसर्गा इत्यन्वयः। उपसंहरति– इत्येवमिति, इत्येवमादि यत् प्रकृताऽसंबद्धं तदर्थान्तरं वेदितव्यम्। अत्र– "तदेवमभिधेयस्य क्रियाविशेषयोगाद्विशिष्यमाणरूपः शब्दो नामेति। आख्यातस्वरूपमाह– क्रियाकारकसमुदाय इति, विषयेण विषयिणमुपलक्षयति. पचति पच्यते इत्येवमादयः शब्दाः क्रियां कारकम्= कर्तारं कर्म चाभिवदन्ति, तदेतल्लक्षणमसिद्धमतिव्यापकं च– न हि कर्ता कर्म वा आख्यातेनाभिधीयते– क्रियाक्षेपेणैव तयोः प्रतिलम्भात् अनन्यलभ्यस्य च शब्दार्थत्वात्. कर्तृकर्मणोश्च कारकान्तरेभ्यो भावनायामभ्यर्हिततमत्वेन तत्संख्याभिधाननियमादसिद्धं कारकाभिधानम्, अतिव्यापकं च– पाचकः पाक्य इत्यादेर्नाम्नोऽपि क्रियाकारकसमुदायाभिधायित्वात्, तदस्मिन् लक्षणेऽपरितुष्यन् लक्षणान्तरद्वयेनाख्यातपदान्युपसंगृह्णाति– कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याऽऽख्यातम् (इति) पचति पच्यते इत्यादौ कर्तुः कर्मणो वा संख्यया कालेन वर्तमानादिना

## वर्णक्रमनिर्देशवद् निरर्थकम् ॥ ८ ॥

यथा 'नित्यः शब्दः कचटतपानां जबगडदशत्वात् झभञ्घढधपवत्' इति, एवंप्रकारं निरर्थकम्– अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णाः क्रमेण निर्दिश्यन्ते इति॥८॥

## परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमऽविज्ञातार्थम् ॥ ९ ॥

यद् वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दमऽप्रतीतप्रयोगमऽतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातार्थम्, अविज्ञातार्थमऽसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

---

विशिष्टा क्रिया प्रतीयते, कालश्च कचिदस्तीत्येतावतोक्तो न तु विवक्षितो लक्षणे– पचेत यजेतेत्येवमादौ तद्योगाप्रतीतेः, अनेन लक्षणेन स्थीयते सुप्यते इत्यादीनामाख्यातानामऽसंग्रहः– कारकतत्संख्ययोरप्रतीतेः तत्संग्रहाय द्वितीयं लक्षणमाह– धात्वर्थमात्रं च कालाभिधानविशिष्टम् (इति) अभिधीयते इत्यभिधानम् । प्रयोगेष्विति– नाम्नो वाऽऽख्यातस्य वा तदर्थादभिद्यमानरूपा निपाताः, यथा समुच्चयविकल्पादिनामपदैः समुच्चयादयः समुच्चेतव्याद् नामार्थादाख्यातार्थाद्वा भेदेनोच्यन्ते– तत्र षष्ठीप्रयोगात् तेषां समुच्चयो विकल्पो वेति नैवं चादयः स्वार्थान् नामार्थादाख्यातार्थाद्वा भेदेनाभिदधति, रूप्यन्ते= प्रतिपाद्यन्ते (इति) रूपाणि= अर्थाः नामार्थादाख्यातार्थाद्वाऽभिद्यमानं रूपम्= प्रतिपाद्यमानं येषां निपातानां ते तथोक्ताः । उपसृज्यमानाः= समीपे= प्राक् प्रयुज्यमानाः क्रियावद्योतका उपसर्गाः, अवद्योतनं चोपलक्षणम्– अधिकार्थां विपरीतार्थाश्चोपसर्गा गृह्यन्ते यथा– अभ्यागच्छति प्रतिष्ठते इत्यादिषु ।" इति तात्पर्यटीका । अत्र तात्पर्यटीकानुसारेणाख्यातस्य 'क्रियाकारकसमुदायाभिधायि आख्यातम्' 'कारकसंख्याविशिष्टक्रियाकालयोगाभिधायि आख्यातम्' 'कालाभिधानविशिष्टं यद् धात्वर्थमात्रं तदभिधायि आख्यातम्' इति लक्षणत्रयं संपन्नम् । सर्वं तात्पर्यटीकायामिदं स्पष्टमित्यलम् ॥ ७ ॥

निरर्थकं लक्षयति– वर्णेति, ककारादयो वर्णाः क्रमेण यत्र निर्दिश्यन्ते तन्निरर्थकमिति सूत्रान्वयः। सर्वं स्पष्टम् । व्याचष्टे– यथेति, अत्र "कचटतपानाम्" इतिपाठस्तु प्रकृतानुपयुक्त एव भाति । उपसंहरति– एवमिति, एवं वर्णनिर्देशस्य साध्यासाधकत्वान्निग्रहस्थानत्वम् । अस्य निरर्थकत्वे हेतुमाह– अभिधानेति, ये वर्णा एवं क्रमेण निर्दिश्यन्ते तेषां केनापि प्रकृतेन साधनत्वादिपदार्थेन अभिधानाभिधेयभावस्य= वाच्यवाचकभावस्यानुपपत्तौ= अभावेन अर्थगतेः= प्रकृतार्थप्रतीतेरभावादिदं निरर्थकमित्यर्थः स्पष्टमन्यत् ॥ ८ ॥

अविज्ञातार्थं लक्षयति– परिषदिति, यद् वाक्यं वादिना त्रिः= त्रिवारमभिहितम्= उच्चारितमपि परिषदा प्रतिवादिना चार्थतो न विज्ञायते तदविज्ञातं वाक्यमविज्ञातार्थं निग्रहस्थानमिति सूत्रान्वयः । व्याचष्टे– यदिति, उक्तरूपेणैवान्वयः । अस्याविज्ञातार्थत्वे हेतुमाह– श्लिष्टेति, श्लिष्टाः= अनेकार्थाः शब्दा यत्र तत् श्लिष्टशब्दं वाक्यम्, अप्रतीतप्रयोगम्= अप्रसिद्धार्थकशब्दघटितं वाक्यम्, अतिद्रुतोच्चारितं च वाक्यं एतादृशवाक्यानामर्थप्रतीतिर्न भवतीति प्रसिद्धमेव अर्थप्रतीत्यजनकत्वाच्च निग्रहस्थानम्– वाक्यस्य परं प्रत्यर्थप्रतीत्यर्थमेवोच्चार्यत्वादित्यर्थः 'वादिना त्रिरभिहितमपि यद्वाक्यमित्येवमादिना कारणेन परिषदा प्रतिवादिना चार्थतो न विज्ञायते तदविज्ञातार्थं निग्रहस्थानमित्यन्वयः । एतादृशवाक्यप्रयोगस्य कारणमाह– अविज्ञातार्थमिति, स्पष्टार्थवाक्येन साध्यसाधने सामर्थ्याभावे एवेदृशं वाक्यं स्वाऽसामर्थ्यगोपनाय प्रयुज्यते तस्य स्वासामर्थ्यगोपकत्वेपि साध्यसाधकत्वं न संभवतीति निग्रहस्थानत्वं वेदितव्यम् । यथा 'अच्युतः शब्दोऽनन्तत्वात्' इत्यादि, अच्युतः= नित्यः, अनन्तत्वात्= अविनाशित्वादित्यर्थः सर्वाप्रसिद्धः ॥ ९ ॥

## पौर्वापर्यायोगादप्रतिसंबद्धार्थमऽपार्थकम् ॥ १० ॥

यत्राऽनेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्ति इत्यऽसंबद्धार्थत्वं गृह्यते तत्समुदायार्थस्याऽपायादपार्थकं यथा- 'दश दाडिमानि. षडपूपाः. कुण्डमजाजिनम्. पललपिण्डः. अधरौरुकमेतत्. कुमार्याः प्राय्यं तस्याः पिता अप्रतिशीनः' इति ॥ १० ॥

## अवयवविपर्यासवचनमऽप्राप्तकालम् ॥ ११ ॥

प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः तत्रावयवविपर्यासेन वचनमऽप्राप्तकालम् असंबद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

## हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम्- साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

अपार्थकं लक्षयति- पौर्वेति, पौर्वापर्यायोगात्= वाक्यानां यत्र परस्परासंबन्धादऽप्रतिसंबद्धार्थम्= असंबद्धार्थं महावाक्यं भवति तत्राऽपार्थकं निग्रहस्थानं भवतीति सूत्रान्वयः। प्रकृतार्थासंबद्धार्थत्वेऽर्थान्तरम्, परस्परसंबन्धाभावेऽपार्थकमिति भेदः। अत्र- "वाच्यार्थशून्यत्वं निरर्थकत्वं समुदायार्थशून्यत्वमपार्थकत्वमिति भेदः" इति श्रीगुरुचरणाः। व्याचष्टे- यत्रेति, पौर्वापर्येण= परस्परम्, अन्वययोगः= अन्वयात्मकसंबन्धः= अन्वयः, नास्ति= न संभवति, इति= इतिहेतोः तस्यानेकस्य पदस्य वाक्यस्य चाऽसंबद्धार्थत्वं गृह्यते इत्यन्वयः। निर्वक्ति- तदिति। समुदायार्थस्य= महावाक्यार्थस्य, अपायात्= राहित्यात् तदऽपार्थकमित्यन्वयः। उदाहरति- दशेति, दशादिशब्दानामर्थस्य सत्त्वेपि 'दश दाडिमानि' 'षडपूपाः' इत्यादिवाक्यानां परस्परं संबन्धेन संभवतीत्यपार्थकं निग्रहस्थानमित्यन्वयः। अजाजिनम्= अजाचर्म, पललपिण्डः= मांसपिण्डः। अत्र- "रौरुकं रुरुसंबन्धि, प्राय्यं प्रागयितव्यम्, अप्रतिशीनो वृद्धः" इति तात्पर्यटीका। स्पष्टमन्यत्। "अधरौरुकमेतत्" इत्यत्र "अथ रौरुकमेतत्" इत्यपि पाठ उपलभ्यते एष हि पाठस्तात्पर्यटीकानुकूलः, वस्तुतस्त्वत्र 'अर्धोरुकमेतत्' इत्येवं पाठो युक्तः अर्धोरुकशब्दश्च स्त्रीणामर्धोरुपिधायकवस्त्रवाचकस्तथा चामरः- "अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम्" इति ॥ १० ॥

अप्राप्तकालं लक्षयति- अवयवेति, प्रतिज्ञाद्यवयवानां विपर्यासेन= व्युत्क्रमेण वचनम् अप्राप्तकालं निग्रहस्थानं यथा प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि उत्तरोत्तरं वक्तव्यानीति क्रमस्तस्य परित्यागे ह्यऽप्राप्तकालम्, प्रतिज्ञाया अनन्तरं हेतोः कालोस्ति नान्यत्रेति अन्यत्र कथनेऽप्राप्तकालं भवति एवमन्यत्रापि बोध्यमिति सूत्रार्थः। व्याचष्टे- प्रतिज्ञादीनामिति, लक्षणानि प्रथमाध्याये उक्तानि, अर्थवशात्= सामर्थ्यवशात् प्रयोजनवशाद्वेत्यर्थः। उपसंहरति- तत्रेति। अस्य निग्रहस्थानत्वकारणमाह- असंबद्धार्थमिति, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अनेन क्रमेणैव संबद्धार्थानि भवन्ति- प्रतिज्ञाया अनन्तरं हेतोरपेक्ष्यमाणत्वादित्येवमन्यत्रापि बोध्यम्, तथा चास्याऽसंबद्धार्थत्वमेव निग्रहस्थानत्वकारणमित्यर्थः। उदाहरणं यथा- 'धूमाद् वह्निमान्' इत्यादि। 'अवयवविपर्यासेनाऽसंबद्धार्थं वचनम् अप्राप्तकालं निग्रहस्थानम्' इत्यन्वयः ॥ ११ ॥

न्यूनं लक्षयति- हीनमिति, प्रतिज्ञाद्यवयवानां मध्येऽन्यतमेन= केन चिदवयवेन हीनम्= रहितमऽनुमानवाक्यं न्यूनं नाम निग्रहस्थानमिति सूत्रान्वयः। व्याचष्टे- प्रतिज्ञादीनामिति। अस्य निग्रहस्थानत्वकारणमाह- साधनाभावे इति, प्रतिज्ञादिपञ्चावयवयुक्तमेवानुमानवाक्यं साध्यसाधकं भवतीति साधनीभूतस्य कस्यचिदप्यवयवस्य राहित्ये साध्यसिद्धिर्न संभवतीति हेतोरस्य निग्रहस्थानत्वमित्यर्थः। उदाहरणं यथा- 'वह्निमान् महानसवत्' इत्यादि हेत्वादिरहितम्। स्पष्टं सर्वम् ॥ १२ ॥

## हेतूदाहरणाधिकमऽधिकम् ॥ १३ ॥

एकेन कृतत्वादन्यतरस्याऽऽनर्थक्यमिति, तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥ १३ ॥

## शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

अन्यत्रानुवादात् शब्दपुनरुक्तमऽर्थपुनरुक्तं वा–'नित्यः शब्दः नित्यः शब्दः' इति शब्दपुनरुक्तम्. अर्थपुनरुक्तम्– 'अनित्यः शब्दः. निरोधधर्मको ध्वानः' इति । अनुवादे त्वऽपुनरुक्तम्– शब्दाभ्यासादर्थविशेषोपपत्तेः यथा–"हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् १–१–३९" इति ॥ १४ ॥

## अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥

पुनरुक्तमिति प्रकृतम्, निदर्शनम्– 'उत्पत्तिधर्मकत्वादनित्यम्' इत्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयात्–'अनुत्पत्तिधर्मकं नित्यम्' इति तच्च पुनरुक्तं वेदितव्यम्– अर्थसंप्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥ १५ ॥

---

अधिकं लक्षयति– हेत्विति, हेतोरुदाहरणस्य चानेकत्वे ह्यधिकं नाम निग्रहस्थानं भवति– अवयवाधिक्यात्, एकस्या अपि प्रतिज्ञायाः साधका हेतवो दृष्टान्ताश्चाऽनेके संभवन्ति तस्मात् "हेतूदाहरणाधिकम्" इत्युक्तम्, 'तथा चायम्' इत्युपनयः 'तस्मात्तथा' इति निगमनमिति नोपनयनिगमनयोराधिक्यं संभवति, प्रतिज्ञोपनयनिगमनानां पुनर्वचने तु पुनरुक्तं निग्रहस्थानं भविष्यति । उदाहरणं यथा– 'प्रपञ्चो मिथ्या दृश्यत्वात् जडत्वात्' इति हेत्वधिकम्, 'प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतवद् गन्धर्वनगरवच्च' इति उदाहरणाधिकमिति सूत्रार्थः । व्याचष्टे– एकेनेति, एकेनैव हेतुना कृतत्वात्= साध्यसिद्धिसंभवाद् हेतोराधिक्येऽन्यतरस्य हेतोरानर्थक्यमेव स्यादिति आनर्थक्यादेव निग्रहस्थानत्वमित्यर्थः, एवमेवोदाहरणाधिक्येपि योज्यम् । विशेषमाह– तदेतदिति, 'एक एव हेतुर्दृष्टान्तश्च वक्तव्यः' इति यत्र वादनियमो भवति तत्र तादृशनियमोल्लङ्घनाद् हेतूदाहरणयोराधिक्ये निग्रहस्थानं भवति न तु नियमाभावेपीत्यर्थः ॥ १३ ॥

पुनरुक्तं लक्षयति– शब्देति, अन्यत्रानुवादात्= अनुवादातिरिक्तस्थले शब्दस्य वाऽर्थस्य वा पुनर्वचनं पुनरुक्तं निग्रहस्थानं भवति, अनुवादस्तु न पुनरुक्तं विना संभवतीति न तत्र पुनरुक्तं दोष इतिसूत्रार्थः । व्याचष्टे– अन्यत्रेति, निग्रहस्थानमिति शेषः । शब्दपुनरुक्तमुदाहरति– नित्य इति । अर्थपुनरुक्तमुदाहरति– अनित्य इति, 'अनित्यः शब्दः' 'निरोधधर्मको ध्वानः' इति द्वयोरपि वाक्ययोरेकार्थत्वात्तदर्थस्य पुनरुक्तत्वम्, निरोधधर्मकः= अनित्यः, ध्वानः= शब्द इत्यर्थः । अनुवादे पुनरुक्तस्याऽदूषणत्वमाह– अनुवादे इति, अपुनरुक्तम्= पुनरुक्तं न दूषणमित्यर्थः । अत्र हेतुमाह– शब्देति, यथा 'वृक्षं वृक्षं सिञ्चति' इत्यत्र वृक्षशब्दस्याभ्यासात्= पुनरुक्त्यैव सेचनस्य सर्ववृक्षकर्मकत्वं प्रतीयते इति नात्र पुनरुक्तं दोषः, एवमन्यत्रापि बोध्यम् । उदाहरति– हेत्वपदेशादिति, सूत्रमिदं पूर्वत्र व्याख्यातम्, यद्यपि यदेव प्रतिज्ञया प्रतिपाद्यते तदेव निगमनेनापि तथापि प्रतिज्ञावयवेन प्रतिज्ञायाः सिद्धिर्न प्रतीयते हेत्वादिभिः साधितत्वात्तु निगमनेन प्रतिज्ञायाः सिद्धिः प्रतीयते इति निगमनेन प्रतिज्ञायाः पुनरुक्तिरपि न दोषाय, एवमुपनयेपि वेदितव्यम्– हेतुवाक्येन साध्यव्याप्तिविशिष्टहेतोरुपसंहारो न प्रतीयते उपनयेन च प्रतीयते इत्युपनयेन हेतोः पुनरुक्तिर्न दोषायेत्यर्थः ॥ १४ ॥

पुनरुक्तस्य लक्षणान्तरमाह– अर्थादिति, अर्थात्= अर्थापत्त्या आपन्नस्य= प्राप्तस्य स्वशब्देन= तद्वाचकशब्देन यत् पुनर्वचनं तदपि पुनरुक्तं निग्रहस्थानं भवतीति सूत्रार्थः । व्याचष्टे– पुनरुक्तमिति, प्रकृतम्= पूर्वसूत्रादनुवर्तनीयमित्यर्थः । उदाहरति– उत्पत्तीति, यदा हि उत्पत्तिधर्मकमऽनित्यं भवति तदा-

## विज्ञातस्य परिषदा त्रिरभिहितस्याप्यऽप्रत्युच्चारणमऽननुभाषणम् ॥१६॥

विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदऽप्रत्युच्चारणं तदऽननुभाषणं नाम निग्रहस्थानमिति, अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात्? ॥ १६ ॥

## अविज्ञातं चाऽज्ञानम् ॥ १७ ॥

विज्ञातार्थस्य परिषदा. प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदऽज्ञानं निग्रहस्थानमिति, अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति? ॥ १७ ॥

## उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

परपक्षप्रतिषेधः उत्तरं तद् यदा न प्रतिपद्यते? तदा निगृहीतो भवति ॥ १८ ॥

## कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ १९ ॥

यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति- ' इदं मे करणीयं विद्यते तस्मिन्नऽवसिते

---

ऽनुत्पत्तिधर्मकं नित्यं भवतीत्यर्थादेव प्राप्नोतीति तस्यार्थादापन्नस्य= ज्ञातस्य योभिधायकः शब्दः 'अनुत्पत्तिधर्मकं नित्यम् ' इति तेन शब्देन= तद्वाचकशब्देन यद्वचनं तत् पुनरुक्तं वेदितव्यमित्यन्वयः। अस्य पुनरुक्तत्वे हेतुमाह- अर्थसंप्रत्ययार्थे इति, शब्दप्रयोगो ह्यर्थप्रतीत्यर्थमेव भवति सोर्थः= अनुत्पत्तिधर्मकस्य नित्यत्वं च 'उत्पत्तिधर्मकमनित्यम्' इत्युक्तेऽर्थापत्त्यैव प्रतीतो भवत्येवेति तस्य प्रतीतस्यापि यत् पुनः ' अनुत्पत्तिधर्मकं नित्यम् ' इतिशब्देन वचनं तत् पुनरुक्तमेवेत्यर्थः ॥ १५ ॥

अननुभाषणं लक्षयति- विज्ञातस्येति, परिषदा= मध्यस्थैर्विज्ञातस्य प्रतिवादिना त्रिः= त्रिवारमभिहितस्य= उच्चारितस्यापि वाक्यस्यार्थतः पाठतो वा यदऽप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं वेदितव्यमिति सूत्रान्वयः। प्रतिवादिनोक्तमनूद्य तत्खण्डनं कर्तव्यमिति वादमर्यादा तत्र प्रतिवादिनोक्तस्याऽनुच्चारणे वादी निगृहीतो भवतीत्याशयः। यदि च प्रतिवाद्युक्तस्य मध्यस्थानां ज्ञानं न जायते तदा तु प्रतिवादिनो वक्तुरेव दोषः संभाव्यते,इति न तदऽननुच्चारणेपि निग्रहस्थानापत्तिरित्यनुसंधेयम्। व्याचष्टे- विज्ञातस्येति। प्रतिवादिना त्रिरभिहितस्य परिषदा च विज्ञातस्य वाक्यार्थस्य यदप्रत्युच्चारणं तदननुभाषणं निग्रहस्थानमित्यन्वयः । अस्य निग्रहस्थानत्वे कारणमाह- अप्रत्युच्चारयन्निति, प्रतिवादिनोक्तमनूद्य हि तत्खण्डनं कर्तव्यमिति वादमर्यादा तत्र प्रतिवादिनोक्तस्याऽनुच्चारणे तत्खण्डनं न संभवति तथा च निगृहीतो भवतीत्यर्थः ॥ किमाश्रयम्= कं प्रतिपक्षमालम्ब्येत्यर्थः ॥ १६ ॥

अज्ञानं लक्षयति- अविज्ञातमिति, भावे क्तः, प्रतिवादिनोक्तस्य यदविज्ञानं तदज्ञानं नाम निग्रहस्थानमिति सूत्रान्वयः। व्याचष्टे- विज्ञातार्थस्येति, परिषदा विज्ञातस्याप्यर्थस्य प्रतिवादिना च त्रिरभिहितस्यापि यदज्ञानं तदज्ञानं नाम निग्रहस्थानमिति पूर्ववदेवान्वयः, अन्यत् सर्वं स्पष्टम्। अस्य निग्रहस्थानत्वे कारणमाह- अयमिति, अयं वादी प्रतिवादिनोक्तस्याज्ञाने तस्य खण्डनं कर्तुं न शक्नोतीति हेतोरज्ञानं निग्रहस्थानम्, ज्ञातस्यैव प्रतिषेधः संभवतीति स्पष्टमेव। एवं वादिना त्रिरभिहितस्य प्रतिवादिना प्रत्युच्चारणाभावे विज्ञानाभावे च प्रतिवादिनोपि यथाक्रममेतन्निग्रहस्थानद्वयं विज्ञेयम् ॥१७॥

अप्रतिभानामकं निग्रहस्थानं लक्षयति- उत्तरस्येति, उत्तरस्य= परपक्षखण्डनस्याऽप्रतिपत्तिः= अस्फुरणम् अप्रतिभानामकं निग्रहस्थानं वेदितव्यमिति सूत्रान्वयः। व्याचष्टे- परपक्षेति, तत्= उत्तरम्, न प्रतिपद्यते= न स्फुरति, उत्तरस्याऽवक्ता निगृहीतो भवतीति स्पष्टमेव ॥ १८ ॥

विक्षेपं लक्षयति- कार्येति, वादातिरिक्तस्य वादविघ्नकरस्य च कार्यस्य व्यासङ्गात्= अनुरोधात्= व्याजेन यः कथायाः= वादजल्पवितण्डानां मध्येऽन्यतमस्य विच्छेदः= परित्यागः स विक्षेपो निग्रहस्थानमिति सूत्रार्थः। व्याचष्टे- यत्रेति, कर्तव्यं व्यासज्य=कर्तव्यव्यासङ्गात्= कार्यान्तर व्याजात्। कथा-

पश्चात् कथयिष्यामि ' इति (तत्) विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यते इति ॥ १९ ॥

## स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २० ॥

यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्य= अनुद्धृत्य वदति– ' भवत्पक्षेपि समानो दोषः ' इति. स स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषं प्रसञ्जयन् परमतमऽनुजानातीति मतानुज्ञानाम निग्रहस्थानमापद्यते इति ॥ २० ॥

## निग्रहस्थानप्राप्तस्याऽनिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥

पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः. तस्योपेक्षणम्= ' निग्रहस्थानं प्राप्तोसि ' इत्यऽननुयोगः । एतच्च ' कस्य पराजयः ? ' इत्यनुक्तया परिषदा वचनीयम्– न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ॥ २१ ॥

---

विच्छेदमुदाहरति– इदमिति, अवसिते= समाप्ते, इति= इत्येवं कार्यान्तर व्याजेन यः कथाविच्छेदः= शास्त्रार्थपरित्यागः स विक्षेपो नाम निग्रहस्थानमित्यन्वयः । अस्य निग्रहस्थानत्वे कारणमाह– एकनिग्रहेति, अत्र " कथान्तरम् " इत्यत्र 'कथान्तम्' इतिपाठो युक्तः प्रतिभाति, वादिप्रतिवादिनोर्मध्ये एकतरस्य यावन्निग्रहो न भवति तावत्पर्यन्तं कथा प्रसरतीत्येकनिग्रहावसाना कथा तत्र कथाविच्छेदे कृते कथा स्वयमेवान्तं प्रतिपद्यते= प्राप्नोतीति कथाविच्छेदकारी निगृहीतो भवतीत्यर्थः । अत्यावश्यककार्येण कथाविच्छेदस्तु न निग्रहस्थानं किं तु स्वकीयस्य प्रतिषेधासामर्थ्यस्य गोपनार्थं यः कथाविच्छेदः स एव निग्रहस्थानमिति विवेकः, स्पष्टमन्यत् ॥ १९ ॥

मतानुज्ञां लक्षयति– स्वपक्षे इति, परेण प्रदर्शितं स्वपक्षदोषमभ्युपगम्य यः परपक्षे दोषप्रसङ्गः= दोषप्रदर्शनं तद् मतानुज्ञानामकं निग्रहस्थानं भवति, मतस्य= परेण प्रदर्शितस्य दोपस्यानुज्ञा= स्वीकारः, परप्रदर्शितदोपस्य निरासः कर्तव्यः स न कृत इति निग्रहस्थानमिति सूत्रार्थः । व्याचष्टे– य इति, चोदितम्= प्रदर्शितम् । परपक्षदोषप्रसङ्गमाह– भवदिति । निर्वक्ति– परमतमिति, स्वपक्षे परकृतदोषप्रदर्शनमित्यर्थः, यथा– आत्मनोऽणुत्वं नोपपद्यते इत्युक्ते विभुत्वमपि नोपपद्यते इतिवचनम्, स्पष्टं सर्वम्, ॥ २० ॥

पर्यनुयोज्योपेक्षणं लक्षयति– निग्रहस्थानेति, प्रतिवादिनो निग्रहस्थानं प्राप्तस्याऽनिग्रहः= निग्रहस्थानप्राप्तेरकथनं पर्यनुयोज्योपक्षणं नाम निग्रहस्थानं वेदितव्यमिति सूत्रान्वयः । व्याचष्टे– पर्यनुयोज्य इति, निग्रहोपपत्त्या= निग्रहस्थानप्राप्तिविषयकनिर्देशेन यश्चोदनीयः= वक्तव्यः स पर्यनुयोज्य इत्यर्थः, तस्योपेक्षणपदार्थमाह– निग्रहस्थानमिति । अननुयोगः= अकथनम् । पर्यनुयोज्योपेक्षणदोपप्रदर्शनं हि मध्यस्थकार्यमित्याह– एतच्चेति, एतत्= पर्यनुयोज्योपेक्षणम्, ' कस्य पराजयो जातः ' इत्यनुयुक्तया= पृष्टया= पराजयावधारणे नियुक्तया परिषदा= मध्यस्थेन वक्तव्यमस्ति न तु वादिप्रतिवादिभ्याम् । उक्ते हेतुमाह– न खल्विति, पर्यनुयोज्योपेक्षणदोषेण निग्रहं प्राप्तस्तु न स्वकौपीनम्= स्वकीयं पर्यनुयोज्योपेक्षणलक्षणदूषणं विवृणुयात्= प्रकाशयेत्= वक्तुमर्हति– स्वदोषस्य वक्तुमशक्यत्वादिति, किं वा यो निग्रहं प्राप्तस्तेनैव स्वस्मिन् प्राप्तस्य निग्रहस्य यत् परेणोपेक्षणं तन्न वक्तव्यं संभवति– परस्मिन् पर्यनुयोज्योपेक्षणदोषप्रदर्शनेन स्वस्मिन् निग्रहप्राप्तिः प्रदर्शिता स्यात् न चैवं संभवति– परदोषप्रदर्शनार्थमपि स्वदोषप्रदर्शनस्यासंभवादित्यर्थस्तस्मात् पर्यनुयोज्योपेक्षणदोषप्रदर्शनं मध्यस्थकार्यमेवेत्यर्थः । पर्यनुयोज्योपेक्षणे वादिप्रतिवादिनोर्द्वयोरपि दोष इत्यनुसंधेयम् ॥ २१ ॥

## अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥

निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादऽनिग्रहस्थाने 'निगृहीतोसि' इति परं ब्रुवन् निरनुयोज्याऽनुयोगाद् निगृहीतो वेदितव्य इति ॥ २२ ॥

## सिद्धान्तमभ्युपेत्याऽनियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययात्= अनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यो यथा– 'न सदाऽऽत्मानं जहाति= न सतो विनाशः, नाऽसदाऽऽत्मानं लभते= नाऽसदुत्पद्यते' इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति– एकप्रकृतीदं व्यक्तम्– विकाराणामन्वयदर्शनात्. मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वं तथा चायं व्यक्तभेदः सुखदुःखमोहसमन्वितो दृश्यते तस्मात् समन्वयदर्शनात् सुखादिभिरेकप्रकृतीदं विश्वमिति।

एवमुक्तवानऽनुयुज्यते– अथ प्रकृतिर्विकार इति कथं लक्षितव्यम्? इति, यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः. यच्च धर्मान्तरं प्रवर्तते स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्ययात्= अनियमात् कथां प्रसञ्जयति= प्रतिज्ञातं खल्वनेन– नाऽसदाविर्भवति न सत्तिरो भवति' इति। सदसतोश्च तिरोभावाऽऽविर्भावमऽन्तरेण न कस्यचित् प्रवृत्तिः प्रवृत्त्युप-

---

निरनुयोज्यानुयोगं लक्षयति– अनिग्रहेति, अनिग्रहस्थाने= निग्रहस्थानप्राप्तेरभावे निग्रहस्थानाऽभियोगः= निग्रहस्थानप्राप्तिकथनमेव निरनुयोज्यानुयोगो नाम निग्रहस्थानम्, निरनुयोज्यस्य= अनुयोज्यातिरिक्तस्याऽनुयोगो निरनुयोज्यानुयोग इति सूत्रान्वयः। व्याचष्टे– निग्रहस्थानेति, निग्रहस्थानस्य यदुक्तं लक्षणं तस्य मिथ्याध्यवसायात्= मिथ्यानिश्चयात्= निग्रहस्थानभ्रान्त्येत्यर्थः। अनेन निरनुयोज्यानुयोगस्य कारणमुक्तम्। अनिग्रहस्थाने= निग्रहस्थानाभावेपि। स्पष्टमग्रे ॥ २२ ॥

अपसिद्धान्तं लक्षयति– सिद्धान्तमिति, कंचित् सिद्धान्तमभ्युपेत्याऽनियमात्= तादृशसिद्धान्तविरुद्धो यः कथाप्रसङ्गः= वादारम्भः सोऽपसिद्धान्त इतिसूत्रान्वयः, उदाहरणं भाष्ये द्रष्टव्यम्। व्याचष्टे– कस्य चिदिति, स्वसिद्धान्तानुकूलं तथाभावम्= तादृशस्वरूपं तादृशधर्मवत्त्वं वा प्रतिज्ञायेत्यन्वयः, अनियमात्= विपर्ययात्= विरोधात्। प्रथमं सिद्धान्तस्वीकारमुदाहरति– यथेति। उक्तं व्याचष्टे– न सत इति। द्वितीयसिद्धान्तमाह– नाऽसदिति, एतदपि व्याचष्टे– नाऽसदुत्पद्यते इति, तदेद्वहुधाव्याख्यातम्, इतिसिद्धान्तम्= उक्तं साख्यसिद्धान्तम्। अनियमात् कथाप्रसङ्गमुदाहरति– एकप्रकृतीदमिति, इदं व्यक्तम्= जगत् एकप्रकृति= एककार्यम्= प्रधानकार्यमित्यर्थः। हेतुमाह– विकाराणामिति, विकाराणाम्= कार्यमात्रस्य सुखदुःखमोहैः अन्वयः= समन्वयो दृश्यते स च प्रधानकार्यत्वे एवोपपद्यते– प्रधानस्य त्रिगुणात्मकत्वेन सुखदुःखमोहात्मकत्वादित्यर्थः। दृष्टान्तमाह– मृदन्वितानामिति, मृन्मयाणामित्यर्थः, एकप्रकृतित्वम्= मृदेककार्यत्वं दृष्टम्। उपनयमाह– तथा चायमिति, व्यक्तभेदः= जडपदार्थजातम्। निगमनमाह– तस्मादिति, सुखादिभिः= सुखदुःखमोहैः समन्वयदर्शनाद्विज्ञायते इदं विश्वम्= जगत् एकप्रकृति= प्रधानकार्यमित्यन्वयः, पूर्वमप्युपपादितमेतत् षष्ठसूत्रे इत्यलम्।

अपसिद्धान्तमुपक्रमते– एवमिति। अनुयुज्यते= पृच्छयते। प्रष्टव्यमाह– अथेति, पूर्वत्र प्रध -प्रपञ्चयोः प्रकृतिविकारभावः= कारणकार्यभाव उक्तस्तत्र इयं प्रकृतिरयं च विकार इति कथं लक्षितव्यमित्यन्वयः, प्रकृतिविकारयोर्लक्षणं वक्तव्यमिति प्रश्न इत्यर्थः। प्रकृतिलक्षणमाह– यस्येति, यस्य पदार्थस्य, यथा मृदोऽवस्थितायाः धर्मान्तरनिवृत्तौ= शरावाद्याकृतिनिवृत्त्यनन्तरं धर्मान्तरम्= घटाद्याकृतिः प्रवर्तते= प्रादुर्भवतीति सा मृत् प्रकृतिः एवं प्रधानमपि प्रकृतिः। विकारलक्षणमाह– यच्चेति, धर्मान्तरम्= आकृतिर्या प्रवर्तते निवर्तते वा स विकार इति। अत्र सिद्धान्तविरुद्धं कथाप्रसङ्गमाह– सोयमिति।

रमश्च भवति, मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति. अभूदिति च प्रवृत्त्युपरमः. तदेतद् मृद्धर्माणामपि न स्यात्, एवं प्रत्यवस्थितो यदि सतश्चाऽऽत्म-हानमऽसतश्चाऽऽत्मलाभमभ्युपैति? तदस्याऽपसिद्धान्तो निग्रहस्थानं भवति, अथ नाभ्युपैति? प्रक्षोऽस्य न सिध्यति ॥ २३ ॥

## हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

हेत्वाभासाश्च निग्रहस्थानानि । किं पुनर्लक्षणान्तरयोगाद् हेत्वाभासा निग्रहस्थानत्व-मापन्नाः यथा प्रमाणानि प्रमेयत्वम्? इत्यत आह– यथोक्ता इति= हेत्वाभासलक्षणेनैव निग्र-हस्थानभाव इति । ते इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २४ ॥

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

॥ इति विद्वद्वरवात्स्यायनविरचिते न्यायभाष्ये पञ्चमोऽध्यायः समाप्तः ॥

॥ न्यायदर्शनं चेदं समाप्तम् ॥

---

उक्तं विशदयति– प्रतिज्ञातमिति, उक्तप्रतिज्ञाया बाधमुद्घाटयति– सदसतोरिति, सतः तिरोभावं विना असतश्चाविर्भावं विना कस्यचिदपि प्रवृत्तिः प्रवृत्त्युपरमः= निवृत्तिश्च न संभवति । प्रवृत्तिनिवृत्त्योः प्रत्यक्षसिद्धत्वमाह– मृदीति, शरावादिलक्षणम्= शरावाद्याकृतिलक्षणं धर्मान्तरं भविष्यतीत्यनेन प्रवृत्ति-रुच्यते, अभूदित्यनेन च निवृत्तिरुच्यते, यदि सदसत्तोस्तिरोभावप्रादुर्भावौ न स्यातां तदा मृद्धर्माणामपि घटाद्याकृतीनां एतत्= प्रवृत्तिर्निवृत्तिश्च न स्यात् तथा चोक्तं प्रकृतिविकारयोर्लक्षणं न संगच्छेत– पूर्वस्य सत एव धर्मस्य विनाशेनोत्तरस्य चोत्पत्त्यैव विकारत्वसंभवात् तादृशधर्माश्रयस्य च प्रकृतित्वसंभवाद-ऽन्यथा प्रकृतिविकारयोः सत्त्वाविशेषाद् वैलक्षण्यं न स्यादित्यर्थः । अपसिद्धान्तं निर्दिशति– एवमिति, एवम्= उक्तरूपेण प्रत्यवस्थितः= चोदितः= पृष्टः, यदि सत आत्महानम्= तिरोभावम्= विनाशम् असतश्चात्मलाभम्= उत्पत्तिं स्वीकरोति तदाऽस्याऽपसिद्धान्तो निग्रहस्थानं भवति– पूर्वमनेन तदस्वीका-रात्= एतद्विरुद्धस्य स्वीकृतत्वात्, तच्च पूर्वत्र स्पष्टमेव– "न सदात्मानं जहाति" इत्यादिना । यदि सतो विनाशमसतश्चोत्पत्तिं न स्वीकरोति तदा प्रकृतिविकारयोरुक्तलक्षणाऽसिद्धया प्रधानप्रपञ्चयोः प्रकृतिविकारभाव इतिपक्षोऽस्य= वादिनः न सिध्यतीत्युभयतः पाशारज्जुरित्यर्थः, स्पष्टमन्यत्, इत्यप-सिद्धान्तः ॥ २३ ॥

हेत्वाभासानां निग्रहस्थानत्वमतिदिशति– हेत्वाभासा इति, यथोक्ताः= प्रथमाध्यायद्वितीयाह्निके निरूपिता हेत्वाभासा अपि निग्रहस्थानभूता विज्ञेया इति सूत्रान्वयः, तथा च सूत्रम्– "सव्यभिचार-विरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः १–२–४" इति । व्याचष्टे– हेत्वाभासाश्चेति । हेत्वाभासा स्वलक्षणेनैव निग्रहस्थानत्वं प्राप्ताः किं वा लक्षणान्तरयोगाद् यथा प्रमाकरणत्वात् प्रमा-णानि प्रमाविषयत्वात् प्रमेयत्वं प्राप्तानीत्याशङ्कते– किमिति । उत्तरमाह– इत्यत इति, एतादृशशङ्का-निवृत्त्यर्थमेव सूत्रकारः "यथोक्ताः" इत्याहेत्यन्वयः, यथोक्ताः= उक्तलक्षणविशिष्टा एव= उक्तहेत्वा-भासलक्षणैरेव निग्रहस्थानभूता इत्यर्थः, उक्तं व्याचष्टे– हेत्वाभासलक्षणेनैवेति, साध्यासाधकत्वं हि हेत्वाभासत्वं तदेव निग्रहस्थानत्वमपीति हेत्वाभासानां हेत्वाभासलक्षणेनैव निग्रहस्थानभावः= निग्रह-स्थानत्वं प्राप्तं न तु लक्षणान्तरयोगादिति नात्र लक्षणान्तरमुक्तमित्यर्थः । स्वभाष्यं समापयति– ते इमे इति । शास्त्रमुपसंहरति– य इति, न्यायः= न्यायदर्शनम्, वदतां वरम्= विद्वद्वरम्, अक्षपादम्= गौतमं

न्यायाचार्यम्, प्रत्यभात्= बुद्धिविषयतां प्राप्तः, भाष्यजातम्= भाष्यात्मकवाक्यजातम्, अवर्तयत्= प्रावर्तयत्= अररचदित्यर्थः, स्पष्टमन्यत्, इतिशम् ॥ २४ ॥

॥ इति निग्रहस्थाननिरूपणप्रकरणं समाप्तम् ॥

---

लेखसौष्ठवहीनस्याऽप्रसिद्धस्य विशेषतः । न्यायभाष्यस्य टीकेयं तोषयिष्यति किं बुधान् ? ॥ १ ॥
श्रीमद्गुरुमुखाज्ज्ञातन्यायभाष्यार्थसंचयः । श्रीप्रसन्नपदानाम्ना कृतो मूलार्थकाङ्क्षिणे ॥ २ ॥
मूलान्वये विशेषेण संरम्भो विस्तरभिया । क्लिश्यन्ति मूलवाक्यार्थे यतश्छात्रगणा भृशम् ॥ ३ ॥
काश्यां रसाश्वनन्देन्दु (१९७६) विक्रमाङ्कसुवत्सरे । श्रीप्रसन्नपदा व्याख्या रचिता सूत्रभाष्ययोः॥४॥
अस्याः प्रकाशनात् (कर्तरि) क्लेशो योनुभूतो मया महान् । तं न वक्तुं समर्थोस्मि वक्ता कालगतिर्ह्यसौ॥५॥
श्रीभाष्यस्य सुदीर्घस्य श्रीमती रचिता मया । विशिष्टाद्वैतवृत्तिश्च सूत्रमूलार्थबोधिका ॥ ६ ॥
भगवद्गीतभाष्यं च श्रीभाष्यनयमालिका (विशिष्टाद्वैताधिकरणमाला) ।
श्रीशास्त्रदीपिकाटीका प्रकाशाख्या प्रकाशिता ॥ ७ ॥
छात्राणामुपकाराय द्वावाऽऽदर्शौ प्रकाशितौ । एको व्युत्पत्तिवादस्य शक्तिवादस्य चापरः ॥ ८ ॥
अलिविलासिसंलापे श्रीमद्गुरुविनिर्मिते । गुरूणामाज्ञया टीका (प्रकाशाख्या) रचिता तैश्च संमता ॥९॥
न्यायदर्शनटीकेयं श्रीप्रसन्नपदाऽधुना । रचिता क्लेशभारेण गुरुपत्कृपया मया ॥ १० ॥
कृपया पादपद्मस्य श्रीगङ्गाधरशास्त्रिणाम् । मया विरचिता तावद् ग्रन्थानां पञ्चविंशतिः ॥ ११ ॥
अनेकग्रन्थनिर्माणश्रमसंदोहधर्षितम् । शरीरं शीर्णतां प्राप्तमेतद् व्यसनदुष्फलम् ॥ १२ ॥
वन्दे श्रीमद्धयग्रीवं मन्देभ्यः करुणानिधिम् । विद्यागुरुं मुहुर्वन्दे श्रीगङ्गाधरशास्त्रिणम् ॥ १३ ॥
यः सांख्ये कपिलः पतञ्जलिरलं शाब्दे कवित्वे परं श्रीहर्षोऽद्वयदर्शने शिवतनुस्तर्केषु यो गौतमः ।
मीमांसामतजैमिनिर्ध्रुवमुपाध्यायो महद्भ्यो महान् स्याऽऽईईपदभृद् गुरुर्विजयते शास्त्री स गङ्गाधरः॥१४॥
संगीतज्ञानदं नौम्यऽमृतसेनं गुरुं मुहुः । रचितं यत्कृपालेशात् श्रीसंगीतसुदर्शनम् ॥ १५ ॥
अनेकग्रन्थटीकानां निर्माणश्रममत्र मे । विस्मरिष्यन्ति नो छात्रा विश्वासोयं दृढोस्ति मे ॥ १६ ॥
एषां मदीयग्रन्थानां मुद्रणायोत्तरोत्तरम् । यत्नो विधेयः सच्छात्रैर्मम मृत्योरनन्तरम् ॥ १७ ॥
छात्राः शृणुत मे वाचं सत्यमेव ब्रवीमि यत् । भवतामुपकाराय मया ग्रन्था विनिर्मिता ॥ १८ ॥
अलं वाग्विस्तरेणात्र वागन्तो न विद्यते । श्रीप्रसन्नपदामेनां दयादृष्ट्या विलोक्यताम् ॥ १९ ॥
मादृशाल्पमतेस्तावत् का वार्ता ग्रन्थसंततेः । लोके किमस्ति यत् प्राज्ञैः कोपदृष्ट्या न गर्हितम् ॥ २० ॥

॥ ओं नमो भगवते श्रीहयग्रीवाय ॥

॥ इति पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिप्रणीता न्यायभाष्यस्य
तत्सूत्राणां च प्रसन्नपदाख्या व्याख्या समाप्ता ॥

---

॥ श्रीः ॥

श्रीप्रसन्नपदाशेषं परिशिष्टेतिसंज्ञकम् ।
जिज्ञासूनां सुबोधार्थं करोत्येष सुदर्शनः ॥

---

१ प्रथमाध्यायप्रथमाह्निकस्य इन्द्रियार्थसंनिकर्षोत्पन्नेतिचतुर्थसूत्रभाष्ये २१ पृष्ठे १–२ पङ्क्तौ—

"तद् नामधेयशब्देन व्यपदिश्यते" इतिभाष्यम्, अस्य स्थाने

"न तद् नामधेयशब्देन व्यपदिश्यते" इत्यपि पाठ उपलभ्यते, एतत्पाठपक्षे तु या प्रथमं प्रत्यक्षलक्षणस्य शाब्देऽतिव्याप्तिरुपदर्शिता सा न तदितिग्रन्थेन निवर्त्यते इति ग्रन्थसंगतिर्विज्ञेया. तथा हि– शक्तिग्रहात् पूर्वमनन्तरं च यद् अर्थज्ञानम्= प्रत्यक्षं तद् नामधेयशब्देन न व्यपदिश्यते अर्थात् शाब्दबोधविषयो नामधेयशब्देन व्यपदिश्यते प्रत्यक्षविषयश्च व्यवहारातिरिक्तकाले नामधेयशब्देन न व्यपदिश्यते इति भेदादव्यपदेश्यत्वविशेषणघटितस्य प्रत्यक्षलक्षणस्य शाब्देऽतिव्याप्तिर्न संभवतीति तदर्थम् अव्यपदेश्यमितिविशेषणं सूत्रे प्रक्षिप्तमिति सारः। वस्तुतस्तु भाष्यमिदमसंगतमेव यतो नेतिपाठपक्षे पूर्वमतिव्याप्तिप्रदर्शनं व्यर्थं प्रसज्यते. नेतिपाठाभावपक्षे च पाठोयं पुनरुक्ततां प्राप्नोतीति विभावनीयम्। अग्रिमभाष्यालोचनेन तु नेतिपाठोऽशुद्ध एवेति भासते। शाब्दबोधत्वेन्द्रियार्थसंनिकर्षोत्पन्नत्वयोः सामानाधिकरण्यं तु 'दशमस्त्वमसि' इत्यादिवाक्यजन्ये स्वात्मप्रत्यक्षे विज्ञेयम्। किं च शब्दाज्जायमानत्वलक्षणे शाब्दबोधे इन्द्रियार्थसंनिकर्षोत्पन्नत्वस्याऽतिव्याप्तिर्नास्त्येवेति व्यर्थमेवेदं विशेषणम्।

२ प्रथमाध्यायप्रथमाह्निकस्य चतुर्थसूत्रभाष्ये २१ पृष्ठे ३ पङ्क्तौ

"न चाप्रतीयमानेन व्यवहारः" इतिभाष्यात् पूर्वम्—

"तस्य त्वर्थज्ञानस्याऽन्यः समाख्याशब्दो नास्तीति येन प्रतीयमानं व्यवहाराय कल्पते" इत्येवमपि पाठ उपलभ्यते, अस्य च भाष्यस्य पदार्थाः स्पष्टा एव वाक्यार्थसंगतिस्तु दुर्लभैव, अर्थज्ञानस्य= प्रत्यक्षस्य, कल्पते= कल्पेत। रसप्रत्यक्षस्य 'रस इतिज्ञानम्' इत्यादिवाक्यं विनाऽन्यो वाचकः शब्दो नास्ति– प्रत्यक्षादिशब्दानां सामान्यरूपेणैव प्रत्यक्षमात्रबोधकत्वात् विशेषरूपेण रसादिप्रत्यक्षाऽबोधकत्वाच्च, अप्रतीयमानेन व्यवहारासंभवात् तादृशं रसादिप्रत्यक्षम् 'रस इतिज्ञानम्' इत्यादिवाक्येन निर्दिश्यते एवं शब्देन व्यवदिश्यमानं सत् प्रत्यक्षं शाब्दं प्रसज्यते तद्व्यावृत्त्यर्थम् "अव्यपदेश्यम्" इतिविशेषणमितिसारः। एवं रूपादिप्रत्यक्षेष्वपि समन्वयः। वस्तुतस्त्वेवं शब्देन व्यपदिश्यमानत्वेपि प्रत्यक्षस्य क्षतिर्नास्तीति अव्यपदेश्यमितिविशेषणं व्यर्थमेव– अभिधेयत्वस्य केवलान्वयित्वस्वीकारात्। यदि शब्दार्थयोरभेदपक्षे पदार्थेन जायमानं प्रत्यक्षं शब्देनापि जातमेवेति शाब्दं प्रसज्यते तद्व्यावृत्त्यर्थमव्यपदेश्यमिति विशेषणम्? तदापीदं विशेषणं व्यर्थमेव प्रतिभाति– शब्दार्थयोरभेदपक्षे शाब्दत्वनिवृत्तेरसंभवात् भेदपक्षे च शाब्दत्वप्रसक्तेरेवाभावात्।

३ प्रथमाध्यायप्रथमाह्निकस्य चतुर्थसूत्रभाष्ये २२ पृष्ठे नवमपङ्क्तौ

"सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः" इतिभाष्यानन्तरम्

"पश्चान्मनसाऽनुव्यवसायः" इत्यपि भाष्यपाठ उपलभ्यते। पश्चात्= बाह्येन्द्रियजन्यव्यवसायानन्तरम्, स्पष्टमन्यत्।

४ प्रथमाध्यायद्वितीयाह्निकाष्टमसूत्रभाष्ये "द्रव्यं छाया" इत्यद्वैतवेदान्तमतं बोध्यम्– अद्वैतिभिस्तमसो द्रव्यत्वस्वीकारात् छायायाश्च मतोरूपत्वात्।

५ प्रथमाध्यायद्वितीयाह्निकस्य अविशेषाभिहितेतिद्वादशसूत्रभाष्ये ८१ पृष्ठे २ पङ्क्तौ—

"प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाऽप्रयुक्तपूर्वाः" इतिभाष्यस्य—'यदि चेमे शब्दा अप्रयुक्तपूर्वाः स्युस्तदैषां स्वमनीषयाप्यर्थकल्पनं संभवेत् न चैवमस्तीति प्रयुक्तपूर्वाणां शब्दानां स्वमनीषयार्थकल्पनं न संभवति, इत्याशयः। पूर्वैः प्रयुक्ता इति प्रयुक्तपूर्वाः।

६ द्वितीयाध्यायप्रथमाह्निके ९८ पृष्ठे एकादशं सूत्रम्—

"युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् २-१-११"

इत्यस्य वर्णकान्तरम्— प्रमेयाणि गन्धादीनि सर्वाण्येव पृथिव्यां वर्तन्ते तैः सह प्रमाणानां सत्तास्वीकारे बुद्धीनां प्रत्यर्थनियतत्वात्= स्वस्वविषयग्राहकत्वात् सर्वैरपि प्रमाणैः स्वस्वविषयाणां गन्धादीनां प्रतिभासः प्राप्त एवेति बुद्धीनां क्रमवृत्तित्वाभावः प्राप्तः प्रमाणप्रमेययोः सहभावपक्षे इत्यर्थः।

किं वा— पूर्वोक्तदोषद्वयपरिजिहीर्षया यदि प्रमाणानां प्रमेयाणां च सहभाव उच्यते तदा ज्ञानानां क्रमवृत्तित्वाभावः प्रसज्येत— ज्ञानानां प्रत्यर्थनियतत्वात्= स्वस्वविषयमात्रग्राहकत्वात्. यदि ज्ञानानि प्रत्यर्थनियतानि न स्युस्तदा एकेन ज्ञानेनाऽनेकेषां विषयाणां ग्रहणं कालभेदेनैव स्यादिति क्रमवृत्तित्वाभावापत्तिर्न स्यादपि. यदा च ज्ञानानि प्रत्यर्थनियतानि तदा घ्राणजादिज्ञानैर्गन्धादिरेव ग्राह्य इति सर्वैरप्येकदोत्पन्नैर्ज्ञानैः सैनिकैः स्वस्वशस्त्रग्रहणवदेकस्मिन्नेव क्षणे स्वस्वविषयाणां ग्रहणसंभवात् कालान्तरस्य चानपेक्षणात् अभीष्टस्य क्रमवृत्तित्वस्याभावः प्रसज्यते इत्यर्थः।

दोषश्चायं मिथ्यैव— मनइन्द्रियसंयोगस्यापि गन्धादिज्ञानं प्रति कारणत्वस्वीकारात् तस्य च कालभेदेनैव संभवात्— मनसोऽणुत्वादिति न ज्ञानानां क्रमवृत्तित्वाभावस्यापत्तिर्न वाऽनेकेषां प्रमाणप्रमेयाणां युगपद्भावापत्तिश्च, एकस्य प्रमेयस्यैकेन प्रमाणेन स्वविषयकेण सहभावपक्षे तु सर्वेषां प्रमाणप्रमेयाणां सहभावाभावात् ज्ञानानां क्रमवृत्तित्वाभावस्यापत्तिर्नास्त्येवेति विभाव्यम्। वस्तुतस्तु प्रमाणप्रमेययोः सहभावपक्षे पूर्वोक्तदोषयोः समुच्चय एव प्रदर्शनीय आसीत् तत्र च 'युगपत्सिद्धावुक्तदोषसमुच्चयः' इत्येवं सूत्रं कर्तव्यमासीत्। अहं तु मन्ये सूत्रकारोयं प्रमाणप्रमेययोः सहभावे दोषप्रदर्शनं विस्मृत्य प्रमाणानामेव सहभावे दोषं प्रदर्शयति— युगपत्सिद्धाविति।

यद्यपि भाष्यकारः प्रमाणप्रमेययोरेव सहभावपक्षमाश्रित्य सूत्रं व्याचष्टे— तथापि सूत्रपदार्थमात्रमेव वदति. प्रमाणप्रमेययोः सहभावपक्षे ज्ञानानां क्रमवृत्तित्वाभावापत्तौ प्रत्यर्थनियतत्वादित्युक्तहेतोः सामर्थ्यं नोपपादयति क्लिष्टवाक्योपेक्षैव प्रायो व्याख्यातॄणां स्वभावस्तदुक्तं भोजेन—

"दुर्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः,
स्पष्टार्थेष्वऽतिविस्तृतिं विदधति व्यर्थैः समासादिकैः।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेपि टीकाकृतः॥" इति,

इत्यलं वृद्धानामधिकसमीक्षया।

७ द्वितीयाध्यायप्रथमाह्निके "न चैकदेशोपलब्धिः ३२" इतिद्वात्रिंशत्संख्याकं सूत्रं तस्य भाष्ये १२४ पृष्ठे १-२ पङ्क्तौ—

"अशेषता वा समुदायो वृक्ष इति स्यात्"

इतिपाठस्तस्य— 'अशेषता= समुदायो वृक्ष इति वा स्यात्' इत्येवं वान्वयः।

८ द्वितीयाध्यायप्रथमाह्निके "सेनावनवत् ३६" इतिषट्त्रिंशत्संख्याकं सूत्रं तस्य भाष्ये १२९ पृष्ठे ४ पङ्क्तौ—

"अणुषु संचितेष्वेकप्रत्ययः किम्"

इत्यादिपाठस्तस्य— एकोयमित्येकत्वप्रत्ययो यदि यथार्थस्तदाप्यवयवी सिद्धः— अवयविन एकत्वसंभवात् अनेकेषु परमाणुषु चैकत्वस्यासंभवात्, यदि चाऽयथार्थस्तदाप्युक्तरीत्या प्रधानप्रत्ययापेक्षा प्राप्नेति प्रधानेनैकत्वप्रत्ययेनाऽवयवी सिद्ध इतिनिष्कर्षः।

९ द्वितीयाध्यायप्रथमाह्निके "सेनावनवत् ३६" इतिषट्त्रिंशत्संख्याकं सूत्रं तस्य भाष्ये १३१ पृष्ठे पञ्चमपङ्क्तौ—

"कोयं समुदायः ?"

इतिभाष्यपाठः, अत्र हि पूर्वपक्षिमते अवयवी तु नास्त्येव. न च परमाणवोपि समुदायरूपाः- तेषां समुदायाश्रयत्वात् तस्मात् पारिशेष्येण समुदायः संयोगरूप एव स्यादितिहेतोरेव समुदायस्य प्राप्तिरूपत्वम्= संयोगरूपत्वमुपवर्णितमिति प्रतिभाति। वस्तुतस्तु समूह एव समुदायः समुदायद्वये च द्वित्वं संभवत्येवेति विभाव्यम्।

१० द्वितीयाध्यायप्रथमाह्निके- "प्रत्यक्षेणाऽप्रत्यक्षसिद्धेः ४६" इतिसूत्रभाष्ययोरुत्तरसूत्रानुरोधात् गवयपदवाच्यत्वेन रूपेण वा गवयग्रहणं न व्याख्येयं किं तु गोसादृश्यविशिष्टत्वेन- यो गोसदृशः स गवय इति तथा च "गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणम्" इत्युपपन्नम्।

११ द्वितीयाध्यायप्रथमाह्निके "न- सामयिकत्वात् ५५" इति सूत्रं तस्य भाष्ये १५० पृष्ठे तृतीयपङ्क्तौ—

"प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम्"

इतिपाठस्तस्य- 'लौकिकानाम्= जनानां समयज्ञानेन (शक्तिज्ञानेन) प्रयुज्यमानस्य= बोध्यमानस्य पदार्थस्य ग्रहणात्= ज्ञानेन समयस्योपयोगो विज्ञेयः' इत्येवं वान्वयः।

१२ द्वितीयाध्यायप्रथमाह्निके "अनुवादोपपत्तेश्च ६०" इतिसूत्रं तस्य भाष्ये १५५ पृष्ठे द्वितीयपङ्क्तौ—

"पुनरुक्तदोषोऽभ्यासे न"

इतिपाठस्तस्य- 'अभ्यासे पुनरुक्तदोषो न' इत्येवं वान्वयः।

१३ द्वितीयाध्यायप्रथमाह्निके "स्तुतिर्निन्दा परकृतिः ६४" इति सूत्रे तस्य भाष्ये च "परकृतिः" इतिपाठस्तस्य- परस्य कृतिः= कर्म परकृतिर्यथात्र चरकाध्वर्यूणां प्रथमं पृषदाज्याभिघारणं तदन्येषां प्रथमं वपाभिघारणमिति परकृतिबोधकं वाक्यमपि परकृतिरित्युच्यते इत्यर्थः।

१४ द्वितीयाध्यायद्वितीयाह्निके "तदनुपलब्धेः १९" इतिसूत्रस्य भाष्ये १८१ पृष्ठे तृतीयपङ्क्तौ—

"सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति"

इतिपाठः, यद्यप्यनेन भाष्येणाऽऽवरणानुपलब्धेरिवावरणोपलब्धेरपि वेद्यत्वं प्राप्तमिति सिद्धान्तप्रतिकूलमिव जातं तथाप्यावरणोपलब्धेर्वेद्यत्वेपि= वेदनयोग्यत्वेपि वेदनं नास्त्येव किं वा शब्दावरणस्य वेदनं नास्त्येवेति शब्दावरणानुपलब्धिपक्ष एव प्रबलो जातः। किं वा घटाद्यावरणस्य कुड्यादेरुपलब्धिरस्ति शब्दावरणस्य तूपलब्धिर्नास्ति यदि शब्दावरणमपि स्यात्तदा घटाद्यावरणवदुपलभ्येत न चोपलभ्यते इति शब्दावरणस्याभावः सिद्ध इत्येवं व्यतिरेकेण व्याख्येयम्।

१५ द्वितीयाध्यायद्वितीयाह्निके "विनाशकारणानुपलब्धेः ३७" इतिसूत्रभाष्ये १९० पृष्ठे नवमपङ्क्तौ—

"शब्दश्रवणानि शब्दाभिव्यक्तय इतिमतम्"

इतिपाठः अत्र- श्रवणाभिव्यक्त्योर्नाऽभेदः संभवति- शब्दस्याभिव्यक्त्यनन्तरमेव श्रवणसंभवादिति 'शब्दाभिव्यक्त्या शब्दश्रवणानि' इत्येवं वक्तव्यमासीत्। एतदग्रे- "न तर्हि" इत्यादिपाठस्तस्य- 'विनाशकारणानुपलब्धेः शब्दस्यावस्थानं तेन च नित्यत्वं यदुच्यते तन्नोपपद्यते- शब्दश्रवणस्येव शब्दस्याप्यनित्यत्वसंभवात्' इत्यन्वयः।

१६ तृतीयाध्यायप्रथमाह्निके द्विचत्वारिंशत्संख्याकस्य

"अभिव्यक्तौ चाभिभवात् ४२"

इतिसूत्रस्य- रात्रौ अभिभावकाभावकाले वा पदार्थस्याभिव्यक्तौ सत्यामेव अभिभावककालेऽभिभावके-

नाभिभवादनुपलब्धिर्वक्तुं शक्यते नान्यथा नेत्ररश्मेश्च न रात्रावप्युपलब्धिरिति नाऽभिभवस्तदनुपलब्धिकारणं किं त्वनुद्भूतरूपत्वमेवेत्याशयः ।

१७ तृतीयाध्यायप्रथमाह्निके "त्वगव्यतिरेकात् ५२" इतिसूत्रभाष्यान्ते २६२ पृष्ठे द्वितीयपङ्क्तौ—

"न च तेष्वसत्सु विषयग्रहणं भवतीति"

इतिपाठस्तस्य— तेषु= पृथिव्यादिभूतेष्वसत्सु विषयग्रहणं न भवति सत्सु च भवतीत्यन्वयव्यतिरेकाभ्यां भूतानामपि विषयग्राहकत्वं स्यात् न चास्तीति न त्वचोप्युक्तान्वयव्यतिरेकाभ्यां सर्वविषयग्राहकत्वं संभवतीत्यन्वयः ।

१८ तृतीयाध्यायप्रथमाह्निके "गन्धत्वाद्यव्यतिरेकात् ५७" इतिसूत्रभाष्यान्ते २६६ पृष्ठे प्रथमपङ्क्तौ—

"असमानसाधनसाध्यत्वान्न"

इतिपाठस्य स्थाने "असमानसाधनसाध्यत्वात्" इत्येवं नकाररहितोपि पाठ उपलभ्यते. अस्य च— गन्धादिज्ञानानि असमानसाधनसाध्यत्वात्= अनेकेन्द्रियजन्यत्वात्= एकेन्द्रियजन्यत्वाभावात् ग्राहकान्तराणाम्= चक्षुरादीन्द्रियाणां प्रयोजकानि= साधकानि भवन्तीति पञ्चेन्द्रियाणि सिद्धानीत्यर्थः । वस्तुतस्तु पूर्वपक्षिणा गन्धादीनां वैविध्यात् पञ्चाधिकेन्द्रियकल्पनापत्तिः प्रदर्शिता तन्निरासार्थमस्य पाठस्य स्थाने 'समानसाधनसाध्यत्वान्न' इत्येवं वक्तव्यमासीत् तस्य च— सर्वाणि गन्धग्रहणानि समानसाधनसाध्यत्वात्= घ्राणलक्षणैकेन्द्रियजन्यत्वात् गन्धग्रहणार्थं ग्राहकान्तराणाम्— इन्द्रियान्तराणां प्रयोजकानि न भवन्ति एवं रूपग्रहणानि चक्षुरतिरिक्तेन्द्रियप्रयोजकानि न भवन्ति एवं स्पर्शादिष्वपि योज्यमिति गन्धादीनां पञ्चत्वात् तद्ग्राहकाणीन्द्रियाण्यपि पञ्चैव सिध्यन्ति न न्यूनाधिकानीत्यर्थः ।

१९ तृतीयाध्यायप्रथमाह्निके २७१ पृष्ठे—

"विष्टं ह्यपरं परेण ६६"

इतिसूत्रस्य— यद्यपि संयोगः परस्परं भवति तथापि जलादीनां यो भागः पृथिव्यां प्रविष्टस्तेन पृथिवीसंयोगे सत्यपि तदतिरिक्तेन जलेन जलत्वेन गृह्यमाणेन पृथिवीसंयोगो नास्तीति न जलादौ पृथिव्यादिगुणानां गन्धादीनां संक्रमो येन जलादौ तदुपलब्धिप्रसङ्गः स्यादित्याशयः ।

२० तृतीयाध्यायद्वितीयाह्निके ३१४ पृष्ठे "यथोक्तहेतुत्वात् ४०" इतिसूत्रभाष्यस्य टीकान्ते—
यद्यकृताभ्यागमदोषनिवृत्त्यर्थं फलभोक्तृत्वमपि मनस एव उच्यते तदा स आत्मैव न मन इत्येवमपि ज्ञानस्यात्मगुणत्वं सिद्धमितिशेषः ।

२१ तृतीयाध्यायद्वितीयाह्निके "परिशेषात् ४१" इतिसूत्रभाष्ये ३१४ पृष्ठे सप्तमपङ्क्तौ—

"द्रव्यान्तरं न प्रसज्यते"

इतिपाठस्य— ज्ञानाश्रयत्वयोग्यं द्रव्यान्तरं न प्रसज्यते= न शिष्यते— कालादिषु ज्ञानाश्रयत्वयोग्यत्वस्याऽसंभवात्. कालादीनां जडत्वेन प्रसिद्धत्वादित्यप्यर्थः संभवति ।

२२ तृतीयाध्यायद्वितीयाह्निके "प्रतिद्वन्द्विसिद्धेः ५१" इतिसूत्रस्य मध्यमपदलोपिसमासेन 'पाकजानां गुणानां प्रतिद्वन्द्विसिद्धेः= स्वप्रतिद्वन्द्व्यनन्तरं सत्ताया अप्रतिषेधः' इत्येवमप्यन्वयः संभवति । वस्तुतस्त्वत्र "पाकजानामप्रतिषेधः" इत्यस्य स्थाने 'पाकजैः प्रतिषेधः' इत्येवं वक्तव्यमासीत् तथा च पाकजैर्विरुद्धैर्गुणैः पूर्वगुणानां प्रतिषेधः= विनाशो भवति— प्रतिद्वन्द्विसिद्धेः= परस्परं विरोधादित्यर्थः, शरीरे तु चेतनाविरोधी गुणो न जायते तथा च यदि चेतना शरीरधर्मः स्यात्तदा मृतशरीरेप्युपलभ्येत न चोपलभ्यते इति न शरीरधर्म इत्याशयः । अस्य सूत्रस्य ३२६ पृष्ठे

"यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते"

इतिभाष्यम्. अस्य— येषु घटादिद्रव्येषु पूर्वगुणस्य नीलादेः प्रतिद्वन्द्विनो रक्तादिरूपस्य या सिद्धिर्भवति तेषु सा पाकेन भवतीति पाकजस्य रक्तादिरूपस्य सिद्धिर्दृश्यते= उपपद्यते, किं वा यत्र प्रतिद्वन्द्विभूतस्य

पूर्वगुणस्य सिद्धिः= सत्ता भवति तत्र तद्विरुद्धस्य पाकजगुणस्योत्पत्तिर्जायते इत्यन्वयस्तथा च पूर्वगुणनाशानन्तरं तद्विरोधिगुणान्तरमुत्पद्यते इति प्राप्तं ततश्चोत्तरेण विरोधिना गुणेन पूर्वगुणनाशः सिद्ध इत्यर्थः। वस्तुतस्त्वत्र– 'यत्र पूर्वगुणनिवृत्तिस्तत्र पाकजोत्पत्तिः' इति किं वा– 'पाकजोत्पत्त्या तद्विरुद्धस्य पूर्वगुणस्य निवृत्तिर्दृश्यते' इति वक्तव्यमासीत्।

२३ चतुर्थाध्यायप्रथमाह्निके ३५७ पृष्ठे.

"न– अनित्यतानित्यत्वात् ४–१–२६"

इति सूत्रस्य 'अनित्यताया नित्यत्वात्' 'अनित्यताया अनित्यत्वात्' इत्युभयविधेनापि समासेनोक्तरीत्या पूर्वपक्षप्रत्याख्यानमभिप्रेतम्।

२४ चतुर्थाध्यायप्रथमाह्निके ३६१ पृष्ठे "सर्वं पृथक् ४–१–३४"

इतिसूत्रम्– बौद्धैर्यत् "स्वलक्षणं स्वलक्षणम्" इत्यादिवाक्येन जातिं प्रत्याख्याय व्यक्तिमात्रस्य पृथक्त्वमुच्यते तस्यैवानुवादकमिति तर्कयामि– जात्यैव व्यक्तीनामैक्यसंभवाज्जातेश्च बौद्धैरस्वीकारात्, एवं च "लक्षणव्यवस्थानात् ४–१–३६" इत्यग्रिमसूत्रे लक्षणशब्द आकृतिपरः– लक्ष्यतेऽनेनेति लक्षणमाकृतिः सा च जातिरेव जात्या च व्यक्तीनामभेदः संभवत्येव यथा गोत्वेन गोव्यक्तीनामित्येवं व्याख्येयम्। किं वैषु त्रिष्वपि सूत्रेषु लक्षणशब्द आकृतिपरस्तथा च "सर्वं पृथक्– भावलक्षणपृथक्त्वात् ३४" इत्यस्य 'भावलक्षणानाम्= पदार्थाकृतीनां पृथक्त्वात्= न हि सर्वासु गोव्यक्तिषु एकैवाकृतिर्विभाव्यते– प्रत्येकं गोव्यक्तिषु सूक्ष्मस्याकृतिभेदस्य स्पष्टत्वात्. अत एव समानवर्णास्वपि गोव्यक्तिषु व्यक्तिभेदे सति 'नेयं सा गौः' इति ज्ञानं जायते आकृतिभेदादेव एवमन्यत्रापि बोध्यम्, आकृतिष्वप्याकृत्यन्तरस्वीकारे चानवस्था' इत्यर्थः। "न– अनेकलक्षणैरेकभावनिष्पत्तेः ३५" इतिसूत्रस्य च 'न सर्वं पृथक्– अनेकलक्षणैः= अनेकाभिराकृतिभिः शृङ्गसास्नादिभिः किं वा अनेकासां गवादिव्यक्तीनां लक्षणैः= आकृतिभिः एकभावस्य= एकत्वस्य निष्पत्तेः= उपपत्तेः, यदि शृङ्गादिलक्षणमेकमेवाङ्गमाकृतिरित्युच्येत तदा तस्य प्रत्येकं व्यक्तिषु विलक्षणत्वाद् व्यक्तीनां सर्वथा पार्थक्यं स्यादपि न चैवमुच्यते किं तु शृङ्गसास्नाद्यनेकाङ्गसंयोग आकृतिरित्युच्यते स तु सकलगोव्यक्तिष्वनुगत एवेत्याकृत्या गोव्यक्तीनामैक्यमपि सिद्धम् एवमन्यत्रापि बोध्यम्' इत्यर्थः। भाष्यकारस्य च संज्ञाशब्दपरत्वेन लक्षणशब्दव्याख्यानं नातीव हृदयङ्गमं भवति– लक्षणशब्दस्यानुगतधर्मपरत्वात्। अवयविनस्तु प्रत्याख्यानं समाधानं च बहुत्र वर्तते इत्यस्मिन् प्रकरणे जात्यभावमाश्रित्य व्यक्तीनां सर्वथा पार्थक्यप्रतिपादनं तत्प्रत्याख्यानं च नूतनत्वात् महाप्रकरणानुरोधाच्च समञ्जसं भवति, अत्रैव च सूत्रकारस्याभिप्राय इति तर्कयामीत्यलम्॥

२५ चतुर्थाध्यायप्रथमाह्निके ३६२ पृष्ठे "लक्षणव्यवस्थानात् ४–१–३६" इतिसूत्रस्य भाष्ये चतुर्थपङ्क्तौ– "यं कुम्भमद्राक्षं तं स्पृशामि" इति भाष्यम्. एषा च प्रत्यभिज्ञा परमाणुसमुदायातिरिक्तस्याऽऽकृतिविशेषविशिष्टस्य कुम्भस्याऽवयविनः स्वीकारपक्षे एव घटते– आकृतिविशेषस्यैव प्रत्यभिज्ञासंभवात्, अवयवसमूहपक्षे तु परमाणूनामाकृतिविशेषविशिष्टत्वाभावादप्रत्यक्षत्वाच्चैषा प्रत्यभिज्ञा न घटते इति ग्रन्थाशयः॥

छात्राणामुपयोगाय परिशिष्टं मया कृतम्।
विदुषां तूपयोगाय न किंचिदिह विद्यते॥

॥ इतिश्रीः॥

---

* तस्मै श्रीगुरवे नमः *

श्रीवाचस्पतिमिश्रसङ्कलितः

# न्यायसूचीनिबन्धः

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने।
निधये वाग्विशुद्धीनामक्षपादाय तायिने ॥ १ ॥
अक्षपादप्रणीतानां सूत्राणां सारबोधिका।
श्रीवाचस्पतिमिश्रेण मया सूची विधास्यते ॥ २ ॥

## अथ प्रथमोऽध्यायः

१. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। २. दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।

इति द्वाभ्यां सूत्राभ्यामभिधेयप्रयोजनसम्बन्धप्रकरणम् ॥ १ ॥

१. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। २. इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्। ३. अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च। ४. प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। ५. आप्तोपदेशः शब्दः। ६. स द्विविधो दृष्टादृष्टार्थत्वात्।

इति षड्भिः सूत्रैः प्रमाणलक्षणप्रकरणम् ॥ २ ॥

१. आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्। २. इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्। ३. चेष्टेन्द्रियार्थाश्रयः शरीरम्। ४. घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः। ५. पृथिव्यापस्तेजो वायुराकाशमिति भूतानि। ६. गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः। ७. बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्। ८. युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्। ९. प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। १०. प्रवर्तनालक्षणा दोषाः। ११. पुनरुत्पत्तिः प्रेत्यभावः। १२. प्रवृत्तिदोषजनितोऽर्थः फलम्। १३. बाधनालक्षणं दुःखम्। १४. तदत्यन्तविमोक्षोऽपवर्गः।

इति चतुर्दशभिः सूत्रैः प्रमेयलक्षणप्रकरणम् ॥ ३ ॥

१. समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। २. यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्। ३. लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः।

इति त्रिभिः सूत्रैर्न्यायपूर्वाङ्गलक्षणप्रकरणम् ॥ ४ ॥

१. तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः । २. स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् । ३. सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । ४. समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । ५. यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः । ६. अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ।

**इति षड्भिः सूत्रैर्न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥ ५ ॥**

१. प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । २. साध्यनिर्देशः प्रतिज्ञा । ३. उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः । ४. तथा वैधर्म्यात् । ५. साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् । ६. तद्विपर्ययाद्वा विपरीतम् । ७. उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । ८. हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ।

**इत्यष्टभिः सूत्रैर्न्यायप्रकरणम् ॥ ६ ॥**

१. अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । २. विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ।

**इति द्वाभ्यां सूत्राभ्यां न्यायोत्तराङ्गलक्षणप्रकरणम् ॥ ७ ॥**

**इत्येकचत्वारिंशता सूत्रैः सप्तभिः प्रकरणैः प्रथमाध्यायस्य प्रथममाह्निकं समाप्तम्**

## अथ द्वितीयमाह्निकम्

१. प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । २. यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । ३. स प्रतिपक्षस्थापनाहीनो वितण्डा ।

**इति त्रिभिः सूत्रैः कथालक्षणप्रकरणम् ॥ १ ॥**

१. सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः । २. अनैकान्तिकः सव्यभिचारः । ३. सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः । ४. यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः । ५. साध्याविशिष्टः साध्यत्वात् साध्यसमः । ६. कालात्ययापदिष्टः कालातीतः ।

**इति षड्भिः सूत्रैः हेत्वाभासलक्षणप्रकरणम् ॥ २ ॥**

१. वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । २. तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च । ३. अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । ४. सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् । ५. धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् । ६. वाक्छलमेवोपचारच्छलं तदविशेषात् । ७. न तदर्थान्तरभावात् । ८. अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ।

**इत्यष्टभिः सूत्रैश्छललक्षणप्रकरणम् ॥ ३ ॥**

१. साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । २. विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् । ३. तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ।

इति त्रिभिः सूत्रैः पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् । ४ ॥

इति विंशत्या सूत्रैश्चतुर्भिः प्रकरणैः प्रथमाध्यायस्य द्वितीयमाह्निकं समाप्तम्

समाप्तश्च प्रथमोऽध्यायः

( अत्र प्रकरणानि ११, सूत्राणि ६१ )

## अथ द्वितीयोऽध्यायः

१. समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः । २. विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च । ३. विप्रतिपत्तौ च सम्प्रतिपत्तेः । ४. अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः । ५. तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः । ६. यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा । ७. यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ।

इति सप्तभिः सूत्रैः संशयपरीक्षाप्रकरणम् ॥ १ ॥

१. प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः । २. पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः । ३. पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः । ४. युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् । ५. त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः । ६. सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः । ७. तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः । ८. त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः । ९. प्रमेया च तुला प्रामाण्यवत् । १०. प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः । ११. तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः । १२. न प्रदीपप्रकाशवत्तत्सिद्धेः । १३. क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः ।

इति त्रयोदशभिः सूत्रैः प्रमाणसामान्यपरीक्षाप्रकरणम् ॥ २ ॥

१. प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् । २. नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः । ३. दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः । ४. ज्ञानलिङ्गत्वादात्मनो नानवरोधः । ५. तदयौगपद्यलिङ्गत्वाच्च न मनसः । ६. प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् । ७. सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् । ८. तैश्चापदेशो ज्ञानविशेषाणाम् । ९. व्याहतत्वादहेतुः । १०. नार्थविशेषप्राबल्यात् । ११. प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः । १२. न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ।

इति द्वादशभिः सूत्रैः प्रत्यक्षपरीक्षाप्रकरणम् ॥ ३ ॥

१. साध्यत्वादवयविनि सन्देहः । २. सर्वाग्रहणमवयव्यसिद्धेः । ३. धारणाकर्षणोपपत्तेश्च । ४. सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ।

इति चतुर्भिः सूत्रैः प्रासङ्गिकमवयविपरीक्षाप्रकरणम् ॥ ४ ॥

१. रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् । २. नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ।

इति द्वाभ्यां सूत्राभ्यामनुमानपरीक्षाप्रकरणम् ॥ ५ ॥

१. वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः । २. तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् । ३. नातीतानागतयोरितरेतरापेक्षासिद्धिः । ४. वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः । ५. कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ।

इति पञ्चभिः सूत्रैरौपोद्घातिकं वर्तमानपरीक्षाप्रकरणम् ॥ ६ ॥

१. अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः । २. प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः । ३. प्रत्यक्षेणाप्रत्यक्षसिद्धेः । ४. नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः । ५. तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ।

इति पञ्चभिः सूत्रैरुपमानपरीक्षाप्रकरणम् ॥ ७ ॥

१. शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् । २. उपलब्धेरद्विप्रवृत्तित्वात् । ३. सम्बन्धाच्च । ४. आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः । ५. पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः । ६. शब्दार्थव्यवस्थानादप्रतिषेधः । ७. न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य । ८. जातिविशेषे चानियमात् ।

इत्यष्टभिः सूत्रैः शब्दसामान्यपरीक्षाप्रकरणम् ॥ ८ ॥

१. तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः । २. न कर्मकर्तृसाधनवैगुण्यात् । ३. अभ्युपेत्य कालभेदे दोषवचनात् । ४. अनुवादोपपत्तेश्च । ५. वाक्यविभागस्य चार्थग्रहणात् । ६. विध्यर्थवादानुवादवचनविनियोगात् । ७. विधिर्विधायकः । ८. स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः । ९. विधिविहितस्यानुवचनमनुवादः । १०. नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः । ११. शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः । १२. मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ।

इति द्वादशभिः सूत्रैः शब्दविशेषपरीक्षाप्रकरणम् ॥ ९ ॥

इति अष्टोत्तरषष्ट्या सूत्रैर्नवभिः प्रकरणैर्द्वितीयाध्यायस्याद्यमाह्निकं समाप्तम् ॥

## अथ द्वितीयमाह्निकम्

१. न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् । २. शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः । ३. अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् । ४. अनर्थापत्तावर्थापत्त्यभिमानात् । ५. प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् । ६. तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् । ७. नाभावप्रामाण्यं प्रमेयासिद्धेः । ८. लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः । ९. असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः । १०. तत्सिद्धेरलक्षितेष्वहेतुः । ११. न लक्षणावस्थितापेक्षसिद्धेः । १२. प्रागुत्पत्तेरभावोपपत्तेश्च ।

इति द्वादशभिः सूत्रैश्चतुष्ट्वपरीक्षाप्रकरणम् ॥ १ ॥

१. आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च । २. न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च । ३. तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः । ४. सन्तानानुमानविशेषणात् । ५. कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् । ६. प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च । ७. तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः । ८. अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् । ९. अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । १०. अस्पर्शत्वात् । ११. न कर्मानित्यत्वात् । १२. नाणुनित्यत्वात् । १३. सम्प्रदानात् । १४. तदन्तरालानुपलब्धेरहेतुः । १५. अध्यापनादप्रतिषेधः । १६. उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः । १७. अभ्यासात् । १८. नान्यत्वेऽप्यभ्यासस्योपचारात् । १९. अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः । २०. तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः । २१ विनाशकारणानुपलब्धेः । २२. अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः । २३. उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः । २४. पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः । २५. विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । २६. अस्पर्शत्वादप्रतिषेधः । २७. विभक्त्यन्तरोपपत्तेश्च समासे ।

इति सप्तविंशत्या सूत्रैः शब्दानित्यत्वप्रकरणम् ॥ २ ॥

१. विकारादेशोपदेशात् संशयः । २. प्रकृतिविवृद्धौ विकारविवृद्धेः । ३. न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः । ४. द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः । ५. नातुल्यप्रकृतीनां विकारविकल्पात् । ६. द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः । ७. न विकारधर्मानुपपत्तेः । ८. विकारप्राप्तानामपुनरापत्तेः । ९. सुवर्णादीनां पुनरापत्तेरहेतुः । १०. न तद्विकाराणां सुवर्णभावाव्यतिरेकात् । ११. नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् । १२. नित्यानामतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः । १३. अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः । १४. विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः । १५. प्रकृत्यनियमात् । १६. अनियमे नियमान्नानियमः । १७. नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः । १८. गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः ।

इति अष्टादशभिः सूत्रैः शब्दपरिणामप्रकरणम् ॥ ३ ॥

१. ते विभक्त्यन्ताः पदम् । २. व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः । ३. याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः । ४. न तदनवस्थानात् । ५. सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः । ६. आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः । ७. व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः । ८. नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः । ९. व्यक्त्याकृतिजातयस्तु पदार्थः । १०. व्यक्तिर्गुण-

विशेषाश्रयो मूर्तिः । ११. आकृतिर्जातिलिङ्गाख्या । १२. समानप्रसवात्मिका जातिः ।

इति द्वादशभिः सूत्रैः शब्दशक्तिपरीक्षा(पदार्थनिरूपण)प्रकरणम् ॥ ४ ॥

इति नवोत्तरषष्ट्या सूत्रैश्चतुर्भिः प्रकरणैर्द्वितीया-
ध्यायस्य द्वितीयमाह्निकम्

* समाप्तश्च द्वितीयोऽध्यायः *

( अत्र प्रकरणानि १३, सूत्राणि १३७ )

## अथ तृतीयोऽध्यायः

१. दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । २. न विषयव्यवस्थानात् । ३. तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ।

इति त्रिभिः सूत्रैरिन्द्रियव्यतिरेकात्मप्रकरणम् ॥ १ ॥

१. शरीरदाहे पातकाभावात् । २. तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् । ३. न कार्याश्रयकर्तृवधात् ।

इति त्रिभिः सूत्रैः शरीरव्यतिरेकात्मप्रकरणम् ॥ २ ॥

१. सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् । २. नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् । ३. एकविनाशे द्वितीयाविनाशान्नैकत्वम् । ४. अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः । ५. दृष्टान्तविरोधादप्रतिषेधः । ६. इन्द्रियान्तरविकारात् । ७. न स्मृतेः स्मर्तव्यविषयत्वात् । ८. तदात्मगुणत्वसद्भावादप्रतिषेधः ।

इत्यष्टभिः सूत्रैः प्रासङ्गिकं चक्षुरद्वैतप्रकरणम् ॥ ३ ॥

१. नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । २. ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् । ३. नियमश्च निरनुमानः ।

इति त्रिभिः सूत्रैर्मनोव्यतिरेकप्रकरणम् ॥ ४ ॥

१. पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । २. पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः । ३. नोष्णशीतवर्षाकालनिमित्तत्वात्पञ्चात्मकविकाराणाम् । ४. प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् । ५. अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् । ६. नान्यत्र प्रवृत्त्यभावात् । ७. वीतरागजन्मादर्शनात् । ८. सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः । ९. न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ।

इति नवभिः सूत्रैर्नित्यताप्रकरणम् ॥ ५ ॥

१. पार्थिवं गुणान्तरोपलब्धेः । २. पार्थिवाप्यतैजसं तद्गुणोपलब्धेः । ३. निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् । ४. गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् । ५. श्रुतिप्रामाण्याच्च ।

इति पञ्चभिः सूत्रैः शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

१. कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः। २. महदणुग्रहणात्। ३. रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्। ४. तदनुपलब्धेरहेतुः। ५. नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः। ६. द्रव्यगुणधर्मभेदाच्च उपलब्धिनियमः। ७. अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः। ८. कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः। ९. माध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः। १०. न रात्रावप्यनुपलब्धेः। ११. बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः। १२. अभिव्यक्तौ चाभिभवात्। १३. नक्तञ्चरनयनरश्मिदर्शनाच्च। १४. अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। १५. कुड्यान्तरितानुपलब्धेरप्रतिषेधः। १६. अप्रतिघातात् सन्निकर्षोपपत्तिः। १७. आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात्। १८. नेतरेतरधर्मप्रसङ्गात्। १९. आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः। २०. दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः।

इति विंशत्या सूत्रैरिन्द्रिय(भौतिकत्व)परीक्षाप्रकरणम्॥ ७॥

१. स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः। २. त्वगव्यतिरेकात्। ३. न युगपदर्थानुपलब्धेः। ४. विप्रतिषेधाच्च न त्वगेका। ५. इन्द्रियार्थपञ्चत्वात्। ६. न तदर्थबहुत्वात्। ७. गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः। ८. विषयत्वाव्यतिरेकादेकत्वम्। ९. न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः। १०. भूतगुणविशेषोपलब्धेस्तादात्म्यम्।

इति दशभिः सूत्रैरिन्द्रियनानात्वप्रकरणम्॥ ८॥

१. गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः। २. अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः। ३. न सर्वगुणानुपलब्धेः। ४. एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः। ५. विष्टं ह्यपरम्परेण। ६. न पार्थिवाप्ययोः प्रत्यक्षत्वात्। ७. पूर्वपूर्वगुणोत्कर्षात् तत्तत्प्रधानम्। ८. तद्व्यवस्थानं तु भूयस्त्वात्। ९. सगुणानामिन्द्रियभावात्। १०. तेनैव तस्याग्रहणाच्च। ११. न शब्दगुणोपलब्धेः। १२. तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात्।

इति द्वादशभिः सूत्रैरर्थपरीक्षाप्रकरणम्॥ ९॥

इति त्रिसप्तत्या सूत्रैर्नवभिः प्रकरणैस्तृतीयस्याद्यमाह्निकं समाप्तम्

## अथ द्वितीयमाह्निकम्

१. कर्माकाशसाधर्म्यात् संशयः। २. विषयप्रत्यभिज्ञानात्। ३. साध्यसमत्वादहेतुः। ४. न युगपदग्रहणात्। ५. अप्रत्यभिज्ञाने च विनाशप्रसङ्गः। ६. क्रमवृत्तित्वादयुगपद्ग्रहणम्। ७. अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात्। ८. न गत्यभावात्। ९. स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः।

इति नवभिः सूत्रैर्बुद्ध्यनित्यताप्रकरणम्॥ १॥

१. स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः । २. नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा । ३. नोत्पत्तिविनाशकारणोपलब्धेः । ४. क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिः । ५. लिङ्गतो ग्रहणान्नानुपलब्धिः । ६. न पयसः परिणामगुणान्तरप्रादुर्भावात् । ७. व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् । ८. क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ।

इत्यष्टभिः सूत्रैरौपोद्घातिकं क्षणभङ्गप्रकरणम् ॥ २ ॥

१. नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् । २. युगपज्ज्ञेयानुपलब्धेर्न मनसः । ३. तदात्मगुणत्वेऽपि तुल्यम् । ४. इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः । ५. नोत्पत्तिकारणानपदेशात् । ६. विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । ७. अनित्यत्वग्रहणात् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् । ८. ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः । ९. नान्तःशरीरवृत्तित्वान्मनसः । १०. साध्यत्वादहेतुः । ११. स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः । १२. न तदाशुगतित्वान्मनसः । १३. न स्मरणकालानियमात् । १४. आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः । १५. व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् । १६. प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम् । १७. ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः । १८. तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः । १९. परश्वादिष्वारम्भनिवृत्तिदर्शनात् । २०. नियमानियमौ तु तद्विशेषकौ । २१. यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः । २२. परिशेषाद्यथोक्तहेतूपपत्तेश्च । २३. स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् । २४. प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवस्थानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ।

इति चतुर्विंशत्या सूत्रैर्बुद्धेरात्मगुणत्वप्रकरणम् ॥ ३ ॥

१. कर्मानवस्थायिग्रहणात् । २. अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवद् । ३. हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा । ४. प्रदीपार्चिषः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् ।

इति चतुर्भिः सूत्रैर्बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ४ ॥

१. द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः । २. यावच्छरीरभावित्वाद्रूपादीनाम् । ३. न पाकजगुणान्तरोत्पत्तेः । ४. प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः । ५. शरीरव्यापित्वात् । ६. न केशनखादिष्वनुपलब्धेः । ७. त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः । ८. शरीरगुणवैधर्म्यात् । ९. न रूपादीनामितरेतरवैधर्म्यात् । १०. ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ।

इति दशभिः सूत्रैर्बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ॥ ५ ॥

१. ज्ञानायौगपद्यादेकं मनः । २. न युगपदनेकक्रियोपलब्धेः । ३. अलातचक्रदर्शनवत्

तदुपलब्धिराशुसञ्चारात् । ४. यथोक्तहेतुत्वाच्चाणु ।

इति चतुर्भिः सूत्रैर्मनःपरीक्षाप्रकरणम् ॥ ६ ॥

१. पूर्वकृतफलानुबन्धात् तदुत्पत्तिः । २. भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् । ३. न साध्यसमत्वात् । ४. नोत्पत्तिनिमित्तत्वान्मातापित्रोः । ५. तथाहारस्य । ६. प्राप्तौ चानियमात् । ७. शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म । ८. एतेनानियमः प्रत्युक्तः । ९. तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे । १०. मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः । ११. नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः । १२. अणुश्यामतानित्यत्ववदेतत्स्यात् । १३. नाकृताभ्यागमप्रसङ्गात् ।

इति त्रयोदशभिः सूत्रैः प्रासङ्गिकमदृष्टनिष्पाद्यत्वप्रकरणम् ॥ २ ॥

इति द्विसप्तत्या सूत्रैः सप्तभिः प्रकरणैस्तृतीयाध्यायस्य द्वितीयमाह्निकम्

* समाप्तश्च तृतीयोऽध्यायः *

( अत्र प्रकरणानि १६, सूत्राणि १४५ )

## अथ चतुर्थोऽध्यायः

१. प्रवृत्तिर्यथोक्ता । २. तथा दोषाः ।

इति द्वाभ्यां सूत्राभ्यां प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

१. तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् । २. नैकप्रत्यनीकत्वात् । ३. व्यभिचारादहेतुः । ४. तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः । ५. निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः । ६. न दोषलक्षणावरोधान्मोहस्य । ७. निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ।

इति सप्तभिः सूत्रैर्दोषत्रैराश्यप्रकरणम् ॥ २ ॥

१. आत्मनित्यत्वे प्रेत्यभावसिद्धिः । २. व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् । ३. न घटाद् घटानिष्पत्तेः । ४. व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ।

इति चतुर्भिः सूत्रैः प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

१. अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् । २. व्याघातादप्रयोगः । ३. नातीतानागतयोः कारकशब्दप्रयोगात् । ४. न विनष्टेभ्योऽनिष्पत्तेः । ५. क्रमनिर्देशादप्रतिषेधः ।

इति पञ्चभिः सूत्रैः शून्यतोपादानप्रकरणम् ॥ ४ ॥

१. ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् । २. न पुरुषकर्माभावे फलानिष्पत्तेः । ३. तत्कारितत्वादहेतुः ।

इति त्रिभिः सूत्रैरीश्वरोपादानताप्रकरणम् ॥ ५ ॥

१. अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । २. अनिमित्तनिमित्तत्वान्नानि-

मित्ततः । ३. निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ।

इति त्रिभिः सूत्रैराकस्मिकत्वप्रकरणम् ॥ ६ ॥

१. सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् । २. नानित्यता नित्यत्वात् । ३. तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् । ४. नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ।

इति चतुर्भिः सूत्रैः सर्वानित्यत्वनिराकरणम् ॥ ७ ॥

१. सर्वं नित्यं पञ्चभूतनित्यत्वात् । २. नोत्पत्तिविनाशकारणोपलब्धेः । ३. तल्लक्षणावरोधादप्रतिषेधः । ४. नोत्पत्तितत्कारणोपलब्धेः । ५. न व्यवस्थानुपपत्तेः ।

इति पञ्चभिः सूत्रैः सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ८ ॥

१. सर्वं पृथग् भावलक्षणपृथक्त्वात् । २. नानेकलक्षणैरेकभावनिष्पत्तेः । ३. लक्षणव्यवस्थानादेवाप्रतिषेधः ।

इति त्रिभिः सूत्रैः सर्वपृथक्त्वनिराकरणम् ॥ ९ ॥

१. सर्वमभावो भावेष्वितरेतराभावसिद्धेः । २. न स्वभावसिद्धेर्भावानाम् । ३. न स्वभावसिद्धिरापेक्षिकत्वात् । ४. व्याहतत्वादयुक्तम् ।

इति चतुर्भिः सूत्रैः सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

१. संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् । २. न कारणावयवभावात् । ३. निरवयवत्वादहेतुः ।

इति त्रिभिः सूत्रैः संख्यैकान्तवादप्रकरणम् ॥ ११ ॥

१. सद्यः कालान्तरे च फलनिष्पत्तेः संशयः । २. कालान्तरेणानिष्पत्तिर्हेतुविनाशात् । ३. प्राङ्निष्पत्तेर्वृक्षफलवत्तत् स्यात् । ४. नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् । ५. उत्पादव्ययदर्शनात् । ६. बुद्धिसिद्धं तु तदसत् । ७. आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः । ८. प्रीतेरात्माश्रयत्वादप्रतिषेधः । ९. न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् । १०. तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ।

इति दशभिः सूत्रैः फलपरीक्षाप्रकरणम् ॥ १२ ॥

१. विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः । २. न सुखस्याप्यन्तरालनिष्पत्तेः । ३. बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः । ४. दुःखविकल्पे सुखाभिमानाच्च ।

इति चतुर्भिः सूत्रैर्दुःखपरीक्षाप्रकरणम् ॥ १३ ॥

१. ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः । २. प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः । ३. समारोपणादात्मन्यप्रतिषेधः । ४. पात्रचयान्तानुपपत्तेश्च फलाभावः । ५. सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः । ६. न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य । ७. न क्लेशसन्ततेः स्वाभाविकत्वात् । ८. प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् । ९. अणुश्यामतानित्यत्ववद्वा । १०. न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ।

इति दशभिः सूत्रैरपवर्गपरीक्षाप्रकरणम् ॥ १४ ॥

इति सप्तषष्ट्या सूत्रैः चतुर्दशभिः प्रकरणैश्चतुर्थाध्यायस्याद्यमाह्निकम् ।

## अथ द्वितीयमाह्निकम्

१. दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः । २. दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः । ३. तन्निमित्तं त्ववयव्यभिमानः ।

इति त्रिभिः सूत्रैस्तत्त्वज्ञानोत्पत्तिप्रकरणम् । १ ॥

१. विद्याविद्याद्वैविध्यात् संशयः । २. तदसंशयः पूर्वहेतुप्रसिद्धत्वात् । ३. वृत्त्यनुपपत्तेरपि तर्हि न संशयः । ४. कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । ५. तेषु चावृत्तेरवयव्यभावः । ६. पृथक् चावयवेभ्योऽवृत्तेः । ७. न चावयव्यवयवाः । ८. एकस्मिन् भेदाभावाद-भेदशब्दप्रयोगानुपपत्तेरप्रश्नः । ९. अवयवान्तराभावेऽप्यवृत्तेरहेतुः । १०. केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः । ११. स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः । १२. अवयवावयविप्रसङ्गश्चैवमाप्रलयात् । १३. न प्रलयोऽणुसद्भावात् । १४. परं वा त्रुटेः ।

इति चतुर्दशभिः सूत्रैः प्रासङ्गिकमवयवावयविप्रकरणम् ॥ २ ॥

१. आकाशव्यतिभेदात् तदनुपपत्तिः । २. आकाशासर्वगतत्वं वा । ३. अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः । ४ शब्दसंयोगविभवाच्च सर्वगतम् । ५. अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः । ६. मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः । ७. संयोगोपपत्तेश्च । ८. अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ।

इत्यष्टभिः सूत्रैरौपोद्घातिकं निरवयवप्रकरणम् ॥ ३ ॥

१. बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः । २. व्याहतत्वादहेतुः । ३. तदाश्रयत्वादपृथग्ग्रहणम् । ४. प्रमाणतश्चार्थप्रतिपत्तेः । ५. प्रमाणानुपपत्त्युपपत्तिभ्याम् । ६. स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः । ७. मायागन्धर्वनगरमृगतृष्णिकावद्वा । ८. हेत्वभावादसिद्धिः । ९. स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः । १०. मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे । ११. बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् । १२. तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ।

इति द्वादशभिः सूत्रैः प्रासङ्गिकं बाह्यार्थभङ्गनिराकरणप्रकरणम् ॥ ४ ॥

१. समाधिविशेषाभ्यासात् । २. नार्थविशेषप्राबल्यात् । ३. क्षुदादिभिः प्रवर्तनाच्च । ४. पूर्वकृतफलानुबन्धात् तदुत्पत्तिः । ५. अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः । ६. अपवर्गेऽप्येवं प्रसङ्गः । ७ न निष्पन्नावश्यम्भावित्वात् । ८. तदभावश्चापवर्गे । ९. तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः । १०. ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः । ११. तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात् । १२. प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ।

इति द्वादशभिः सूत्रैस्तत्त्वज्ञानविवृद्धिप्रकरणम् ॥ ५ ॥

१. तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् । २. ताभ्यां विगृह्य कथनम् ।

इति द्वाभ्यां सूत्राभ्यां तत्त्वज्ञानपरिपालनप्रकरणम् ॥ ६ ॥

इत्येकपञ्चाशता सूत्रैः षड्भिः प्रकरणैश्चतुर्थाध्यायस्य द्वितीयमाह्निकं समाप्तम् ।

समाप्तश्चायं चतुर्थोऽध्यायः

( अत्र प्रकरणानि २०, सूत्राणि ११८ )



## अथ पञ्चमोऽध्यायः

१. साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः । २. साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ । ३. गोत्वाद् गोसिद्धिवत् तत्सिद्धिः ।

इति त्रिभिः सूत्रैः सत्प्रतिपक्षदेशनाभासप्रकरणम् ॥ १ ॥

१. साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः । २. किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः । ३. साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ।

इति षड्भिः सूत्रैः साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम् ॥ २ ॥

१. प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । २. घटादिनिष्पत्तिदर्शनात् पीडने चाव्यभिचारादप्रतिषेधः ।

इति द्वाभ्यां सूत्राभ्यां प्राप्त्यप्राप्तियुगलद्वाद्विविकल्पोपक्रमजातिद्वयप्रकरणम् ॥ ३ ॥

१. दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ । २. प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः । ३. प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ।

इति त्रिभिः सूत्रैर्युगलद्वाद्विप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ॥ ४ ॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । २. तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः । इति द्वाभ्यां सूत्राभ्यामनुत्पत्तिसमप्रकरणम् ॥ ५ ॥

१. सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः । २. साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः । इति द्वाभ्यां सूत्राभ्यां संशयसमप्रकरणम् ॥ ६ ॥

१. उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः । २. प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः । इति द्वाभ्यां सूत्राभ्यां प्रकरणसमप्रकरणम् ॥ ७ ॥

१. त्रैकाल्यानुपपत्तेर्हेतोरहेतुसमः । २. न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः । ३. प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः । इति त्रिभिः सूत्रैर्हेतुसमप्रकरणम् ॥ ८ ॥

१. अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः । २. अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्त-

त्वादनैकान्तिकत्वाच्चार्थापत्तेः । इति द्वाभ्यां सूत्राभ्यामर्थापत्तिसमप्रकरणम् ॥ ९ ॥

१. एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः । २. क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ।

इति द्वाभ्यां सूत्राभ्यामविशेषसमप्रकरणम् ॥ १० ॥

१. उभयकारणोपपत्तेरुपपत्तिसमः । २. उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ।

इति द्वाभ्यां सूत्राभ्यामुपपत्तिसमप्रकरणम् ॥ ११ ॥

१. निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः । २. कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः । इति द्वाभ्यां सूत्राभ्यामुपलब्धिसमप्रकरणम् ॥ १२ ॥

१. तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः । २. अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । ३. ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ।

इति त्रिभिः सूत्रैरनुपलब्धिसमप्रकरणम् ॥ १३ ॥

१. साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः । २. साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसामर्थ्यात् । ३. दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः । इति त्रिभिः सूत्रैरनित्यसमप्रकरणम् ॥ १४ ॥

१. नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । २. प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधभावः । इति द्वाभ्यां सूत्राभ्यां नित्यसमप्रकरणम् ॥ १५ ॥

१. प्रयत्नकार्यानेकत्वात् कार्यसमः । २. कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ।

इति द्वाभ्यां सूत्राभ्यां कार्यसमप्रकरणम् ॥ १६ ॥

१. प्रतिषेधेऽपि समानो दोषः । २. सर्वत्रैवम् । ३. प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः । ४. प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा । ५. स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ।

इति पञ्चभिः सूत्रैः षट्पक्षीरूपकथाभासप्रकरणम् ॥ १७ ॥

इति त्रिचत्वारिंशता सूत्रैः सप्तदशभिः प्रकरणैः पञ्चमाध्यायस्याद्यमाह्निकं समाप्तम्

## अथ द्वितीयमाह्निकम्

१. प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । २. प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः । ३. प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् । ४. प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः । ५. पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । ६. अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ।

इति षड्भिः सूत्रैः प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् ॥ १ ॥

१. प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् । २. वर्णक्रमनिर्देशवन्निरर्थकम् । ३. परिषत्-

प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । ४. पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ।

इति चतुर्भिः सूत्रैः प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् ॥२॥

१. अवयवविपर्यासवचनमप्राप्तकालम् । २. हीनमन्यतमेनाप्यवयवेन न्यूनम् । ३. हेतूदाहरणाधिकमधिकम् ।

इति त्रिभिः सूत्रैः स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ॥ ३ ॥

१. शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । २. अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् । इति द्वाभ्यां सूत्राभ्यां पुनरुक्तनिग्रहस्थानप्रकरणम् ॥ ४ ॥

१. विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् । २. अविज्ञातं चाज्ञानम् । ३. उत्तरस्याप्रतिपत्तिरप्रतिभा । ४. कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ।

इति चतुर्भिः सूत्रैरुत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ॥ ५ ॥

१. स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा । २. निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । ३. अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ।

इति त्रिभिः सूत्रैर्दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ॥ ६ ॥

१. सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः । २. हेत्वाभासाश्च यथोक्ताः ।

इति द्वाभ्यां सूत्राभ्यां कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥ ७ ॥

इति चतुर्विंशत्या सूत्रैः सप्तभिः प्रकरणैः पञ्चमाध्यायस्य
द्वितीयमाह्निकं समाप्तम्

* समाप्तश्च पञ्चमोऽध्यायः *

( अत्र प्रकरणानि २४, सूत्राणि ६७ )

अस्मिन्न्यायशास्त्रेऽध्यायाः ५, आह्निकानि १०, प्रकरणानि ८४,
सूत्राणि ५२८, पदानि १९६६, अक्षराणि ८३८५ ।

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
श्रीगौतमसुगवीनामतिजरतीनां समुद्धरणात् ॥ १ ॥
संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
एतस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥ २ ॥
न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥ ३ ॥

इति न्यायाचार्यसन्मिश्रश्रीवाचस्पतिविरचितो न्यायसूचीनिबन्धः समाप्तः

★

